

# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| जन्म १९०९ वैक्रमाब्दे<br>कार्तिकशुक्लैकादश्यां (देवदीपावली सोमवासरे)<br>सूर्यपूरे. | निर्याणम् १९६२ वैक्रमाब्दे<br>पौषकृष्णतृतीयायाम् (मकरसंक्रान्तमंदवासरे)<br>मुम्बय्याम्. |
|---|---|

## The Late Sheth Devchand Lalbhai Javeri.

| Born 22nd Nov. 1852 A. D. Surat, | Died 13th January 1906 A. D Bombay. |
|---|---|

7-27 -Copies 5000.

N. S P

## ॥ अथ श्रीक्षेत्रलोको लोकप्रकाशे प्रारभ्यते ॥

### तत्र द्वादशः सर्गः प्रारभ्यते ॥

जयत्यभिनवः कोऽपि, शंखेश्वरदिनेश्वरः । त्रिविष्टपोद्योतहेतुर्नरक्षेत्रस्थितोऽपि यः ॥ १ ॥ स्वरूपं क्षेत्रलोकस्य, यथाश्रुतमथोच्यते । गुरुश्रीकीर्त्तिविजयप्रसादाप्तधिया मया ॥ २ ॥ नरं वैशाखसंस्थानस्थितपादं कटीतटे । न्यस्तहस्तद्वयं सर्वदिक्षु लोकोऽनुगच्छति ॥ ३ ॥ चिरमूर्ध्वंदमतया, चिरंतनतयापि च । असौ लोकनरः श्रान्त, इव कट्यां न्यधात्करौ ॥ ४ ॥ अथवाऽधोमुखस्थायिमहाशरावपृष्ठगम् । एष लोकोऽनुकुरुते, शरावसंपुटं लघु ॥ ५ ॥ धृतः कृतो न केनापि, स्वयंसिद्धो निराश्रयः । निरालम्बः शाश्वतश्च, विहायसि परं स्थितः ॥ ६ ॥ उत्पत्तिविलयध्रौव्यगुणषड्द्रव्यपूरितः । मौलिस्थसिद्धमुदितो, नृत्यायेवाततक्रमः ॥ ७ ॥ अस्य सर्वस्य लोकस्य, कल्प्या भागाश्चतुर्दश । एकैकश्च विभागोऽयमेकैकरज्जुसंमितः ॥ ८ ॥ सर्वाधस्तनलोकान्तादारभ्योपरिगं तलम् । यावत्सप्तममेदिन्या, एका रज्जुरियं भवेत् ॥ ९ ॥ प्रत्येकमेवं सप्तानां, भुवामुपरिवर्त्तिषु । तलेषु रज्जुरेकैका, स्युरेवं सप्त रज्जवः ॥ १० ॥ रत्नप्रभोपरितलादारभ्यादिमताविषे । पर्यान्तेषु विमानेषु, स्यादेषा रज्जुरष्टमी ॥ ११ ॥ तत आरभ्य नवमी, महेन्द्रान्ते प्रकीर्त्तिता । अतः परं तु दशमी, लान्तकान्ते समाप्यते ॥ १२ ॥ भवेदेकादशी पूर्णा, सहस्रारान्तसीमनि । स्याद् द्वादश्यच्युतस्यान्ते, क्रमादेवं त्रयोदशी ॥ १३ ॥

५

१०

१३

भवेद् ग्रैवेयकस्यान्ते, लोकान्ते च चतुर्दशी । घर्मोर्ध्वभागादूर्ध्वाधः, सप्त सप्तेति रज्जवः ॥ १४ ॥ अयं चावश्यकनिर्युक्तिचूर्णिसंग्रहण्याद्यभिप्रायः, भगवत्यादौ च घर्माया अधोऽसंख्ययोजनैर्लोकमध्यमुक्तं, तदनुसारेण तत्र सप्त रज्जवः समाप्यन्ते, परं तदिह स्वल्पत्वान्न विवक्षितमिति संभाव्यते, योगशास्त्रवृत्तौ तु तत्र धरणीतलात्समभागात् सौधर्मेशानौ यावत्सार्द्धरज्जुः, सनत्कुमारमाहेन्द्रौ यावत्सार्द्धं रज्जुद्वयं, ब्रह्मलोकेऽर्द्धचतुर्थी रज्जवः, अच्युतं यावत्पञ्च रज्जवः, ग्रैवेयकं यावत् षट्, लोकान्तं यावत्सप्त रज्जव इत्युक्तमिति ज्ञेयं, जीवाभिगमवृत्तावपि 'बहुसमरमणिज्जाओ भूमिभागाओ उड्ढं चंदिमसूरियगहगणणक्खत्ततारारूवाणं बहुइओ जोयणकोडीओ यावत् दूरं उड्ढं उप्पइत्ता एत्थणं सोहम्मीसाणे'त्यादिसूत्रव्याख्याने "अत्र बह्वीर्योजनकोटीरूर्ध्वं दूरमुत्प्लुत्य-गत्वा, एतच्च सार्द्धरज्जूपलक्षणमित्युक्त"मिति ॥ लोकनालिस्तवेऽपि—"सोहम्मंमि दिवड्ढा अड्ढाइज्जा य रज्जु माहिंदे । चत्तारि सहस्सारे पणऽच्चुए सत्त लोगंते ॥ १ ॥" इत्युक्तमिति ॥



षड्रज्ज्वाश्चतुर्थो भागो यस्तत्खण्डुकमिति स्मृतम् । विष्कम्भायामपिण्डस्तत्समानं घनहस्तवत् ॥ १५ ॥ रेखाः पञ्चोर्ध्वगाः पञ्चाशत्खण्डुकोच्चा, सचतुःखण्डुकायता । त्रसनाडी भवेदत्र, त्रसजीवाश्रयावधिः ॥ १६ ॥ सा चतुर्दशरज्जूच्चा, तथैकरज्जुसप्तपञ्चाशत्तिर्यगायताः । आलिख्य क्वापि पट्टादौ, भावनीया तदाकृतिः ॥१७॥

१ प्रथमतृतीयकल्पयोर्मध्यभागस्योभयथा विभागे नासंगतिः, एवमग्रेऽपि । जीवाभिगमवृत्तिपाठोऽपि सौधर्मादिसीमादर्शकतया नासंगतः ।
२ असंख्यकोटिकोटीयोजनमाना हि रज्जुः, खण्डुकमपि तथा, परं रज्जुचतुर्थांशरूपं.

विस्तृता । सर्वलोकस्याथ मानं, वक्ष्ये खण्डुकसङ्ख्यया ॥ १८ ॥ रज्ज्वाः सर्वाधःस्थितायाः, खण्डुकेषु चतुर्ष्वपि । स्युरष्टाविंशतिस्तिर्यक्, खण्डुकानीति तद्विदः ॥ १९ ॥ तत्रोर्ध्वं त्रसनाडीस्थं, खण्डुकानां चतुष्टयम् । द्वादश द्वादश ततः, परितः पार्श्वयोर्द्वयोः ॥ २० ॥ एवं सर्वत्रापि । षड्विंशतिर्द्वितीयस्या, रज्ज्वाः खण्डचतुष्टये । तृतीयस्याः खण्डुकेषु, चतुर्षु जिनसङ्ख्यया ॥ २१ ॥ नखसङ्ख्यानि तुर्याया, रज्ज्वास्तेषु चतुर्ष्वपि । पञ्चम्याः षोडश दश, षष्ठ्याः खण्डचतुष्टये ॥ २२ ॥ सप्तम्या अपि खण्डेषु, चतुर्षु तच्चतुष्टयम् । अष्टम्याः प्राक् खण्डुके द्वे, चतुःखण्डुकविस्तृते ॥२३॥ अपरे द्वे खण्डुके च, षट्खण्डुकसमातते । अष्टखण्डुकविस्तारं, नवम्या आद्यखण्डुकम् ॥ २४ ॥ दशखण्डुकविस्तारं, द्वितीयं द्वे ततः परे । द्वादशखण्डुकव्यासे, स्युरित्थं नव रज्जवः ॥ २५ ॥ दशम्याः प्राच्यमर्द्धं च, षोडशखण्डुकाततम् । परमर्द्धं तथैतस्या, नखखण्डुकविस्तृतम् ॥ २६ ॥ एकादश्याः पूर्वमर्द्धमपि तावत्समाततम् । द्वितीयमर्द्धमस्याश्च, षोडशखण्डुकाततम् ॥ २७ ॥ द्वादश्याः प्राक्तनं त्वर्द्धं, प्रोक्तं द्वादशखण्डुकम् । दशखण्डुकविस्तारमंत्यमर्द्धमुदीरितम् ॥ २८ ॥ आद्यं खण्डं त्रयोदश्यां, निर्दिष्टं तावदाततम् । अष्टखण्डुकविस्तीर्णमग्रिमं खण्डुकत्रयम् ॥ २९ ॥ चतुर्दश्याः प्राक्तनेऽर्द्धे, खण्डुकानि षडायतिः । चत्वारि खण्डुकान्यस्या, विस्तृतिः पश्चिमेऽर्द्धके ॥ ३० ॥ प्रत्येकमेषामङ्कानां, स्वस्ववर्गविधानतः । भवेद्वर्गितलोकस्य, मितिः खण्डुकसङ्ख्यया ॥३१॥ भवेत्स तद्गुणो वर्ग, इति वर्गस्य लक्षणम् । यथाऽष्टाविंशतेः सप्तशती चतुरशीतियुक् ॥ ३२ ॥ एवं सर्वत्र स्थापना विलोक्या। खण्डुकानां शतान्यष्टावधिकानि च षोडश ।

१०

१४

दृष्टलोके दृष्टलोकैरुक्तानि सर्वसङ्ख्यया ॥३३॥ प्रोक्तं वर्गितलोके च, सर्वाग्रं खण्डुकोद्भवम् । सहस्राणि पञ्चदश, द्वे शते नवतिश्च षट् ॥ ३४ ॥ लोकस्य वर्गकरणे , ज्ञेयमेतत्प्रयोजनम् । प्रमाणं सर्वतोऽनेन, लोकस्य भवति ध्रुवम् ॥ ३५ ॥ दशहस्तपृथोर्यद्वत्तावद्दीर्घस्य वेश्मनः । दशानां वर्गकरणे, सर्वं क्षेत्रफलं भवेत् ॥ ३६ ॥ षट्पञ्चाशत्खण्डुकोचयथोक्तपृथुलस्य च । लोकस्यास्य त्रयो भेदा, मध्याधऊर्ध्वभेदतः ॥ ३७ ॥ ऊर्ध्वमध्याधःस्थितत्वाद्व्यपदिश्यन्त इत्यमी । यद्वोत्कृष्टमध्यहीनपरिणामात्तथोदिताः ॥ ३८ ॥ यदुक्तं भगवतीवृत्तौ स्थानाङ्गवृत्तौ च—"आह चऽहोपरिणामो खेत्तणुभावेण जेण उस्सण्णं । असुभो अहोत्ति भणिओ, दव्वाणं तेणऽहोलोओ ॥३९॥ उड्ढं उवरिं जं ठिअ सुभखित्तं खित्तओ अ दव्वगुणा । उप्पज्जंति सुभा वा जेण तओ उड्ढलोउत्ति ॥४०॥ मज्झणुभावं खित्तं जं तं तिरियन्ति वयणपज्जवओ । भन्नइ तिरिअ विसालं अओ अ तं तिरियलोगोत्ति ॥४१॥"

रत्नप्रभाया उपरि, क्षुल्लकप्रतरद्वये । मेर्वन्तः कन्दोर्ध्वभागे, रुचकोऽष्टप्रदेशकः ॥ ४२ ॥ तत्रोपरिस्थे प्रतरे, खप्रदेशचतुष्टयम् । विद्यते गोस्तनाकारं, तथैवाधस्तनेऽपि तत् ॥ ४३ ॥ खप्रदेशाष्टकं तच्चोपर्यधोभावतः स्थितम् । चतुरैश्चतुरस्रात्मन्!, प्रोच्यते रुचकाख्यया ॥४४॥ स्थापना । तस्मान्नव शतान्यूर्ध्वमधो नव शतानि च । एतावान्मध्यलोकः स्यादाकृत्या झल्लरीनिभः ॥ ४५ ॥ योजनानां नव शतान्यतीत्य रुचकादितः । आलोकान्तमधोलोकस्तमाकृतिरुदाहृतः ॥ ४६ ॥ गत्वा नव शतान्येव, रुचकाद्योजनान्यथ । ऊर्ध्वीकृतमृदङ्गाभ, ऊर्ध्वलोकः प्रकीर्त्तितः ॥ ४७ ॥ स्थापना । सातिरेकसप्तरज्जुमानोऽधोलोक इष्यते । ऊर्ध्वलोकः किंचिदूनसप्तरज्जुमितः

लोके रज्जुखंडानां मानं

२०

२५

॥१३३॥

२८

स्मृतः ॥४८॥ स्थापना। घर्माघनोदधिघनतनुवातान् विहायसः । असंख्यभागं चातीत्य, मध्यं लोकस्य कीर्तितम् ॥ ४९ ॥ अस्मादूर्ध्वमधश्चैव, संपूर्णाः सप्त रज्जवः । अथ त्रयाणां लोकानां, प्रत्येकं मध्यमुच्यते ॥५०॥ घर्मायां सर्वतः क्षुल्लमत्रास्ति प्रतरद्वयम् । मण्डकाकारमेकैकखप्रदेशात्मकं च तत् ॥ ५१ ॥ रुचकेऽत्र प्रदेशानां, यच्चतुष्कद्वयं स्थितम् । तत्समश्रेणिकं तच्च, विज्ञेयं प्रतरद्वयम् ॥ ६२॥ स्थापना। लोकवृद्धिरूर्ध्वमुखी, तयोरुपरि-संस्थितात् । अधःस्थितात्पुनस्तस्माल्लोकवृद्धिरधोमुखी ॥ ५३ ॥ तस्मिंश्च लोकपुरुषकटीतटपटीयसि । मध्य-भागे समभूमिज्ञापको रुचकोऽस्ति यः ॥ ५४ ॥ स एव मध्यलोकस्य, मध्यमुक्तं महात्मभिः । दिग्विदिग्निर्ग-मश्चास्मान्नाभेरिव शिरोद्गमः॥५५॥युग्मम्। तथाहुः—"अट्ठपएसो रुअगो तिरिअं लोगस्स मज्झयारंमि। एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥ ५६ ॥" पूर्वा पूर्वदक्षिणा च, दक्षिणा दक्षिणाऽपरा । पश्चिमा पश्चिमोदीची, चोत्तरोत्तरपूर्विका ॥५७॥ ऊर्ध्वा तथाऽधस्तनी च, दशैवं गदिता दिशः । दिशः षट् तत्र शुद्धाख्याश्चतस्रो विदिशोऽपराः ॥ ५८ ॥ विजयद्वारदिक् प्राची, प्रादक्षिण्यात्ततः पराः । एतासां देवतायोगान्नामान्यूचुः परा-ण्यपि ॥ ५९ ॥ ऐन्द्याग्नेयी तथा याम्या, नैर्ऋती किंच वारुणी । वायव्येतः परा सौम्येशानी च विमला तमा ॥ ६० ॥ रुचकानन्तरं दिक्षु, द्वौ द्वौ व्योम्नः प्रदेशकौ । विदिक्षु पुनरेकैक, एषाऽऽद्या पङ्क्तिराहिता ॥ ६१ ॥ द्वितीयस्यां पुनः पङ्क्तौ, चत्वारो दिक्प्रदेशकाः । एवं द्वौ द्वौ विवर्द्धेते, प्रतिपङ्क्ति प्रदेशकौ ॥ ६२ ॥ एवं च— असंख्येयतमा पङ्क्तिरसंख्येयप्रदेशिका । लोकान्तं स्पृशति द्वाभ्यामन्ताभ्यां भृशमायता ॥ ६३ ॥ ततो

१०

१४

लोकस्य वृत्तत्वात्प्रतिपङ्क्ति प्रदेशकौ । हीयेते तेन लोकान्ते, पङ्क्तिश्चतुष्प्रदेशिका ॥ ६४ ॥ एकतो द्विप्रदेशत्वं, चतुष्प्रदेशताऽन्यतः । ततो हि मुरजाकारो, भवेल्लोकदिशामिह ॥ ६५ ॥ एकतो यस्य संकीर्णं, मुखं पृथुलमन्यतः । स मृदङ्गविशेषः स्यान्मुरजेति प्रसिद्धिभाक् ॥ ६६ ॥ यथैकस्मिन् खप्रतरे, भाविता मुरजाकृतिः । सर्वेष्वपि प्रतरेषु, तथा भाव्या दिगाकृतौ ॥६७॥ स्थापना । शकटोर्ध्वीस्थिताः किंचालोकव्यपेक्षया दिशः । तुण्डं तु शकटस्यास्य, रुचकोपरि भाव्यताम् ॥ ६८ ॥ रुचकस्योपरितनं, यत्प्रदेशचतुष्टयम् । विमलाया दिशस्तच्च, प्रोक्तमादितया जिनैः ॥ ६९ ॥ तत्समश्रेणिकैस्तावन्मितैर्जाता प्रदेशकैः । ऊर्ध्वलोकालोकगता, विमला दिगुदीरिता ॥ ७० ॥ रुचकस्याधस्तनं यत्प्रदेशानां चतुष्टयम् । तत्समाया दिशः प्रोक्तं, जिनैरादितया श्रुते ॥ ७१ ॥ तन्मूला विमला तुल्या, किंत्वधोगामिनी तमा । तदिमे रुचकाकारे, चतुष्प्रदेशविस्तृते ॥ ७२ ॥ द्वयोर्द्वयोर्दिशोरन्तरिछन्नमुक्तावलीसमाः । एकप्रदेशा विदिशो, लोकालोकान्तसीमया ॥ ७३ ॥ दिशः स्युर्द्विप्रदेशाद्या, द्व्युत्तरा रुचकोद्भवाः । विदिशोऽनुत्तरा एकप्रदेशा रुचकोद्भवाः ॥ ७४ ॥ दिशोऽप्येता असंख्येयप्रदेशा लोकसीमया । अलोकापेक्षया सर्वाः, स्युरनन्तप्रदेशिकाः ॥७५॥ प्रत्येकमासां सर्वासां, दिशां सर्वे प्रदेशकाः । कृतयुग्ममिताः सन्ति, सिद्धान्तपरिभाषया ॥७६॥ तदुक्तमाचाराङ्गनिर्युक्तौ—'सवा य हवंति कडजुम्मे'ति । कृतयुग्मादिस्वरूपं चैवं—चतुष्केण ह्रियमाणश्चतुःशेषो हि यो भवेत् । अभावाद्भागशेषस्य, संख्यातः कृतयुग्मकः ॥ १ ॥ तदुक्तं भगवत्यष्टादशशतकचतुर्थोद्देशकवृत्तौ—"कृतं सिद्धं पूर्णं, ततः परस्य

राशिसंज्ञांतरस्याभावेन, न त्वोजःप्रभृतिवदपूर्णं, यद् युग्मं—समराशिविशेषस्तत्कृतयुग्म"मिति । चतुष्केण ह्रियमाणस्त्रिशेषस्त्र्योज उच्यते। द्विशेषो द्वापरयुग्मः, कल्योजश्चैकशेषकः ॥ २ ॥ तथा च भगवतीसूत्रे— "गो०! जे णं रासी चउक्कगेणं अवहारेणं अवहीरमाणे अवहीरमाणे चउपज्जवसिए से णं कडजुम्मे, एवं तिपज्जवसिए तेओए, दुपज्जवसिए दावरजुम्मे, एगपज्जवसिए कलिओगे" इति । यो मूलतोऽपि राशिः स्याच्चतुस्त्रिद्व्येकरूपकः । सोऽपि ज्ञेयः कृतयुग्मत्र्योजादिनामधेयभाक् ॥ ३ ॥ तदुक्तं भगवतीवृत्तौ—"त्रिभिः आदित एव कृतयुग्माद्वोपरिवर्त्तिभिः ओजो—विषमराशिविशेषस्त्र्योज इति, द्वाभ्यामादित एव कृतयुग्माद्वोपरिवर्त्तिभ्यां यद्परंयुग्मादन्यत् नामनिपातनविधेर्द्वापरयुग्मं, कल्येन ( लिना ) एकेन आदित एव कृतयुग्माद्वोपरिवर्त्तिना ओजो—विषमराशिविशेषः कल्योज" इति। कर्मप्रकृतिवृत्तौ त्वेतेषां निरुक्तिरेवं दृश्यते—"इह कश्चिद्विवक्षितो राशिः स्थाप्यते, तस्य कलिद्वापरत्रेताकृतयुगसंज्ञैश्चतुर्भिर्भागो ह्रियते, भागे च हृते सति यद्येकः शेषो भवति तर्हि स राशिः कल्योज उच्यते, यथा त्रयोदश, अथ द्वौ शेषौ तर्हि द्वापरयुग्मो, यथा चतुर्दश, अथ त्रयः शेषास्ततस्त्रेतौजो, यथा पंचदश, यदा तु न किंचिदवतिष्ठते, किंतु सर्वात्मना निर्लेप एव भवति तदा स कृतयुगो, यथा षोडशेत्यादि." लोकमाश्रित्य साद्यन्ता, एताः सर्वा अपि स्फुटम् । साद्यनन्ता विनिर्दिष्टा, अलोकापेक्षया पुनः ॥ ७६ ॥ स्थापना ॥ १०

दिशामन्येऽपि भेदाः स्युर्नामदिक् ( १ ) स्थापनाख्यदिक् २। द्रव्य ३ क्षेत्र ४ ताप ५ भाव ६ प्रज्ञापका (७)- १४

भिधा दिशः ॥ ७७ ॥ यद्द्रव्यस्य सचित्तादेर्दिगित्येवं कृताभिधा । सा नामदिग् विनिर्दिष्टा, शिष्टैर्दृष्टजगत्त्रयैः ॥ ७८ ॥ पट्टादौ चित्रितस्याथ, जम्बूद्वीपादिकस्य यत् । दिग्विदिक्स्थापनं सोक्ता, स्थापनाशाविशारदैः ॥ ७९ ॥ स्याद् द्रव्यदिगागमतो, नोआगमत इत्यपि । दिक्पदार्थबुधस्तत्रानुपयुक्तः किलादिमा ॥८०॥ त्रिधा च नोआगमतः, प्रज्ञप्ता द्रव्यतो दिशः । तत्राद्या दिक्पदार्थज्ञशरीरं जीववर्जितम् ॥ ८१ ॥ द्वितीया च दिक्पदार्थं, ज्ञास्यन् बालादिरुच्यते । ज्ञशरीरभव्यदेहव्यतिरिक्ताऽप्यथोच्यते ॥ ८२ ॥ या प्रवृत्ता समाश्रित्य, द्रव्यं त्रयोदशाणुकम् । तावद्व्योमांशावगाढं, द्रव्यदिक् सा निवेदिता ॥८३॥ इतो न्यूनाणुजाते तु, दिग्विदिक्परिकल्पनम् । न स्याद् द्रव्ये ततश्चैतज्जघन्यं दिगपेक्षया ॥८४॥ स्थापना चैवं—त्रिबाहुकं नवप्रादेशिकं समभिलिख्य च । कार्यैकैकगृहवृद्धिर्ध्रुवं दिक्षु चतसृषु॥८५॥स्थापना। क्षेत्राशास्त्वधुनैवोक्तास्तापाशाः पुनराहिताः । सूर्योदयापेक्षयैव, पूर्वाद्यास्ता यथाक्रमम् ॥ ८६ ॥ यत्र यस्योदेति भानुः, सा पूर्वाऽनुक्रमात्पराः । विसंवदन्त एताश्च, क्षेत्रदिग्भिर्यथायथम् ॥ ८७ ॥ तथाहि—रुचकापेक्षया या स्याद्दक्षिणा क्षेत्रलक्षणा । तापाशापेक्षया सा स्यादस्माकं ध्रुवमुत्तरा[1] ॥८८॥ अष्टादशविधा भावदिशस्तु जगदीश्वरैः । प्रोक्ता मनुष्यादिभेदभिन्ना इत्थं भवन्ति ताः॥८९॥कर्माकर्मभूमिजान्तर्द्वीपसंमूर्छजा नराः। तथा द्वित्रिचतुष्पञ्चेन्द्रियास्तिर्यञ्च आहिताः॥९०॥ कायाश्चतुर्द्धा पृथिवीजलतेजोऽनिला इति । स्युर्वनस्पतयो मूलस्कन्धाग्रपर्वसंभवाः ॥ ९१ ॥ षोडशैता दिशो देवनारकाङ्गि-

१ उत्तरध्रुवस्याधोभागात् भूतलात् उत्तरभागापेक्षया.

'दिशो निक्षेपाः

२०

२५

॥१३५॥

२७

समन्विताः । भवन्त्यष्टादश भावदिशस्तीर्थकरोदिताः ॥ ९२ ॥ यत्र क्वचिदपि स्थित्वा, प्रज्ञापको दिशां बलात् । निमित्तं वक्ति धर्मं वा, गुरुः प्रज्ञापकाख्यदिक् ॥ ९३ ॥ यस्या दिशः संमुखस्थः, प्रज्ञापकः प्ररूपयेत् । धर्मं निमित्तादिकं वा, सा पूर्वाऽनुक्रमात्पराः ॥ ९४ ॥ एताश्चाष्टादशविधाः, स्युस्तिर्यक् तत्र षोडश । तिस्रस्तिस्रः प्रतिविदिक्, दिक्ष्वेकैकेति कल्पनात् ॥ ९५ ॥ शकटोर्धीस्थिताः प्रज्ञापकोपान्तेऽतिसंकटाः । विस्तीर्णा बहिरूर्ध्वाऽधोयुक्ताश्चाष्टादश स्मृताः ॥ ९६ ॥ अथ प्रकृतं—

पृथिव्योस्तुर्यपञ्चम्योर्मध्ये यद्वियदन्तरम् । तदर्द्धेऽधस्तने न्यूनेऽधोलोकमध्यमीरितम् ॥ ९७ ॥ अधस्ताद्ब्रह्मलोकस्य, रिष्ठाख्यप्रस्तटे स्फुटम् । मध्यं तत्रोर्ध्वलोकस्य, लोकनाथैर्विलोकितम् ॥ ९८ ॥ तथा—पूर्णैकरज्जूपृथुलात्, क्षुल्लकप्रतरादितः । ऊर्ध्वं गतेऽङ्गुलासंख्यभागे तिर्यग्विवर्द्धते ॥ ९९ ॥ अङ्गुलस्यासंख्यभागः, परमत्रेति भाव्यताम् । ऊर्ध्वगादङ्गुलस्यांशादंशस्तिर्यग्गतो लघुः ॥ १०० ॥ एवमधोऽपि । एवं चोर्ध्वलोकमध्यं, पृथुलं पञ्च रज्जवः । हीयतेऽतस्तथैवोर्ध्वं, रज्जुरेकाऽवशिष्यते ॥ १ ॥ किंच—रज्जुमानाद् द्वितीयस्मात्, क्षुल्लकप्रतराच्चितिः । अधोमुखी च तिर्यक् चाङ्गुलासंख्यांशमात्रिका ॥ २ ॥ एवं चाधोलोकमूले, पृथुत्वं सप्त रज्जवः । अथात्र सूचीरज्ज्वादिमानं किंचिन्निगद्यते ॥ ३ ॥ इदं च संग्रहणीवृत्त्यनुसारेण, लोकनाडीस्तवे तु प्रदेशवृद्धिहानी दृश्येते लोकतिर्यग्वृद्धौ । स्थापना ।

५ १० १३

---

१ प्रतिकोणं तदपरभागद्वयस्य दिशां मध्यादपकर्षात् प्रज्ञापकदिशोऽष्टादश.

चतुर्भिः खण्डुकैः सूची, रज्जुः श्रेण्या व्यवस्थितैः। ताभिश्चतुर्भिः प्रतररज्जुः षोडशखण्डुका ॥ ४ ॥ चतसृभिश्च प्रतररज्जुभिर्जायते किल। घनरज्जुश्चतुःषष्टिः, खण्डुकाः सर्वतः समाः ॥५॥ क्रमात् स्थापना। अष्टाविंशं शतमध, ऊर्ध्वं षट्सप्ततिर्मताः। सर्वाश्चतुर्भिरधिके, द्वे शते सूचिरज्जवः ॥ ६॥ दन्तैर्मिता अधोलोके, ऊर्ध्वमेकोनविंशतिः। एकपञ्चाशदाख्याताः, सर्वाः प्रतररज्जवः ॥ ७ ॥ अधोऽष्टावूर्ध्वलोके च, निर्दिष्टा घनरज्जवः। पादोनाः पञ्च सर्वाग्रे, स्युः पादोनास्त्रयोदश ॥ ८॥ इदं दृष्टलोकमानं। वर्गितस्य च लोकस्याधोलोके घनरज्जवः। साद्धया पञ्चसप्तत्याऽधिकमेकं शतं मतम् ॥ ९ ॥ ऊर्ध्वलोके भवेत्साद्धा, त्रिषष्टिः सर्वसंख्यया। ध्रुवमेकोनया चत्वारिंशताढ्यं शतद्वयम् ॥ १० ॥ आसां चतुर्गुणत्वे च, सर्वाः प्रतररज्जवः। शतानि नव षट्पञ्चाशता युक्तानि तत्र च ॥ ११ ॥ शतानि सप्तद्व्यधिकान्यधोलोके प्रकीर्त्तिताः। ऊर्ध्वलोके द्वे शते च, चतुःपञ्चाशताधिके ॥१२॥ चतुर्गुणत्वे चैतासां, भवन्ति सूचिरज्जवः। चतुर्विंशत्युपेतानि, त्वष्टात्रिंशच्छतानि वै ॥ १३ ॥ तत्रापि—अधोलोके शतान्यष्टाविंशतिः स्फुटमष्ट च। ऊर्ध्वलोके पुनस्तासां, सहस्रं षोडशाधिकम्। ॥ १४ ॥ इति वर्गितलोकमानं ॥

घनीकृतो भवेल्लोकः, सप्तरज्जुमितोऽभितः। विष्कम्भायामबाहल्यैः, स बुद्ध्यैवं विधीयते ॥ १५ ॥ एकरज्जूविस्तृतायास्त्रसनाड्यास्तु दक्षिणम्। अधोलोकवर्त्तिखण्डमूनरज्जूत्रयाततम् ॥ १६ ॥ सर्वाधस्ताद्धीयमानविस्तारत्वादुपर्यथ। रज्ज्वसंख्येयभागोरुसप्तरज्जूच्छ्रयं च तत् ॥ १७ ॥ गृहीत्वोत्तरदिग्भागे, त्रसनाड्याः प्रकल्प्यते।

विरचय्याधस्तनांशमुपर्युपरिगं त्वधः ॥ १८ ॥ ततोऽधस्तनलोकार्द्धं, किंचिदूनचतुष्टयम् । रज्जूनामाततं सातिरेकं ससकमुच्छ्रितम् ॥ १९ ॥ क्वचित्किञ्चिदूनससरज्जुबाहल्यमप्यधः । अपरत्र त्वनियतं, बाहल्यमिदमास्थितम् ॥ २० ॥ किंच—ऊर्ध्वलोके त्रसनाड्या, दक्षिणभागवर्त्तिनी । द्वे खण्डे ये कटीन्यस्तहस्तकूर्परसंस्थिते ॥ २१ ॥ ब्रह्मलोकमध्यदेशादधस्तनं तथोर्ध्वगम् । ते प्रत्येकं ब्रह्मलोके, मध्ये द्विरज्जुविस्तृते ॥ २२ ॥ किञ्चिदूनार्द्धार्द्ध-रज्जुत्रयोच्छ्रिते च ते उभे । त्रसनाड्या वामपार्श्वे, वैपरीत्येन कल्पयेत् ॥ २३ ॥ त्रिभिर्विशेषकं । ततश्च रज्ज्वात-तया, त्रसनाड्या समन्वितम् । यादृक्षमूर्ध्वलोकार्द्धं, जातं तदभिधीयते ॥ २४ ॥ अङ्गुलसहस्रांशाभ्यां, द्वाभ्यां रज्जुत्रयं युतम् । विष्कम्भतः किञ्चिदूना, रज्जवः सप्त चोच्छ्रयात् ॥ २५ ॥ बाहल्यतो ब्रह्मलोकमध्ये तत्पञ्चर-ज्जुकम् । अन्यस्थले त्वनियतबाहल्यमिदमास्थितम् ॥ २६ ॥ तदेतदुपरितनं, गृहीत्वाऽर्द्धं निवेशयेत् । अधस्तनं संवर्त्तितलोकार्द्धस्योत्तरान्तिके ॥ २७ ॥ एवं संयोजने चाधोलोकखण्डोच्छ्रयेऽस्ति यत् । अतिरिक्तमुप-रितनात्तत्खण्डित्वाऽभिगृह्य च ॥ २८ ॥ ऊर्ध्वलोकार्द्धबाहल्यपूर्त्यै चोर्ध्वायतं न्यसेत् । एवमस्य सातिरेका, बाहल्यं पञ्च रज्जवः ॥ २९ ॥ तथाऽस्यधोलोकखण्डं, देशोनससरज्जुकम् । बाहल्येनोपरितनं, त्वधिकपञ्चरज्जुकम् ॥३०॥ ततश्चाधस्तने खण्डे, न्यूनं रज्जुद्वयं किल । अतिरिक्तमतोऽस्यार्द्धं, द्वितीयस्मिन्निवेशयेत् ॥३१॥ सर्वस्यास्य चतुरस्रीकृतस्य भवति क्वचित् । रज्ज्वसंख्येयभागाढ्या, बाहल्यं रज्जवो हि षट् ॥ ३२ ॥ तथापि व्यवहारेण, बाहल्यं सप्त रज्जवः । मन्यते व्यवहारो हि, वस्तुन्यूनेऽपि पूर्णताम् ॥ ३३ ॥ विष्कम्भायामतोऽप्येवं, देशोनाः

सप्त रज्जवः। व्यवहारेण विज्ञेयाः, संपूर्णाः सप्त रज्जवः ॥ ३४ ॥ एवमेष सप्तरज्जुमानो लोको घनीकृतः। यत्र क्वाप्यागमेऽत्रांशश्रेणिरुक्ताऽस्य सा ध्रुवम् ॥ ३५ ॥ अस्मिन् घनीकृते लोके, प्रज्ञप्ता घनरज्जवः त्रिचत्वारिंशताढ्यानि, शतानि त्रीणि तात्त्विकैः ॥ ३६ ॥ तच्चैवं—आयामरज्जवः सप्त, सप्तभिर्व्यासरज्जुभिः। हता एकोनपञ्चाशद्भवन्ति घनरज्जवः ॥ ३७ ॥ सप्तभिर्गुणिता एता, बाहल्यसत्करज्जुभिः। यथोक्तमानाः पूर्वोक्ता, भवन्ति घनरज्जवः ॥ ३८ ॥ चतुर्गुणत्वे चासां स्युः, सर्वाः प्रतररज्जवः। अधिकानि द्विसप्तत्या, शतान्येव त्रयोदश ॥ ३९ ॥ आसामपि चतुर्घ्नत्वे, भवन्ति सूचिरज्जवः। चतुष्पञ्चाशच्छतानि, ह्यष्टाशीत्यधिकानि च ॥ ४० ॥ चतुर्भिर्गुणने त्वासां, खण्डुकान्येकविंशतिः। सहस्राणि नवशती, द्विपञ्चाशत्समन्विता ॥ ४१ ॥ इति घनीकृतलोकमानं। स्थापना। असंख्याभिर्योजनानां, कोटाकोटीभिरुन्मितः। नायं लोको गणनया, वक्तुं केनापि शक्यते ॥ ४२ ॥ ततो दृष्टान्ततः स्पष्टं, निर्दिष्टो ज्ञानदृष्टिभिः। स चायमुदितः पञ्चमाङ्गस्यैकादशे शते ॥४३॥ तथाहि—जम्बूद्वीपाभिधे द्वीपे, परितो मेरुचूलिकाम्। षड् निर्जराः स्थिताः किंच, चतस्रो दिक्कुमारिकाः ॥ ४४ ॥ बलिपिण्डान् समादाय, बाह्याभिमुख्यतः स्थिताः। जम्बूद्वीपस्य पर्यन्तदेशे दिक्षु चतसृषु ॥ ४५ ॥ क्षिपन्ति बलिपिण्डाँस्ताः, स्वस्वदिक्षु बहिर्मुखान्। तेषामथैककः कश्चित्, षण्णां मध्यात्सुधाभुजाम् ॥४६॥ पृथ्वीपीठमसंप्राप्तान्, सर्वानप्याददीत तान्। जम्बूद्वीपस्य परितो, भ्राम्यन् गत्या यया द्रुतम् ॥ ४७ ॥ तया गत्याऽथ ते देवा, लोकान्तस्य दिदृक्षया। आशासु षट्सु युगपत्, प्रस्थिताः पथिका इव ॥ ४८ ॥ इतश्च

लोकघनीभावः

२०

२५

॥ १३७॥

२८

तस्मिन् समये, कस्यचिद्व्यवहारिणः । पुत्रो वर्षसहस्रायुर्जातोऽसौ वर्द्धते क्रमात् ॥ ४९ ॥ क्रमादथास्य पितरौ, विपन्नावायुषः क्षयात् । स्वायुः समापयामास, तत एषोऽप्यनुक्रमात् ॥ ५० ॥ कालेन कियता चास्य, अस्थि-मज्जाः क्षयं गताः । लोकान्तं न च ते देवाः, प्रापुः श्रान्ता इवाश्रयम् ॥ ५१ ॥ अस्य वंशः ससमोऽपि, क्रमेणैवं क्षयं गतः । कालेन तस्य नामादि, समस्तमस्तमीयिवत् ॥ ५२ ॥ अथास्मिन् समये कश्चित्, सर्वज्ञं यदि पृच्छति । क्षेत्रं तेषां किमगतम्, गतं वा बहुलं ? प्रभो ! ॥ ५३ ॥ तदादिशेज्जिनस्तेषां, गतं बहुगतं मितम् । गतादन्यदसङ्ख्येऽशे, संख्यघ्नमगताच्च तत् ॥ ५४ ॥ संवर्त्तितचतुरस्रीकृतस्य लोकस्य मानमेतदिति । संभवति यथावस्थितलोके तु तस्य वैषम्यात् ॥ ५५ ॥ आर्या । इति भगवतीशतक ११ उद्देशे १० ।

वसन्ति तत्राधोलोके, भवनाधिपनारकाः । तिर्यक् च व्यन्तरनराब्धिद्वीपज्योतिषादयः ॥ ५६ ॥ वैमानिकाः सुराः सिद्धा, ऊर्ध्वलोके वसन्ति च । इति सामान्यतो लोकस्वरूपमिह वर्णितम् ॥५७॥ अथ त्रयाणां लोकानां, प्रत्येकं तन्निरूप्यते । तत्रादौ कथ्यते किञ्चिदधोलोको विशेषतः ॥ ५८ ॥ पृथिव्यस्तत्र निर्दिष्टाः, सप्त सप्तभयापहैः । गोत्रतो नामतश्चैवं, गोत्रभित्प्रणतक्रमैः ॥५९॥ आद्या रत्नप्रभा पृथ्वी, द्वितीया शर्कराप्रभा । ततः परा च पृथिवी, तृतीया वालुकाप्रभा ॥६०॥ पङ्कप्रभा चतुर्थी स्याद्धूमप्रभा च पञ्चमी । षष्ठी तमःप्रभा सप्तमी स्यात्तमस्तमःप्रभा ॥ ६१ ॥ अन्वर्थजानि सप्तानां, गोत्राण्याहुरमूनि वै । रत्नादीनां प्रभायोगात्प्रथितानि तथा तथा ॥६२॥ घर्मा १ वंशा २ तथा शैला ३ ऽञ्जना ४ रिष्ठा ५ मघा ६ तथा । माघवती ७ ति नामानि, निरन्वर्थान्यमूनि

यत् ॥६३॥ स्थापना। अधो महत्तमं छत्रं, तस्योपरि ततो लघु । छत्राणामिति सप्तानां, स्थापितानां समा इमाः ॥६४॥ स्यातामायामविष्कम्भौ, सप्तम्याः सप्त रज्जवः । षष्ठ्याः षट् पञ्च पञ्चम्यास्ताश्चतस्रोऽञ्जनाभुवः ॥ ६५ ॥ रज्जुत्रयं तृतीयाया, द्वितीयायास्तु तद्द्वयम् । स्यातामायामविष्कम्भौ, रज्जुरेकादिमक्षितेः ॥ ६६ ॥ रत्नप्रभाया बाहल्यं, योजनानां प्रकीर्त्तितम् । एकं लक्षं सहस्राणामशीत्या साधिकं किल ॥ ६७ ॥ तथैवं—सहस्राणि षोडशाद्यं, खरकाण्डं द्वितीयकम् । सहस्राः पङ्कबहुलं, चतुरशीतिरीरितम् ॥ ६८ ॥ तृतीयं जलबहुलं, स्यादशीतिसहस्रकम् । ततोऽशीतिसहस्राढ्यं, लक्षं पिण्डोऽग्रिमक्षितेः ॥ ६९ ॥ खरकाण्डे च काण्डानि, षोडशोक्तानि तात्त्विकैः । प्रत्येकमेषां बाहल्यं, योजनानां सहस्रकम् ॥७०॥ तत्रादिमं रत्नकाण्डं १, वज्रकाण्डं २ द्वितीयकम् । वैडूर्यं ३ लोहिताख्यं ४ च, मसारगल्ल ५ संज्ञकम् ॥ ७१ ॥ हंसगर्भं ६ च पुलकं ७, सौगन्धिकाभिधं ८ परम् । ज्योतीरस ९ मञ्जनं १० चाञ्जनपुलक ११ संज्ञकम् ॥ ७२ ॥ रजतं १२ जातरूपं १३ च, अङ्कं १४ स्फटिकसंज्ञकम् १५ । रिष्ठकाण्डं चेत्यमूनि, यथार्थाख्यान्यनुक्रमात् ॥ ७३ ॥ स्थापना। एतेषु तत्तज्जातीयरत्नबाहुल्ययोगतः । रत्नप्रभेति गोत्रेण, पृथ्वीयं परिकीर्त्त्यते ॥ ७४ ॥ तिर्यग्लोके भवन्त्यस्या, योजनानां शता नव । ऊर्ध्वगाः ( शतानि च । नवोर्ध्वे ) शेषपिण्डस्तु, स्यादधोलोकसंस्थितः ॥ ७५ ॥ चतुर्भिश्च किलाधारैर्भूमिरेषा प्रतिष्ठिता । घनोदधिघनवाततनुवातमरुत्पथैः ॥ ७६ ॥ त्रिभिश्च वलयैरेषा, परितः परिवेष्टिता । घनोदधिघनवाततनुवातात्मकैः क्रमात् ॥ ७७ ॥ तत्र प्रतिष्ठिता भूमिराधारेण घनोदधेः । महाकटाहविन्यस्त-

स्त्यानाज्यघनपिण्डवत् ॥ ७८ ॥ योजनानां सहस्राणि, विंशतिः परिकीर्त्तितम् । घनोदधेर्मध्यभागे, बाहल्यं क्रमतस्ततः ॥ ७९ ॥ प्रदेशहान्याऽसौ हीयमानोऽत्यन्ततनूभवन् । पृथ्वीं वलयाकारेण, स्वयमावृत्त्य तिष्ठति ॥ ८० ॥ युग्मं ॥ वलयस्यास्य विष्कम्भः, प्रज्ञप्तो योजनानि षट् । उच्चत्वं तु वसुमतीबाहल्यस्यानुसारतः ॥८१॥ असौ घनोदधिरपि, घनवाते प्रतिष्ठितः । असंख्यानि योजनानि, मध्ये तस्यापि पुष्टता ॥ ८२ ॥ प्रदेशहान्या तनुतां, भजमानो घनोदधेः । आवृत्त्य वलयं तस्थौ, वलयाकृतिनाऽऽत्मना ॥ ८३ ॥ अस्यापि वलयस्यैवं, मानमाद्यैरुदीरितम् । चतुष्टयी योजनानां, सार्द्धोच्चत्वं तु पूर्ववत् ॥ ८४ ॥ घनवातोऽपि सततं, तनुवाते प्रतिष्ठितः । अस्यापि मध्ये बाहल्यमसंख्यघ्नं घनानिलात् ॥ ८५ ॥ ततस्तनूभवन्नेष, घनवातस्य सर्वतः । आवृत्त्य वलयं तस्थौ, वलयाकृतिनाऽऽत्मना ॥ ८६ ॥ तनुवातस्य वलये, विष्कम्भः परिकीर्त्तितः । एकं योजनमध्यर्द्धमुच्चत्वं पुनरुक्तवत् ॥ ८७ ॥ तनुवातोऽप्यसौ तस्थावाधारेण विहायसः । तच्च प्रतिष्ठितं स्वस्मिन्नसंख्ययोजनोन्मितम् ॥ ८८ ॥ सप्तस्वपि महीष्वेवं, घनोदध्यादयो मताः । वलयानां तु विष्कम्भो, यथास्थानं प्रवक्ष्यते ॥ ८९ ॥ भाति भूः स्वसमश्रेणिस्थायिभिर्वलयैस्त्रिभिः । पूर्णेन्दुवत्परिधिभिः, सुधाकुण्डमिवोरगैः ॥९०॥ स्थापना । भवत्येवमलोकश्च, धर्मापर्यन्तभागतः । योजनैर्दशभिर्द्वाभ्यामतिरिक्तैः समन्ततः ॥ ९१ ॥

अथैतस्यां रत्नकाण्डस्याधस्तनं तथोर्ध्वगम् । विमुच्य शतमेकैकं, मध्येऽष्टशतयोजने ॥ ९२ ॥ असंख्येयानि भौमेयनगराण्यासते सदा । बहिर्विभागे वृत्तानि, चतुरस्राणि चान्तरे ॥ ९३ ॥ अधोभागेऽनुकुर्वन्ति, चारुपु-

ध्वजकर्णिकाम् । गम्भीरखातपरिखाप्राकारालङ्कृतानि च ॥ १४ ॥ शतघ्न्यादिमहायन्त्रजटिलानि समन्ततः । दुष्प्रवेशान्ययोध्यानि, गुप्तानि श्रीभृतानि च ॥ १५ ॥ उल्लासिपूर्णकलशतोरणद्वारवन्ति च । अनारतं रक्षितानि, दण्डिभिः किङ्करामरैः ॥ १६ ॥ परिष्कृतानि कुसुमैः, पञ्चवर्णैः सुगन्धिभिः । काकतुण्डतुरुष्कादिधूपसौरभ्यवन्ति च ॥ १७ ॥ जम्बूद्वीपोपमानानि, विष्कम्भायाममानतः । उत्कृष्टानि विदेहानुकारीणि मध्यमान्यपि ॥ १८ ॥ अपि यान्यल्पमानानि, निरूपितानि तान्यपि । भरतक्षेत्रसदृशान्येतेषु च वसन्त्यमी ॥ १९ ॥ स्थापना । अष्टधा व्यन्तरा देवा, महासमृद्धिशालिनः । पिशाचा भूतयक्षाख्या, राक्षसाः किन्नरा अपि ॥२००॥ किंपुरुषा महोरगा, गन्धर्वाश्च तथा परे । सर्वेऽप्येते दाक्षिणात्योदीच्यभेदात्स्मृता द्विधा ॥२०१॥ सर्वेऽप्येतेऽतिसुभगाः, सुरूपाः सौम्यदर्शनाः । हस्तग्रीवादिषु रत्नमयभूषणभूषिताः ॥२॥ गान्धर्वगीतरतयः, कौतुकाक्षिप्तचेतसः । प्रियक्रीडा हास्यलास्या, अनवस्थितचेतसः ॥ ३ ॥ विकुर्वितस्फारवनमालामुकुटकुण्डलाः । स्वैरोल्लापाः स्वैररूपधारिणः स्वैरचारिणः ॥ ४ ॥ नानावर्णवस्त्रनानादेशनेपथ्यधारिणः । मुद्गरासिकुन्तशक्तिचापादिव्यग्रपाणयः ॥ ५ ॥ तत्र यक्षाः पिशाचाश्च, गन्धर्वाश्च महोरगाः । किञ्चित्कृष्णाः किम्पुरुषा, राक्षसाश्च सितत्विषः ॥ ६ ॥ किन्नराः श्यामभासोऽपि, किञ्चिन्नीलत्विषो मताः । भूताः पुनः कालवर्णाः, कज्जलैर्घटिता इव ॥ ७ ॥ कदम्बः सुलसश्चैव, वटः खट्वाङ्गमेव च । अशोकश्चम्पको नागस्तुम्बरुश्च यथाक्रमम् ॥ ८ ॥ भवन्ति चिह्नान्यष्टानां, पिशाचादिसुधाभुजाम् । ध्वजेषु तत्र खट्वाङ्गं, विना सर्वेऽपि पादपाः ॥ ९ ॥

अष्टनोदव्याघाः व्यन्तराः

२०

२५

॥१३९॥

२८

खट्वाङ्गं तूपकरणं, तापसानामुदीरितम् । प्रायः क्रीडाविनोदार्थं, नरलोके चरन्त्यमी ॥ १० ॥ चैत्यवृक्षास्तथै-वैषामष्टानां क्रमतो मताः । कदम्बाद्यास्तथा चोक्तं, तृतीयाङ्गे गणाधिपैः ॥ ११ ॥ "एएसि णं अट्ठविहाणं वाणमंतरदेवाणं अट्ठ चेतितरुक्खा पण्णत्ता, तंजहा—कलंबो उ पिसायाणं, वडो जक्खाण चेतितं । तुलसी भूयाण भवे, रक्खसाणं च कंडओ ॥ १२ ॥ असोओ किन्नराणं च, किंपुरिसाण य चंपओ । णागरुक्खो भुअं-गाणं, गंधव्वाण य तेंदुओ ॥ १३ ॥" चैत्यवृक्षा मणिपीठिकानामुपरिवर्त्तिनः सर्वरत्नमया उपरि छत्रध्वजादिभि-रलङ्कृताः सुधर्मादिसभानामग्रतो ये श्रूयंते त एत इति संभाव्यन्ते, ये तु ' चिंधाइं कलंबझए ' इत्यादि, ते चिह्नभूता एतेभ्योऽन्य एवेति स्था० ८ सूत्रवृत्त्योः । प्रायः शैलकन्दरादौ, यच्चरन्ति वनान्तरे । ततः पृषोद-रादित्वादेते स्युर्वानमन्तराः ॥ १४ ॥ भृत्यवच्चक्रवर्त्याद्याराधनादिकृतस्ततः । व्यन्तरा वाऽभिधीयन्ते, नरेभ्यो विगतान्तराः ॥ १५ ॥ एकैकस्मिन्निकायेऽथ, द्वौ द्वाविन्द्रावुदाहृतौ । दक्षिणोत्तरभेदेन, कालाद्यास्ते च षोडश ॥ १६ ॥ कालश्चैव महाकालः, पिशाचचक्रवर्तिनौ । सुरूपः प्रतिरूपश्च, भूतेन्द्रौ दक्षिणोत्तरौ ॥ १७ ॥ पूर्णभ-द्रमाणिभद्रौ, यक्षाणामधिपावुभौ । भीमश्चैव महाभीमो, राक्षसानामधीश्वरौ ॥ १८ ॥ किन्नरश्च किम्पुरुषः, किन्नराणां महीक्षितौ । इन्द्रौ किम्पुरुषाणां च, सन्महापुरुषौ स्मृतौ ॥ १९ ॥ अतिकायमहाकायौ, महोरगध-राधिपौ । गन्धर्वाधिपती गीतरतिर्गीतयशा इति ॥ २० ॥ सुरेन्द्राः षोडशाप्येते, महाबला महाश्रियः । महा-सौख्या महोत्साहाः, स्युरनुत्तरशक्तयः ॥ २१ ॥ कमला चैव कमलप्रभोत्पला सुदर्शना । प्रत्येकमेतन्नाम्न्यः

स्युः, प्रियाः पिशाचराजयोः ॥ २२ ॥ रूपवती बहुरूपा, सुरूपा सुभगापि च। भूताधिराजयोरग्रमहिष्यः कथिता जिनैः ॥ २३ ॥ पूर्णा बहुपुत्रिका चोत्तमा तथा च तारका। पूर्णभद्रमाणिभद्रदेवयोर्दयिता इमाः ॥२४॥ वतंसिका केतुमती, रतिसेना रतिप्रिया। गदिता दयिता एताः, किन्नराणामधीशयोः ॥ २५ ॥ रोहिणी च नवमिका, ह्रीनाम्नी पुष्पवत्यपि। प्राणप्रिया इमाः प्रोक्ता, जिनैः किम्पुरुषेन्द्रयोः ॥ २६ ॥ भुजगा भुजगवती, महाकच्छा स्फुटाभिधा। चतस्रो जीवितेश्वर्यो, महोरगाधिराजयोः ॥ २७ ॥ सुघोषा विमला चैव, सुस्वरा च सरस्वती। चतस्रः प्राणदयिता, गन्धर्वाणामधीशयोः ॥ २८ ॥ साम्प्रतीनास्तु—कालादीनां दाक्षिणात्येन्द्राणां याः कमलादयः। ता नागपुरवास्तव्या, द्वात्रिंशत्पूर्वजन्मनि ॥२९॥ महाकालाद्यौत्तरात्येन्द्राणां याः कमलादयः। साकेतपुरवास्तव्यास्ता द्वात्रिंशदपि स्मृताः ॥ ३० ॥ एवं चतुष्षष्टिरपि, महेभ्यवृद्धकन्यकाः। स्वस्वनामप्रतिरूपजननीजनकाभिधाः ॥ ३१ ॥ पुष्पचूलार्यिकाशिष्याः, श्रीपार्श्वार्पितसंयमाः। शबलीकृतचारित्रा, मासार्द्धानशनस्पृशः ॥ ३२ ॥ अतिचाराननालोच्याप्रतिक्रम्य मृतास्ततः। कालादिव्यन्तरेन्द्राणां, बभूवुः प्राणवल्लभाः ॥ ३३ ॥ पञ्चभिः कुलकं ॥ प्रत्येकमासां साहस्रः, परिवारो भवेदथ। एकैकेयं च देवीनां, सहस्रं रचितुं क्षमा ॥ ३४ ॥ प्रत्येकमेषामिन्द्राणां, चतुःसहस्रसंमिताः। अवरोधे भवन्त्येवं, देव्यो लावण्यबन्धुराः ॥ ३५ ॥ प्रत्येकमेषां सर्वेषां, तिस्रो भवन्ति पर्षदः। ईषा तथा च त्रुटिता, सभा दृढरथाभिधा ॥ ३६ ॥ सहस्राण्यष्ट देवानां, तत्राभ्यन्तरपर्षदि। मध्यायां दश बाह्यायां, द्वादशेति यथाक्रमम् ॥ ३७ ॥ देवीनां शतमेकैकं, पर्षत्सु स्यात्ति-

व्यन्तरमहिष्यः

२०

२५

॥१४०॥

२८

सृष्वपि । देवदेवीनामथात्र, स्थितिः क्रमान्निरूप्यते ॥ ३८ ॥ पूर्णं पल्योपमस्यार्द्धं, तद्देशोनं तथाधिकम् । पल्योपमस्य तुर्योंऽशो, देवानां क्रमतः स्थितिः ॥ ३९ ॥ साधिकः पल्यतुर्यांशः, पूर्णः स एव च स्थितिः । स एव देशेन न्यूनो, देवीनां क्रमतः स्मृता ॥ ४० ॥ एवं च—सामानिकानामेतेषां, तथाऽग्रयोषितामपि । पर्षदस्तिस्र ईषा त्रुटिता दृढरथाभिधा ॥ ४१ ॥ चतुर्भिरेवं सर्वेऽमी, सामानिकसहस्रकैः । प्रेयसीभिश्चतसृभिः, स्वपरिच्छदचारुभिः ॥ ४२ ॥ पार्षदैस्त्रिविधैर्देवैः, सप्तभिः सैन्यनायकैः । गन्धर्वनटहस्त्यश्वरथपादात्यकामरैः ॥ ४३ ॥ अमीभिः सप्तभिः सैन्यैश्चतुर्भिश्चात्मरक्षिणाम् । स्थितैः प्रत्याशं सहस्रैरन्वहं सेविताह्वयः ॥ ४४ ॥ स्वस्वभौमेयनगरलक्षाणां चक्रवर्त्तिताम् । असंख्येयानामजस्रं, प्रत्येकं बिभ्रतोऽद्भुताम् ॥ ४५ ॥ व्यन्तराणां व्यन्तरीणां, स्वस्वनिकायजन्मनाम् । स्वस्वदिग्वर्त्तिनां स्वैरं, साम्राज्यमुपभुञ्जते ॥ ४६ ॥ पञ्चभिः कुलकं । दिव्यस्त्रीसंप्रयुक्तेषु, नाट्येषु व्यापृतेन्द्रियाः । न जानते गतमपि, कालं पल्योपमायुषः ॥ ४७ ॥ तथोक्तं—"तहिं देवा वंतरिया वरतरुणीगीयवाइयरवेणं । निच्चं सुहियपमुइया गयंपि कालं न याणंति ॥ १ ॥" व्यन्तराणाममी अष्टौ, मूलभेदाः प्रकीर्त्तिताः । अष्टाऽवान्तरभेदाः स्युरणपर्णीमुखाः परे ॥४८॥ तथाहि—अणपन्नी पणपन्नी इसिवाई भूयवाइए चेव । कंदी य महाकंदी कोहंडे चेव पयए य ॥ ४९ ॥ प्राग्वत्प्रतिनिकायेऽत्र, द्वौ द्वाविन्द्रावुदीरितौ । क्षेत्रयो रुचकाद्यास्यौत्तराह्वयोरधीश्वरौ ॥ ५० ॥ इन्द्रौ सन्निहितः सामानिकश्चाद्यनिकाययोः । धाता विधातेत्यधिपौ, निकाये च द्वितीयके ॥ ५१ ॥ तार्त्तीयीकनिकायेन्द्रौ, ऋषिश्च ऋषिपालितः । चतुर्थस्य

निकायस्य, तावीश्वरमहेश्वरौ ॥ ५२ ॥ सुवत्सश्च विशालश्च, निकाये पञ्चमेऽधिपौ । षष्ठे निकाये नेतारौ, हास्यहास्यरती इति ॥ ५३ ॥ श्रेयोमहाश्रेयांसौ च, निकाये सप्तमेऽधिपौ । पद्गः पद्गपतिर्निकायस्याष्टमस्य तौ ॥ ५४ ॥ तथाहुः स्थानांगे–'दो अणपन्निंदा पन्नत्ता' इत्यादि । एतेऽपि रत्नकांडस्य, शतं शतमुपर्यधः । परित्यज्य वसन्त्यष्टशतयोजनमध्यतः ॥ ५५ ॥ तथाहुः प्रज्ञापनायां–"कहि णं भंते ! वाणमंतराणं देवाणं भोमेज्जा नगरा पण्णत्ता?, कहि णं भंते ! वाणमंतरा देवा परिवसंति?, गोयमा ! से रयणप्पभाए पुढवीए रयणामयस्स कंडस्स जोअणसहस्सबाहल्लस्स उवरिं एगं जोअणसयं उगाहेत्ता हेट्ठावि एगं जोअणसयं वज्जेत्ता मज्झे अट्ठसु जोअणसएसु एत्थ णं वाणमंतराणं तिरियमसंखेज्जा भोमेज्जा नगरावाससयसहस्सा भवंतीतिमक्खाया, ते णं" इत्यादि । "तत्थ णं बहवे वाणमंतरा देवा परिवसंति, तंजहा—पिसाया भूया जक्खा यावत् अणपन्निय पणपन्निय इत्यादि." संग्रहण्यां तु–"इय पढमजोअणसए रयणाए अट्ठ वंतरा अवरे । तेसिं इह सोलसिंदा रुअगअहो दाहिणुत्तरओ ॥ १ ॥" योगशास्त्रचतुर्थप्रकाशवृत्तौ त्वेवं—"रत्नप्रभायामेव प्रथमस्य शतस्याध उपरि च दश दश योजनानि मुक्त्वा मध्येऽशीतियोजनेषु अणपन्नियपणपन्नियप्रभृतय" इति । एषां वक्तव्यता सर्वा, विज्ञेया प्राक्तनेन्द्रवत् । जाता द्वात्रिंशदित्येवं, व्यन्तरामरनायकाः ॥५६॥ भौमेयनगरेष्वेषु, व्यन्तराः प्रायशः खलु ।

१ रत्नप्रभाया उपरितनं शतं योजनानां विहाय नान्यत् स्थानं, भेदद्वयेऽपि पृथगिन्द्रभणनात् स्थानपार्थक्यं, प्रज्ञापनादौ तु सामान्येन निर्देशः, चतुर्निकायतया निर्धारणात्, अन्यथा पञ्चमनिकायभावात् ।

वानमन्तराः

२०

२५

२६

उत्पद्यन्ते प्राच्यभवाऽनुष्ठिताज्ञानकष्टतः ॥ ५७ ॥ मृताः पाशविषाहारजलाग्निक्षुत्तृडादिभिः । भृगुपातादिभिश्च स्युर्व्यन्तराः शुभभावतः ॥ ५८ ॥ स्थितिरुत्कर्षतोऽमीषां, पल्यमर्द्धं च योषिताम् । सहस्राणि दशाब्दानामुभयेषां जघन्यतः ॥ ५९ ॥ स्वाभाविकं सप्तहस्तमानमुत्कर्षतो वपुः । अङ्गुलासंख्यांशमानं, जघन्यं प्रथमक्षणे ॥ ६० ॥ लक्षयोजनमानं चोत्कृष्टमुत्तरवैक्रियम् । प्रक्रमेऽङ्गुलसंख्येयभागमानं जघन्यतः ॥ ६१ ॥ एषां लेश्याश्चतस्रः स्युः, पद्मां शुक्लां विना पराः । उच्छ्वसन्ति सप्तभिस्ते, स्तोकैर्जघन्यजीविनः ॥ ६२ ॥ बुभुक्षवश्चैकदिनान्तरेऽथोत्कृष्टजीविनः । समुच्छ्वसन्त्याहरन्ति, मुहूर्त्ताहःपृथक्त्वकैः ॥ ६३ ॥ आहारे चित्तसंकल्पोपस्थिताः सारपुद्गलाः । सर्वाङ्गेषु परिणमन्त्येषां कावलिकस्तु न ॥ ६४ ॥ ये तु हिंस्राः सुरा वीरचण्डिकाकालिकादयः । मद्यमांसाद्याहुतिभिस्तुष्यन्ति तर्पिता इव ॥ ६५ ॥ तेऽपि पूर्वभवाभ्यासात्पापा मिथ्यात्वमोहिताः । मद्यमांसादि वीक्ष्यैव, तुष्यन्ति न तु भुञ्जते ॥६६॥ युग्मम् । संमूर्छिमा गर्भजाश्च, तिर्यञ्चो गर्भजा नराः । उत्पद्यन्ते षड्भिरपि, युताः संहननैरिह ॥ ६७ ॥ च्युत्वोत्पद्यन्त एते नृतिरश्चोर्गर्भजन्मनोः । पर्याप्तबादरक्ष्माम्भःप्रत्येकभूरुहेषु च ॥ ६८ ॥ एकेन समयेनैकाद्योऽसंख्यावसानकाः । उत्पद्यन्ते च्यवन्तेऽमी, उत्कृष्टमेषु चान्तरम् ॥ ६९ ॥ ज्ञेयं मुहूर्त्तानि चतुर्विंशतिस्तज्जघन्यतः । एकसामयिकं नूनं, च्यवनोत्पत्तिगोचरम् ॥ ७० ॥ पश्यन्त्यवधिना पञ्चविंशतियोजनान्यमी । जघन्यजीविनोऽन्ये च, संख्येययोजनावधि ॥ ७१ ॥ तिर्यग्लोकवासिनोऽपि, व्यन्तरा यदिहोदिताः । तद्वै रत्नप्रभापृथ्वीवक्तव्यताप्रसङ्गतः ॥ ७२ ॥ इति व्यन्तराणां

सुराणां पुराणां, पुराणोपदिष्टा व्यवस्था न्यरूपि । तृतीयाच्चतुर्थादुपांगाच्च शेषं, विशेषं विदन्तु प्रबुद्धाः समेधाः ॥ ७३ ॥ ( भुजङ्गप्रयातं ) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गो निर्गलितार्थसार्थसुभगः पूर्णः सुखं द्वादशः ॥ ७४ ॥

॥ इति श्रीलोकप्रकाशे द्वादशः सर्गः समाप्तः ॥ ( ग्रन्थाग्रं ३२९ अ० १९ )

---

## ॥ अथ त्रयोदशः सर्गः प्रारभ्यते ॥

योजनानां सहस्रं च, मुक्त्वैकैकमुपर्यधः । मध्येऽष्टसप्ततिसहस्राढ्ये लक्षे क्षिताविह ॥ १ ॥ वसन्ति भवनाधीशनिकाया असुरादयः । दशैतेऽपि द्विधा प्राग्वद्दक्षिणोत्तरभेदतः ॥ २ ॥ तेषु प्रत्येकमिन्द्रौ द्वौ, भवतो दक्षिणोत्तरौ । भवनेन्द्रा विंशतिः स्युरित्येवं चमरादयः ॥ ३ ॥ तथोक्तं—"असुरा नाग सुवण्णा विज्जू अग्गी य दीव उदही य । दिसि पवण थणिय दसविह भवणवई तेसु दुदुइंदा ॥ ४ ॥" अन्ये त्वाहुः–"नवतियोजनसहस्राणामधस्ताद्भवनानि, अन्यत्र चोपरितनमधस्तनं च योजनसहस्रं मुक्त्वा सर्वत्रापि यथासंभवमावासा" इति । "आवासा नाम कायमानसन्निभा महामण्डपा" इति लघुसंग्रहणीवृत्तौ तत्त्वार्थभाष्येऽपि, "तत्र भव-



२०

॥१४२॥

२५

२६

नानि रत्नप्रभायां बाहल्यार्द्धमवगाह्य मध्ये भवंतीत्युक्त"मिति ज्ञेयं। चतुस्त्रिंशत्क्रमात्त्रिंशल्लक्षाः [1] स्युर्दक्षिणोत्तराः। भवना असुराणां ते, चतुरः षष्टिश्च मीलिताः ॥ ५ ॥ लक्षाश्चतुश्चत्वारिंशाचत्वारिंशद् द्वयोर्दिशोः। नागालयानां चतुरशीतिर्लक्षाश्च मीलिताः ॥ ६ ॥ अष्टात्रिंशचतुस्त्रिंशल्लक्षाः क्रमाद् द्वयोर्दिशोः। सर्वाग्रेण सुपर्णानां, गृहलक्षा द्विसप्ततिः ॥ ७ ॥ चत्वारिंशच्च षट्त्रिंशद्दक्षिणोत्तरयोः क्रमात्। वैद्युता वासलक्षाः स्युः, षट्सप्ततिश्च मीलिताः ॥ ८ ॥ एवमग्निकुमाराणां, द्वीपवार्द्धिदिशां तथा। विद्युत्कुमारवत्संख्या, भवनानां प्रकीर्त्तिता ॥ ९ ॥ पञ्चाशदथ षट्चत्वारिंशद्दिशोर्द्वयोः क्रमात्। लक्षा वायुसुरावासाः, सर्वं षण्णवतिश्च ताः ॥ ॥ १० ॥ चत्वारिंशत्तथा षट्त्रिंशदुक्ता दिग्द्वये क्रमात्। स्तनितानां गृहाः सर्वं, लक्षाः षट्सप्ततिः किल ॥११॥ स्थापना ॥ चतस्रः कोटयो लक्षाः, षड् गृहा दक्षिणाश्रिताः। उत्तराहास्तु षट्षष्टिर्लक्षास्तिस्रश्च कोटयः ॥ १२ ॥ द्वयोर्दिशोश्च सर्वाग्रं, भवनानामुदाहृतम्। कोटयः सप्त लक्षाणां, द्वासप्तत्या समन्विताः ॥१३॥ आकारेण सुपमया, प्राकारपरिखादिभिः। व्यन्तराणां नगरवत्, प्रायो ज्ञेयान्यमून्यपि ॥ १४ ॥ गुरूणि तान्यसंख्येयैर्मितानि खलु योजनैः। मध्यानि संख्येयैर्जम्बूद्वीपाभानि लघून्यपि ॥ १५ ॥ तत्रासुरनिकायस्य, दक्षिणस्यां दिशि प्रभुः। चमरेन्द्रः शरचन्द्रचन्द्रिकाविलसद्यशाः ॥ १६ ॥ तथाहि—विद्यते दक्षिणदिशि, तिर्यग्मेरोः सुदर्श-

---

[1] आवसानामुपरिष्टाद् स्थानश्रुतेः भवनानां नारकावासासन्नतया स्थानश्रुतेरेवंविभागः, बाहुल्येनैवं भावे अत्र अग्रे प्रतिनिकायं स्थानभेदेऽपि न विरोधः।

नात् । असंख्यद्वीपाब्धिपरो, द्वीपोऽरुणवराभिधः ॥ १७ ॥ तस्य बाह्यवेदिकान्तान्मध्येऽरुणवराम्बुधेः । योजनानां द्विचत्वारिंशत्सहस्राण्यतीत्य वै ॥ १८ ॥ चमरस्यासुरेन्द्रस्य, महानुत्पातपर्वतः । तिगिञ्छिकूटनामास्ति, प्रशस्तश्रीभरोद्धुरः ॥ १९ ॥ योजनानां सप्तदश, शतान्यथैकविंशतिः । स उच्छ्रितस्तत्तुर्यांशो (४३०), निमग्नो वसुधान्तरे ॥२०॥ मूले सहस्रं द्वाविंशं, योजनानां स विस्तृतः । मध्ये शतानि चत्वारि, चतुर्विंशानि विस्तृतः ॥२१॥ शतानि सप्त विस्तीर्णस्त्रयोविंशानि चोपरि । ऊर्ध्वाधो विस्तृतो मध्ये, क्षामो महामुकुन्दवत् ॥ २२ ॥ मुकुन्दो वाद्यविशेष इति ॥ सर्वरत्नमयस्यास्य, वेदिकावनशालिनः । शिरस्तले मध्यदेशे, स्यात्प्रासादावतंसकः ॥ २३ ॥ सार्द्धे द्वे योजनशते, तुङ्गः सपञ्चविंशतिः । ततः शतं योजनानि, रम्योल्लोकमहीतलः ॥ २४ ॥ अष्टयोजनमानाथ, तत्रास्ति मणिपीठिका । चमरेन्द्रस्यात्र सिंहासनं सहपरिच्छदम् ॥ २५ ॥ तिर्यग्लोकं जिगमिषुर्जिनजन्मोत्सवादिषु । प्रथमं चमरेन्द्रोऽस्मिन्नुपैति स्वाश्रयाद्गिरौ ॥ २६ ॥ ततो यथेप्सितं स्थानमुत्पतत्यविलम्बतः । तेनायं चमरेन्द्रस्य, ख्यात उत्पातपर्वतः ॥ २७ ॥ षट् शतान्यथ कोटीनां, पञ्चपञ्चाशदेव च । कोट्यो लक्षाण्यथ पञ्चत्रिंशल्लक्षार्द्धमेव च ॥ २८ ॥ योजनानि तिर्यगस्मात्तिगिञ्छिकूटपर्वतात् । अतिक्रम्य दक्षिणस्यां, मध्येऽरुणवरोदधेः ॥ २९ ॥ यो देशस्तदधोभागे, मध्ये रत्नप्रभाक्षितेः । चत्वारिंशद्योजनानां, सहस्राण्यवगाह्य च ॥ ३० ॥ राजधान्यस्ति चमरचञ्चा चञ्चन्मणीमयी । व्यासायामपरिक्षेपैर्जम्बूद्वीपसधर्मिणी ॥ ३१ ॥ वप्र-

उत्पातपर्वतः

१५

२०



२५

श्चास्या योजनानामप्यर्द्धं शतमुन्नतः । पञ्चाशद्विस्तृतो मूले, मौलौ द्वादश सार्द्धकाः ॥ ३२ ॥ आयतैर्यो
जनस्यार्द्धं, न्यूनार्द्धयोजनोच्छ्रितैः । क्रोशं विस्तीर्णैश्च रम्या, रत्नजैः कपिशीर्षकैः ॥ ३३ ॥ एकैकस्यां सबाहायां,
पञ्चद्वारशताञ्चितः । सार्द्धे द्वे योजनशते, द्वारं चैकैकमुच्छ्रितम् ॥ ३४ ॥ सपादशतविस्तीर्णतोरणाद्युपशो-
भितम् । मध्येऽथ वप्रस्यैतस्य, पीठबन्धो विराजते ॥ ३५ ॥ योजनानां षोडशैष, सहस्रान्विस्तृतायतः । पद्म-
वरवेदिकया, परीतः काननेन च ॥ ३६ ॥ तस्य मध्ये रम्यभूमावस्ति प्रासादशेखरः । सार्द्धे द्वे योजनशते,
तुङ्गस्तदर्द्धविस्तृतः ॥ ३७ ॥ चतुर्भिरेष प्रासादैश्चतुर्दिशमलङ्कृतः । शतं सपादमुत्तुङ्गैः, सार्द्धद्विषष्टिविस्तृतैः
॥ ३८ ॥ प्रत्येकमेतेऽपि चतुर्दिशं चतुर्भिराश्रिताः । सार्द्धं द्विषष्टिमुत्तुङ्गैस्तदर्द्धविस्तृतैस्तथा ॥ ३९ ॥ सपादैक-
त्रिंशदुच्चैस्तदर्द्धविस्तृतैर्वृताः । प्रासादास्तेऽपि प्रत्येकं, पुनस्तेऽपि चतुर्दिशम् ॥ ४० ॥ ससार्द्धद्विक्रोशपञ्चदश-
योजनतुङ्गकैः । तदर्द्धविस्तृतैरेवं, चतुर्दिशमलङ्कृताः ॥४१॥ एवं समूलप्रासादाः, प्रासादाः सर्वसंख्यया । चम-
रस्य भवत्येकचत्वारिंशं शतत्रयम् ॥ ४२ ॥ प्रासादास्ते रत्नमया, मरुच्चञ्चलकेतवः । मृदुस्पर्शाश्चारुगन्धा, दृश्याः
सुवर्णवालुकाः ॥ ४३ ॥ अथ प्रासादेभ्य एभ्य, ऐशान्यां स्युर्यथाक्रमम् । सभा सुधर्मा सिद्धायतनं सभोपपा-
तकृत् ॥ ४४ ॥ ह्रदोऽभिषेकालङ्कारव्यवसायसभाः क्रमात् । सर्वेऽप्यमी सुधर्माद्याः, षट्त्रिंशद्योजनोच्छ्रिताः
॥ ४५ ॥ दीर्घाः पञ्चाशतं पञ्चविंशतिं विस्तृता इह । वैमानिकसभादिभ्यो, मानतोऽर्द्धमिता इति ॥ ४६ ॥
इत्यर्थतो भगवतीद्वितीयशताष्टमोद्देशके ॥ अत्रायं विशेषः—"चमरस्स णं सभासुहम्मा एकावन्नखम्भसय-

सन्निविष्टा पं०, एवं वलीयससवि", इति तुर्याङ्गे। अथैतस्यामुपपातसभायां सुकृती जनः। देवदूष्यच्छन्नशय्योत्सङ्ग उत्पद्यते क्षणात् ॥४७॥ चमरेन्द्रतयाऽथासावुत्थाय शयनीयतः। गत्वा ह्रदे कृतस्नानस्ततोऽभिषेकपर्षदि ॥ ४८ ॥ कृताभिषेकः सोत्साहैरसुरैः समहोत्सवम्। अलङ्कारसभायां च, गत्वाऽलङ्कृतभूघनः ॥४९॥ व्यवसायसभां गत्वा, पुस्तकावसितस्थितिः। स्नात्वा नन्दापुष्करिण्यां, भक्त्या कृतजिनार्चनः ॥ ५० ॥ समागत्य सुधर्मायां, सभायां सपरिच्छदः। दिव्यान् सिंहासनासीनो, भोगान् भुङ्क्ते यथारुचि ॥५१॥ पञ्चभिः कुलकं ॥ कामकेलिलालसस्तु, जिनस्याशातनाभयात्। गत्वा वहिः सुधर्माया, रमते रुचितास्पदे ॥ ५२ ॥ कदाचिच्चैष चमरचञ्चावासे मनोरमे। सकान्तः क्रीडितुं याति, क्रीडोद्याने नृपादिवत् ॥ ५३ ॥ स चैवं–अस्याश्चमरचञ्चाया, नैऋत्यां ककुभि ध्रुवम्। षट्कोटीनां शतान्पञ्चपञ्चाशत्कोटिसंयुतान्॥५४॥पंचत्रिंशच्च लक्षाणि, पञ्चाशच्च सहस्रकान्। योजनानामतिक्रम्य, तस्मिन्नेवारुणोदधौ ॥ ५५ ॥ आवासो भाति चमरचञ्चश्चञ्चच्छ्रियां निधिः। कम्रः क्रीडारतिस्थानं, चमरस्यासुरेशितुः ॥ ५६ ॥ सहस्राण्येष चतुरशीतिमायतविस्तृतः। समन्ततः परिक्षिप्तः, प्राकारेण महीयसा ॥ ५७ ॥ सर्वं चमरचञ्चावत्प्रासादादि भवेदिह । न विद्यन्ते परं पञ्च, सुधर्माद्याः सभाः शुभाः ॥ ५८ ॥ स एष साम्प्रतीनस्तु, जम्बूद्वीपेऽत्र भारते। बेभेलाख्ये सन्निवेशे, विन्ध्याचलसमीपगे ॥ ५९ ॥ आसीद्गृहपतिश्रेष्ठः, पूरणाख्यो महर्द्धिकः । जाग्रत्कुटुम्बजागर्यां, निशि संवेगमाप सः ॥ ६० ॥ प्रातर्निमन्त्र्य स्वजनान्, भोज्यवस्त्रादिभिर्भृशम्। सन्तोष्य ज्येष्ठपुत्राय, कुटुम्बभारमार्पयत् ॥६१॥ पतद्ग्रहं दारुमयं,



२०

२५



२९

कारयित्वा चतुष्पुटम् । दीक्षां लात्वाऽऽदानमयीं, चक्रे सातापनं तपः ॥ ६२ ॥ षष्ठस्यैव पारणायामुत्तीर्याऽऽतापनास्थलात् । भिक्षार्थमाटीद्बेभेले, करे धृत्वा पतद्ग्रहम् ॥ ६३ ॥ भिक्षां ददानः पान्थेभ्यः, पतितां प्रथमे पुटे । काकशालावृकादीनां, द्वितीयपुटसंगताम् ॥ ६४ ॥ तां मत्स्यकच्छपादीनां, तृतीयपुटगां ददत् । पतितां च पुटे तुर्ये, भिक्षामादत्त्स्वयं मिताम् ॥ ६५ ॥ एवं द्वादश वर्षाणि, तपः कृत्वाऽतिदुष्करम् । स पादपोपगमनमङ्गीकृत्यैकमासिकम् ॥ ६६ ॥ मृत्वाऽमुष्यां राजधान्यां, चमरेन्द्रतयाऽभवत् । सर्वपर्यासिपर्याप्तस्तत्कालोत्पन्न एव सः ॥ ६७ ॥ ऊर्ध्वमालोकयामास, स्वभावाद् ज्ञानचक्षुषा । आसौधर्मदेवलोकं, तत्र दृष्ट्वा सुरेश्वरम् ॥ ६८ ॥ शक्रसिंहासनासीनं, पीनतेजःसुखश्रियम् । अचिंतयन्मुमुर्षुः कः, क्रीडत्येष ममोपरि ? ॥६९॥ युग्मं ॥ ततः सामानिकान् देवान्, स आहूयेति पृष्टवान् । भो भोः क एष योऽस्माकमपि मूर्द्धनि तिष्ठति ? ॥ ७० ॥ तेऽपि व्यजिज्ञपन् नत्वा, स्वामिन्नेष सुधर्मराट् । नित्या स्थानव्यवस्थेयं, सौधर्मेन्द्रासुरेन्द्रयोः ॥ ७१ ॥ हन्त तेऽन्ये येऽसुरेन्द्रा, एनमित्थं शिरःस्थितम् । सेहिरे न सहेऽहं तु, पातयिष्याम्यधः क्षणात् ॥ ७२ ॥ निश्चित्येति पुनश्चित्ते, व्यमृशत्सोऽपि वज्रभृत् । यद्यनेनाभिहन्येऽहं, शरणं मम कस्तदा ? ॥ ७३ ॥ विचिन्त्येत्यवधिज्ञानोपयोगाच्चमराधिपः । सुसुमारपुरोद्यानेऽपश्यद्वीरजिनेश्वरम् ॥ ७४ ॥ दध्यौ चायं जिनो वीरः, प्रतिमा-

१ भक्तपरिज्ञेङ्गिनीपादपोगमनेषु यल्लक्षणमेतत् तन्नात्र, किंतु अङ्गोपाङ्गचलनाभावात् रूढिरहितं यौगिकमेव । २ सामानिकानामिन्द्रतुल्यावधिकत्वात्, इन्द्रस्य त्वस्य तद्वत्त्वात्, असुराणामूर्ध्वमवधेर्बाहुल्यम् ।

मेकरात्रिकीम् । प्रतिपद्याष्टमतपा, एकपुद्गलदत्तदृक् ॥ ७५ ॥ निर्निमेषो निष्प्रकम्पः, कायोत्सर्गेऽस्थ्यवस्थितः ।
एकादशाब्दपर्यायं, शरण्योऽस्तु स एव मे ॥७६॥ युग्मम् ॥ इति ध्यात्वाऽवश्यकार्यं, त्यक्त्वाऽर्हदर्चनादिकम् ।
उत्थायोत्पादशय्यायास्तद्देवदूष्यसंवृतः ॥ ७७ ॥ उपादाय प्रहरणरत्नं परिघमुद्धतः । तिगिञ्छिकूटमुत्पातगिरि-
मागत्य सत्वरम् ॥ ७८ ॥ नव्यं वपुर्विधायैत्य, सुसुमारपुराद्बहिः । अशोककाननेऽशोकतरोर्मूले शिलोपरि
॥ ७९ ॥ नमस्कृत्य जिनं युष्मन्निश्रया याम्यहं युधे । यूयं मे त्राणमित्युक्त्वा, भूयोऽप्युत्तरवैक्रियम् ॥ ८० ॥
वपुर्भीष्मं माषराशिकुहूरात्रिसहोदरम् । कृत्वा योजनलक्षोच्चमुत्पपात नभस्तलम् ॥ ८१ ॥ कुर्वन् क्वचित्सिंह-
नादं, क्वचिच्च गजगर्जितम् । हयहेषारवं क्वापि, क्वचित्कलकलध्वनिम् ॥ ८२ ॥ क्षोभयन्निव पातालं, कम्पय-
न्निव मेदिनीम् । तिर्यग्लोकं व्याकुलयन्, स्फोटयिष्यन्निवाम्बरम् ॥ ८३ ॥ विद्युद्वृष्टिगर्जितानि, रजस्तमांसि
चोत्किरन् । त्रासयन् व्यन्तरान् देवान्, कुर्वन् ज्योतिषिकान् द्विधा ॥ ८४ ॥ विमानस्याथ सौधर्मावतंसकस्य
वेदिकाम् । आक्रम्यैकेनापरेण, सुधर्मासंसदं पदा ॥ ८५ ॥ जघान परिघेणेन्द्रकीलकं त्रिस्ततोऽवदत् । क्व रे
शक्रः क्व रे सामानिकाः क्व रे सुराः परे ?॥ ८६ ॥ पातयामि घातयामि, शातयाम्यधुनाऽखिलान् । करोम्यप्सरसः
सर्वाः, स्वायत्ताः सह वैभवैः ॥ ८७ ॥ फलं मदाशातनायाः, शक्रोऽनुभवतादिति । गिरः श्रुत्वाऽश्रुतपूर्वा,
भ्रुकुटीभीषणो हरिः ॥ ८८ ॥ सक्रोधहासमित्याह, किं रे चमर ! दुर्दश ! । नवोत्पन्नोऽसि रे मूढ !, मुमूर्ष-
स्यधुनैव किम् ? ॥ ८९ ॥ यद्वा तवेयानुत्साहोऽनर्थायैव न संशयः । पक्षौ पिपीलिकानां हि, जायेते मृत्युहेतवे



१५

२०



२५

२६

॥ ९० ॥ इमां गृहाणातिथेयीं, मद्वज्ञाफलं मनाक् । मुमोच वज्रमित्युक्त्वा, ज्वलज्ज्वालाकरालितम् ॥ ९१ ॥ तद् दृष्ट्वा चकितोऽत्यन्तं, नश्यन् संकोच्य भूघनम् । प्रविष्टो रक्ष रक्षेति, वदन् वीरक्रमान्तरे ॥ ९२ ॥ ततः शक्रोऽपि विज्ञाय, वीरं तच्छरणीकृतम् । चतुरंगुलमप्राप्तमादाय पविमित्यवक् ॥९३॥ कम्पसे किमिदानीं भोः, प्रभुः सिंहेक्षणादिव । वीरप्रसादान्मुक्तोऽसि, न ते मत्तोऽधुना भयम् ॥ ९४ ॥ इत्युक्त्वा वामपादेन, त्रिः प्रहत्य वसुन्धराम् । क्षमयित्वा जिनेन्द्रं च, सुरेन्द्रः स्वास्पदं ययौ ॥ ९५ ॥ ततो वज्रभयान्मुक्तश्चमरेन्द्रो निजाश्रयम् । गत्वा सामानिकादीनामुवाचोदन्तमादितः ॥ ९६ ॥ भद्रं स्तात्त्रैशलेयाय, तस्मै त्रैलोक्यबन्धवे । येन त्रातोऽस्मि मरणाद्धन्त वज्राग्निदुस्सहात् ॥ ९७ ॥ उपकारमिति प्राज्ञस्तं स्मरन् सपरिच्छदः । गत्वा पुनर्महावीरमभ्यर्च्य ताण्डवादिभिः ॥ ९८ ॥ आगत्य स्वास्पदं प्रीतो, विस्मृतेन्द्रपराभवः । धर्मकर्मस्थितिं सर्वामाराध्य सुखभागभूत् ॥ ९९ ॥ अयं च चमरोऽयासीद्यत्सौधर्मावतंसकम् । आश्चर्यमेतद्विज्ञेयमनन्तकालसंभवि ॥ १०० ॥ चतुःषष्टिसहस्राणि, सामानिकसुधाभुजः । अस्य त्रायस्त्रिंशकाश्च, त्रयस्त्रिंशत्सुधाशिनः ॥ १ ॥ एते च जम्बूद्वीपेऽत्र, क्षेत्रे भारतनामनि । काकन्द्यां पुर्यवर्त्तन्त, त्रयस्त्रिंशन्महर्द्धिकाः ॥ २ ॥ श्रद्धालवो ज्ञाततत्त्वाः, सहायाश्च परस्परम् । पूर्वं ते भावितात्मानोऽभूवन्नुग्रक्रियाश्रयाः ॥ ३ ॥ पश्चाच्च कर्मवशतो, जाता धर्मे श्लथाशयाः । पार्श्वस्था अवसन्नाश्च, कुशीलाः स्वैरचारिणः ॥ ४ ॥ एवं च भूरिवर्षाणि, श्रमणोपासकक्रियाम् । आराध्यार्द्धमासिकीं ते, कृत्वा संलेखनामपि ॥ ५ ॥ अनालोच्याप्रतिक्रम्यातिचारांस्तान् पुराकृतान् । मृत्वा

त्रायस्त्रिंशकत्वं , लेभिरे चमरेशितुः ॥ ६ ॥ त्रायस्त्रिंशकरूढिस्तु, नैतेभ्य एव किंतु ते । उत्पद्यन्ते च्यवन्ते च, स्वस्वस्थित्या परापराः ॥ ७ ॥ तिस्रोऽस्य पर्षदस्तत्राभ्यन्तरा समिताभिधा । मध्या चण्डाभिधा ज्ञेया, बाह्या जाताह्वया पुनः ॥ ८ ॥ स्युश्चतुर्विंशतिर्देवसहस्राण्याद्यपर्षदि । सार्द्धपल्योपमद्वन्द्वस्थितीन्यथात्र पर्षदि ॥ ९ ॥ शतान्यर्द्धतृतीयानि, सार्द्धपल्योपमायुषाम् । देवीनां मध्यमायां चाष्टाविंशतिः सहस्रकाः ॥ १० ॥ द्विपल्यायुर्निर्जराणां, देवीनां त्विह पर्षदि । शतानि त्रीण्येकपल्यायुषामथान्त्यपर्षदि ॥ ११ ॥ स्युर्द्वात्रिंशत्सहस्राणि, सार्द्धपल्यायुषः सुराः । शतान्यर्द्धचतुर्थानि, देव्योऽर्द्धपल्यजीविताः ॥ १२ ॥ यथैवं पर्षदस्तिस्रो, वर्णिताश्चमरेशितुः । एवं सामानिकत्रायस्त्रिंशकानां तदाह्वयाः ॥ १३ ॥ महिषीलोकपालानां, पुनस्तिस्रो भवन्ति ताः । तपाऽथ त्रुटिता पर्वा, इत्येतैर्नामभिर्युताः ॥ १४ ॥ इदमर्थतः स्थानाङ्गसूत्रे । काली राजी च रत्नी च, विद्युन्मेघाभिधा परा । पञ्चास्याग्रमहिष्यः स्यू, रूपलावण्यबन्धुराः ॥ १५ ॥ कालीयं प्राग्भवे जम्बूद्वीपे दक्षिणभारते । पुर्यामामलकल्पायां, कालाख्यस्य गृहेशितुः ॥ १६ ॥ कालश्रीतनुसंभूता, कालीनामाभवत्सुता । वृहत्कुमारी श्रीपार्श्वपुष्पचूलार्पितव्रता ॥ १७ ॥ यथाछन्दीभूय दोषानप्रतिक्रम्य पाक्षिकीम् । कृत्वा संलेखनां मृत्वा, चमरेन्द्रप्रियाऽभवत् ॥ १८ ॥ त्रिभिर्विशेषकं । कालावतंसं भवनं, कालं सिंहासनं भवेत् । काल्या देव्याः परासामप्येवं स्वाख्यानुरूप्यतः ॥ १९ ॥ स्वस्वनामसदृग्नामजननीजनका इति । ज्ञेयाः शेषाश्चतस्रोऽपि, तथैव मलिनव्रताः ॥ २० ॥ स्वाख्यावतंसे भवने, स्वाख्ये सिंहासनेऽभवन् । चमरेन्द्रप्रिया एताः, सार्द्धपल्यद्वयायुषः

चमरेन्द्रपर्षदः

२०

२५

॥ १४६ ॥

२८

॥ २१ ॥ बलीन्द्रदयितानामप्यैतिह्यमनया दिशा । श्रावस्त्यासां पुरी सार्द्धमायुः पल्यत्रयं पुनः ॥ २२ ॥ एकैकाग्रमहिष्यष्टसहस्रपरिवारयुक् । सहस्राण्यष्ट देवीनां, नव्यानां रचितुं क्षमा ॥ २३ ॥ चत्वारिंशत्सहस्राणि, स्युर्देव्यः सर्वसंख्यया । भुङ्क्तेऽसुरेन्द्रश्चैताभिः, कृतैतावत्तनुः सुखम् ॥२४॥ सोमो यमश्च वरुणस्तथा वैश्रमणाभिधः । चत्वारोऽस्य लोकपालाश्चतुर्दिगधिकारिणः ॥ २५ ॥ चतुर्णामप्यथैतेषां, चतस्रः प्राणवल्लभाः । कनका कनकलता, चित्रगुप्ता वसुन्धरा ॥ २६ ॥ एकैकेयं च साहस्रपरिवारविराजिता । देवी सहस्रमेकैकं, नव्यं विकुर्वितुं क्षमा ॥ २७ ॥ स्वस्वनामराजधान्यां, स्वस्वसिंहासने स्थिताः । चत्वारोऽमी लोकपाला, भुञ्जते दिव्यसंपदम् ॥ २८ ॥ तथास्य चमरेन्द्रस्य, सप्त सैन्यानि तत्र च पादात्याश्वेभमहिषरथसंज्ञानि पञ्च वै ॥ २९ ॥ एते सुरा अपि स्वामिशासनात्कार्यहेतवे । ताद्रूप्यं प्रतिपद्यन्ते, नायकोक्तेर्नटा इव ॥ ३० ॥ एतानि पञ्च सैन्यानि, युद्धसज्जान्यहर्निशम् । गंधर्वनटसैन्ये ये, ते भोगायेति सप्तकम् ॥ ३१ ॥ सप्त सेनान्योऽप्यमीषां, सर्वदा वशवर्तिनः । सेवन्तेऽसुरनेतारं, चमरं विनयानताः ॥ ३२ ॥ द्रुमः १ सौदासश्च २ कुन्थु ३ लोहिताक्षश्च ४ किन्नरः ५ । रिष्टो ६ गीतरतिश्चेति ७, सेनान्यामभिधाः क्रमात् ॥ ३३ ॥ द्रुमस्य तत्र पादात्याधिपस्य चमरेशितुः । स्युः सप्त कच्छाः कच्छा च, स्ववशो नाकिनां गणः ॥ ३४ ॥ आद्यकच्छायां सुराणां, चतुष्षष्टिः सहस्रकाः । ततो यथोत्तरं कच्छाः, षडपि द्विगुणाः क्रमात् ॥ ३५ ॥ इन्द्राणामपरेषामप्येवं पत्तिचमूपतेः । वाच्याः सप्त सप्त कच्छाः, स्यानद्विगुणिता मिथः ॥ ३६ ॥ चतुःषष्टिः सहस्राणि, प्रत्याशमात्मरक्षकाः । लक्ष-

द्वयं षट्पञ्चाशत्सहस्राणीति तेऽखिलाः ॥ ३७॥ एवमुक्तपरीवारसुरैराराधितक्रमः। घनश्यामस्निग्धवर्णः, किञ्चिदारक्तलोचनः ॥ ३८ ॥ विद्रुमोष्ठः श्वेतदन्तः, सरलोत्तुङ्गनासिकः। दीप्ररक्ताम्बरो मेघ, इव सन्ध्याभ्रसंभृतः ॥ ३९ ॥ मुकुटेनाङ्कितो मौलौ, सच्चूडामणिलक्ष्मणा । पूर्वाद्रिरिव तिग्मांशुबिम्बेनोदित्वरश्रिया ॥ ४० ॥ चतुस्त्रिंशल्लक्षमानभवनानामधीश्वरः। सर्वेषां दाक्षिणात्यानामसुराणां सयोषिताम् ॥ ४१ ॥ साम्राज्यं शास्ति दिव्यस्त्रीनाटकादिषु दत्तदृक्। एकार्णवायुश्च्युत्वेतो, भवे भाविनि सेत्स्यति ॥ ४२ ॥ च्युते चास्मिन्नस्य पदे, पुनरुत्पत्स्यतेऽपरः। एवमव्युच्छित्तिनयान्नित्य एवैष उच्यते ॥ ४३ ॥ पूर्णं जम्बूद्वीपमेकमेष पूरयितुं क्षमः। असुरैरसुरीभिश्च, निजशक्त्या विकुर्वितैः ॥ ४४ ॥ तिर्यक् पुनरसंख्येयान्, द्वीपपाथोनिधींस्तथा । एवं सामानिकास्त्रायस्त्रिंशाश्चास्य प्रभूष्णवः ॥ ४५ ॥ अस्यैवं लोकपालाग्रमहिष्योऽप्यथ किंतु ते । शक्ताः पूरयितुं तिर्यक्, संख्येयद्वीपवारिधीन् ॥ ४६ ॥ इत्यर्थतो भगवत्यां ॥ देवेन्द्रस्तवे तु–"जाव य जम्बुद्दीवो, जाव य चमरस्स चमरचंचाओ। असुरेहिं असुरकन्नाहिं, अत्थि विसऊ भरेउं जे ॥ ४७'॥

अथान्योऽसुरदेवेन्द्रो, बली नामा निरूप्यते । उत्तरस्यां दिशि विभुर्योऽसौ सौभाग्यसेवधिः ॥ ४८ ॥ तथाहि दिशि कौबेर्यां, जम्बूद्वीपस्थमेरुतः। असंख्यद्वीपाब्धिपरो, द्वीपोऽरुणवराभिधः ॥ ४९ ॥ तस्य बाह्यवेदिकान्तात्तस्मिन्नेव पयोनिधौ । द्विचत्वारिंशत्सहस्रयोजनानां व्यतिक्रमे ॥ ५० ॥ रुचकेन्द्राभिधोऽस्त्यत्र,

चमरेन्द्रः

बलीन्द्रः

२०

२५

॥१४७॥

२७

१ सान्तरैः उभयैश्च मिश्रैरिति ज्ञेयं, तेन लक्षयोजनस्य नैरन्तर्येण एकतमरूपेण चोक्तायां पूर्तौ न विरोधः

बलेरुत्पातपर्वतः । तिर्यग्लोके जिगमिषोर्बलेरुत्पतनास्पदम् ॥ ५१ ॥ तिगिञ्छिकूटतुल्योऽसौ, प्रमाणादिस्वरूपतः ।
बलेः प्रासादोऽस्ति तत्र, प्राग्वत् सिंहासनाञ्चितः ॥ ५२ ॥ कोटयः पञ्चपञ्चाशत्, षट् कोटीनां शतानि च ।
पञ्चत्रिंशच्च लक्षाणि, पञ्चाशच्च सहस्रकाः ॥ ५३ ॥ योजनानि व्यतिक्रम्याम्भोधावुत्पातपर्वतात् । गर्भे रत्नप्र-
भापृथ्व्या, गत्वाऽधो योजनानि च ॥ ५४ ॥ चत्वारिंशत्सहस्राणि, वर्त्तते तत्र मञ्जुला । बलिचञ्चा राजधानी,
स्त्यानीभूता इव त्विषः ॥ ५५ ॥ अस्याश्चरमचञ्चावत्, स्वरूपमखिलं भवेत् । वप्रप्रासादादि तेषां, प्रमाणानु-
क्रमादि च ॥ ५६ ॥ अत्रोपपादसदसि, देवदूष्यपरिष्कृते । इन्द्रत्वेनोत्पद्यतेऽङ्गी, शय्योत्सङ्गे महातपाः ॥ ५७ ॥
अस्य षष्टिः सहस्राणि, सामानिकसुधाभुजाम् । त्रायस्त्रिंशकदेवाश्च, त्रयस्त्रिंशदुदीरिताः ॥ ५८ ॥ साम्प्रतीना-
स्त्वमी बेभेलकग्रामनिवासिनः । श्रद्धालवस्त्रयस्त्रिंशत्सुहृदश्च परस्परम् ॥ ५९ ॥ प्रागेते दृढधर्माणः, पश्चाद्वि-
श्लथचेतसः । उत्पन्ना अत्र चमरत्रायस्त्रिंशकदेववत् ॥ ६० ॥ प्राग्वत्तिस्रः पर्षदोऽस्य, तिसृष्वपि सुराः क्रमात् ।
सहस्राणां विंशतिः स्युश्चतुरष्टाधिका च सा ॥ ६१ ॥ सार्द्धे द्वे च शते द्वे च, सार्द्धं शतमनुक्रमात् । देव्यः
पर्षत्सु तिसृषु, देवानां क्रमतः स्थितिः ॥ ६२ ॥ पल्यानां त्रितयं सार्द्धं, त्रयं सार्द्धं द्वयं क्रमात् । देवीनां तु
स्थितिः सार्द्धे, द्वे ते द्वे सार्द्धमेव च ॥ ६३ ॥ तिस्रस्तिस्रः पर्षदोऽस्य, भवन्ति प्राग्वदेव च । सामानिकत्राय-
स्त्रिंशलोकपालाग्रयोषिताम् ॥ ६४ ॥ शुभा निशुम्भा रम्भा च, निरम्भा मदनेति च । स्युः पञ्चाग्रमहिष्योऽ-
स्य, प्राग्वदासां परिच्छदः ॥ ६५ ॥ एवं सहस्रैश्चत्वारिंशताऽन्तःपुरिकाजनैः । सुधर्मायां बहिर्भुङ्क्ते, कृतैताव-

द्रपुः सुखम् ॥ ६६ ॥ चत्वारोऽस्य लोकपालाश्चतुर्दिगधिकारिणः । सोमो यमश्च वरुणस्तुर्यो वैश्रमणाभिधः ॥ ६७ ॥ एषां चतस्रः प्रत्येकं, दयिता नामतस्तु ताः । मीनका च सुभद्रा च, विद्युदाख्या तथाऽशनिः ॥ ६८ ॥ स्वस्वनामराजधान्यां, सिंहासने स्वनामनि । उपविष्टाः सुखं दिव्यं, मुदा तेऽप्युपभुञ्जते ॥ ६९ ॥ महाद्रुमो १ महासौदासाह्वयः २ परिकीर्त्तितः । मालङ्कारोऽपि ३ च महालोहिताक्षाभिधः ४ सुरः ॥ ७० ॥ किंपुरुषो ५ महारिष्ट ६ स्तथा गीतयशा इति । वलिनाम्नोऽसुरपतेः, क्रमात्सप्तेति सैन्यपाः ॥ ७१ ॥ पत्तीशस्याद्यकच्छायां, षष्टिर्देवसहस्रकाः । कच्छाः षडन्याश्च ततः, स्युरस्य द्विगुणाः क्रमात् ॥ ७२ ॥ एवं सामानिकैस्त्रायस्त्रिंशकैर्लोकपालकैः । सेव्योऽग्रमहिषीभिश्च, सप्तभिः सैन्यसैन्यपैः ॥ ७३ ॥ षष्ट्या सहस्रैः प्रत्याशं, सेव्यमानोऽङ्गरक्षकैः । चत्वारिंशत्सहस्राढ्यलक्षद्वयमितैः समैः ॥ ७४ ॥ श्यामवर्णो रक्तवासाश्चूडामण्यङ्कमौलिभृत् । सुरूपः सातिरेकैकसागरोपमजीवितः ॥ ७५ ॥ भवनावासलक्षाणां, त्रिंशतोऽनुभवत्यसौ । असुरीणां चासुराणामुदीच्यानामधीशताम् ॥ ७६ ॥ चतुर्भिः कलापकं ॥ परिवारयुतस्यास्य, शक्तिर्विकुर्वणाश्रिता । चमरेन्द्रस्येव किंतु, सर्वत्र सातिरेकता ॥ ७७ ॥ इत्येवमस्मिन्नसुरनिकाये प्रभवो दश । चमरेन्द्रो वलीन्द्रश्च, लोकपालास्तथाऽष्ट च ॥ ७८ ॥ लक्षेष्वेवं चतुःषष्टौ, भवनेष्वपरेऽपि हि । उत्पद्यन्तेऽसुरवराः, स्वस्वपुण्यानुसारतः ॥ ७९ ॥ उत्पत्तिकाले शय्यायां, भूषणाम्बरवर्जिताः । ततश्चालङ्कृतास्तेन, वपुषा नूतनेन वा ॥ ८० ॥ सर्वेऽप्यमी श्यामवर्णा, बिम्बोष्ठाः कृष्णमूर्द्धजाः । शुभ्रदन्ता वामकर्णावसंक्तदीप्रकुण्डलाः ॥ ८१ ॥ दन्ताः केशाश्चामीषां वै-

क्रिया द्रष्टव्याः, न स्वाभाविकाः, वैक्रियशरीरत्वात्, इति जीवाभिगमवृत्तौ । आर्द्रचन्दनलिप्ताङ्गा, अरुणाम्बरधारिणः । चिह्नेन चूडामणिना, सदाऽलङ्कृतमौलयः ॥ ८२ ॥ कुमारत्वमतिक्रान्ता, असंप्राप्ताश्च यौवनम् । ततोऽतिमुग्धमधुरमृदुयौवनशालिनः ॥ ८३ ॥ केयूराङ्गदहाराद्यैर्भूषिता विलसन्ति ते । दीप्रा दशस्वङ्गुलीषु, मणिरत्नाङ्गुलीयकैः ॥ ८४ ॥ देव्योऽप्येवंविधाः कामक्रीडाविधिविचक्षणाः । घनस्तना युवजनोन्मादिलावण्ययौवनाः ॥ ८५ ॥ सप्त हस्ता देहमानमेषामुत्कर्षतो भवेत् । अङ्गुलासंख्यांशमानमुत्पत्तौ तज्जघन्यतः ॥८६॥ लक्षयोजनमानं चोत्कर्षादुत्तरवैक्रियम् । प्रारम्भेऽङ्गुलसंख्येयभागमानं जघन्यतः ॥ ८७ ॥ एषां च दाक्षिणात्यानां, स्थितिरुत्कर्षतो भवेत् । सागरोपममेकं तदुदीच्यानां च साधिकम् ॥ ८८ ॥ देवीनां दाक्षिणात्यानां, सार्द्धं पल्यत्रयं स्थितिः । ज्येष्ठोत्तराहदेवीनां, सार्द्धं पल्यचतुष्टयम् ॥ ८९ ॥ जघन्या तु वत्सराणां, सहस्राणि दश स्थितिः । सर्वेषां मध्यमा ज्येष्ठाकनिष्ठान्तरनेकधा ॥ ९० ॥ ज्येष्ठायुषो दाक्षिणात्या, मासार्द्धेनोच्छ्वसन्त्यथ । आहारकाङ्क्षिणो वर्षसहस्रेण भवन्ति च ॥९१॥ उदीच्याः सातिरेकेण, मासार्द्धेनोच्छ्वसन्ति वै । साधिकाब्दसहस्रेण, भवन्त्याहारकाङ्क्षिणः ॥९२॥ मध्यमस्थितयस्त्वेते, स्वस्वस्थित्यनुसारतः । मुहूर्त्ताहःपृथक्त्वैः स्युरुच्छ्वासाहारकाङ्क्षिणः ॥ ९३ ॥ जघन्यजीविनः स्तोकैः, सप्तभिः प्रोच्छ्वसन्त्यमी । एकाहान्तरमाहारं, समीहन्ते च चेतसा ॥ ९४ ॥ ततः संकल्पमात्रेणोपस्थितैः सारपुद्गलैः । ते तृप्येयुः कावलिकाहारानपेक्षिणः सदा ॥ ९५ ॥ विषयः स्याद्गतेरेषामधस्तमस्तमावधि । तृतीयां पुनरवनीं, गता यास्यन्ति च स्वयम् ॥ ९६ ॥

प्रजोजनं तत्र पूर्वरिपोः पीडाप्रवर्द्धनम् । प्राग्जन्मसुहृदस्तावत्कालं पीडानिवर्त्तनम् ॥ ९७ ॥ तिर्यक् चैषामसंख्याब्धिद्वीपाः स्युर्विषयो गतेः । नन्दीश्वरं पुनर्द्वीपं, गता यास्यन्ति च स्वयम् ॥ ९८ ॥ तत्र प्रयोजनं त्वर्हत्कल्याणकेषु पञ्चसु । संवत्सरचतुर्मासादिषु चाष्टाह्निकोत्सवः ॥ ९९ ॥ तथैषां गतिविषय, ऊर्ध्वमप्यच्युतावधि । स्वर्गं सौधर्मं च यावद्गता यास्यंति च स्वयम् ॥ २०० ॥ प्रयोजनं तत्र भवप्रत्ययं वैरमूर्जितम् । मातंगपंचाननवद्देषां वैमानिकैः सह ॥ १ ॥ ततो वैरादमी मत्ता, गत्वा वैमानिकाश्रयान् । कुर्वन्ति व्याकुलं स्वर्गं, त्रासयन्त्यात्मरक्षकान् ॥ २ ॥ शक्रमप्याक्रोशयन्ति, प्रागुक्तचमरेन्द्रवत् । वैरप्रसिद्धिर्लोकेऽपि, देवदानवयोरिति ॥ ३ ॥ रत्नान्यप्सरसस्तेषां, प्रसह्यापहरन्ति च । गत्वैकान्ते स्वानुरक्तास्ताः स्वैरं रमयन्त्यपि ॥ ४ ॥

अथ नागनिकायस्य, दाक्षिणात्यः सुरेश्वरः । धरणेन्द्रो वरिवर्त्ति, साम्प्रतीनस्त्वसौ पुरा ॥५॥ आसीदहिर्बहिः काशीपुरतः काननान्तरे । शुष्ककाष्ठकोटरान्तः, सोऽर्कतापार्दितोऽविशत् ॥ ६ ॥ कमठेन परिप्लुष्टः, पञ्चाग्निकष्टकारिणा । तापार्त्तः कर्षितः काष्ठात्, श्रीपार्श्वेन कृपालुना ॥ ७ ॥ स चार्हद्दर्शनान्नष्टपाप्मा श्रुतनमस्कृतिः । उपार्जितोर्जितश्रेयान्, धरणेन्द्रतयाऽभवत् ॥८॥ ततो मेघसुरीभूतकमठेनाकालिकाम्बुदैः(?)। एष पार्श्वमुपद्रूयमानमाच्छादयत्फणैः ॥ ९ ॥ श्रीपार्श्वस्तोत्रमन्त्राख्यास्मरणात्तुष्टमानसः । अद्यापि शमयन् कष्टमिष्टानि वितरत्यसौ ॥ १० ॥ षष्टिश्च सप्ततिश्चैवाशीतिः क्रमात्सहस्रकाः । पर्षत्त्रये स्युर्देवानां, स्थितिश्चैषां यथाक्रमम् ॥ ११ ॥ पल्यस्यार्द्धं सातिरेकमर्द्धं देशोनितं च तत् । सपञ्चसप्ततिशतं, पञ्चाशं पञ्चविंशकम् ॥ १२ ॥


२०
२५
॥ १४९ ॥
२८

देव्यः पर्षत्सु देशोनं, पल्यस्यार्द्धमिह स्थितिः । साधिकः पल्यतुर्यांशस्तुर्यांश एव च क्रमात् ॥ १३ ॥ लोकसमिताचण्डाजाताख्याः, स्युः सभा धरणेशितुः । अपि सामानिकत्रायस्त्रिंशानामेतदाह्वयाः ॥ १४ ॥ लोकपालानां तथाग्रमहिषीणां भवन्ति ताः । ईषा तथान्या त्रुटिता, ततो दृढरथाभिधा ॥ १५ ॥ शेषाणां भवनेन्द्राणां, पर्षदामभिधाः किल । तृतीयमङ्गमालोक्य, विज्ञेया धरणेन्द्रवत् ॥ १६ ॥ स्युः षडग्रमहिष्योऽस्य, अला १ मक्का २ शतेरिका ३ । सौदामिनी ४ न्द्रा ५ च घनविद्युते ६ ति च नामतः ॥ १७ ॥ षड्भिः सहस्रैर्देवीनां, प्रत्येकं परिवारिताः । षट् सहस्राणि देवीनां, विकुर्वितुमपि क्षमाः ॥ १८ ॥ शेषाणामप्यथेन्द्राणामष्टानां याम्यदिग्भुवाम् । षट् षडग्रमहिष्यः स्युरेतैरेव च नामभिः ॥ १९ ॥ काशीनगरवास्तव्याश्चतुष्पञ्चाशदप्यमूः । वृहत्कन्याः स्वाभिधानुरूपाख्यपितरोऽभवन् ॥ २० ॥ पार्श्वपार्श्वादात्तदीक्षाः, शिक्षिताः पुष्पचूलया । विराद्धसंयमाः पक्षं, संलिख्य च मृतास्ततः ॥ २१ ॥ स्वाख्यावतंसभवने, स्वाख्यसिंहासनस्पृशि । देवीत्वेन समुत्पन्नाः, सार्द्धपल्यमितायुषः ॥ २२ ॥ चतुर्भिः कलापकं ॥ भूतानन्दाद्योत्तराहेन्द्राणामपि मनःप्रियाः । सन्ति षट् षट् वक्ष्यमाणै, रूपाद्यैः षड्भिराह्वयैः ॥२३॥ चतुष्पञ्चाशतोऽप्यूनपल्योपमयुगायुषाम् । प्रागासां नगरी चम्पा, वाच्या शेषमिहोक्तवत् ॥ २४ ॥ अथ प्रकृतं—कालपालः कोलपालः, शैलपालोऽस्य च क्रमात् । शङ्खपालश्च चत्वारो, लोकपालाः सुरेशितुः ॥ २५ ॥ अशोका विमला चैव, सुप्रभा च सुदर्शना । एषां चतस्रो दयिताः, प्रत्येकमेतदाह्वयाः ॥ २६ ॥ भद्रसेनो १ स्य च यशोधरः २ सुदर्शनः ३ क्रमात् । नीलकण्ठ ४ स्तथा-

ऽऽनन्दो, ५ नन्दन ६ स्तेतलीति ७ च ॥ २७ ॥ पत्तिवाजीभमहिषरथाख्यानां यथाक्रमम् । नटगन्धर्वयो- श्चापि, सैन्यानामधिपाः स्मृताः ॥ २८ ॥ अस्याद्यकच्छायां पत्तिनेतुर्देवसहस्रकाः । स्युरष्टाविंशतिः कच्छाः, षडन्या द्विगुणाः क्रमात् ॥ २९ ॥ एतदेव च सप्तानां, कच्छानां मानमूह्यताम् । उक्तान्यभवनेशेन्द्रापत्तिसै- न्याधिकारिणाम् ॥ ३० ॥ षड्भिः सहस्रैरिन्द्रोऽयं, सामानिकैरुपासितः । पर्षत्त्रायस्त्रिंशलोकपालसैन्यतदीश्वरैः ॥ ३१ ॥ प्रत्याशं सेवितः षड्भिः, सहस्रैश्चात्मरक्षिणाम् । सर्वाग्रेण चतुर्विंशत्या सहस्रैर्महाबलैः ॥ ३२ ॥ भव- नानां चतुश्चत्वारिंशल्लक्षाणि पालयन् । समृद्धः शास्ति साम्राज्यं, सार्द्धपल्योपमस्थितिः ॥ ३३ ॥ त्रिभिर्विशे- षकं ॥ दधिपाण्डुरवर्णाङ्गो, नीलाम्बरमनोरमः ॥ सर्पस्फटाचिह्नशालिभूषणो गतदूषणः ॥ ३४ ॥ भूषणमत्र मुकुटो द्रष्टव्य इति जीवाभिगमवृत्तौ, एवमग्रेऽपि । एकया स्फटया जम्बूद्वीपं छादयितुं क्षमः । धरणेन्द्रः सा- धिकं तं, वक्ष्यमाणो भुजङ्गराट् ॥ ३५ ॥ इन्द्रो नागनिकायस्योदीच्योऽथ परिकीर्त्यते । भूतानन्दोऽस्य पर्षत्सु, तिसृष्वपि सुराः क्रमात् ॥ ३६ ॥ पञ्चाशदथ षष्टिश्च, सप्ततिश्च सहस्रकाः । पल्यं देशोनमर्द्धं च, पल्यस्य सा- धिकं तथा ॥ ३७ ॥ अर्द्धं पल्योपमं चैषां, स्थितिः क्रमात् शतद्वयम् । पञ्चविंशं द्वे शते च, शतं देव्यः क्रमा- दिह ॥ ३८ ॥ आसां पल्योपमस्यार्द्धं, देशोनमर्द्धमेव च । सातिरेकश्च तुर्यांशः, स्थितिर्ज्ञेया यथाक्रमम् ॥३९॥ रूपा रूपांशा सुरूपा, प्रेयस्यो रूपकावती । रूपकान्ता तथा रूपप्रभाऽस्य नागचक्रिणः ॥ ४० ॥ आसां परि- च्छदः प्राग्वल्लोकपालास्तथाऽस्य च । कालकौलशङ्खशैलाः, स्युः पालोपपदा अमी ॥ ४१ ॥ सुनन्दा च सुभद्रा

धरणेन्द्रः
भूतानन्दः

२०

२५
॥ १५० ॥

२८

च, सुजाता सुमना इति । एषां चतुर्णां प्रत्येकं, चतस्रो दयिताः स्मृताः ॥ ४२ ॥ सप्त सेनान्योऽस्य दक्षः १,
सुग्रीवश्च २ सुविक्रमः ३ । श्वेतकण्ठः ४ क्रमान्नन्दोत्तरो ५ रतिश्च ६ मानसः ७ ॥ ४३ ॥ सैन्यक्रमस्तु प्रागुक्त
एव । षड्भिः सहस्रैरिन्द्रोऽयं, सामानिकैरुपासितः । त्रायस्त्रिंशैः लोकपालैः, पार्षदैः सैन्यसैन्यपैः ॥ ४४ ॥ सहस्रैः
षड्भिरेकैकदिश्यात्मरक्षकैः श्रितः । चतुर्विंशत्या सहस्रैरित्येवं सर्वसंख्यया ॥ ४५ ॥ चत्वारिंशच्च भवनलक्षाणि
परिपालयन् । साम्राज्यं शास्ति नागानां, न्यूनद्विपल्यजीवितः ॥ ४६ ॥ त्रिभिर्विशेषकं ॥ देहवस्त्रवर्णचिह्नो-
त्कृष्टस्थित्यादिकं भवेत् । सर्वेषां भवनेशानां, स्वजातीयसुरेन्द्रवत् ॥ ४७ ॥
इन्द्राणां वक्ष्यमाणेषु, निकायेष्वष्टसु स्थितिः । तिसृणां पर्षदां देवदेवीसंख्याऽथ तत्स्थितिः ॥४८॥ लोकपाल-
प्रियाभिख्याः, सामानिकात्मरक्षिणाम् । संख्याऽग्रमहिषीणां च, संख्यानामपरिच्छदाः ॥ ४९ ॥ अष्टानां
दाक्षिणात्यानां, विज्ञेया धरणेन्द्रवत् । अष्टानामौत्तराहाणां, भूतानन्दसुरेन्द्रवत् ॥ ५० ॥ केवलं लोकपालानां,
सुरेन्द्राणां च नामसु । विशेषोऽस्ति स एवाथ, लाघवाय प्रतन्यते ॥ ५१ ॥ दक्षिणोत्तरयोर्लोकपालानां किंतु
नामसु । सर्वत्रापि व्यतीहारः, स्यात्तृतीयतुरीययोः ॥ ५२ ॥ दक्षिणस्यां तृतीयो यस्तुरीयः स भवत्युदक् ।
दाक्षिणात्यस्तुरीयस्तु, स्यादुदीच्यां तृतीयकः ॥ ५३ ॥ वेणुदेवो वेणुदारी (वेणुदालिः), स्वर्णाभौ श्वेतवाससौ ।
द्वौ सुपर्णकुमारेन्द्रौ, गरुडाङ्कितभूषणौ ॥ ५४ ॥ चित्रो विचित्रश्च चित्रपक्षो विचित्रपक्षकः । एतयोरिन्द्रयो-
र्लोकपालाः स्युरिति नामतः ॥ ५५ ॥ जम्बूद्वीपं वेणुदेवः, पक्षेणावरितुं क्षमः । एनमेव सातिरेकं, वेणुदारी

सुपर्णराट् ॥ ५६ ॥ इन्द्रौ विद्युत्कुमारेषु, हरिकान्तहरिस्सहौ । तप्तस्वर्णारुणौ नीलाम्बरौ वज्राङ्कभूषणौ ॥ ५७ ॥ प्रभस्तथा सुप्रभश्च, प्रभाकान्तस्तथापरः । सुप्रभाकान्त इत्येते, लोकपालाः स्युरेतयोः ॥ ५८ ॥ एकया विद्युता जम्बूद्वीपं हरिः प्रकाशयेत् । विद्युत्कुमाराधिपतिः, साधिकं तं हरिस्सहः ॥ ५९ ॥ स्यातामग्निकुमारेन्द्रावग्निशिखाग्निमाणवौ । तप्तस्वर्णतनू नीलवस्त्रौ कुम्भाङ्कभूषणौ ॥ ६० ॥ तेजस्तेजःशिखस्तेजःकान्तस्तेजःप्रभोऽपि च । एतयोः स्युर्लोकपाला, विशिष्टोत्कृष्टबुद्धयः ॥ ६१ ॥ एकाग्निज्वालया जम्बूद्वीपं प्लोषयितुं क्षमः । सुरेन्द्रोऽग्निशिखस्तं सातिरेकमग्निमाणवः ॥ ६२ ॥ इन्द्रौ द्वीपकुमाराणां, पूर्णो वसिष्ठ इत्युभौ । तप्तस्वर्णप्रभौ नीलक्षौमौ सिंहाङ्कभूषणौ ॥ ६३ ॥ रूपो रूपांशश्च रूपकान्तो रूपप्रभोऽपि च । लोकपाला अमी द्वीपकुमारचक्रवर्तिनोः ॥ ६४ ॥ जम्बूद्वीपं हस्ततलेनैकं स्थगयितुं क्षमः । पूर्णो द्वीपकुमारेन्द्रो, वसिष्ठस्तं च साधिकम् ॥ ६५ ॥ अथोदधिकुमारेन्द्रौ, जलकान्तजलप्रभौ । शुक्लद्युती नीलवस्त्रावश्वरूपाङ्कभूषणौ ॥ ६६ ॥ जलश्च जलरूपश्च, जलकान्तो जलप्रभः । लोकपालाः स्युरुदधिकुमारसुरराजयोः ॥ ६७ ॥ एकेनाम्बुतरङ्गेण, जम्बूद्वीपं प्रपूरयेत् । जलकान्तः सुराधीशः, साधिकं तं जलप्रभः ॥ ६८ ॥ दिक्कुमारेशावमितगतिश्चामितवाहनः । स्वर्णगौरौ शुभ्रवस्त्रौ, गजरूपाङ्कभूषणौ ॥ ६९ ॥ एतयोस्त्वरितः क्षिप्रः, सिंहश्च सिंहविक्रमः । चत्वारो गत्युपपदा, लोकपालाः प्रकीर्त्तिताः ॥ ७० ॥ एकपार्ष्णिप्रहारेण, जम्बूद्वीपं प्रकम्पयेत् । इन्द्रोऽमितगतिः सातिरेकं त्वमितवाहनः ॥ ७१ ॥ इन्द्रौ वायुकुमारेषु, वेलम्बाख्यप्रभञ्जनौ । श्यामौ संध्यारागवस्त्रौ, मकराङ्कितभूषणौ ॥ ७२ ॥

शेषदक्षिणोत्तरेन्द्रादिवर्णनं

२०

२५

॥१५१॥

२८

कालश्चाथ महाकालोऽञ्जनश्च रिष्ठ एव च । स्युर्लोकपाला वेलम्बप्रभञ्जनसुरेन्द्रयोः ॥ ७३ ॥ मरुत्तरङ्गेणैकेन, जम्बूद्वीपं प्रपूरयेत् । वेलम्बेन्द्रः सातिरेकं, तं पूरयेत्प्रभञ्जनः ॥ ७४ ॥ इन्द्रौ घोषमहाघोषौ, स्तनिताख्यकुमारयोः । स्वर्णवर्णौ शुक्लवस्त्रौ, वर्द्धमानाङ्कभूषणौ ॥ ७५ ॥ आवर्त्तो व्यावर्त्तनामा, नन्द्यावर्त्तस्तथापरः । महानन्द्यावर्त्त एते, लोकपालाः स्युरेतयोः ॥ ७६ ॥ स्तनितध्वनिनैकेन, बधिरीकर्त्तुमीश्वरः । घोषो जम्बूद्वीपमेनं, महाघोषस्तु साधिकम् ॥ ७७ ॥ एवं सर्वनिकायेषु, देवा दश दशाधिपाः । दाक्षिणात्योत्तराहेन्द्रौ, लोकपालास्तथाऽष्ट च ॥ ७८ ॥ एवं च धरणेन्द्राद्या, इन्द्रा अष्टादशाप्यमी । स्वैः स्वैः सामानिकैस्त्रायस्त्रिंशकैर्लोकपालकैः ॥ ७९ ॥ पार्षदैस्त्रिविधैरग्रमहिषीभिरुपासिताः । सेनानीभिस्तथा सैन्यैः, समन्तादात्मरक्षकैः ॥ ८० ॥ दाक्षिणात्योदीच्यनिजनिकायजैः परैरपि । सेविताः स्वस्वभवनलक्षाणां दधतीशताम् ॥ ८१ ॥ त्रिभिर्विशेषकम् ॥ रूपलावण्यसौभाग्यादिभिस्तु चमरेन्द्रवत् । महर्द्धिका महासौख्या, महाबला महोदयाः ॥ ८२ ॥ एकं जम्बूद्वीपमेते, रूपैः पूरयितुं क्षमाः । स्वजातीयैर्नवैस्तिर्यक्, संख्येयद्वीपवारिधीन् ॥ ८३ ॥ एवं सामानिकास्त्रायस्त्रिंशका लोकपालकाः । एषामग्रमहिष्योऽपि, कर्त्तुं विकुर्वणां क्षमाः ॥ ८४ ॥ अल्पाल्पकान् किंतु तिर्यक्, द्वीपाब्धीन् पूरयन्त्यमी । प्राच्यपुण्यप्रकर्षास्वस्वलब्ध्यनुसारतः ॥ ८५ ॥ तथाहुः—'धरणे णं भंते ! नागकुमारिंदे नागकुमारराया' इत्यादि भगवतीसूत्रे । जम्बूद्वीपं मेरुमूर्ध्नि, धृत्वा छत्राकृतिं क्षणात् । कर्त्तुमेषामन्यतमः, क्षमः स्वबललीलया ॥८६॥ इयं प्रत्येकं प्रागुक्ता चैषा शक्तिर्देवेन्द्रस्तवे ॥ शक्तेर्विषय एवायं, नाक-

रोन्न करिष्यति । न चैवं कुरुते कश्चिद्विकुर्वणादि शक्तिवत् ॥ ८७ ॥ उत्पद्यन्ते परेऽप्येवं, निकायेषु नवस्विह । सुखानि भुञ्जते देवाः, प्राच्यपुण्यानुसारतः ॥ ८८ ॥ दशानामसुरादीनां, भवनाधिपनाकिनाम् । अश्वत्थाद्याश्चैत्यवृक्षा, दश प्रोक्ता यथाक्रमम् ॥ ८९ ॥ तथोक्तं स्थानाङ्गे दशमस्थानके–"अस्सत्थ १ सत्तवन्ने २, सामलि ३ उंबर ४ सरीस ५ दहिवन्ने ६ । वंजुल ७ पलास ८ वप्पो, तत्ते ९ कणियाररुक्खे य १० ॥९०॥" "अनेन क्रमेणाश्वत्थादयश्चैत्यवृक्षा ये सिद्धायतनादिद्वारेषु श्रूयन्ते" इतिस्थानाङ्गवृत्तौ ॥ एतेषां दाक्षिणात्यानां, सार्द्धं पल्योपमं स्थितिः । उदीच्यानां तु देशोनं, स्थितिः पल्योपमद्वयम् ॥ ९१ ॥ देवीनां दाक्षिणात्यानामर्द्धपल्योपमं स्थितिः । उदीच्यानां तु देशोनमेकं पल्योपमं स्थितिः ॥ ९२ ॥ दशाब्दानां सहस्राणि, सर्वेषां सा जघन्यतः । आहारोच्छ्वासकालाङ्गमानं व्यन्तरदेववत् ॥ ९३ ॥ वसन्ति यद्यप्यसुरा, आवासापरनामसु । प्रायो महामण्डपेषु, रामणीयकशालिषु ॥ ९४ ॥ कदाचिदेव भवनेष्वन्ये नागादयः पुनः । वसंति भवनेष्वेव, कदाचिन्मण्डपेषु तु ॥ ९५ ॥ तथापि भवनेष्वेषां, निवासरूढ्यपेक्षया । सामान्यतोऽमी भवनवासिनः स्युर्दशापि हि ॥ ९६ ॥ संमूर्छिमा गर्भजाश्च, तिर्यञ्चो गर्भजा नराः । षट्संहननसंपन्ना, विराद्धार्हतदर्शनाः ॥ ९७ ॥ मिथ्यात्विनश्चोग्रबालतपसः प्रोत्कटक्रुधः । गर्वितास्तपसा वैरक्रूरा द्वैपायनादिवत् ॥ ९८ ॥ उत्पद्यन्त एषु मृत्वा, च्युत्वाऽमी यान्ति चामराः । गर्भजेषु नृतिर्यक्षु, संख्येयस्थितिशालिषु ॥ ९९ ॥ पर्याप्तबादरक्ष्माम्बुप्रत्येकपादपेषु च । आरभ्यैकमसंख्येयावध्येकसमयेन ते ॥ ३०० ॥ उत्पद्यन्ते च्यवन्तेऽत्र, जघन्यं गुरु चान्तरम् । सम-



२०

२५



२८

यश्च मुहूर्त्तांश्च, चतुर्विंशतिसंमिताः ॥ १ ॥ एषां लेश्याः कृष्णनीलतेजःकापोतसंज्ञिताः । स्युश्चतस्रो नान्तिमे द्वे, तथा भवस्वभावतः ॥ २ ॥ किञ्चिन्न्यूनार्द्धपाथोधिजीविनोऽवधिचक्षुषा । संख्येयानि योजनानि, पश्यन्ति भवनाधिपाः ॥३॥ परे पुनरसंख्यानि, तान्येवं तत्र भावना । यथा यथाऽऽयुषो वृद्धिः, क्षेत्रवृद्धिस्तथा तथा ॥४॥ एवं च—अवधेर्विषयो नागादिषु संख्येययोजनः । असुरेषु त्वसंख्येयद्वीपवार्द्धिमितो गुरुः ॥ ५ ॥ सर्वेष्वपि लघुः पञ्चविंशत्या योजनैर्मितः । विषयः स्यात् स च दशसहस्रवर्षजीविषु ॥ ६ ॥ भवनेशा व्यन्तराश्च, पश्यन्त्यवधिना बहु । ऊर्द्ध्वं यथासौ चमरोऽद्राक्षीत्सौधर्मवासवम् ॥७॥ अधस्तिर्यक् चाल्पमेवमाकृतिर्जायतेऽवधेः । तप्रस्येवायतत्र्यस्रस्तप्रः स विदितो जने ॥८॥ भवनपतिभिरेवं भूपितः स्वप्रभाभिस्तिमिरनिकरभीष्मं कोऽप्यधोलोक एषः।ततिभिरिव निशीथो दीप्रदीपाङ्कुराणामिव घनवनखण्डः पुण्डरीकैः प्रफुल्लैः॥९॥ (मालिनी) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गोऽयं सुभगस्त्रयोदशतमः सार्थः समाप्तः सुखम् ॥ ३१० ॥ ग्रन्थाग्रं३२५-६

॥ इति श्रीलोकप्रकाशे त्रयोदशः सर्गः समाप्तः ॥ श्रीरस्तु ॥

---

## ॥ अथ चतुर्दशतमः सर्गः प्रारभ्यते ॥

मुक्त्वैकैकं सहस्रं चोपर्यधः प्रथमक्षितेः । सहस्रैरष्टसप्तत्याऽधिके योजनलक्षके ॥ १ ॥ त्रयोदश प्रस्तटाः स्यु-

नरकावासवीथयः। समश्रेणिस्थायिभिस्तैरेकैकः प्रस्तटो हि यत् ॥ २ ॥ तथोक्तं श्रीजीवाभिगमे—'इमीसे णं रयणप्पभाए पुढवीए असीउत्तरजोअणसयसहस्सबाहल्लाए उवरिं एगं जोअणसहस्सं ओगाहेत्ता हेट्ठा चेगं जोअणसहस्सं वज्जित्ता मज्झे अट्ठहुत्तरे जोअणसयसहस्से, इत्थ णं रयणप्पभाए पुढवीए तीसं नरयावाससयसहस्सा भवंतीतिमक्खाया'' सर्वेऽप्यमी योजनानां, सहस्रत्रयमुच्छ्रिताः। सर्वास्वपि क्षितिष्वेषां, मानं ज्ञेयमिदं बुधैः ॥ ३ ॥ एकादश सहस्राणि, शतानि पञ्च चोपरि। त्र्यशीतियोजनान्यंशस्तृतीयो योजनस्य च ॥ ४ ॥ एतावदन्तरं ज्ञेयं, प्रस्तटानां परस्परम्। प्रतिप्रतरमेकैको, भवेच्च नरकेन्द्रकः ॥ ५ ॥ तथाहि—सीमन्तकः स्यात्प्रथमे, द्वितीये रोरकाभिधः। भ्रान्तस्तृतीये उद्भ्रान्तश्चतुर्थे प्रस्तटे भवेत् ॥ ६ ॥ संभ्रान्तः पञ्चमे ज्ञेयः, षष्ठेऽसंभ्रान्तसंज्ञकः। विभ्रान्तः सप्तमे तप्तसंज्ञितः पुनरष्टमे ॥ ७ ॥ नवमे शीतनामा स्याद्वक्रान्तो दशमे भवेत्। एकादशे त्ववक्रान्तो, विक्रान्तो द्वादशे भवेत् ॥ ८ ॥ त्रयोदशे सेवकः स्यादेवमेते त्रयोदश। प्रतिप्रतरमेभ्यश्च, निर्गता नरकालयः ॥९॥ स्थापना। प्रथमप्रतरे तत्र, सीमन्तनरकेन्द्रकात्। निर्गता नरकावासावल्यो दिक्षु विदिक्षु च ॥ १० ॥ एकोनपञ्चाशद्वासा, दिशां नरकपङ्क्तिषु। अष्टचत्वारिंशदेते, विदिग्नरकपङ्क्तिषु ॥ ११ ॥ स्थापना। त्रिशत्येकोननवतिः ( ३८९ ), प्रथमे सर्वपङ्क्तिगाः। प्रतिप्रतरमेकैकन्यूना अष्टापि पङ्क्तयः ॥ १२ ॥ सैकाशीतिस्त्रिशती च, त्रिशती च त्रिसप्ततिः। त्रिशती पञ्चषष्टिश्च, स्याद् द्वितीयादिषु त्रिषु ॥ १३ ॥ त्रिशती सप्तपंचाशत्पञ्चमे प्रतरे भवेत्। त्रिशत्येकोनपञ्चाशत्, षष्ठे प्रतर इष्यते ॥ १४ ॥ एकचत्वारिंशदाद्या,

नरकावासपंक्तयः

२०

२५

॥१५३॥

२७

त्रिशती सप्तमे मता । त्रिशती च त्रयस्त्रिंशत्, त्रिशती पञ्चविंशतिः ॥ १५ ॥ त्रिशती सप्तदश च, त्रिशती स्यान्नवोत्तरा । एकाधिका च त्रिशती, प्रतरेष्वष्टमादिषु ॥ १६ ॥ त्रयोदशेऽथ प्रतरे, आवलीनरकालयाः । त्रिनवत्यधिके प्रोक्ते, द्वे शते तत्त्ववेदिभिः ॥ १७ ॥ शेषाः पुष्पावकीर्णाः स्युः, पङ्क्तीनामन्तरेषु ते । सर्वेष्वपि प्रतरेषु, विकीर्णकुसुमौघवत् ॥ १८ ॥ चत्वारि स्युः सहस्राणि, तावन्त्येव शतानि च । त्रयस्त्रिंशच्च घर्मायामावलीनरकालयाः ॥ १९ ॥ एकोनत्रिंशल्लक्षाणि, शतानि पञ्च चोपरि । सहस्राः पञ्चनवतिः, सप्तषष्टिः प्रकीर्णकाः ॥ २० ॥ त्रिंशल्लक्षाश्च निखिला, घर्मायां नरकालयाः । सर्वेऽपि चैतेऽन्तर्वृत्ता, बहिश्च चतुरस्रकाः ॥२१॥ यदुक्तं प्रज्ञापनायां–'ते णं णरगा अंतो वट्टा बाहिं चउरंसा' इति, स्थापना । पीठादि सर्वं चापेक्ष्य, वृत्ताः स्युः केऽपि केऽपि च । त्र्यस्राश्च चतुरस्राश्च, पाङ्क्तेया नरकालयाः ॥ २२ ॥ वृत्ता एव भवन्त्यत्र, सर्वेऽपि नरकेन्द्रकाः । ततश्चानन्तरं त्र्यस्रा, नूनमष्टासु पङ्क्तिषु ॥ २३ ॥ चतुरस्रास्ततो वृत्तात्र्यस्राश्चेति यथाक्रमम् । ज्ञेयाः पुष्पावकीर्णास्तु, नानासंस्थानसंस्थिताः ॥ २४ ॥ योजनानां सहस्राणि, त्रीणि सर्वेऽपि चोच्छ्रिताः । अधोमुखन्यस्तकुण्डाकाराः कारागृहोपमाः ॥ २५ ॥ योजनानां सहस्रं च, पीठे बाहल्यमीरितम् । सहस्रमेकं शुषिरं, स्तूपिकैकसहस्रिका ॥ २६ ॥ यदुक्तं–"हेट्ठा घणा सहस्सं, उप्पिं संकोयओ सहस्सं तु । मज्झे सहस्सझुसिरा, तिन्निसहस्सूसिया निरया ॥ २७ ॥" स्थापना । संख्यातयोजनाः केऽपि, परेऽसंख्यातयोजनाः । विस्तारादैर्घ्यतश्चापि, प्रज्ञप्ता नरकालयाः ॥२८॥ सर्वास्वपि पृथिवीषु, तादृशाः किंतु मानतः । सीमन्तकः पञ्चचत्वारिंशद्योजन-

लक्षकः ॥ २९ ॥ अप्रतिष्ठानश्च लक्षयोजनः सप्तमक्षितौ । परितस्तं च चत्वारोऽसंख्यातकोटियोजनाः ॥ ३० ॥ घर्मायप्रतरे सीमन्तकाद्यनरकेन्द्रकात् । आवलीनरकाः प्रोक्ताः, सीमन्तकप्रभादयः ॥ ३१ ॥ तदुक्तं स्थानाङ्गवृत्तौ—"सीमन्तगप्पभो खलु नरओ सीमन्तगस्स पुव्वेण । सीमन्तगमज्झिमओ उत्तरपासे मुणेयव्वो ॥ ३२ ॥ सीमन्तावत्तो पुण नरओ सीमन्तगस्स अवरेण । सीमन्तगावसिट्ठो दाहिणपासे मुणेयव्वो ॥ ३३ ॥" आवल्याश्चान्तिमौ द्वौ स्तो, लोललोलुपसंज्ञकौ । विंशतितमैकविंशौ, सीमन्तनरकेन्द्रकात् ॥ ३४ ॥ उद्दग्धनिर्दग्धसंज्ञौ, ज्वरप्रज्वरकौ पुनः । पञ्चत्रिंशषट्त्रिंशौ, प्राच्यावल्यां स्मृता अमी ॥ ३५ ॥ उदीच्याद्यावलिकासु, मध्यावर्त्तावशिष्टकैः । पदैर्विशिष्टाः प्रज्ञप्ताः, प्रागुक्ता नरकाः क्रमात् ॥ ३६ ॥ यथोदीच्यां लोलमध्यलोलुपमध्यसंज्ञकौ । पश्चिमायां लोलावर्त्तलोलुपावर्त्तसंज्ञकौ ॥ ३७ ॥ लोलावशिष्टलोलुपावशिष्टसंज्ञकाववपाग् । भाव्या नामव्यवस्थैवं, प्रागुक्तेष्वखिलेष्वपि ॥ ३८ ॥ तदुक्तं स्थानाङ्गवृत्तौ–"मज्झा उत्तरपासे आवत्ता अवरओ मुणेयव्वा । सिट्ठा दाहिणपासे पुव्विल्लाओवि भइयव्वत्ति ॥ ३९ ॥" सर्वेऽपि ते रौद्ररूपाः, क्षुरप्रोपमभूमयः । देहिनां दर्शनादेवोद्वेजकाः कम्पकारिणः ॥ ४० ॥ पुद्गलानां परिणतिर्दशधा बन्धनादिका । सापि क्षेत्रस्य स्वभावात्तत्र दुःखप्रदा भवेत् ॥ ४१ ॥ तथाहि–बन्धनं चानुसमयमाहार्यैः पुद्गलैः सह । संबन्धो नारकाणां स, ज्वलज्ज्वलनदारुणः ॥ ४२ ॥ गतिरुष्ट्रखरादीनां, सदृशी दुस्सहश्रमा । तप्तलोहपदन्यासादपि दुःखप्रदा भृशम् ॥ ४३ ॥ संस्थानमत्यन्तहुण्डं, लूनपक्षाण्डजोपमम् । कुड्यादिभ्यः पुद्गलानां, भेदः सोऽप्यस्त्रवत्कटुः

घर्मायां नरकेन्द्रकाः

२०

२५



२८

॥ ४४ ॥ वर्णः सर्वनिकृष्टोऽतिभीषणो मलिनस्तथा । नित्यान्धतमसा ह्येते, द्वारजालादिवर्जिताः ॥ ४५ ॥ किञ्चामी श्लेष्मविण्मूत्रकफाद्यालिप्तभूतलाः । मांसकेशनखदन्तचर्मास्तीर्णाः श्मशानवत् ॥ ४६ ॥ कुथितश्वाहिमार्जारमृतकेभ्योऽपि दारुणः । गन्धस्तत्र रसो निम्बघोषातक्यादितः कटुः ॥ ४७ ॥ स्पर्शो वह्निवृश्चिकादिस्पर्शादप्यतिदारुणः । परिणामोऽगुरुलघुरप्यतीव व्यथाकरः ॥ ४८ ॥ शब्दोऽपि सततं पीडाक्रान्तानामतिदारुणः । विलापरूपः श्रवणादपि दुःखैककारणम् ॥ ४९ ॥ कुड्येषु वाज्रिकेष्वत्र, सन्ति वातायनोपमाः । अचित्ता योनयस्तासूत्पद्यन्ते नारकाः किल ॥ ५० ॥ इत्यर्थतस्तत्त्वार्थवृत्तौ । तथा–शीतोष्णक्षुत्पिपासाख्याः, कण्डूश्च परतन्त्रता । ज्वरो दाहो भयं शोकस्तत्रैता दश वेदनाः ॥ ५१ ॥ माघरात्रौ शीतवायौ, हिमाद्रौ खेऽभ्रवर्जिते । निरग्नेर्वातविक्लेर्दुःस्थपुंसो निरावृतेः ॥ ५२ ॥ तुषारकणसिक्तस्य, या भवेच्छीतवेदना । तेभ्योऽप्यनन्तगुणिता, तेषु स्याच्छीतवेदना ॥ ५३ ॥ तेभ्यः शीतवेदनेभ्यो, नरकेभ्यश्च नारकाः । यथोक्तपुरुषस्थाने, स्थाप्यन्ते यदि ते तदा ॥ ५४ ॥ प्राप्नुवन्ति सुखं निद्रां, निर्वातस्थानगा इव । अथोष्णकाले मध्याह्ने, निरभ्रे वियदङ्गणे ॥ ५५ ॥ पुंसः पित्तप्रतप्तस्य, परितो ज्वलनस्पृशः । योष्णपीडा ततोऽनन्तगुणा तेषूष्णवेदना ॥५६॥ तथोष्णवेदनेभ्यस्ते, नरकेभ्यश्च नारकाः । उत्पाट्य किंशुकाकारखदिराङ्गारराशिषु ॥ ५७ ॥ ध्मायन्ते यदि निक्षिप्य, तदा ते चन्दनद्रवैः । लिप्ता इवात्यन्तसुखान्निद्रां यान्ति क्षणादपि ॥ ५८ ॥ सदा क्षुद्वह्निना दह्यमानास्ते जगतोऽपि हि । घृतान्नादिपुद्गलौघैर्न तृप्यन्ति कदाचन ॥ ५९ ॥ तेषां पिपासा तु तालुकण्ठजिह्वादिशोषणी । सकलाम्भोधि-

पानेऽपि, नोपशाम्यति कर्हिचित् ॥ ६० ॥ क्षुरिकाद्यैरप्यजय्या, कण्डूर्देहेऽतिदुःखदा । अनन्तगुणितोऽत्रत्याद्या-
वज्जीवं ज्वरस्तथा ॥ ६१ ॥ अनन्तघ्नं पारवश्यं, दाहशोकभयाद्यपि । कष्टं विभङ्गमप्येषां, वैरिशस्त्रादिदर्शनात्
॥ ६२ ॥ तत्रत्यक्ष्माम्भोऽग्निमरुद्द्रुमस्पर्शोऽतिदुःखदः । अग्निस्त्वत्रोपचरितः, क्ष्मादिकायास्तु वास्तवाः ॥ ६३ ॥
तथोक्तं—"रयणप्पभापुढविणेरइआ णं भंते ! केरिसयं पुढविफासं पच्चणुब्भवमाणा विहरंति ?, गो० ! अणिट्ठं
जाव अमणामं, एवं जाव अहे सत्तमापुढविणेरइआ, एवं आउफासं, जाव वणस्सइफासं," इति भगवत्यां
श० १३ उ० ४ सूत्रे । इत्येवं विविधा तेषु, वर्त्तते क्षेत्रवेदना । मिथ्यादृशां नारकाणां, परस्परकृतापि सा ॥ ६४ ॥
तथाहि—दूरादन्योऽन्यमालोक्य, श्वानः श्वानमिवापरम् । ते युध्यन्ते ससंरम्भं, ज्वलन्तः क्रोधवह्निना ॥ ६५ ॥
विधाय वैक्रियं रूपं, शस्त्रैः क्षेत्रानुभावजैः । पृथ्वीरूपैर्वैक्रियैर्वा, कुन्तासितोमरादिभिः ॥ ६६ ॥ करांह्रिद-
न्ताघातैश्च, ते निघ्नन्ति परस्परम् । भूमौ लुठन्ति कृत्ताङ्गाः, शूनान्तर्महिषादिवत् ॥ ६७ ॥ परोदीरितदुःखानि,
सहन्ते नापरेषु ते । उदीरयन्ति सम्यक्त्ववन्तस्तत्त्वविचारणात् ॥ ६८ ॥ अत एव स्वल्पपीडाः, स्वल्पकर्माण
एव च । मिथ्यादृग्भ्यो नारकेभ्यो, नारकाः शुद्धदृष्टयः ॥ ६९ ॥ मिथ्यादृशस्तु क्रोधेनोदीरयन्तः परस्परम् ।
पीडाः कर्माण्यर्जयन्ति, भूयांसि भूरिवेदनाः ॥ ७० ॥ तथाहुः—"नेरइया दुविहा प०, तं०–माइमिच्छदिट्ठीउ-
ववण्णगा य अमाइसम्मदिट्ठीउववण्णगा य, तत्थ णं जे से माइमिच्छदिट्ठी से णं महाकम्मतराए चेव जाव
महावेयणतराए चेव, तत्थ णं जे से अमाइसम्मदिट्ठी से णं अप्पकम्मतराए चेव अप्पवेअणतराए चेव."

नारकवेदना

२०

२५



२८

भगवती शत० १८ पञ्चमोद्देशके । मनोदुःखापेक्षया तु, सद्दृशो भूरिवेदनाः । यदेते पूर्वकर्माणि, शोचन्ति न तथा परे ॥ ७१ ॥ तथाहुः—"तत्थ णं जे ते सन्निभूया ते णं महावेअणा, तत्थ णं जे ते असन्निभूया ते णं अप्पवेअणतरागा" अत्र 'सन्निभूय'त्ति संज्ञा—सम्यग्दर्शनं तद्वन्तो भूताः, यद्वा पूर्वभवे संज्ञिपञ्चेन्द्रियाः सन्तो नारकत्वं प्राप्ताः, अथवा संज्ञीभूताः—पर्याप्तकीभूताः, तद्विपरीताः सर्वत्रासंज्ञीभूताः, इति भगवतीशत० १ द्वितीयोद्देशके । तप्तायःपुत्रिकाश्लेषः, संतप्तत्रपुपायनम् । अयोघनादिघाताश्चारोपणं कूटशाल्मलौ ॥ ७२ ॥ क्षते क्षारोष्णतैलादिक्षेपणं भ्राष्ट्रभर्जनम् । कुन्तादिप्रोतनं यन्त्रे, पीडनं च तिलादिवत् ॥ ७३ ॥ क्रकचैः पाटनं तप्तवालुकास्ववतारणम् । वैक्रियोलूकहर्यक्षकङ्कादिभिः कदर्थनम् ॥ ७४ ॥ प्लावनं वैतरण्यां च, योधनं कुर्कुटादिवत् । प्रवेशनं चासिपत्रवने कुम्भीषु पाचनम् ॥ ७५ ॥ परमाधार्मिकैः क्लृप्ता, इत्याद्या विविधा व्यथाः । वेदयन्ते नारकास्ते, दुष्कर्मवशवर्त्तिनः ॥ ७६ ॥ यदाहुः—"श्रवणलवनं नेत्रोद्धारं करक्रमपाटनं, हृदयदहनं नासाछेदं प्रतिक्षणदारुणम् । कटविदहनं तीक्ष्णाघातत्रिशूलविभेदनं, दहनवदनैः कङ्कैर्घोरैः सहन्ति च भक्षणम् ॥ ७७ ॥ (हरिणी) छिद्यन्ते कृपणाः कृतान्तपरशोस्तीक्ष्णेन धारासिना, क्रन्दन्तो विषवीचिभिः परिवृताः संभक्षणव्यापृतैः । पाट्यन्ते क्रकचेन दारुवदसिप्रच्छिन्नबाहुद्वयाः, कुम्भीषु त्रपुपानदग्धतनवो मूषासु चान्तर्गताः ॥७८॥(शार्दूल.) भृज्यन्ते ज्वलदम्बरीषहुतभुग्ज्वालाभिराराविणः, दीप्ताङ्गारनिभेषु वज्रभवनेष्वङ्गारकेपूत्थिताः । दह्यन्ते विकृतोर्ध्वबाहुवदनाः क्रन्दन्त आर्त्तस्वराः, पश्यन्तः कृपणा दिशो विशरणास्त्राणाय को नो भवेत् ?

॥ ७९ ॥ (शार्दूल०) । तीक्ष्णैरसिभिर्दीप्तैः कुन्तैर्विषमैः परश्वधैश्चक्रैः । परशुत्रिशूलमुद्गरतोमरवासीमुसुण्ढीभिः ॥ ८० ॥ संभिन्नतालुशिरसश्छिन्नभुजाश्छिन्नकर्णनासौष्ठाः । भिन्नहृदयोदरान्त्रा भिन्नाक्षिपुटाः सुदुःखार्त्ताः ॥ ८१ ॥ निपतन्त उत्पतन्तो विचेष्टमाना महीतले दीनाः । नेक्षन्ते त्रातारं नैरयिकाः कर्मपटलान्धाः ॥८२॥" ( आर्याः ) इत्यादि । स्थापना । तथा—कुम्भीषु पच्यमानास्ते, प्रोच्छलत्यूर्द्ध्वमर्दिताः । उत्कर्षतो योजनानां, शतानि पञ्च नारकाः ॥८३॥ त्रोट्यन्ते निपतन्तस्ते, वज्रचञ्चूविहङ्गमैः । व्याघ्रादिभिर्विलुप्यन्ते, पतिता भुवि वैक्रियैः ॥ ८४ ॥ परमाधार्मिकास्ते च, पापिनोऽत्यन्तनिर्दयाः । पञ्चाग्न्यादितपःकष्टप्राप्तासुरविभूतयः ॥ ८५ ॥ मृगयासक्तवन्मेषमहिषाद्याजिदर्शिवत् । एते हृष्यन्ति ताच्छील्याद्, दृष्ट्वाऽऽर्त्तान् हन्त नारकान् ॥ ८६ ॥ हृष्टाः कुर्वन्त्यट्टहासं, त्रिपद्यास्फालनादिकम् । इत्थं यथैषां स्यात्प्रीतिर्न तथा नाटकादिभिः ॥ ८७ ॥ स्थापना । मृत्वाऽण्डगोलिकाभिख्यास्तेऽपि स्युर्जलमानुषाः । भक्ष्यैः प्रलोभ्यानीतास्ते, तटेऽण्डगोलकार्थिभिः ॥ ८८ ॥ यन्त्रेषु पीड्यमानाश्च, सोढकष्टकदर्थनाः । षड्भिर्मासैर्मृता यान्ति, नरकेष्वसकृत्तथा ॥ ८९ ॥ घर्मायां च त्रिधाप्येताः, पूर्वोक्ताः सन्ति वेदनाः । परं शीतोष्णयोर्मध्ये, उष्णैव क्षेत्रवेदना ॥ ९० ॥ तथाहि—उत्पत्तिस्थानकान्येषां, सन्त्यावृतगवाक्षवत् । तत्रोत्पत्त्याधः पतन्ति, कष्टात्पुष्टवपुर्भृतः ॥ ९१ ॥ अन्यत्र चोत्पत्तिदेशात्, प्रालेयाचलशीतलात् । सर्वत्र नरकेषु क्ष्मा, खदिराङ्गारसन्निभा ॥ ९२ ॥ ततः शीतयोनिकानां, तेषां नारकदेहिनाम् । जनयत्यधिकं कष्टं, क्षेत्रमुष्णं हुताशवत् ॥ ९३ ॥ प्रथमप्रतरे चास्यां, नारकाणां भवेद्वपुः । हस्त-

नारकवेदना

२०

२५



२८

त्रयं द्वितीयेऽस्मिन्, हस्ताः पञ्चाधिकानि च ॥ ९४ ॥ अष्टाङ्गुलानि सार्द्धानि, तृतीये प्रस्तटे पुनः । सप्त हस्ता सप्तदशाङ्गुलान्युपरि निर्दिशेत् ॥ ९५ ॥ चतुर्थे प्रस्तटे हस्ता, दश सार्द्धं तथाङ्गुलम् । दशाङ्गुलाधिका ज्ञेया, हस्ता द्वादश पञ्चमे ॥ ९६ ॥ षष्ठे चतुर्दश कराः, ससार्द्धाष्टादशाङ्गुलाः । सप्तमे च सप्तदश, कराः स्युरुत्यङ्गुलाधिकाः ॥ ९७ ॥ एकोनविंशतिर्हस्ताः, ससार्द्धैकादशाङ्गुलाः । अष्टमप्रस्तटे देहो, नवमप्रस्तटे पुनः ॥ ९८ ॥ युक्ताङ्गुलानां विंशत्या, कराणामेकविंशतिः । दशमे जिनसंख्यास्ते, ससार्द्धचतुरङ्गुलाः ॥९९॥ एकादशे कराः षड्विंशतिस्त्रयोदशाङ्गुलाः । द्वादशेऽष्टाविंशतिस्तेऽङ्गुलाः सार्द्धैकविंशतिः ॥१००॥ षडङ्गुलाधिका एकत्रिंशद्धस्तास्त्रयोदशे । प्रतरेषु वपुर्मानं, क्रमाद्रत्नप्रभाक्षितेः ॥ १ ॥ स्वाभाविकतनोर्देहमानमेतदुदीरितम् । स्वस्वदेहाद् द्विगुणितं, सर्वत्रोत्तरवैक्रियम् ॥ २ ॥ जघन्यतस्तु सहजोत्तरवैक्रिययोः क्रमात् । अङ्गुलासंख्यसंख्यांशौ, मानं प्रारंभ एव तत् ॥ ३ ॥ सर्वास्वपि क्षितिष्वेवं, सर्वेषां नारकाङ्गिनाम् । स्वाभाविकाङ्गाद् द्विगुणं, ज्ञेयमुत्तरवैक्रियम् ॥४॥ अत्रायमाम्नायः—पइपयर वुड्ढि अंगुल सड्ढा छप्पन्न हुंति रयणाए । तिकरतिअंगुल करसत्त अंगुला सड्ढिगुणवीसं ॥ ५ ॥ पणधणुअंगुलवीसं वारसधणु दुन्नि हत्थ सड्ढा य । वासट्ठिधणुहसड्ढा बीयाइसु पयरवुड्ढि कमा ॥ ६ ॥" स्थापना । सहस्राणि दशाब्दानां, प्रथमप्रतरे स्थितिः । जघन्या पुनरुत्कृष्टा, सहस्रा नवतिः स्मृताः ॥ ७ ॥ दश लक्षाश्च वर्षाणां, लक्षाणां नवतिस्तथा । क्रमाज्जघन्योत्कृष्टा च, द्वितीयप्रतरे स्थितिः ॥ ८॥ एवं च—नवत्यब्दसहस्रेभ्यः । समयाद्यधिकस्थितिः । दशाब्दलक्षोनायुश्च, न संभवति नारकः ॥ ९ ॥ वर्षाणां

नवतिर्लक्षाः, पूर्वकोटिस्तथैव च। तृतीयप्रतरे ज्ञेया, जघन्योत्कर्षतः स्थितिः ॥ १० ॥ जघन्या पूर्वकोट्येका, चतुर्थप्रतरे स्थितिः। दशभागीकृतस्यैको, भागोऽब्धेः परमा पुनः ॥ ११ ॥ एको भागः पञ्चमे च, जघन्योत्कर्षतः पुनः। स्यातां द्वौ दशमौ भागौ, तौ षष्ठे च जघन्यतः ॥ १२ ॥ उत्कर्षतश्च षष्ठे स्युस्त्रयो भागास्त एव च। जघन्यतः सप्तमे स्युरुत्कर्षात्तच्चतुष्टयम् ॥ १३ ॥ जघन्यतोऽष्टमे भागाश्चत्वार एव तादृशाः। उत्कर्षतश्चाष्टमे स्युर्भागाः पञ्च पयोनिधेः ॥ १४ ॥ पञ्चैव भागास्तादृक्षा, नवमे तु जघन्यतः। उत्कर्षान्नवमे षट् ते, दशमे षड् जघन्यतः ॥ १५ ॥ उत्कर्षाद्दशमे सप्तैकादशे ते जघन्यतः। एकादशेऽष्ट चोत्कर्षाद्, द्वादशेऽष्ट जघन्यतः ॥ १६ ॥ द्वादशे पुनरुत्कर्षान्नव भागास्त्रयोदशे। नव भागा जघन्येनोत्कर्षतः सागरोपमम् ॥१७॥ स्थापना। अस्यां लेश्या च कापोती, जघन्योऽवधिगोचरः। गव्यूतानां त्रयं सार्द्धं, परस्तेषां चतुष्टयम् ॥ १८ ॥ उत्पद्यन्ते च्यवन्ते च, सर्वदा नारका इह। कदाचिद्विरहोऽपि स्याज्जघन्यः समयं स च ॥ १९ ॥ उत्कर्षतो मुहूर्त्तानां, चतुर्विंशतिराहिता। सर्वासां समुदाये च, मुहूर्त्ता द्वादशान्तरम् ॥ २० ॥ एकेन समयेनैकाद्योऽसंख्यावसानकाः। उत्पद्यन्ते च्यवन्तेऽस्यामेवं सर्वक्षितिष्वपि ॥ २१ ॥ इति रत्नप्रभापृथिवी ॥

अथ वंशाभिधा पृथ्वी, द्वितीया परिकीर्त्यते। या शर्कराणां बाहुल्याद्गोत्रेण शर्कराप्रभा ॥ २२ ॥ घनोदध्यादिकं सर्वं, ज्ञेयमत्रापि पूर्ववत्। घनोदध्यादिवलयविष्कम्भस्तु विशिष्यते ॥ २३ ॥ स चैवं—योजनैकतृतीयांशयुतानि योजनानि षट्। वंशायामाद्यवलये, विष्कम्भः परिकीर्त्तितः ॥ २४ ॥ पादोनानि


२०
२५

२८

योजनानि, पञ्च मानं द्वितीयके। योजनं योजनस्य द्वादशांशाः सप्त चान्तिमे ॥ २५ ॥ त्रयोदशभिरित्येवं, तृतीयभागवर्जितैः। अलोकः शर्करापृथ्वीपर्यन्तात्किल योजनैः ॥ २६ ॥ स्थापना। एकं लक्षं योजनानां, सद्वात्रिंशत् सहस्रकम्। अस्या बाहल्यमादिष्टं, विशिष्टज्ञानशालिभिः ॥ २७ ॥ मुक्त्वैकैकं सहस्रं च, प्राग्वद्स्यामुपर्यधः। एकलक्षे योजनानां, सहस्रैस्त्रिंशतान्विते ॥ २८ ॥ एकादश प्रस्तटाः स्युस्तेषां प्रत्येकमन्तरम्। योजनानां सहस्राणि, नव सप्त शतानि च ॥ २९ ॥ प्रतिप्रतरमेकैको, भवेच्च नरकेन्द्रकः। मध्यभागेऽथ नामानि, तेषां ज्ञेयान्यनुक्रमात् ॥ ३० ॥ धनिको १ धनकश्चैव २, मनको ३ वनकस्तथा ४। घट्ट ५ संघट्ट ६ जिह्वाख्या ७ वपजिह्वस्तथापरः ८ ॥ ३१ ॥ लोलश्च ९ लोलावर्त्तश्च १०, घनलोल ११ स्तथैव च। प्रतिप्रतरमेभ्योऽष्टावष्टौ स्युर्नरकालयः ॥ ३२ ॥ तत्राद्यप्रतरमध्यनरकादावलीं प्रति। षट्त्रिंशद्दिक्षु नरकाः, पञ्चत्रिंशद्विदिक्षु च ॥३३॥ प्रथमे पङ्क्तिगाः पञ्चाशीतियुक्तं शतद्वयम्। द्वितीयादिषु चैकैकहीनाः स्युः सर्वपङ्क्तयः ॥३४॥ द्वितीयप्रतरे तस्माद्, द्विशती सप्तसप्ततिः। तृतीये पङ्क्तिनरका, द्विशत्येकोनसप्ततिः ॥ ३५ ॥ चतुर्थे पङ्क्तिनरका, द्वे शते सैकषष्टिके। पञ्चमे द्विशती तेषां, त्रिपञ्चाशत्समन्विता ॥ ३६ ॥ पञ्चचत्वारिंशदाद्ये, द्वे शते षष्ठ ईरिताः। सप्तमप्रस्तटे सप्तत्रिंशताऽऽढ्या शतद्वयी ॥ ३७ ॥ एकोनत्रिंशदधिके, द्वे शते प्रस्तटेऽष्टमे। एकविंशत्यधिके च, द्वे शते नवमे मताः॥३८॥ शतद्वयं च दशमे, त्रयोदशाधिकं भवेत्। एकादशे प्रस्तटे च, पञ्चोत्तरं शतद्वयम् ॥ ३९ ॥ षड्विंशतिः शतानि स्युर्नवतिः पञ्चभिर्युता। वंशायां नरकावासाः, सर्वे पङ्क्ति-

५

१०

१४

गताः किल ॥४०॥ सहस्राः सप्तनवतिश्चतुर्विंशतिलक्षकाः । त्रिशती पञ्चभिर्युक्ता, प्राग्वत्पुष्पावकीर्णकाः॥४१॥ सर्वे च नरकावासा, लक्षाः स्युः पञ्चविंशतिः । वंशायां ज्ञानिभिर्दृष्टा, ज्ञानेन सर्वगामिना ॥ ४२ ॥ स्थापना । एषां संस्थानमुच्चत्वं, स्वरूपं वेदनादिकम् । रत्नप्रभावद्विज्ञेयं, व्यस्ताद्यनुक्रमोऽपि च ॥ ४३ ॥ षडङ्गुलाधिका एकत्रिंशत्करा वपुर्भवेत् । प्रथमप्रस्तटे वंशापृथिव्यां नारकाङ्गिनाम् ॥ ४४ ॥ द्वितीये च चतुस्त्रिंशत्करा नवाङ्गुलाधिकाः । द्वादशाङ्गुलयुक् सप्तत्रिंशत्करास्तृतीयके ॥४५॥ चत्वारिंशत्करास्तुर्येऽधिकपञ्चदशाङ्गुलाः । पञ्चमे ते त्रिचत्वारिंशत् सहाष्टादशाङ्गुलाः ॥४६॥ कराणां सप्तचत्वारिंशद्विहीनाङ्गुलैस्त्रिभिः । षष्ठेऽथ सप्तमे पूर्णाः, कराः पञ्चाशदाहिताः ॥ ४७ ॥ अष्टमे त्रिपंचाशत्करात्र्यङ्गुलशालिनः । नवमेऽङ्गुलषट्काढ्याः, षट्पञ्चाशत्करा मताः ॥ ४८ ॥ एकोनषष्टिर्हस्तानां, दशमे सनवाङ्गुलाः । एकादशे च द्वाषष्टिः, कराः सद्वादशाङ्गुलाः ॥ ४९ ॥ स्थापना । स्थितिर्जघन्याऽस्यामाद्येऽम्बुधिमानाऽपरा तु सा । कृतैकादशभागस्याम्बुधेर्भागद्वयान्विता ॥ ५० ॥ द्वितीयप्रस्तटे लघ्वी, द्विभागसहितोऽम्बुधिः । उत्कृष्टा चैकादशांशैश्चतुर्भिरधिकोऽम्बुधिः ॥ ५१ ॥ तृतीये प्रस्तटे वार्द्धिश्चतुर्भागयुतो लघुः । षड्भिर्भागैर्युतश्चाब्धिः, उत्कृष्टा स्थितिराहिता ॥५२॥ जघन्या प्रस्तटे तुर्ये, षड्भागयुतवारिधिः । उत्कृष्टा चाष्टभिर्भागैर्युक्त एकः पयोनिधिः ॥ ५३ ॥ पञ्चमेऽल्पीयसी भागैरष्टभिः सह वारिधिः । गरीयसी चात्र भागैर्दशभिः सह तोयधिः ॥ ५४ ॥ दशभागान्वितश्चाब्धिः, षष्ठे तु स्याज्जघन्यतः । उत्कर्षतश्चैकभागसंयुक्तं सागरद्वयम् ॥ ५५ ॥ सागरद्वयमेकांशसंयुक्तं सप्तमे लघुः । त्रिभिरेकादशां

शैश्च, युक्तमब्धिद्वयं गुरुः ॥ ५६ ॥ अष्टमे तु त्रिभिर्भागैः, सहाब्धिद्वितयं लघुः । अञ्चितं पञ्चभिर्भागैर्वारिधिद्वितयं गुरुः ॥ ५७ ॥ नवमेऽल्पीयसी पञ्चभागाढ्यमम्बुधिद्वयम् । पयोधिद्वितयं सप्तभागोपेतं गरीयसी ॥ ५८ ॥ जघन्या दशमे सप्तभागाढ्यं सागरद्वयम् । उत्कृष्टा सागरद्वन्द्वं, भागैर्नवभिरन्वितम् ॥ ५९ ॥ नवभागान्वितं वार्द्धिद्वयमेकादशे लघुः । उत्कृष्टा च वारिधीनां, संपूर्णं त्रितयं भवेत् ॥ ६० ॥ स्थापना । प्राग्वल्लेश्या च कापोती, स्ववधेर्गोचरो गुरुः । गव्यूतानां त्रयं सार्द्धं, गव्यूतत्रितयं लघुः ॥ ६१ ॥ नारकच्यवनोत्पत्तिविरहोऽत्र जघन्यतः । समयं यावदुत्कर्षाद्दिनानि सप्त कीर्त्तितः ॥ ६२ ॥ इति शर्कराप्रभापृथिवी ।

अथ शैलाभिधा पृथ्वी, तृतीया परिकीर्त्यते । या वालुकानां वाहुल्याद्गोत्रेण वालुकाप्रभा ॥ ६३ ॥ अस्यां प्रथमवलये, विष्कम्भो योजनानि षट् । द्वौ त्रिभागौ योजनस्य, द्वितीये वलये पुनः ॥ ६४ ॥ पञ्चैव योजनानि स्युर्वलयेऽथ तृतीयके । योजनस्य द्वादशांशैरष्टभिः सह योजनम् ॥ ६५ ॥ त्रयोदशभिरित्येवं, सतृतीयांशयोजनैः । अलोको वालुकापृथ्वीपर्यन्ततः प्ररूपितः ॥ ६६ ॥ शेषं घनोदध्यादिस्वरूपं घर्मावत् ॥ अष्टाविंशत्या सहस्रैर्योजनानां समन्वितम् । लक्षं बाहल्यमादिष्टमस्यां दृष्टजगत्रयैः ॥ ६७ ॥ मुक्त्वा चैकैकं सहस्रं, प्राग्वदस्यामुपर्यधः । मध्ये षड्विंशतिसहस्राढ्यैकलक्षयोजनम् ॥ ६८ ॥ नव स्युः प्रस्तटास्तेषां, प्रत्येकमिदमन्तरम् । सहस्राणि द्वादशैव, त्रिशती पञ्चसप्ततिः ॥ ६९ ॥ प्रतिप्रतरमेकैको, मध्ये स्यान्नरकेन्द्रकः । ते च तप्त १ स्तापितश्च २, तपन ३ स्तापन स्तथा ॥ ७० ॥ निदाघश्च ५ प्रज्वलितः ६, पर उज्ज्वलिताभिधः ७ । तथा संज्वलिता-

भिख्यः ८, संप्रज्वलितसंज्ञकः ९ ॥ ७१ ॥ स्थापना । एभ्यश्च पङ्क्तयो दिक्षु, विदिशासु च निर्गताः । पञ्चविंशतिरावासास्तत्र दिग्वर्त्तिपङ्क्तिषु ॥ ७२ ॥ विदिशापङ्क्तिषु चतुर्विंशतिर्नरकालयाः । प्रथमप्रतरे सप्तनवत्याढ्यं शतं समे ॥ ७३ ॥ द्वितीयादिप्रस्तटे स्युः, श्रेण्य एकैकवर्जिताः । ततो द्वितीय एकोननवत्याढ्यं शतं समे ॥ ७४ ॥ सैकाशीति तृतीये तच्चतुर्थे सलिसप्तति । पञ्चमे प्रतरे प्रोक्तं, पञ्चषष्टियुतं शतम् ॥ ७५ ॥ षष्ठे च प्रस्तटे सप्तपञ्चाशं संमतं शतं । शतमेकोनपञ्चाशद्युक्तमुक्तं च सप्तमे ॥ ७६ ॥ अष्टमे त्वेकचत्वारिंशतोपेतं शतं मतम् । त्रयस्त्रिंशं शतं चैकं, नवमे प्रस्तटे भवेत् ॥ ७७ ॥ एवं चतुर्दशशती, पञ्चाशीतिसमन्विता । वालुकायां पङ्क्तिगताः, सर्वेऽपि नरकालयाः ॥ ७८ ॥ सहस्राण्यष्टनवतिस्तथा लक्षाश्चतुर्दश । शताः पञ्च पञ्चदशाधिकाः पुष्पावकीर्णकाः ॥ ७९ ॥ एवं च वालुकापृथ्व्यां, नरकाः सर्वसंख्यया । लक्षाः पञ्चदश प्रोक्तास्तत्त्वज्ञानमहार्णवैः ॥ ८० ॥ स्थापना । शेषं सर्वं स्वरूपं घर्मावत् ॥ द्वाषष्टिः पाणयः सार्द्धाः, प्रथमप्रस्तटे तनुः । सार्द्धसप्ताङ्गुलाख्याश्च, द्वितीये सप्ततिः कराः ॥ ८१ ॥ तृतीयेऽष्टसप्ततिस्ते, संयुक्ता अङ्गुलैस्त्रिभिः । तुर्ये सार्द्धाङ्गुलन्यूनाः, षडशीतिः कराः किल ॥ ८२ ॥ पञ्चमे च त्रिनवतिः, कराः साष्टादशाङ्गुलाः । एकोत्तरशतं षष्ठेऽध्यर्द्धत्रयोदशाङ्गुलाः ॥ ८३ ॥ नवोत्तरं शतं हस्ताः, सप्तमे सनवाङ्गुला । सार्द्धाङ्गुलचतुष्काढ्यं, शतं सप्तदशोत्तरम् ॥ ८४ ॥ कराणामष्टमे ज्ञेयं, नवमप्रस्तटे तथा । शतं सपादं संपूर्णं, द्विघ्नं तूत्तरवैक्रियम् ॥८५॥ स्थापना । प्रथमेऽब्धित्रयं लघ्वी, स्थितिरुत्कर्षतोऽम्बुधेः । नवभागीकृतस्यांशचतुष्काढ्यास्त्रयोऽर्णवाः ॥ ८६ ॥

२० २५ ॥१५९॥ २८

एषैव च द्वितीये स्याज्जघन्या परमा पुनः । वार्द्धित्रयं प्रोक्तरूपैर्भागैरष्टभिरञ्चितम् ॥ ८७ ॥ तृतीये तु जघ-
न्याऽब्धित्रयं भागैः सहाष्टभिः । उत्कर्षतस्त्रिभिर्भागैर्युक्तमब्धिचतुष्टयम् ॥ ८८ ॥ भागत्रयान्वितं तुर्ये, जघ-
न्याब्धिचतुष्टयम् । उत्कर्षतः सप्तभागयुक्तमब्धिचतुष्टयम् ॥ ८९ ॥ एषैव प्रतरे लघ्वी, पञ्चमे परिकीर्त्तिता ।
उत्कर्षतो द्विभागाढ्या, प्रज्ञप्ता पञ्चसागरी ॥ ९० ॥ षष्ठे जघन्यतः पञ्चपारावारी द्विभागयुक् । उत्कर्षतः पञ्च-
पारावारी षड्भागसंयुता ॥ ९१ ॥ इयमेव जघन्या च, सप्तमप्रतरे भवेत् । युक्तान्येकेन भागेन, परमा साग-
राणि षट् ॥ ९२ ॥ सागराणि षडेकांशसंयुक्तान्यष्टमे लघुः । उत्कृष्टा षट् सागराणि, पञ्चभागयुतानि च
॥ ९३ ॥ नवमे पञ्चभागाढ्या, जघन्या षट् पयोधयः । उत्कर्षतः स्थितिश्चात्र, संपूर्णाः सप्त सागराः ॥ ९४ ॥
प्रथमप्रतरे चात्र, केषांचिन्नारकाङ्गिनाम् । कापोतलेश्या सर्वेषु, नीललेश्याऽपरेषु च ॥ ९५ ॥ स्थितिः कापोतले-
श्याया, भवेदुत्कर्षतोऽपि यत् । पल्योपमासंख्यभागाभ्यधिकं सागरत्रयम् ॥ ९६ ॥ द्वितीयादिप्रस्तटे तु, जघ-
न्यापि न सा स्थितिः । तदाद्य एव प्रतरे, कापोत्यस्यामिति स्थितम् ॥ ९७ ॥ तत्रापि पल्यासंख्यांशाधिका-
म्भोधित्रयावधि । बिभ्रतामायुरेषा स्यान्नीलैवातोऽधिकायुषाम् ॥ ९८ ॥ सजातीयापि लेश्या स्यादधोऽधोऽनु-
क्रमादिह । क्लिष्टा क्लिष्टतरा क्लिष्टतमा सर्वासु भूमिषु ॥ ९९ ॥ उत्कर्षतोऽवधिक्षेत्रं, गव्यूतत्रयमत्र च ।
जघन्यतश्च गव्यूतद्वयं सार्द्धं तदाहितम् ॥ १०० ॥ अत्रोत्पत्तिच्यवनयोरन्तरं परमं भवेत् । दिनानि पञ्चदश
तज्जघन्यं समयात्मकम् ॥ १ ॥ इति वालुकाप्रभा ॥

पंकप्रभास्वरूपम्

अथाञ्जनाभिधा पृथ्वी, चतुर्थीयं निरूप्यते । या प्रोक्ता पङ्कबाहुल्यात्पङ्कप्रभेति गोत्रतः ॥ २ ॥ सप्तयोजनविस्तीर्णमस्यां वलयमादिमम् । सपादपञ्चपादोनद्वयमाने क्रमात्परे ॥३॥ चतुर्दशभिरित्येवं, संपूर्णैर्ननु योजनैः । पङ्कप्रभायाः पर्यन्तादलोकः परिकीर्त्तितः ॥ ४ ॥ स्थापना । लक्षं सहस्रैर्विंशत्याधिकं बाहल्यमत्र च । मुक्त्वा सहस्रमेकैकं, प्राग्वदत्राप्युपर्यधः ॥ ५ ॥ मध्ये चाष्टादशसहस्राढ्ययोजनलक्षके । भवन्ति प्रस्तटाः सप्त, तेषां प्रत्येकमन्तरम् ॥ ६ ॥ योजनानां सहस्राणि, षोडशैकं तथा शतम् । सषट्षष्टि द्वौ त्रिभागौ, योजनस्येति कीर्त्तितम् ॥७॥ प्रतिप्रतरमेकैको, भवेच नरकेन्द्रकः । ते चामी गदिता आर १ नारौ २ मार ३ स्तथापरः ॥ ८ ॥ वर्च ४ स्तमः ५ खाडखड ६ स्तथा खडखडाभिधः ७ । प्रतिप्रतरमेभ्यश्च, प्राग्वदष्टाष्टपङ्क्तयः ॥ ९ ॥ स्थापना । स्युः षोडश पञ्चदशावासा दिक्षु विदिक्षु च । शतं सपादं प्रथमप्रतरे सर्वसंख्यया ॥ १० ॥ द्वितीयादिषु चैकैकहीना अष्टापि पङ्क्तयः । ततो द्वितीयप्रतरे, सर्वं सप्तदशं शतम् ॥ ११ ॥ नवोत्तरं तृतीये तत्, तुर्ये एकोत्तरं शतम् । पञ्चमे च त्रिनवतिः, पञ्चाशीतिश्च षष्ठके ॥ १२ ॥ सर्वे च पङ्क्तिनरकाः, सप्तमे सप्तसप्ततिः । सप्ताधिका सप्तशती, सर्वेऽस्यां पङ्क्तिसंश्रयाः ॥ १३ ॥ सहस्रा नवनवतिर्नव लक्षास्तथा परे । द्विशती सत्रिनवतिरस्यां पुष्पावकीर्णकाः ॥ १४ ॥ स्थापना । एवं च सर्वे नरकावासाः पङ्कप्रभाक्षितौ । निर्दिष्टा दश लक्षाणि, साक्षात्कृतचराचरैः ॥ १५ ॥ इत आरभ्य नो पीडाः, परमाधार्मिकोद्भवाः । ततोऽस्यां द्विविधा एव, क्षेत्रजाश्च

२०
२५
॥१६०॥
२८

मिथःकृताः ॥ १६ ॥ परमेताः प्राक्तनाभ्योऽनन्तानन्तगुणाधिकाः । तीव्रास्तीव्रतरास्तीव्रतमाश्चानुक्रमादध ः ॥१७॥
तत्राप्यत्रोपरितनप्रतरेषु बहुष्वपि । उष्णा स्तोकेष्वधःस्थेषु, शीता च क्षेत्रवेदना ॥ १८ ॥ उष्णेषु च नरकेषु,
नारकाः शीतयोनयः । नरकेषु च शीतेषु, नारका उष्णयोनयः ॥ १९ ॥ सर्वेष्वपि नरकेषु, ज्ञेय एवं विपर्ययः ।
नारकोत्पत्तिदेशान्यक्षेत्रयोः सोऽतिदुःखदः ॥ २० ॥ हैमत्रिषष्टिचरिते सप्तमपर्वणि त्वत्रापि परमाधार्मिककृता
वेदनोक्ता, तथाहि—"सिंहादिरूपैर्विकृतैस्तत्र शम्बूकरावणौ । लक्ष्मणेन समं क्रुद्धौ, युद्ध्यमानौ ददर्श सः ॥ १ ॥
नैवं वो युद्ध्यमानानां, दुःखं भावीति वादिनः । परमाधार्मिकाः क्रुद्धा, अग्निकुण्डेषु तान्न्यधुः ॥ २ ॥" शतं
सपादं हस्तानां, प्रथमेऽङ्गं द्वितीयके । स्यात् षट्चत्वारिंशशतमूनं चतुर्भिरंगुलैः ॥ २१ ॥ करास्तृतीये षट्षष्टि-
शतं सषोडशाङ्गुलम् । सप्ताशीतिशतं तुर्येऽङ्गुलैर्द्वादशभिर्युतम् ॥ २२ ॥ अष्टाधिके द्वे शते च, पञ्चमेऽष्टांगु-
लाधिके । षष्ठे च प्रस्तटे देहमानं हस्तशतद्वयम् ॥ २३ ॥ एकोनत्रिंशता हस्तैश्चतुर्भिश्चाङ्गुलैर्युतम् । सप्तमप्रस्तटे
देहो, हस्ताः सार्द्धं शतद्वयम् ॥ २४ ॥ स्थापना । प्रथमप्रस्तटेऽथायुर्जघन्यं सप्तसागरी । उत्कृष्टा सा त्रिभिर्वा-
र्द्धिभागैर्युक्ता च साप्तिकैः ॥ २५ ॥ द्वितीयप्रस्तटे त्वेषा, जघन्या कीर्त्तिता स्थितिः । उत्कृष्टा षट्साप्तिकांश-
समेताः सप्त वार्द्धयः ॥ २६ ॥ तृतीये तु जघन्यैषा, गदिता परमा पुनः । द्वाभ्यां साप्तिकभागाभ्यां, संयुक्ता
अष्ट सागराः ॥ २७ ॥ अष्टाब्धयो द्विभागाढ्यास्तुर्ये जघन्यतः स्थितिः । पञ्चभिः साप्तिकैर्भागैः, सहाष्टाम्भो-

१ कादाचित्कत्वमेतादृशस्य एतस्य, यद्वा नात्र परमाधार्मिका असुराः किंतु तत्सजातीया एव.

धयः पराः ॥ २८ ॥ पञ्चमे पञ्चभिर्भागैः, सहाष्टसिन्धवो लघुः । एकेन सासिकांशेन, सहोत्कृष्टा नवार्णवाः ॥ २९ ॥ षष्ठे जघन्याः त्वेकांशसंयुक्ताः सागरा नव । चतुर्भिः सासिकैर्भागैः, सहोत्कृष्टा नवाब्धयः ॥ ३० ॥ इयमेव जघन्येन, सप्तमे स्थितिराश्रिता । उत्कर्षतः स्थितिश्चात्र, जिनैरुक्ता दशाब्धयः ॥ ३१ ॥ स्थापना । नीला भवेदत्र लेश्या, परमोऽवधिगोचरः । गव्यूतद्वयमध्यर्द्धं, गव्यूतद्वितयं लघुः ॥ ३२ ॥ उत्पत्तेश्च्यवनस्यापि, नारकाणामिहान्तरम् । मासमेकं भवेज्ज्येष्ठं, जघन्यं समयावधि ॥ ३३ ॥ इति पङ्कप्रभा ।

अथ रिष्टाभिधा पृथ्वी, पञ्चमी परिकीर्त्यते । या धूमरूपबाहुल्याद्धूमप्रभेति गोत्रतः ॥ ३४ ॥ वलयस्येह विष्कम्भः, प्रथमस्य प्ररूपितः । योजनस्य तृतीयांशसंयुता सप्तयोजनी ॥ ३५ ॥ द्वितीयवलये सार्द्धपञ्चयोजनविस्तृतिः । तृतीये च द्वादशांशैर्दशभिः सह योजनम् ॥ ३६ ॥ स्थापना । इत्येवं पञ्चदशभिर्योजनैश्च समन्ततः । स्यादलोकस्तृतीयांशन्यूनैर्धूमप्रभान्ततः ॥ ३७ ॥ अष्टादशसहस्राढ्यलक्षयोजनसंमितम् । बाहल्यमस्यामुदितमुदितामितवाङ्मयैः ॥ ३८ ॥ मुक्त्वा सहस्रमेकैकं, प्राग्वदत्राप्युपर्यधः । मध्येऽत्र षोडशसहस्राढ्ययोजनलक्षके ॥ ३९ ॥ भवन्ति प्रस्तटाः पञ्च, तेषां प्रत्येकमन्तरम् । योजनद्विशती सार्द्धाः, सहस्राः पञ्चविंशतिः ॥४०॥ तेषु प्रत्येकमेकैकः, कथितो नरकेन्द्रकः । खात १ स्तमो २ भ्रम ३ श्चान्ध ४ स्तथान्धतमसोऽपि च ५ ॥४१॥ स्थापना । प्रतिप्रतरमेभ्यश्च, निर्गता अष्ट पङ्क्तयः । चतस्रो दिग्गतास्तद्वच्चतस्रः स्युर्विदिग्गताः ॥४२॥ दिक्पङ्क्तिषु नव नव, भवन्ति नरकाश्रयाः । परास्त्वष्टाष्ट सर्वाग्रमाद्य एकोनसप्ततिः ॥ ४३ ॥ प्रतिप्रतरमेकैक-

धूमप्रभास्वरूपम्

१५

२०

२५

॥ १६१ ॥

२७

हीना अष्टापि पङ्क्तयः । ततो द्वितीये पाङ्क्तेया, एकषष्टिः प्ररूपिताः ॥ ४४ ॥ तृतीये च त्रिपञ्चाशत्तुरीये प्रस्तटे पुनः । पञ्चचत्वारिंशदेव, सप्तत्रिंशच्च पञ्चमे ॥ ४५ ॥ एवं पङ्क्तिगताः सर्वे, द्विशती पञ्चषष्टियुक् । शेषाः पुष्पावकीर्णास्तु, लक्षयोर्द्वितयं तथा ॥ ४६ ॥ सहस्रा नवनवतिः, शतानि सप्त चोपरि । पञ्चत्रिंशदिति त्रीणि, लक्षाणि सर्वसंख्याया ॥ ४७ ॥ पङ्कप्रभावद्विज्ञेया, द्विधा पीडाऽत्र किन्त्विह । स्तोकेषु नरकेषूष्णा, शेषेषु शीतवेदना ॥ ४८ ॥ कराणां द्विशती सार्द्धा, प्रथमे प्रस्तटे तनुः । द्वितीये त्रिशती द्वादशोत्तराः द्वादशाङ्गुलाः ॥ ४९ ॥ हस्तास्तृतीये त्रिशती, पञ्चसप्ततिसंयुता । सार्द्धसप्तत्रिंशदाढ्या, तुर्ये चतुःशती कराः ॥ ५० ॥ शतानि पञ्च हस्तानां, पञ्चमे प्रस्तटे जिनैः । पञ्चमज्ञानपटुभिस्तनुमानं निरूपितम् ॥ ५१ ॥ स्थापना । दशाब्धयो जघन्येन, प्रथमप्रस्तटे स्थितिः । उत्कृष्टा च पञ्चभागीकृतस्य जलधेः किल ॥ ५२ ॥ युक्ता द्वाभ्यां विभागाभ्यामेकादश पयोधयः । एषैव च जघन्येन, द्वितीयप्रस्तटे भवेत् ॥ ५३ ॥ युग्मम् । ज्येष्ठा चात्र युता भागैश्चतुर्भिर्द्वादशाब्धयः । इयमेव जघन्येन, तृतीयप्रतरे स्थितिः ॥ ५४ ॥ उत्कर्षतस्तृतीये च, स्युश्चतुर्दश वार्द्धयः । पञ्चभागीकृतस्याब्धेर्भागेनैकेन संयुताः ॥ ५५ ॥ एषा लघुश्चतुर्थे स्यादुत्कृष्टात्र स्थितिः पुनः । त्रिभिः पूर्वोदितैर्भागैर्युताः पञ्चदशाब्धयः ॥ ५६ ॥ पञ्चमेंऽशत्रयोपेता, लघुः पञ्चदशाब्धयः । उत्कृष्टा च सप्तदश, संपूर्णा जलराशयः ॥ ५७ ॥ स्थापना । केषांचिदाद्यप्रतरे, नारकाणां भवेदिह । नीललेश्या यदुत्कर्षादप्यस्याः स्थितिराहिता ॥ ५८ ॥ पल्योपमासंख्यभागाधिका दश पयोधयः । ततोऽधिकस्थितीनां तु, तेषां कृष्णैव

केवलम् ॥ ५९ ॥ गव्यूतद्वयमुत्कृष्टो, भवेदवधिगोचरः । जघन्यतस्तु गव्यूतं, सार्द्धमुक्तोऽत्र पारगैः ॥ ६० ॥
च्यवनोत्पत्तिविरहो, नारकाणां भवेदिह । मासयोर्द्वयमुत्कर्षाज्जघन्यात्समयावधिः ॥ ६१ ॥
इति धूमप्रभा पृथिवी, षष्ठी स्पष्टं निरूप्यते । तमसामतिबाहुल्याद्या गोत्रेण तमःप्रभा ॥ ६२॥ तृतीयांशोनिता-
न्यष्टौ, योजनानि घनोदधेः । वलये विस्तृतिः षट् च, पादोनानि द्वितीयके ॥६३॥ योजनं योजनस्य द्वादशभागी-
कृतस्य च । भागा एकादशेत्युक्ता, तृतीये वलये मितिः ॥ ६४ ॥ योजनैः पञ्चदशभिस्तृतीयभागसंयुतैः ।
भवत्येवमलोकश्च, मघापर्यन्तभागतः ॥ ६५ ॥ स्थापना । लक्षमेकं योजनानां, सषोडशसहस्रकम् । बाहल्य-
मस्यां निर्दिष्टं, प्राग्वदत्राप्युपर्यधः ॥ ६६ ॥ मुक्त्वा सहस्रमेकैकं, मध्ये स्युः प्रस्तटास्त्रयः । सहस्राणि द्विपञ्चा-
शत्सार्द्धान्येतेषु चान्तरम् ॥ ६७ ॥ हिम १ वार्दल २ लल्लाका ३ स्त्रयोऽमी नरकेन्द्रकाः । क्रमात्त्रिषु प्रस्तटेषु,
प्राग्वदेभ्योऽष्ट पङ्क्तयः ॥ ६८ ॥ स्थापना । दिक्ष्यपङ्क्तिषु चत्वारश्चत्वारो नरकालयाः । त्रयस्त्रयो विदिक्ष्वेव-
मेकोनत्रिंशदादिमे ॥ ६९ ॥ द्वितीयादिषु चैकैकहीना अष्टापि पङ्क्तयः । एवं द्वितीयप्रतरे, पाङ्क्तेया एकविंशतिः
॥ ७० ॥ त्रयोदश तृतीये स्युस्त्रिषष्टिः सर्वसंख्यया । मघायां पङ्क्तिनरकाः, शेषाः पुष्पावकीर्णकाः ॥ ७१ ॥
सहस्रा नवनवतिः, शतानि नव चोपरि । द्वात्रिंशदिति सर्वाग्रं, लक्षं पञ्चोनमाहिताः ॥ ७२॥ द्वेधाऽत्र वेदना
किंतु, शीतैव क्षेत्रवेदना । मिथःकृता वेदनाश्च, विना प्रहरणैरिह ॥ ७३ ॥ मघामाघवतीजाताः, शस्त्राणि न
हि नारकाः । विकुर्वितुं शक्नुवन्ति, तथा भवस्वभावतः ॥ ७४ ॥ ततः प्रहरणाभावान्मिथोऽङ्गेषु प्रवेशितैः ।

वज्रतुण्डकुन्थुरूपैः, पीडयन्ति विकुर्वितैः ॥ ७५ ॥ तथोक्तं जीवाभिगमे—"छट्ठसत्तमासु णं पुढवीसु नेरइया
महंताइं लोहियकुंथुरूवाइं वयरमयतुंडाइं गोमयकीडसमाणाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा
२ खाएमाणा २ सयपोराकिमिया इव दालेमाणा २ अंतो २ अणुपविसेमाणा वेयणं उईरेंति" अत्र 'समतुरं-
गेमाणा २ इति' समतुरंगायमाणाः, अश्वा इवान्योऽन्यमारोहन्त इत्यर्थः 'सयपोराकिमिय'त्ति शतपर्वकृमयः—
इक्षुकृमयः ॥ प्रथमप्रस्तटे हस्ताः, शतानि पञ्च भूघनम् । शतानि सप्त सार्द्धानि, द्वितीयप्रस्तटे तनुः ॥ ७६ ॥
सहस्रं पाणयः पूर्णास्तृतीयप्रस्तटे वपुः । स्थापना । स्थितिर्जघन्या प्रथमे, स्यात्सप्तदश वार्द्धयः ॥ ७७॥ त्रिभा-
गीकृतपाथोधेर्भागद्वयसमन्विताः । उत्कर्षतः स्थितिश्चाद्यप्रस्तटेऽष्टादशाब्धयः ॥ ७८ ॥ द्वितीये लघुरेषैव,
ज्येष्ठा विंशतिरब्धयः । वार्द्धेस्त्रिधा खण्डितस्य, भागेनैकेन संयुताः ॥ ७९ ॥ इयमेव जघन्येन, तृतीयप्रस्तटे
स्थितिः । उत्कर्षतश्च संपूर्णा, द्वाविंशतिपयोधयः ॥ ८० ॥ स्थापना । अवधेर्विषयो ज्येष्ठः, सार्द्धगव्यूतिसं-
मितः । लघीयांश्चैकगव्यूतमानः प्रोक्तोऽत्र तात्त्विकैः ॥ ८१ ॥ अन्तरं मरणोत्पत्त्योर्जघन्यं समयावधि ।
चतुष्टयं च मासानामुत्कृष्टं तन्निरूपितम् ॥ ८२ ॥ इति तमःप्रभा पृथ्वी ॥ क्रमात्सप्तस्वपि नरकेषु वेदना—
स्थापना । अथ माघवती नाम्ना, सप्तमी कथ्यते मही । या घोरध्वान्तरूपत्वाद्गोत्रात्तमस्तमःप्रभा ॥ ८३ ॥
प्रथमे योजनान्यष्टौ, द्वितीये योजनानि षट् । तृतीये द्वे योजने च, वलयाततयः क्रमात् ॥ ८४ ॥
एवं षोडशभिः पूर्णैर्योजनैर्जिनभानुभिः । तमस्तमायाः पर्यन्तादलोकः परिकीर्त्तितः ॥ ८५ ॥

स्थापना। लक्षमेकं योजनानां, सहस्रैरष्टभिः सह। बाहल्यमस्यामादिष्टमत्र चोपर्यधः पृथक् ॥ ८६ ॥ द्विपञ्चाशत्सहस्राणि, सार्द्धान्युन्मुच्य मध्यतः। एक एव प्रस्तटः स्यात्, सहस्रत्रितयोन्नतः ॥ ८७ ॥ लक्षयोजनविस्तारस्तन्मध्ये नरकेन्द्रकः। अप्रतिष्ठानको नाम्ना, तस्मात्प्राग्वच्चतुर्दिशम् ॥ ८८ ॥ एकैको नरकावासक्र्यस्रो भूरिभयङ्करः। असंख्ययोजनायामविष्कम्भपरिधिः स्मृतः ॥ ८९ ॥ तथाहि—प्राच्यां कालः प्रतीच्यां च, महाकाल इति स्मृतः। महारोरुरुत्तरस्यां, रोरुर्दक्षिणतो भवेत् ॥ ९० ॥ विदिक्षु चात्र नैकोऽपि, तत्पङ्क्तीनां परिक्षयात्। प्रतरोऽयं यदेकोनपञ्चाशत्तम आहितः ॥ ९१ ॥ तमःप्रभावद्विज्ञेया, द्विविधाऽत्रापि वेदना। सर्वोत्कृष्टा तीव्रतमाऽनन्तघ्ना सर्वतोऽपि हि ॥ ९२ ॥ देहमानं भवेदत्र, सहस्रद्वितयं कराः। स्वाभाविकं कृत्रिमं तु, सर्वत्र द्विगुणं भवेत् ॥ ९३ ॥ द्वाविंशतिर्जलधयः, स्थितिरत्र जघन्यतः। उत्कर्षतस्तु संपूर्णास्त्रयस्त्रिंशत्पयोधयः ॥ ९४ ॥ नारकोद्वर्त्तनोत्पत्तिविरहोऽत्र जघन्यतः। समयं यावदुत्कर्षात्, षण्मासावधिरादृतः ॥९५॥ गव्यूतं च तदर्द्धं चोत्कर्षाज्जघन्यतः क्रमात्। अवधेर्विषयः प्रोक्तो, जिनैर्दृष्टजगत्त्रयैः ॥९६॥ स्थापना। अथासु येषां जीवानां, यैश्च संहननैर्गतिः। लब्धिश्चाभ्यो निर्गतानां, या स्यात्तत्सर्वमुच्यते ॥ ९७ ॥ संमूर्छिमा हि तिर्यञ्च, उत्कर्षात्प्रथमां क्षितिम्। यावदुत्पद्यन्त एते, न द्वितीयादिषु ध्रुवम् ॥ ९८ ॥

तत्राप्येषां दशाब्दानां, सहस्राणि स्थितिर्लघुः। ज्येष्ठा पल्यासंख्यभागो, भवेन्नातः परा पुनः ॥ ९९ ॥ उत्पद्यमानाश्चैतेऽत्र, प्राग्जन्मबोधिमान्यतः। अपर्याप्तत्वे लभन्ते, त्वव्यक्तमपि नावधिम् ॥ ३०० ॥ तथाह



२०

२५



२८

जीवाभिगमे—'नेरइया अत्थेगइया दुअन्नाणी, अत्थेगइया तिअन्नाणी' द्वितीयामेव यावच्च, गर्भजाताः सरी-
सृपाः । तृतीयावधि गच्छन्ति, गृध्राद्याः पापपक्षिणः ॥ १ ॥ क्ष्मां चतुर्थीमेव यावत्सिंहादयश्चतुष्पदाः ।
तथोरःपरिसर्पास्तां, पञ्चमीं यावदेव च ॥ २ ॥ स्त्रियः षष्ठीमेव यावद्यान्ति यावत्तमस्तमाम् । नरा महारम्भ,
मग्ना, मत्स्याद्याश्च जलाङ्गिनः ॥ ३ ॥ ससेवार्त्तसंहनना, आद्यपृथ्वीद्वयावधि । यान्ति यावत्तृतीयां च-
कीलिकाश्रितभूघनाः ॥ ४ ॥ सार्द्धनाराचाश्चतुर्थीं, सनाराचाश्च पञ्चमीम् । षष्ठीं यावत्सऋषभनाराचा
अथ सप्तमीम् ॥ ५ ॥ सवज्रर्षभनाराचा, एव गच्छन्ति नापरे । नरके गच्छतामेषामेषोत्कर्षाद्भवेद्गतिः ॥
॥ ६ ॥ आद्यक्ष्माद्यप्रतरे, सर्वेषां सा जघन्यतः । जघन्योत्कर्षयोर्मध्ये, मध्या गतिरनेकधा ॥ ७ ॥
आद्याया एव चोद्वृत्ता, भवन्ति चक्रवर्त्तिनः । पृथिवीभ्यो न शेषाभ्यस्तथा भवस्वभावतः ॥ ८ ॥
एवमाद्यद्वयादेव, बलदेवार्द्धचक्रिणौ । आद्यत्रयादेव तीर्थंकरा नान्त्यचतुष्टयात् ॥ ९ ॥ उद्धृताः स्युः केवलिन,
आद्यपृथ्वीचतुष्टयात् । अन्त्यत्रयागतानां तु, कैवल्यं नैव संभवेत् ॥ १० ॥ चारित्रिणो भवन्त्याद्यपंचकादाद्य-
षट्कतः । उद्धृता देशविरताः, स्युः सप्तभ्योऽपि सदृशः ॥ ११ ॥ एताश्च लब्धीः प्राक्क्लसपुण्यौघा नरकेषु
तु । प्राग्बद्धायुर्वशोत्पन्ना, लभन्ते नान्यनारकाः ॥१२॥ ये स्युस्तीर्थङ्करास्तेऽपि, प्राग्बद्धनरकायुषः । पश्चात्तद्धे-
तुभिर्बद्धतीर्थकृन्नामकर्मकाः ॥ १३ ॥ ततो बद्धायुष्कतयाऽनुभूय नारकस्थितिम् । उद्धृत्य नारकेभ्यः स्युरर्हन्तः
श्रेणिकादिवत् ॥ १४ ॥ युग्मम् । गर्भजेषु नृतिर्यक्षूत्पद्यन्ते संख्यजीविषु । षड्भ्यस्तादृशतिर्यक्षु, सप्तम्या निर्गताः

५

१०

१४

परम् ॥ १५ ॥ किंच—सर्वास्वपि क्षितिष्वासु, नारकाः केचनानघाः । नवीनमपि सम्यक्त्वं, लभन्ते कर्मलाघवात् ॥ १६ ॥ पञ्चेन्द्रियवधैर्मांसाहारैर्महापरिग्रहैः । महारम्भैश्च बध्नन्ति, नरकायुः शरीरिणः ॥ १७ ॥ तथोक्तं—"बंधइ नरयाउ महारंभपरिग्गहरओ रुद्दो" स्थानाङ्गेऽपि—"चउहिं ठाणेहिं जीवा नेरइयाउयत्ताए कम्मं पकरेंति, तं०—महारंभयाए महापरिग्गहाए कुणिमाहारेणं—पंचिंदियवहेणं" अहर्निशं नारकाणां, दुःखमायुःक्षयावधि । पीडाभिः पच्यमानानां, प्राग्भूरीकृतपाप्मनाम् ॥ १८ ॥ तथोक्तं जीवाभिगमे—"अच्छिनिमीलणमित्तं नत्थि सुहं दुक्खमेव अणुवद्धं । नरए नेरइयाणं अहोनिसं पच्चमाणाणं ॥ १९ ॥" कदाचिदेव यत्सौख्यमल्पकालं तदल्पकम् । उपपातादिभिर्वक्ष्यमाणैर्भवति हेतुभिः ॥ २० ॥ तथोक्तं—"उववाएण व सायं नेरइओ देवकम्मुणा वावि । अज्झवसाणनिमित्तं, अहवा कम्माणुभावेणं ॥२१॥" तथाहि—विनाऽङ्गदाहच्छेदादि, मृतो यः पूर्वजन्मनि । नारको नातिपीडार्त्त, उत्पद्येतास्य तत्क्षणे ॥ २२ ॥ न प्राग्भवानुसंबंधं, नापि क्षेत्रादिसंभवम् । असातं सातमित्यस्योपपातसमये भवेत् ॥२३॥ युग्मम् । पूर्वमित्रं सुरः कश्चिद्यथा कृष्णस्य सात्वतः । करोति पीडोपशमं, तदाऽमी देवकर्मणा ॥ २४ ॥ कियत्कालं सुखं किञ्चिल्लभन्तेऽथ ततः परम् । क्षेत्राद्यन्यतरा पीडा, तेषां प्रादुर्भवेद् ध्रुवम् ॥ २५ ॥ सम्यक्त्वलाभे प्रथमं, चक्षुर्लाभे इवान्धलाः । ततः परं चार्हदादिगुणानामनुमोदनात् ॥ २६ ॥ एवमध्यवसायेन, सुखमासादयन्त्यमी । अपेक्ष्य जिनजन्मादि, सातकर्मोदयेन वा ॥ २७ ॥ कतिचिदिति चिद्रुचा नारकास्तारकाणामुचितमनुसरंतस्तीर्थकृन्नामकर्म । सुकुलजनिमवाप्य प्राप्त-

संमूर्छिमादिगतिः गतिर्हेतुः सातस्य च

२०

२५



२८

चारित्रचर्या, जिनपतिपदभाजः प्राप्नुयुर्मोक्षलक्ष्मीम् ॥ २८॥ (मालिनी)विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाच-केन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गश्चारुतमश्चतुर्दशतमोऽपूर्वः समासः सुखम् ॥ ३२९ ॥ ग्रन्थाग्रं ३५९ ॥

॥ इति श्रीलोकप्रकाशे चतुर्दशः सर्गः समाप्तः ॥

---

## ॥ अथ पञ्चदशः सर्गः प्रारभ्यते ॥

उज्जिजीव जरासन्धजराजर्जरितं जवात् । यतो यद्बलं सोऽस्तु, पीयूषप्रतिमः श्रिये ॥ १ ॥ तिर्यग्लोकस्य स्वरूपमथ किञ्चिद्वितन्यते । मया श्रीकीर्त्तिविजयार्णवप्राप्तश्रुतश्रिया ॥ २ ॥ तत्र च–तिर्यग्लोकवर्त्तिनोऽपि, योजनानां शता नव । घर्मापिण्डस्थिता आद्यास्तद्वर्णनप्रसंगतः ॥ ३ ॥ उक्ता अधोलोक एव, तत्रस्था व्यन्तरा अपि । रत्नप्रभोपरितलं, वर्णयाम्यथ तत्र च ॥४॥ सन्ति तिर्यगसंख्येयमाना द्वीपपयोधयः । सार्द्धो-द्धाराम्भोधियुग्मसमयैः प्रमिताश्च ते ॥ ५ ॥ तत्र जम्बूद्वीपनामा, प्रथमो मध्यतः स्थितः । लवणाब्धिस्तमा-वेष्ट्यावस्थितो वलयाकृतिः ॥ ६ ॥ तमावेष्ट्य पुनर्द्वीपो, धातकीखण्डसंज्ञकः । तमप्यावेष्ट्य परितः, स्थितः कालोदवारिधिः ॥७॥ कक्षीकृत्य च कालोदं, पुष्करद्वीप आस्थितः । पुष्करद्वीपमावेष्ट्य, स्थितः पुष्करवारिधिः ॥ ८ ॥ एवमग्रेऽपि सकलाः, स्थिता द्वीपपयोधयः । परः पूर्वं समावेष्ट्याब्धयो द्वीपसमाभिधाः ॥ ९ ॥ ते

५

१०

१३

चैवं—वारुणीवरनामा च, द्वीपोऽब्धिर्वारुणीवरः। वरुणवरेत्येषापि, श्रूयतेऽस्य श्रुतेऽभिधा ॥ १० ॥ ततः क्षीरवरो द्वीपः, क्षीरोदश्चास्य वारिधिः। ततो घृतवरो द्वीपो, घृतोदः पुनरम्बुधिः ॥ ११ ॥ तत इक्षुवरो द्वीप, इक्षूदश्च तदम्बुधिः। नन्दीश्वराभिधो द्वीपो, नन्दीश्वरोदवारिधिः ॥ १२ ॥ स्थापना। स्युस्त्रिप्रत्यवताराणि, नामधेयान्यतः परम्। अरुणप्रभृतिद्वीपाब्धीनां तस्मात्तथा ब्रुवे ॥ १३ ॥ अरुण १ श्चारुणवरो २ऽरुणवरावभासकः ३। कुण्डलः ४ कुण्डलवर ५स्तथा तदवभासकः ६ ॥ १४ ॥ शङ्खः ७ शङ्खवरः ८ शङ्खवरावभास ९ इत्यपि। रुचको १० रुचकवर ११स्तदवभासकोऽपि १२ च ॥ १५ ॥ भुजगो १३ भुजगवर १४ स्तदवभासकोऽपि १५ च। कुशः १६ कुशवरश्चैव १७, कुशवरावभासकः १८ ॥ १६ ॥ क्रौञ्चः १९ क्रौञ्चवरः २० क्रौञ्चवरावभासकोऽपि च २१। एकविंशतिरित्येते, समनामाब्धिवेष्टिताः ॥ १७ ॥ स्थापना। एवं चामी असंख्यत्वान्नियतैर्नामभिः कथम्। शक्यन्ते वक्तुमित्यत्राम्नायो नाम्नां निरूप्यते ॥ १८ ॥ विभूषणानि वस्त्राणि, गन्धाः पद्मोत्पलानि च। तिलकानि निधानानि, रत्नानि सरितोऽद्रयः ॥ १९ ॥ पद्माद्यो ह्रदाः कच्छाप्रमुखा विजया अपि। वक्षस्काराद्यो वर्षधराश्च कुरुमन्दराः ॥ २० ॥ सौधर्मप्रमुखाः स्वर्गाः, शक्राद्यः सुरेश्वराः। चन्द्रसूर्यग्रहऋक्षताराः कूटानि भूभृताम् ॥ २१ ॥ इत्यादिशस्तवस्तूनां, यानि नामानि विष्टपे। द्वीपाब्धयः स्युस्तैः सर्वैस्त्रिशः प्रत्यवतारितैः ॥ २२ ॥ एकैकेनाभिधानेनाभिधेयास्तेऽप्यसंख्यशः। यथा जम्बूद्वीपनाम्ना द्वीपाः परेऽप्यसंख्यशः ॥ २३ ॥ यावदेवं क्रमाद् द्वीपं, सूर्यवरावभासकम्। परिवेष्ट्य स्थितः सूर्यवरावभा-


२०
२५

२७

सवारिधिः ॥ २४ ॥ ततश्चैकैकेन नाम्ना, न त्रिः प्रत्यवतारणम् । देवद्वीपो देववार्द्धिर्नागद्वीपस्तदम्बुधिः ॥ २५ ॥ यक्षद्वीपो यक्षवार्द्धिर्भूतद्वीपस्तदम्बुधिः । स्वयम्भूरमणद्वीपः, स्वयम्भूरमणाम्बुधिः ॥ २६ ॥ स्थापना । जम्बूद्वीपादयश्चैते, स्यानद्विगुणविस्तृताः । सर्वे स्वयम्भूरमणार्णवान्ता द्वीपवार्द्धयः ॥ २७ ॥ जम्बूद्वीपाद्यथा सिन्धुर्लवणो द्विगुणस्ततः । धातकीखण्ड इत्येवमन्त्याद् द्वीपास्तदम्बुधिः ॥ २८ ॥ तत्रायं सर्वतः क्षुल्लः, सर्वाभ्यन्तरतः स्थितः । विष्वक्प्रतरवृत्तश्च, पूर्णेन्दुमण्डलाकृतिः ॥ २९ ॥ अस्य द्वीपस्याधिपतेरेकपल्योपमायुषः । महर्द्धिकानादृताख्यदेवस्याश्रयभूतया ॥ ३० ॥ जम्ब्वा नानारत्नमय्या, वक्ष्यमाणस्वरूपया । सदोपलक्षितो द्वीपो, जम्बूद्वीप इति स्मृतः ॥ ३१ ॥ युग्मम् । नित्यं कुसुमितैस्तत्र, तत्र देशे विराजते । वनैरनेकैर्जम्बूनां, जबूद्वीपस्ततोऽपि च ॥ ३२ ॥ विष्कम्भायामतश्चैष, लक्षयोजनसंमितः । परितः परिधिस्त्वस्य, श्रूयतां यः श्रुते श्रुतः ॥ ३३ ॥ लक्षत्रयं योजनानां, सहस्राणि च षोडश । क्रोशास्त्रयस्तदधिकमष्टाविंशं धनुःशतम् ॥ ३४ ॥ त्रयोदशाङ्गुलाः सार्द्धा, यवाः पञ्चैकयूकिका । जम्बूद्वीपस्य गणितपदं वक्ष्येऽथ तत्त्वदः ॥ ३५ ॥ शतानि सप्त कोटीनां, नवतिः कोटयः पराः । लक्षाणि सप्तपञ्चाशत्, षट्सहस्रोनितानि च ॥ ३६ ॥ सार्द्धं शतं योजनानां, पादोनक्रोशयामलम् । धनूंषि पञ्चदश च, सार्द्धं करद्वयं तथा ॥ ३७ ॥ अङ्कतोऽपि ७९०५६९४१५० को० १ धनुः १५१५ कर २ अं १२ ॥ जम्बूद्वीप स्थापना । अयं भावः—इयन्ति जम्बूद्वीपस्य, योजनप्रमितानि वै । चतुरस्राणि खण्डानि, स्युः क्रोशाद्यतिरिच्यते ॥ ३८ ॥ असौ सहस्राणि नवनवतिः स्यात्समुच्छ्रितः । साधिकानि योजनानामूर्ध्वाधश्च सहस्रकम् ॥ ३९ ॥ उद्वेधोच्छ्र-

ययोगे तु, स्यादूर्ध्वाधः प्रमाणतः । जम्बूद्वीपो योजनानां, लक्षमेकं किलाधिकम् ॥ ४० ॥ आह—जलाशयादौ शैलादौ, व्यवहारो हि संमतः । उद्वेधोच्चत्वयोर्जम्बूद्वीपे स तु कथं भवेत्? ॥ ४१ ॥ अत्र ब्रूमः—हीयमाना प्रतीच्यां भूर्धर्मायां समभूतलात् । सहस्रयोजनोण्डाऽन्ते, स्यात्क्रमाद्विजयद्वये ॥४२॥ तत्राधोलौकिकग्रामाः, सन्ति सर्वेषु तेषु च । द्वीपस्यास्य व्यवहारात्तावानुद्वेध उच्यते ॥ ४३ ॥ जम्बूद्वीपार्हतामेतत्सुमेरोः पाण्डुके वने । अभिषेकशिलोत्सङ्गेऽभिषेकः क्रियते यतः ॥ ४४ ॥ जम्बूद्वीपव्यवहारं, मेरौ संभाव्य सुष्ठु तत् । प्रज्ञप्तं तावदुच्चत्वं, जम्बूद्वीपस्य तात्त्विकैः ॥४५॥ तथाह जम्बूद्वीपप्रज्ञप्त्यां—'एगं जोअणसहस्सं उव्वेहेणं, णवणउतिजोअणसहस्साइं साइरेगाइं उड्ढं उच्चत्तेणं, साइरेगं जोअणसयसहस्सं सव्वग्गेणं पण्णत्ते'' पृथ्व्यब्जीवपुद्गलात्मा, जम्बूद्वीपोऽस्ति वस्तुतः । पृथ्व्यब्जीवपुद्गलानां, परिणामो यदीदृशः ॥४६॥ शाश्वतोऽशाश्वतश्चायं, द्रव्यतस्तत्र शाश्वतः । वर्णगन्धरसस्पर्शपर्यायैः स्यादशाश्वतः ॥ ४७ ॥ अथास्य जम्बूद्वीपस्य, भाति वज्रमणीमयः । प्राकार आगमे ख्यातो, जगतीत्यपराख्यया ॥ ४८ ॥ धेनुपुच्छाकृतिः सोऽष्टौ, योजनानि समुच्छ्रितः । योजनानि द्वादशास्य, मूले विस्तार आहितः ॥ ४९ ॥ मूलादुत्पत्यते यावद्धनुःक्रोशादिकं किल । मूलव्यासस्तावतोनस्तत्र तत्रास्य जायते ॥ ५० ॥ यथा—मूलादूर्ध्वं क्रोशयुगे, व्यतीते तत्र विस्तृतिः । सार्द्धरुद्रयोजनानि, सर्वत्रैवं विभाव्यताम् ॥ ५१ ॥ एवं च मूलादुत्क्रान्ते, योजनानां चतुष्टये । मूलव्यासे चतुरूने, स्याद्विस्तारोऽष्टयोजनः ॥ ५२ ॥ तथाऽस्य मूर्ध्नि पूर्णेषु, योजनेषु किलाष्टसु । मूलव्यासेऽष्टभिर्न्यूने, व्यासोऽ-

जम्बूगणितं उद्वेवादि च

२०

२५

॥१६६॥

२८

न्धिमितयोजनः ॥ ५३ ॥ उक्तं जम्बूद्वीपमानमध्येऽस्या मूलविस्तृतिः । भाव्यैवमखिलद्वीपपाथोधिजगतीष्वपि
॥ ५४ ॥ इत्यर्थतो वीरञ्जयक्षेत्रविचारवृत्तौ ॥ अथास्योपरिभागस्य, चतुर्योजनविस्तृतेः । मध्यदेशे सर्वरत्नमयी
राजति वेदिका ॥५५॥ सोपरिष्टाद्रिष्ठरत्नमयी वज्रमयी त्वधः । वज्रस्तम्भस्वर्णरूप्यफलकैरुपशोभिता ॥ ५६ ॥
नरकिन्नरगन्धर्ववृषोरगाश्वहस्तिनाम् । रम्या नानाविधै रूपैर्भाति साऽतिमनोरमैः ॥ ५७ ॥ तथा तस्यां रत्न-
मय्यो, राजन्ते बहुवल्लयः । वासन्तीचम्पकाशोककुन्दातिमुक्तकादयः ॥ ५८ ॥ लताश्च ताः स्तबकिताः,
पुष्पिताः पल्लवान्विताः । प्रणताः क्रीडदमरमिथुनप्रश्रयादिव ॥ ५९ ॥ परिक्षेपेण जगतीसमाना विस्तृता च
सा । शतानि पञ्च धनुषामुत्तुङ्गा त्वर्द्धयोजनम् ॥ ६० ॥ स्थाने स्थाने सर्वरत्नमयपद्मोपशोभिता । पद्मप्राधा-
न्यतो नाम्ना, सा पद्मवरवेदिका ॥ ६१ ॥ विभाति वनखण्डाभ्यां, सा पद्मवरवेदिका । उभयोः पार्श्वयोः स्थूल-
कूलाभ्यामिव निम्नगा ॥ ६२ ॥ परिक्षेपेण जगतीतुल्यौ तौ वनखण्डकौ । सार्द्धचापशतद्वन्द्वन्यूनद्वियोजनाततौ
॥ ६३ ॥ एवं च—वेदिकाव्याससंयुक्तो, विस्तारो वनयोर्द्वयोः । स्यात्पूर्णो जगतीव्यासो, योजनानां चतुष्ट-
यम् ॥ ६४ ॥ पुष्पितैः फलितैः शाखाप्रशाखाशतशालितैः । अनेकोत्तमजातीयवृक्षै रम्ये च ते वने ॥ ६५ ॥
विराजते च भूभाग, एतयोर्वनखण्डयोः । मरुत्कीर्णपञ्चवर्णपुष्पप्रकरपूजितः ॥ ६६ ॥ कस्तूरिकैलाकर्पूरचन्दना-
धिकसौरभैः । अनिलान्दोलनोद्भूतवीणादिजित्वरारवैः ॥६७॥ अत्यन्तकोमलैर्नानावर्णैर्वर्ण्यस्तृणाङ्कुरैः । रोमो-
द्गमैरिव भुवः, सुरक्रीडासुखस्पृशः ॥ ६८ ॥ मरुत्कृतास्फालनेनोद्गिरद्भिर्मधुरध्वनीन् । पञ्चवर्णैर्मणिभिरप्यसौ

कीर्णः सुगन्धिभिः ॥ ६९॥ नवरं विपिनेऽन्तःस्थे, न स्यात्तृणमणिध्वनिः। वेदिकोन्नत्तिरुद्धस्य, तादृग्वायोरसंगतेः ॥ ७० ॥ वनयोरेतयोश्चित्रकरयोः स्युः पदे पदे। पुष्करिण्यो दीर्घिकाश्च, महासरोवराणि च ॥ ७१ ॥ सुखोत्तारास्तपनीयतलाः सद्वज्रभित्तयः। नानारत्नबद्धतीर्थाः, सुवर्णरूप्यवालुकाः ॥ ७१ ॥ काश्चिज्जात्यासवरसाः, काश्चिच वारुणीरसाः। सुधोपमजलाः काश्चित्काश्चिदिक्षुरसोदकाः ॥ ७२ ॥ एवं नानास्वादजलाः, शतपत्रादिपङ्कजैः। मनोज्ञास्ताः पुष्करिण्यः, क्रीडाभिर्भाति नाकिनाम् ॥ ७३ ॥ त्रिभिर्विशेषकं ॥ स्पष्टाष्टमङ्गलैश्छत्रचामरध्वजराजिभिः। त्रिसोपानान्यासु चतुर्दिशं राजन्ति तोरणैः ॥ ७४ ॥ भान्ति क्रीडासरांस्येवं, यथार्हं दीर्घिका अपि। चतुर्दिशं त्रिसोपानादिभी रत्नमणीमयैः ॥ ७५ ॥ रम्याः क्रीडापर्वताश्च, भान्ति तत्र पदे पदे। तेषां प्रत्येकमेकैकः, प्रासादो भाति मूर्द्धनि ॥ ७६ ॥ प्रतिप्रासादमेकैकं, मध्ये सज्जितमासनम्। अस्ति क्रौञ्चासनं क्वापि, हंसासनमपि क्वचित् ॥ ७७ ॥ पद्मासनं च गरुडासनं सिंहासनं क्वचित्। भद्रासनं च मकरासनं चातिमनोहरम् ॥ ७८ ॥ तथा—नानाक्रीडागृहाः सन्ति, तयोश्च वनखण्डयोः। क्वचित्प्रेक्षणकगृहं, क्वचिच्च केतकीगृहम् ॥ ७९ ॥ लतागृहं गर्भगृहं, क्वचिच्च कदलीगृहम्। कुत्रचिन्मज्जनगृहं, प्रसाधनगृहं क्वचित् ॥ ८० ॥ प्रत्येकं च गृहेष्वेषु, विभात्येकैकमासनम्। क्रीडतां तत्र देवानां, योग्यं रत्नमणीमयम् ॥ ८१ ॥ तथा—मुद्रि(मृद्वी)कामल्लिकाजातीमालत्यादिलताततैः। रत्नात्मनस्तत्र तत्र, भूयांसो भान्ति मण्डपाः ॥ ८२ ॥ मण्डपेषु तथैतेषु, जात्यकाञ्चननिर्मिताः। शिलानां पट्टकाः सन्ति, क्रौञ्चाद्यासनसंस्थिताः ॥८३॥

न्यष्टौ ॥ ३ ॥ द्वारस्यास्य वज्रमयो, माढभागः प्रकीर्त्तितः । माढस्य शिखरं रौप्यमुल्लोकस्तपनीयजः ॥ ४ ॥ मणिवंशलोहिताक्षप्रतिवंशै रजतबद्धभूभागैः । द्वारं गवाक्षकटकैर्विराजते तत्समुद्रदिशि ॥ ५ ॥ ( आर्या ) भित्तावुभयतो भित्तिगुलिकाः पीठसन्निभाः । अष्टषष्ट्याऽधिकशतं, शय्यास्तावत्य एव च ॥ ६ ॥ रत्नानि व्यालरूपाणि, मणिमय्यश्च पुत्रिकाः । अलङ्कुर्वन्ति तद् द्वारं, मणिदामादिभूषितम् ॥ ७ ॥ तथा निषदनस्थानमेकैकं पार्श्वयोर्द्वयोः । तत्र द्वौ द्वौ च प्रत्येकं, माङ्गल्यकलशौ मतौ ॥ ८ ॥ तथा द्वौ द्वौ नागदन्तौ, मुक्तादामाद्यलङ्कृतौ । तयोरूर्ध्वं पुनर्द्वौ द्वौ, धूपघट्यन्वितौ च तौ ॥ ९ ॥ साक्षादिव स्वर्गिकन्ये, द्वे द्वे च शालभञ्जिके । द्वौ द्वौ च जालकटकौ, द्वे द्वे घण्टे शुभस्वरे ॥ १० ॥ नानाद्रुकिसलाकीर्णे, द्वे द्वे च वनमालिके । भ्रमद्भ्रमरझङ्कारगीतारवमनोरमे ॥ ११ ॥ आत्मदर्शाकृती द्वौ द्वौ, पीठौ प्रकण्ठकाभिधौ । तौ च द्वियोजनस्थूलौ, चतुर्योजनविस्तृतौ ॥ १२ ॥ चत्वारि योजनान्युच्चो, योजनद्वयविस्तृतः । तेषु प्रत्येकमेकैकः, प्रासादोऽस्ति मनोरमः ॥ १३ ॥ प्रासादास्ते तुङ्गशृङ्गा, ध्वजच्छत्रमनोहराः । सिंहासनैः सविजयदूष्यैर्विराजितान्तराः ॥ १४ ॥ आस्थानस्थानयोः किंच, द्वे द्वे स्तस्तोरणे तयोः । तोरणानां पुरः शालभञ्जिकानां द्वयं द्वयम् ॥ १५ ॥ तथाच—द्वौ नागदन्तावश्वेभनरकिम्पुरुषाङ्गिनाम् । किन्नरोरगगन्धर्ववृषभाणां युगानि च ॥ १६ ॥ वीथयः पङ्क्तयश्चैषां, नित्यं कुसुमिता लताः । पद्मनागाशोकलताश्चम्पकाम्रादयोऽपि च ॥ १७ ॥ माङ्गल्यकलशा भृङ्गारकास्तथाऽऽत्मदर्शकाः । स्थालानि साक्षतानीव, पात्र्यः फलभृता इव ॥ १८ ॥ सर्वौषधिप्रसाधन-

भाण्डभृताः सुप्रतिष्ठकाश्चैव । पीठात्ममनोगुलिकायुताः फलकनागदन्ताद्यैः ॥ १९ ॥ (आर्या) रात्नाः करण्डका रात्ना, हयकण्ठादयोऽष्ट च । चङ्गेर्यस्तेष्वष्टविधाः, पटलान्यपि चाष्टधा ॥२०॥ तथाहि–पुष्पैर्माल्यैश्चूर्णगन्धैर्वस्त्रसिद्धार्थभूषणैः । लोमहस्तैश्च संपूर्णाश्चङ्गेर्यः पटलानि च ॥ २१ ॥ सिंहासनातपत्रे चमराणि समुद्गकाश्च दशभेदाः । प्रतितोरणमेतेषां द्वयं द्वयं भवति सर्वेषाम् ॥ २२ ॥ ( आर्या ) समुद्गकसंग्रहगाथा चेयं–तेल्ले १ कोट्ठ२ समुग्गे पत्ते ३ चोए अ ४ तगर ५ एला य ६ । हरिआले ७ हिंगुलए ८ मणोसिला ९ अंजणसमुग्गे १० ॥ २३ ॥ तथात्र विजयद्वारे, शतमष्टाधिकं ध्वजाः । प्रत्येकं चक्रादिचिह्ना, दशधा ते त्वमी मताः ॥ २४ ॥ चक्रमृगगरुडसिंहाः पिच्छवृकच्छत्रवर्यहर्यक्षाः । वृषभचतुर्दन्तगजाः सर्वेऽशीत्यन्वितसहस्रम् ॥ २५ ॥ ( आर्या ) विशिष्टस्थानरूपाणि, भौमानि नवसंख्यया । विजयद्वारस्य पुरः, स्युर्भोग्यानि तदीशितुः ॥ २६ ॥ तथाहुर्जीवाभिगमे–"विजयस्स णं दारस्स पुरओ नव भोमा पण्णत्ता" इत्यादि, समवायाङ्गे तु "विजयस्स णं दारस्स एगमेगाए बाहाए नव नव भोमा पण्णत्ता' इति दृश्यते, तदत्र तत्त्वं सर्वविद्वेद्यं । मध्ये च तेषां भौमानां, पञ्चमे सपरिच्छदम् । सिंहासनमधीशस्यान्येषु भद्रासनानि च ॥ २७ ॥ स्थापना । इत्येवं विजयद्वारं, लेशतो वर्णितं मया । तृतीयोपाङ्गमालोक्यं, विशेषविस्तरार्थिभिः ॥ २८ ॥ यो योऽस्याधिपतिर्देवस्तं तं

१ द्वाराणामग्रतो भौमानां सत्त्वं न शोभावहं, तथैवैकस्यामपि बाहायां, जीवाभिगमे तु जात्यपेक्षया निर्देशः स्यात्, यद्वा वर्णनग्रन्थत्वात् अन्यातिदेशविवक्षया स ग्रन्थः ।

सामानिकाद्यः । आह्वयन्ति विजयेति, पुस्तकेषु तथोक्तितः ॥ २९ ॥ तदिदं विजयस्वामियोगाद्विजयनामकम् । अथवाऽमुष्य नामेदं, त्रैकालिकं च शाश्वतम् ॥ ३० ॥ एवं क्षेत्रद्वीपवार्द्धिनामानि स्युर्यथायथम् । नित्यानि स्वामियोगस्तु, यथास्थानं प्रवक्ष्यते ॥ ३१ ॥ यथेदं विजयद्वारं, तथा त्रीण्यपराण्यपि । समरूपाणि किंत्वीशा, द्वारतुल्याभिधाः सुराः ॥ ३२ ॥ वैजयन्तो जयन्तश्चापराजित इति क्रमात् । चत्वार्येषां सहस्राणि, सामानिकसुधाभुजाम् ॥ ३३ ॥ सहस्राणि च देवानामष्टाभ्यन्तरपर्षदि । देवानामयुतं मध्यपर्षदि स्फातिशालिनाम् ॥ ३४ ॥ स्युर्द्वादश सहस्राणि, देवानां बाह्यपर्षदि । चतस्रोऽग्रमहिष्यश्च, स्युः साहस्रपरिच्छदाः ॥ ३५ ॥ सेनाः सेनान्यश्च सप्त, पूर्वोक्तव्यन्तरेन्द्रवत् । आत्मरक्षकदेवानां, सहस्राणि च षोडश ॥ ३६ ॥ प्रत्येकमेवं विजयप्रमुखाणां परिच्छदः । सर्वेऽपि विजयाद्यास्ते, तुल्याः पल्यायुषः स्मृताः ॥ ३७ ॥ पूर्वोक्तानां निजनिजनगरीवासिनां च ते । व्यन्तराणां व्यन्तरीणामैश्वर्यमुपभुञ्जते ॥ ३८ ॥ एवं द्वाराणि चत्वारि, सर्वासु जगतीष्वपि । तत्र जम्बूद्वीपसत्कविजयद्वारनाकिनः ॥ ३९ ॥ विजयद्वारतः प्राच्यां, दिशि तिर्यगसंख्यकान् । द्वीपाब्धीन् समतिक्रम्य, जम्बूद्वीपेऽस्त्यथापरे ॥ ४० ॥ योजनानां सहस्राणि, द्वादशायतविस्तृता । राजधानी परिक्षेपस्तस्याश्चैवमुदीरितः ॥ ४१ ॥ सप्तत्रिंशत्सहस्राणि, योजनानां शतानि च । नवैव सप्तचत्वारिंशत् किञ्चिदधिकान्यपि ॥ ४२ ॥ वप्रो रत्नमयस्तस्या, राजधान्या विराजते । सप्तत्रिंशद्योजनानि, सार्द्धानि स समुच्छ्रितः ॥ ४३ ॥ तथोक्तं जीवाभिगमे—"से पागारे सत्तत्तीसं जोअणाइं अद्धजोअणं च उड्ढं उच्च-

त्तेणं." श्रीसमवायांगे तु–"सव्वासु णं विजयवेजयंतजयंतअपराजिआसु रायहाणीसु पागारा सत्तत्तीसं जोअणाइं उड्ढं उच्चत्तेणं पणत्ता," इत्युक्तमिति ज्ञेयं। मूले च विस्तृतः सोऽयं, सार्द्धां द्वादशयोजनीम्। मध्ये च विस्तृतः क्रोशाधिकानि योजनानि षट् ॥ ४४ ॥ अर्द्धक्रोशाधिकं मौलौ, विस्तृतो योजनत्रयम्। असौ नानारत्नमयैः, कपिशः कपिशीर्षकैः ॥ ४५ ॥ अर्द्धक्रोशमितायामं, क्रोशतुर्यांशविस्तृतम्। देशोनार्द्धक्रोशतुङ्गमेकैकं कपिशीर्षकम् ॥ ४६ ॥ स्थापना। वप्रस्य तस्यैकैकस्यां, वाहायां जिनपुङ्गवैः। पञ्चविंशं पञ्चविंशं, द्वाराणां शतमीक्षितम् ॥ ४७ ॥ शतानि पञ्च द्वाराणामेवं स्युः सर्वसंख्यया। विजयद्वारवत्सर्वमेषां वर्णनमीरितम् ॥ ४८ ॥ किंत्वियान् विशेषः–द्वाषष्टियोजनान्युच्चं, सार्द्धानि द्वारमेककम्। योजनानि सपादान्येकत्रिंशतं च विस्तृतम् ॥ ४९ ॥ ये च प्रकण्ठकाख्ये पीठे तत्रोदिते तयोरिह तु। पञ्चदश योजनानि च सार्द्धौ क्रोशौ च तुङ्गत्वम् ॥ ५० ॥ ( आर्या ) एकत्रिंशद्योजनानि, क्रोशश्चायतिविस्तृती। प्रत्येकमेषामुपरि, स्युः प्रासादावतंसकाः ॥ ५१ ॥ एकत्रिंशद्योजनानि, सक्रोशानि समुच्छ्रिताः। उच्छ्रयार्द्धेन ते सर्वे, प्रासादा विस्तृतायताः ॥ ५२ ॥ द्वारस्यैकैकस्य नातिदूरासन्ने भुवस्तले। सप्तदश सप्तदश, भौमाः प्रासादशेखराः ॥ ५३ ॥ तेषां मध्ये नवमे नवमे सिंहासनं विजयमरुतः। सामानिकादिसुरगणभद्रासनपरिवृतं भाति ॥ ५४ ॥ ( आर्या ) अष्ट-

विजयद्वार-वर्णनं

२०

२५

२६

१ कपिशीर्षकमानस्य न चेद्विवक्षा का हानिः ?, प्राक् तु तेषामपि सा, सपीठिकमूलानि कपिशीर्षकाण्यत्र, यद्वा समवायाङ्गे सप्तत्रिंशत्तमसंख्याप्रस्तावात् तथोक्तिः.

स्वष्टसु भौमेषु, स्थितेषूभयतस्ततः । अस्ति प्रत्येकमेकैकं, रत्नभद्रासनं महत् ॥ ५५ ॥ स्थापना । तथा तस्या राजधान्या, बहिर्दिक्षु चतसृषु । योजनानां पञ्चशत्याः, पुरतो वनमेककम् ॥ ५६ ॥ प्राच्यामशोकविपिनमपाच्यां सासपर्णिकम् । प्रतीच्यां चम्पकवनमुदक् चूतवनं क्रमात् ॥ ५७ ॥ सहस्राणि योजनानां, द्वादशायामतोऽथ ते । स्युः पञ्चशतविष्कम्भा, वनखण्डाः पृथक् पृथक् ॥ ५८ ॥ प्रत्येकं वप्रवलयपरिक्षिप्ताः समन्ततः । मध्ये तेषां तथैकैकः, स्यात्प्रासादावतंसकः ॥ ५९ ॥ द्वाषष्टिं योजनान्यर्द्धाधिकानि ते समुन्नताः । योजनान्येकत्रिंशत्, सक्रोशानि च विस्तृताः ॥ ६० ॥ प्रत्येकं रत्नघटितसिंहासनविभूषिताः । पल्योपमायुरेकैकनिर्जराधिष्ठिता अपि ॥ ६१ ॥ स्थापना । मध्येऽथास्या राजधान्या, भूमिभागे मनोहरे । शुद्धजाम्बूनदमयः, पीठबन्धो विराजते ॥ ६२ ॥ योजनानां शतान्येष, द्वादशायतविस्तृतः । क्रोशार्द्धमेदुरः पद्मवेदिकावनवेष्टितः ॥ ६३ ॥ त्रिसोपानकमेकैकं, द्वारं चारु विराजते । मणीमयं तोरणेन, तत्र दिक्षु चतसृषु ॥ ६४ ॥ मध्येऽस्य पीठबन्धस्य, भूमिभागेऽस्ति वन्धुरे । महानेकस्तपनीयमयः प्रासादशेखरः ॥ ६५ ॥ द्वाषष्टिं योजनान्यर्द्धाधिकानि स समुन्नतः । उच्चत्वस्यार्द्धमानेन, भवत्यायतविस्तृतः ॥ ६६ ॥ तस्य प्रासादस्य मध्ये, महती मणिपीठिका । सा द्विगव्यूतबाहल्या, योजनं विस्तृतायता ॥ ६७ ॥ तस्या मणिपीठिकाया, मध्ये सिंहासनं महत् । वृत्तं विजयदेवार्हं, सामानिकादिकासनैः ॥ ६८ ॥ तच्चैवं–मूलसिंहासनाद्वायूत्तरैशानदिशां त्रये । सामानिकानां चत्वारि, सहस्राण्यासनानि वै ॥ ६९ ॥ प्राच्यामग्रमहिषीणामासनानि चतसृणाम् । चत्वार्यैवातिचतुरपरिवा-

रसुरीजुषाम् ॥ ७० ॥ मूलसिंहासनादग्निकोणेऽभ्यन्तरपर्षदः । भद्रासनसहस्राणि, भवन्त्यष्टौ सुधाभुजाम् ॥ ७१ ॥ दक्षिणस्यां दिशि तथा, भान्ति मध्यमपर्षदः । दशासनसहस्राणि, तावताममृताशिनाम् ॥ ७२ ॥ भद्रासनानि नैर्ऋत्यां, बाह्यपर्षत्सुधाभुजाम् । स्युर्द्वादश सहस्राणि, पश्चिमायामथो दिशि ॥ ७३ ॥ सेनापतीनां सप्तानां, सप्त भद्रासनानि च । ततः परं परिक्षेपे, द्वितीयस्मिंश्चतुर्दिशम् ॥ ७४ ॥ चत्वारि चत्वारि सहस्राणि भान्ति चतुर्दिशम् । आत्मरक्षकदेवानां, सहस्राणीति षोडश ॥७५॥ स्थापना। स चैष मूलप्रासादश्चतुष्प्रासादवेष्टितः । उच्चत्वायामविष्कम्भैस्तेऽर्द्धमानाश्च मौलतः ॥ ७६ ॥ प्रासादास्तेऽपि चत्वारश्चतुर्भिरपरैरपि । स्वप्रमाणादर्द्धमानैः, प्रत्येकं परितो वृताः ॥ ७७ ॥ परिवारपरीवारभूता एते च मौलतः । चतुर्थभागमानेन; प्रोत्तुङ्गायतविस्तृताः ॥ ७८ ॥ एतेऽपि च स्वार्द्धमानैश्चतुर्भिरपरैर्वृताः । चतुर्दिशं स्युरित्येवं, प्रत्येकमेकविंशतिः ॥ ७९ ॥ परिवारपरीवारपरीवारास्तु मौलतः । विष्कम्भायामतुङ्गत्वैरष्टमांशमिता मताः ॥ ८० ॥ पञ्चाशीतिरमी सर्वे, जीवाभिगमपुस्तके । वृत्तौ तु तुर्या प्रासादपरिपाटी निरीक्ष्यते ॥ ८१ ॥ तथाहि—परिवारपरीवारपरीवारा अपि स्फुटम् । चतुर्भिरपरैर्मौलात्, षोडशांशमितैर्वृताः ॥ ८२ ॥ तदैकैकस्यां दिशायां, पञ्चाशीतिर्भवन्त्यतः । शतानि त्रीण्येकचत्वारिंशानि सर्वसंख्यया ॥ ८३ ॥ विना च मूलप्रासादं, सर्वेऽप्येते विभूषिताः । एकैकेनैव विजययोग्यसिंहासनेन च ॥ ८४ ॥ स्थापना । अथास्त्युत्तरपूर्वस्यां, मूलप्रासादतः

१ जीवाभिगमस्य वृत्तिरन्यथाविधादर्शमूला, स्पष्टं चैतत्तदीयदेवकुर्वादिव्याख्या विलोकनेन.

विजयद्वार-
वर्णनं

२०

२५



२७

सभा । सुधर्मानाम सततदिव्यनाट्याप्सरोभृता ॥ ८५ ॥ योजनानि द्वादशैषा, सार्द्धान्यायामतो मता । सक्रोशानि योजनानि, षड् विष्कम्भत ईरिता ॥ ८६ ॥ योजनानि नवोत्तुङ्गा, द्वारैस्त्रिभिरलङ्कृता । प्राच्यामुदीच्यां चापाच्यामेकैकमथ तान्यपि ॥ ८७ ॥ द्वे योजने उच्छ्रितानि, योजनं विस्तृतानि च । तेषां पुरस्तादेकैकः, प्रत्येकं मुखमण्डपः ॥ ८८ ॥ तेऽप्युत्तसतपनीयचन्द्रोदयविराजिताः । सातिरेके योजने द्वे, समुत्तुङ्गा मनोरमाः ॥ ८९ ॥ ते सुधर्मासभातुल्या, विष्कम्भायामतः पुनः । तेषां पुरस्तादेकैकः, स्यात्प्रेक्षागृहमण्डपः ॥ ९० ॥ मुखमण्डपतुल्यास्ते, प्रमाणैः सर्वतो मताः । प्रत्यक्षं तेष्वक्षपाटश्चतुरस्राकृतिः स्मृतः ॥ ९१ ॥ मध्ये चाक्षपाटकानां, एकैका मणिपीठिका । अर्द्धयोजनबाहल्या, योजनं विस्तृतायता ॥ ९२ ॥ स्थापना । तासां प्रत्येकमुपरि, सिंहासनमुरु स्फुरत् । तेषां प्रेक्षामण्डपानां, पुरतोऽथ प्रकीर्त्तिता ॥ ९३ ॥ एकयोजनबाहल्या, द्वे च ते विस्तृतायता । रचिता विविधै रत्नैरेकैका मणिपीठिका ॥ ९४ ॥ क्षेत्रसमासबृहद्वृत्तौ[1] तु इयं द्वियोजनायामविष्कम्भबाहल्योक्तेति ज्ञेयं। साधिके योजने तुङ्ग, स्तूपस्तदुपरि स्मृतः । देशोने च योजने द्वे, प्रत्येकं विस्तृतायतः ॥९५॥ क्षेत्रसमासबृहद्वृत्तौ तु अयं देशोनद्वियोजनायामविष्कम्भः परिपूर्णद्वियोजनोच्च उक्त इति [2]ज्ञेयं । तेषां च चैत्यस्तूपानामुपर्यातन्वते श्रियम् । रात्नानि मङ्गलान्यष्टौ, चैत्यस्तूपपुरः पुनः ॥ ९६ ॥ योजनायामविष्कम्भा, भवेद्दिक्षु चतसृषु । अर्द्धयोजनबाहल्या, प्रत्येकं मणिपीठिका

१ मणिपीठिकानां समचतुरस्रतामपेक्ष्य तत्, स्तूपस्थापनापेक्षया चैतत् स्यात्. २ मणिपीठिकानां विवक्षा अविवक्षा अन्यद्वा कारणं स्यात्.

॥ ९७ ॥ तासु प्रत्येकमेकैका, जिनमूर्तिर्विराजते । पञ्चचापशतोत्तुङ्गा, शाश्वती स्तूपसंमुखी ॥ ९८ ॥ तथोक्तं जीवाभिगमवृत्तौ—"जिनोत्सेध उत्कर्षतः पञ्च धनुःशतानि, जघन्यतः सप्त हस्ताः, इह तु पञ्च धनुःशतानि संभाव्यन्ते" ऋषभो वर्द्धमानश्च, चन्द्राननजिनेश्वरः । वारिषेणश्चेति नित्यनामानो नाकिभिर्नुताः ॥ ९९ ॥ पुरस्तासां पीठिकानामेकैका मणिपीठिका । स्थूलैकयोजनं द्वे च, योजने विस्तृतायता ॥ २०० ॥ तासां प्रत्येकमुपरि, स्यादष्टयोजनोच्छ्रयः। चैत्यवृक्षस्ते च सर्वे, नानातरुभिरावृताः ॥ १ ॥ वज्रमूला रिष्ठकन्दा, वैडूर्यस्कन्धवन्धुराः । सद्रूप्यविडिमाः स्वर्णशाखा रत्नप्रशाखकाः ॥ २ ॥ सुवर्णवृन्तवैडूर्यमयपत्रमनोहराः । जम्बूनदपल्लवाश्च, रातैः पुष्पफलैर्भृताः ॥ ३ ॥ अत्र स्कन्धविडिमादिमानं तु वक्ष्यमाणजम्बूवृक्षवद् ज्ञेयं । तेषां च चैत्यवृक्षाणां, पुरतो मणिपीठिका । योजनायामविष्कम्भा, योजनार्द्धं च मेदुरा ॥ ४ ॥ महेन्द्रध्वज एकैकस्तास्वर्द्धक्रोशविस्तृतः । सार्द्धसप्तयोजनोच्चः, पताकाछत्रमण्डितः ॥ ५ ॥ इदं जीवाभिगमसूत्रवृत्तौ, क्षेत्रसमासवृहद्वृत्तौ तु "ते च महेंद्रध्वजाः प्रत्येकमष्टयोजनोच्छ्रया" इत्युक्तमिति ज्ञेयं । तेषां महेन्द्रध्वजानां, पुरः प्रत्येकमेकिका । नन्दापुष्करिणीपद्मवेदिका वनवेष्टिता ॥ ६ ॥ योजनानि दशोण्डास्ताः, सार्द्धां द्वादशयोजनीम् । आयताः षड् योजनानि, क्रोशाधिकानि विस्तृताः ॥ ७ ॥ स्थापना । एवं सुधर्मसभाया, बहिर्भागो निरूपितः । अथैतस्या मध्यभागो, यथाऽऽम्नायं निरूप्यते ॥ ८ ॥ तस्यां सुधर्मासभायां, षट् सहस्राणि पीठिकाः । द्वे सहस्रे दिशि प्राच्यां, पश्चिमायां

१५ २० ॥१७२॥ २५ २६

१ पूर्ववत् मणिपीठिकोत्सेधयुतत्वे विवक्षिते न वाधा.

तथैव च ॥९॥ दक्षिणस्यामुत्तरस्यां, तासां सहस्रमेककम् । ताः सर्वा अपि रैरूप्यफलकैः खचिता ध्रुवम् ॥१०॥ नागदन्ता वज्रमयाः, फलकेष्वथ तेष्वपि । सुगन्धिपुष्पदामानि, लम्बमानान्यनेकशः ॥ ११ ॥ सुधर्मायां सभायां च, स्युर्धूपवासपीठिकाः । षट् सहस्राणि ताः प्राग्वद्भावनीया यथाक्रमम् ॥ १२ ॥ एता अपि स्वर्णरूप्यफलकैरुपशोभिताः । फलकेषु लसद्वज्रनागदन्ता अमीषु च ॥ १३ ॥ वाज्रिकानि सिक्यकानि, सिक्यकेषु च वज्रजाः । उद्गिरन्त्यो धूपघट्यो, धूपधूममहर्निशम् ॥ १४ ॥ स्थापना। तथैतस्याः सुधर्माया, मध्येऽस्ति मणिपीठिका। योजनद्वयविष्कम्भायामा योजनमेदुरा ॥ १५ ॥ चैत्यस्तम्भ उपर्यस्या, महान्माणवकाभिधः । सार्द्धसप्तयोजनोच्चः, क्रोशार्द्धस्थूलविस्तृतः ॥ १६ ॥ उपर्यधस्त्वसौ स्तम्भः, षट् षट् क्रोशान् विहाय च । मध्यांशेऽष्टादशक्रोशे, रैरूप्यफलकाश्रितः ॥ १७ ॥ प्राग्वत्तेषु नागदन्ता, निरुद्धा वज्रसिक्यकैः । तेषु वज्रसिक्यकेषु, वृत्ता वज्रसमुद्गकाः ॥१८॥ तेषु वज्रसमुद्गेषु, जिनसक्थीनि सन्ति च। विजयस्वर्गिणाऽन्यैश्चार्चितानि व्यन्तरामरैः ॥१९॥ पूज्यत्वमेषां सक्थनां तु, तादृग्महिमयोगतः । यदेतत्क्षालनजलं, सुराणामपि दोषहृत् ॥ २० ॥ तथोक्तं श्राद्धविधिवृत्तौ— "नव्योत्पन्नतया तर्हि, सौधर्मेशानशक्रयोः। विवादोऽभूद्विमानार्थं, हर्म्यार्थमिव हर्म्यिणोः ॥ २१ ॥ तयोरिवोर्वीश्वरयोर्विमानविप्रलुब्धयोः। नियुद्धादिमहायुद्धान्यप्यभूवन्ननेकशः॥२२॥ निवार्यते हि कलहस्तिरश्चां तरसा नरैः। नराणां च नराधीशैर्नराधीशां सुरैः क्वचित् ॥ २३ ॥ सुराणां च सुराधीशैः, सुराधीशां पुनः कथम् । केन वा स निवार्येत ?, वज्राग्निरिव दुःशमः ॥२४॥ माणवकाख्यस्तम्भस्थार्हद्दंष्ट्राशान्तिवारिणा। साधिव्याधिमहादोषमहा-

वैरनिवारिणा ॥ २५ ॥ कियत्कालव्यतिक्रान्तौ, सिक्तौ महत्तरैः सुरैः। बभूवतुः प्रशान्तौ तौ, किं वा सिद्धयेन्न तज्जलात् ? ॥२६॥" इत्यादि ।स्तम्भस्य तस्य पूर्वस्यामस्त्येका मणिपीठिका। अर्द्धयोजनबाहल्या, योजनायतविस्तृता ॥ २७ ॥ उपर्यस्या महदेकं, सिंहासनमनुत्तरम् । स्तम्भस्यास्य पश्चिमायां, तथाऽन्या मणिपीठिका ॥ २८ ॥ सापि योजनविष्कम्भायामा द्विक्रोशमेदुरा। उपरि स्वर्णमाणिक्यशयनीयमनोहरा ॥ २९ ॥ तल्पादुदीच्यां क्षुल्लेन्द्रध्वजः पूर्वोक्तकेतुवत् । मानतोऽस्मात्पश्चिमायां, कोशः प्रहरणैर्भृतः ॥ ३० ॥ तस्मिन्परिघरत्नादि, नानाप्रहरणानि च। किञ्चिदेवं सुधर्मायाः, स्वरूपमुपवर्णितम् ॥ ३१ ॥ अस्याश्चोत्तरपूर्वस्यां, सिद्धायतनमुत्तमम् । आयामादिप्रमाणेन, तत्सुधर्मासभासमम् ॥ ३२ ॥ तस्य मध्यदेशभागे, एकयोजनमेदुरा। भाति द्वियोजनायामविष्कम्भा मणिपीठिका ॥३३॥ उपर्यस्या रत्नमयोऽधिकद्वियोजनोन्नतः। द्वियोजनायततो, देवच्छंदक आहितः ॥ ३४ ॥ इदं श्रीजीवाभिगमवृत्तौ, क्षेत्रसमासवृहद्वृत्तौ तु असौ द्वियोजनप्रमाणविष्कंभोच्चत्व उक्त इति ज्ञेयं। तस्मिन् देवच्छंदके च, सुरासुरनमस्कृतम्। जयत्यर्हत्प्रतिमानां, शतमष्टोत्तरं किल ॥३५॥ तस्य सिद्धायतनस्य, विभात्युत्तरपूर्वतः। उपपातसभा सापि, सुधर्मेव प्रमाणतः ॥ ३६ ॥ अर्द्धयोजनबाहल्या, योजनायतविस्तृता। तस्यां मणिपीठिकाऽच्छा, दिव्यशय्याऽस्ति तत्र च ॥ ३७ ॥ तस्यां विजयदेवस्योपपातो बोभवीत्यथ। अस्या उत्तरपूर्वस्यां, दिशि चैको महाह्रदः ॥ ३८ ॥ नन्दापुष्करिणीतुल्यो, विष्कम्भोद्वेधदैर्घ्यतः । वेष्टितो

१ मणिपीठिकाया य उन्नतो भागो मध्यवर्त्ती तस्य सहविवक्षाऽत्र स्यात्, तत्र क्षेत्र० न.

विजयद्वारवर्णनं

२०

२५
॥ १७३ ॥
२७

वनखण्डेन, पद्मवेदिकयापि च ॥ ३९ ॥ ह्रदस्योत्तरपूर्वस्यामभिषेकसभाऽत्र च । सिंहासनपीठिकायां, विजयोऽत्राभिषिच्यते ॥ ४० ॥ इतोऽप्युत्तरपूर्वस्यां, ससिंहासनपीठिका । अलङ्कारसभा तत्र, भूष्यते विजयामरः ॥ ४१ ॥ अस्या उत्तरपूर्वस्यां, व्यवसायसभाऽत्र च । सिंहासनं पीठिकायां, विजयस्य च पुस्तकः ॥ ४२ ॥ स्वर्णरूप्यमणिमयः, समस्तस्थितिसूचकः । सपीठिके सभे चैते, उपपातसभासमे ॥ ४३ ॥ व्यवसायसभायाश्च, वर्वर्त्युत्तरपूर्वतः । द्वियोजनमितायामव्यासयोजनमेदुरम् ॥ ४४ ॥ वलिपीठं रत्नमयं, तस्याप्युत्तरपूर्वतः । नन्दापुष्करिणी प्रोक्तह्रदमाना विराजते ॥ ४५ ॥ यथा चैवं विजयस्य, नगरी विजयाभिधा । तथा स्याद्वैजयन्तस्य, वैजयन्ताभिधा पुरी ॥ ४६ ॥ वैजयन्ताभिधद्वाराद्, दक्षिणस्यामसंख्यकान् । द्वीपाब्धीन् समतिक्रम्य, जम्बूद्वीप इहैव हि ॥ ४७ ॥ जयन्तस्यापि साऽत्रैव, द्वीपे तद्द्वारतो दिशि । पश्चिमायामसंख्येयद्वीपाब्धीनामतिक्रमे ॥ ४८ ॥ अपराजितदेवस्योत्तरस्यामपराजितात् । द्वारादसंख्यद्वीपाब्धीन्, मुक्त्वा द्वीप इहैव सा ॥ ४९ ॥ एताः सर्वा राजधान्योऽवगाह्य द्वीपमेतकम् । सहस्राणि योजनानां, द्वादशाभ्यन्तरे स्थिताः ॥ ५० ॥ एवं सर्वद्वीपवार्द्धिजगतीद्वारनाकिनाम् । पुर्यः स्वस्वद्वीपवार्द्धितुल्याख्यद्वीपवार्द्धिषु ॥ ५१ ॥

अथास्य जम्बूद्वीपस्य, द्वाराणामन्तरं मिथः । द्वारविस्ताररहितपरिधेः पादसंमितम् ॥ ५२ ॥ अर्द्धपञ्चमविस्तारं, द्वारमेकैकमग्रतः । अष्टादश योजनानि, तैरूनं परिधिं कुरु ॥ ५३ ॥ ३१६२०९ क्रोश ३ ध. १२९ अं १३ ॥ तस्य तुर्यांश एकोनाशीतिः खलु सहस्रकाः । योजनानि द्विपञ्चाशत्क्रोशश्चैकस्तथाधिकः ॥ ५४ ॥ सार्द्धं सहस्रं

धनुषां, द्वात्रिंशच्चापसंयुतम् । त्रीण्यङ्गुलानि त्रियवी, यूके द्वे साधिके इति ॥ ५५ ॥ ७९०५२ क्रोश १ धनुः १५३२ अंगुल ३ यव ३ यूका २ ॥ इत्यस्य जम्बूद्वीपस्य, बहिर्भागो निरूपितः । अथैतस्य मध्यभागो, यथाम्नायं निरूप्यते ॥ ५६ ॥ क्षेत्राणि सप्त सन्त्यस्य, जम्बूद्वीपस्य मध्यतः । एकैकेन पर्वतेनान्तरितानि परस्परम् ॥ ५७ ॥ प्रथमं भरतक्षेत्रं, परं हैमवताभिधम् । तृतीयं हरिवर्षाख्यं, तुर्यं महाविदेहकम् ॥ ५८ ॥ पंचमं रम्यकं षष्ठं, हैरण्यवतमीरितम् । ऐरावतं सप्तमं चान्तराऽमूनि नगा इमे ॥ ५९ ॥ आद्यद्वितीययोर्मध्ये, हिमवान्नामपर्वतः । महाहिमवदद्रिश्च, द्वैतीयीकतृतीययोः ॥ ६० ॥ तृतीयतुर्ययोरन्तर्निषधो नाम सानुमान् । तुर्यपञ्चमयोर्नीलवान्नगः सीमकारकः ॥ ६१ ॥ रूप्यी शैलः क्षेत्रयोः स्यान्मध्ये पञ्चमषष्ठयोः । षष्ठसप्तमयोश्चैव, शिखरी भूधरोऽन्तरे ॥ ६२ ॥ वर्षवर्षधरनाममात्रतो, द्वीप एष कथितो यदोद्यतः । तद्विशेषविधिवर्णनेच्छयो-देश एव विहितोऽवसीयताम् ॥ ६३ ॥ (रथोद्धता) विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाचकेन्द्रांतिषद्राजश्री-तनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गः पञ्चदशः समाप्तिमगमत्सिद्धान्तसारोज्ज्वलः ॥ २६४ ॥



॥ इति श्रीलोकप्रकाशे पंचदशः सर्गः समाप्तः ॥

## ॥ अथ षोडशः सर्गः प्रारभ्यते ॥

द्वीपस्यास्याथ पर्यन्ते, स्थितं दक्षिणगामिनि । नानावस्थं कालचक्रैर्भरतं क्षेत्रमीरितम् ॥ १ ॥ अधिज्यधनुरा-
कारं, स्पृष्टं तच्च पयोधिना । पूर्वपश्चिमयोः कोट्योः, पृष्ठभागे च सर्वतः ॥२॥ यो योऽत्रोत्पद्यते क्षेत्रेऽधिष्ठाता
पल्यजीवितः । तमाह्वयन्ति भरतं, तस्य सामानिकादयः ॥ ३ ॥ कल्पस्थितिपुस्तकेषु, तथा लिखितदर्शं-
नात् । तत्स्वामिकत्वाद्भरतं, किंचेदं नाम शाश्वतम् ॥ ४ ॥ अत्र क्षेत्रादिप्रमाणं, षोढा विष्कम्भत १ स्तथा ।
इषु २ जीवा ३ धनुःपृष्ठ ४ बाहा ५ क्षेत्रफलै ६ र्ध्रुवे ॥ ५ ॥ तत्र विष्कम्भः प्रतीतः, शेषाणां त्विमानि लक्ष-
णानि—विवक्षितस्य क्षेत्रस्य, जीवाया मध्यभागतः । विष्कम्भो योऽर्णवं यावत्स इषुः परिभाषितः ॥ ६ ॥
विवक्षितस्य क्षेत्रस्य, पूर्वापरान्तगोचरः । आयामः परमो योऽत्र, सा जीवेत्यभिधीयते ॥ ७ ॥ विवक्षितक्षे-
त्रजीवापूर्वापरान्तसीमया । योऽब्धिस्पर्शी परिक्षेपो, धनुःपृष्ठं तदूचिरे ॥ ८ ॥ पूर्वक्षेत्रधनुःपृष्ठाद्धनुःपृष्ठेऽग्रिमे-
ऽधिकम् । खण्डं वक्रबाहुवद्यत्सा बाहेत्यभिधीयते ॥ ९ ॥ विवक्षितस्य क्षेत्रस्य, यानि योजनमात्रया ।
खण्डानि सर्वक्षेत्रस्य, तत्क्षेत्रफलमुच्यते ॥ १० ॥ उच्चत्वस्यापि यन्मानं, सर्वतो योजनादिभिः । एतद् घनक्षे-
त्रफलं, पर्वतेष्वेव संभवेत् ॥ ११ ॥ स्थापना । छिन्नस्यैकोनविंशत्या, विभागो योजनस्य यः । सा कला ताभि-
रेकोनविंशत्या पूर्णयोजनम् ॥ १२ ॥ एकोनविंशतितमः, कलाया अपि यो लवः । विकला ताभिरेकोन-
विंशत्यैका कला भवेत् ॥ १३ ॥ इति परिभाषा ॥

विष्कम्भादि, खण्डानि

व्यासो भरतहिमवदादिक्षेत्रमहीभृताम् । स्थानद्विगुणितो ज्ञेय, आविदेहमतः पुनः ॥ १४ ॥ यथारोहावरोहेण, विष्कम्भोऽर्द्धार्द्धहानितः । भवेदेवमैरवते, विष्कम्भो भरतोपमः ॥ १५ ॥ तथैवं—चेज्जम्बूद्वीपविष्कम्भे, भागा नवतियुक् शतम् । कल्प्यन्ते तत्र भरतमेकभागमितं भवेत् ॥ १६ ॥ इतः स्थानद्विगुणत्वाद्, द्वौ भागौ हिमवद्गिरिः । हैमवतं च चत्वारोऽष्टौ महाहिमवद्गिरिः ॥ १७ ॥ षोडशांशा हरिवर्षं, द्वात्रिंशन्निषधाचलः । विदेहाश्च चतुःषष्टिर्द्वात्रिंशन्नीलवान्नगः ॥ १८ ॥ षोडशांशा रम्यकाख्यं, भागा रुक्मी नगोऽष्ट च । चत्वारो हैरण्यवन्तं, द्वौ भागौ शिखरी गिरिः ॥ १९ ॥ एक ऐरावतक्षेत्रं, नवत्या च शतेन च । भागैरेवं योजनानां, लक्षमेकं समाप्यते ॥ २० ॥ यद्वेदं भरतक्षेत्रप्रमाणं योजनादिकम् । नवत्याढ्यशतगुणं, योजनानां हि लक्षकम् ॥ २१ ॥ जम्बूद्वीपस्य विष्कम्भो, यथैवं लक्षयोजनः । एवमायामोऽपि लक्षं, योजनानां भवेद्यथा ॥ २२ ॥ सहस्राः पञ्च वनयोर्व्यासः पूर्वापरस्थयोः । योजनानां चतुश्चत्वारिंशान्यष्टौ शतानि च ॥ २३ ॥ पञ्चत्रिंशत्सहस्राणि, षडुत्तरा चतुःशती । विजयानां षोडशानां, विष्कम्भोऽयं समुचितः ॥२४॥ षण्णामन्तर्नदीनां च, पञ्चाशा सप्तशत्यसौ । चतुःसहस्री विष्कम्भो, वक्षस्काराष्टकस्य च ॥ २५ ॥ मेरुर्दशसहस्रोरुर्भद्रसालस्य चायतिः । सहस्राणि चतुश्चत्वारिंशत्पूर्वापरस्थितेः ॥ २६ ॥ एषां संकलने लक्षं, योजनानां भवेदिति । वक्ष्यमाणविदेहानामायामोऽप्येवमूह्यताम् ॥ २७ ॥ दक्षिणोत्तरवर्त्तिन्योर्जगत्योर्मूलविस्तृतिः । भरतैरवतक्षेत्रव्यासेऽन्तर्भाव्यतां क्रमात् ॥ २८ ॥ जगत्योर्मूलविष्कम्भः, पूर्वपश्चिमयोस्तु यः । स्वस्वदिक्स्थवनमु-

२०

२५

॥१७५॥

२८

ख्यव्यासेऽन्तर्भाव्यतामसौ ॥ २९ ॥ विष्कम्भो भरतस्याथ, शरश्च कथितो जिनैः । षड्विंशानि योजनानि, शतानि पञ्च षट् कलाः ॥ ३० ॥ चतुर्दश सहस्राणि, चतुःशत्येकसप्ततिः । योजनान्यस्य जीवा स्यात्किंचिदूनाश्च षट् कलाः ॥ ३१ ॥ धनुःपृष्ठं सहस्राणि, चतुर्दश तथोपरि । अष्टाविंशा पञ्चशती, कला एकादशाधिकाः ॥ ३२ ॥ योजनानां त्रिपञ्चाशल्लक्षा अशीतिरेव च । सहस्राणि षट् शतानि, तथैकाशीतिरित्यथ ॥ ३३ ॥ कलाः सप्तदश तथा, तावत्यो विकला अपि । एतावद्भरतक्षेत्रे, प्रोक्तं क्षेत्रफलं जिनैः ॥ ३४ ॥ बाहा त्वत्र न संभवति ॥ तच्चेदं भरतं द्वेधा, वैताढ्यगिरिणा कृतम् । दाक्षिणात्यं भरतार्द्धमुत्तरार्द्धं तथाऽपरम् ॥ ३५ ॥ षोढा हिमवदुत्थाभ्यां, भित्त्वा वैताढ्यभूधरम् । गङ्गासिन्धुभ्यां कृतं तद्गत्वा पूर्वापराम्बुधी ॥ ३६ ॥ अर्द्धस्य दाक्षिणात्यस्य, स्याद्विष्कम्भः शरोऽपि च । अष्टात्रिंशे योजनानां, द्वे शते च कलात्रयम् ॥ ३७ ॥ योजनानां सहस्राणि, नव सप्त शतानि च । जीवाऽष्टचत्वारिंशानि, द्वादशात्र कलास्तथा ॥ ३८ ॥ धनुःपृष्ठं योजनानां, सहस्राणि नवोपरि । शतानि सप्त षट्षष्टिः, कलैका दक्षिणार्द्धके ॥ ३९ ॥ लक्षाण्यष्टादश पञ्चत्रिंशदेव सहस्रकाः । चतुःशती योजनानां, पञ्चाशीतिस्तथोपरि ॥ ४० ॥ कला द्वादश विकलाः, षडित्येवं जिनेश्वरैः । दाक्षिणात्ये भरतार्द्धे, सर्वं क्षेत्रफलं मतम् ॥४१॥ बाहा त्वत्र न संभवति । स्थापना । वैताढ्याद्दक्षिणस्यां चोत्तरस्यां लवणार्णवात् । चतुर्दशाधिकशतं, योजनानि कलास्तथा ॥ ४२ ॥ एकादशातीत्य मध्यखण्डेऽयोध्यापुरी भवेत् । नवयोजनविस्तीर्णा, द्वादशयोजनायता ॥ ४३ ॥ खण्डेऽत्रैवार्यदेशानां, स्यात्सार्द्धा पञ्च-

विंशतिः । खण्डोऽनार्यस्तान् विनाऽसौ, खण्डाः पञ्चापरे तथा ॥ ४४ ॥ मध्यखण्डगतेष्वार्यदेशेष्वेव भवेज्जनिः । अर्हतां चक्रिणामर्द्धचक्रिणां शीरिणां तथा ॥ ४५ ॥

अष्टात्रिंशे योजनानां, द्वे शते त्रिकलाधिके । अतिक्रम्य हिमवतो, दक्षिणस्यां तथाऽम्बुधेः ॥४६॥ एतावदेवातिक्रम्योत्तरस्यामत्र राजतः । वैताढ्यो मध्यस्थ इव, व्यभजद्भरतं स च ॥४७॥ पञ्चाशतं योजनानि, विस्तीर्णः पंचविंशतिम् । योजनान्युन्नतः क्रोशाधिकानि षड् भुवोऽन्तरे ॥४८॥ युग्मं ॥ विहाय मन्दरं सर्वपर्वतानां भवेद्यतः । स्वखोच्छ्रयस्य तुर्यांशो, व्यवगाढो भुवोऽन्तरे ॥४९॥ द्वे योजनशते साष्टाशीतिके त्रिकलाधिके । इषुर्वैताढ्यशैलस्य, प्रत्यञ्चाऽस्य प्रपञ्च्यते ॥५०॥ योजनानां सहस्राणि, दश सप्त शतानि च । विंशतिश्च कलाः किञ्चिदूना द्वादश कीर्त्तिताः ॥५१॥ धनुःपृष्ठं सहस्राणि, दश सप्त शतानि च । त्रिचत्वारिंशताऽऽढ्यानि, कलाः पञ्चदशाधिकाः ॥ ५२ ॥ साष्टाशीतिर्योजनानां, चतुःशती तथा कलाः । सार्द्धाः षोडश बाहाऽस्य, प्रत्येकं पार्श्वयोर्द्वयोः ॥ ५३ ॥ स्थापना । ऊर्ध्वं च पर्वतस्यास्य, दक्षिणोत्तरपार्श्वयोः । अतिक्रमे योजनानां, दशानां समभूमितः ॥ ५४ ॥ अत्रास्ति मेखलैकैका, दशयोजनविस्तृता । आयामेन च वैताढ्यसमाने ते उभे अपि ॥ ५५ ॥ पृथुत्रिंशद्योजनानि, वैताढ्यः स्यादतः परम् । प्रतिमेखलमेकैका, मानतो मेखला समा ॥ ५६ ॥ शोभिता वनखण्डेन, पद्मवेदिकयापि च । वर्त्तेते खेचरश्रेणीरत्नवद्भूमहीतला ॥ ५७ ॥ युग्मम् । स्युस्तत्र दक्षिणश्रेणौ, वृतानि विषयैर्निजैः । महापुराणि पञ्चाशत्परस्यां षष्टिरेव च ॥ ५८ ॥ दक्षिणस्यां पुरं मुख्यं, भवेद्गगनवल्ल-

भम् । उदीच्यां रथनूपुरचक्रवालाह्वयं भवेत् ॥ ५९ ॥ अयं जम्बूद्वीपप्रज्ञप्त्यभिप्रायः, ऋषभचरित्रादौ तु दक्षिणश्रेण्यां रथनूपुरचक्रवालमुत्तरश्रेण्यां गगनवल्लभमुक्तमिति ज्ञेयं[1] । मुख्यत्वं त्वनयोर्ज्ञेयं, स्वस्वश्रेण्यधिराजयोः । राजधानीरूपतया, महासमृद्धिशालिनोः ॥ ६० ॥ वसन्तस्तेषु चोत्तुङ्गरत्नप्रासादशालिषु । तृणायापि न मन्यन्ते, स्वर्गं विद्याधरेश्वराः ॥ ६१ ॥ दशयोजनतुङ्गस्य, पञ्चाशद्विस्तृतेरपि । खण्डस्यास्य सकलं, प्रतरं स्याद् भुवस्तले ॥ ६२ ॥ पञ्च लक्षाः सहस्राणि, द्वादशाथ शतत्रयम् । ससार्द्धं द्वादश कलाः, खण्डेऽथ प्रथमे घनम् ॥ ६३ ॥ लक्षाणामेकपञ्चाशत्रयोविंशतिरेव च । सहस्रा योजनानां षट्सप्ततिः षट् कलास्तथा ॥ ६४ ॥ श्रेणीभ्यामथ चैताभ्यां, योजनानामतिक्रमे । दशानां मेखलैकैका, वर्त्तते पार्श्वयोर्द्वयोः ॥६५॥ तत्र याम्योत्तराभिख्ये, श्रेण्यौ गिरिसमायते । वसन्त्यत्र शक्रसत्कलोकपालाभियोगिनः ॥६६॥ तथाऽऽहुः क्षमाश्रमणपादाः–“ विज्जाहरसेढीओ उड्ढं गंतूण जोअणे दस उ । दसजोअणपिहुलाओ सेढीओ सक्करायस्स ॥६७॥ सोमजमकाइयाणं देवाणं वरुणकाइयाणं च । वेसमणकाइयाणं देवाणं आभिओगाणं ॥६८॥” स्थापना । बहूनि भवनान्यत्र, तेषां पल्योपमायुषाम् । बहिर्वृत्तानि रात्नानि, चतुरस्राणि चान्तरे ॥ ६९ ॥ वेदिकावनराजिन्योः, श्रेण्योर्व्यासोऽनयोर्भवेत् । योजनानि दशैतावान्, वैताढ्यस्यापि तत्र सः ॥ ७० ॥ दशयोजनतुङ्गस्य, त्रिंशद्योजनविस्तृतेः । खण्डस्यास्य द्वितीयस्य, गणितं प्रतरात्मकम् ॥ ७१ ॥ तिस्रो लक्षाः सहस्राणि, सप्त

---

१ चरितानुवादत्वाद् गौणं, प्रज्ञप्तिवाक्यं तु विधितया मुख्यं,

त्रीणि शतानि च । तथा चतुरशीतिश्च, कला एकादशाधिकाः ॥ ७२ ॥ अत्र च सर्वत्र यथोपयोगं योजनपदमनुक्तमपि अध्याहार्यं॥ तथा खण्डे द्वितीयस्मिन्,निश्चितं सर्वतो घनम् । त्रिंशल्लक्षा योजनानां,सहस्राणि त्रिसप्ततिः ॥७३॥ शतान्यष्टौ पञ्चचत्वारिंशदाढ्यानि चाधिकाः। कलाः पञ्चदशेत्युक्तं, व्यक्तं युक्तिविशारदैः ॥ ७४ ॥ अभियोगिश्रेणितश्च, योजनानामतिक्रमे । पञ्चानामूर्ध्वमत्रास्योपरिभागो विराजते ॥ ७५ ॥ नानारत्नालङ्कृतस्य, दशयोजनविस्तृतेः । मध्ये पद्मवेदिकाऽस्य, तस्याश्चोभयतो वने ॥ ७६॥ तयोः क्रीडापर्वतेषु, कदल्यादिगृहेषु च। दीर्घिकादिषु च स्वैरं, क्रीडन्ति व्यन्तरामराः ॥७७॥ पञ्चयोजनतुङ्गस्य, दशयोजनविस्तृतेः । खण्डस्यास्य तृतीयस्य, प्रतरं परिकीर्त्तितम् ॥ ७८ ॥ एकं लक्षं द्वे सहस्रे, चतुःशत्येकषष्टियुक् । कला दशाथ गणितं, ब्रवीम्यस्मिन् घनात्मकम् ॥ ७९ ॥ पञ्च लक्षा योजनानां, सहस्रा द्वादशापरे । सप्तातिरेका त्रिशती, कलाश्च द्वादशाधिकाः ॥ ८० ॥ त्रयाणामपि खण्डानां, घनेष्वेकीकृतेषु च । वैताढ्यस्याखिलस्यापि, जायते गणितं घनम् ॥ ८१ ॥ तच्चेदं–सप्ताशीतिश्च लक्षाणि, द्विनवतिः शतान्यपि । एकोनत्रिंशदाढ्यानि, कलाश्चतुर्दशाधिकाः ॥ ८२ ॥ सिद्धायतनं कूटं १ दक्षिणभरतार्द्धनामधेयं च । खण्डप्रपातकूटं ३ तुर्यं तन्माणिभद्राख्यम् ४ ॥ ८३ ॥ वैताढ्याख्यं ५ पञ्चममथ षष्ठं पूर्णभद्रसंज्ञं ६ च । भवति तमिस्रगुहं ७ चोत्तरभरतार्द्धं ८ च वैश्रमणम् ९ ॥८४॥ वैताढ्ये नव कूटान्येवं ज्ञेयानि तत्र पूर्वाब्धेः।सविधे सिद्धायतनं ततः क्रमात्प्रत्यगखिलानि ॥ ८५ ॥ ( आर्याः ) कूटान्येतानि सक्रोशान्युच्चत्वे योजनानि षट् । तावन्त्येव मूलभूमौ, विष्कम्भायामतो

श्रेणीनां कूटानां च ख० १५ २० २५ २७

ऽपि च ॥ ८६ ॥ मध्ये देशोनानि पञ्च, योजनानि शिरस्यथ । साधिकानि त्रीण्युदस्तगोपुच्छसंस्थितान्यतः ॥ ८७ ॥ परिक्षेपा मूलमध्यशिरस्सूनानि विंशतिः । तथोनानि पञ्चदश, साग्राणि नव च क्रमात् ॥ ८८ ॥ अधस्ताच्छिखराद्यावदागतं तत्किलार्द्धितम् । कूटोत्सेधार्द्धयुक्कूटे, व्यासो यथेप्सितास्पदे ॥ ८९ ॥ तथाहि— सक्रोशार्द्धं योजनानां, त्रयेऽतीते शिरोऽग्रतः । यदा जिज्ञास्यतेऽमीषु, व्यासस्तदा तदर्द्धयेत् ॥ ९० ॥ स्युः षट् क्रोशाः सपादास्ते, कूटोत्सेधार्द्धसंयुताः । सपादक्रोशहीनैवं, संजाता पञ्चयोजनी ॥ ९१ ॥ मध्यप्रदेशे विष्कम्भ, एतावानेषु जायते । एवं हिमवदादीनां, सर्वकूटेषु भावना ॥ ९२ ॥ सिद्धायतनकूटस्योपरि रम्यं विराजते । सत् सिद्धायतनं मौलौ, किरीटमिव भूपतेः ॥९३॥ स्थापना । सद्रत्नकनकमणिमयमेकक्रोशायतं तदर्द्धततम् । चापशतानि चतुर्दश चत्वारिंशानि चोत्तुङ्गम् ॥९४॥ (आर्या) पूर्वोत्तरादक्षिणासु,द्वारमेकैकमत्र तत् । धनुःपञ्चशतोत्तुङ्गं, तदर्द्धं किल विस्तृतम् ॥ ९५ ॥ पञ्चधनुःशतविष्कंभायामा स्यात्तदर्द्धबाहल्या । मणिपीठिका तदन्तर्देवच्छन्दक उपरि चास्याः ॥९६॥ (आर्या) पञ्चचापशतान्येष,विष्कंभायामतो मतः । तान्येव सातिरेकाणि, तुङ्गत्वेन प्ररूपितः ॥९७॥ अष्टोत्तरं शतं नित्यप्रतिमास्तत्र चार्हताम् । उत्सेधाङ्गुलनिष्पन्नधनुःपञ्चशतोच्छ्रिताः ॥ ९८ ॥ एकैकस्यां दिशि सप्तविंशतिः सप्तविंशतिः । एवं चतुर्दिशं ताः स्युर्नाम्ना च ऋषभादयः ॥ ९९ ॥ तासां च जिनमूर्त्तीनामङ्करत्नमया नखाः । अन्तर्लोहिताक्षरत्नप्रतिसेकमनोहराः ॥ १०० ॥ पाणिपादतलनाभिजिह्वाश्रीवत्सचूचुकम् । तालूनि च तपनीयमयानि रिष्ठरत्नजाः ॥ १०१ ॥ श्मश्रुरोमराजयश्च,

ओष्ठा विद्रुमनिर्मिताः । नासा अन्तर्लोहिताक्षनिषेकास्तपनीयजाः ॥ २ ॥ लोहिताक्षप्रतिसेकान्यक्षीण्यङ्कमयानि च । तारका अक्षिपक्ष्माणि, भ्रुवश्च रिष्ठरत्नजाः ॥३॥ ललाटपट्टश्रवणकपोलं कनकोद्भवम् । केशभूमिस्तपनीयमयी केशाश्च रिष्ठजाः ॥ ४ ॥ वज्रजाः शीर्षघटिकास्तथा कनकनिर्मिताः । ग्रीवाबाहुपादजङ्घागुल्फोरुतनुयष्टयः ॥ ५ ॥ नन्वेतानि भावजिनप्रतिरूपाणि तेषु च । उचितं श्मश्रुकूर्चादि, श्रामण्यानुचितं कथम् ? ॥ ६ ॥ तदुक्तं तपागच्छनायकश्रीदेवेंद्रसूरिशिष्यश्रीधर्मघोषसूरिभिर्भाष्यवृत्तौ—"भगवतोऽपगतकेशशीर्षमुखनिरीक्षणेन श्रामण्यावस्था सुज्ञानैवे"ति, अत्र उच्यते—भावार्हतामपि श्मश्रुकूर्चादीनामसंभवः । न सर्वथा किं तु तादृग्दिव्यातिशयसंभवात् ॥ ७ ॥ स्यादवस्थितता तेषां, श्रामण्यग्रहणादनु । पुरुषत्वप्रतिपत्तिः, सौन्दर्यं चेत्थमेव हि ॥ ८ ॥ युग्मम् ॥ यदुक्तं श्रीसमवायाङ्गे—'अवट्ठियकेसमंसुरोमणहे' इति, औपपातिकेऽप्युक्तं—'अवट्ठियसुविभत्तचित्तमंसू' एवं च— तासां भावजिनाधीशप्रतिरूपतया ततः । शाश्वतार्हत्प्रतिमानां, श्मश्रुकूर्चादि युक्तिमत् ॥९॥ भाष्ये त्वकेशशीर्षाऽस्या, या श्रामण्यदशोदिता । साऽवर्द्धिष्णुतयाऽल्पत्वात्तदभावविवक्षया ॥१०॥ एकैकस्याः प्रतिमायाः, पृष्ठतश्छत्रधारिणि (के) । द्वे द्वे चामरधारिण्यौ, पार्श्वतः पुरतः पुनः ॥ ११ ॥ यक्षभूतकुण्डधारप्रतिमानां द्वयं द्वयम् । विनयावनतं

१ श्रामण्यप्रतिपत्तिकाले हि मुष्टिपञ्चकेन लोचकरणात् अकेशावस्था, पश्चाद् यथायोग्यवृद्धिसद्भावादवस्थितकेशता, तथा चोभयमपि निरूपचरितमेव ।



२०

२५

२६

पादपतितं घटिताञ्जलि ॥ १२ ॥ यथा देवच्छन्दकेऽस्मिन्, घण्टाधूपकडुच्छकाः । तथा चन्दनकुम्भाद्याः, प्रत्येकं शतमष्टयुक् ॥ १३ ॥ तथाहि—चंदणकलसा १ भिंगारगा २ य आयंसगा य ३ थाला य ४ । पाईउ ५ सुप्पइट्ठा ६ मणगुलिया ७ वायकरगा य ८ ॥ १४ ॥ चित्ता रयणकरंडग ९ हय १० गय ११ नरकंठगा य १२ चंगेरी १३ । पडलग १४ सीहासण १५ छत्त १६ चामरा १७ समुगय १८ झया य १९ ॥ १५ ॥ तथा—खण्डप्रपात-कूटे स्यान्नृत्तमालः सुरो विभुः । सप्तमे कृतमालश्च, स्यात्तमिस्रगुहाभिधे ॥ १६ ॥ षण्णां च शेषकूटानां, कूट-नामसमाभिधाः । सुराः कुर्वन्त्याधिपत्यं, सर्वे पल्योपमायुषः ॥ १७ ॥ एतेषां च परीवारो, देवीसामानिका-दिकः । तत्तदासनरीतिश्च, सर्वं विजयदेववत् ॥ १८ ॥ पूर्णभद्रं माणिभद्रं, कूटं वैताढ्यनामकम् । त्रीण्येतानि स्वर्णजानि, रात्निकान्यपराणि षट् ॥१९॥ उपर्येषामथैकैकः, स्यात्प्रासादावतंसकः । रात्निकः क्रोशतुङ्गोऽर्द्धक्रोशं च विस्तृतायतः ॥ २० ॥ इदं जम्बूद्वीपप्रज्ञप्तिवृत्तिबृहत्क्षेत्रसमासाभिप्रायेण, श्रीउमास्वातिकृते जम्बूद्वीपसमासे त्वमी प्रासादावतंसकाः क्रोशदैर्घ्यविस्ताराः किञ्चिन्न्यूनतदुच्छ्रया उक्ताः सन्ति । तस्य प्रासादस्य मध्ये, महती मणिपीठिका । धनुःपञ्चशतायामव्यासा तदर्द्धमेदुरा ॥ २१ ॥ उपर्यस्या रत्नमयं, सिंहासनमनुत्तरम् । तत्तत्कूटस्वामियोग्यं, परिवारासनैर्वृतम् ॥ २२ ॥ यदा स्वस्वराजधान्याः, कूटानां स्वामिनः सुराः । अत्रायान्ति तदैतस्मिन्, प्रासादे सुखमासते ॥ २३ ॥ मेरोर्दक्षिणतोऽसंख्यद्वीपाब्धी-

१ अत्र उभयतो वनखण्डमानं विवक्षितं, उच्छ्रये च स्तूपिका न विवक्षिता, एवं उभयोर्वैषम्यम् ।

नामतिक्रमे । जम्बूद्वीपेऽपरत्रैषां, राजधान्यो यथायथम् ॥ २४ ॥ वैताढ्यस्य पर्वतस्य, द्वे गुहे भवतः क्रमात् । खण्डप्रपाता प्राच्येंऽशे, तमिस्रा परतः पुनः ॥ २५ ॥ उन्नते योजनान्यष्टौ, तानि द्वादश विस्तृते । नित्यान्धकारगहने, पञ्चाशद्योजनायते ॥ २६ ॥ दक्षिणस्यामुदीच्यां च, द्वारमेकैकमेतयोः । उच्छ्रितं योजनान्यष्टौ, तानि चत्वारि विस्तृतम् ॥ २७ ॥ नृत्तमालकृत्तमालावेकपल्यायुषौ सुरौ । महर्द्धिकौ विजयवदेतयोः स्वामिनौ क्रमात् ॥ २८ ॥ प्रतिद्वारं द्वौ कपाटौ, वाज्रिकौ घटितौ सदा । अष्टावष्टौ योजनानि, तुङ्गौ द्वे द्वे च विस्तृतौ ॥ २९ ॥ यदेह चक्री भरतोऽन्तरभागं जिगीषति । सेनान्या रत्नदण्डेनाहतौ तदाऽवसर्पतः ॥ ३० ॥ उद्घाटितस्यैकैकस्य, पश्चाद्भागेऽस्ति तोदकः । चतुर्योजनविष्कम्भायामोऽवष्टम्भ एतयोः ॥ ३१ ॥ हस्तिरत्नं समारुह्य, कुम्भस्थलस्फुरन्मणिः । चक्री तदुद्योतिताध्वा, तमिस्रां प्रविशेद्गुहाम् ॥ ३२ ॥ तत्र प्रविश्य पाश्चात्यसैन्यप्रकाशहेतवे । रत्नेन काकिणीनाम्ना, खटीपिण्डावलेखिना ॥ ३३ ॥ ऊर्ध्वाधो योजनान्यष्टौ, तिर्यग्द्वादशयोजनीम् । प्रकाशयेद्योजनं चैकैकं दक्षिणवामयोः ॥ ३४ ॥ आदिमं योजनं मुक्त्वा, प्रथमं मण्डलं लिखेत् । पञ्चचापशतायाममविष्कम्भं भानुसन्निभम् ॥ ३५ ॥ युग्मं ॥ ततोऽपि योजनं मुक्त्वा, द्वितीयं मण्डलं लिखेत् । इत्येवमुत्तरद्वारे, शेषेऽन्त्ये योजनेऽन्तिमम् ॥ ३६ ॥ एवं च—स्यादेकं दाक्षिणात्यप्राक्कपाटोपरि मण्डलम् । द्वे तोदके त्रिचत्वारिंशत्प्राग्भित्तावनुक्रमात् ॥ ३७ ॥ ततो द्वे उत्तराहप्राक्तोदकेऽन्त्यं च मण्डलम् । उदीच्यप्राक्कपाटेऽयं, पश्चिमायामपि क्रमः ॥ ३८ ॥ एवमेकोनपञ्चाशत्पूर्वभित्तौ भवन्ति वै । तावन्त्यपरभित्तौ तत्तुल्यानि संमुखानि च ॥ ३९ ॥

वैताढ्यगुहा स्व० १५

२०

२५

॥ १७९ ॥

२७

अयं च मलयगिरिकृतक्षेत्रविचारबृहद्वृत्त्याद्यभिप्रायः, आवश्यकबृहद्वृत्तिटीप्पनकप्रवचनसारोद्धारबृहद्वृत्तिआवश्यकबृहत्त्याद्यभिप्रायस्त्वयं–गुहायां प्रविशन् भरतः पाश्चात्यपान्थजनप्रकाशकरणाय दक्षिणद्वारे पूर्वदिक्कपाटे प्रथमं योजनं मुक्त्वा प्रथमं मण्डलमालिखति, ततो गोमूत्रिकान्यायेनोत्तरतः पश्चिमदिक्कपाटतोद्के तृतीययोजनादौ द्वितीयं मण्डलमालिखति, ततस्तेनैव न्यायेन पूर्वदिक्कपाटतोद्के चतुर्थयोजनादौ तृतीयं, ततः पश्चिमदिग्भित्तौ पञ्चमयोजनादौ चतुर्थं, ततः पूर्वदिग्भित्तौ षष्ठयोजनादौ पञ्चमं यावदष्टचत्वारिंशत्तममुत्तरद्वारसत्कपश्चिमदिक्कपाटे प्रथमयोजनादौ एकोनपञ्चाशत्तमं चोत्तरदिग्द्वारसत्कपूर्वदिक्कपाटे द्वितीययोजनादावालिखति, एवमेकस्यां भित्तौ पञ्चविंशतिरपरस्यां चतुर्विंशतिरित्येकोनपञ्चाशत् मण्डलानि भवन्तीति ॥

दक्षिणात्तोदकात्ससदशभिर्योजनैः परा । अस्त्युन्मग्नजलानामनदी त्रियोजनातता ॥ ४० ॥ द्वादशयोजनायामा, पूर्वभित्तिविनिर्गता । विभिद्य पश्चिमां भित्तिं, प्रविष्टा सिन्धुनिम्नगाम् ॥ ४१ ॥ अस्यां पतति यत्किञ्चिद्, दृषत्काष्ठनरादिकम् । तत्सर्वमद्भिराहत्य, वहिः प्रक्षिप्यते स्थले ॥ ४२ ॥ ततः परं योजनयोर्द्वयोरतिक्रमे परा । स्यान्निमग्नजलानामनदी त्रियोजनातता ॥ ४३ ॥ द्वादशयोजनायामा, पूर्वभित्तिविनिर्गता । प्रत्यग्भित्तिं प्रविभिद्य, सिन्धुं विशत्यसावपि ॥४४॥ अस्यां पतति यत्किञ्चित्तृणकाष्ठनरादिकम् । अधो मज्जति

१ मण्डलस्योभयपार्श्वयोर्योजनप्रकाशकत्वेन तिरश्चि यावद्गुहायामप्रकाशकत्वेन च युक्तोऽयं, क्षेत्रविचाराद्यभिप्रायस्तु द्वयोर्गुहयोः समुदितयोर्मण्डलान्याश्रित्य स्यात् तदा न कोऽपि विरोधः ।

तत्सर्वमीदृक् स्वभाव एनयोः ॥ ४५ ॥ ततश्चोत्तरतः सप्तदशभिर्योजनैः परः । चतुर्योजनविष्कम्भायाम उत्तरतोदकः ॥ ४६ ॥ ततश्च—उभाभ्यां द्वारभागाभ्यामित्येवं सर्वसंख्यया । योजनैरेकविंशत्या, नद्यौ स्यातां यथोदिते ॥ ४७ ॥ स्थापना । अथ वार्द्धकिरत्नेन, सद्यः सज्जितपद्यया । नद्यावुभे समुत्तीर्य, यावद्गच्छति चक्रभृत् ॥ ४८ ॥ तावद्विना प्रयासेन, कपाटावुत्तराश्रितौ । उद्घटेते स्वयमेव, कृतक्रौञ्चारवौ रयात् ॥ ४९ ॥ युग्मम् । निर्गत्य तेन द्वारेण, विजित्योत्तरभारतम् । दर्याः खण्डप्रपातायाश्चक्री समीपमापतेत् ॥ ५० ॥ उत्तरद्वारमुद्घाट्य, सेनानीकृतयत्नतः । मण्डलान्यालिखन् प्राग्वच्चक्री विशति तां गुहाम् ॥ ५१ ॥ पूर्वं निमग्नसलिलां, समुत्तरेत्ततः पराम् । तूर्णं वार्द्धकिरत्नेन, कृतया हृद्यपद्यया ॥ ५२ ॥ इमे मानादिभिः प्राग्वत्प्रत्यग्भित्तिविनिर्गते । प्राच्यभित्तिं किंतु भित्त्वा, प्राप्ते गङ्गामहानदीम् ॥ ५३ ॥ द्वारेण दाक्षिणात्येन, स्वयमुद्घटितेन च । निर्गत्य कृतकृत्यः संश्चक्री निजपुरं विशेत् ॥ ५४ ॥ स्याद्यावच्चक्रिणो राज्यं, तावत्तिष्ठन्ति संततम् । मण्डलानि च पद्ये च, गुहामार्गे गतागते ॥ ५५ ॥ अयं च प्रवचनसारोद्धारवृत्त्यभिप्रायः, त्रिषष्टीयाजितचरित्रे तु—उद्घाटितं गुहाद्वारं, गुहान्तर्मण्डलानि च । तावत्तान्यपि तिष्ठन्ति, यावज्जीवति चक्रभृत् ॥ ५६ ॥ इत्युक्तमिति ज्ञेयं । द्वारात्खण्डप्रपातायाः, याम्यायाम्यादिशि ध्रुवम् । गङ्गायाः पश्चिमे कूले, वसन्ति निधयो नव ॥ ५७ ॥ इति दाक्षिणार्धभरतम् ।

१ न चक्रिणः पराभवः तद्भवे इति चक्रिणो राज्यजीवनमर्यादयोर्न भेदः, तत्त्वतस्तु यावद्राज्यमित्येव सुस्थं, यतो नहि चक्रिणः पुत्रश्चक्री, ततः स्पष्टो मण्डलाद्यनुपयोगः ।

उदीच्यामथ वैताढ्याद्, हिमवद्गिरिसीमया । स्यादुत्तरभरतार्द्धं, पर्यंकासनसंस्थितम् ॥ ५८ ॥ अष्टात्रिंशे योजनानां, द्वे शते त्रिकलाधिके । विष्कम्भतोऽथ बाहाऽस्य, प्रत्येकं पार्श्वयोर्द्वयोः ॥५९॥ योजनानां शतान्यष्टादश द्विनवतिस्तथा । सार्द्धाः सप्त कलाः क्षेत्रफलमस्याथ कीर्त्यते ॥६०॥ लक्षास्त्रिंशत्सहस्राणि, द्वात्रिंशदथ चोपरि । शतान्यष्टौ योजनानामष्टाशीतिरथाधिका ॥ ६१ ॥ कला द्वादश विकला, एकादश प्रकीर्त्तिताः । उक्तसामान्यभरतवच्छेषं तु शरादिकम् ॥ ६२ ॥ नितम्बस्य हिमवतो, दाक्षिणात्यस्य सन्निधौ । क्षेत्रेऽस्मिन्नन्तरे गङ्गासिन्धुप्रपातकुण्डयोः ॥ ६३ ॥ गिरिर्वृषभकूटाख्य, उच्चत्वेनाष्टयोजनः । द्वे योजने भूमिमग्नश्चारुगोपुच्छसंस्थितः ॥ ६४ ॥ मूलेऽसौ योजनान्यष्टौ, मध्ये षड् योजनानि च । चतुष्टयं योजनानामुपर्यायतविस्तृतः ॥ ६५ ॥ पञ्चविंशतिरेवाष्टादशैव द्वादशापि च । साधिकानि परिक्षेपो, मूले मध्ये च मूर्ध्नि च ॥ ६६ ॥ द्वादशाष्ट च चत्वारि, मूले मध्ये शिरस्यपि । योजनानि क्रमादस्य, व्यासायामौ मतान्तरे ॥ ६७ ॥ सप्तत्रिंशत्क्रमात्पञ्चविंशतिर्द्वादशापि च । साधिकानि परिक्षेपो, मूले मध्ये तथोपरि ॥ ६८ ॥ इदं च मतद्वयमपि जम्बूद्वीपप्रज्ञप्तिसूत्रे । मतान्तरे ननु कथं, श्रुते सर्वज्ञमूलके । तुल्यकैवल्यभाजां यदेकमेवार्हतां मतम् ॥ ६९ ॥ अत्रोच्यते–दुर्भिक्षे स्कन्दिलाचार्यदेवर्द्धिगणिवारके । गणनाऽभावतः साधुसाध्वीनां विस्मृतं श्रुतम् ॥ ७० ॥ ततः सुभिक्षे संजाते, सङ्घस्य मेलकोऽभवत् । वलभ्यां मथुरायां च, सूत्रार्थघटनाकृते ॥ ७१ ॥

१ वृषभकूटस्य शाश्वतगिरिगणे गणनाऽभावात् प्रायःशाश्वतता, तत आद्यान्त्यचक्रिकाले मानद्वयं स्यात् ।

वलभ्यां संगते सङ्घे, देवर्द्धिगणिरग्रणीः। मथुरायां संगते च, स्कन्दिलार्योऽग्रणीरभूत् ॥७२॥ ततश्च वाचनाभेदस्तत्र जातः कचित् कचित्। विस्मृतस्मरणे भेदो, जातु स्यादुभयोरपि ॥७३॥ तत्तैस्ततोऽर्वाचीनैश्च, गीतार्थैः पापभीरुभिः। मतद्वयं तुल्यतया, कक्षीकृतमनिर्णयात् ॥ ७४ ॥ सत्यप्येवं साम्प्रतीना, विसंवादं श्रुतस्थितम्। निर्णेतुमुत्सहन्ते ये, ते ज्ञेया मातृशासिताः ॥ ७५ ॥ एवमेवोक्तं श्रीमलयगिरिभिर्ज्योतिष्करण्डवृत्तौ ॥ देशोनक्रोशतुङ्गोऽर्द्धक्रोशविस्तृत एव च। क्रोशायाम उपर्यस्य, प्रासादोऽतिमनोरमः ॥७६॥ देवोऽत्र वृषभाभिख्य, एकपल्योपमस्थितिः। महर्द्धिको विजयवत्तथाऽस्य राजधान्यपि ॥ ७७ ॥ शैलोऽयं चित्रित इव, चक्रिभिर्जितभारतैः। काकणीरत्नलिखितैः, समन्तान्निजनामभिः ॥ ७८ ॥ स्थापना। नद्योऽष्टाविंशतिरिह, सहस्रा ह्युत्तरा मताः। अमुष्य भरतक्षेत्रस्योर्वीशस्याङ्गना इव ॥ ७९ ॥ अरकाश्च षडप्यत्र, सुषमासुषमादयः। सदा विपरिवर्त्तन्ते, नियोगिन इवेशितुः ॥ ८० ॥ इति भरतक्षेत्रम् ॥

अथोत्तरार्द्धभरतपर्यन्त उत्तराश्रिते। जात्यस्वर्णमयो भाति, हिमवान्नामपर्वतः ॥ ८१ ॥ स्पृशन् द्वाभ्यां निजान्ताभ्यां, पूर्वापरपयोनिधी। योजनानां शतं तुङ्गो, भूमग्नः पंचविंशतिम् ॥ ८२ ॥ योजनानां दशशती,

१ अत्र चिन्त्यं तावदेतद् यदुत स्कन्दिलाचार्यदेवर्द्धिक्षमाश्रमणौ एककालीनौ न वा ?, नन्द्यादिगतावलिनिरीक्षकाणां स्पष्ट एव द्वयोर्भिन्नकालता; दुर्भिक्षं च न देवर्धिगणिवारके श्रूयते, अशक्यसमाधानस्थले मतान्तरतायाः समुचितत्वं, नान्यत्र, संदेहव्याघ्रपाशपातादुद्धार एवं, न तु कापि हानिः, नहि यथामति समादधानानां मातृशासितत्वं कथंचनापि, परःशतं च मतान्तराणि द्वयोः, न च तानि सूत्रादर्शबद्धानि।

द्विपञ्चाशत्समन्विता । कला द्वादश विष्कम्भः, पर्वतस्यास्य कीर्त्तितः ॥ ८३ ॥ योजनानां पञ्चदश, शतान्यथाष्टसप्ततिः । अष्टादश कलाश्चात्र, शरः प्रोक्तो जितस्मरैः ॥ ८४ ॥ योजनानां सहस्राणि, चतुर्विंशतिरेव च । सद्वात्रिंशन्नवशती, प्रत्यञ्चाऽस्य कलार्द्धयुक् ॥ ८५ ॥ धनुःपृष्ठं योजनानां, सहस्राः पञ्चविंशतिः । द्वे शते त्रिंशदधिके, चतस्रश्चाधिकाः कलाः ८६ ॥ योजनानां सहस्राणि, पञ्च त्रीणि शतानि च । सार्द्धानि बाहैकैकाऽस्या, द्व्यर्द्धाः पञ्चदशांशकाः ॥ ८७ ॥ ( कला इत्यर्थः ) कोटीद्वयं च लक्षाणि, योजनानां चतुर्दश । षट्पञ्चाशत्सहस्राणि, शतानि नव चोपरि ॥ ८८ ॥ एकसप्ततिरेवाष्टौ, कलाश्च विकला दश । भूमौ प्रतरगणितं, निर्दिष्टं हिमवद्गिरेः ॥ ८९ ॥ कोटीनां द्वे शते कोट्यश्चतुर्दशाथ लक्षकाः । षट्पञ्चाशत्तथा सप्तनवतिश्च सहस्रकाः ॥ ९० ॥ एकं शतं चतुश्चत्वारिंशं कलाश्च षोडश । विकला द्वादशेत्युक्तं, शैलेऽस्मिन् सर्वतोघनम् ॥ ९१ ॥ वेदिकावनखण्डाभ्यां, रम्योऽयं पार्श्वयोर्द्वयोः । वेदिकावनखण्डानां, सर्वं मानादि पूर्ववत् ॥ ९२ ॥ अत्रैकादश कूटानि, बिभ्रति प्रकटप्रभाम् । सिद्धायतनमुख्यानि, प्राच्या आरभ्य पूर्ववत् ॥ ९३ ॥ स्यात्सिद्धायतनं १ क्षुल्लहिमवन्नामकं २ परम् । तृतीयं भरताभिख्य ३ मिलाकूटं ४ ततः परम् ॥ ९४ ॥ गङ्गावर्त्तनकूटं ५ च, श्रीदेवीकूट ६ मित्यपि । रोहितांशासुरीकूटं ७, सिंध्वावर्त्तनसंज्ञकम् ८ ॥ ९५ ॥ सुरादेवीकूटमिति ९, परं हैमवताभिधम् १० । एकादशं वैश्रमणं ११, कूटानि हिमवद्गिरेः ॥ ९६ ॥ सर्वाण्यमूनि रात्नानि, मूले च व्यासदैर्घ्यतः । योजनानां पञ्चशती, तावदेवोच्छ्रितानि च ॥ ९७ ॥ मध्ये च त्रिशतीं पञ्च-

सप्तत्याढ्यां शिरस्यथ । ततानि द्वे शते सार्द्धं, गोपुच्छसंस्थितान्यतः ॥ ९८ ॥ शताः पञ्चदशैकाशीत्यधिकाः किञ्चनाधिकाः । एकादश किञ्चिदूनषडशीतियुताः शताः ॥ ९९ ॥ शताः सप्तैकनवतिसंयुताः किञ्चिदूनकाः । परिक्षेपाः क्रमादेषु, मूले मध्ये च मूर्द्धनि ॥ २०० ॥ सिद्धायतनकूटस्योपरि सिद्धालयो महान् । पञ्चाशद्योजनान्यायामतः स परिकीर्त्तितः ॥ १ ॥ विष्कम्भतो योजनानि, प्रज्ञप्तः पञ्चविंशतिः । षट्त्रिंशद्योजनान्युच्चस्त्रिद्वारो भास्वरप्रभः ॥ २ ॥ विना प्रतीचीं त्रिदिशं, द्वारमेकैकमुच्छ्रितम् । योजनान्यष्ट चत्वारि, स्याद्विस्तारप्रवेशयोः ॥ ३ ॥ सिद्धायतनमध्येऽथ, विभाति मणिपीठिका । योजनान्यष्ट विस्तीर्णायता चत्वारि मेदुरा ॥ ४ ॥ उपर्येतस्या अथैको, देवच्छन्दक आहितः । उच्चैस्त्वेन साधिकानि, योजनान्यष्ट स श्रुतः ॥ ५ ॥ स्थापना । विष्कम्भायामतोऽप्येष, योजनान्यष्ट तत्र च । अष्टोत्तरशतं सिद्धप्रतिमास्तास्तु पूर्ववत् ॥ ६ ॥ दशानां शेषकूटानामुपर्येकैक आलयः । द्वाषष्टिं योजनान्यर्द्धाधिकान्यायतविस्तृतः ॥ ७ ॥ एकत्रिंशद्योजनानि, सक्रोशानि समुन्नतः । तत्तत्कूटसमाह्वानस्वामिना समधिष्ठितः ॥ ८ ॥ कूटे द्वितीये तृतीये, दशमे रुद्रसंमिते । चतुर्थेषु सुरा ईशा, देव्यः शेषेषु षट्सु च ॥ ९ ॥ तत्रापि—इलादेवी १ सुरादेवी २, द्वे इमे दिक्कुमारिके । तिस्रश्च नद्यधिष्ठात्र्यः, श्रीश्चेति प्रथिता इमाः ॥ १० ॥ देवा देव्यश्च सर्वेऽमी, एकपल्योपमायुषः । महर्द्धिका विजयवत्तथैषां राजधान्यपि ॥ ११ ॥ एता देव्यश्च भवनपतिजातिगता मताः । व्यन्तरीणा-



२०

२५



२७

मर्द्धपल्यमायुरुत्कर्षतोऽपि यत् ॥ १२ ॥ एवं वक्ष्यमाणा अपि देव्यो ज्ञेयाः । वक्ष्यमाणपर्वतेषु, यानि चैत्यानि येऽपि च । प्रासादा देवतानां ते, सर्वेऽत्रत्यैः समाः स्मृताः ॥ १३ ॥

गिरेरस्योपरितले, ह्रदः पद्मह्रदाभिधः । योजनानि दशोद्विद्धः, सहस्रयोजनायतः ॥ १४ ॥ शतानि पञ्च विस्तीर्णो, वेदिकावनमण्डितः । चतुर्दिशं तोरणाढ्यत्रिसोपानमनोरमः ॥ १५ ॥ अयं च वक्ष्यमाणाश्च, महापद्मह्रदादयः । सर्वे पूर्वापरायामा, दक्षिणोत्तरविस्तृताः ॥ १६ ॥ तथाहुः–"हिमवंतसेलसिहरे, वरारविंदद्दहो सलिलपुण्णो। दसजोअणावगाढो विच्छिन्नो दाहिणुत्तरओ ॥१७॥" तस्य मध्ये पद्ममेकं, योजनायतविस्तृतम् । अर्द्धयोजनबाहल्यं, तावदेवोच्छ्रितं जलात् ॥१८॥ जले मग्नं योजनानि, दशैतज्जगतीवृतम्। जम्बूद्वीपजगत्याभा, सा गवाक्षालिराजिता ॥ १९॥ किंत्वसौ योजनान्यष्टादशोच्चा सर्वसंख्यया । जलेऽवगाढा दश यद्योजनान्यष्ट चोपरि ॥ २० ॥ यत्तु जम्बूद्वीपप्रज्ञप्तिमूलसूत्रे 'जंबुद्दीवजगइप्पमाणा' इत्युक्तं तज्जलावगाहप्रमाणमविवक्षित्वेति तद्वृत्तौ । किंच—वज्रमूलं रिष्ठकन्दं, वैडूर्यनालबन्धुरम् । वैडूर्यबाह्यपत्रं तज्जाम्बूनदान्तरच्छदम् ॥ २१ ॥ अत्रायं विशेषोऽस्ति बृहत्क्षेत्रविचारवृत्त्यादौ–बाह्यानि चत्वारि पत्राणि वैडूर्यमयानि, शेषाणि तु रक्तसुवर्णमयान्युक्तानि, किंच–जंबूद्वीपप्रज्ञप्तिसूत्रे जाम्बूनदमीषद्रक्तस्वर्णं, तन्मयान्यभ्यन्तरपत्राणि, सिरिनिलयक्षेत्रविचारवृत्तौ तु पीतस्वर्णमयान्युक्तानीति ज्ञेयं ॥ तपनीयकेसरवृत्ता सौवर्णी कर्णिका भवेत्तस्य । द्विक्रोशायतवितता क्रोशोच्चा श्रीभवनमस्याम् ॥२२॥ (आर्या) एकक्रोशायतमेतत्तथार्द्धक्रोशविस्तृतम् । ऊनक्रोशोन्नतं तत्र,

५

१०

१४

दक्षिणोत्तरपूर्वतः ॥ २३ ॥ पञ्चचापशतोत्तुङ्गं, तदर्द्धव्यासमेककम् । द्वारं तत्राथ भवनमध्येऽस्ति मणिपीठिका ॥ २४ ॥ सापि पञ्चशतधनुर्व्यासायामार्द्धमेदुरा । उपर्यस्याः शयनीयं, श्रीदेवीयोग्यमुत्तमम् ॥२५॥ षड्जातीयैः परिक्षेपैर्वेष्टितं मूलपङ्कजम् । क्रमादर्द्धार्द्धमानाङ्गाः,परिक्षेपाः समेऽप्यमी॥२६॥ अष्टोत्तरं शतं पद्माः,प्रथमे परिधौ स्थिताः । मूलपद्मादर्द्धमानाः, श्रीदेवीभूषणैर्भृताः ॥ २७ ॥ वायूत्तरेशानदिक्षु, सामानिकसुधाभुजाम् । चतुः-सहस्री पद्मानां, तावतां परिकीर्तिता ॥ २८ ॥ महत्तराणां देवीनां, प्राक् चत्वार्यम्बुजानि च । सहस्राण्यष्ट चाग्नेय्यामभ्यन्तरसभाजुषाम् ॥२९॥ सहस्राणि दशाङ्गानामपाच्यां मध्यपर्षदाम् । द्वादशाब्जसहस्राणि, नैर्ऋत्यां बाह्यपर्षदाम् ॥३०॥ सेनापतीनां सप्तानां,प्रत्यक् सप्ताम्बुजानि च । द्वितीयोऽयं परिक्षेपो, मूलपद्मस्य वर्णितः॥३१॥ आत्मरक्षिसहस्राणां, षोडशानां चतुर्दिशम् । चतुःसहस्री प्रत्येकं, परिक्षेपे तृतीयके ॥ ३२ ॥ त्रयः परे परिक्षेपा, अभियोगिपयोरुहाम् । द्वात्रिंशत्प्रथमे लक्षा, अभ्यन्तराभियोगिनाम् ॥ ३३ ॥ चत्वारिंशत्पद्मलक्षा, मध्ये मध्याभियोगिनाम् । लक्षाणामष्टचत्वारिंशद्बाह्ये बाह्यसेविनाम् ॥ ३४ ॥ कोट्येका विंशतिर्लक्षाः, पद्मानां सर्वसंख्यया । सहस्राणि च पञ्चाशच्छतं विंशतिसंयुतम् ॥ ३५ ॥ अत्र षट् परिक्षेपा इति षड्जातीयाः परिक्षेपा इति वाच्यं, तथाहि—आद्या मूलपद्मार्द्धमाना जातिः, द्वितीया तच्चतुर्थभागमाना जातिः, यावत्षष्ठी चतुःषष्टितमभागमाना जातिरिति । अन्यथा तु योजनात्मना सहस्रत्रयात्मके धनुरात्मना चत्वारिंशल्लक्षाधिकद्विकोटिप्रमिते ह्रदपरमपरिधौ षष्ठपरिक्षेपपद्मानां षष्टिकोटिधनुःक्षेत्रमातव्यानामेकया पङ्क्त्याऽवकाशो न



२०

२५



२८

संभवति । ततश्च तत्तत्परिधिक्षेत्रपरिक्षेपपद्मसंख्याविस्तारान् परिभाव्य यत्र यावत्यः पङ्क्तयः संभवन्ति तत्र
तावतीभिः पङ्क्तिभिरेक एव परिक्षेपो ज्ञेयः, पद्मानामेकजातीयत्वात्, एवं च पञ्चलक्षयोजनात्मके ह्रदक्षेत्र-
फले तानि सर्वाण्यपि पद्मानि सुखेन मान्त्येव, पद्मरुद्धक्षेत्रस्य सर्वसंकलनया विंशतिः सहस्राणि पञ्चाधि-
कानि योजनानां षोडशभागीकृतस्यैकयोजनस्य त्रयोदश भागा इत्येतावत एव संभवात्, इत्यधिकं तु उ०
श्रीशान्तिचन्द्रगणिकृतजम्बूद्वीपप्रज्ञप्तिवृत्तितोऽवसेयं, ततः पद्मह्रदाद्गङ्गा, प्राच्यतोरणनिर्गता । योजनानां
पञ्चशतीं, गिरौ पूर्वेण गच्छति ॥ ३६ ॥ गङ्गावर्त्तनकूटस्याधस्तादावृत्त्य सा ततः । दक्षिणाभिमुखीभूत्वा,
प्रवृत्ता पर्वतोपरि ॥ ३७ ॥ त्रयोविंशां पञ्चशतीं, योजनानां कलात्रयम् । सार्द्धं गत्वा दक्षिणस्यां, पतेज्जि-
ह्विकया नगात् ॥ ३८ ॥ सा च प्रणालिकारूपा, भात्यर्द्धक्रोशमेदुरा । द्विक्रोशदीर्घा सक्रोशषड्योजनप्रवि-
स्तृता ॥ ३९ ॥ वाज्रिकी व्यात्तमकरवक्त्राकारा तयाऽथ सा । सातिरेकं योजनानां, शतमेकं पतत्यधः ॥४०॥
योजनानि दशोद्विद्धे, षष्टिं च विस्तृतायते । कुण्डे गङ्गाप्रपाताख्ये, चारुमुक्तावलीसमा ॥ ४१ ॥ युग्मं ॥ तथाहुः
क्षमाश्रमणपादाः—“आयामो विक्खंभो सट्ठिं कुंडस्स जोअणा हुंति । नउअसयं किंचूणं परिही दसजोअ-
णोगाहो ॥ ४२ ॥” इति बृहत्क्षेत्रसमासे, उमास्वातिकृतजम्बूद्वीपसमासे करणविभावनायां च—‘मूले पन्नासं
जोअणवित्थारो उवरि सट्ठि’ इति विशेषोऽस्ति, इत्थं च कुण्डस्य यथार्थनामोपपत्तिरपि भवति, एवमन्ये-
ष्वपि यथायोगं ज्ञेयमिति । तच्च कुण्डं वेदिकया, वनखण्डेन वेष्टितम् । पूर्वापरादक्षिणासु, सोपानश्रेणि-

५

१०

१४

शोभितम् ॥ ४३ ॥ सोपानश्रेणयः सर्वा, वज्रस्तम्भाः सतोरणाः । रत्नालम्बनयाहाढ्या, रैरूप्य-
फलकाश्चिताः ॥ ४४ ॥ गङ्गाद्वीपश्च भात्यस्मिन्, द्वौ क्रोशावुच्छ्रितो जलात् । अष्टौ च योजनान्येष,विष्कम्भा-
याममानतः ॥ ४५ ॥ गङ्गाद्वीपोपरि गङ्गाभवनं पीठिकादियुक् । स्वरूपतो मानतश्च, श्रीदेवीभवनोपमम् ॥ ४६ ॥
दाक्षिणात्यतोरणेन, गङ्गाप्रपातकुण्डतः । निर्गत्य वैताढ्योपान्ते, नदीसप्तसहस्रयुक् ॥ ४७ ॥ खण्डप्रपाताप्रा-
ग्भागे, भित्त्वा वैताढ्यभूधरम् । दाक्षिणात्यसप्तनदीसहस्रपरिवारिता ॥ ४८ ॥ एवं चतुर्दशनदीसहस्रापूरिताऽ-
भितः । पूर्वतो जगतीं भित्त्वा, गङ्गा विशति वारिधिम् ॥ ४९ ॥ त्रिभिर्विशेषकम् ॥ सक्रोशानि योजनानि, २०
षडस्या ह्रदनिर्गमे । व्यासः क्रोशार्द्धमुद्वेधः, कुण्डपातावधिः स च ॥ ५० ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिसूत्रे—" गंगा-
महानई पवाहे छक्कोसाइं जोअणाइं विक्खंभेणं पण्णत्ता, अद्धकोसं उव्वेहेणं " समवायाङ्गे तु—" गंगासिंधूओ
नदीओ णं पवहे सातिरेगाइं चउवीसं कोसाइं वित्थरेणं पण्णत्ता" इत्युक्तमिति ज्ञेयं । कुण्डोद्गमादनु व्यासो,
योजनं योजनं प्रति । पार्श्वद्वये समुदितो, धनूंषि दश वर्द्धते ॥५१॥ एवं च—वारिधेः संगमे सार्द्धा, द्वाषष्टिर्यो-
जनान्यसौ । मौलाद्दशघ्नो यद्व्यासो, नदीनामब्धिसंगमे ॥ ५२ ॥ व्यासात्पञ्चाशत्तमोऽशः, सर्वत्रोद्वेध ईरितः । २५
क्रोशस्यार्द्धं ततो मूले, प्रान्ते सक्रोशयोजनम् ॥ ५३ ॥ वेदिकावनखण्डौ च, प्रत्येकं पार्श्वयोर्द्वयोः । महानदीनां
सर्वासां, दृष्टौ दृष्टजगत्त्रयैः ॥ ५४ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिसूत्रे गङ्गावर्णने—" उभओ पासिं दोहिं पउमवर-



१ उभयतः सिकताभागस्यैकत्र विवक्षणात्, यद्वा कुण्डनिर्गमावसरे कदाचिदधिको व्यासः ।

वेइयाहिं दोहिं वणसंडेहिं संपरिक्खित्ता, वेइयावणसंडवण्णओ भाणियव्वो" अथ गङ्गामहानद्या, यत्राम्भोनिधिसंगमः । तत्र तीर्थं मागधाख्यं, तस्येशो मागधः सुरः ॥ ५५ ॥ एवं सिन्धुनदीवार्द्धियोगे प्रभासनामकम् । एतयोरन्तराले च, वरदामं पयोनिधौ ॥ ५६ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ—" गङ्गा मागधतीर्थस्थाने समुद्रं प्रविशति, तथा प्रभासं नाम तीर्थं यत्र सिंधुनदी समुद्रं प्रविशति" तीर्थं नामावतरणमार्गोऽम्भोधौ तटाकवत् । तीर्थस्यार्थो भाव्य एवं, शीताशीतोदयोरपि ॥ ५७ ॥ तदुक्तं स्थानाङ्गवृत्तौ—"तीर्थानि चक्रवर्त्तिनः समुद्रशीतादिमहानद्यवतारलक्षणानि तन्नामकदेवनिवासभूतानि, तत्र भरतैरवतयोस्तानि पूर्वदक्षिणापरसमुद्रेषु, विजयेषु तु शीताशीतोदामहानद्योः पूर्वादिक्रमेणैवे" ति तृतीये स्थानके । एषां तीर्थसदृग्नाम्नां, देवानां स्वस्वतीर्थतः । योजनेषु द्वादशसु, राजधान्यः पयोनिधौ ॥ ५८ ॥ कृताष्टमतपाश्चक्री, रथनाभिस्पृगम्भसि । स्थित्वा वार्द्धौ स्वनामाङ्कं शरं मुक्त्वा जयत्यमून् ॥ ५९ ॥ प्रतीच्यतोरणेनाथ, ह्रदात्तस्माद्विनिर्गता । गत्वा प्रतीच्यामावृत्ता, सिन्ध्वावर्त्तनकूटतः ॥ ६० ॥ दक्षिणाभिमुखी शैलात्कुण्डे निपत्य निर्गता । प्रत्यग्भागे तमिस्राया, भित्त्वा वैताढ्यभूधरम् ॥ ६१ ॥ ततः पश्चिमदिग्भागे, विभिद्य जगतीमधः । विशत्यम्भोनिधिं सिन्धुगङ्गास्वसेव युग्मजा ॥ ६२ ॥ त्रिभिर्विशेषकं । गङ्गावत्सर्वमस्याः स्यादारभ्य ह्रदनिर्गमात् । स्वरूपमब्धिसङ्क्रान्तं, सिन्धुनामविशेषितम् ॥ ६३ ॥ वैताढ्यतो दक्षिणस्यां, सरितोः सिन्धुगङ्गयोः । बिलानि स्युर्नव नव, पूर्वपश्चिमकूलयोः ॥ ६४ ॥ उदीच्यामपि षट्त्रिंशत्तथैव

तटयोस्तयोः । कल्पान्तेऽत्रादिबीजानां, स्थानानीति द्विसप्ततिः ॥ ६५ ॥ पञ्चस्वेवं भरतेषु, पञ्चस्वैरवतेषु च । बिलानि भावनीयानि, द्विसप्ततिर्द्विसप्ततिः ॥ ६६ ॥

उत्तराहतोरणेन, तस्मात्पद्मह्रदादथ । निर्गता रोहितांशाख्योत्तराशाभिमुखी नदी ॥ ६७ ॥ द्वे योजनशते युक्ते, षट्सप्तत्या कलाश्च षट् । पर्वतोपर्यतिक्रम्य, वज्रजिह्विकया नगात् ॥ ६८ ॥ रोहितांशाप्रपाताख्ये, कुण्डे निपत्य हारवत् । उदीच्यतोरणेनास्मान्निर्गतोत्तरसंमुखी ॥ ६९ ॥ मार्गे चतुर्दशनदीसहस्रपरिवारिता । तत्रत्यवृत्तवैताढ्यं, मुक्त्वा क्रोशद्वयान्तरे ॥ ७० ॥ स्थानात्ततः परावृत्त्य, प्रस्थिता पश्चिमामुखी । पुनश्चतुर्दशनदीसहस्रसेविताऽभितः ॥ ७१ ॥ अष्टाविंशत्या सहस्रैर्नदीभिरेवमन्विता । द्वेधा विदधती हैमवतस्यार्द्धं च पश्चिमम् ॥ ७२ ॥ अधो विभिद्य जगतीं, याति पश्चिमवारिधिम् । गङ्गासिन्ध्वोः सपत्नीव, द्विगुणार्द्धिः पतिप्रिया ॥७३॥ सप्तभिः कुलकं ॥ कुण्डाद्विनिर्गमं यावदारभ्य ह्रदनिर्गमात् । सार्द्धानि योजनान्यस्या, विष्कम्भो द्वादशोदितः ॥ ७४ ॥ गव्यूतमेकमुद्वेधस्ततः कुण्डोद्गमादनु । प्रतियोजनमेकैकपार्श्वे व्यासो विवर्द्धते ॥ ७५ ॥ कोदण्डानि दश दशोभयतस्तानि विंशतिः । लवः पञ्चाशत्तमश्च, व्यासस्योद्वेध आहितः ॥ ७६ ॥ योजनानां शतं चैवं, सपादमब्धिसंगमे । व्यासोऽस्याः क्रोशदशकमुद्वेधश्च प्रजायते ॥७७॥ व्यासायामौ जिह्विकायाः, सार्द्धा द्वादशयोजनी । बाहल्यमस्या निर्दिष्टमेकक्रोशमितं जिनैः ॥ ७८ ॥ सविंशं योजनशतं, कुण्ड-

रोहितांशास्वरूपम्

२०

२५
॥ १८५॥
२७

स्यायतिविस्तृती । द्वीपस्यायामविष्कम्भौ, योजनानीह षोडश ॥ ७९ ॥ अस्याः प्रपातकुण्डस्योद्वेधो द्वीपस्य
चोच्छ्रयः । भवनस्य स्वरूपं च, ज्ञेयं गङ्गासमं बुधैः ॥ ८० ॥
गिरेर्हिमवतोऽथास्य, प्राचीनपश्चिमान्तयोः । लवणोद्जलस्पर्शादारभ्य किल निर्गता ॥ ८१ ॥ दाढैकैका
विदिशासु, गजदन्तसमाकृतिः । ऐशान्यामथ चाग्नेय्यां, नैर्ऋत्यां वायुकोणके ॥ ८२ ॥ युग्मं ॥ ऐशान्यां तत्र
जगतीपर्यन्ताल्लवणोदधौ । दाढायां योजनशतत्रयस्य समतिक्रमे ॥ ८३ ॥ द्वीप एकोरुकाख्योऽस्ति, योज-
नानां शतत्रयम् । विष्कम्भायामतः पद्मवेदिकावनमण्डितः ॥ ८४ ॥ किञ्चिदूनैकोनपञ्चाशता समधिका किल।
योजनानां नवशती, परिक्षेपोऽस्य कीर्त्तितः ॥ ८५ ॥ अस्य जम्बूद्वीपदिशि, जलोपरि समुच्छ्रयः । सार्द्धं द्वयं
योजनानां, भागाश्चोपरि विंशतिः ॥ ८६ ॥ पञ्चनवतिभक्तस्य, योजनस्य तथोच्छ्रयः। लवणाम्भोधिदिश्यन्ते,
क्रोशद्वयमुदीरितः ॥ ८७ ॥ तत्रैव दाढायां तस्माद्, द्वीपाच्चतुःशतोत्तरः । हयकर्णाभिधो द्वीपश्चतुःशताय-
तस्ततः ॥ ८८ ॥ शतानि द्वादश न्यूनपञ्चषष्टियुतानि च । परिक्षेपोऽस्याब्धिदिशि, द्वौ क्रोशावुच्छ्रयो जलात्
॥ ८९ ॥ योजनानां द्वयं सार्द्धमशीत्यांशैः समन्वितम् । अस्य जम्बूद्वीपदिशि, ख्यातः खलु समुच्छ्रयः ॥९०॥
अत्रायमाम्नायः—पूर्वद्वीपपरिक्षेपे,योजनानां त्रिभिः शतैः। षोडशाढ्यैः संकलिते,परिक्षेपोऽग्रिमो भवेत्॥९१॥
तथा—जम्बूद्वीपदिशि जलात्प्राग्द्वीपे यः समुच्छ्रयः । स पाञ्चनवतेयांशसप्तत्या संयुतोऽग्रिमे ॥ ९२ ॥ जम्बू-
द्वीपजगत्याश्च, द्वीपस्यास्य मिथोऽन्तरम् । कर्णभूमिरूपमुक्तं, योजनानां चतुःशती ॥ ९३ ॥ तत्रैव दाढायां

५

१०

१४

तस्माद्, द्वीपात्पञ्चशतान्तरः। आदर्शमुखसंज्ञोऽस्ति, द्वीपः पञ्चशतायतः ॥ ९४ ॥ तावदेव च विस्तीर्णो, जगत्यास्तावदन्तरः। सैकाशीतिः पञ्चदशशती परिरयोऽस्य च ॥ ९५ ॥ जम्बूद्वीपदिशि भवेज्जलादस्य समुच्छ्रयः। सार्द्धा त्रियोजनी भागाः, पञ्चषष्टिः पुरोदिताः ॥ ९६ ॥ द्वौ कोशौ लवणदिशि, जलादस्य समुच्छ्रयः। दाढायां पुनरत्रैवातीत्य योजनषट्शतीम् ॥ ९७ ॥ षड्योजनशतायामविष्कम्भोऽश्वमुखाभिधः। द्वीपो भाति शतैः षड्भिर्जगत्या दूरतः स्थितः ॥ ९८ ॥ योजनत्रितयोनानि, शतान्येकोनविंशतिः। द्वीपस्यास्य परिक्षेपः, प्रोक्तः शास्त्रपरीक्षकैः ॥ ९९ ॥ सार्द्धां चतुर्योजनीं सचत्वारिंशल्लवाधिकाम्। द्वीपदिश्युन्नतोऽब्धोऽब्धिदिशि तु कोशयामलम् ॥ ३०० ॥ सप्तभिर्योजनशतैरस्ति द्वीपस्ततः परम्। अश्वकर्णाभिधः सप्त, शतान्यायतविस्तृतः ॥ १ ॥ जगत्यास्तावता दूरे, जम्बूद्वीपदिशि स्फुटः। योजनान्यर्द्धषष्ठानि, भागान् पञ्चदशोच्छ्रितः ॥ २ ॥ द्वौ कोशौ परितो व्यक्तः, परिक्षेपस्तथाऽस्य च। द्वे सहस्रे द्वे शते च, योजनानि त्रयोदश ॥ ३ ॥ अतीत्य योजनशतान्यष्टौ द्वीपात्ततः परम्। द्वीप उल्कामुखोऽस्त्यष्टौ, शतान्यायतविस्तृतः ॥ ४ ॥ जगत्या दूरतोऽष्टाभिर्योजनानां शतैः स्थितः। अम्भोनिधेर्दिशि जलादुच्छ्रितः कोशयोर्द्वयम् ॥ ५ ॥ अर्द्धषष्ठयोजनानि, पञ्चाशीतिं तथाधिकान्। भागान् पाञ्चनवतेयान्, जम्बूद्वीपदिशि स्फुटः ॥ ६ ॥ एकोनात्रिंशदाढ्यानि, शतानि पञ्चविंशतिः। योजनानि परिक्षेपो, द्वीपस्यास्य निरूपितः ॥ ७ ॥ योजनानां नव शतान्यतिक्रम्य ततः परम्। शतानि नव विस्तीर्णायतोऽस्ति घनदन्तकः ॥ ८ ॥ नवयोजनशत्याऽसौ, जगत्याः

दंष्ट्रास्वरूपम्

२०

२५



२८

परिधिस्त्विह । शतानि पञ्चचत्वारिंशान्यष्टाविंशतिः कलाः ॥ ९ ॥ सार्द्धां षड्योजनीं ताहक्षष्टिभागसम-
न्विताम् । जम्बूद्वीपदिशि व्यक्तो, दिश्यधस्त्वर्द्धयोजनम् ॥ १० ॥ एवं च—एकोरुको १ हयकर्ण २ स्तथाऽऽद-
र्शमुखोऽपि च ३ । अश्वमुखा ४ श्वकर्णो ५ ल्कामुखा ६ श्च घनदन्तकः ७ ॥ ११ ॥ द्वीपाः सप्त यथैशान्यां,
दाढायां कथिता इमे । तावदायामविष्कम्भास्तावत्परस्परान्तराः ॥ १२ ॥ जगत्यास्तावता दूरे, तावदेवोच्छ्रिता
जलात् । तथैव सप्त सप्त स्युराग्नेय्यादिविदिक्त्रये ॥१३॥ युग्मम् । एषां क्रमे स्वरूपे च, न विशेषो मनागपि ।
विशेषः केवलं नाम्नां, तान्येतानि यथाक्रमम् ॥ १४ ॥ आभासिको गजकर्णो, मेण्ढहस्तिमुखौ तथा । हरि-
कर्णो मेघमुखो, लष्टदन्तोऽग्निकोणके ॥ १५ ॥ वैषाणिकश्च गोकर्णस्तथाऽयःसिंहतो मुखौ । अकर्णो विद्युन्मु-
खश्च, नैर्ऋत्यां गूढदन्तकः ॥ १६ ॥ वायव्यां नाङ्गोलिकाख्यः, शष्कुलीकर्ण इत्यपि । गोमुखो व्याघ्रमुखश्च,
कर्णप्रावरणाभिधः ॥ १७ ॥ विद्युद्दन्तश्शुद्धदन्तावष्टाविंशतिरित्यमी । विराजन्तेऽन्तरद्वीपा, हिमवद्गिरिनिश्रया
॥ १८ ॥ तावन्त एव शिखरिगिरेर्दाढाचतुष्टये । तथैव संस्थिता एवं, षट्पञ्चाशद्भवन्त्यमी ॥ १९ ॥ प्रत्येकमेते
सर्वेऽपि, वेदिकावनमण्डिताः । समानं च तयोर्मानं, जगतीवेदिकावनैः ॥ २० ॥ द्वीपेषु सर्वेष्वेतेषु, नरास्ति-
ष्ठन्ति युग्मिनः । अष्टचापशतोत्तुङ्गाः, पल्यासङ्ख्यांशजीविनः ॥ २१ ॥ दिनान्यशीतिमेकोनां, विहितापत्यपा-
लनाः । चतुष्षष्ट्या लसत्पृष्ठकरण्डकैः सुशोभिताः ॥ २२ ॥ चतुर्थभक्ताहाराश्च, कल्पद्रुफलभोजिनः । सुन्द-
राकृतयो रागद्वेषशोकरुजोज्झिताः ॥ २३ ॥ युग्मं सुतसुतारूपं, षण्मासशेषजीविताः । प्रसूय यान्ति त्रिदि-

वमेते मृत्वा समाधिना ॥ २४ ॥ एवं वक्ष्यमाणहैमवतादियुग्मिनोऽपि हि । षण्मासशेषे सुवतेऽपत्यान्यायुषि नान्यथा ॥ २५ ॥ तथोक्तं प्रथमारकस्वरूपाधिकारे जम्बूद्वीपप्रज्ञप्तौ, अन्तरद्वीपाधिकारे जीवाभिगमे च— "छम्मासावसेसाउया जुगलं पसवंती"ति ॥ इति हिमवान् पर्वतः ॥ स्थापना ।

क्षेत्रं विभाति हिमवन्महाहिमवदन्तरे । अविभक्तं द्रव्यमिव, द्वाभ्यां ताभ्यां सुरक्षितम् ॥ २६ ॥ द्वाभ्यां पूर्वापरान्ताभ्यां, संस्पृष्टलवणार्णवम् । हारि हैमवताभिख्यं, वयं पर्यङ्कसंस्थितम् ॥ २७ ॥ ददाति हेम युग्मिभ्य, आसनादितया ततः । यद्वा देवो हैमवतः, स्वामी हैमवतं ततः ॥ २८ ॥ द्वे सहस्रे योजनानां, शतं पञ्चोत्तरं तथा । कलाः पञ्चैव विष्कम्भः, क्षेत्रस्यास्य निरूपितः ॥ २९ ॥ तथा शतानि षट्त्रिंशच्चतुरशीतिरेव च । योजनानि चतस्रश्च, कलाः शर इह स्मृतः ॥ ३० ॥ सप्तत्रिंशत्सहस्राणि, योजनानां शतानि षट् । चतुःसप्ततिरस्य ज्या, न्यूनाः कलाश्च षोडश ॥ ३१ ॥ अष्टात्रिंशत्सहस्राणि, तथा सप्त शतानि च । चत्वारिंशानि कोदण्डपृष्ठमस्य कला दश ॥ ३२ ॥ सहस्राः षट् सप्तशती, पञ्चपञ्चाशदन्विता । तिस्रः कलाश्च बाहाऽत्र, प्रत्येकं पार्श्वयोर्द्वयोः ॥ ३३ ॥ अत्र क्षेत्रफलं कोट्यः, षट् लक्षाणि द्विसप्ततिः । त्रिपञ्चाशत्सहस्राणि, योजनानां शतं तथा ॥ ३४ ॥ पञ्चचत्वारिंशदाढ्यं, कलाः पञ्च तथोपरि । अष्टौ च विकलाः प्रोक्तं, खण्डैर्योजनसंमितैः ॥३५॥ सर्वरत्नमयो वृत्तवैताढ्यो धरणीधरः । मध्यभागे विभात्यत्र, पल्यवत्सर्वतः समः ॥ ३६ ॥ जम्बू-

हिमवद्धैरण्यवताभि०

२०

२५



२७

द्वीपसंग्रहणीवृत्तौ तु पञ्चवर्णरत्नमयः ॥ नाम्ना च शब्दापातीति, सहस्रयोजनोन्नतः । शतान्यर्द्धतृतीयानि, स निमग्नो भुवोऽन्तरे ॥ ३७ ॥ सहस्रयोजनायामविष्कम्भः परिवेषतः । त्रयः सहस्रा द्वाषष्ट्या, योजनानां शतं युतम् ॥ ३८ ॥ अभितोऽयं गिरिः पद्मवेदिकावनमण्डितः । प्रासादो भात्युपर्यस्य, स्वरूपं तस्य पूर्ववत् ॥ ३९ ॥ स्वातिनामा सुरस्तस्य, स्वाम्येकपल्यजीवितः । राजधान्यादिकं त्वस्य, सर्वं विजयदेववत् ॥ ४० ॥ अयं क्षेत्रसमासाभिप्रायः, यत्तु जम्बूद्वीपप्रज्ञप्त्यामत्र शब्दापातिनामा देव उक्तस्तन्नामान्तरं वा मतान्तरं वेति सर्वविद्वेद्यं ॥ द्विधा विभक्तं गिरिणाऽनेन हैमवतं किल । पूर्वहैमवतं चैवापरहैमवतं तथा ॥४१॥ पुनरेकैकमर्द्धं तत्, सरिद्भ्यां विहितं द्विधा । रोहितांशारोहिताभ्यां, स्नुषाभ्यामिव मन्दिरम् ॥ ४२ ॥ दक्षिणार्द्धं चोत्तरार्द्धमिति जातं चतुर्विधम् । षट्पञ्चाशत्सहस्राणि, ह्युत्तराण्यत्र निम्नगाः ॥ ४३ ॥ क्षेत्रानुभावतस्तत्र, भूः शर्करादिजित्वरी । चक्रिभोज्यजिदास्वादफलपुष्पाः सुरद्रुमाः ॥ ४४ ॥ येऽपि यूका मत्कुणाद्या, लोकसंतापकारिणः । यक्षभूतामयाद्युत्था, दोषास्तत्र न सन्ति ते ॥ ४५ ॥ भवन्त्यहिंसका व्याघ्रसिंहाद्याः स्वर्गगामिनः । उद्गतान्यपि धान्यानि, नराणां नोपभुक्तये ॥ ४६ ॥ मनुजास्तत्र गव्यूतोत्तुङ्गाः पल्योपमायुषः । उत्कर्षतो जघन्याच्च, देशोनपल्यजीविनः ॥ ४७ ॥ चतुःषष्टिपृष्ठकरण्डकाः सुन्दरभूघनाः । दिनान्यशीतिमेकोनां,

१ न हि वर्णान् पञ्च विरहय्यान्यो वर्णः, अन्येषां तत्संयोगजत्वात्, सर्वजातीयरत्नमयः पञ्चवर्णरत्नमयश्चेत्यनयोर्न कापि भिदा । २ साईइति नाम प्राकृते, तस्यार्षत्वाद् शाब्दीतिसंस्कारे नेयमत्यन्तविरुद्धता ।

५ १० १२

विहितापत्यपालनाः ॥ ४८ ॥ सत्यपि स्वर्णरत्नादौ, ममत्वावेशवर्जिताः । सतामपि गजादीनामग्रहात्पादचारिणः ॥ ४९ ॥ विचक्षणाश्चारुवेषाः, प्रेष्यप्रेषकतोज्झिताः । चतुर्थान्ते चामलकफलप्रमितभोजिनः ॥ ५० ॥ आद्यसंहननाः पृथ्वीस्वर्द्रुपुष्पफलाशिनः । प्रकृत्या प्रतनुद्वेषरागाः स्वर्लोकयायिनः ॥ ५१ ॥ यद्वत्स्नेह इवैतस्मिन्, कालः सुषमदुष्षमा । सार्वदीनस्तत्स्वरूपं, दिष्टलोके प्रवक्ष्यते ॥ ५२ ॥ इति हैमवतक्षेत्रं ॥ स्थापना ॥

अस्योत्तरान्ते च महाहिमवान्नाम पर्वतः । सर्वरत्नमयो भाति, द्वियोजनशतोन्नतः ॥ ५३ ॥ अयं जम्बूद्वीपप्रज्ञप्त्यभिप्रायः, बृहत्क्षेत्रविचारादौ तु अस्य पीतस्वर्णमयत्वमुक्तमिति मतान्तरमवसेयं, अनेनैव च मतांतराभिप्रायेण जम्बूद्वीपपट्टादौ अस्य पीतवर्णत्वं दृश्यते इति । पञ्चाशतं योजनानि, स निमग्नो धरान्तरे । पूर्वापराम्भोनिधिस्पृक्, प्रमिमासुरिवान्तरम् ॥ ५४ ॥ योजनानां सहस्राणि, चत्वार्यस्य शतद्वयम् । दशोत्तरं दश कला, विष्कम्भोऽथ शरं ब्रुवे ॥ ५५ ॥ योजनानां सहस्राणि, ससैवाष्टौ शतानि च । षतुर्नवत्युपेतानि, चतुर्दश तथा कलाः ॥५६॥ त्रिपञ्चाशत्सहस्राणि, शतानि नव चोपरि । एकत्रिंशद्योजनानि, ज्याऽस्य सार्द्धाश्च षट् कलाः ॥५७॥ सहस्राः ससपञ्चाशत्रिनवत्यधिकौ (के) शतौ (ते) । महाहिमवति प्रोक्तं, धनुःपृष्ठं कला दश ॥५८॥ सहस्राणि नव शतद्वयं षट्ससतिस्तथा । सार्द्धा नव कलाः प्रोक्ता, बाहाऽस्यैकैकपार्श्वतः ॥ ५९ ॥ एकोनविंशतिः कोट्यो, योजनानां समन्विताः । अष्टपञ्चाशता लक्षैरष्टषष्ट्या सहस्रकैः ॥ ६० ॥ शतं च षडशीताढ्यं, कला दश तथाधिकाः । विकलाः पञ्च शैलेऽस्मिन्, गणितं प्रतरात्मकम् ॥ ६१ ॥ शता-



२०



२५

२६

न्येकोनचत्वारिंशत्कोटीनां तथा पराः । कोट्यः सप्तदश लक्षाः, षट्त्रिंशदथ चोपरि ॥ ६२ ॥ सप्तत्रिंशत्सहस्राणि, त्रिशती सहिताऽष्टभिः । विकला द्वादशेत्युक्तं, महाहिमवतो घनम् ॥६३॥ कूटान्यष्टौ पर्वतेऽस्मिन्, सिद्धायतनमादिमम् १ । महाहिमवदाह्वानं २, तथा हेमवताभिधम् ३ ॥ ६४ ॥ रोहिताख्यं ४ च ह्रीकूटं ५, हरिकान्ताभिधं ६ तथा । हरिवर्षं ७ च वैडूर्यं ८, कूटानि हिमवद्गिरेः ( कूटान्यस्य महागिरेः ) ॥ ६५ ॥ पूर्वापरायतश्रेण्या, स्थितिर्मानं च पूर्ववत् । प्राग्वत्सिद्धायतने च, प्रासादः शाश्वतोऽर्हताम् ॥ ६६ ॥ शेषेषु देवदेवीनां, प्रासादास्तेऽपि पूर्ववत् । स्वरूपं राजधान्यश्च, प्राग्वत्तत्स्वामिनामपि ॥ ६७ ॥ महापद्महृदश्चास्योपरि मध्ये विराजते । द्वे सहस्रे योजनानामायामेनोदितः स च ॥ ६८ ॥ एकं सहस्रं विस्तीर्ण, उद्विद्धो दशयोजनीम् । तस्य मध्ये पद्ममेकं, षट्परिक्षेपशोभितम् ॥ ६९ ॥ पद्महृदाब्जतुल्यानि, पद्मान्येतानि सङ्ख्यया । विष्कम्भायामबाहल्यैर्द्विगुणानि ततः पुनः ॥ ७० ॥ तत्समानोद्विद्धतया, हृदस्यास्य कजान्यपि । तावदेवोच्छ्रितानि स्युरेवमग्रेऽपि भाव्यताम् ॥ ७१ ॥ मूलपद्मे च भवनं, श्रीदेवीभवनोपमम् । ह्रीदेवी च वसत्यस्मिन्नेकपल्योपमस्थितिः ॥ ७२ ॥ दाक्षिणात्यतोरणेन, महापद्महृदात्ततः । निर्गता रोहिता नाम्नी, दक्षिणाभिमुखी नदी ॥ ७३ ॥ सहस्रं योजनानां षट्शतीं पञ्चसमन्विताम् । कलाः पञ्च दक्षिणस्यां, सा गत्वा पर्वतोपरि॥७४॥ वज्रजिह्विकया शैलात्प्रवाहेण पतत्यधः । सद्रोहिताप्रपाताख्ये, कुण्डे रज्जुरिवावटे ॥ ७५ ॥ अत्रायमाम्नायः—
व्यासं हृदस्य संशोध्य, गिरिव्यासेऽर्द्धिते च यत् । तावन्नदीनां क्रमणं, गिरौ स्याद्दक्षिणोत्तरम् ॥ ७६ ॥

५

१०

१४

दाक्षिणात्यतोरणेन, तस्मान्निर्गत्य कुण्डतः । प्राच्यं हैमवतस्यार्द्धं, द्वेधा विदधती किल ॥ ७७ ॥ क्रोशद्वयेना- संप्राप्ता, शब्दापातिमहीधरम् । आलीव रोहितांशाया, रूष्टाऽगात्पूर्वसंमुखी ॥ ७८ ॥ अष्टाविंशत्या सहस्रै- र्नदीभिः परिवारिता । अधो विभिद्य जगतीं, पूर्वाब्धिं याति रोहिता ॥ ७९ ॥ प्रवाहजिह्विकाकुण्डद्वीपादिषु भवेदिह । विष्कम्भदैर्घ्योद्वेधादि, रोहितांशासमं समम् ॥ ८० ॥ उत्तराहतोरणेन, महापद्मह्रदात्ततः । हरि- कान्तेति तटिनी, निर्गतोत्तरसम्मुखी ॥ ८१ ॥ पूर्वोक्तमानमुल्लङ्घ्य, गिरिं सोत्तरसम्मुखम् । हरिकान्ताप्रपा- ताख्ये, कुण्डे पतति जिह्वया ॥८२॥ उत्तराहतोरणेन, तस्मान्निर्गत्य कुण्डतः । अष्टाविंशत्या सहस्रैर्नदीभिः पथि संगता ॥८३॥ स्थापना । गन्धापातिनमप्राप्ताऽन्तरितं योजनेन सा । स्मृतप्रयोजनेवेतः, प्रस्थिता पश्चिमामुखी ॥ ८४ ॥ अष्टाविंशत्या सहस्रैर्नदीभिः पुनराश्रिता । एवं नदीनां षट्पञ्चाशता सहस्रकैर्वृता ॥ ८५ ॥ हरिवर्ष- पश्चिमार्द्धं, द्वेधा विदधती किल । अधो विभिद्य जगतीं, पतिता पश्चिमाम्बुधौ ॥ ८६ ॥ योजनानि ध्रुवं पञ्च- विंशतिर्ह्रदनिर्गमे । विष्कम्भोऽस्या योजनार्द्धं, चोद्वेधः कुण्डसीमया ॥ ८७ ॥ ततश्च वर्द्धते व्यासो, धनूंषि प्रति योजनम् । एकतो विंशतिश्चत्वारिंशच्चोभयतः पुनः ॥८८॥ एवं च द्वे शते सार्द्धे, योजनान्यब्धिसंगमे । विष्कम्भोऽस्यास्तत्र पुनरुद्वेधः पञ्चयोजनी ॥ ८९ ॥ योजनायामबाहल्या, जिह्विकाऽस्याः प्रकीर्त्तिता । विष्क- म्भतः पुनः पञ्चविंशतिर्योजनान्यसौ ॥ ९० ॥ द्वे शते योजनानां च, चत्वारिंशत्समन्विते । कुण्डस्यायाम-



२०

२५



२७

विष्कम्भावुद्वेधो दशयोजनी ॥ ९१ ॥ द्वीपस्यायामविष्कम्भौ, द्वात्रिंशद्योजनानि च। जलात्समुच्छ्रयः क्रोश-द्वयं शेषं तु पूर्ववत् ॥ ९२ ॥ इति महाहिमवान् पर्वतः ॥

उत्तरस्यां हरिवर्षं, महाहिमवतो गिरेः । प्रौढपर्यङ्कसंस्थानमन्ताभ्यां वारिधिं स्पृशत् ॥ ९३ ॥ व्यासो-ऽस्याष्टौ सहस्राणि, योजनानां चतुःशती । तथैकाविंशतिश्चैका, कलाऽत्राथ शरं ब्रुवे ॥ ९४ ॥ सहस्राः षोडश त्रीणि, योजनानां शतानि च । युक्तानि पञ्चदशभिः, कलाः पञ्चदशोपरि ॥ ९५ ॥ त्रिसप्ततिः सहस्राणि, जीवा नव शतानि च । एकोत्तराण्यथ कलाः, सार्द्धाः सप्तदशोपरि ॥ ९६ ॥ धनुःपृष्ठं सहस्राणि, चतुरशी-तिरेव च । षोडशाढ्यान्यथ कलाश्चतस्रः परिकीर्त्तिताः ॥ ९७ ॥ त्रयोदश सहस्राणि, त्रिशती चैकषष्टियुक् । योजनानां षट् कलाश्च, सार्द्धा बाहैकपार्श्वतः ॥ ९८ ॥ चतुष्पञ्चाशच्च कोट्यो, योजनानां तथा पराः । सप्तच-त्वारिंशदेव, लक्षाः किल तथोपरि ॥९९॥ त्रिसप्ततिः सहस्राणि, सप्तत्याढ्याऽष्टशत्यथ । कलाः सप्तात्र सकलं, गणितं प्रतरात्मकम् ॥ ४०० ॥ मध्येऽस्य गन्धापातीति, वृत्तवैताढ्यपर्वतः । स्वरूपमस्य पूर्वोक्तशब्दापातिसमं समम् ॥ १ ॥ पद्मनामा सुरस्तस्य, स्वाम्येकपल्यजीवितः । स्वरूपं सर्वमेतस्य, ज्ञेयं विजयदेववत् ॥ २ ॥ लक्ष-मेकं सहस्राश्च, द्वादश ह्यधिका इह । हरिवर्षाभिधक्षेत्रे, नद्यः प्रोक्ता जिनेश्वरैः ॥ ३ ॥ क्षेत्रे पुनर्वसन्त्यत्र, नरा युगलधर्मिणः । क्रोशद्वयसमुत्तुङ्गाः, सल्लक्षणा विचक्षणाः ॥ ४ ॥ आयुरुत्कर्षतस्त्वेषां, पूर्णं पल्योपम-द्वयम् । पल्योपमासङ्ख्यभागहीनं तच्च जघन्यतः ॥ ५ ॥ ते सकृत्षष्ठभक्तान्ते, बदरप्रमिताशिनः । अष्टाविंशं

शतं तेषां, देहे पृष्ठकरण्डकाः ॥ ६ ॥ चतुःषष्टिं च दिवसान्, विधायापत्यपालनाम् । स्वर्लोकमेव ते यान्ति, कालश्च सुषमाऽन्वहम् ॥ ७ ॥ क्षेत्रानुभावः सर्वं च, बलसंहननादिकम् । अनन्तगुणपर्यायं, ज्ञेयं हैमवतादिह ॥ ८ ॥ इति हरिवर्षक्षेत्रं ॥ स्थापना ।

हरिवर्षस्योत्तरान्ते, निषधो नाम पर्वतः । स चतुर्योजनशतोत्तुङ्गो रक्तसुवर्णजः ॥ ९ ॥ योजनानां शतं भूमौ, मग्नोऽन्तस्पृष्टवारिधिः । दाक्षिणात्या भित्तिरिव, महाविदेहवेश्मनः ॥ १० ॥ योजनानां सहस्राणि, षोडशाष्टौ शतानि च । द्विचत्वारिंशदाढ्यानि, विष्कम्भोऽस्य कलाद्वयम् ॥ ११ ॥ त्रयस्त्रिंशत्सहस्राणि, सप्तपञ्चाशता युतम् । शतमेकं सप्तदश, कलाश्च निषधे शरः ॥ १२ ॥ योजनानां सहस्राणि, चतुर्नवतिरेव च । षट्पञ्चाशं शतमेकं, प्रत्यञ्चाऽस्य कलाद्वयम् ॥१३॥ लक्षं चतुर्विंशतिश्च, सहस्राणि शतत्रयम् । षट्चत्वारिंशतोपेतं, धनुःपृष्ठं कला नव ॥ १४ ॥ विंशतिश्च सहस्राणि, पञ्चषष्टियुतं शतम् । सार्द्धं कलाद्वयं ज्ञेयं, बाहाऽस्यैकैकपार्श्वतः ॥ १५ ॥ कोटीनां शतमेकं द्विचत्वारिंशच्च कोटयः । चतुष्पञ्चाशच्च लक्षाः, षट्षष्टिश्च सहस्रकाः ॥१६॥ सैकोनसप्ततिः पञ्चशती तथाऽधिकाः कलाः । अष्टादशास्य प्रतरगणितं भुवि कीर्त्तितम्॥१७॥ सप्तपञ्चाशत्सहस्राः, कोटीनां कोटयः पराः।अष्टादश तथा लक्षाः, षट्षष्टिरथ चोपरि ॥१८॥ सहस्राणि योजनानां, सप्तविंशतिरेव च । शतानि नव सैकोनाशीतीन्यत्र भवेद् घनम् ॥१९॥ सिद्धायतनकूटं १ च, द्वितीयं निषधाभिधम् २ । हरिवर्षाभिधं कूटं ३, पूर्वविदेहसंज्ञकम् ४ ॥ २० ॥ हरिकूटं ५ धृतिकूटं ६, शीतोदाकूट ७-

मित्यपि । अपरविदेहकूटं ८, कूटं च रुचकाह्वयम् ९ ॥ २१ ॥ निषधे नव कूटानि, श्रेण्या स्थितानि पूर्ववत् । आद्ये चैत्यं देवदेव्योऽन्येषु कूटसमाभिधाः ॥ २२ ॥ तिगिञ्छिस्तु पौष्परजस्तत्प्रधान इह ह्रदः । तिगिञ्छिनामा चत्वारि, सहस्राण्ययमायतः ॥ २३ ॥ विस्तीर्णश्च द्वे सहस्रे, उद्विद्धो दशयोजनीम् । पद्मह्रदसमसङ्ख्यैः, पद्मैः संशोभितोऽभितः ॥ २४ ॥ विष्कम्भादि तु पद्मेभ्यस्तेभ्य एषां चतुर्गुणम् । यथाऽत्र स्यान्मूलपद्मं, चतुर्योजनसंमितम् ॥ २५ ॥ भवनं मूलपद्मेऽत्र, श्रीदेवीभवनोपमम् । धीदेवी स्वामिनी तस्य, सैकपल्योपमस्थितिः ॥ २६ ॥ दाक्षिणात्यतोरणेन, तिगिञ्छिह्रदतोऽमुतः । तटिनी हरिसलिला, निर्गता दक्षिणामुखी ॥२७॥ योजनानां सहस्राणि, सप्तोपरि शतानि च । चत्वारि चैकविंशानि, कलां च पर्वतोपरि ॥ २८ ॥ गत्वाऽसौ हरिसलिलाकुण्डे पतति पर्वतात् । दक्षिणेन तोरणेन, तस्मान्निर्गत्य कुण्डतः ॥२९॥ हरिवर्षपूर्वभागं, विभजन्ती द्विधा किल । एकेन योजनेनार्वाक्, गन्धापातिधराधरात् ॥ ३० ॥ चलिता प्राङ्मुखीभूय, विशति प्राच्यवारिधौ । षट्पञ्चाशच्छैवलिनीसहस्रैः परिवारिता ॥ ३१ ॥ त्रिभिर्विशेषकम् । प्रमाणं जिह्विकाकुण्डद्वीपप्रवाहवृद्धिगम् । हरिकान्तासमं सर्वं, ज्ञेयमत्राविशेषितम् ॥ ३२ ॥ उत्तराहतोरणेन, तिगिञ्छिह्रदतस्ततः । शीतोदेति निर्झरिणी, निर्गतोत्तरसम्मुखी ॥ ३३ ॥ प्रागुक्तमानमुल्लङ्घ्य, क्षेत्रं क्षितिधरोपरि । शीतोदाकुण्डे पतति, वज्रजिह्विकया नगात् ॥ ३४ ॥ कुण्डादस्मादौत्तराहतोरणेनोत्तरामुखी । यान्ती कुरुह्रदान् पञ्च, खलेव कुर्वती द्विधा ॥ ३५ ॥ नदीसहस्रैश्चतुरशीत्या पथ्याश्रिता क्रमात् । यान्ती देवकुरुप्रान्ते, भद्रशालवनान्तरे ॥ ३६ ॥

५

१०

१४

यावद् द्वाभ्यां योजनाभ्यां, सुमेरुर्दूरतः स्थितः । तावत्तत्संमुखं याता, कामुकीव रसाकुला ॥ ३७ ॥ वक्षस्कारगिरेर्विद्युत्प्रभस्याधो विभागतः । परावृत्ता पश्चिमातो, लज्जितेवाभिसारिका ॥ ३८ ॥ द्वेधाऽपरविदेहांश्च, कुर्वती सरितां श्रिता । अष्टाविंशत्या सहस्रैरेकैकविजयोद्गतैः ॥ ३९ ॥ श्रिताऽम्भोधिप्रवेशे च, मूलतः सर्वसङ्ख्यया । नदीनां पञ्चभिर्लक्षैः, सद्वात्रिंशत्सहस्रकैः ॥ ४० ॥ अधो जयन्तद्वारस्य, विभिद्य जगतीतटम् । प्रविष्टा पश्चिमाम्भोधौ, शीतोदाख्या महानदी ॥ ४१ ॥ नवभिः कुलकम् ॥ पञ्चाशद्योजनान्यस्या, विष्कम्भो ह्रदनिर्गमे । एकं योजनमुद्वेधः, स कुण्डनिर्गमावधि ॥ ४२ ॥ व्यासेऽशीतिश्च वर्द्धन्ते, धनूंषि प्रति योजनम् । तत्पञ्चयोजनशतव्यासेयं वार्द्धिसंगमे ॥४३॥ तत्रोद्वेधो योजनानि, दशैतस्याश्च जिह्विका। पञ्चाशद्विस्तृता द्वे च, योजने मेदुरायता ॥ ४४ ॥ चत्वारि योजनशतान्यशीतिश्च तथोपरि । कुण्डस्यायामविष्कम्भौ, दशोद्वेधश्च कीर्त्तितः ॥ ४५ ॥ चतुःषष्टियोजनानि, द्वीपोऽस्या विस्तृतायतः । योजनार्द्धमुच्छ्रितोऽब्धेर्, गङ्गावद्भवनादिकम् ॥ ४६ ॥ शीताप्येवं नीलवतो, निर्गता केसरिह्रदात् । शीताकुण्डे निपत्यातः, प्रस्थिता दक्षिणामुखी ॥ ४७ ॥ प्राग्वद्विदधती द्वेधा, पञ्चोत्तरकुरुह्रदान् । नदीसहस्रैश्चतुरशीत्योदक्कुरुगैः श्रिताः ॥ ४८ ॥ प्राप्तोत्तरकुर्वान्ते, भद्रशालवनं क्रमात् । असंप्राप्ता योजनाभ्यां, द्वाभ्यां मन्दरभूधरम् ॥ ४९ ॥ गिरेर्माल्यवतोऽधस्तात्प्रस्थिता पूर्वसंमुखी । द्वेधा विदधती पूर्वविदेहान् पथि चाश्रिता ॥ ५० ॥ अष्टाविंशत्या सहस्रैरेकैकविजयोद्गतैः । नदीनां पञ्चभिर्लक्षैः सद्वात्रिंशत्सहस्रकैः ॥ ५१ ॥ सर्वाग्रेणेति संयुक्ता, विभिद्य जगतीत-



२०
२५
॥ १९१ ॥
२८

दम् । द्वारस्य विजयस्याधो, विशति प्राच्यवारिधिम् ॥ ५२ ॥ षड्भिः कुलकं । अस्या वार्द्धिप्रवेशान्तमारभ्य ह्रदनिर्गमात् । शीतोदया समं सर्वं, ज्ञातव्यमविशेषितम् ॥ ५३ ॥ इति निषधपर्वतः, प्रसंगात् शीतास्वरूपं च ॥ स्थापना । हिमवता महता च कनीयसा, जलधिना निषधेन च ये त्रिधा । तदिह दक्षिणपार्श्वमिहोदितं, बहुविधं नियतानियतारकैः ॥५४॥ (द्रुतविलं०) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गो निर्गलितार्थसार्थसुभगः पूर्णः सुखं षोडशः ॥ ४५५ ॥ ॥ इति श्रीलोकप्रकाशे षोडशः सर्गः समाप्तः ॥

---

॥ अथ सप्तदशः सर्गः प्रारभ्यते ॥

मध्ये द्वयोः पर्वतयोर्नीलवन्निषधाख्ययोः । भात्यायतचतुरस्रं, क्षेत्रं महाविदेहकाः ॥ १ ॥ सर्वक्षेत्रगुरुत्वान्महाप्रमाणाङ्गजनयुतत्वाद्वा । इदमुत महाविदेहाभिधसुरयोगान्महाविदेहाख्यम् ॥ २ ॥ (गीतिः) त्रयस्त्रिंशद्योजनानां, सहस्राणि च षट्शती । युक्ता चतुरशीत्याऽस्य, व्यासः कलाचतुष्टयम् ॥ ३ ॥ वर्षवर्षधराद्रीणामन्येषां तु जिनेश्वरैः । अन्त्यप्रदेशपङ्क्तिर्या, सा जीवेति निरूपिता ॥ ४ ॥ अस्मिन् क्षेत्रे पुनर्मध्यप्रदेशपङ्क्तिरायता । सा प्रत्यञ्चा भवेत्पूर्णलक्षयोजनसंमिता ॥ ५ ॥ ततश्चापेक्ष्य तां जीवां, धनुःपृष्ठद्वयं भवेत् । तत्रैकं दक्षिणाब्धिस्पृगुत्तराब्धिश्रितं परम् ॥ ६ ॥ एवं शरोऽपि द्विविधो, दक्षिणोत्तरभेदतः । पूर्वापरैवं बाहापि,

प्रत्येकं द्विविधा भवेत् ॥ ७ ॥ लक्षार्द्धं योजनान्यस्य, विशिखौ दक्षिणोत्तरौ । दाक्षिणात्येतरधनुःपृष्ठमानमथ ब्रुवे ॥ ८ ॥ अष्टपञ्चाशत्सहस्राधिकं योजनलक्षकम् । शतं त्रयोदशयुतं, सार्द्धाः कलाश्च षोडश ॥ ९ ॥ सहस्राः षोडश शतान्यष्टौ त्र्यशीतिरेकिका । बाहा त्रयोदश कलाः, कलातुर्यांशसंयुताः ॥ १० ॥ शतानि त्रीणि कोटीनां, कोटयः सप्तविंशतिः । लक्षाश्चतुर्दश तथा, सहस्राण्यष्टसप्ततिः ॥ ११ ॥ पञ्चभिश्चाभ्यधिकानि, योजनानां शतानि षट् । कलाद्वयं च विकला, एकादश तथोपरि ॥ १२ ॥ एतन्महाविदेहस्य, गणितं प्रतरात्मकम् । भव्यलोकोपकाराय, तत्त्वविद्भिर्निरूपितम् ॥ १३ ॥ महाविदेहक्षेत्रं तच्चतुर्द्धा वर्णितं जिनैः । पूर्वापरविदेहाश्च, द्विविधाः कुरवस्तथा ॥ १४ ॥ तत्र मेरोरुत्तरस्यामुत्तराः कुरवः स्मृताः । गन्धमादनसन्माल्यवतोरन्तर्गिरीन्द्रयोः ॥ १५ ॥ दक्षिणस्यां पुनर्देवकुरवः सुरभूभृतः । विद्युत्प्रभसौमनसगजदन्तनगान्तरे ॥ १६ ॥ मेरोश्च पूर्वतः पूर्वविदेहाः परिकीर्त्तिताः । तथाऽपरविदेहाश्च, मेरोः पश्चिमतः स्मृताः ॥ १७ ॥ शीतया सरिता पूर्वविदेहा विहिता द्विधा । कृताः शीतोदयाऽप्येवं, द्विधाऽपरविदेहकाः ॥ १८ ॥ अष्टौ पूर्वविदेहेषु, शीतोत्तरतटे किल । भवन्ति विजयाश्चक्रिजेयषट्खण्डलक्षिताः ॥१९॥ स्थापना । अन्तर्नदीभिस्तिसृभिर्वक्षस्काराचलैस्तथा । चतुर्भिः कृतसीमानो, भवन्तीत्येवमष्ट ते ॥ २० ॥ शीताया दक्षिणतटे, तथैव विजयाष्टकम् । अष्टाष्टौ विजया एवं, शीतोदाकूलयोरपि ॥ २१ ॥ पूर्वार्द्धे च विदेहानां, मही करतलोपमा । ततो नद्यद्रिविजयाः, समश्रेण्या स्थिता इह ॥२२॥ अपरार्द्धे तु धरणी, वियोगिनीव हीयते ॥

समभूमेः समारभ्य, पश्चिमायां क्रमात्ततः ॥ २३ ॥ विजये नलिनावत्यां, वप्राख्ये चान्तवर्त्तिनः । सहस्रं योजनान्युण्डा, ग्रामा भवन्ति केचन ॥ २४ ॥ ततोऽधोलौकिकग्रामा, इति ते ख्यातिमैयरुः । तेषामन्ते स्थिता भूमिभित्ती रोद्धुमिवार्णवम् ॥ २५ ॥ तत्रैव जगतीभित्तिर्जयन्तद्वारराजिता । ऊर्द्ध्वं स्थिताऽधोग्रामाणां, दिदृक्षुरिव कौतुकम् ॥ २६ ॥ शीतोदाऽपि स्त्रीस्वभावादिवाधोगामिनी क्रमात् । योजनानां सहस्रेऽर्द्धं, याति भित्त्वा जगत्यधः ॥ २७ ॥ एवं च पश्चिमार्द्धस्य, क्रमनिम्ना क्षितिर्भवेत् । कूपकोशसमाकर्षिवृपगन्तव्यभूरिव ॥ २८ ॥ ततो निम्ननिम्नतरा, भवन्ति समभूतलात् । तत्रत्या विजयाः शैलाः, सरितश्च यथोत्तरम् ॥ २९ ॥ माल्यवद्गजदन्तस्य, पूर्वतो विजयो भवेत् । कच्छाख्यस्तस्य पूर्वान्ते, सीमकृच्चित्रपर्वतः ॥ ३० ॥ ततः सुकच्छविजयस्तस्यापि सीमकारिणी । गाहावतीनाम नदी, महाकच्छस्ततः परम् ॥ ३१ ॥ विजयस्यास्य पूर्वान्ते, ब्रह्मकूटाभिधो गिरिः । कच्छावतीति विजयस्ततः परमुदीरितः ॥ ३२ ॥ ह्रदावती नदी तस्य, मर्यादाकारिणी ततः । आवर्त्तविजयोऽस्यान्ते, नलिनीकूटपर्वतः ॥ ३३ ॥ मङ्गलावर्त्तविजय, एतस्मात्पूर्वतो भवेत् । तस्य वेगवती नाम, नदी सीमाविधायिनी ॥ ३४ ॥ विजयः पुष्कलस्तस्याः, पूर्वतस्तस्य सीमकृत् । एकशैलगिरिस्तस्माद्विजयः पुष्कलावती ॥ ३५ ॥ विजयेऽस्मिन् विजयते, सीमन्धरजिनोऽधुना । जगद्दिनकरः पुण्यप्रकर्षप्राप्यदर्शनः ॥ ३६ ॥ ततः परं वनमुखमित्येवं विजयाष्टकम् । शीताया उत्तरतटे, पर्यन्ते वनराजितम् ॥ ३७ ॥ तत्संमुखं वनमुखं, शीताया दक्षिणे तटे । तस्मात्पश्चिमतो वत्सनामा विजय आहितः ॥ ३८ ॥ बाहुनामा

जिनः श्रीमान्, विजयेऽस्मिन् विराजते । सुरेश्वरकरामर्शैरसकृन्मसृणक्रमः ॥ ३९ ॥ त्रिकूटः पर्वतोऽस्यान्ते, सुवत्सविजयस्ततः । तप्तानामान्तरनदी, तस्य सीमाविधायिनी ॥ ४० ॥ ततो महावत्सनामा, विजयोऽस्य च सीमनि । शैलो वैश्रमणकूटस्तस्य पश्चिमतः पुनः ॥ ४१ ॥ वत्सावतीति विजयस्तस्य सीमाविधायिनी । नदी मत्ता ततः प्रत्यग्, रम्याख्यो विजयस्ततः ॥ ४२ ॥ अञ्जनाद्रिरमुष्यान्ते, रम्यको विजयस्ततः । उन्मत्ताख्या नदी तस्या, विजयो रमणीयकः ॥ ४३ ॥ मातञ्जनगिरिस्तस्य, सीम्न्यथो मङ्गलावती । विजयोऽस्य च सीमायां, गिरिः सौमनसाभिधः ॥ ४४ ॥ अस्य पश्चिमतो देवकुरवस्तदनन्तरम् । गिरिर्विद्युत्प्रभनामा, गजदन्ताकृतिः स्थितः ॥ ४५ ॥ तस्य पश्चिमतः पक्ष्मविजयः परिकीर्त्तितः । ततोऽङ्कापाती क्षितिभृत्सुपक्ष्मो विजयस्ततः ॥ ४६ ॥ ततः क्षीरोदाख्यनदी, महापक्ष्माभिधस्ततः । विजयोऽन्तेऽस्य च पक्ष्मपातीति क्षितिभृद्भवेत् ॥ ४७ ॥ पक्ष्मावतीति विजयः, कथितस्तदनन्तरम् । शीतस्रोता नाम नदी, तस्य सीमाविधायिनी ॥ ४८ ॥ तस्याः पश्चिमतः शङ्खविजयोऽन्तेऽस्य राजते । आशीविषगिरिस्तस्माद्विजयो नलिनोऽग्रतः ॥ ४९ ॥ नद्यन्तर्वाहिनी तस्य, मर्यादाकारिणी भवेत् । तस्याः पश्चिमतः ख्यातो, विजयः कुमुदाभिधः ॥ ५० ॥ सुखावहो गिरिस्तस्य, मर्यादाकारको भवेत् । ततः परं च नलिनावतीति विजयो मतः ॥ ५१ ॥ नमस्यते सुकृतिभिः, सुबाहुर्जगदीश्वरः । विजये विहरन्नस्मिन्, शतक्रतुशतस्तुतः ॥ ५२ ॥ शीतोदादक्षिणतटाश्रितं

१ सूर्येन्दूनामसंख्येयानां भावात् शतशब्दोऽत्र शतश इत्यर्थकः, न तु शतमेवेन्द्राः, द्वात्रिंशतः चतुष्पष्टेः असंख्यातानामेव वा भावात् ।

वनमुखं ततः । तत्संमुखं वनमुखं, शीतोदोत्तरकूलजम् ॥ ५३ ॥ वनस्यैतस्य पूर्वस्यां, विजयो वप्रनामकः । पूर्वतस्तस्य चन्द्राख्यो, वक्षस्कारगिरिर्भवेत् ॥ ५४ ॥ विजये विहरत्यस्मिन्, युगन्धरजिनेश्वरः । अधुना देशनासारैः, पुनानो भव्यमण्डलम् ॥ ५५ ॥ ततः सुवप्रविजयस्ततो नद्यूर्मिमालिनी । ततो महावप्रनामा, विजयः कथितो जिनैः ॥ ५६ ॥ ततः सूरो नाम गिरिस्ततो वप्रावती भवेत् । विजयोऽन्तेऽस्य गम्भीरमालिनी कथिता नदी ॥ ५७ ॥ ततश्च वल्गुविजयस्ततो नागाभिधो गिरिः । ततः सुवल्गुविजयस्ततश्च फेनमालिनी ॥ ५८ ॥ स्यादन्तरनदी तस्या, गन्धिलो विजयः परः । ततो गिरिर्देवनामा, ततश्च विजयः किल ॥ ५९ ॥ स्याद्गन्धिलावती नाम्ना, ततश्च गन्धमादनः । गजदन्तगिरिस्तस्मादुत्तराः कुरवः पराः ॥ ६० ॥ एवं च—कच्छः सुकच्छश्च महाकच्छः कच्छावतीति च । आवर्त्तो मङ्गलावर्त्तः पुष्कलः पुष्कलावती ॥ ६१ ॥ वच्छः सुवच्छश्च महावच्छो वच्छावतीति च । रम्यो रम्यकरमणीयौ मङ्गलावतीति च ॥ ६२ ॥ पक्ष्मः सुपक्ष्मश्च महापक्ष्मः पक्ष्मावतीति च । शङ्खश्च नलिनश्चैव कुमुदो नलिनावती ॥ ६३ ॥ वप्रः सुवप्रश्च महावप्रो वप्रावती तथा । वल्गुः सुवल्गुर्विजयो, गन्धिलो गन्धिलावती ॥ ६४ ॥ द्वात्रिंशदेते विजयाः, कच्छाद्याः स्पष्टितः क्रमात् । माल्यवद्गजदन्ताद्रेरारभ्यागन्धमादनम् ॥ ६५ ॥ द्वाविंशतिः शतानीषन्न्यूनानि च त्रयोदश । योजनानीह विष्कम्भः, सर्वेषु विजयेष्वथ ॥ ६६ ॥ सहस्राणि षोडशैषामायामः पञ्चभिः शतैः । योजनानां द्वानवत्या, चाढ्यानि द्विकलाढ्यया ॥ ६७ ॥ अन्तर्नदीनां सर्वासां, वक्षस्कारमहीभृताम् । सर्वेषामप्यसावेवायामो ज्ञेयो

विचक्षणैः ॥ ६८ ॥ अत्रायमाम्नायः—शीताशीतोदयोर्वार्द्धिप्रवेश एव यद्यपि । विष्कम्भः स्याद्योजनानां, पूर्णपञ्चशतात्मकः ॥ ६९ ॥ हीनो हीनतरोऽन्यत्र, तथाप्युभयकूलयोः । कच्छादीनां विजयानां, समीपे रमणोचितौ ॥ ७० ॥ द्वौ द्वौ तयोः स्तो रमणप्रदेशौ तदपेक्षया। सर्वत्राप्यनयोर्व्यासो, भाव्यः पञ्चशतात्मकः॥७१॥ ततो विदेहविष्कम्भे, शीताव्यासेन वर्जिते । अर्धितेऽन्तर्नदीवक्षस्काराद्रिविजयाततिः॥७२॥ एते च विजयाः सर्वे, वैताढ्यैर्विहिता द्विधा। पूर्वापरायततया, स्थितै रजतकान्तिभिः ॥ ७३ ॥ स्थापना । स्वरूपतोऽमी भरतवैताढ्यस्य सहोदराः । आयामतश्च विजयविष्कम्भसदृशा इमे ॥ ७४ ॥ समक्षेत्रस्थितेश्चैषां, धनुर्बाहाद्यसंभवः। मूलादूर्ध्वं योजनानां, दशानां समतिक्रमे ॥ ७५ ॥ एषु द्वे खेचरश्रेण्यौ, तयोर्विद्याभृतामिह । पुराणि पञ्चपञ्चाशत्प्रत्येकं पार्श्वयोर्द्वयोः ॥ ७६ ॥ ततः पुनर्योजनानां, दशानां समतिक्रमे। शक्रेशानाभियोग्यानां, द्वे श्रेण्यौ पार्श्वयोर्द्वयोः ॥ ७७ ॥ तत्रापि—शीताया दक्षिणतटे, वैताढ्यविजयेषु ये। तत्राभियोग्यश्रेण्यो यास्ताः सौधर्मस्य वज्रिणः ॥ ७८ ॥ शीतायाश्चोत्तरतटे, वैताढ्यविजयेषु ये । तत्राभियोग्यश्रेण्यो यास्ता ईशानसुरेशितुः ॥ ७९ ॥ सर्वेऽप्यमी नवनवकूटालङ्कृतमौलयः। मानं स्वरूपं कूटानामुक्तवैताढ्यकूटवत् ॥ ८० ॥ पूर्वस्यां प्रथमं कूटं, सिद्धायतनसंज्ञितम् । ततः स्वस्वविजयार्द्धकूटं दक्षिणशब्दयुक् ॥ ८१ ॥ खण्डप्रपातकूटं स्यान्माणिभद्रं ततः परम्। वैताढ्यं पूर्णभद्रं च, तमिस्रगुहमित्यपि ॥ ८२ ॥ ततः स्वस्वविजयार्द्धकूटमुत्तरशब्दयुक्। वैताढ्येष्वन्तिमं कूटं, ज्ञेयं वैश्रमणाभिधम् ॥ ८३ ॥ वैताढ्येषु हि सर्वेषु, कूटं द्वितीयमष्टमम् । स्याद्दक्षि-

विजयवैताढ्यवर्णनं

२०

२५



२८

णोत्तरखण्डविजयार्द्धाभिधं क्रमात् ॥८४॥ यथा दक्षिणकच्छार्द्धकूटं द्वितीयमष्टमम् । भवेदुत्तरकच्छार्द्धं, कच्छ-
वैताढ्यपर्वते ॥ ८५ ॥ अर्द्धे द्वे द्वे विजयानां, वैताढ्यगिरिणा कृते । यथा दक्षिणकच्छार्द्ध, तथा कच्छार्द्धमु-
त्तरम् ॥ ८६ ॥ अर्द्धस्य तस्यैकैकस्य, सहस्राण्यष्ट दीर्घता । योजनानां द्विशत्येकसप्तत्याढ्या तथा कला ॥ ८७॥
नीलवन्निषधक्ष्माभृद्दक्षिणोदग्नितम्बयोः । शैलो वृषभकूटः स्याद्विजयं विजयं प्रति ॥ ८८ ॥ तस्य चाद्रेरुभयतः,
कुण्डमेकैकमस्ति तत् । सिन्धुकुण्डं पश्चिमतो, गङ्गाकुण्डं च पूर्वतः ॥ ८९ ॥ ते च षष्टिं योजनानि, विष्क- 5
म्भायामतो मते । किंचिदूननवत्याढ्यं, शतं च परिवेषतः ॥ ९० ॥ योजनानि दशोद्विद्धे, विमलोदकपूरिते ।
द्वीपेनैकैकेन रम्ये, स्वदेवीभवनस्पृशा ॥ ९१ ॥ एताभ्यामथ कुण्डाभ्यां, सिन्धुर्गङ्गा च निम्नगे । दक्षिणेन तोर-
णेन, निर्गते दक्षिणामुखे ॥ ९२ ॥ अपान्तरालेऽनेकाभिर्नदीभिः पथि संश्रिते । वैताढ्यसविधे सप्तनदीसह-
स्रसेविते ॥ ९३ ॥ तमिस्रायाः पश्चिमतः, सिन्धुर्वैताढ्यभूधरम् । गङ्गा खण्डप्रपातायाः, प्राग्विभिद्य च निर्गते
॥ ९४ ॥ याम्यार्द्धेऽपि नदीसप्तसहस्रसंश्रिते इति । सरित्सहस्रैः प्रत्येकं, चतुर्दशभिरन्विते ॥ ९५ ॥ शीता- 10
नदीं प्रविशतो, दक्षिणाभिमुखाध्वना । ततो भवन्ति षट्खण्डाः, सर्वेऽपि विजया इमे ॥ ९६ ॥ पंचभिः
कुलकम् ॥ स्थापना । शीताया याम्यकूलेऽपि, विजयेष्वेवमष्टसु । निषधस्योदग्नितम्बे, एकैको वृषभाचलः
॥ ९७ ॥ तस्याप्युभयतः प्राग्वत्, कुण्डे द्वे द्वे तथाविधे । प्रत्यग् रक्तवतीकुण्डं, रक्ताकुण्डं च पूर्वतः ॥ ९८ ॥
एताभ्यामपि कुण्डाभ्यां, निर्गते उत्तरामुखे । रक्तारक्तवतीनद्यौ, भित्त्वा वैताढ्यभूधरम् ॥ ९९ ॥ शीतानदीं 14

प्रविशतः, स्वरूपं पुनरेतयोः । पूर्वोक्ताभिर्नदीभिः स्यान्निःशेषमविशेषितम् ॥ १०० ॥ शीतोदायाम्यकूलेऽपि, विजयेष्वेवमष्टसु । निषधस्योदग्नितम्बे, एकैको वृषभाचलः ॥ १ ॥ तस्याप्युभयतः कुण्डे, प्राग्वद् द्वे द्वे मनोरमे । सिन्धुकुण्डं पश्चिमतो, गङ्गाकुण्डं च पूर्वतः ॥ २ ॥ ताभ्यां गङ्गासिन्धुनद्यौ, प्रव्यूढे उत्तराध्वना । प्राग्वद्भिन्नवैताढ्ये, शीतोदां विशतो नदीम् ॥ ३ ॥ इत्थमेवोत्तरतटे, शीतोदासरितः किल । नितम्बे दक्षिणे नीलवतोऽस्ति वृषभाचलः ॥ ४ ॥ प्राग्वद्वृषभकूटस्य, गिरेरस्यास्ति पूर्वतः । रक्ताकुण्डं रक्तवतीकुण्डं पश्चिमतस्ततः ॥ ५॥ एताभ्यामपि कुडाभ्यां, निर्गत्य दक्षिणामुखे । रक्तारक्तवतीनद्यौ, भित्त्वा वैताढ्यभूधरम् ॥६॥ शीतोदायां प्रविशतो, याम्येन ऋजुनाऽध्वना । गङ्गासिन्धुश्रवन्तीभ्यामिमाः सर्वात्मना समाः ॥ ७ ॥ तथाहुः क्षमाश्रमणमिश्राः—"सीयाइ उइन्नेसु सीओयाए य जम्मविजएसु । गंगासिन्धुनईओ इयरेसु य रत्तरत्तवई ॥ ८ ॥" कुण्डान्येवं चतुःषष्टिर्द्वात्रिंशद्वृषभाद्रयः । स्वरूपमेषां भरतवर्त्तिकुण्डर्षभाद्रिवत् ॥ ९ ॥ चतुःषष्टेस्तथैवासां, नदीनां ह्रदनिर्गमात् । आरभ्य शीताशीतोदावाहिनीसंगमावधि ॥ १० ॥ सर्वं स्वरूपं भरतगङ्गासिन्धुसरित्समम् । प्रत्येकं परिवारोऽपि, तावान् ज्ञेयो विशारदैः ॥ ११ ॥ गङ्गारक्तान्यतरस्याः, प्रवेशो मागधाभिधम् । शीताशीतोदयोरन्यतरस्यां तीर्थमाहितम् ॥ १२ ॥ एवं सिन्धुरक्तवत्योर्योगे प्रभासनामकम् । तयोर्द्वयोरन्तराले, वरदामं भवेदिह ॥ १३ ॥ एवं तीर्थत्रयं ज्ञेयं, विजयं विजयं प्रति । स्वरूपमेषां भरततीर्थवत्परिभाव्यताम् ॥ १४ ॥ उत्तराहेषु शीतायाः, कच्छादिविजयेष्विमाः । राजधान्यो दक्षिणार्द्धमध्यखण्डेषु

विजयेषु गंगादिवर्णनम्

२०

२५



२८

कीर्त्तिताः ॥ १५ ॥ क्षेमा क्षेमपुरी चैवारिष्ठा रिष्ठवती पुरी । खड्गी मञ्जुषौषधिश्च, पुरी च पुण्डरीकिणी ॥१६॥ शीताया दाक्षिणात्येषु, वत्सादिविजयेष्विमाः । राजधान्य उत्तरार्द्धे, मध्यखण्डेषु वर्णिताः ॥ १७ ॥ सुसीमा कुण्डला चैवापराजिता प्रभङ्करा । अङ्कावती पक्ष्मवती, शुभाऽथ रत्नसंचया ॥ १८ ॥ शीतोदाया याम्यतटे, पक्ष्मादिविजयेष्विमाः । उत्तरार्द्धमध्यखण्डे, राजधान्यो निरूपिताः ॥ १९ ॥ अश्वपुरी सिंहपुरी, महाख्या विजयाभिधा । अपराजिताऽपराख्या, शोका च वीतशोकिका ॥ २० ॥ शीतोदाया उदीच्येषु, वप्रादिविजयेष्विमाः । याम्यार्द्धे मध्यखण्डेषु, राजधान्यो जिनैः स्मृताः ॥ २१ ॥ विजया वैजयन्ती च, जयन्ती चापराजिता । चक्रपुरी खड्गपुर्यवन्ध्याऽयोध्येति नामतः ॥ २२ ॥ विजयेष्वेषु मनुजाः, पञ्चचापशतोन्नताः । जघन्योत्कर्षतः पूर्वकोटिक्षुल्लभवायुषः ॥ २३ ॥ नानासंहनना नानासंस्थाना विविधाशयाः । मृत्वा नानागतिं यान्ति, स्वस्वकर्मानुसारतः ॥ २४ ॥ कालः सदाऽत्र सुषमादुष्षमारम्भसन्निभः । सांप्रतीनभरतवद्भर्भापल्यावनादिकम् ॥ २५ ॥ आहारस्यान्तरे माने, चानैयत्यं तथैव हि । ततश्चतुःशतगुणं, मानं च स्याद्गृहादिषु ॥ २६ ॥ चित्राद्यान् देवशैलान्तान्, वक्षस्कारगिरीन्विदुः । चतुरश्चतुरः शीताशीतोदयोस्तटद्वये ॥ २७ ॥ चित्रश्च ब्रह्मकूटश्च, नलिनीकूट इत्यपि । एकशैलश्चेति शीतोत्तरकूले धराधराः ॥ २८ ॥ त्रिकूटश्च वैश्रमणोऽञ्जनो मातञ्जनोऽपिच । शीताया दक्षिणतटे, वक्षस्काराचला इमे ॥ २९ ॥ अङ्कापाती पक्ष्मपाती, आशीविषः सुखावहः । शीतोदाया याम्यतटे, वक्षस्काराद्रयः श्रुताः ॥ ३० ॥ चन्द्रः सूर्यश्च नागश्च, देवश्चेति महीधराः । शीतोदाया

उदक्कूले, सर्वे एवं च षोडश ॥ ३१ ॥ एकतोऽमी नीलवता, स्पृश्यन्ते निषधेन वा । द्वितीयान्तेन शीतोदां, शीतां वा संस्पृशन्ति च ॥ ३२ ॥ योजनानां पञ्च शतान्येते विष्कम्भतो मताः । सर्वत्र सर्वे सदृशाः, सर्वरत्नमया अपि ॥ ३३ ॥ नीलवन्निषधक्ष्माभृत्समीपेऽमी समुन्नताः । चतुःशतीं योजनानां, शतमेकं भुवोऽन्तरे ॥ ३४ ॥ ततश्च मात्रया वर्द्धमानाः सर्वे यथाक्रमम् । शीताशीतोदयोः पार्श्वे, जाताः पञ्चशतोन्नताः ॥ ३५ ॥ पञ्चविंशं योजनानां, शतं तत्र भुवोऽन्तरे । तुरङ्गस्कन्धसंस्थानसंस्थिता इति वर्णिताः ॥ ३६ ॥ स्वस्वाह्वानसमाह्वानैकैकवृन्दारकाश्रिताः । यथा चित्रगिरौ चित्रः, स्वाम्येवमपरेष्वपि ॥ ३७ ॥ अथ चत्वारि चत्वारि, कूटान्येषु किलाद्रिषु । भवन्त्येवं चतुःषष्टिरेतानि सर्वसंख्यया ॥ ३८ ॥ आद्यं विवक्षितगिरिप्राग्वर्त्तिविजयाख्यया । नीलवन्निषधग्राव्णोः, समीपेऽन्यतरस्य तत् ॥ ३९ ॥ यः पश्चिमायां विजयो, द्वैतीयीकं तदाख्यया । तृतीयं निजनाम्नैव, सिद्धायतनमन्तिमम् ॥४०॥ वियच्चुम्बिचलत्केतुसिद्धायतनबन्धुरम् । शीताशीतोदयोरन्यतरस्याः सविधे च तत् ॥ ४१ ॥ कच्छासुकच्छयोर्मध्यस्थिते चित्रगिरौ यथा । आद्यं सुकच्छकूटं स्यात्, कच्छकूटं द्वितीयकम् ॥ ४२ ॥ तृतीयं चित्रकूटं स्यात्सिद्धायतनमन्तिमम् । शीताशीतोदयोरेवमुदग्रोघसि भाव्यताम् ॥ ४३ ॥ त्रिकूटे च गिरौ वत्सकूटं निषधसन्निधौ । द्वितीयं तु सुवत्साख्यं, ततस्त्रिकूटसंज्ञितम् ॥ ४४ ॥ तुर्यं च सिद्धायतनं, सर्वेष्वप्येवमद्रिषु । शीताशीतोदयोर्याम्यतटस्थेषु विभाव्यताम् ॥ ४५ ॥ एवं चतुर्णां चतुर्णां, सिद्धायतनशालिनाम् । कूटानां श्रेणयः शीताशीतोदोभयकूलयोः ॥ ४६ ॥ पिधानमालिनां दिव्यकलशाना-



२०

२५



२८

मिवालयः। भान्त्यर्हदभिषेकाय, न्यस्तानामम्बुपूर्त्तये ॥ ४७ ॥ युग्मम् ॥ सिद्धायतनवर्जानि, स्वस्वतुल्याख्य-
नाकिना। तान्याश्रितानि विजयदेववत् ते महर्द्धिकाः ॥ ४८ ॥ शीताशीतोदयोर्याम्योत्तरयोर्ये सुधाभुजः।
क्रमात्तेषां राजधान्यो, मेरुतो दक्षिणोत्तराः ॥ ४९ ॥ गाहावती ह्रदावती, तृतीया वेगवत्यपि । शीताया
उत्तरतटे,स्युस्तिस्रोऽन्तरनिम्नगाः ॥ ५० ॥ शीतायाम्यतटे तप्ता, मत्तोन्मत्तेति निश्चिताः। क्षीरोदा शीतस्रो-
ताश्चान्तर्वाहिनीति नामतः ॥ ५१ ॥ शीतोदाया याम्यतटे, तस्या उत्तरतः पुनः। ऊर्मिगम्भीरफेनेभ्यो, मा-
लिन्योऽन्तरनिम्नगाः ॥ ५२ ॥ द्वादशानामप्यमूषामेकैकं कुण्डमीरितम्। स्वतुल्याख्यं नीलवतः, समीपे निष-
धस्य वा ॥ ५३ ॥ कुण्डं पुनस्तदेकैकं, विष्कम्भायामतो मतम्। सपादं योजनशतमुद्विद्धं दशयोजनीम् ॥५४॥
परिक्षेपेण साशीतियोजनानां शतत्रयम्। मध्ये च द्वीप एकैको, नदीकुण्डसमाभिधः ॥ ५५ ॥ यथा गाहा-
वतीनद्याः, कुण्डं गाहावतीति च। तत्र गाहावतीद्वीपो, भवत्येवं परेऽप्यमी ॥ ५६ ॥ योजनानि षोडशामी,
विष्कम्भायाममानतः । सातिरेकाणि पञ्चाशत्, पञ्चसाः परिवेषतः ॥ ५७ ॥ किञ्च सर्वेऽप्यमी द्वीपा, द्वौ
क्रोशावुच्छ्रिता जलात्। पद्मवेदिकया सर्वे, वनेन च विराजिताः ॥ ५८॥ मध्ये च तेषां द्वीपानामेकैकं भवनं
भवेत्। नदीनामसदृग्नाम्न्या, देव्या योग्यमनुत्तरम् ॥५९॥ अर्द्धक्रोशव्यासमेकक्रोशायतं मनोहरम्। देशोन-
क्रोशतुङ्गं स्वदेवीशय्याविभूषितम् ॥ ६० ॥ युग्मम् ॥ एताश्च गाहावत्याद्या, निमग्ना निखिला अपि। पञ्चविंशं
योजनानां, शतं विष्कम्भतो मताः ॥ ६१ ॥ सार्द्धे द्वे योजने निम्ना, आरभ्य ह्रदनिर्गमात्। शीताशीतोदाप्र-

वेशपर्यंतं सर्वतः समाः ॥ ६२ ॥ यत्तु श्रीमलयगिरयः क्षेत्रसमासवृत्तौ जम्बूद्वीपाधिकारे एताश्च गाहावती-प्रमुखा नद्यः सर्वा अपि सर्वत्र कुण्डाद्विनिर्गमे शीताशीतोदयोः प्रवेशे च तुल्यप्रमाणविष्कम्भोद्वेधा इति स्वयमुक्त्वा तस्मिन्नेव ग्रन्थे धातकीखण्डपुष्कराद्धाधिकारयोस्तत्रत्यनदीनां द्विगुणविस्तारातिदेशं व्याख्यान-यन्तः प्रोचुः, यथा जम्बूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकूलानां ग्राहावत्यादीनां च द्वादशानामन्तरन-दीनां सर्वाग्रेण षोडशानां नदीनां प्रवाहे विष्कम्भो द्वादश योजनानि सार्द्धानि उद्वेधः क्रोशमेकं, समुद्रप्र-वेशे ग्राहावत्यादीनां च महानदीप्रवेशे विष्कम्भो योजनानि ( १२५ ) उद्वेधो योजने ( २ ) क्रो २, तदभि-प्रायं न विद्मः, किंच—आसां सर्वत्र समविष्कम्भकत्वे आगमवद्युक्तिरप्यनुकूला, तथाहि—आसां विष्कम्भ-वैषम्ये उभयपार्श्ववर्त्तिनोर्विजययोरपि विष्कम्भवैषम्यं स्यात्, इष्यते च समविष्कम्भकत्वमिति । जगतीस-न्निधौ शीताशीतोदयोस्तटद्वये । स्यादेकैकं वनमुखमेवं चत्वारि तान्यपि ॥ ६३ ॥ आद्यं वनमुखं शीतानील-वद्धरान्तरे । द्वितीयं च वनमुखं, शीतां निषधमन्तरा ॥ ६४ ॥ तृतीयं च वनमुखं, शीतोदानिषधान्तरे । शीतोदानीलवन्मध्ये, चतुर्थं परिकीर्त्तितम् ॥ ६५ ॥ याम्योत्तरायतानां प्राक्प्रत्यग्विष्कम्भशालिनाम् । एषां विजयवद्दैर्घ्यं, सर्वेषामपि भाव्यताम् ॥ ६६ ॥ एका कलैषां विष्कम्भो, नीलवन्निषधान्तिके । ततो जगत्या

१ एताश्चेत्यादि तुल्यप्रमाणविष्कम्भोद्वेधा इति प्रान्तो ग्रन्थः परस्परं नदीनां साम्यार्थ इति न विरोधः, न विषम-विष्कम्भेऽपि विजयानां विषमता, सत्यामपि च तस्यां न किञ्चित् मानं विजयानां समचतुरस्रत्वे, प्रमाणं तु कर्णगत्यैव सर्वत्र, सह रमणेन वा ।

अन्तरनदी-वनमुखं च

२०

२५
२६

वक्रत्वाद्वर्द्धते जगतीदिशि ॥ ६७ ॥ त्रिसहस्री योजनानामष्टसप्ततिवर्जिता । शीताशीतोदयोः पार्श्वे, वर्द्ध-
मानः क्रमाद्भूत् ॥ ६८ ॥ अत्रायमाम्नायः—षोडशानां विजयानां, वक्षस्काराष्टकस्य च । षण्णामन्तर्निम-
म्नानां, कुरूणां गजदन्तयोः ॥ ६९ ॥ नीलवन्निषधज्याभ्यां, विष्कम्भे शोधिते स्थितम् । कलाद्वयं तत्सै-
कैका, विष्कम्भो वनयोर्द्वयोः ॥ ७० ॥ दैर्घ्येऽतीते योजनादौ, यावति व्यास इष्यते। निहन्यते तद् द्वाविंशै-
रेकोनत्रिंशता शतैः ॥ ७१ ॥ पुनरेकोनविंशत्याहत्य लक्षैस्त्रिभिर्भजेत् । सहस्रपञ्चदशकसार्द्धद्विशतसंयुतैः
॥ ७२ ॥ लब्धं व्यासो योजनादिः, स्यादत्राभीप्सितास्पदे । भाज्यभाजकयोरत्रोपपत्तिर्लिख्यते स्फुटा ॥ ७३ ॥
परमव्यासरूपोऽत्र, सर्वत्र गुणको ध्रुवः । तेन हत्वैकोनविंशत्या हतिस्तु कलाकृते ॥ ७४॥ आयाम एव परमो,
भाजकोऽत्र ध्रुवो भवेत् । उपरिस्थकलायुग्मप्रक्षेपाय कलीकृतः ॥ ७५ ॥

अथोत्तरकुरूणां यौ, पर्वतौ सीमकारिणौ । गन्धमादनसन्माल्यवन्तौ तौ वर्णयाम्यहम् ॥ ७६ ॥ तत्रोत्तर-
कुरूणां यः, पश्चिमायां व्यवस्थितः । वायव्यां मेरुतः सोऽयं, प्रज्ञप्तो गन्धमादनः ॥ ७७ ॥ गन्धः कोष्ठपुटा-
दिभ्यो, रम्यो यदिह पर्वते । तथा क्षेत्रस्वभावेन, ततोऽयं गन्धमादनः ॥ ७८ ॥ गन्धमादननामा च, देवः
पल्योपमस्थितिः । स्वाम्यस्येति तथा ख्यातोऽपरं च शाश्वताभिधः ॥ ७९ ॥ पीतरत्नमयश्चैष, मतान्तरे हिर-
ण्मयः । शोभितः सप्तभिः कूटैर्नानारत्नोपशोभितैः॥ ८० ॥ जम्बूद्वीपप्रज्ञप्तिसूत्रे तु अयं 'सव्वरयणामए' इति
सर्वात्मना रत्नमय उक्तः । जम्बूद्वीपसमासे तु कनकमय उक्तः, बृहत्क्षेत्रसमासे तु 'गिरि गंधमायणो पीयओ

अ' पीतकः—पीतमणिमय इत्येतद्वृत्तौ । तत्राद्यं मन्दरासन्नं, वायव्यां मन्दराचलात् । कूटं सिद्धायतनाख्यं, तत्रोत्तुङ्गो जिनालयः ॥ ८१ ॥ कूटात्ततोऽपि वायव्यां, कूटं स्याद्गन्धमादनम् । स्याद्गन्धिलावतीकूटं, वायव्याममुतो दिशि ॥ ८२ ॥ तुर्यं तूत्तरकुर्वाख्यं, स्याद्वायव्यां तृतीयतः । पञ्चमात्तद्दक्षिणस्यां, वक्रत्वेनास्य भूभृतः ॥ ८३ ॥ तुरीयादुत्तरस्यां च, पञ्चमं स्फटिकाभिधम् । अस्मादुत्तरतः षष्ठं, लोहिताक्षाभिधं भवेत् ॥ ८४ ॥ लोहिताक्षादुत्तरस्यां, सप्तमं कूटमाहितम् । आनन्दाख्यमिति सप्त, कूटानि गन्धमादने ॥ ८५ ॥ भोगङ्कराभोगवत्यौ, द्वयोः पञ्चमषष्ठयोः । दिक्कुमार्यावपरेषु, कूटतुल्याभिधाः सुराः ॥८६॥ एतत्कूटाभिधदेवदेवीनां मन्दराचलात् । राजधान्योऽन्यत्र जम्बूद्वीपे वायव्यकोणके ॥ ८७ ॥ अथोदक्कुरुतः प्राच्यां, याम्यां नीलवतो गिरेः । ऐशान्यां मन्दरात्कच्छात्प्रतीच्यां माल्यवान् गिरिः ॥ ८८ ॥ नानाकुसुमगुल्मानि, विधूतानि समीरणैः । कुर्वन्त्येनं कीर्णपुष्पं, ततोऽयं माल्यवानिति ॥ ८९ ॥ महर्द्धिको वसत्यत्र, माल्यवान् नाम निर्जरः । पल्योपमायुरिति वा, यद्वाऽसौ शाश्वताभिधः ॥ ९० ॥ सद्वैडूर्यमयश्चायं, नवकूटोपशोभितः । मेर्वासन्नं कूटमाद्यं, सिद्धायतनसंज्ञितम् ॥ ९१ ॥ द्वितीयं माल्यवत् कूटं, तृतीयं तु ततः परम् । भवेदुत्तरकुर्वाख्यं, तुर्यं कच्छाभिधं मतम् ॥ ९२ ॥ पञ्चमं सागराभिख्यं, षष्ठं तु रजताभिधम् । शीताकूटं पूर्णभद्रकूटं हरिस्सहाभिधम् ॥ ९३ ॥ ऐशान्यां मन्दरात्पङ्क्त्या, स्थितं कूटचतुष्टयम् । तुर्यात्पञ्चममैशान्यां, षष्ठाद्दक्षिणतश्च तत् ॥ ९४ ॥ पञ्चमादुत्तरस्यां च, षष्ठं राजतमित्यथ । दक्षिणोत्तरया पङ्क्त्या, शेषं कूटत्रयं ततः ॥ ९५ ॥

गन्धमादनः माल्यवांश्च

२०

२५

॥१९८॥

२८

पूर्णभद्रादुत्तरस्यां, याम्यां नीलवतो गिरेः। कूटं नाम्ना सहस्राङ्कं, ख्यातं हरिस्सहं च तत् ॥ ९६ ॥ एतन्नी-
लवतो वर्षधरस्यासन्नमीरितम्। जात्यस्वर्णमयं दीप्रप्रभापटलपिञ्जरम् ॥९७॥ योजनानां सहस्रं तत्तुङ्गं वृत्ताकृति
ध्रुवम्। अद्ध्यर्द्धयोजनशतद्वयमुद्वेधतो भवेत् ॥ ९८ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ—अवशिष्टं यमकगिरिप्र-
माणेन नेतव्यं, तच्चेदं—'अड्ढाइज्जाइं जोअणसयाइं उव्वेहेणं' सहस्रं योजनानां च, स्यान्मूले विस्तृतायतम्।
मध्ये सार्द्धां ससशतीं, शतानि पञ्च चोपरि ॥ ९९ ॥ योजनानां त्रिसहस्री, सद्वाषष्टिशतान्विता। द्वे सहस्रे
च द्विसप्तत्यधिकत्रिशताऽञ्चिते ॥ २०० ॥ सहस्रं साधिकैकाशीत्याढ्यपञ्चशतान्वितम्। क्रमादस्य परिक्षेपा,
मूले मध्ये तथोपरि ॥ १ ॥ शतानि पञ्च विस्तीर्णे, गजदन्तगिराविदम्। सहस्रयोजनपृथु, कूटं माति कथं
ननु ? ॥ २ ॥ अत्रोच्यते—गजदन्तगिरिं व्याप्य, निजार्द्धेन स्थितं ततः। गिरेरुभयतो व्योम्नि, शेषार्द्धेन
प्रतिष्ठितम् ॥ ३ ॥ तथोक्तं क्षेत्रसमासबृहद्वृत्तौ—"एवं हरिकूटहरिस्सहकूटयोरपि निजनिजाश्रयगिर्योर्यथा-
रूपमुभयपार्श्वे आकाशमवरुद्ध्य स्थितत्वं परिभावनीय"मिति। आद्यकूटे जिनगृहं, तथा पञ्चमषष्ठयोः। सुभो-
गाभोगमालिन्यौ, दिक्कुमार्यौ निरूपिते ॥ ४ ॥ शेषेषु षट्सु कूटेषु, पल्योपमायुषः सुराः। कूटानुरूपनामानो,
महर्द्ध्या विजयोपमाः ॥ ५ ॥ एतेषां देवदेवीनामैशान्यां मन्दराद्गिरेः। जम्बूद्वीपेऽन्यत्र राजधान्यो हरिस्सहं
विना ॥ ६ ॥ हरिस्सहस्य तु ख्याता, राजधानी सुमेरुतः। उत्तरस्यामन्यजम्बूद्वीपे हरिस्सहाभिधा ॥ ७ ॥
सहस्राश्चतुरशीतिर्योजनानां भवेदिह। व्यासायामावपरं तु, तुल्यं चमरचञ्चया ॥ ८ ॥ इमावद्री योजनानां,

५

१०

१४

दक्षिणोत्तरमायतौ । त्रिंशत्सहस्रान् द्विशतीं, नवोत्तरां सषट्कलाम् ॥९॥ पूर्वापरं च विस्तीर्णौ, समीपे नीलवद्गिरेः। शतानि पञ्च पर्यन्तेऽङ्गुलासङ्ख्यांशविस्तृतौ ॥ १० ॥ चतुःशतीं योजनानां, गिरेर्नीलवतोऽन्तिके । अभ्युन्नतौ शतमेकमवगाढौ भुवोऽन्तरे ॥ ११ ॥ समीपे मन्दरस्याथ, स्यातां पञ्चशतोन्नतौ । निमग्नौ पञ्च गव्यूतशतानि वसुधान्तरे ॥ १२ ॥ नीलवत्पर्वतोपान्ताद्वर्द्धमानाविमौ क्रमात् । समुत्सेधावगाहाभ्यां, विस्तृत्या हीयमानकौ ॥ १३ ॥ पूर्वोक्तमानविस्तीर्णाद्विद्वोचावुपमन्दरम् । नीलवच्छैलकरिणो, दशनाविव राजतः ॥ १४ ॥ प्रत्येकं च पद्मवरवेदिकावनमण्डितौ । कुरुतस्तौ मिथो योगादधिज्यधनुराकृतिम् ॥ १५ ॥ गन्धमादनसन्माल्यवतोः पर्वतयोरथ । अभ्यन्तरे स्थिताः कान्तभुजयोरिव कामिनी ॥ १६ ॥ मन्दराद्रेरुत्तरस्यां, दक्षिणस्यां च नीलतः । उत्तराः कुरवः ख्याता, अनुत्तरचिदाश्रयैः ॥ १७ ॥ युग्मम् ॥ उदग्दक्षिणविस्तीर्णास्ताः पूर्वपश्चिमायताः । अर्द्धेन्दुमण्डलाकारा, भुवो भालमिवाहिताः ॥ १८ ॥ स्थापना । अत्रोत्तरकुरुर्नाम, देवः पल्योपमस्थितिः । वसत्यतस्तथा ख्याता, यद्वेदं नाम शाश्वतम् ॥ १९ ॥ एकादश सहस्राणि, शतान्यष्ट तथोपरि । योजनानां द्विचत्वारिंशत्कलाद्वितयं तथा ॥ २० ॥ दक्षिणोत्तरविस्तार, एतासां वर्णितो जिनैः । ज्ञातव्यात्रोपपत्तिश्च, पूर्वाचार्यप्रदर्शिता ॥ २१ ॥ महाविदेहविष्कम्भे, मेरुविष्कम्भवर्जिते । अर्धीकृते कुरुव्यासमानं भवति निश्चितम् ॥ २२ ॥ त्रिपञ्चाशद्योजनानां, सहस्राणि भवेदिह । प्रत्यश्चा नीलवत्पार्श्वे, सा चैवं परिभाव्यताम् ॥ २३ ॥ भद्रशालवनायामो, द्विगुणो मंदरान्वितः । गजदन्तव्यास-

गजदन्तकृटानि उत्तराः कुरवः

२०

२५

॥१९९॥

२८

हीनः, कुरुजीवामितिर्भवेत् ॥ २४ ॥ योजनानां सहस्राणि, षष्टिः किञ्च चतुःशती । अष्टादशाधिका शेषा, कला द्वादश तद्धनुः ॥ २५ ॥ तच्चैवं—आयाममानयोर्योगे, उभयोर्गजदन्तयोः । भवेत्कुरुधनुःपृष्ठमानं मेरुसमीपतः ॥ २६ ॥ अत्यन्तं रमणीयाऽत्र, क्षितिरीतिविवर्जिता । कल्पद्रुमा दशविधाः, पूरयन्ति जनेप्सितम् ॥ २७ ॥ सदा युगलधर्माणो, जना ललितमूर्त्तयः । गव्यूतत्रयमुत्तुङ्गाः, कलाकौशलशालिनः ॥ २८ ॥ दधाना आयुरुत्कर्षात्पूर्णं पल्योपमत्रयम् । पल्यासङ्ख्येयभागोनं, पल्यत्रयं जघन्यतः ॥ २९ ॥ षट्पञ्चाशत्संयुते द्वे, ५
शते पृष्ठकरण्डकान् । धारयन्तः क्रोधमानमायालोभाल्पताजुषः ॥ ३० ॥ ते षोढा स्युः पद्मगन्धा १, मृगगन्धा २ स्तथा समाः ३ । सहाश्च ४ तेजस्तलिनः ५, शनैश्चारिण ६ इत्यपि ॥ ३१ ॥ चतुर्भिः कलापकं ॥ सकृदष्टमभक्तान्ते, तुवरीकणमात्रया । पृथ्वीकल्पद्रुमफलभोजिनो मनुजाश्च ते ॥ ३२ ॥ एकोनपञ्चाशदुघस्रविहितापत्यपालनाः । कासजृम्भादिभिस्त्यक्तप्राणा यान्ति त्रिविष्टपम् ॥ ३३ ॥ युग्मम् । अनंतगुणमाधुर्यो, हरिवर्षाद्यपेक्षया । पृथ्वीपुष्पफलादीनामास्वादस्तत्र वर्णितः ॥ ३४ ॥ तादृशा एव तिर्यञ्चस्तत्र हिंसादिवर्जिताः । १०
पालयित्वा युग्मधर्मं, गच्छन्ति नियमाद्दिवम् ॥ ३५ ॥ आहारयंत्यमी षष्ठान्तरमित्थं यथागमम् । अन्ययुग्मितिरश्चामप्याहारेऽन्तरमूह्यताम् ॥ ३६ ॥ पञ्चेन्द्रियतिरश्चां यद्धल्भने परमान्तरम् । भाषितं षष्ठरूपं तदेषामेव व्यपेक्षया ॥ ३७ ॥ तथोक्तं—'पञ्चिंदितिरिनराणं साहाविय छट्ठअट्ठमओ' इत्यादि । कालः सदाऽत्र सुषमसुषमाख्यः प्रवर्त्तते । वृद्धः साधुरिव क्षेत्रपरावृत्तिपराङ्मुखः ॥३८॥ क्षेत्रेऽस्मिंश्च नीलवतो, गिरेर्दक्षिणतः किल । १४

योजनानां शतान्यष्टौ, चतुस्त्रिंशतमेव च ॥ ३९ ॥ चतुरः सासिकान् भागानतिक्रम्य स्थिताविह । यमकाख्यौ गिरी शीतापूर्वपश्चिमकूलयोः ॥ ४० ॥ मिथस्तुल्यस्वरूपौ तौ, यमलभ्रातराविव । तदेतौ यमकाभिख्यौ, कथितौ जिननायकैः ॥ ४१ ॥ अथवा यमकानामशकुन्याकृतिशालिनौ । ततस्तथोदितौ स्वर्णमयौ गोपुच्छसंस्थितौ ॥ ४२ ॥ व्यासायामपरिक्षेपतुङ्गत्वोद्विद्धतादिभिः । हरिस्सहोपमौ पद्मवेदिकावनमण्डितौ ॥ ४३ ॥ तयोः पर्वतयोर्मौलौ, भूमिभागोऽतिबन्धुरः । प्रत्येकं तत्र चैकैकः, स्यात्प्रासादावतंसकः ॥ ४४ ॥ द्वाषष्टिं योजनान्यर्द्धाधिकानि स समुच्छ्रितः । योजनान्येकत्रिंशतं, क्रोशं च विस्तृतायतः ॥ ४५ ॥ तन्मध्ये सपरीवारमस्ति सिंहासनं महत् । यमकाख्यामरार्हं तच्छेषं विजयदेववत् ॥ ४६ ॥ मेरोरुत्तरतो जम्बूद्वीपेऽन्यत्र निरूपिते । राजधान्यौ यमकयोर्निःशेषं विजयोपमे ॥ ४७ ॥ यदुक्तमन्तरं नीलवतोर्यमकभूभृतोः । यमकाढ्याद्यह्रदयोस्तावदेवान्तरं भवेत् ॥ ४८ ॥ परस्परं ह्रदानां च, तावदेवोक्तमन्तरम् । अन्त्यह्रदात्तावतैव, क्षेत्रपर्यन्तभूरपि ॥ ४९ ॥ एवं च—यमकह्रददीर्घत्वैः, ससभिश्च तथान्तरैः । यथोक्तमुत्तरकुरुव्यासमानं प्रजायते ॥ ५० ॥ तदुक्तं—"जावइयंमि पमाणंमि होंति जमगाओ नीलवंतो उ । तावइयमंतरं खलु जमगदहाणं दहाणं च ॥ ५१ ॥" अथाभ्यां यमकाद्रिभ्यां, दक्षिणस्यां समान्तराः । शीतायाः सरितो मध्ये, ह्रदाः पञ्च यथाक्रमम् ॥ ५२ ॥ प्रथमो नीलवन्नामा, नीलवद्गिरिसन्निभैः । शोभितः शतपत्राद्यैस्तत्तथा प्रथिताभिधः ॥ ५३ ॥ यद्वा नागकुमारेन्द्रो, नीलवान्नाम निर्जरः । पालयत्यस्य साम्राज्यमित्येवं प्रथिताभिधः ॥ ५४ ॥ द्वितीयस्तूत्तरकुरु-

२०

२५



२८

संस्थानाब्जादिमत्तया । तुल्याख्यव्यन्तरावासाच्चद्रोत्तरकुरुह्रदः ॥ ५५ ॥ चन्द्राभशतपत्रादिमत्त्वाच्चन्द्राभिधो
ह्रदः । व्यन्तरेन्द्रचन्द्रदेवस्वामित्वाद्वा तृतीयकः ॥ ५६ ॥ ऐरावताकारहारिपद्मादिमत्तयाऽथवा । व्यन्तरैराव-
ताख्यत्वात्तुर्यश्चैरावतो ह्रदः ॥ ५७ ॥ माल्यवत्पर्वताकाराम्बुजादिमत्तयाऽथवा । माल्यवद्व्यन्तरावासात्,
पञ्चमो माल्यवान् ह्रदः ॥ ५८ ॥ पद्मह्रदसमाकाराः, सर्वे सहोदरा इव । तथैव पद्मवलयैः, षड्जातीयैरलङ्कृताः
॥ ५९ ॥ विशेषस्तु पद्मह्रदः, परिक्षिप्तः समन्ततः । एकेन वनखण्डेन, पद्मवेदिकयैकया ॥ ६० ॥ विभक्ताभ्यां
प्रविश्यान्तर्विनिर्यान्त्या च शीतया । अमी पद्मवेदिकाभ्यां,वनाभ्यां च परिष्कृताः ॥६१॥ याम्योत्तरायताश्चामी,
पूर्वपश्चिमविस्तृताः । सहस्रयोजनायामाः, शतानि पञ्च विस्तृताः ॥ ६२ ॥ तथाहुः—"सीयासीओयाणं
बहुमज्झे हुंति पंच हरया उ । उत्तरहदाहिणदीहा पुव्वावरवित्थडा इणमो ॥ ६३ ॥" पद्मह्रदादयो ये तु, परे
वर्षधरह्रदाः । ते स्युः पूर्वापरायामा, दक्षिणोत्तरविस्तृताः ॥ ६४ ॥ ह्रदाधिदेवतानां च, पञ्चानाममृताशि-
नाम् । राजधान्योऽन्यत्र जम्बूद्वीपे मेरोरुदग्दिशि ॥ ६५ ॥ एकैकस्य ह्रदस्यास्य, पूर्वपश्चिमयोर्दिशोः । योज-
नानि दश दश, मुक्त्वा तटभुवि स्थिताः ॥ ६६ ॥ शैलाः काञ्चननामानो, मूले लग्नाः परस्परम् । एकैकतो दश
दश, क्षेत्रेऽस्मिन्निखिलाः शतम् ॥ ६७ ॥ सर्वेऽपि योजनशतोत्तुङ्गा रम्या हिरण्मयाः । विष्कम्भायामतो मूले,
योजनानां शतं मताः ॥ ६८ ॥ मध्ये पञ्चसप्ततिं च, योजनानि प्रकीर्त्तिताः । पञ्चाशतं योजनानि, मस्तके
विस्तृतायताः ॥ ६९ ॥ शतत्रयं षोडशाढ्यं, किञ्चिद्विशेषतोऽधिकम् । योजनानि परिक्षेपस्तेषां मूले प्रकीर्त्तितः

॥ ७० ॥ मध्ये विशेषाभ्यधिका, सप्तत्रिंशा शतद्वयी । सातिरेकाष्टपञ्चाशद्युक्तं शतमथोपरि ॥ ७१ ॥ वसुन्धरावधूक्रीडास्वर्णसारिसमाः स्थिताः । दक्षिणोत्तरपङ्क्त्यैते, वेदिकावनमण्डिताः ॥ ७२ ॥ काञ्चनप्रभपाथोजाद्यलङ्कृतजलाश्रयाः । काञ्चनाख्यास्ततो यद्वा, काञ्चनाख्यैः सुरैः श्रिताः ॥ ७३ ॥ सर्वेऽप्येकैकप्रासादावतंसाश्रितमौलयः । प्रासादास्ते च यमकप्रासादसदृशा मताः ॥ ७४ ॥ सपरिच्छदमेकैकं, तत्र सिंहासनं स्फुरत् । ऐश्वर्यं भुञ्जते तेषु, निर्जराः काञ्चनाभिधाः ॥ ७५ ॥ ऋद्धिश्चैषां विजयवदायुः पल्योपमं स्मृतम् । मेरोरुदग् राजधान्यो, जम्बूद्वीपेऽपरत्र च ॥ ७६ ॥

अथोत्तरकुरुक्षेत्रस्थिता जम्बूर्निरूप्यते । सुदर्शनाख्या यन्नाम्ना, जम्बूद्वीपोऽयमुच्यते ॥ ७७ ॥ उत्तराः कुरवो द्वेधा, विभक्ताः शीतया किल । पूर्वापरार्द्धभावेन, सीमन्तेनालका इव ॥ ७८ ॥ तत्र च—दक्षिणस्यां नीलगिरेरुदीच्यां मन्दराचलात् । पश्चिमायां माल्यवतः, शीतायाः प्राक्तने तटे ॥ ७९ ॥ उदक्कुरुप्राक्तनार्द्धमध्यभागे निरूपितम् । जाम्बूनदमयं जम्बूपीठं नम्रसुरासुरैः ॥ ८० ॥ युग्मम् ॥ शतानि पञ्च विष्कम्भायामौ परिधिरस्य च । एकाशीत्यधिकं सार्द्धसहस्रं किञ्चनाधिकम् ॥ ८१ ॥ पीठस्यास्य मध्यभागे, बाहल्यं परिकीर्त्तितम् । योजनानि द्वादशान्त्यभागेषु क्रोशयोर्द्वयम् ॥ ८२ ॥ तदेकया पद्मवरवेदिकया वनेन च । समावृतं तन्मानादि, जगतीवेदिकादिवत् ॥ ८३ ॥ दिक्षु पूर्वाद्यासु तस्य, जम्बूपीठस्य तीर्थपैः । एकैकं द्वारमुक्तं त्रिसोपानप्रतिरूपकम् ॥ ८४ ॥ तदेकक्रोशविस्तीर्णं, क्रोशद्वयसमुच्छ्रितम् । वज्ररत्नमयैर्भूमिमूलभागैर्मनोहरम् ॥८५॥



२०

२५



२८

भूमेरूर्द्धं प्रतिष्ठानभूतैश्च रिष्टरत्नजैः । प्रदेशैः शोभितं वर्यवैडूर्यस्तम्भबन्धुरम् ॥ ८६ ॥ सुवर्णरूप्यफलकैर्वैडूर्यसन्धिबन्धुरैः । रत्नालम्बनबाहाभी, रत्नालम्बनकैर्युतम् ॥ ८७ ॥ आदितश्चतुर्भिः कलापकम् ॥ द्वारेषु तेषु सर्वेषु, प्रत्येकं तोरणं भवेत् । रत्नस्तम्भसन्निविष्टं, वृषभाश्वादिचित्रयुक् ॥ ८८ ॥ तोरणानामुपर्येषामुत्तरङ्गेषु सन्ति वै । अष्टावष्टौ मङ्गलानि, तथा तत्तोरणोपरि ॥ ८९ ॥ दण्डा वज्रमयाः पञ्चवर्णाश्च चामरध्वजाः । पताकातिपताकाश्च, छत्रातिच्छत्रकाणि च ॥ ९० ॥ भूयांसि घण्टायुग्मानि, भूयांस उत्पलोच्चयाः । भूयांसः पद्मकुमुदनिकराः सन्ति रत्नजाः ॥ ९१ ॥ मध्यभागेऽस्य पीठस्य, स्याच्चतुर्योजनोन्नता । योजनान्यष्ट विस्तीर्णायतैका मणिपीठिका ॥ ९२ ॥ उपर्यस्याः पीठिकाया, जम्बूवृक्षोऽस्ति वेष्टितः । वेदिकाभिर्द्वादशभिः, प्राकाराकारचारुभिः ॥ ९३ ॥ अथास्य जम्बूवृक्षस्य, मूलं वज्रमयं मतम् । मूलादुपरि यः कन्दो, भूमध्यस्थः स रिष्टजः ॥ ९४ ॥ स्कन्धः कन्दादुत्थितो यः, स तु वैडूर्यरत्नजः । सुवर्णमय्यस्तच्छाखाः, प्रशाखा जातरूपजाः ॥ ९५ ॥ शाखानां दिक्प्रसृतानां, मध्ये स्कन्धात्समुच्छ्रिता । योर्द्धशाखा विडिमाख्या, सोक्ता रजतनिर्मिता ॥ ९६ ॥ पत्राणि तस्य वैडूर्यमयानि जगदुर्जिनाः । तपनीयवृन्तवन्ति, गुच्छा जाम्बूनदोद्भवाः ॥ ९७ ॥ रजतोत्थास्तत्प्रवालाङ्कुराः पुष्पफलावली । नानारत्नमयी जम्बूतरुरीदृग् श्रुतः श्रुते ॥ ९८ ॥ शाखाप्रभवपर्यन्तः, स्कन्धः कन्दाद्य ऊर्द्धगः । द्वे योजने स उत्तुङ्गो, विस्तीर्णः क्रोशयोर्द्वयम् ॥९९॥ या दिक्प्रसृतशाखान्तर्जाता शाखो-

र्द्धगामिनी । विडिमापरपर्याया, सोत्तुङ्गा योजनानि षट् ॥ ३०० ॥ एवं च कन्दादारभ्य, सर्वाग्रेणाष्टयोजनीम् । जम्बूतरुः समुत्तुङ्गो, भूमग्नः क्रोशयोर्द्वयम् ॥ १ ॥ या तस्य प्रसृता स्कन्धाच्छाखा दिक्षु चतसृषु । पूर्वादिषु किलैकैकाः शिष्यशाखा गुरोरिव ॥ २ ॥ क्रोशेनोनानि चत्वारि, योजनान्यायताश्च ताः । प्रत्येकं चित्रकृत्पत्रफलपुष्पाद्यलङ्कृताः ॥ ३ ॥ एवं चोभयतः शाखादैर्घ्ये स्कन्धोरुतान्विते । विष्कम्भायामतः सोऽयं, भवेत्पूर्णाष्टयोजनः ॥४॥स्थापना। शाखायाः प्रसृतायाः प्राक्, मध्यभागे विराजते। अनादृतस्य देवस्य, भवनं रत्ननिर्मितम् ॥५॥ अनेकरत्नस्तम्भाढ्यं, क्रोशमायामतो मतम् । विष्कम्भतस्तु क्रोशार्द्धं, देशोनं क्रोशमुन्नतम् ॥ ६ ॥ धनुःपञ्चशतोत्तुङ्गं, तदर्द्धं पृथुलं क्रमात् । प्राच्युदीचीदक्षिणासु, द्वारमेकैकमत्र च ॥ ७ ॥ धनुःपञ्चशतायामविष्कम्भा मणिपीठिका । तदर्द्धमानबाहल्या, तत्र शय्या विराजिता ॥ ८ ॥ शेषशाखासु तिसृषु, स्युः प्रासादावतंसकाः । प्राक्शाखाभाविभवनानुकाराः सर्वमानतः ॥ ९ ॥ सर्वरत्नमया दीप्रप्रभापटलभासुराः । अनादृतस्वर्गियोग्यसिंहासनविभूषिताः ॥ १० ॥ यद्यपि विषमायामविष्कम्भं भवनं श्रीदेव्यादिभवनवत् समायामविष्कम्भः प्रासादो विजयादिप्रासादवदिति भवनप्रासादयोर्विशेषमामनन्ति तथापि श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रश्रीजिनभद्रगणिक्षमाश्रमणकृतक्षेत्रसमासश्रीउमास्वातिवाचककृतजंबूद्वीपसमासश्रीसोमतिलकसूरिकृतनव्यबृहत्क्षेत्रसमासादिष्वेतेषां वक्ष्यमाणवनगतानां च प्रासादतया व्यपदिष्टत्वात्क्रोशायाम-

जम्बूपीठादिवर्णनं

२०



२५
२६

क्रोशार्द्धविष्कम्भत्वस्य चोक्तत्वाज्जम्बूप्रकरणे प्रासादा अपि विषमायामविष्कम्भा इति ध्येयमित्यर्थत उ० श्रीशांतिचन्द्रोपज्ञजम्बूद्वीपप्रज्ञप्तिवृत्तौ ॥ जीवाभिगमसूत्रे त्वेषामपि समायामविष्कम्भत्वमेव दृश्यते, तथा च तद्ग्रन्थः—"तत्थ जे दाहिणिल्ले साले एत्थ णं एगे महं पासायवडिंसए पण्णत्ते, कोसं च उड्ढं उच्चत्तेणं अद्धकोसं आयामविक्खंभेणं" इति, शेषप्रासादसूत्राण्यपि अस्यैव सूत्रस्यातिदेशेनोक्तानीति ज्ञेयं । चतुर्दिग्गतशाखान्तः, शाखा या विडिमाभिधा । तस्या मौलौ मध्यभागे, सिद्धायतनमुत्तमम् ॥ ११ ॥ विष्कम्भायामतश्चैतत्प्राक्शाखाभवनोपमम् । देशोनक्रोशमुत्तुङ्गपृथुद्वारत्रयान्वितम् ॥ १२ ॥ तस्य मध्ये महत्येका, शोभते मणिपीठिका । धनुःपञ्चशतायामव्यासा तदर्धमेदुरा ॥ १३ ॥ उपर्यस्या महानेको, देवच्छन्दक आहितः । पञ्चचापशतायामविष्कम्भः सर्वरत्नजः ॥ १४ ॥ सातिरेकधनुःपञ्चशतोत्तुङ्गोऽथ तत्र च । अष्टाधिकं जिनार्चानां, शतं वैताढ्यचैत्यवत् ॥ १५ ॥ एवमुक्तस्वरूपोऽयं, जम्बूवृक्षः समन्ततः । भात्यष्टाग्रेण जम्बूनां, शतेन परिवेष्टितः ॥ १६ ॥ अमी आद्यपरिक्षेपगता जम्बूमहीरुहः । मूलजम्बूतरोरर्द्धमाना भवन्ति सर्वथा ॥१७॥ यथा द्वादशभिः पद्मवेदिकाभिः स वेष्टितः । तथाऽमी निखिलाः षड्भिर्वेदिकाभिरलङ्कृताः ॥ १८ ॥ श्रीदेवीपद्मवच्चैते, सर्वेऽनादृतनाकिनः । स्वीयाभरणसर्वस्वनिक्षेपवणिगापणाः ॥ १९ ॥ एतेषु च ( १०८ ) जम्बूवृक्षेषु श्रीजम्बूद्वीपप्रज्ञप्तिश्रीजीवाभिगमक्षेत्रविचारादौ सूत्र-

१ भूमिस्थत्वात् भवनानीति तत्त्वार्थवृत्त्यभिप्रायानुसरणेऽत्र सुस्थता ।

कृद्भिर्वृत्तिकृद्भिश्च जिनभवनप्रासादचिन्ता न कापि चक्रे, यद्वो यद्भुश्रुताः श्राद्धप्रतिक्रमणसूत्रचूर्णिकारादयः शाश्वतजिनस्तोत्रकर्तृश्रीजयानन्दसूरिप्रभृतयश्च मूलजम्बूवृक्षवत्प्रथमवलयजम्बूवृक्षप्रथमवनखण्डगतकूटाष्टकजिनभवनैः सह जम्बूवृक्षे ससदशोत्तरं जिनभवनानां शतं मन्यमाना इहाप्येकैकं सिद्धायतनं पूर्वोक्तमानं मेनिरे, ततोऽत्र तत्त्वं केवलिनो विदुरिति जम्बूद्वीपप्रज्ञप्तिवृत्तौ । मूलजम्बूतरोस्तस्माद्यथाक्रमं दिशां त्रये । वायव्यामुत्तरस्यां चैशान्यां च तुल्यनाकिनाम् ॥ २० ॥ जम्बूसहस्राश्चत्वारस्तावतां कीर्त्तिता जिनैः । जम्ब्वश्चतस्रः पूर्वस्यां, महिषीणां चतसृणाम् ॥ २१ ॥ सहस्राण्यष्ट चाग्नेय्यां, जम्ब्वोऽभ्यन्तरपर्षदाम् । जम्बूसहस्राणि दश, याम्यां मध्यमपर्षदाम् ॥ २२ ॥ ता द्वादश सहस्राणि, नैर्ऋत्यां बाह्यपर्षदाम् । प्रत्यक् च सप्त सेनान्यां, परिक्षेपे द्वितीयके ॥ २३ ॥ जम्बूसहस्राश्चत्वारः, प्रत्येकं दिक्चतुष्टये । सहस्राः षोडशेत्यात्मरक्षकाणां तृतीयके ॥ २४ ॥ यद्यप्युक्तं वलययोर्मानं नैवानयोः स्फुटम् । पूर्वाचार्यैरुचतादेः, प्राज्ञैर्ज्ञेयास्तथापि हि ॥ २५ ॥ श्रीदेवीपद्मदृष्टान्तात्प्रथमाद्वलयादिह । अर्द्धार्द्धमानका जम्ब्वोऽनयोर्वलययोर्द्वयोः ॥ २६ ॥ तथाहुर्जिनभद्रगणिपादाः क्षेत्रसमासे—"पउमद्दहे सिरीए जो परिवारो कमेण निद्दिट्ठो । सो चेव य नायव्वो जंबूएऽणाढियसुरस्स ॥ २७ ॥" तथैव जम्बूद्वीपप्रज्ञप्तिवृत्तौ । अत्राप्येकैकया पङ्क्त्या, परिक्षेपे विवक्षिते । न जम्बूनामवकाशः, श्रीदेवीपद्मवद्भवेत् ॥ २८ ॥ तदिहापि परिक्षेपजातयस्तिस्र इत्यहो । ज्ञेयं जम्बूपङ्क्तयस्तु, यथायोगमनेकशः ॥२९॥ स चैवं सपरीवारो, जम्बवृक्षः समन्ततः । काननैर्योजनशतमानैस्त्रिभिः समावृतः ॥३०॥

भवनचैत्यानि परिवारजम्ब्वः

२०

२५

॥ २०३ ॥

२७

आन्तरेण मध्यमेन, बाह्येन च यथाक्रमम् । तत्रादिमे वने पूर्वादिषु दिक्षु चतसृषु ॥ ३१ ॥ पञ्चाशतं योज-
नानि, वगाह्यात्रान्तरे महत् । एकैकं भवनं जम्बूशाखाभवनसन्निभम् ॥ ३२ ॥ भवनेष्वेषु सर्वेषु, प्रत्येकं
मणिपीठिका । तत्रानादृतदेवस्य, शयनीयं श्रमापहम् ॥ ३३ ॥ तस्मिन्नेवादिमवनखण्डेऽखण्डश्रियोज्ज्वले ।
पञ्चाशतो योजनानामैशान्यां समतिक्रमे ॥ ३४ ॥ अत्रान्तरे पुष्करिण्यश्चतस्रः स्युश्चतुर्दिशम् । प्राच्यां पद्मा
दक्षिणस्यां, पद्मप्रभेति नामतः ॥ ३५ ॥ कुमुदाख्या पश्चिमायामुदीच्यां कुमुदप्रभा । सर्वाः क्रोशार्द्धविष्क-
म्भा, एकक्रोशायताश्च ताः ॥ ३६ ॥ धनुःपञ्चशतोद्वेधा, सचतुर्द्वारतोरणाः । वृताः पद्मवेदिकया, वनखण्डेन
चाभितः ॥ ३७ ॥ तासां चतसृणां मध्ये, प्रासादः परिकीर्त्तितः । स च जम्बूवृक्षशाखाप्रासादसदृशोऽभितः
॥ ३८ ॥ एवमस्मिन्नेव वने, वायव्यां दिशि योजनैः । पञ्चाशता पुष्करिण्यश्चतस्रः स्युश्चतुर्दिशम् ॥ ३९ ॥
प्राच्यामुत्पलगुल्माख्या, याम्यां च नलिनाभिधा । स्यादुत्पला पश्चिमायामुदीच्यामुत्पलोज्ज्वला ॥ ४० ॥
अयं जम्बूद्वीपप्रज्ञप्तिसूत्रजीवाभिगमसूत्राभिप्रायः, बृहत्क्षेत्रसमासे तु—'उप्पलभोमा नलिणुज्जलुप्पला उप्प-
ला य बीयंमि' इति वचनात् तृतीयतुर्ययोर्नाम्नि व्यत्ययः प्रथमायां नाम्नि विशेषश्च दृश्यते इति ज्ञेयं । उक्त-
पुष्करिणीतुल्या, एता अपि प्रमाणतः । मध्ये तथैव प्रासादो, जम्बूप्रासादसन्निभः ॥ ४१ ॥ वनेऽस्मिन्नेव
नैर्ऋत्यां, पञ्चाशद्योजनोत्तराः । यथाक्रमं पुष्करिण्यः, प्राच्यादिदिक्चतुष्टये ॥ ४२ ॥ भृङ्गा भृङ्गनिभा किञ्चा-
ञ्जनाऽथ कज्जलप्रभा । मध्ये प्रासाद एतासां, सर्वं मानं तु पूर्ववत् ॥ ४३ ॥ आग्नेय्यां च योजनानां, पञ्चाशतो

५

१०

१४

व्यतिक्रमे । वनेऽत्रैव पुष्करिण्यो, दिक्चतुष्के यथाक्रमम् ॥ ४४ ॥ श्रीकान्ता श्रीमहिता च, श्रीचन्द्रा च, ततः परम् । श्रीनिलयाख्येति शेषं, प्रासादादि तु पूर्ववत् ॥ ४५ ॥ प्रासादेष्वेषु चैकैकमस्ति सिंहासनं महत् । अनादृतस्य देवस्य, क्रीडार्हं सपरिच्छदम् ॥ ४६ ॥ अत्र जम्बूद्वीपप्रज्ञप्तिसूत्रे 'सीहासणा सपरिवारा' इति, जीवाभिगमे च 'सीहासणं अपरिवारं' इति, अस्मिन्नेव वने पूर्वदिग्भाविभवनात्किल । उदीच्यां दक्षिणस्यां चैशानीप्रासादशेखरात् ॥ ४७ ॥ एकः कूटो द्वितीयस्तु, प्राग्भाविभवनादितः । दक्षिणस्यामुदीच्यां चाग्नेयीप्रासादपुङ्गवात् ॥ ४८ ॥ पश्चिमायामथाग्नेयीप्रासादात्पूर्वतोऽपि च । दाक्षिणात्याद्भवनतः, कूटोऽत्रास्ति तृतीयकः ॥ ४९ ॥ दाक्षिणात्यभवनतोऽपरस्यां पूर्वतोऽपि च । प्रासादान्नैर्ऋतीनिष्ठात्तुर्यः कूटो भवेदिह ॥ ५० ॥ प्रासादान्नैर्ऋतीसंस्थादुदीच्यामथ याम्यतः । प्रतीचीनभवनतः, कूटो भवति पञ्चमः ॥ ५१ ॥ प्रतीचीनभवनत, उदीच्यामथ याम्यतः । वायव्यकोणप्रासादात्, षष्ठः कूटो निरूपितः ॥ ५२ ॥ वायव्यकोणप्रासादात्प्राच्यां पश्चिमतोऽपि च । उदग्भवनतस्तत्र, कूटो भवति सप्तमः ॥ ५३ ॥ उदग्भवनतः प्राच्यामथ पश्चिमतोऽपि च । ऐशानकोणप्रासादादत्र कूटोऽष्टमो मतः ॥ ५४ ॥ एवमष्टाप्यमी कूटा, जात्यस्वर्णमयाः स्मृताः । द्वे योजने भूनिमग्ना, योजनान्यष्ट चोच्छ्रिताः ॥ ५५ ॥ विष्कम्भायामतो मूले, योजनान्यष्ट कीर्तिताः । मध्ये षड्द्धं चत्वारि, गोपुच्छाकृतयस्ततः ॥ ५६ ॥ एषां मूले परिक्षेपोऽधिकानि पञ्चविंशतिः । मध्येऽष्टादश मौलौ च, योजनान्यर्कसङ्ख्यया॥५७॥तथोक्तं—पणवीसट्ठारस बारसेव मूले अ मज्झि उवरिं च।सविसेसाइं परिरओ



२०

२५



२८

कूडस्स इमस्स बोद्धवो ॥ ५८ ॥' अयं जम्बूद्वीपप्रज्ञप्तिसूत्राभिप्रायः, जिनभद्रगणिक्षमाश्रमणैस्तु 'अट्ठसहकूड-
सरिसा सवे जंबूणया भणिया' इत्यस्यां गाथायां ऋषभकूटसमत्वेन भणितत्वात् मूले द्वादश योजनानि अष्टौ
मध्ये चत्वारि चोपर्यायामविष्कम्भेनेत्यादि ऊचे, तथैव मलयगिरिपादैर्व्याख्यातमपि, जीवाभिगमसूत्रेऽपी-
त्थमेवैषां मानं दृश्यते इति तत्त्वं बहुश्रुतगम्यमिति ध्येयं । प्रत्येकमेषामुपरि, चैकैकं सिद्धमन्दिरम् । एतच्च
जम्बूविडिमासिद्धायतनसन्निभम् ॥ ५९ ॥ अष्टाप्येते पद्मवरवेदिकावनमण्डिताः । दिगङ्गनानामष्टानां, क्री-
डायै निर्मिता इव ॥ ६० ॥ स्थापना । एवमुक्तस्वरूपाया, अस्या जम्ब्वा महातरोः । नामानि द्वादशैतानि,
प्रज्ञप्तानि जिनेश्वरैः ॥ ६१ ॥ सुदर्शना तथाऽमोघा, सुप्रबुद्धा यशोधरा । भद्रा विशाला सुमनाः, सुजाता
नित्यमण्डिता ॥ ६२ ॥ विदेहजम्बूर्नियता, सौमनस्येति कीर्त्तिता । रत्नमय्या अप्यमुष्या, द्रुमेषु मुख्यतां
विदुः ॥ ६३ ॥ तथोक्तं बहुश्रुताध्ययने—"जहा सा दुमाण पवरा, जंबूनाम सुदंसणा । अणाढियस्स देवस्स,
एवं हवइ बहुस्सुए ॥ ६४ ॥" जम्बूद्वीपपतिर्देवो, वसत्यस्यामनादृतः । जम्बूस्वामिपितृव्यो यः, प्राग्भवे सोऽ-
धुनाऽस्त्यसौ ॥ ६५ ॥ चतुःसामानिकसुरसहस्रसेवितक्रमः । महिषीभिश्चतसृभिः, स्नेहिनीभिः कटाक्षितः
॥ ६६ ॥ पर्षद्भिस्तिसृभिर्जुष्टः, सप्तभिः सैन्यसैन्यपैः । उदायुधैः षोडशभिः, सहस्रैश्चात्मरक्षिणाम् ॥ ६७ ॥
व्यन्तराणां व्यन्तरीणामन्येषामपि भूयसाम् । अनादृतराजधानीवास्तव्यानामधीश्वरः ॥ ६८ ॥ मेरोरुदीच्या-
मन्यत्र, जम्बूद्वीपे महर्द्धिकः । पुर्यामनादृताख्यायां, साम्राज्यं पालयत्यसौ ॥ ६९ ॥

यौ सीमाकारिणौ देवकुरूणां धरणीधरौ । सौमनसविद्युत्प्रभाभिधौ तौ वर्णयाम्यथ ॥ ७० ॥ निषधाद्रेरुत्तरस्यामाग्नेय्यां मन्दराचलात् । प्रतीच्यां मङ्गलावत्या, योऽसौ सौमनसाभिधः ॥ ७१ ॥ देवा देव्यो वसन्त्यत्र, यतः प्रशान्तचेतसः । ततः सौमनसो यद्वा, सौमनसाख्यभर्तृकः ॥ ७२ ॥ तुरङ्गस्कन्धसंस्थानो, गजदन्तसमोऽपि सः । मनोहरो रूप्यमयः, ससकूटोपशोभितः ॥ ७३ ॥ सिद्धायतनमाद्यं स्यात्, परं सौमनसाभिधम् । सन्मङ्गलावतीकूटं, देवकुर्वभिधं परम् ॥ ७४ ॥ विमलं काञ्चनं चैव, वासिष्ठं कूटमन्तिमम् । प्रमाणं ज्ञेयमेतेषां, हिमवद्गिरिकूटवत् ॥ ७५ ॥ आग्नेय्यामादिमं कूटं, मन्दरासन्नमाहितम् । तस्याग्नेय्यां द्वितीयं तु, तस्याप्याग्नेयकोणके ॥ ७६ ॥ कूटं तृतीयमित्येतत्कूटत्रयं विदिक्स्थितम् । अथो तृतीयादाग्नेय्यामुत्तरस्यां च पञ्चमात् ॥ ७७ ॥ कूटं चतुर्थं प्रज्ञसमेतस्मात्कूटतः परम् । दक्षिणोत्तरया पङ्क्त्या, शेषं कूटत्रयं भवेत् ॥ ७८ ॥ वत्समित्रासुमित्राख्ये, षष्ठपञ्चमकूटयोः । दिक्कुमार्यौ कूटसमाभिधा देवाश्चतुर्षु च ॥ ७९ ॥ अत्र जम्बूद्वीपप्रज्ञप्तिसूत्रे बृहत्क्षेत्रसमासे 'सिरिनिलय' इति क्षेत्रसमासादिषु च सौमनसपञ्चमषष्ठकूटवासिन्यौ सुवत्सावत्समित्राख्ये एव दिक्कुमार्यौ उक्ते, यत्तु जम्बूद्वीपप्रज्ञप्तिसूत्र एव जिनजन्माधिकारे अधोलोकवासिनीनां भोगङ्करादीनामष्टानां दिक्कुमारीणां मध्ये पञ्चमी तोयधारा षष्ठी विचित्रा चेत्युक्तं तदयं लिखितदोषो नामान्तरं वेति सर्वविद्वेद । एतत्कूटाधिपदेवदेवीनां मन्दराचलात् । दक्षिणस्यां राजधान्यो, जम्बूद्वीपेऽपरत्र वै ॥ ८० ॥ उत्तरस्यां निषधाद्रेर्नैर्ऋत्यां कनकाचलात् । पूर्वस्यां पक्ष्मविजयाद्रिर्विद्युत्प्रभाभिधः ॥ ८१ ॥ तपनीयमय-

जम्बूसौमनसविद्युत्प्रभौ

२०

२५



२८

त्वेन, विद्युद्द्दीसिमत्तया । विद्युत्प्रभेशयोगाद्वा, ख्यातो विद्युत्प्रभाख्यया ॥ ८२ ॥ आद्यं सिद्धायतनाख्यं, विद्युत्प्रभं द्वितीयकम् । तृतीयं देवकुर्वाख्यं, ब्रह्मकूटं तुरीयकम् ॥ ८३ ॥ पञ्चमं कनकाभिख्यं, षष्ठं सौवस्तिकाभिधम् । सप्तमं शीतोदाकूटं, स्याच्छतज्वलमष्टमम् ॥ ८४ ॥ हरिकुण्डं तु नवमं, कूटैरेभिरलङ्कृतः । विभाति सानुमानेष, वेदिकावनशोभितः ॥ ८५ ॥ नैर्ऋत्यां मन्दराद् ज्ञेयमाद्यं कूटचतुष्टयम् । षष्ठादुत्तरतस्तुर्यान्नैर्ऋत्यां पञ्चमं मतम् ॥ ८६ ॥ दक्षिणोत्तरया पङ्क्त्या, शेषं कूटचतुष्टयम् । मानतोऽष्टापि कूटानि, हिमवद्गिरिकूटवत् ॥ ८७ ॥ नवमं निषधासन्नं, दक्षिणस्यां किलाष्टमात् । सर्वथा माल्यवद्वाविहरिस्सहसमं स तत् ॥ ८८ ॥ ज्ञेया चमरचञ्चावदेतत्कूटपतेर्हरेः । मेरोरपाच्यां नगरी, जम्बूद्वीपे परत्र सा ॥ ८९ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिसूत्रे–"जहा मालवंतस्स हरिस्सहकूडे तह चेव हरिकूडे, रायहाणी जहा चेव दाहिणेणं चमरचंचारायहाणी तह णेयवा" क्षेत्रसमासवृत्तावपि सा चमरचञ्चाराजधानीवत्प्रत्येयेति । शेषकूटपतीनां तु, नगर्यो विजयोपमाः । जम्बूद्वीपेऽन्यत्र मेरोर्दक्षिणस्यां यथायथम् ॥ ९० ॥ दिक्कुमार्यौ निवसतस्तत्र पञ्चमषष्ठयोः । पुष्पमालाऽनिन्दिताख्ये, शेषेषु पूर्ववत्सुराः ॥९१॥ भोगङ्करादिमा गन्धमादनाद्यद्रिसानुषु । वसन्त्यो दिक्कुमार्योऽष्टौ, या एवमिह भाषिताः ॥ ९२ ॥ शैलेष्वमीषु क्रीडार्थं, तासां वासो भवेद् ध्रुवम् । वसन्ति च स्वस्वगजदन्ताधो भवनेष्विमाः ॥ ९३ ॥ एकैकगजदन्ताधो, द्वे द्वे स्तो भवने तयोः । तिर्यग्लोकं व्यतिक्रम्यासुरादिभवनास्पदे ॥ ९४ ॥ अधोलोकनिवासिन्योऽत एवामूः श्रुते मताः । भूशुद्धिसूतिवेश्मादिनियुक्ता जिनजन्मनि ॥९५॥

"यद्यप्युत्तरकुरुवक्षस्कारयोर्यथायोगं सिद्धहरिस्सहकूटवर्जकूटाधिपराजधान्यो यथाक्रमं वायव्यामैशान्यां च यथा प्रागभिहितास्तथा देवकुरुवक्षस्कारयोर्यथायोगं सिद्धहरिकूटवर्जकूटाधिपराजधान्यो यथाक्रममाग्नेय्यां नैर्ऋत्यां च वक्तुमुचितास्तथापि प्रस्तुतसूत्रसंबन्धि यावदादर्शेषु पूज्यश्रीमलयगिरिकृतक्षेत्रविचारवृत्तौ च तथा दर्शनाभावात् अस्माभिरपि राजधान्यो दक्षिणेने"त्यलेखि इति श्रीजम्बूद्वीपप्रज्ञप्तिवृत्तौ । अनयोर्नगयोर्दैर्घ्य-व्यासोच्चत्वादिकं समम् । गन्धमादनसन्माल्यवतोरिव विभाव्यताम् ॥ ९६ ॥ सन्त्यथाभ्यां पर्वताभ्यामङ्क-पालीकृता इव । मेरोर्दक्षिणतो देवकुरवो निषधादुदक् ॥ ९७ ॥ अत्र देवकुरुर्नाम, देवः पल्योपमस्थितिः । वसत्यतस्तथा ख्याता, यद्वेदं नाम शाश्वतम् ॥ ९८ ॥ धनुःपृष्ठव्यासजीवादिकं मानं तु धीधनैः । अत्राप्युत्तर-कुरुवद्विज्ञेयमविशेषितम् ॥९९॥ किन्त्वत्र निषधासन्ना, जीवा कल्प्या विचक्षणैः । विद्युत्प्रभसौमनसायामानुसा-रतो धनुः ॥४००॥ शतान्यष्ट योजनानां, चतुस्त्रिंशद्युतानि च । चतुरः सासिकान् भागान्, व्यतीत्य निषधाचलात् ॥१॥ शीतोदायाः पूर्वतटे, विचित्रकूटपर्वतः । चित्रकूटः परतटे, सामस्त्याद्यमकोपमौ ॥२॥ किन्त्वेतत्स्वामिनोर्नूनं, विचित्रचित्रदेवयोः । जम्बूद्वीपेऽन्यत्र पुर्यौ, मेरोर्दक्षिणतो मताः ॥ ३ ॥ अथैताभ्यां पर्वताभ्यामुत्तरस्याममी स्मृताः । ह्रदाः पञ्चोत्तरकुरुह्रदतुल्याः स्वरूपतः ॥४॥ निषधाचलसंकाशशतपत्रादिशोभितः । निषधाख्यसु-रावासः, प्रथमो निषधह्रदः ॥ ५ ॥ स देवकुरुसंस्थानशतपत्राद्यलङ्कृतः । देवकुर्वमरावासो, ह्रदो देवकुरुः परः ॥ ६ ॥ सूरनामा तृतीयस्तु, ह्रदः सुरसुराश्रितः । सुलसस्वामिकस्तुर्यो, ह्रदः स्यात्सुलसाभिधः ॥ ७ ॥ भूषितः

शतपत्राद्यैर्विद्युदुद्योतपादलैः । विद्युत्प्रभः पञ्चमः स्याद्विद्युत्प्रभाधिदैवतः ॥ ८ ॥ पद्मपद्मपरिक्षेपतत्सङ्ख्याभवनादिकम् । अत्रापि पद्महृदवद्विज्ञेयमविशेषतः ॥९॥ पूर्वपश्चिमविस्तीर्णास्ते दक्षिणोत्तरायताः । प्राक् प्रत्यक् च दशदशकाञ्चनाचलचारवः ॥ १० ॥ काञ्चनाद्रिह्रदेशानामेषां विजयदेववत् । समृद्धानां राजधान्यो, दक्षिणस्यां सुमेरुतः ॥ ११ ॥ विचित्रचित्रौ निषधाद्यावद्दूरे व्यवस्थितौ । विचित्रचित्रशैलाभ्यां, तावता निषधो ह्रदः ॥ १२ ॥ द्वितीयादिह्रदानामप्येवमन्योऽन्यमन्तरम् । तुल्यं तथान्तिमह्रदक्षेत्रपर्यन्तयोरपि ॥ १३ ॥ एताः शीतास्पर्द्धयैव, शीतोदाया द्विधाकृताः । पूर्वापरार्द्धभावेन, सदेवकुरवोऽपि हि ॥ १४ ॥ शीतोदायास्तु यत्प्राच्यां, तत्पूर्वार्द्धमिहोच्यते । शीतोदायाः प्रतीच्यां यदपरार्द्धं तदीरितम् ॥ १५ ॥ तत्रैतासामपरार्द्धमध्यभागे निरूपितः । समानः शाल्मलीवृक्षो, जम्बूवृक्षेण सर्वथा ॥१६॥ किञ्चैतच्छाल्मलीपीठं, ख्यातं रजतनिर्मितम् । प्रासादभवनान्तःस्थाः, कूटा अप्यत्र राजताः ॥ १७ ॥ शिखराकृतिमत्त्वेन, ख्यातोऽयं कूटशाल्मली । वेणुदेवाख्यः सुपर्णजातीयोऽस्य च नायकः ॥ १८ ॥ तथोक्तं स्थानाङ्गसूत्रद्वितीयस्थानके—"तत्थ णं दो महतीमहालया महद्दुमा पण्णत्ता यावत् कूडसामली चेव जम्बू चेव सुदंसणा, तत्थ णं दो देवा महिड्ढिया जाव महासोक्खा पलिओवमठितीया परिवसंति, तं०—गरुले चेव वेणुदेवे अणाढिए चेव जम्बूदीवाहिवती, एतद्वृत्तावपि—गरुडः सुपर्णकुमारजातीयो वेणुदेवो नाम्ना इत्यादि" एवं च नायं सुपर्णकुमाराणां दाक्षिणात्य इन्द्रः संभाव्यते, किन्त्वन्य एव, तस्य हि इन्द्रत्वेन सार्द्धपल्योपमरूपाया उत्कृष्टस्थितेर्न्याय्यत्वात्, अयं तु पल्यो-

पमस्थितिक इति। मतान्तरे तु–क्रीडास्थानमयं वृक्षः, स्यात्सुपर्णकुमारयोः। वेणुदेववेणुदालिसुरयोरुभयोरपि ॥१९॥ तथा चाह सूत्रकृताङ्गचूर्णिकृत् शाल्मलीवृक्षवक्तव्यतावसरे–'तत्थ वेणुदेवे वेणुदाली य वसइ, तयोर्हि तत्क्रीडास्थान'मिति। स्वरूपमुत्तरकुरुव्रतिरश्चां यदीरितम्। आयुःशरीरमानादि, तदत्राप्यनुवर्त्तते ॥ २० ॥ कुरवो द्विविधाः समा इमाः, सुषमाभिः सुतमां परस्परम्। मिलिताः कलहाय मेरुणा, प्रविभक्ता इव मध्यवर्त्तिना ॥ २१ ॥ (वैतालीयं) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः। काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गः ससदशः समाप्तिमगमद्विद्वत्प्रमोदप्रदः ॥ २० ॥

॥ इति श्रीलोकप्रकाशे ससदशः सर्गः समाप्तः। ग्रन्थाग्रं ४१८ ॥ श्रीरस्तु

---

## ॥ अथ अष्टादशः सर्गः प्रारभ्यते ॥

पार्श्वं शङ्खेश्वरोत्तंसं, नत्वा तत्त्वावबोधदम्। स्वरूपं स्वर्णशैलस्य, यथाश्रुतमथोच्यते ॥ १ ॥ उत्तरस्यां स्थितो देवकुरुभ्यः कनकाचलः। उत्तराभ्यः कुरुभ्यश्च, दक्षिणस्यां प्रतिष्ठितः ॥ २ ॥ प्रत्यक् पूर्वविदेहेभ्यः, प्राक् पश्चिमविदेहतः। रत्नप्रभाचक्रनाभिरिव मध्येऽस्त्यवस्थितः ॥ ३ ॥ निमित्तहेतोर्भुवनपर्यायभाण्डसंभवे।



२०

॥२०७॥

२५

२६

भ्रमतः कालचक्रस्य, भ्रमिदण्ड इवोच्छ्रितः ॥ ४ ॥ मानदण्ड इवोदस्तो, जम्बूद्वीपमीमिषया । तथैव स्थापितो धात्रा, मेयं मत्वाऽभितोल्यकम् ॥ ५ ॥ स्निग्धयोर्द्धीकृतो धात्रीमात्रा स्वाङ्केऽतिकौतुकात् । नीलचूलो बाल इव, प्रभावलयचोलकः ॥ ६ ॥ चन्द्रार्कग्रहनक्षत्रतारावृषभसंततेः । भ्रमन्त्या मनुजक्षेत्रे, मेढीदण्ड इवाहितः ॥ ७ ॥ नीलवन्निषधोन्मत्तदन्तिनोर्युद्ध्यतोर्मिथः । मध्ये सीमास्तम्भ इव, गजदन्ताद्रिदन्तयोः ॥ ८ ॥ तिर्यग्लोकमहाब्जस्य, स्पष्टाष्टाशादलश्रियः । बीजकोश इवान्तःस्थः, परागभरपिञ्जरः ॥ ९ ॥ जम्बूद्वीपोरुपोतस्य, मुक्तस्य लवणार्णवे । कूपस्तम्भ इवोत्क्षिप्तः, प्रभासितपटाञ्चितः ॥ १० ॥ न्यस्तपादो भद्रशालकाननास्तरणोपरि । पश्यन्निवोर्ध्वन्दमोऽयं, नगेन्द्रः सेविनो नगान् ॥ ११ ॥ नरक्षेत्रकटाहेऽस्मिन्नानापदार्थपायसम् । पचतो विधिसूदस्य, दर्वीदण्ड इवोन्नतः ॥ १२ ॥ प्रादुश्चूलः सौमनसोत्तरीयोऽशुजलप्लुतः । देवार्चक इवोन्नन्दिनन्दनारामधौतिकः ॥ १३ ॥ एकादशभिरादिकुलकं । स चैकया पद्मवरवेदिकया परिष्कृतः । वनेन चाभितो नानारत्नज्योतिःप्रभासुरः ॥ १४ ॥ सहस्रान्नवनवतिं, योजनानां स उन्नतः । योजनानां सहस्रं चावगाढो वसुधान्तरे ॥ १५ ॥ लक्षयोजनमानोऽसौ, सर्वाग्रेण भवेदिति । चत्वारिंशदधिकानि, चूलाया योजनानि तु ॥ १६ ॥ योजनानां सहस्राणि, दशान्या नवतिस्तथा । योजनस्यैकादशांशा, दश मूलेऽस्य विस्तृतिः ॥ १७ ॥ अयं जम्बूद्वीपप्रज्ञप्तिसूत्रबृहत्क्षेत्रसमासाभिप्रायः, श्रीसमवायाङ्गे तु 'मंदरे णं पव्वए

मूले दस जोअणसहस्साइं विक्खंभेणं पण्णत्ते' इतिज्ञेयं, एकत्रिंशत्सहस्राणि, शता नव दशाधिकाः। योजनानां त्रयश्चैकादशांशाः परिधिस्त्विह ॥ १८ ॥ योजनानां सहस्राणि, दशास्य समभूतले। सहस्रमेकं शिखरे, व्यासश्चलोपलक्षिते ॥ १९ ॥ एकत्रिंशत्सहस्राणि, योजनानां शतानि षट्। त्रयोविंशत्यधिकानि, परिधिः समभूतले ॥ २० ॥ ऊर्ध्वं च परिधिस्तस्य, योजनानां भवेद्गिरेः। सहस्राणि त्रीणि चैकं, द्वाषष्ट्याऽभ्यधिकं शतम् ॥ २१ ॥

अथ सर्वत्र विष्कम्भज्ञानाय करणं—सहस्रयोजनव्यासान्मेरोरुपरिभागतः। यत्रोत्तीर्य योजनादौ, विष्कम्भो ज्ञातुमिष्यते ॥२२॥ तद्योजनप्रभृत्येकादशभिः प्रविभज्यते। लब्धे सहस्रसंयुक्ते, व्यासोऽस्य वाञ्छितास्पदे ॥२३॥ यथाऽधो नवनवतिं, सहस्राण्यूर्ध्वभागतः। अतीत्यात्र प्रदेशे चेद्विष्कम्भं ज्ञातुमिच्छसि ॥२४॥ तदेतैर्नवनवतिसहस्रै रुद्रभाजितैः। सहस्रान्नव संप्रासान्, सहस्रसहितान् कुरु ॥ २५ ॥ एवं दश सहस्राणि, जातानि धरणीतले। विष्कम्भो मेरुशैलस्य, सर्वत्रैवं विभाव्यताम् ॥ २६ ॥ अथवा प्रकारान्तरेणेदमेव करणं—मूलाद्यत्र योजनादावुत्पत्य ज्ञातुमिष्यते। व्यासस्तस्मिन् योजनादौ, विभक्ते रुद्रसंख्यया ॥ २७ ॥ यल्लब्धं तन्मू-

१ दृश्यमानमेरुमूले, समभूतलभूभागे इत्यर्थः, अधोऽवगाढस्य सहस्रस्य त्यक्तत्वात् सैकादशदशांशनवतियोजनपातः सुखावसेयः, एकादशांशत्रुटेश्चूलामूले सहस्रमानस्य च तत्रापि संमतत्वात, वस्तुतस्तु मूले इति पाठ एव तत्र नास्ति, रुचकनाभिसूत्रे परिधिसूत्रेऽत्रापि च तत्र धरणितलस्यैव स्पष्टो ग्रहः।


१५
२०
२४

लसत्काद्विस्ताराच्छोधयेद्बुधः । यच्छेषं तन्मितस्तस्य, व्यासोऽभीष्टस्थले यथा ॥ २८ ॥ कन्दात्सहस्रमुत्पत्य,
व्यासं जिज्ञाससे यदि । सहस्रमेकादशभिर्भज लब्धमिदं पुनः ॥ २९ ॥ नवतिर्योजनान्यंशा, दश चैकादशा-
त्मकाः । कन्दव्यासाच्छोधयेदं, ततः शेषाणि यानि तु ॥ ३० ॥ योजनानां सहस्राणि, दशैतावान्महीतले ।
विष्कम्भः स्वर्णशैलस्य, सर्वत्रैवं विभाव्यताम् ॥ ३१ ॥ व्यासानुसारेण सर्वत्रोच्चत्वज्ञानाय करणं–यावान् यत्रा-
स्य विस्तारो, निश्चितो भूतलादिषु । तस्मिन्मूलस्य विस्ताराच्छोधिते यत्तु शिष्यते ॥ ३२ ॥ गुण्यं तदेकादश-
भिर्यद्भवेत्तत्प्रमाणतः । उच्चत्वमस्य विष्कम्भस्यानुसारेण तद्यथा ॥ ३३ ॥ योजनानां सहस्राणि, दश व्यासो-
ऽस्य भूतले । मूलविष्कम्भतस्तेषु, विशोधितेष्वदः स्थितम् ॥ ३४ ॥ नवतिर्योजनान्यंशा, दश चैकादशा-
त्मकाः । अस्मिन्नेकादशगुणे, सहस्रमियमुच्चता ॥ ३५ ॥ मूलभूतलयोर्मध्ये, सर्वत्रैवं विभाव्यताम् । विस्तार-
स्यानुसारेण, तुङ्गत्वमीप्सितास्पदे ॥ ३६ ॥ अथ सर्वत्र विष्कम्भवृद्धिहानिज्ञानाय करणं–उपरितने विस्तारे-
ऽधस्तनविस्तारतः कृते दूरम् । तन्मध्यवर्त्तिशैलोच्छ्रयेण शेषे हृते विदुषा ॥ ३७ ॥ यल्लब्धं तदुभयतो वृद्धि-
र्गिरिमौलितो ह्यधःपतने । तावत्येव च हानिर्मौलावारोहणेऽधस्तः ॥ ३८ ॥ आर्यायुग्मम् ॥ तथाहि–साहस्रे
( १००० ) मौलिविष्कम्भे, कन्दव्यासाद्विशोधिते । ( १००९० $\frac{१०}{११}$ ) शेषं नवत्यधिकानि, शतानि नव-
तिः स्थितम् ॥ ३९ ॥ ( ९०९० $\frac{१०}{११}$ ) अंशा दशैकादशोत्थाश्चैषां कर्त्तुं सवर्णनम् । योजनानां राशि-
मेकादशभिर्गणयेद्बुधः ॥ ४० ॥ भागान् दशोपरितनान्, क्षिपेज्जाता इमे ततः । लक्षं ( १००००० ) भाज्य-

राशिमेनं, क्वचित्संस्थापयेद्बुधः ॥ ४१ ॥ नगोच्छ्रयो लक्षरूपो, भाजको रुद्रसंगुणः । लक्षाण्येकादश जातस्तं भागार्थमधो न्यसेत् ॥ ४२ ॥ ( $\frac{1}{11}$ शू० ) अल्पत्वेन विभाज्यस्य, भूयस्त्वाद्भाजकस्य च । भागाप्राप्त्याऽपवर्त्यैते, लक्षेण भाज्यभाजकौ ॥ ४३ ॥ उपर्येकः स्थितोऽधस्तादेकादश स्थितास्ततः । लब्ध एकादशभागो $\frac{1}{11}$, योजनं योजनं प्रति ॥ ४४ ॥ यद्वा भाज्यभाजकयोरुभयोर्लक्षरूपयोः । राशिर्भाज्योऽंशरूपोऽस्ति, भाजको योजनात्मकः ॥ ४५ ॥ प्रतियोजनमेकोऽंशस्तत्सुखेनैव लभ्यते । इयं मेरोरुभयतो, वृद्धिहानी निरूपिते ॥ ४६ ॥ ज्ञातुमिष्टे वृद्धिहानी, तत्र यद्येकपार्श्वतः । द्वाविंशतिविभक्तस्य, योजनस्य लवस्तदा ॥ ४७ ॥ ततोऽयं भावः—यावदुत्पत्यते कन्दादङ्गुलयोजनादिकम् । एकादशस्तस्य भागो, कन्दव्यासात्क्षयं व्रजेत् ॥ ४८ ॥ तथाहि—एकादशस्वङ्गुलेषु, समुत्क्रान्तेषु मूलतः । क्षीयते मूलविष्कम्भात्, संपूर्णमेकमङ्गुलम् ॥ ४९ ॥ योजनेष्वपि तावत्सु, समुद्यातेषु मूलतः । क्षीयते मूलविष्कम्भात्संपूर्णमेकयोजनम् ॥ ५० ॥ एवं योजनशतसहस्रेष्वपि भाव्यं । अत एव योजनानां, सहस्रे मूलतो गते । नवतिर्योजनान्यंशा, एकादशोद्भवा दश ॥ ५१ ॥ एतावानेकादशोऽंशः, सहस्रस्य क्षयं गतः । ततः सहस्राणि दश, विष्कम्भो धरणीतले ॥ ५२ ॥ एकादशस्वेकादशस्वतिक्रान्तेषु भूमितः । सहस्रेषु किलैकैकं, सहस्रं व्यासतो ह्रसेत् ॥५३॥ एवं च नवनवतेः, सहस्राणामतिक्रमे । शिरोभागेऽस्य विष्कम्भः, सहस्रमवशिष्यते ॥ ५४ ॥ स्थापना । यद्वा

वृद्धिहानी

२०

२५
॥ २०९ ॥
२७

कन्दाद्योजनानां, लक्षेऽतीते शिरस्तले । लक्षस्यैकादशो भाग, एतावान् परिहीयते ॥५५॥ नवतिर्योजनशता-न्यधिका नवतिस्तथा । अंशा दशैकादशोत्थाः, सहस्रं शिष्यते ततः ॥ ५६ ॥

प्रत्येकं परितः पञ्चशतविस्तृतयोर्ननु । नन्दनसौमनसयोः, सद्भावान्मेखलाद्वये ॥ ५७ ॥ योजनानां सहस्रस्य, द्विर्भवेद्युगपत् त्रुटिः । कथमेकादशभागहानिस्तदुपपद्यते ? ॥५८॥ युग्मम् । अत्रोच्यते कर्णगत्या, समाधेयमिदं बुधैः । का कर्णगतिरित्येवं, यदि पृच्छसि तच्छृणु ॥५९॥ कन्दादारभ्य शिखरं, यावत्तदुभयस्पृशि । दत्तायां दवरिकायां, स्थिरहस्तेन धीमता ॥ ६० ॥ अपान्तराले यत् क्वापि, कियदाकाशमास्थितम् । तत्समग्रं कर्णगत्या, मेरोराभाव्यमित्यतः ॥ ६१ ॥ तत्प्रकल्प्य मेरुतया, प्राहुर्गणितकोविदाः । सर्वत्रैकादशभागपरिहाणिं यथोदिताम् ॥ ६२ ॥ अयं चार्थः श्रीजिनभद्रगणिक्षमाश्रमणपूज्यैरपि विशेषणवत्यां लवणोदधिघनगणितनिरूपणावसरे दृष्टान्तद्वारेण ज्ञापित एवेति । अतोऽयं मेखलायुग्माविवक्षया क्रमात्तनुः । मूले च विस्तृतः सुष्ठूदस्तगोपुच्छसंस्थितः ॥ ६३ ॥

अथात्र त्रीणि काण्डानि, वर्त्तन्ते कनकाचले । काण्डं विभागो नियतविशिष्टपरिणामवान् ॥ ६४ ॥ चतुर्विधं काण्डमाद्यं, मृत्तिकाबहुलं क्वचित् । पाषाणबहुलं वज्रबहुलं शर्करामयम् ॥ ६५ ॥ काण्डं द्वितीयमप्येवं, चतुर्द्धाऽस्य निरूपितम् । अङ्कजं स्फाटिकं क्वापि, सौवर्णं राजतं तथा ॥ ६६ ॥ जात्यजाम्बूनदमयं, तृतीयं काण्डमीरितम् । त्रयाणामपि काण्डानां, परिमाणमथोच्यते ॥ ६७॥ सहस्रयोजनोन्मानमाद्यमारभ्य कन्दतः ।

त्रिषष्टिश्च सहस्राणि, द्वितीयं समभूतलात् ॥ ६८ ॥ ततस्तृतीयं षट्त्रिंशत्सहस्रावधि कीर्त्तितम् । एवं काण्डैस्त्रिभिस्तस्य, लक्षमेकं समाप्यते ॥ ६९ ॥ अयं जम्बूद्वीपप्रज्ञप्तिसूत्राभिप्रायः, समवायाङ्गे तु अष्टत्रिंशत्तमे समवाये द्वितीयविभागोऽष्टात्रिंशद्योजनसहस्राण्युच्चत्वेन भवतीत्युक्तमिति [1]ज्ञेयं । चतुर्विधत्वे नन्वेवमाद्यद्वितीयकाण्डयोः । मृत्तिकादिविभागानां, न पृथक्काण्डता कथम् ? ॥ ७० ॥ अत्रोच्यते–पृथ्व्यादिवस्तुजत्वेऽपि, नैयत्येनोक्तकाण्डयोः । पृथ्व्यादिरूपभागानामविवेकान्न काण्डता ॥ ७१ ॥

चतुर्भिश्चायमभितो, वनखण्डैरलङ्कृतः । दानशीलतपोभावैर्जैनधर्म इवोन्नतः ॥ ७२ ॥ तत्र भूमौ भद्रशालं, क्रमान्मेखलयोर्द्वयोः । नन्दनं सौमनसं च, शिखरे पण्डकं वनम् ॥ ७३ ॥ तत्राद्यं भद्रशालाख्यं, मेरोः पश्चिमपूर्वतः । द्वाविंशतिर्द्वाविंशतिः, सहस्राण्यायतं मतम् ॥ ७४ ॥ सार्द्धे द्वे योजनशते, दक्षिणोत्तरविस्तृतम् । स्थितं मेरुं परिक्षिप्य, वलयाकृतिनाऽऽत्मना ॥७५॥ अत्रेयमुपपत्तिः–पूर्वस्यां पश्चिमायां वा, य आयामोऽस्य वर्णितः । सोऽष्टाशीत्या विभक्तः सन्, विस्तारोऽत्रैकपार्श्वतः ॥ ७६ ॥ किञ्च–उदीच्यो दाक्षिणात्यो वा, विस्तारोऽस्य वनस्य यः । सोऽष्टाशीत्या ताडितः सन्नायामोऽस्यैकपार्श्वतः ॥ ७७ ॥ भद्रशालवनं चैतदष्टधा विहितं किल । शीतोदया शीतया च, गजदन्ताद्रिमेरुभिः ॥ ७८ ॥ तथाहि–एको भागो मन्दरस्य, प्राच्यां

काण्डवनानि

२०

२५

२६

---

[1] वहिर्दृश्यमेर्वपेक्षया द्वितीयः, तथा च मूलापेक्षया तृतीयः, कर्णदवरिकापेक्षया च ग्रहणं उच्चत्वस्य, दवरिकान्तौ च सौमनसबाह्यपरिधौ चूलामध्ये च, व्यवहारेण साधिकसप्तत्रिंशत्यपि तथोक्तिर्न विरुद्धा ।

पश्चिमतः परः । विद्युत्प्रभसौमनसमध्येऽपाच्यां तृतीयकः ॥ ७९ ॥ तुर्यश्चोत्तरतो माल्यवद्गन्धमादनान्तरे । भागाः सर्वेऽप्यमी शीताशीतोदाभ्यां द्विधा कृताः ॥ ८० ॥ तथैवं–उदीच्यांशो द्विधा चक्रे, शीतया प्राक्प्रवृत्तया । प्राचीं प्रति प्रस्थितया, प्राक्खण्डोऽपि द्विधा कृतः ॥ ८१ ॥ शीतोदया याम्यखण्डो, द्विधोदग्गतया कृतः । द्विधा पश्चिमखण्डोऽपि, कृतः प्रत्यक्प्रवृत्तया ॥ ८२ ॥ इत्येवमष्टभागेऽस्मिन्, मेरोर्दिक्षु चतसृषु । सिद्धायतनमेकैकं, पञ्चाशद्योजनोत्तरम् ॥ ८३ ॥ उक्तान्येतानि हिमवच्चैत्यतुल्यानि सर्वथा । स्वरूपतो मानतश्च, सेवितानि सुरासुरैः ॥ ८४ ॥ विदिक्षु पुनरेकैकः, प्रासादस्तावदन्तरे । योजनानां पञ्च शतान्युच्चोर्द्ध्वविस्तृतायतः ॥ ८५ ॥ चतुर्दिशं चतसृभिस्ते वापीभिरलङ्कृताः । योजनानि दशोद्विद्धास्ताः षोडशापि वापिकाः ॥ ८६ ॥ पञ्चाशद्योजनायामा, आयामार्द्धं च विस्तृताः । स्वरूपतो नामतश्च, जम्बूवापीसमाः समाः ॥ ८७ ॥ आग्नेय्यामथ नैर्ऋत्यां, यौ प्रासादौ प्रतिष्ठितौ । तौ सौधर्मसुरेन्द्रस्य, तदर्हासनशालिनौ ॥ ८८ ॥ वायव्यामथ चैशान्यां, यौ प्रासादौ प्ररूपितौ । तावीशानसुरेन्द्रस्य, तद्योग्यासनशोभनौ ॥ ८९ ॥ अष्टौ दिग्गजकूटानि, वनेऽस्मिन् जगदुर्जिनाः । गजाकृतीनि कवयो, यान्याहुर्दिग्गजा इति ॥ ९० ॥ पद्मोत्तरो नीलवांश्च, सुहस्त्यथाञ्जनागिरिः । कुमुदश्च पलाशश्च, वतंसो रोचनागिरिः ॥ ९१ ॥ अन्ये तु रोचनागिरिस्थाने रोहणागिरिं पठन्ति । मेरोरुत्तरपूर्वस्यां, शीतायाः सरितः पुनः । गच्छन्त्याः प्रागभिमुखमुत्तरस्यामिहादिमः ॥ ९२ ॥ प्रादक्षिण्यक्रमेणाथ, मेरोर्दक्षिणपूर्वतः । शीतायाः प्राक्प्रवृत्ताया, दक्षिणस्यां च नीलवान्

॥ ९३ ॥ मेरोर्दक्षिणपूर्वस्यां, शीतोदायाश्च पूर्वतः । मेरोर्दक्षिणदिक्स्थायाः, सुहस्ती नाम दिग्गजः ॥ ९४ ॥
अञ्जनो नाम दिग्नागो, नैर्ऋत्यां मेरुभूधरात् । शीतोदायाः पश्चिमतः, प्रयान्त्या उत्तरां प्रति ॥ ९५ ॥ दिग्नागः
कुमुदोऽप्येवं, नैर्ऋत्यामेव मेरुतः । शीतोदाया दक्षिणतः, प्रयान्त्या वारुणीं प्रति ॥९६ ॥ उत्तरापरतो मेरोः,
पलाशो नाम दिग्गजः । पश्चिमाभिमुखं यान्त्याः, शीतोदाया उदक् च सः ॥ ९७ ॥ अथावतंसकोऽप्येवं,
वायुकोणे सुमेरुतः । स शीतायाः पश्चिमतः, प्रयान्त्या दक्षिणां प्रति ॥९८ ॥ मेरोरुत्तरपूर्वस्यामष्टमो रोचना-
चलः । दक्षिणाभिमुखं यान्त्याः, शीतायाः पूर्वतश्च सः ॥ ९९ ॥ एकैकस्यां विदिश्येवं, द्वौ द्वौ कूटौ निरू-
पितौ । प्रासादसिद्धायतनान्तरालेषु किलाष्टसु ॥ १०० ॥ तथाहि वृद्धसंप्रदायः—भद्रशालवने मेरोश्चतस्रोऽपि
दिशः किल । नदीप्रवाहै रुद्धास्तद्दिक्ष्वेवार्हद्गृहाणि न ॥ १ ॥ किंतु नद्यन्तिकस्थानि, भवनानि किलार्हताम् ।
गजदन्तसमीपस्थाः, प्रासादाश्च विडौजसाम् ॥ २ ॥ तदन्तरालेष्वष्टासु, करिकूटा यथोदिताः । दर्शितः
स्थाननियमस्तत्राप्येष विशेषतः ॥३॥ बहिरुत्तरकुरुभ्यो, मेरोरुत्तरपूर्वतः । शीताया उत्तरदिशि, प्रासादः परिकी-
र्तितः ॥ ४ ॥ मेरोः प्राच्यां दक्षिणतः, शीतायाः सिद्धमन्दिरम् । एतस्योभयतः कूटौ, द्वौ प्रज्ञप्तौ जिनेश्वरैः
॥ ५ ॥ बहिर्देवकुरूणां च, मेरोर्दक्षिणपूर्वतः । शीताया दक्षिणदिशि, प्रासादः कीर्तितो जिनैः ॥ ६ ॥ मध्ये
देवकुरूणां वै, शीतोदायाश्च पूर्वतः । मेरोर्दक्षिणतः सिद्धायतनं स्मृतमागमे ॥ ७ ॥ अस्याप्युभयतः कूटौ,
समश्रेण्या व्यवस्थितौ । धुर्यौ युगन्धरस्येव, महीन्द्रस्येव चामरौ ॥ ८ ॥ शीतोदाया दक्षिणतो, नैर्ऋत्यां

दिग्गजादयः

२०

२५



२८

स्वर्णभूभृतः । बहिर्देवकुरूणां च, प्रासादः प्राग्वदाहितः ॥ ९ ॥ शीतोदाया उत्तरतः, पश्चिमायां सुमेरुतः । सिद्धानां सदनं कूटौ, तस्याप्युभयतः स्थितौ ॥ १० ॥ शीतोदाया उत्तरतो, वायुकोणे सुमेरुतः । बहिरुत्तर-कुरुभ्यः, प्रासादः सुरभूभृतः ॥ ११ ॥ पूर्वस्यामथ शीताया, उदीच्यां मन्दराचलात् । उत्तरासां कुरूणां च, मध्येऽस्ति सिद्धमन्दिरम् ॥ १२ ॥ कूटौ द्वौ तदुभयतो, मेरोः सर्वेऽप्यमी स्थिताः । विहारकूटप्रासादाः, पञ्चा-शद्योजनान्तरे ॥ १३ ॥ योजनानां पञ्च शतान्युच्चैस्त्वेन भवन्त्यमी । गव्यूतानां पञ्चशतीं, निमग्नाश्च धरोदरे ॥ १४ ॥ मूले पञ्चयोजनानां, शतान्यायतविस्तृताः । मध्ये त्रीणि पञ्चसप्तत्यधिकानि शतानि च ॥ १५ ॥ उपर्यर्द्धतृतीयानि, शतानि विस्तृतायताः । कूटा इमे वर्षधरगिरिकूटसमा इति ॥ १६ ॥ सर्वेऽमी वनखण्डेन, पद्मवेदिकयाऽन्विताः । सिंहासनाढ्यस्वस्वेशप्रासादभ्राजिमौलयः ॥ १७ ॥ द्वाषष्टिं योजनान्येते, प्रासादा विस्तृतायताः । एकत्रिंशद्योजनोच्चा, रम्या विविधरत्नजाः ॥ १८ ॥ एकपल्यायुषस्तेषु, स्वस्वकूटसमाभिधाः । क्रीडन्ति नाकिनः स्वैरं, दिक्कुम्भिकूटनायकाः ॥ १९ ॥ स्वस्वकूटविदिक्ष्वेषां, राजधान्यः प्रकीर्त्तिताः । जम्बू-द्वीपेऽन्यत्र यथायोगं विजयदेववत् ॥ २० ॥ एतेषु करिकूटेषु, पूर्वाचार्यैश्चिरन्तनैः । पठ्यन्ते जिनचैत्यानि, स्तोत्रेषु शाश्वतार्हताम् ॥ २१ ॥ जम्बूद्वीपप्रज्ञप्त्यादिसूत्रे तूपलभामहे । न सांप्रतं तत्र तत्त्वं, जानन्ति श्रुत-पारगाः ॥ २२ ॥ अत एवोक्तं रत्नशेखरसूरिभिः स्वोपज्ञक्षेत्रविचारे—"करिकूडकुंडनइदहकुरुकंचणजमलसम-विअद्धेसु । जिणभवणविसंवाओ जो तं जाणंति गीअत्था ॥ २३ ॥"

५

१०

१४

भद्रशालवनस्यास्य, समभूमेरुपर्यथ । स्यात्पञ्चयोजनशतातिक्रमे नन्दनं वनम् ॥ २४ ॥ योजनानां पञ्च शतान्येतद्विष्कम्भतो मतम् । स्थितं मेरुं परिक्षिप्य, वलयाकृतिनाऽऽत्मना ॥ २५ ॥ वाह्याभ्यन्तररूपं हि, विष्कम्भद्वितयं भवेत् । गिरीणां मेखलाभागे, ततोऽत्र द्वयमुच्यते ॥ २६ ॥ एक एकादशभागो, योजनस्यापचीयते । प्रतियोजनमेवं च, पञ्चशत्या व्यतिक्रमे ॥ २७ ॥ लब्धानि पञ्चचत्वारिंशद्योजनानि पञ्चभिः । एकादशांशैर्युक्तानि, त्यज्यन्ते मूलविस्तृतेः ॥ २८ ॥ दशसहस्ररूपायास्तदैतदवशिष्यते । शतानि नवनवतिश्चतुष्पञ्चाशदेव च ॥ २९ ॥ एकादशांशाः षड् वाह्यो, व्यासोऽयं तत्र भूभृतः । दक्षिणोत्तरयोः पूर्वापरयोर्वा वनान्तयोः ॥ ३० ॥ एकत्रिंशद्योजनानां, सहस्राणि चतुःशती । एकोनाशीतिरधिका, परिक्षेपोऽत्र वाह्यतः ॥ ३१ ॥ वाह्ये च गिरिविष्कम्भे, सहस्रयोजनोनिते । स्यादन्तर्गिरिविष्कम्भः, स चायं परिभाव्यते ॥ ३२ ॥ सहस्राणि योजनानामष्टौ नव शतानि च । चतुःपञ्चाशत्तथांशाः, षडेकादशनिर्मिताः ॥ ३३ ॥ सहस्रा योजनान्यष्टाविंशतिस्त्रिशती तथा । षोडशाढ्या तथा भागा, अष्टावेकादशोत्थिताः ॥ ३४ ॥ अन्तः परिरयोऽयं च, भवेदस्मिन् वने गिरेः । वनमेतदथो पद्मवेदिकावनवेष्टितम् ॥ ३५ ॥ एवं चत्वार्यपि वनानि ज्ञेयानि । सिद्धायतनमेकैकं, पूर्वादिदिक्चतुष्टये । सुवर्णशैलतः पञ्चाशद्योजनव्यतिक्रमे ॥ ३६ ॥ विदिक्षु तावतैवास्मात्, प्रासादा भद्रशालवत् । तेषां चतुर्दिशं वाप्यः, प्रत्येकमिति षोडश ॥ ३७ ॥ नन्दोत्तरा तथा नन्दा, सुनन्दा वर्द्धनापि च । ऐशान्यां विदिशि प्राग्वद्वापीनामानि सत्तमाः ॥ ३८ ॥ नन्दिषेणा तथाऽमोघा, गोस्तूपा



२०

२५



२८

च सुदर्शना । आग्नेय्यां विदिशि प्राहुर्वापीनामानि सत्तमाः ॥ ३९ ॥ भद्रा विशाला कुमुदा, तथा च पुण्ड-
रीकिणी । नैर्ऋत्यां विदिशि प्राहुर्वापीनामानि सत्तमाः ॥ ४० ॥ विजया वैजयन्ती चापराजिता जयन्त्यपि ।
वायव्यां विदिशि प्राहुर्वापीनामानि सत्तमाः ॥ ४१ ॥ स्युश्चतस्रश्चतस्रस्ताः, पूर्वादिदिगनुक्रमात् । स्थिताः
परीत्य परितः, प्रासादांस्तान् विदिग्गतान् ॥ ४२ ॥ आग्नेय्यामथ नैर्ऋत्यां, प्रासादौ शक्रभर्तृकौ । वायव्या-
मथ चैशान्यां, तावीशानसुरेशितुः ॥ ४३ ॥ कूटा नव भवन्त्यत्र, नन्दनाख्यं च मन्दरम् । निषधाख्यं च
हिमवत्कूटं रजतनामकम् ॥ ४४ ॥ रुचकं सागरचित्रं, कूटं वज्रबलाभिधम् । पञ्चाशता योजनैः स्युर्मेरोरेतानि
नन्दने ॥ ४५ ॥ पौरस्त्यसिद्धायतनैशानीप्रासादयोः किल । अन्तरे नन्दनं कूटं, तत्र मेघङ्करा सुरी ॥ ४६ ॥
जम्बूद्वीपेऽपरत्रास्या, राजधानी सुमेरुतः । ऐशान्यां विदिशि प्रोक्ता, यथार्हं विजयादिवत् ॥ ४७ ॥ पौरस्त्य-
सिद्धायतनाग्नेयीप्रासादयोः किल । अन्तरे मन्दरं कूटं, तत्र मेघवती सुरी ॥ ४८ ॥ राजधानी पुनरस्याः,
पूर्वस्यां मेरुतो मता । जम्बूद्वीपेऽन्यत्र यथास्थानं विजयदेववत् ॥ ४९ ॥ अपाच्यसिद्धायतनाग्नेयीप्रासादयोः
किल । अपान्तराले निषधं, सुमेधा तत्र देवता ॥ ५० ॥ मेरोर्दक्षिणतस्तस्या, राजधानीं जगुर्बुधाः । सहस्रान्
द्वादशातीत्य, जम्बूद्वीपेऽपरत्र वै ॥ ५१ ॥ अपाच्यसिद्धायतनात्प्रतीच्यां पूर्वतः पुनः । प्रासादान्नैर्ऋतीनिष्ठा-
त्कूटं हैमवतं स्थितम् ॥ ५२ ॥ शोभते स्वामिनी तत्र, देवता मेघमालिनी । जम्बूद्वीपेऽन्यत्र तस्या, मेरुतो
राजधान्यपाक् ॥ ५३ ॥ मेघमालिनीस्थाने हेममालिनीति जम्बूद्वीपप्रज्ञप्तिसूत्रे । दक्षिणस्यां प्रतीचीनात्सिद्धा-

यतनतस्तथा । प्रासादान्नैर्ऋतीनिष्ठादुदीच्यां रजताभिधम् ॥ ५४ ॥ सुवत्सा देवता तत्र, प्रतीच्यां कनका-
चलात् । जम्बूद्वीपेऽन्यत्र तस्या, राजधानी निरूपिता ॥ ५५ ॥ उत्तरस्यां प्रतीचीनात्, सिद्धायतनतस्तथा ।
वायव्यकोणप्रासादादपाच्यां रुचकाभिधम् ॥ ५६ ॥ वत्समित्रा तत्र देवी, पश्चिमायां सुमेरुतः । जम्बूद्वीपे-
ऽन्यत्र तस्या, राजधानी जिनैः स्मृता ॥ ५७ ॥ एवं च जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्तिबृहत्क्षेत्रसमाससूत्रवृत्ति'सि-
रिनिलय'क्षेत्रसमाससूत्रवृत्त्याद्यभिप्रायेण सौमनसगजदन्तसंबन्धिपञ्चमकूटषष्ठकूटवासिन्यौ नन्दनवनपञ्च-
मषष्ठकूटवासिन्यौ च दिक्कुमार्यौ तुल्याख्ये एव, स्थानाङ्गसूत्रकल्पान्तर्वाच्यटीकादिषु तु ऊर्ध्वलोकवासिनीषु
सुवत्सावत्समित्रास्थाने तोयधाराविचित्रे दृश्येते । उदीच्यसिद्धायतनात्प्रतीच्यामथ पूर्वतः । प्रासादाद्वायु-
कोणस्थात्कूटं सागरचित्रकम् ॥ ५८ ॥ बलाहका तत्र देवी, मेरोरुत्तरतः पुनः । जम्बूद्वीपेऽन्यत्र तस्या, राज-
धानीं जिना जगुः ॥ ५९ ॥ उदीच्यसिद्धायतनात्प्राच्यां वायव्यकोणजात् । प्रासादात्पश्चिमायां च, वज्रकू-
टमिहान्तरे ॥ ६० ॥ वज्रसेना तत्र देवी, राजधानी सुमेरुतः । उत्तरस्यामन्यजम्बूद्वीपे ज्ञेया यथागमम् ॥ ६१ ॥
अयं तावत्क्षेत्रसमासबृहद्वृत्त्यभिप्रायः, जम्बूद्वीपप्रज्ञप्तिसूत्रे च सागरचित्रकूटे वज्रसेनादेवी वज्रकूटे बला-
हका देवी पठ्यते इति ज्ञेयं । तथा क्षेत्रसमाससूत्रे 'वारिसेणे'ति पाठः, किरणावल्यादावपि वारिषेणेति,
जम्बूद्वीपप्रज्ञप्तिसूत्रे 'वइरसेणे'ति बृहत्क्षेत्रसमासवृत्तौ च वज्रसेनेति नामेति ज्ञेयं । एता अष्टाप्यूर्ध्वलोकवा-
सिन्यो दिक्कुमारिकाः । सुगन्ध्यम्बुपुष्पवृष्टिं, कुर्वन्ति जिनजन्मनि ॥ ६२ ॥ भद्रशालवनकूटतुल्यत्वेन भव-

वाप्यो दि-
कुमार्यश्च

२०

२५
॥२१३॥

२८

न्त्यमी । मूले पञ्च योजनानां, शतान्यायतविस्तृताः ॥ ६३ ॥ वनेऽपि पंञ्चशतिके, पञ्चाशद्योजनोत्तरम् । स्थितेरेषां स्थितिः किञ्चिदाकाशे बलकूटवत् ॥ ६४ ॥ अत्रैव नन्दनवने, सुधाशनधराधरात् । ऐशान्यां विदिशि प्रोक्तं, बलकूटं जिनेश्वरैः ॥ ६५ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिसूत्रे—मंदरस्स णं पव्वयस्स उत्तरपुरच्छिमेणं एत्थणं णंदणवणे बलकूडे णामं कूडे पण्णत्ते'इत्यादि । विदिशोऽपि विशालाः स्युर्महतो वस्तुनः किल । तद् घटेतावकाशोऽत्र, प्रासादबलकूटयोः ॥ ६६ ॥ अर्द्धेन नन्दनवने, कूटमेतदवस्थितम् । अपरार्द्धेन चाकाशे, तदुक्तं पूर्वसूरिभिः ॥ ६७ ॥ आह—नन्दनवने बलकूटं, नन्दनवनं च पञ्चयोजनशतविस्तीर्णायां मेरोः प्रथममेखलायां ततः कथं तत्र माति ?, बलकूटेन पञ्च योजनशतानि नन्दनवनसत्कानि रुद्धानि, पञ्च योजनशतानि पुनर्मेरोर्बहिराकाशे, ततो न कश्चिद्दोषः। उक्तं च—"नन्दनवण रुंभित्ता पञ्चसए जोअणाइं नीसरिओ । आयासे पञ्चसए रुंभित्ता ठाइ बलकूडो ॥ १ ॥" इति क्षेत्रसमासवृत्तौ, जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्तौ तु—मेरुतः पञ्चाशद्योजनातिक्रमे ईशानकोणे ऐशानप्रासादः, ततोऽपीशानकोणे बलकूटमित्युक्तं, तदभिप्रायं न विद्मः। माल्यवद्गिरिसंबन्धिहरिस्सहाख्यकूटवत् । सर्वात्मनेदं विज्ञेयं, व्यासायामोच्चतादिभिः ॥ ६८ ॥ बलनामा सुरस्तत्र, स्वामी तद्राजधान्यपि । मेरोरुत्तरपूर्वस्यां, जम्बूद्वीपेऽपरे मता ॥ ६९ ॥ बलाख्याया राजधान्याः, स्वरूपमखिलं खलु । हरिस्सहायाः सदृशं, विज्ञेयमविशेषितम् ॥ ७० ॥ गच्छद्भिश्चैत्यनत्यर्थं, पाण्डकेऽदो वनं

५ १० १३

१ ईशानेशानस्यैशानत्वाविरोधात् न भिन्नता, सहस्रदीर्घत्वाच्चास्य न तथात्वाभावः.

पथि । विश्रान्त्यै श्रीयते विद्याचारणैर्मुनिवारणैः ॥ ७१ ॥ स्थापना । प्रत्यागच्छद्भिरानम्य, पाण्डके शाश्वतान् जिनान् । विश्राम्यद्भिर्भूष्यतेऽदो, जङ्घाचारणसाधुभिः ॥ ७२ ॥ अथास्य नन्दनाभिख्यवनस्य समभूतलात् । योजनानां सहस्राणि, द्वाषष्टिं पञ्चभिः शतैः ॥ ७३ ॥ समन्वितान्यतीत्यास्ति, वनं सौमनसाभिधम् । योजनानां पञ्चशतीं, विस्तीर्णं सर्वतोऽपि तत् ॥ ७४ ॥ अस्मिन्नपि परिक्षिप्य, स्थिते मेरुं समन्ततः । वक्ष्ये बाह्यान्तररूपौ, विष्कम्भौ पूर्ववद्गिरेः ॥ ७५ ॥ योजनानां सहस्राणि, चत्वारि द्वे शते अपि । द्विसप्तत्यधिके भागा, अष्टावेकादशोद्भवाः ॥ ७६ ॥ बहिर्वनाद्गिरेर्व्यास, एष पूर्वापरान्तयोः । दक्षिणोत्तरयोर्वापि, तत्रोपपत्तिरुच्यते ॥ ७७ ॥ मेरूच्छ्रयस्यातीतानि, भुवः सौमनसावधि । त्रिषष्टिर्योजनसहस्राणि रुद्रैर्भजेद्बुधः ॥ ७८ ॥ शतानि सप्तपञ्चाशत्सप्तविंशानि तत्र च । लब्धानि योजनान्यंशास्त्रयश्चैकादशोद्भवाः ॥ ७९ ॥ अस्मिन् राशौ भूमिगतान्मेरुव्यासाद्विशोधिते । मानं यथोक्तं जायेत, बाह्याया गिरिविस्तृतेः ॥ ८० ॥ व्यासो वनस्योभयतः, पञ्चपञ्चशतात्मकः । बाह्यव्यासात्तत्सहस्रे, शोधिते शेषमान्तरः ॥ ८१ ॥ स चायं—योजनानां सहस्राणि, त्रीणि किञ्च शतद्वयम् । द्विसप्तत्यधिकं भागा, अष्ट चैकादशोद्भवाः ॥ ८२ ॥ तथा—गिरेर्बाह्यः परिक्षेपस्त्रयोदश सहस्रकाः । एकादशशताः पञ्च, षट् चैकादशजा लवाः ॥ ८३ ॥ अन्तर्गिरिपरिक्षेपः, सहस्राणि दश त्रयः । शताश्चैकोनपञ्चाशास्त्रयो भागाश्च रुद्रजाः ॥ ८४ ॥ एवमुक्ताभिलापेन, ज्ञेया वक्तव्यताऽखिला । अत्रापि नन्दनाभिख्यवनवत्कूटवर्जिता ॥ ८५ ॥ तथैवैकैकमाशासु, विज्ञेयं सिद्धमन्दिरम् । विदिक्षु

बलकूटसौमनसवनादि

२०

२५



२७

पुनरेकैकः प्रासादो वापिकावृतः ॥ ८६ ॥ सुमनाः सौमनसा च, सौमनांसा मनोरमा । ऐशान्यां विदिशि प्रोक्ता, वाप्यः प्राच्यादिदिक्क्रमात् ॥ ८७ ॥ सदुत्तरकुरुर्देवकुरुर्वह्निविदिश्यथ । वाप्यश्चतस्रः क्रमतो, वारिषेणा सरस्वती ॥ ८८ ॥ विशाला माघभद्रा चाभयसेना च रोहिणी । वाप्यश्चतस्रो नैर्ऋत्यां, ज्ञेयाः पूर्वाद्यनुक्रमात् ॥ ८९ ॥ भद्रोत्तरा तथा भद्रा, सुभद्रा च तथाऽपरा । भद्रावतीति वायव्यकोणे वाप्यो यथाक्रमम् ॥९०॥ आग्नेय्यामथ नैर्ऋत्यां, प्रासादौ शक्रभर्तृकौ । ऐशान्यां वायव्यायां च, तावीशानसुरेशितुः ॥ ९१ ॥ एवं वनं सौमनसं, लेशतो वर्णितं मया । वर्णयामि वनमथ, पाण्डुकं शिखरस्थितम् ॥ ९२ ॥ अतीत्योर्ध्वं सौमनसवनस्य समभूतलात् । योजनानां सहस्राणि, षट्त्रिंशतमुपर्यधः ॥ ९३ ॥ प्रज्ञसं पण्डकवनमनेकसुरसेवितम् । चारणश्रमणश्रेणीश्रितकल्पद्रुमाश्रयम् ॥ ९४ ॥ चतुर्नवत्या संयुक्ता, योजनानां चतुःशती । वनस्यास्य चक्रवालविष्कम्भो वर्णितो जिनैः ॥ ९५ ॥ उपपत्तिश्चात्र मेरुमौलेः सहस्रविस्तृतात् । शोधयेच्चूलिकामूलव्यासं द्वादशयोजनीम् ॥ ९६ ॥ अवशिष्टेऽर्द्धीकृते च, यथोक्तमुपपद्यते । मानमस्य मरकतमणिग्रैवेयकाकृतेः ॥ ९७ ॥ यथा मेरुं परिक्षिप्य, स्थिता पूर्ववनत्रयी । परिक्षिप्य स्थितमिह, तथेदं मेरुचूलिकाम् ॥ ९८ ॥ त्रिसहस्री योजनानां, द्वाषष्ट्या संयुतं शतम् । विशेषाभ्यधिकं किञ्चित्परिक्षेपोऽस्य वर्णितः ॥ ९९ ॥ अस्मिन् मेरुचूलिकायाः, पञ्चाशद्योजनोत्तरम् । सिद्धायतनमेकैकं, प्राग्वद्दिशां चतुष्टये ॥ २०० ॥ विदिक्षु पुनरेकैकः, प्रासादो वापिकावृतः । नामान्यासां वापिकानामैशान्यादिविदिक्क्रमात् ॥ १ ॥ पुण्ड्रा पुण्ड्रप्रभा चैव, सुरक्ताख्या

तथापरा । रक्तावतीति चैशानप्रासादे वापिका मताः ॥ २ ॥ क्षीररसा चेक्षुरसा, तथाऽमृतरसाभिधा । वारुणीति किलाग्नेयप्रासादे वापिकाः स्मृताः ॥ ३ ॥ शङ्खोत्तरा तथा शङ्खा, शङ्खावर्त्ता बलाहका । प्रासादे नैर्ऋतीसंस्थे, वापिकाः परिकीर्त्तिताः ॥ ४ ॥ पुष्पोत्तरा पुष्पवती, सुपुष्पा पुष्पमालिनी । वायव्यकोणे वाप्यः स्युः, सर्वाः पूर्वादितः क्रमात् ॥ ५ ॥ आग्नेयनैर्ऋत्यगतौ, प्रासादौ स्तः शतक्रतोः । वायव्यैशानसत्कौ तावीशानेन्द्रस्य वर्णितौ ॥ ६ ॥ चैत्यप्रासादवापीनां, मानं त्रिषु वनेष्वपि । सद्भद्रशालवनवद्विज्ञेयमविशेषितम् ॥७॥ अथास्मिन् पण्डकवनेऽभिषेकार्हाः स्वयम्भुवाम् । शिलाश्चतस्रः प्रज्ञप्ताः, स्नात्रोदकपवित्रिताः ॥ ८ ॥ आद्या पाण्डुशिलानाम्नी, द्वितीया पाण्डुकम्बला । तृतीया च रक्तशिला, चतुर्थी रक्तकम्बला ॥ ९ ॥ अमून्यासां नामानि जम्बूद्वीपप्रज्ञप्तिसूत्रे, क्षेत्रसमासे तु पाण्डुकम्बला १ अतिपाण्डुकम्बला २ रक्तकम्बला ३ अतिरक्तकम्बला ४ एवमासां नामानि पठ्यन्ते । प्राच्यां मेरुचूलिकायाः, प्राक् पर्यन्ते वनस्य च । भात्यर्जुनस्वर्णमयी, शिला पाण्डुशिलाभिधा ॥ १० ॥ सा पूर्वापरविस्तीर्णा, तथोदग्दक्षिणायता । आयामतो योजनानां, शतानि पञ्च कीर्त्तिता ॥ ११ ॥ शतान्यर्द्धतृतीयानि, मध्ये विष्कम्भतो मता । अर्द्धचन्द्राकृतेस्तस्या, मध्ये परमविस्तृतिः ॥ १२ ॥ पूर्वापरः शरत्वेन, व्यासोऽस्याः परमो बुधैः । जीवात्वेन च परमायामस्तु दक्षिणोत्तरः ॥ १३ ॥ परिक्षेपो धनुःपृष्ठतया भाव्यो यथोचितः । तत्तत्करणरीत्या वा, समानेयं शरादिकम् ॥ १४ ॥ चतुर्योजनपिण्डायामस्यां भाति चतुर्दिशम् । तोरणालङ्कृतं कम्रं, सोपानानां त्रयं त्रयम् ॥ १५ ॥

पाण्डुकम्बलादयः

२०

२५



२८

अधिज्यचापाकारा या, वक्रता चूलिकादिशि । ऋजुता स्वस्वदिक्क्षेत्राभिमुखाऽस्या विभाव्यताम् ॥ १६ ॥ अत्यन्तकमनीयायामस्यां वृन्दारकव्रजाः । आसीनाश्च शयानाश्च, विदन्ति परमां मुदम् ॥ १७ ॥ वेदिकावनखण्डाभ्यां, समन्तादियमावृता । काञ्चीदामनीलपरिधानाभ्यामिव कामिनी ॥ १८ ॥ दक्षिणस्यामुदीच्यां च, तस्यां सिंहासने स्थिते । धनुःपञ्चशतव्यासायामे तदर्द्धमेदुरे ॥ १९ ॥ ज्ञेयो ग्रन्थान्तरात्सिंहासनयोरिह वर्णकः । अनावृतस्थलस्थानादेषां चन्द्रोदयं विना ॥ २० ॥ तुल्यत्वादनयोर्व्यासायामाभ्यां चतुरस्रता । चतुरस्रपीठबन्धरूपे ज्ञेये इमे ततः ॥ २१ ॥ उत्तराहे तत्र सिंहासने देवाश्चतुर्विधाः । अभिषिञ्चन्ति कच्छादिविजयाष्टकतीर्थपान् ॥ २२ ॥ सिंहासने दाक्षिणात्ये, विजयेषु किलाष्टसु । वत्सादिकेषु संजातान्, स्नपयन्ति जिनेश्वरान् ॥ २३ ॥ अयं भावः—शिलायाः संमुखं ह्यस्याः, पूर्वस्यां दिशि वर्त्तते । क्षेत्रं पूर्वविदेहाख्यं, विजयास्तत्र षोडश ॥ २४ ॥ उत्कर्षतोऽपि तत्र द्वौ, जायेते युगपज्जिनौ । तत्र शीतोत्तराभाविविजयाष्टकजो जिनः ॥ २५ ॥ सिंहासने सुराधीशैरौत्तराहेऽभिषिच्यते । दाक्षिणात्ये दाक्षिणात्यविजयाष्टकजो जिनः ॥ २६ ॥ एवं भाव्यं पश्चिमायामपि सिंहासनद्वयम् । प्रत्यग्विदेहार्हद्योग्यं, दक्षिणोत्तरयोर्दिशोः ॥२७॥ तदेकैकं दाक्षिणात्योदीच्ययोः शिलयोः किल । यद्भारतैरवतयोरेकैकस्यार्हतो जनिः ॥ २८ ॥ वनस्याथो दाक्षिणात्यपर्यन्ते पाण्डुकम्बला । दक्षिणस्यां दिशि मेरुचूलिकायाः प्रतिष्ठिता ॥ २९ ॥ दक्षिणोत्तरविस्तीर्णा, प्राक्पश्चिमायता च सा । ऋजुताऽस्यादक्षिणस्यां, वक्रता चूलिकादिशि ॥ ३० ॥ उपर्यस्या मध्यभागे, सिंहा-

सनमनुत्तरम् । सुरेन्द्रैस्तत्र भरतजातो जिनोऽभिषिच्यते ॥ ३१ ॥ अमुष्या दक्षिणा मुख्या, सन्मुखं भरतं यतः । ततस्तत्रत्यसार्वस्य, युक्तमत्राभिषेचनम् ॥ ३२ ॥ शेषं तु मानसंस्थानसोपानवेदिकादिकम् । सर्वासामपि विज्ञेयमविशेषेण पाण्डुवत् ॥ ३३ ॥ वर्णतश्चोक्तरूपे द्वे, कुमुदोदरसोदरे । वक्ष्यमाणे पुनः कोकनदविद्रुमवन्धुरे ॥ ३४ ॥ अयं तावज्जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्त्यभिप्रायः, बृहत्क्षेत्रसमाससूत्रवृत्तौ तु सर्वाः श्वेतसुवर्णमय्य उक्ता इति ज्ञेयं । वनपश्चिमपर्यन्ते, शिला रक्तशिलाभिधा । प्रतीच्यां मेरुचूलायास्तपनीयमयी मता ॥ ३५ ॥ पूर्वपश्चिमविस्तीर्णा, सा दक्षिणोत्तरायता । ऋजुताऽस्याः पश्चिमायां, वक्रता चूलिकादिशि ॥ ३६ ॥ स्यात्प्रतीचीसंमुखायामस्यां सिंहासनद्वयम् । जिनजन्माभिषेकार्हं, दक्षिणोत्तरयोर्दिशोः ॥ ३७ ॥ शीतोदोत्तरदिग्भाविपक्ष्मादिविजयाष्टके । संजातोऽर्हन्नौत्तराहसिंहासनेऽभिषिच्यते ॥ ३८ ॥ शीतोदादक्षिणाभाविवप्रादिविजयाष्टके । जातो जिनो दाक्षिणात्यसिंहासनेऽभिषिच्यते ॥ ३९ ॥ उदीच्यां मेरुचूलाया, उदीच्यान्ते वनस्य च । रक्तस्वर्णमयी रक्तकम्बला वर्त्तते शिला ॥ ४० ॥ दक्षिणोत्तरविस्तीर्णा, सा पूर्वपश्चिमायता । उदग् ऋज्वी चूलिकातो, वक्रा तथोत्तरामुखी ॥ ४१ ॥ अस्यां सिंहासनं मध्ये, मणिरत्नमनोहरम् । ऐरावतक्षेत्रजातो, जिनस्तत्राभिषिच्यते ॥ ४२ ॥ एवं मेरुगिरावस्मिन्नभिषेकासनानि षट् । अभिषेकस्तु युगपच्चतुर्णामथवा द्वयोः ॥ ४३ ॥ पूर्वापरविदेहेषु, निशीथेऽर्हज्जनिर्यदा । भरतैरवतक्षेत्रे, मध्याह्नः स्यात्तदा यतः ॥ ४४ ॥ शेषेष्वपि व्यवस्थेयं, तुल्या चतुर्षु मेरुषु । सिंहासनान्यतस्त्रिंशद्भवन्ति सर्वसंख्यया

अभिषेकसिंहासनानि

२०

२५



२८

॥ ४५ ॥ स्थापना । त्रिंशतस्तीर्थराजां तु, युगपन्न जनिर्भवेत् । भरतैरावतविदेहेषु कालविपर्ययात् ॥ ४६ ॥
युक्तैवोक्ता ततः प्राच्यैरर्हतां युगपज्जनिः । उत्कर्षाद्विंशतेरेव, दशानां च जघन्यतः ॥ ४७ ॥ भारतेष्वैराव-
तेषु, कालस्य साम्यतो मिथः । हीनाधिकानां पूर्वोक्तसंख्यातो न जनिर्भवेत् ॥ ४८ ॥ पाण्डुकाख्यवनस्यास्य,
मध्यभागे सुनिश्चिते । चकास्ति चूलिका मेरोर्वर्यवैडूर्यरत्नजा ॥ ४९ ॥ विस्फुरत्पण्डकवनशरावान्तःप्रतिष्ठितः ।
यवारकस्तम्ब इव, भद्रकृज्जिनजन्मनि ॥ ५० ॥ चत्वारिंशद्योजनानि, तुङ्गत्वेन भवेदसौ । द्वादशैव योजनानि, ५
मूले विष्कम्भतो मता ॥ ५१ ॥ मध्ये च योजनान्यष्टौ, चत्वार्युपरि विस्तृता । उदस्तातुच्छगोपुच्छसुस्थसंस्था-
नशालिनी ॥ ५२ ॥ सप्तत्रिंशद्योजनानि, सातिरेकाणि किञ्चन । मूलेऽस्याः परिधिर्मध्ये, साधिका पञ्चविंशतिः
॥ ५३ ॥ साधिकानि द्वादशेषत्परिक्षेप उपर्यथ । व्यासानुसारतो भाव्योऽन्यत्रापि परिधिर्बुधैः ॥ ५४ ॥ अथै-
तस्यां चूलिकायामुत्क्रान्ते योजनादिके । मूलात्तत्पञ्चमलवः, क्षीयते मूलविस्तृतेः ॥ ५५ ॥ मेरोर्यथैकादश-
भिर्योजनैर्योजनं ह्रसेत् । क्षीयते योजनं तद्वत्पञ्चभिर्योजनैरिह ॥ ५६ ॥ उत्क्रान्तायां मूलभागाद्यथा योजन- १०
विंशतौ । विंशतेः पञ्चमो भागः, स्याच्चतुर्योजनात्मकः ॥ ५७ ॥ तस्मिंश्च मूलविष्कम्भादपनीते भवेदिह ।
विष्कम्भो योजनान्यष्टावित्थं सर्वत्र भावना ॥ ५८ ॥ यद्वा मौलेरतिक्रान्तमधो यद्योजनादिकम् । विभक्ते
पञ्चभिस्तस्मिन्, लब्धे चतुर्भिरन्विते ॥ ५९ ॥ जायतेऽभीप्सिते स्थाने, विष्कम्भोऽत्र यथोर्ध्वतः । अप-
क्रान्तौ योजनानां, विंशतेः स विभाव्यते ॥ ६० ॥ विंशतेः पञ्चभिर्भागे, योजनानां चतुष्टयी । लब्धा चतु- १४

र्भिर्युक्ताऽष्टौ, योजनानीति भावना ॥ ६१ ॥ असौ पद्मवेदिकया, परीता काननेन च । सहकारलतेवोच्चैराल-
वालेन राजते ॥ ६२ ॥ एतस्याश्च शिरोभागे, कमनीयमहीतले। प्राप्नुवन्ति परां प्रीतिं, निर्जराः सुखनिर्भराः
॥ ६३ ॥ मध्येऽत्र सिद्धायतनं, तदेकं क्रोशमायतम् । तथा क्रोशार्द्धविस्तारं, देशोनं क्रोशमुन्नतम् ॥ ६४ ॥
अष्टोत्तरशतं तत्र, प्रतिमाः शाश्वतार्हताम् । वैताढ्यचैत्यवत्सर्वं, वक्तव्यमिह वर्णनम् ॥ ६५ ॥ अनेके सुरग-
न्धर्वास्तत्र गायन्ति लीलया । शृण्वन्ति श्रोत्रसुभगं, जिनगीतं सुरेश्वराः ॥ ६६ ॥ जिनाग्रे तत्र नृत्यन्त्यः,
कुर्वन्ति त्रिदशाङ्गनाः । मेरुमौलिस्थमरुतां, वंशारूढनटीभ्रमम् ॥ ६७ ॥ किंचायं मन्दरो १ मेरुः २, सुदर्शनः
३ स्वयंप्रभः ४ । मनोरमो ५ गिरिराजो ६, रत्नोच्चय ७ शिलोच्चयौ ८ ॥ ६८ ॥ लोकमध्यं ९ लोकनाभिः १०,
सूर्यावर्त्तो ११ ऽस्तसंज्ञितः १२ । दिगादि १३ सूर्यावरणा १४ वतंसक १५ नगोत्तमाः १६ ॥ ६९ ॥ एभिः
षोडशभिः ख्यातो, नामभिर्भूधरो भुवि । स्पृशन्नभ्रमदभ्रांशुः, कलाभिरिव चन्द्रमाः ॥ ७० ॥ तत्रापि मन्दर
इति, मुख्यनामैषु नामसु । मन्दराख्यः सुरो ह्यत्र, स्वामी पल्योपमस्थितिः ॥ ७१ ॥ महर्द्धिको निवसति,
ख्यातं तद्योगतो ह्यदः । यद्वेदं शाश्वतं नाम, भरतैरवतादिवत् ॥ ७२ ॥ एवं महाविदेहानां, स्वरूपं लेशतो
मया । कीर्त्तितं कीर्त्तिविजयगुरुक्रमकजालिना ॥७३॥ सततमहतमोक्षं न्यक्षलक्ष्मीनिधानं, जयति जगति वर्षं
श्रीविदेहाभिधानम्। अविरहितमनेकैर्देवदेवैर्नृदेवैरतिबलबलदेवैर्वासुदेवैः सदैव ॥ ७४ ॥ ( मालिनी ) तत्र तीर्थं-
करचक्रवर्त्तिनां, वासुदेवबलदेवयोरपि । स्याज्जघन्यपदतश्चतुष्टयं, ब्रूमहेऽथ परमप्रकर्षतः ॥ ७५ ॥ ( रथोद्धता )


२०
२५

२८

द्वात्रिंशत्तीर्थनाथाः प्रतिविजयमिहैकैकभावेन वोध्या, अष्टाढ्या विंशतिः स्यात्प्रबलहलभृतां शार्ङ्गिणां चक्रिणां च । एकत्रोत्पत्त्ययोगाद्धरिहलधरयोश्चक्रिभिः साकमेवं, व्यत्यासोऽन्योऽन्यमेषामकथि गणधरेन्द्रैः प्रकर्षाप्रकर्षे ॥ ७६ ॥ ( स्रग्धरा ) विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गो निर्गलितार्थसार्थसुभगः पूर्णोऽयमष्टादशः ॥ २७७ ॥

॥ इति श्रीलोकप्रकाशेऽष्टादशः सर्गः समाप्तः ॥ ग्रन्थाग्रं ३०७

---

## ॥ अथैकोनविंशः सर्गः प्रारभ्यते ॥

अथो महाविदेहानामुदक्सीमाविधायकः । भूधरो नीलवान्नाम, स्याद्वैडूर्यमणीमयः ॥ १ ॥ स्वामिनो नीलवान्नाम्नो, योगात्पल्योपमस्थितेः । नीलवानित्यसौ ख्यातो, यद्वेदं नाम शाश्वतम् ॥ २ ॥ जम्बूद्वीपेऽन्यत्र चास्य, मेरोरुत्तरतः पुरी । वक्ष्यमाणसुराणामप्येवं पुर्यायुरादिकम् ॥ ३ ॥ दक्षिणोत्तरविस्तीर्णः, स पूर्वपश्चिमायतः । सर्वमस्य निषधवद्, ज्ञेयं धनुःशरादिकम् ॥ ४ ॥ किंतु जीवा दक्षिणस्यामुत्तरस्यां शरासनम् । दक्षिणाभिमुखो बाण, एवमग्रेऽपि भाव्यताम् ॥ ५ ॥ दीप्रप्रभैरयं कूटैर्नवभिः शोभितोऽभितः । ब्रह्मव्रतश्रुतस्कन्ध, इव गुप्तिनिरूपणैः ॥ ६ ॥ तत्र सिद्धायतनाख्यं, समुद्रासन्नमादिमम् । द्वितीयं नीलवत्कूटं, नील-

५

१०

१३

विशेषितम् ॥ २३ ॥ ह्रदेऽस्मिन्मूलकमलं, चतुर्योजनसंमितम् । तदर्द्धार्द्धप्रमाणानि, पद्मानां वलयानि षट् ॥२४॥ पल्योपमस्थितिस्तत्र, कीर्त्तिता कीर्त्तिदेवता । भवनादिस्थितिस्त्वस्याः, श्रीदेव्या इव भाव्यताम् ॥ २५ ॥ इति नीलवान् पर्वतः ॥ स्थापना ॥

उत्तरस्यां नीलवतो, दक्षिणस्यां च रुक्मिणः । राजते रम्यकक्षेत्रं, रम्यकामरभर्तृकम् ॥ २६ ॥ स्वर्णमाणिक्यखचितैर्भूप्रदेशैर्मनोरमैः । नानाकल्पद्रुमै रम्यतयेदं रम्यकाभिधम् ॥ २७ ॥ परमायामरूपाऽस्य, प्रत्यञ्चा हरिवर्षवत् । किंत्वत्र सा दक्षिणस्यामुत्तरस्यां शरासनम् ॥ २८ ॥ इषुबाहाक्षेत्रफलाद्यपीह हरिवर्षवत् । क्षेत्रानुभावकालादिस्वरूपं तद्वदेव च ॥ २९ ॥ क्षेत्रस्यास्य मध्यभागे, विभाजकोऽर्द्धयोर्द्वयोः । माल्यवानिति विख्यातो, वृत्तवैताढ्यपर्वतः ॥ ३० ॥ माल्यवत्सदृशाकारैस्तद्वदेवारुणप्रभैः । सदा राजन्नुत्पलाद्यैर्माल्यवानिति कीर्त्यते ॥ ३१ ॥ जम्बूद्वीपप्रज्ञप्तिसूत्रे तु माल्यवत्पर्याय इति नाम दृश्यते । प्रभासाख्यसुरस्तत्र, स्वामी पल्योपमस्थितिः । मेरोरुत्तरतस्तस्य, पुरी नीलवदादिवत् ॥ ३२ ॥ हरिवर्षस्यायिगन्धापातिवैताढ्यशैलवत् । ज्ञेयमस्यापि सकलं, स्वरूपमविशेषितम् ॥ ३३ ॥

उदग् रम्यकवर्षस्यापाग् हैरण्यवतस्य च । रुक्मी नाम्ना वर्षधरः, प्रज्ञप्तः परमर्षिभिः ॥ ३४ ॥ स पूर्वपश्चिमायामो, दक्षिणोत्तरविस्तृतः । महाहिमवतो बन्धुरिवात्यन्तसमाकृतिः ॥ ३५ ॥ रुक्मं रूप्यं तदस्यास्तीत्यन्वर्थकलिताभिधः । सर्वात्मना रूप्यमयो, रुक्मिनामसुराश्रितः ॥ ३६ ॥ इदं जम्बूद्वीपप्रज्ञप्तिवृत्तौ, क्षेत्र-

विशेषितम् ॥ २३ ॥ ह्रदेऽस्मिन्मूलकमलं, चतुर्योजनसंमितम् । तदर्द्धार्द्धप्रमाणानि, पद्मानां वलयानि षट् ॥२४॥ पल्योपमस्थितिस्तत्र, कीर्त्तिता कीर्त्तिदेवता । भवनादिस्थितिस्त्वस्याः, श्रीदेव्या इव भाव्यताम् ॥ २५ ॥ इति नीलवान् पर्वतः ॥ स्थापना ॥

उत्तरस्यां नीलवतो, दक्षिणस्यां च रुक्मिणः । राजते रम्यकक्षेत्रं, रम्यकामरभर्तृकम् ॥ २६ ॥ स्वर्णमाणिक्यखचितैर्भूप्रदेशैर्मनोरमैः । नानाकल्पद्रुमै रम्यतयेदं रम्यकाभिधम् ॥ २७ ॥ परमायामरूपाऽस्य, प्रत्यञ्चा हरिवर्षवत् । किंत्वत्र सा दक्षिणस्यामुत्तरस्यां शरासनम् ॥ २८ ॥ इषुबाहाक्षेत्रफलाद्यपीह हरिवर्षवत् । क्षेत्रानुभावकालादिस्वरूपं तद्वदेव च ॥ २९ ॥ क्षेत्रस्यास्य मध्यभागे, विभाजकोऽर्द्धयोर्द्वयोः । माल्यवानिति विख्यातो, वृत्तवैताढ्यपर्वतः ॥ ३० ॥ माल्यवत्सदृशाकारैस्तद्वद्देवारुणप्रभैः । सदा राजन्नुत्पलाद्यैर्माल्यवानिति कीर्त्यते ॥ ३१ ॥ जम्बूद्वीपप्रज्ञप्तिसूत्रे तु माल्यवत्पर्याय इति नाम दृश्यते । प्रभासाख्यसुरस्तत्र, स्वामी पल्योपमस्थितिः । मेरोरुत्तरतस्तस्य, पुरी नीलवदादिवत् ॥ ३२ ॥ हरिवर्षस्थायिगन्धापातिवैताढ्यशैलवत् । ज्ञेयमस्यापि सकलं, स्वरूपमविशेषितम् ॥ ३३ ॥

उदग् रम्यकवर्षस्यापाग् हैरण्यवतस्य च । रुक्मी नाम्ना वर्षधरः, प्रज्ञप्तः परमर्षिभिः ॥ ३४ ॥ स पूर्वपश्चिमायामो, दक्षिणोत्तरविस्तृतः । महाहिमवतो बन्धुरिवात्यन्तसमाकृतिः ॥ ३५ ॥ रुक्मं रूप्यं तदस्यास्तीत्यन्वर्थकलिताभिधः । सर्वात्मना रूप्यमयो, रुक्मिनामसुराश्रितः ॥ ३६ ॥ इदं जम्बूद्वीपप्रज्ञप्तिवृत्तौ, क्षेत्र-

समासवृत्तौ तु रुक्मं-श्वेतं हेम, तन्मयोऽयमुक्त इति ज्ञेयं। विशिष्टैरष्टभिः कूटैः, सोऽतितुङ्गैरलङ्कृतः। दिगङ्गनानामष्टानां क्रीडापर्वतकैरिव ॥ ३७ ॥ आद्यं पूर्वार्णवासन्नं, सिद्धायतनसंज्ञितम्। रुक्मिदेवाधिष्ठितं च, रुक्मिसंज्ञं द्वितीयकम् ॥३८॥ रम्यकाधीश्वरस्थानं, तृतीयं रम्यकाभिधम्। तुर्यं नरकान्तादेव्या, नरकान्ताभिधं च तत् ॥३९॥ तथा महापुण्डरीकह्रदेशायाः शुभास्पदम्। बुद्धिकूटं बुद्धिदेव्याः, पञ्चमं परिकीर्त्तितम् ॥ ४० ॥ रूप्यकूलानदीदेव्याः, षष्ठं कूटं तदाख्यया। सप्तमं हैरण्यवतं, हैरण्यवतदैवतम् ॥४१॥ मणिकांचनदेवाल्यं, मणिकाञ्चनमष्टमम्। आद्ये जिनालयोऽन्येषु, प्रासादाः स्वामिनाकिनाम् ॥४२॥ मानं स्वरूपं कूटानां, चैत्यनिर्जरसद्मनाम्। हिमवद्गिरिवत्सर्वं, तथैवास्य गिरेरपि ॥४३॥ ह्रदो महापुण्डरीको, महापद्मह्रदोपमः। विभाति सलिलैः स्वच्छैर्निर्जयन्मानसं सरः ॥ ४४ ॥ अस्मिंश्च मूलकमलं, योजनद्वयसंमितम्। तदर्धार्धप्रमाणानि, शेषाब्जवलयानि षट् ॥४५॥ स्थापना॥ अत्राधिष्ठायिका बुद्धैर्बोधिता बुद्धिदेवता। भवनादिसमृद्ध्या सा, श्रीदेवतानुकारिणी ॥४६॥ ह्रदादस्मादापगे द्वे, दक्षिणोदग्मुखे क्रमात्। विनिर्गते श्मश्रुलेखे, इवोत्तरौष्ठमध्यतः ॥ ४७ ॥ दाक्षिणात्यतोरणेन, निःसृत्य दक्षिणामुखी। नरकान्ता स्वके कुण्डे, गत्वा स्नात्वेव निर्गता ॥ ४८ ॥ रम्यकोदीच्यभागस्य, द्वैधीकारभयादिव। अर्वाक् स्थिता योजनेन, माल्यवद्धरणीधरात् ॥ ४९ ॥ ततो वलित्वा भिन्दाना, पूर्वार्द्धं रम्यकस्य सा। पूर्वाम्भोधौ याति नदीषट्पञ्चाशत्सहस्रयुक् ॥ ५० ॥ उत्तराहतोरणेन, विनिर्गत्योत्तरामुखी। रूप्यकूला स्वप्रपातकुण्डे निपत्य निर्गता ॥ ५१ ॥ दक्षिणार्द्धं च हैरण्यवतस्य कुर्वती द्विधा। क्रोशद्वयेनासं-

रम्यकं रुक्मी च

२०

२५



२८

प्राप्ता, विकटापातिनं गिरिम् ॥ ५२ ॥ ततो निवृत्त्य हैरण्यवतापरार्द्धभेदिनी । अष्टाविंशत्या सहस्रैः, सरिद्भिराश्रिता पथि ॥ ५३ ॥ तादृक्क्षेत्रविभेदोत्थपातकानुशयादिव । पपात पश्चिमाम्भोधौ, तद्दुष्कृतजिघांसया ॥ ५४ ॥ इति रुक्मिपर्वतः ॥ स्थापना ॥

क्षेत्रं च हैरण्यवतमुदीच्यां रुक्मिणो गिरेः । दक्षिणस्यां शिखरिणोर्द्वयोर्लीनमिवान्तरे ॥ ५५ ॥ रूप्यं हिरण्यशब्देन, सुवर्णमपि चोच्यते । ततो हिरण्यवन्तौ द्वौ, तन्मयत्वाद्धराधरौ ॥ ५६ ॥ रुक्मी च शिखरी चापि, तद्धिरण्यवतोरिदम् । हैरण्यवतमित्याहुः, क्षेत्रमेतन्महाधियः ॥ ५७ ॥ प्रयच्छति हिरण्यं वा, युग्मिनामासनादिषु । यत्सन्ति तत्र बहवः, शिलापट्टा हिरण्यजाः ॥ ५८ ॥ प्रभूतं तन्नित्ययोगि, वाऽस्यास्तीति हिरण्यवत् । तदेव हैरण्यवतमित्याहुर्मुनिसत्तमाः ॥ ५९ ॥ हैरण्यवतनामा वा, देवः पल्योपमस्थितिः । ऐश्वर्यं कलयत्यत्र, तद्योगात्प्रथितं तथा ॥ ६० ॥ क्षेत्रानुभावो मानं च, नृतिरश्चामपि स्थितिः । निखिलं हैमवतवद्विज्ञेयमिह धीधनैः ॥ ६१ ॥ क्षेत्रस्यास्य मध्यभागे, चतुरंशविभाजकः । वैताढ्यो विकटापाती, रात्निकः पल्यसंस्थितः ॥ ६२ ॥ पद्मोत्पलशतपत्रादीनि सन्त्यत्र संततम् । विकटापातिवर्णानि, विकटापात्ययं ततः ॥ ६३ ॥ आस्ते देवोऽरुणाख्योऽत्र, स्वामी पल्योपमस्थितिः । जम्बूद्वीपेऽन्यत्र नगर्युदीच्यामस्य मेरुतः ॥ ६४ ॥ शेषमस्य स्वरूपं तु, गन्धापातिनगेन्द्रवत् । एवं चत्वारोऽपि वृत्तवैताढ्या रात्निकाः समाः ॥ ६५ ॥ एवं च क्षेत्रविचारसूत्रवृत्त्यभिप्रायेण हैमवते शब्दापाती हैरण्यवते विकटापाती

हरिवर्षे गन्धापाती रम्यके माल्यवानिति वृत्तवैताढ्यानां व्यवस्था, जम्बूद्वीपप्रज्ञप्त्यभिप्रायेण तु हैमवते शब्दापाती हरिवर्षे विकटापाती रम्यके गंधापाती हैरण्यवते माल्यवानिति व्यवस्थेत्यत्र तत्त्वं सर्वविद्वेद्यम् । इति हैरण्यवतक्षेत्रं ॥ स्थापना ॥

उदीच्यां हैरण्यवतादपागैरवतादपि । षष्ठो वर्षधरः ख्यातः, शिखरी नाम पर्वतः ॥ ६६ ॥ ज्ञेयः शिखरिशब्देन, वृक्षस्तदाकृतीनि च । भूयांसि रत्नकूटानि, सन्त्यत्रेति शिखर्यसौ ॥ ६७ ॥ सन्त्येकादश कूटानि, वक्ष्यमाणानि यानि तु । तेभ्योऽमून्यतिरिक्तानि, कूटानीति विभाव्यताम् ॥ ६८ ॥ अन्यथा सर्वशैलानां, यथोक्तकूटयोगतः । शिखरित्वव्यपदेशः, संभवन् केन वार्यते ? ॥ ६९ ॥ स चैकादशभिः कूटैः, परितोऽलङ्कृतो गिरिः । प्रतिमाभिरिव श्राद्धधर्मः शर्मदर्शनः ॥ ७० ॥ आद्यं सिद्धायतनाख्यं, पूर्ववारिधिसन्निधौ । द्वितीयं शिखरिस्वर्गिकूटं शिखरिसंज्ञकम् ॥ ७१ ॥ तृतीयं हैरण्यवतकूटं तत्स्वामिदैवतम् । तुर्यं सुवर्णकूलाख्यं, तन्नदीदेवतास्पदम् ॥ ७२ ॥ दिक्कुमार्याः सुरादेव्याः, पञ्चमं च तदाख्यया । षष्ठं रक्तावर्त्तनाख्यं, लक्ष्मीकूटं च सप्तमम् ॥ ७३ ॥ रक्तवत्यावर्त्तनाख्यं, प्रज्ञप्तं कूटमष्टमम् । इलादेव्या दिक्कुमार्या, नाम्ना च नवमं मतम् ॥७४॥ दशमं चैरावताख्यमैरावतसुराश्रितम् । स्यात्तिगिञ्छिह्रदेशायास्तिगिञ्छिकूटमन्तिमम् ॥७५॥ इदं जम्बूद्वीपप्रज्ञप्तिसूत्राभिप्रायेण, क्षेत्रसमासेषु तत्र पञ्चमं श्रीदेवीकूटं, नवमं गन्धापातीकूटमिति दृश्यते । आद्ये चैत्यं शेषकूटदशके च सुधाभुजाम् । तत्तत्कूटसमाख्यानां, स्युः प्रासादावतंसकाः ॥ ७६ ॥ पुण्डरीकह्रदश्चात्र, पद्महृदसहो-

हैरण्यवतं शिखरी च

२०

२५

॥२२०॥

२८

दरः । अस्मिंश्च मूलकमलमेकयोजनसंमितम् ॥ ७७ ॥ तदर्द्धार्द्धप्रमाणानि, शेषाब्जवलयानि षट् । लक्ष्मीदेवी वसत्यत्र, स्थित्या श्रीदेवतेव सा ॥ ७८ ॥ हिमवद्गिरिवत्सर्वं, मानमत्रापि चिन्त्यताम् । ज्याबाहाधनुरादीनां, केवलं दिग्विपर्ययः ॥ ७९ ॥ नद्यस्तिस्रो ह्रदादस्मान्निर्गतास्त्रिभिरध्वभिः । नदी सुवर्णकूलाख्या, रक्ता रक्तवतीति च ॥ ८० ॥ दक्षिणेनाध्वना तत्र, निर्गत्य दक्षिणामुखी । सुवर्णकूला पतति, कुण्डे स्वसमनामनि ॥ ८१ ॥ ततो निर्गत्य हैरण्यवतोत्तरार्द्धभेदिनी । योजनार्द्धेन दूरस्था, विकटापातिभूधरात् ॥ ८२ ॥ प्राक् परावर्त्त्य हैरण्यवतपूर्वार्द्धमादितः । सूत्रधारस्येव रज्जुर्द्धिधा विदधती क्रमात् ॥ ८३ ॥ अष्टाविंशत्या सहस्रैर्नदीभिः परिपूरिता । गृहिणीव स्वामिगेहे, विशति प्राच्यवारिधौ ॥ ८४ ॥ अस्मादेव ह्रदात्प्राच्यतोरणेन विनिर्गता । रक्तानदी पूर्वदिशि, प्रवृत्ता पर्वतोपरि ॥ ८५ ॥ योजनानां पञ्चशतीमतिक्रम्य ततः परम् । रक्तावर्त्तनकूटस्याधस्तादुत्तरतो भवेत् ॥ ८६ ॥ त्रयोविंशां पञ्चशतीं, योजनानां कलात्रयम् । सार्द्धं गत्वाऽधिकमुदक्शिखरिक्ष्माधरोपरि ॥ ८७ ॥ वज्रजिह्विकयोत्तीर्य, कुण्डे रक्ताप्रपातके । शतयोजनप्रपाता, भुजङ्गीवाविशङ्किले ॥ ८८ ॥ उदीच्यतोरणेनास्माद्विनिर्गत्योत्तरामुखी । नदीसप्तसहस्राढ्या, वैताढ्यगिरिसीमया ॥ ८९ ॥ दर्याः खण्डप्रपातायाः, प्राच्यां वैताढ्यभूधरम् । भित्त्वोदीच्यैः सप्तनदीसहस्रैराश्रिताऽध्वनि ॥ ९० ॥ सहस्रैः सरितामेवं, चतुर्दशभिराश्रिता । विभिद्य जगतीं पूर्वार्णवेऽसौ विशति द्रुतम् ॥ ९१ ॥ पश्चिमेन तोरणेन, ह्रदादस्माद्विनिर्गता । रक्तावती पश्चिमायां, प्रवृत्ता पर्वतोपरि ॥ ९२ ॥ अतिक्रम्य पञ्चशतीं, निजावर्तनकूटतः । पर्वतो-

पर्युत्तरस्यां, व्यूढा तत्र व्यतीत्य च ॥ ९३ ॥ त्रयोविंशां पञ्चशतीं, साग्रं सार्द्धकलात्रयम् । वज्रमय्या जिह्विकया, योजनैकशतोन्नतात् ॥ ९४ ॥ निपत्य पर्वताद्रक्तावतीप्रपातकुण्डके । रोषावेशान्मानिनीव, दत्तझम्पा महावटे ॥ ९५ ॥ उदीच्येनाध्वना तस्मादुदग्मुखी विनिर्गता । आवैताढ्यान्तिकं सप्तनदीसहस्रसेविना ॥ ९६ ॥ कन्दरायास्तमिस्रायाः, पश्चिमायां धराधरम् । द्रुतं विभिद्य वैताढ्यमुत्तरार्द्धं समागता ॥ ९७ ॥ उदीच्यैः सप्तभिः सिन्धुसहस्रैः सह गच्छति । पश्चिमाब्धाविति नदीचतुर्दशसहस्रयुक् ॥ ९८ ॥ इति शिखरिपर्वतः ॥ स्थापना ॥

उत्तरस्यां शिखरिण, उदीच्यलवणार्णवात् । दक्षिणस्यामैरवतक्षेत्रं भाति मनोहरम् ॥ ९९ ॥ ऐरावतः सुरो ह्यस्य, स्वामी पल्योपमस्थितिः । वसत्यत्र ततः ख्यातमिदमैरावताख्यया ॥ १०० ॥ भरतस्य प्रतिबिम्बमिवेदं संमुखेऽम्बुधौ । तत्प्रमाणं तेन तुल्यं, सदा तदनुवर्त्तते ॥ १ ॥ भानुना भासिते तस्मिंस्तेनेदमपि भासितम् । इन्दुना शोभिते तत्रादोऽपि स्यात्तेन शोभितम् ॥ २ ॥ तद्यदा षड्भिररकैर्भिन्नां भिन्नां दशां श्रयेत् । तथेदमपि सन्मित्रमिव मित्रानुवृत्तिकृत् ॥ ३ ॥ जिने तत्र जिनोऽत्रापि, चक्रयत्र तत्र चक्रिणि । वासुदेवादिषु सत्सु, तत्रात्रापि भवन्ति ते ॥ ४ ॥ इदं दशाश्चर्ययुतं, स्यात्तत्राश्चर्यशालिनि । हसतीव निजं मित्रं, भरतं तुल्यचेष्टया ॥ ५ ॥ मध्येस्थितेन द्वेधेदं, वैताढ्यगिरिणा कृतम् । दाक्षिणात्यैरावतार्द्धमुदीच्यैरावतार्द्धकम् ॥ ६ ॥ यदुदीच्यार्णवासन्नमुत्तरार्द्धं तदुच्यते । शिखरिक्ष्माधरासन्नं, दक्षिणार्द्धमुदीरितम् ॥ ७ ॥ क्षेत्रा-


२०
२५

२८

शापेक्षया ह्येषा, दक्षिणोदगव्यवस्थितिः । सूर्याशापेक्षया त्वस्य, याम्यार्द्धं वार्द्धिसन्निधौ ॥ ८ ॥ उदीच्यार्द्धं नगासन्नं, व्यवहारस्त्वयं पुनः । क्षेत्राशापेक्षया सर्वो, न तापदिगपेक्षया ॥ ९ ॥ उदीच्यार्द्धमस्य याम्यभरतार्द्धेन सन्निभम् । तद्वज्जीवेषुचापानि, बाहाऽत्रापि न संभवेत् ॥ १० ॥ इतः प्रभृति याम्यार्द्धादिषु सर्वं विवर्द्धते । आविदेहार्द्धमिष्वासजीवाबाहाशरादिकम् ॥ ११ ॥ वैताढ्यस्याप्यत्र तत, उत्तरस्यां किलाल्पकः । आयामो दक्षिणस्यां च, वर्द्धमानः क्रमान्महान् ॥ १२ ॥ याम्यविद्याधरश्रेण्यां, विद्याधरपुराण्यतः । षष्टिर्भवन्त्युदीच्यायां, श्रेण्यां पञ्चाशदेव च ॥ १३ ॥ शेषं सर्वमाभियोग्यश्रेणिवेदीवनादिकम् । ज्ञेयं भरतवैताढ्योपममुक्तानुसारतः ॥ १४ ॥ कूटान्येकादशात्रापि, तन्नामानि तथा क्रमात् । किंतु नाम्नि विशेषोऽस्ति, द्वितीयस्याष्टमस्य च ॥ १५ ॥ दक्षिणैरवतार्द्धाख्यं, द्वैतीयीकं भवेदिह । उत्तरैरावतार्द्धाख्यं, भवेच्च कूटमष्टमम् ॥ १६ ॥ रक्तारक्तवतीस्रोतस्विनीभ्यां तस्थुषाऽन्तरे । वैताढ्येन च षट्खण्डमिदमैरावतं कृतम् ॥ १७ ॥ तत्र च—उत्तरार्द्धमध्यखण्डे, उदीच्यलवणोदधेः । दक्षिणस्यामुदीच्यां च, वैताढ्याभिधभूधरात् ॥ १८ ॥ चतुर्दशाधिकशतं, योजनानां कलास्तथा । एकादशातिक्रम्याब्धिवैताढ्याभ्यामिहान्तरे ॥ १९ ॥ नगरी स्यादयोध्याख्या, नवयोजनविस्तृता । द्वादशयोजनायामाऽलङ्कृतोत्तमपूरुषैः ॥ २० ॥ शेषाः पञ्चापि खण्डाः स्युरनार्या धर्मवर्जिताः । अत्रापि चार्यदेशानामध्यर्द्धा पञ्चविंशतिः ॥ २१ ॥ एतेष्वेव हि देशेषु, जिनचक्र्यर्द्धचक्रिणाम् । स्यादुत्तमनृणां जन्म, प्रायो धर्मव्यवस्थितिः ॥ २२ ॥

एवं च जम्बूद्वीपेऽस्मिन्, सप्तक्षेत्री विराजते । मध्ये महाविदेहाख्यमपागुदक् त्रयं त्रयम् ॥ २३ ॥ भरतैरावते तत्र, तुल्यरूपे निरूपिते । समस्वरूपे हैरण्यवतहैमवते अपि ॥ २४ ॥ रम्यकाख्यहरिवर्षे, उभे तुलाधृते इव । पूर्वापरविदेहानामप्येवं तुल्यता मता ॥ २५ ॥ देवोत्तरकुरूणामप्येवं तुल्यत्वमाहितम् । विना भरतैरवतविदेहानपराः पुनः ॥ २६ ॥ अकर्मभूमयः षट् स्युः, कृष्यादिकर्मवर्जिताः । तिस्रो भरतैरवतविदेहाः कर्मभूमयः ॥ २७ ॥ तथा चात्र वर्षधरपर्वताः षट् प्रकीर्त्तिताः । विदेहेभ्यो दक्षिणस्यामुदीच्यां च त्रयं त्रयम् ॥ २८ ॥ हिमवच्छिखरी चैकादशकूटौ मिथःसमौ । रुक्मिमहाहिमवतावष्टकूटौ तथैव च ॥ २९ ॥ नीलवन्निषधौ तुल्यौ, नवकूटौ परस्परम् । मेरुर्निरुपमः सोऽपि, नवकूटोपशोभितः ॥ ३० ॥ भरतैरावतक्षेत्रद्वात्रिंशद्विजयोद्भवाः । वैताढ्याः स्युश्चतुस्त्रिंशत्प्रत्येकमेकभावतः ॥ ३१ ॥ सर्वेऽप्येते रूप्यवर्णा, नवकूटोपशोभिताः । दशोत्तरशतप्रज्ञाभियोग्यालिक्ष्यान्विताः ॥ ३२ ॥ चत्वारो वृत्तवैताढ्याः, समरूपाः परस्परम् । हरिवर्षहैमवतहैरण्यवतरम्यके ॥ ३३ ॥ देवोत्तरकुरुस्थेषु, ह्रदेषु दशसु ध्रुवम् । प्राक् प्रत्यक् च दश दश, काञ्चनाचलभावतः ॥ ३४ ॥ द्वे शते काञ्चननगाः, परस्परानुकारिणः । स्थिता भोक्तुं चतसृभिः, पङ्क्तिभिर्बांधवा इव ॥ ३५ ॥ गजदन्तौ सौमनसगन्धमादनसंज्ञितौ । रूप्यपीतरत्नमयौ, सप्तकूटोपशोभितौ ॥ ३६ ॥ विद्युत्प्रभमाल्यवन्तौ, वैडूर्यतपनीयजौ । नवकूटाञ्चितौ तुल्या, इत्याकृत्या नगा अमी ॥ ३७ ॥ चतुःकूटाः षोडशापि, वक्षस्काराद्रयः समाः । विचित्रचित्रयमकाः, समरूपाः परस्परम् ॥ ३८ ॥ द्विशत्येकोनसप्तत्याधि-



२०

२५

॥ २२२ ॥

२८

मित्यतः । सर्ववैताढ्यकूटानि, षडुत्तरं शतत्रयम् ॥ ३९॥ प्रतिवैताढ्यमेतेषु, कूटत्रयं तु मध्यमम् । सौवर्णं शेष-कूटाश्च, रात्निका इति तद्विदः ॥ ४० ॥ सक्रोशषड्योजनोच्चाश्चैत्यप्रासादशोभिताः । सर्वेऽपि भरतस्थायिवै-ताढ्यकूटसोदराः ॥ ४१ ॥ कूटाः सप्त सौमनसगन्धमादनशैलयोः । रुक्मिमहाहिमवतोरष्टावष्टौ पृथक् पृथक् ॥ ४२ ॥ विद्युत्प्रभमाल्यवतोर्नीलवन्निषधागयोः । मेरोश्च नन्दनवने, कूटा नव नवोदिताः ॥ ४३ ॥ हिमवच्छि-खरिकूटा, एकादश पृथक् पृथक् । षोडशानां चतुःषष्टिर्वक्षस्कारमहीभृताम् ॥ ४४ ॥ हरिस्सहहरिकूटबलकू-टोज्झिता इमे । शतं सर्वेऽष्टपंचाशं, हिमवत्कूटसन्निभाः ॥४५॥ योजनानां पञ्च शतान्युच्चा राता मिथः समाः । साहस्राः स्वर्णजास्तुल्या, हरिस्सहादयस्त्रयः ॥ ४६ ॥ एवं च गिरिकूटानां, त्रिविधानां प्रमाणतः । सर्वसंख्या सप्तषष्ट्या, समन्विता चतुःशती ॥ ४७ ॥ द्वात्रिंशति विजयेषु, भरतैरवताख्ययोः । चतुस्त्रिंशद्धि वृषभकूटा-स्तुल्याः परस्परम् ॥ ४८ ॥ भद्रशालाभिधवने, जम्बूशाल्मलिवृक्षयोः । अष्टाष्टेत्यष्टपञ्चाशद्भूमिकूटा मिथः समाः ॥ ४९ ॥ एतेषां वक्तुमुचिते, पर्वतत्वेऽपि वस्तुतः । कूटत्वव्यवहारोऽयं, पूर्वाचार्यानुरोधतः ॥ ५० ॥ महाह्रदाश्च षट् पद्मपुण्डरीकौ समाविह । महापद्ममहापुंडरीकावपि मिथः समौ ॥ ५१ ॥ तिगिञ्छिकेसरिणौ च, तुल्यौ द्विघ्नौ यथोत्तरम् । दश देवोत्तरकुरुह्रदाः पद्मह्रदोपमाः ॥ ५२ ॥ एवं ह्रदाः षोडशैते, षण्महाह्रदहदे-वताः । श्रीह्रीधृतिकीर्त्तिबुद्धिलक्ष्म्यः परस्परं समाः ॥५३ ॥ चतुर्दश महानद्यो, गङ्गाद्याः सपरिच्छदाः । जम्बू-द्वीपशुभक्षेत्रे, कुल्यातुल्या विभान्ति याः ॥५४॥ गङ्गासिन्धू रोहितांशा, रोहिता च तथापरा । हरिकान्ता-

हरिनदी, शीतोदा चेति नामतः ॥ ५५ ॥ मेरोर्दक्षिणतः सप्त, ख्याता एता महापगाः । मेरोरुत्तरतोऽप्येवं, शोभन्ते सप्त सिन्धवः ॥ ५६ ॥ शीता च नारीकान्ता च, नरकान्ता तथा परा । रूप्यकूला स्वर्णकूला, रक्ता रक्तवतीति च ॥५७॥ हिमवत्पर्वतस्थायिपद्मह्रदाद्विनिर्गताः । गङ्गासिन्धुरोहितांशानाम्न्यस्तिस्रो महापगाः ॥ ५८ ॥ महाहिमवदद्रिस्थमहापद्मह्रदात्पुनः । रोहिता हरिकान्तेति, निर्गते द्वे महापगे ॥५९॥ निषधाचलमौलिस्थतिगिञ्छिह्रदमध्यतः । समुद्भूते हरिनदी, शीतोदेति महापगे ॥ ६० ॥ नीलवत्पर्वतगतकेसरिह्रदतः किल । शीता च नारीकान्ता च, निर्गते द्वे महापगे ॥ ६१ ॥ तथा महापुण्डरीकह्रदाद्रुक्मिनगाश्रितात् । नरकान्ता रूप्यकूलेत्युद्गते निम्नगे उभे ॥ ६२ ॥ शिखरिक्ष्माधरस्थायिपुण्डरीकह्रदोत्थिताः । रक्तारक्तवतीस्वर्णकूलाभिधा महापगाः ॥ ६३ ॥ एवं च—तिस्रो नद्यो हिमवतस्तिस्रः शिखरिणो गिरेः । शेषवर्षधरेभ्यश्च, महानद्योर्द्वयं द्वयम् ॥ ६४ ॥ वर्षाण्याश्रित्य सरितः, प्रतिवर्षं द्वयं द्वयम् । द्वे विदेहेष्वपाच्यां षट्, षडुदीच्यां ततो यथा ॥ ६५ ॥ गङ्गासिन्धू च भरते, रोहितारोहितांशिके । हैमवते हरिवर्षे, हरिकान्ताहरी उभे ॥ ६६ ॥ शीताशीतोदे विदेहक्षेत्रे तथा च रम्यके । नारीकान्तानरकान्ते, हैरण्यवतगे उभे ॥ ६७ ॥ रूप्यकूलास्वर्णकूले, तथा चैरवतस्थिते । नद्यौ रक्तारक्तवत्यावेवमेताश्चतुर्दश ॥ ६८ ॥ गङ्गासिन्धुरक्तवतीरक्तानां सरितामिह । चतुर्दश सहस्राणि, परिवारः प्रकीर्त्तितः ॥ ६९ ॥ रूप्यकूलास्वर्णकूलारोहितारोहितांशिकाः । अष्टाविंशत्या सहस्रैः, स्रोतस्विनीभिराश्रिताः ॥७०॥ नारीकान्ता नरकान्ता, हरिकान्ता हरिस्तथा । षट्पञ्चाशच्छैवलिनीसहस्रैः



२०

२५


२८

परिवारिताः ॥ ७१ ॥ शीताशीतोदयोर्नद्योः, प्रत्येकं च परिच्छदः। पञ्च लक्षाः सहस्राणि, द्वात्रिंशत्परिकी-
र्तिताः ॥ ७२ ॥ श्लोकक्रमेण सरितामिह श्लोकचतुष्टये । द्विगुणं जिह्विकामानविस्तारोद्विद्धतादिकम् ॥ ७३ ॥
एकश्लोकोदितानां तु, सर्वं तुल्यं परस्परम्। गङ्गासिन्धुरक्तवतीरक्तानां तुल्यता यथा ॥ ७४ ॥ दश लक्षाश्च-
तुःषष्टिः, सहस्राणि विदेहगाः। नद्योऽपाच्यां लक्षमेकं, षण्णवतिसहस्रयुक् ॥७५॥ उदीच्यामपि तावन्त्य, एवं च
सर्वसंख्यया। षट्पञ्चाशत्सहस्राढ्या, नदीलक्षाश्चतुर्दश ॥ ७६ ॥ जम्बूद्वीपोऽभितो रुद्धः, स्वविरुद्धेन वार्द्धिना ।
स्वमोक्षायेव दत्तेऽस्मै, कनीः शैवलिनीरिमाः ॥ ७७ ॥ स्थापना । चतुःषष्टिविजयगा, महानद्यश्चतुर्दश । अन्त-
र्नद्यो द्वादशातिरिच्यन्ते नवतिस्त्वियम् ॥ ७८ ॥ तथाहुः श्रीरत्नशेखरसूरयः स्वक्षेत्रसमासे—"अडसयरि
महाणइओ बारस अंतरणईओ सेसाओ । परिअरणईओ चउदस लक्खा छप्पण्णसहसा य ॥ १ ॥" श्रीम-
लयगिरयस्तु प्रवेशे च सर्वसंख्यया आत्मना सह चतुर्दशभिर्नदीसहस्रैः समन्विता भवन्तीति क्षेत्रसमास-
वृत्तौ कच्छविजयगतसिन्धुनदीं वर्णयन्तो महानदीनां न पृथग्गणनेति सूचयांचक्रुः, तथापि द्वादशान्तर-
नद्योऽतिरिच्यन्त एवेत्यत्र तत्त्वं बहुश्रुतगम्यमिति ज्ञेयं । तथापि पूर्वाचार्यानुरोधात् संख्या तथोदिता । नात्र
पर्यनुयोगार्हा, वयं प्राच्यपथानुगाः ॥ ७९ ॥ केचित्तु 'गाहावइमहानई पवूढा समाणी सुकच्छमहाकच्छविजए
दुहा विभयमाणी अट्ठावीसाए सलिलासहस्सेहिं समग्गा दाहिणेणं सीयं महानइं समप्पेइ' इत्यादिजम्बूद्वी-
पप्रज्ञप्तिवचनात्, तथा "नद्यो विजयच्छेदिन्यो रोहितावत्कुण्डाः स्वनामसमदेवीवासा अष्टाविंशतिनदीसहस्रा-

नुगाः प्रत्येकं सर्वसर्वसमाः पञ्चविंशशतविस्तृता अर्द्धतृतीययोजनावगाहा गाहावती पङ्कवती" इत्याद्युमास्वातिवाचकवचनाच्च द्वादशानामन्तर्नदीनामपि प्रत्येकमष्टाविंशतिसहस्त्ररूपं परिवारं मन्यमानाः षट्त्रिंशत्सहस्राधिकनदीलक्षत्रयेणान्तर्नदीपरिवारेण सह द्विनवतिसहस्राधिकानि सप्तदश नदीलक्षाणि मन्यन्ते, उक्तं च—"सुत्ते चउदस लक्खा छप्पन्नसहस्स जंबुदीवंमि। हुंति उ सतरस लक्खा बाणवइ सहस्स मेलविया ॥ १ ॥" अन्ये तु यद्यन्तर्नदीष्वनेकानि परिवारनदीसहस्राणि प्रविशेयुस्तदा कथं तासां क्रमेण परतः परतो गच्छन्तीनां विस्तारविशेषो गंगानदीनामिव न संपद्येत ?, यस्तु परिवारः सिद्धान्तेऽभिदधे स तु यथाष्टाशीतिर्ग्रहाश्चन्द्रस्यैव परिवारतया प्रसिद्धा अपि सूर्यस्यापि स एव परिवारः, न पुनः पृथक् प्रतीयते, उक्तं च समवायाङ्गवृत्तौ—"अष्टाशीतिर्महाग्रहा, एते यद्यपि चन्द्रस्यैव परिवारोऽन्यत्र श्रूयते, तथापि सूर्यस्यापीन्द्रत्वादेत एव परिवारतयाऽवसेया" इति, तथा गङ्गादिसंबन्धीन्येवाष्टाविंशतिनदीसहस्राणि अन्तर्नदीनामपि परिवार इति। एवं चान्तर्नदीनां पृथक्परिवारमनभ्युपगच्छन्तो यथावस्थितामेव नदीसंख्यां मन्यन्ते इत्यादिकं जम्बूद्वीपसंग्रहणीवृत्तौ, तथा चाहुः श्रीहरिभद्रसूरयः—"सीया सीओयाविय बत्तीससहस्सपंचलक्खेहिं। सव्वे चउदस लक्खा छप्पन्न सहस्स मेलविया ॥ १ ॥" दिक्पटोऽप्येवमाह—"जंबूदीवि निराहिवसंखा सवनइ चउदह य लक्खा। छप्पन्नं च सहस्सा नवई नईओ कहंति जिणा ॥२॥" कुण्डोद्वेधस्तथा द्वीपोच्छ्रायस्तद्भवनस्य च। परिमाणं समग्रासु, नदीषु सदृशं भवेत् ॥ ८० ॥ शीता च हरिसलिला, गङ्गासिन्धू च रोहिता। स्वर्णकूला नर-


२०
२५

२८

कान्ता, नद्योऽभूर्दक्षिणामुखाः ॥ ८१ ॥ उदग्याता रक्तवती, रक्ता च रूप्यकूलिका । नारीकान्ता रोहितांशा, शीतोदा हरिकान्तिका ॥ ८२ ॥ सिन्धुं विना याः सरितो, दक्षिणां दिशमागताः । ताः पूर्वाब्धिं गामिन्यः, सिन्धुस्तु पश्चिमाब्धिगा ॥ ८३ ॥ उदग्याताश्च या नद्यो, विना रक्तामहानदीम् । ताः पश्चिमाब्धिगामिन्यो, रक्ता पूर्वाब्धिगामिनी ॥ ८४ ॥ स्वकीयह्रदविस्तारेऽशीतिभक्ते यदाप्यते । दक्षिणाभिमुखीनां सा, नदीनां मुखविस्तृतिः ॥ ८५ ॥ उत्तराभिमुखीनां तु, स्वकीयह्रदविस्तृतौ । चत्वारिंशद्विभक्तायां, यल्लब्धं तन्मिता मताः ॥ ८६ ॥ व्यवस्थेयं दक्षिणस्यां, सरितां मन्दराचलात् । उदग्याम्योत्तरदिशाभिमुखीनां विपर्ययात् ॥ ८७ ॥ सर्वासां मुखविस्तारे, दशघ्ने प्रान्तविस्तृतिः । व्यासपञ्चाशत्तमांशः, सर्वत्रोद्वेध आहितः ॥ ८८ ॥ मुखपर्यन्तविस्तारविश्लेषे गतयोजनैः । गुणिते पञ्चचत्वारिंशत्सहस्रविभाजिते ॥ ८९ ॥ लब्धं यत्तदुभयतो, व्यासवृद्धिरभीप्सिते । योजनादौ गते सर्वास्वपि तस्यार्द्धमेकतः ॥९०॥ चतुःषष्टिर्विजयेषु, ससवर्ष्या[1] चतुर्दश । द्वादशान्तर्नदीनां च, कुण्डानां नवतिस्त्वियम् ॥ ९१ ॥ द्विघ्नद्विघ्नप्रमाणानि, कुण्डानि जिह्विकादिवत् । तुल्यान्यन्तर्निम्नगानां मिथो विजयगानि च ॥ ९२ ॥ प्रागुक्ताः पर्वताः कूटाः, कुण्डानि च महापगाः । सर्वे वृता वेदिकया, वनाढ्योभयपार्श्वया ॥ ९३ ॥ वेदिकावनखण्डानां, सर्वत्राप्यविशेषितम् । स्वरूपं जगतीस्थायिवेदिकावनखण्डवत् ॥ ९४ ॥

५ १० १३

---

१ भरतादिषु गङ्गादिवत् महाविदेहेषु शीताशीतोदाभावात् सप्तवर्ष्या इति, चतुष्षष्टिः विजयेषु तु गङ्गाद्याः ।

ऐरावते च भरते, विजयेष्वखिलेषु च। प्रत्येकं त्रित्रिसद्भावात्तीर्थानां द्व्युत्तरं शतम् ॥ ९५ ॥ श्रेण्यश्चतस्रः प्रत्येकं, वैताढ्येषु गुहाद्वयम्। श्रेण्यः शतं स्युः षट्त्रिंशमष्टषष्टिश्च कन्दराः ॥ ९६ ॥ दशोत्तरं पुरशतं, प्रतिवैताढ्यपर्वतम्। ससप्तत्रिंशच्छतान्येवं, चत्वारिंशानि तान्यपि ॥ ९७ ॥ द्वात्रिंशच्च विदेहस्था, भरतैरवते इति। विजयाः स्युश्चतुस्त्रिंशच्चक्रिजेतव्यभूमयः ॥ ९८ ॥ चतुस्त्रिंशद्राजधान्यो, द्वौ कुरुस्थौ महाद्रुमौ। अस्यान्तिकेऽन्तरद्वीपाः, षट्पञ्चाशच्च वार्द्धिगाः ॥ ९९॥ एवं च संग्रहद्वारा, यदुक्तमप्यनूदितम्। सुखावबोधार्थतानां, तदस्माकं न दोषकृत् ॥ २०० ॥ जिनैश्चक्रिभिः सीरिभिः शार्ङ्गिभिश्च, चतुर्भिश्चतुर्भिर्जघन्येन युक्तः। सनाथस्तथोत्कर्षतस्तीर्थनाथैश्चतुस्त्रिंशताऽयं भवेद् द्वीपराजः ॥ १ ॥ (भुजङ्गप्रयातं) चक्रवर्त्तिबलदेवकेशवैस्त्रिंशता परिचितः प्रकर्षतः। भारतैरवतयोर्द्वयं तथा, ते परे खलु महाविदेहगाः ॥ २ ॥ (रथोद्धता) जम्बूद्वीपे स्युर्निधीनां शतानि, षड्युक्तानि त्रीणि सत्तामपेक्ष्य। षट्त्रिंशत्ते चक्रिभोग्या जघन्यादुत्कर्षेण द्वे शते सप्ततिश्च ॥३॥ (शालिनी) चक्री गङ्गाद्यापगानां मुखस्थानेतानात्ताशेषषट्खण्डराज्यः। व्यावृत्तः सन्नष्टमस्य प्रभावात्साधिष्ठातॄनात्मसान्निर्मिमीते ॥४॥ (शालिनी) पञ्चाक्षररत्नत्रिशती दशाधिकोत्कर्षेण भोग्याऽत्र च चक्रवर्त्तिनाम्। जघन्यतोऽष्टाभ्यधिकैव विंशतिरेकाक्षररत्नेष्वपि भाव्यतामिदम् ॥५॥ (इन्द्रवंशा) द्वौ चन्द्रौ द्वौ दिनेन्द्राविह परिलसतो दीपकौ सद्मनीव, षट्सप्तत्या समेतं ग्रहशतमभितः कान्तिमाविष्करोति। षट्पञ्चाशच्च ऋक्षाण्यनिलपथपृथून्निन्द्रचन्द्रोदयान्तर्मुक्ताश्रेण्याः श्रयन्ति श्रियमतिविततश्रीभरैर्विश्रुतानि ॥ ६ ॥

१५ २० २५ २७

एकं लक्षं सहस्राः सततमिह चतुस्त्रिंशदुद्योतहृद्या, न्यूनाः पञ्चाशतोच्चैर्दधति रुचिरतां तारकाकोटिकोट्यः (१३३९५०)। प्रोद्यत्प्रस्वेदबिन्द्वावलय इव निशि व्योमलक्ष्मीमृगाक्ष्याः, रत्यभ्यासं विधातुं प्रियतमविधुना गाढमालिङ्गिताया: ॥ ७ ॥ ( स्रग्धरे ) कोटाकोटिपदेन केचन बुधाः कोटिं वदन्त्यत्र यत्, क्षेत्रस्तोकतयाऽवकाशघटना नैषां भवेदन्यथा। अन्ये कोटय एव तारकततेरौत्सेधिकैरङ्गुलैः, कोटाकोटिदशां भजन्ति घटिता इत्यूचिरे सूरयः ॥ ८ ॥ ( शार्दूल० ) तथा च संग्रहणीवृत्तौ—इह द्वे मते, तत्रैके कोटीनामेव कोटीकोटीति संज्ञान्तरं—नामान्तरं मन्यन्ते, क्षेत्रस्य स्तोकत्वेन, तथा पूर्वाचार्यप्रसिद्धेः, अन्ये त्वाहुः—'नगपुढवीमाणाइं, मिणसु पमाणंगुलेणं तु' इति वचनात्ताराविमानानां स्वरूपेण कोटय एव सत्यो यदौत्सेधाङ्गुलेन सर्वतो मीयन्ते तदा कोटीकोटयो जायन्ते, तथोक्तं विशेषणवत्यां—कोडाकोडी सन्नंतरं तु मन्नंति केइ थोवतया। अन्ने उस्सेहंगुलमाणं काऊण ताराणं ॥१॥" जयति जगति जम्बूद्वीपभूमीधवोऽयं, सततमितरवार्द्धिद्वीपसामन्तसेव्यः। सुरगिरिरयमुच्चैरंशुको नीलचूलः, श्रयति कनकदण्डो यस्य राजध्वजत्वम् ॥ ९ ॥ (मालिनी) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्, राजश्रीतनयोऽतनिष्ट विनयःश्रीतेजपालात्मजः । काव्यं यत् किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे सर्गः पूर्त्तिमितो युतोऽद्भुतगुणैरेकोनविंशः सुखम् ॥ २१० ॥

॥ इति लोकप्रकाशे एकोनविंशः सर्गः समाप्तः ॥

## ॥ अथ विंशः सर्गः प्रारभ्यते ॥

प्रणम्य परमज्ञानप्रभाप्रस्तावकं प्रभुम्। द्वीपेऽस्मिन्नथ सूर्येन्दुचाररीतिर्विभाव्यते ॥ १ ॥ सर्वेषां कालमानानामादिरादित्य एव हि। ततोऽस्य वक्तुमुचिता, पूर्वं चारनिरूपणा ॥ २ ॥ तथाहुः पंचमांगे—"से केणट्ठेणं भंते! एवं वुच्चइ—सूरे आइच्चे सूरे० ? गो० सूराइयाणं समयाइ वा आवलियाइ वा जाव ओसप्पिणीति वा अवसप्पणीति वा" ततोऽत्र बहुवाच्यापि, प्रथमं सैव तन्यते। पञ्चानुयोगद्वाराणि, तस्यामाहुर्जिनेश्वराः ॥ ३ ॥ मण्डलानामिह क्षेत्रप्ररूपणा ततः परम्। संख्याप्ररूपणा तेषां, तदाबाधाप्ररूपणा ॥ ४ ॥ ततः परं मण्डलानामन्तरस्य प्ररूपणा। चारप्ररूपणा चैषां, भाव्यन्तेऽनुक्रमादिमाः ॥ ५ ॥ इह प्रकरणे यत्र, काप्यंशा अविशेषतः। कथ्यन्ते तत्रैकषष्टिच्छिन्नांस्तान् परिचिन्तयेत् ॥ ६ ॥ अभ्यन्तरादिभिर्बाह्यपर्यन्तैः सूर्यमण्डलैः। आकाशं स्पृश्यते यत्तन्मण्डलक्षेत्रमुच्यते ॥ ७ ॥ योजनानां पञ्चशती, दशोत्तरा तथा लवाः। अष्टचत्वारिंशदस्य, विष्कम्भश्चक्रवालतः ॥ ८ ॥ तथाहि—अष्टचत्वारिंशदंशा, विष्कम्भः प्रतिमण्डलम्। मण्डलानां च चतुरशीत्याढ्यं शतमीरितम् ॥९॥ अष्टचत्वारिंशता सा, गुण्यते मण्डलावली। द्वात्रिंशानि शतान्यष्टाशीतिर्भागा भवन्ति ते ॥ १० ॥ विभज्यन्ते चैकषष्ट्या, योजनानयनाय ते। पूर्वोदितानामंशानामेकषष्ट्यात्मकत्वतः ॥ ११ ॥ चतुश्चत्वारिंशमेवं, योजनानां शतं भवेत्। अष्टचत्वारिंश-



२०

॥२२६॥
२५
२६

दंशाः, शेषमत्रावशिष्यते ॥ १२ ॥ मण्डलानामन्तराणि, स्युस्त्र्यशीत्यधिकं शतम् । स्युः सर्वत्राप्यन्तराणि, रूपोनान्यङ्गुलीष्विव ॥ १३ ॥ योजनद्वयमानं स्यादेकैकं मण्डलान्तरम् । शतं त्र्यशीत्याभ्यधिकं, द्विकेन गुण्यते ततः ॥ १४ ॥ शतानि त्रीणि षट्षष्ट्याभ्यधिकानि भवन्त्यतः । प्राच्यमत्र चतुश्चत्वारिंशं प्रक्षिप्यते शतम् ॥ १५ ॥ योजनानां पञ्चशती, दशोत्तरा तथा लवाः । अष्टचत्वारिंशदेषा, मण्डलक्षेत्रविस्तृतिः ॥ १६ ॥ इति सूर्यमण्डलक्षेत्रम् ॥

समाक्रम्य योजनानामशीतिसंयुतं शतम् । पञ्चषष्टिर्मण्डलानि, जम्बूद्वीपे विवस्वतः ॥ १७ ॥ विशेषश्चाय-मत्र–पञ्चषष्ट्या मण्डलैः स्यादेकोनाशीतियुक् शतम् । योजनानामेकषष्टिभागैर्नवभिरञ्चितम् ॥ १८ ॥ ततः षट्षष्टितमस्य, मण्डलस्य लवैः सह । स्याद् द्विपञ्चाशताऽशीतियुक्योजनशतं ह्यदः ॥ १९ ॥ तथा–साष्टाच-त्वारिंशद्भागां योजनशतत्रयीं त्रिंशाम् । व्याप्याब्धौ मण्डलशतमर्कस्यैकोनविंशं स्यात् ॥ २० ॥ ( आर्या ) एवं च मण्डलशतं, रवेश्चतुरशीतिमत् । पूर्वोक्तं मण्डलक्षेत्रं, समाक्रम्य व्यवस्थितम् ॥ २१ ॥ अत्र जम्बूद्वीप-वर्त्तिनां पञ्चषष्टेर्मण्डलानां विषयव्यवस्थायां संग्रहणीवृत्त्याद्युक्तोऽयं वृद्धसंप्रदायः–यथैकतो मेरुगिरेस्त्रिषष्टिर्नि-षधोपरि । हरिवर्षजीवाकोट्यां, विज्ञेयं मण्डलद्वयम् ॥ २२ ॥ मेरोरपरतोऽप्यूर्द्ध्वं, त्रिषष्टिर्नीलवद्गिरेः । रम्यक-जीवाकोट्यां च, मण्डले द्वे विवस्वतः ॥ २३ ॥ इयं भरतैरवतापेक्षया मण्डलस्थितिः । अग्निवायुस्थयोर्मेरोर्ज्ञेया निषधनीलयोः ॥ २४ ॥ प्राग्विदेहापेक्षया तु, मेरोरैशानकोणगे । स्युस्त्रिषष्टिर्नीलवति, मण्डलानीति

५

१०

१४

तद्विद्ः ॥ २५ ॥ एवं प्रत्यग्विदेहानामपेक्षया सुमेरुतः । नैर्ऋतस्थायिनिषधे, विज्ञेया मण्डलावली ॥ २६ ॥ किंच–विदिग्गताभ्यां श्रेणीभ्यां, मण्डलाल्यौ स्थिते इमे । औदयिकक्षेत्रपरावर्त्तोद्यनयोर्द्वयोः ॥२७॥ क्रान्तिहान्याऽयने याम्येऽर्वागर्वागागतौ रवी । दृश्येते कान्तिवृद्ध्या च, दूरतोऽप्युत्तरायणे ॥ २८ ॥ एवं हरिवर्षरम्यकजीवाकोट्योरपि भावना ॥ तथाहुर्जम्बूद्वीपप्रज्ञप्तिसूत्रे "जंबूद्दीवे णं भंते ! दीवे सूरिया उदीणपाईणमुग्गच्छ पाईणदाहिणमागच्छंति १ ( पूर्वविदेहापेक्षयेदं ) पाइणदाहिणमुग्गच्छ दाहिणपडीणमागच्छंति २ ( भरतापेक्षयेदं ) दाहिणपडीणमुग्गच्छ पडीणउदीणमागच्छंति ३ ( पश्चिमविदेहापेक्षयेदं ) पडीणउदीणमुग्गच्छ उदीणपाईणमागच्छंति ४ ( ऐरवतापेक्षयेदं ) या मण्डलानां विषयव्यवस्थेयमुदीरिता । भारतादिमध्यभागापेक्षया सा विभाव्यताम् ॥ २९ ॥ अन्यत्र तु स्वस्वभानूदयक्षेत्रे यथोदिता । मण्डलानां व्यवस्था सा, व्यस्तया वक्तुं न शक्यते ॥ ३० ॥ एवं च–येषामदृश्यो दृश्यत्वं, दृश्यो वा यात्यदृश्यताम् । यत्र तत्रैवोदयास्तौ, तेषां भानुमतो नृणाम् ॥ ३१ ॥ नन्वेवं सति सूर्यस्योदयास्तमयने खलु । स्यातामनियते बाढं, स्तां यदुक्तं पुरातनैः ॥३२॥ "जह जह समए समए पुरओ संचरइ भक्खरो गयणे । तह तह इओवि नियमा जायइ रयणीइ भावत्थो ॥ १ ॥ एवं च सइ नराणं उदयत्थमणाइं होंतऽनिययाइं । सइ देसकालभेए कस्सइ किंचि वदिस्सए नियमा ॥ ३३ ॥ सइ चेव अ निद्दिट्ठो रुद्दमुहुत्तो कमेण सव्वेसिं । केसिंचीदाणिंपिय विसयपमाणो रवी जेसिं ॥ ३४ ॥" भगवतीसूत्रशत ५ प्रथमोद्देशकवृत्तौ ॥ इति सूर्यमण्डलसंख्या, प्रसङ्गात्तद्विषयव्यवस्था च ॥



२०

२५

॥ २२७ ॥

२८

वाक्याऽथ मण्डलाबाधा, त्रिविधा सा निरूपिता । ओघतो मण्डलक्षेत्राबाधाऽधिकृत्य मन्दरम् ॥ ३५ ॥
मेरुमेवाधिकृत्यान्या चाबाधा प्रतिमण्डलम् । मण्डले मण्डलेऽबाधा, तृतीया त्वर्कयोर्मिथः ॥ ३६ ॥ सहस्राणि
चतुश्चत्वारिंशदष्टौ शतानि च । विंशानि मेरुतो दूरं, मण्डलक्षेत्रमोघतः ॥३७॥ तथाहि जम्बूद्वीपान्तः, सर्वाभ्यन्तर-
मण्डलम् । साशीतियोजनशतं, स्थितं वगाह्य सर्वतः ॥ ३८ ॥ ततश्च द्वीपविष्कम्भाल्लक्षरूपाद्वियोज्यते । साशी-
तियोजनशतं, प्रत्येकं पार्श्वयोर्द्वयोः ॥ ३९ ॥ सहस्रा नवनवतिश्चत्वारिंशा च षट्शती । ईदृग्रूपः स्थितो राशिर-
स्मादप्यपनीयते ॥ ४० ॥ सहस्राणि दश व्यासो, मेरोस्ततोऽवशिष्यते । नवाशीतिः सहस्राणि, चत्वारिंशा च
षट्शती ॥ ४१ ॥ एतावन्मण्डलक्षेत्रे, मेरुव्यासो न यद्यपि । तथापि भूतलगतो, व्यवहारादिहोच्यते ॥ ४२ ॥
तथाहुः श्रीमलयगिरिपादा बृहत्क्षेत्रसमासवृत्तौ–"यद्यपि च नाम मण्डलक्षेत्रे मेरोर्विष्कम्भो दशयोजनसह-
स्रात्मको न लभ्यते, किंतु न्यूनः, तथापि धरणितले दशयोजनसहस्रप्रमाणः प्राप्यते इति तत्रापि स तावान्
व्यवहारतो विवक्ष्यते" अस्मिन्नाशावर्द्धिते च, संपद्यते यथोदितम् । ओघतो मण्डलक्षेत्रान्तरं मेरुव्यपेक्षया
॥ ४३ ॥ इति मेरुं प्रतीत्य मण्डलक्षेत्राबाधा ॥ एतदेवान्तरं मेरोः, सर्वान्तमण्डलस्य च । अतः परं यदपरं,
नास्ति मण्डलमान्तरम् ॥ ४४ ॥ सर्वान्तरानन्तरे तु, द्वितीयमण्डले ततः । साष्टाचत्वारिंशदंशं, वर्द्धते
योजनद्वयम् ॥ ४५ ॥ इत्थं प्राग्मण्डलादग्र्यमण्डले योजनद्वयम् । साष्टाचत्वारिंशदंशमबाधायां विवर्द्धते
॥ ४६ ॥ एवं यावत् सर्वबाह्यमण्डलं मेरुतः स्थितम् । सहस्रैः पञ्चचत्वारिंशता त्रिंशैस्त्रिभिः शतैः

॥ ४७ ॥ इति मेरुं प्रतीत्य प्रतिमण्डलमबाधा ॥ यदाऽर्कौ चरतः प्राप्य, सर्वाभ्यन्तरमण्डलम् । तदा सूर्यस्य सूर्यस्य, स्यात्परस्परमन्तरम् ॥ ४८ ॥ सहस्रा नवनवतिश्चत्वारिंशा च षट्शती । द्वीपव्यासादुभयतो मण्डलक्षेत्र ( १८० ) कर्षणात् ॥ ४९ ॥ सर्वान्तरानन्तरं तौ, द्वितीयं मण्डलं यदा । उपसंक्रम्य चरतस्तदा मिथोऽन्तरं तयोः ॥ ५० ॥ सहस्रा नवनवतिर्योजनानां च षट्शती । पञ्चचत्वारिंशदाढ्या, पञ्चत्रिंशत्तथा लवाः ॥ ५१ ॥ तथाह्येकोऽप्यर्क इह, द्वितीयमण्डले व्रजन् । साष्टाचत्वारिंशदंशे, द्वे योजने व्यतिक्रमेत् ॥ ५२ ॥ एवं द्वितीयोऽपि ततो, वर्द्धन्ते प्रतिमण्डलम् । योजनानि पञ्च पञ्चत्रिंशद्भागा मिथोऽन्तरे ॥ ५३ ॥ एवं यावत् सर्वबाह्यमण्डले चरतस्तदा । तयोर्मिथोऽन्तरं लक्षं, सषष्टीनि शतानि षट् ॥ ५४ ॥ अन्तर्विशन्तौ तौ सर्वबाह्यमण्डलतः पुनः । अर्वाचीने सर्वबाह्याद्वर्त्तते मण्डले यदा ॥ ५५ ॥ तदाऽर्कयोरन्तरं स्याल्लक्षमेकं शतानि षट् । चतुष्पञ्चाशानि लवाः, षड्विंशतिः पुरोदिताः ॥ ५६ ॥ एवमन्तः प्रविशतः, प्रतिमण्डलमन्तरम् । पञ्चभिर्योजनैः पञ्चत्रिंशताऽंशैश्च हीयते ॥५७॥ एवं पूर्वोदितमेव, सर्वाभ्यन्तरमण्डले । मिथोऽन्तरं द्वयोर्भान्वोः, पुनस्तदवशिष्यते ( ९९६४० ) ॥ ५८ ॥ इति मण्डले २ सूर्ययोः परस्परमबाधा ॥ द्वे द्वे च योजने सूर्यमण्डलानां मिथोऽन्तरम् । कथमेतदिति श्रोतुं, श्रद्धा चेच्छ्रूयतां तदा ॥ ५९ ॥ सूर्यमण्डलविष्कम्भे, स्फुरच्चतुरशीतिना । शतेन गुणिते त्यक्ते, मण्डलक्षेत्रविस्तृतेः ॥ ६० ॥ शेषा स्थिता योजनानां, सषट्षष्टिः शतत्रयी । सत्र्यशीतिशतेनास्यां, भक्तायामेतदन्तरम् ॥ ६१ ॥ इति मण्डलान्तरप्ररूपणा ॥

मण्डलान्तरं

२०

२५

॥२२८॥

२८

कर्त्तव्या मण्डलचारप्ररूपणा च संप्रति। ससानुयोगद्वाराणि, तत्राहुस्तत्त्ववेदिनः ॥ ६२॥ प्रत्यब्दं मण्डलाचार-
संख्याप्ररूपणा रवेः १। वर्षान्तः प्रत्यहं रात्रिदिनमानप्ररूपणा २॥ ६३॥ मण्डले मण्डले क्षेत्रविभागेनाप्यह-
र्निशोः। प्ररूपणा ३ मण्डलानां, परिक्षेपप्ररूपणम् ४॥ ६४॥ प्रतिमण्डल मुहूर्त्तगतिमानप्ररूपणा ५। मण्डले
मण्डले दृष्टिपथप्राप्तिप्ररूपणा ६॥ ६५॥ प्ररूपणा सप्तमी च, ख्याताऽर्द्धमण्डलस्थितेः ७। अनुयोगद्वारमथ,
प्रथमं परितन्यते ॥ ६६॥

चरतोऽर्कौ यदा सर्वान्तरानन्तरमण्डले। सूर्यसंवत्सरस्याहोरात्रोऽयं प्रथमस्तदा ॥ ६७॥ त्र्यशीतियुक्त-
शततमे, द्वैतीयीकात्तु मण्डलात्। परिपाट्या सर्वबाह्यमण्डले तौ यदागतौ ॥६८॥ संपूर्णाः सूर्यवर्षस्य, षण्मासाः
प्रथमे तदा। एतदेव च वर्षेऽस्मिन्, दक्षिणायनमुच्यते ॥ ६९॥ युग्मम्। सर्वबाह्याऽर्वाक्तनेऽथ, मण्डलेऽर्कौ
यदा पुनः। तदोत्तरायणस्याहोरात्रोऽयं प्रथमो भवेत् ॥ ७०॥ त्र्यशीतियुक्तशततमे, बाह्यार्वाचीनमण्डलात्।
यदा क्रमाद्रवी प्राप्तौ, सर्वाभ्यन्तरमण्डले ॥ ७१॥ पूर्णा द्वितीयाः षण्मासाः, पूर्णं तथोत्तरायणम्। पूर्णं वर्षं
सषट्षष्ट्यहोरात्रत्रिशतात्मकम् ॥ ७२॥ युग्मम्। एवं च—सर्वान्तरसर्वबाह्यमण्डलयोः किलैकशः। प्रत्यब्दं
सूर्यचारः स्यात्सर्वेष्वन्येषु च द्विशः ॥७३॥ तथा चागमः—"जआ णं सूरिए सव्वब्भंतराओ मण्डलाओ सव्वबाहिरं
मंडलं उवसंकमित्ता चारं चरइ सव्वबाहिराओ य मंडलाओ सव्वब्भंतरमंडलं उवसंकमित्ता चारं चरइ एस णं
अद्धा केवइएणं राइंदियग्गेणं आहियत्ति वएज्जा?, तिन्नि छावट्ठे राइंदियसए राइंदियग्गेणं आहियत्ति वएज्जा,

ता एयाए णं अद्धाए सूरिए कइ मण्डलाइं चरइ?, ता चुलसीयं मंडलसयं चरइ, बासीयं मंडलसयं दुक्खुत्तो चरइ, तंजहा–निक्खममाणे चेव पविसमाणे चेव, दुवे य खलु मंडलाइं सइं चरइ, तंजहा–सव्वब्भंतरं चेव सव्वबाहिरं चेव मंडलं" ॥ इति मण्डलचारसंख्याप्ररूपणा १ ॥

आक्रमेते यदा भानू, सर्वाभ्यन्तरमण्डले। अष्टादशमुहूर्तात्मा, सर्वोत्कृष्टो दिनस्तदा ॥७४॥ रात्रिः सर्वजघन्या तु, स्यात् द्वादशमुहूर्तिका। अथ क्रमाद्रात्रिवृद्धिर्भावनीया दिनक्षतिः ॥७५॥ यदा तस्माद्विनिर्यान्तौ, सर्वाभ्यन्तरमण्डलात्। आरभमाणौ नव्याब्दमहोरात्रेऽस्य चादिमे ॥७६॥ संक्रम्य चरतः सर्वाभ्यन्तरानन्तरस्थितम्। द्वितीयं मण्डलं सूर्यौ,द्वीपमन्दिरदीपकौ ॥७७॥ द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां दिवसस्तदा। हीयते वासतेयी च, ताभ्यामेव विवर्द्धते ॥७८॥ अहोरात्रे द्वितीयेऽस्य, तृतीयमण्डले यदा। संक्रान्तौ तरणी सर्वान्तरानन्तरमण्डलात् ॥७९॥ मुहूर्त्तैकषष्टिभागैश्चतुर्भिर्दिवसस्तदा। हीयते वर्द्धते रात्रिभागैस्तावद्भिरेव च ॥८०॥ एवं मुहूर्त्तैकषष्टिभागौ द्वौ प्रतिमण्डलम्। हापयन्तौ दिनक्षेत्रे, वर्द्धयन्तौ निशादिशि ॥८१॥ अर्कौ यदा सर्वबाह्यमण्डले समुपस्थितौ। अहोरात्रेऽस्य वर्षस्य, त्र्यशीतियुक्तशतोन्मिते ॥८२॥ तदा ताभ्यां मुहूर्त्तैकषष्ट्यंशानां शतत्रयम्। सषट्षष्टि दिनात्कृष्टं, रजन्यां चाभिवर्धितम् ॥८३॥ तावद्भिश्च मुहूर्त्तैकषष्टिभागैर्यथोदितैः। विभाजितैरेकषष्ट्या, मुहूर्त्तानि भवन्ति षट् ॥८४॥ अहोरात्रेऽत्र तद्रात्रिरष्टादशमुहूर्त्तिका। उत्कृष्टाऽहश्चापकृष्टं, स्याद् द्वादशमुहूर्त्तकम् ॥८५॥ याम्यायनस्य पूर्णस्याहोरात्रोऽयं किलान्तिमः। त्र्यशीतियुगहो-

२० २५ ॥२२९॥ २८

रात्रशतेनेदं हि पूर्यते ॥८६॥ लोके तु" रसद्विनाड्योऽर्कपला मृगे स्युः, । सचापकुम्भेऽष्टकृतैः पलैस्ताः । अलौ च मीनेऽष्टयमाः सशका, मेषे तुलायामपि त्रिंशदेव ॥८७॥ कन्यावृषे भूशिखिनोऽङ्गवेदाः, साकांस्त्रिरामा मिथुने च सिंहे । कर्के त्रिरामा वसुवेदयुक्ता, एषा मितिः संक्रमवासराणाम् ॥ ८८ ॥

| म | ध | कु | वृ | मी | मे | तु | क | वृष | मि | सिं | क |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २६ | २६ | २६ | २८ | २८ | ३० | ३० | ३१ | ३१ | ३३ | ३३ | ३३ |
| १२ | ४८ | ४८ | १४ | १४ | | | ४६ | ४६ | १२ | १२ | ४८ |

ततश्च—एकाऽर्कपक्षद्विशरास्त्रिदंतास्त्रिदंतपक्षद्विशराः क्रुसूर्याः । मृगादिषट्केऽहनि वृद्धिरेवं, कर्कादिषट्केऽपचितिः पलाढ्या ॥ ८९ ॥" प्रविशन्तौ सर्वबाह्यमण्डलात्तरणी यदा । संक्रम्य चरतः सर्व-बाह्यावर्वाचीनमण्डले ॥९०॥ तदा द्वाभ्यां मुहूर्त्तैकषष्ट्यंशाभ्यां विवर्द्धते। दिवसः क्षीयते रात्रिस्ताभ्यामेव यथोत्तरम् ॥९१॥ क्रमादेवं यदा प्राप्तौ, सर्वाभ्यन्तरमण्डले। त्र्यशीतियुक्शततमे, बाह्यावर्वाचीनमण्डलात् ॥९२॥ तदोत्कृष्टं दिनमानमष्टादशमुहूर्त्तकम् । रात्रिः सर्वजघन्या तु, स्याद् द्वादशमुहूर्त्तिका ॥ ९३ ॥ एतदेवोदगयनस्यान्त्यं दिनमुदीरितम् । पूर्णे चास्मिन्नहोरात्रे, संपूर्णः सूर्यवत्सरः ॥९४॥ अत्युत्कृष्टं चापकृष्टं, प्रत्यब्दमेकमेव हि । दिनं रात्रिस्तथैवैका, सर्वोत्कर्षापकर्षभाक् ॥ ९५ ॥ रात्रिर्याम्यायनान्तेऽतिगुर्वी लघुतमं दिनम् । दिनः सौम्यायनान्तेऽतिगुरुर्निशा लघीयसी ॥ ९६ ॥ तथा च राद्धान्तः—"इह खलु तस्सेवं आइच्चसंवच्छरस्स सइं अट्ठारसमुहुत्ते दिवसे भवइ, सइं अट्ठारसमुहुत्ता राई भवइ, सइं दुवालसमुहुत्तो दिवसो भवइ, सयं दुवालसमुहुत्ता राई भवइ" जम्बूद्वीपे यदा मेरोर्दक्षिणोत्तरयोर्दिनम् । चकितेव तदा रात्रिः, स्यात्पूर्वापरयोर्दिशोः ॥९७॥ सर्वो-

रात्रिदिनमानं

त्कृष्टं दिनमानं, दक्षिणोत्तरयोर्यदा। रात्रिः सर्वजघन्या स्यात्पूर्वपश्चिमयोस्तदा ॥९८॥ सर्वोत्कृष्टं दिनमानं, पूर्वपश्चिमयोर्यदा । रात्रिः सर्वजघन्या स्याद्दक्षिणोत्तरयोस्तदा ॥९९॥ किंच क्षेत्रेषु सर्वेषु, समं मानमहर्निशोः। किं त्वेतयोरवस्थाने, यथोक्तः स्याद्विपर्ययः ॥१००॥ क्षेत्रे काले च सर्वस्मिन्नहोरात्रो भवेद्ध्रुवम् । त्रिंशन्मुहूर्त्तप्रमाणो, न तु न्यूनाधिकः क्वचित् ॥ १०१ ॥ लोके तु–"भवेत्पैत्रं त्वहोरात्रं, मासेनाब्देन दैवतम्। दैवे युगसहस्रे द्वे, ब्राह्मं कल्पौ तु तौ नृणाम् ॥१॥ एवमहोरात्रे विशेषं वदन्ति, अत एव दक्षिणायनं देवानां रात्रिरुत्तरायणं तेषां दिनमिति शुभकार्यं तत्र विहितमिति मन्यन्ते" ननु चाष्टादशमुहूर्त्तात्माऽहर्भरते यदि । स्यात्तदा च विदेहेषु, रात्रिः सर्वलघीयसी ॥ २ ॥ तर्हि रात्रेर्द्वादशानां, मुहूर्त्तानां व्यतिक्रमे । स्यात् क्षेत्रे तत्र कः काल, इति चेदुच्यते श्रृणु ॥ ३ ॥ द्युरात्रिमानविश्लेषे, शेषादर्धं भवेद् द्वयोः। सामान्यं क्षेत्रयो रात्रिदिनपूर्वापराशयोः ॥४॥ तद्यथा-क्षणेभ्योऽष्टादशभ्यो द्वादशापकर्षणे स्थिताः । षट् तदर्द्धं त्रयं साधारणं ज्येष्ठदिनोषयोः ॥ ५ ॥ एवं च अष्टादशमुहूर्तात्मा, यदोत्कृष्टो दिनस्तदा । पश्चात्त्रिक्षणशेषेऽह्नि, भवेद्भानूदयोऽग्रतः ॥ ६ ॥ तथाहि–मुहूर्त्तत्रयशेषेऽह्नि, भरतैरवताख्ययोः । भवेदभ्युदयो भानोः, पूर्वापरविदेहयोः ॥ ७ ॥ दिने त्रिक्षणशेषे च, पूर्वापरविदेहयोः । स्याद्भारतैरवतयोस्तरणेरुदयः खलु ॥८॥ एवं च–स्याद्भारतैरवतयोरह्नोऽन्त्यं यत् क्षणत्रयम् । ज्येष्ठेऽहनि तदेवाद्यं, पूर्वापरविदेहयोः ॥ ९ ॥ दिने गुरौ यदेवाद्यं, पूर्वापरविदेहयोः। तद्भारतैरवतयोरह्नोऽन्त्यं स्यात् क्षणत्रयम् ॥ १० ॥ तथा–अष्टादशमुहूर्त्ता स्याद्यदोत्कृष्टा निशा तदा । तन्मुहूर्त्तत्रयेऽतीते, भवेदर्कोदयः पुरः

२०

२५

॥ २३० ॥

२८

॥ ११ ॥ तथाहि-पूर्वापरविदेहेषु, भानोरस्तात्रिभिः क्षणैः।स्याद् भारतैरवतयोस्तरणेरुदयः खलु ॥१२॥ भार-
तैरवतयोश्च, भानोरस्तादनन्तरम् । त्रिभिः क्षणैः स्यात्प्रत्यूषं पूर्वापरविदेहयोः॥ १३॥ क्षणशब्दश्चात्र प्रकरणे
मुहूर्त्तवाचीति ध्येयं॥ तथा च-भवेद्विदेहयोराद्यं, यन्मुहूर्त्तत्रयं निशः । स्याद्भारतैरवतयोस्तदेवान्त्यं क्षणत्रयम्
॥ १४ ॥ स्याद्भारतैरवतयोर्यन्निशोऽन्त्यं क्षणत्रयम् । भवेद्विदेहयो रात्रेस्तदेवान्त्यं क्षणत्रयम्॥ १५॥ इह च प्रा- ५
ग्विदेहादिक्षेत्राह्वानोपलक्षिताः । पूर्वादिक्षेत्रदिग्मध्यभागा ज्ञेया विवेकिभिः ॥ १६ ॥ तेष्विदं कालनैयत्यं,
ज्ञेयमन्यत्र तु स्फुटम् । भाव्यमस्यानुसारेणार्कोदयास्तविभावनात् ॥ १७॥ एवंच-अपाच्युदीच्योः प्रत्यूषान्मु-
हूर्त्तत्रितये गते । लघोर्निशायाः प्रारम्भः, स्यात्पूर्वापरयोर्दिशोः ॥ १८ ॥ अपराह्नात्रिमुहूर्त्यां, शेषायां चान-
योर्दिशोः । प्रत्यक्प्राक् च निशान्तः स्यादेव सर्वत्र भाव्यताम् ॥ १९ ॥ इदं गुरुदिने गुर्व्यां, रात्रौ त्वस्याः
क्षणत्रयम् । गते शेषे च कल्पाहःप्रान्तावुक्तदिशोः क्रमात् ॥ २० ॥ निशां चाह्नां मध्यमानामप्येवं स्तो १०
यथोचितम् । विश्लेषशेषार्द्धशेषे, याते चादिपरिक्षयौ ॥ २१ ॥ इति कृता वर्षमध्ये दिनरात्रिप्रमाणप्ररूपणा २॥
मण्डलस्याभ्यन्तरस्य, दशात्र परिधेर्लवाः । कल्प्यास्तत्रोद्योतयेत्तांस्त्रीनेकोऽर्को दिने गुरौ ॥ २२ ॥ त्रींश्च
तत्संमुखानन्यः, षट्स्वंशेषु दिनं ततः । मध्ये तयोर्लवौ द्वौ द्वौ, रजनीति लवा दश ॥ २३ ॥ जघन्येऽहनि च
द्वौ द्वौ, भागौ दीपयतो रवी । दिनं चतुर्षु भागेषु, निशा षट्सु लवेष्वतः ॥ २४ ॥ प्रकाशक्षेत्रतश्चैवं, दशांशौ १४
दक्षिणायने । हीयेते क्रमतस्तौ च, वर्धेते उत्तरायणे ॥ २५ ॥ अत्रोपपत्तिः-द्वाभ्यां किलाहोरात्राभ्यामेके-

नार्केण मण्डलम् । पूर्यतेऽहोरात्रयोश्च, मुहूर्त्ताः षष्टिराहिताः ॥ २६ ॥ षष्टेश्च दशमो भागः, षट् ते च त्रिगुणीकृताः । दशांशत्रयरूपाः स्युः, षष्टेरष्टादश क्षणाः ॥ २७ ॥ तदेभिरष्टादशभिर्मुहूर्त्तैः परिचेरपि । उत्कृष्टदिवसे युक्तं, दशांशत्रयदीपनम् ॥ २८ ॥ दशांशद्वयरूपाश्च, षष्टेर्द्वादश निश्चिताः । तत्तैर्द्वादशभिर्युक्तं, दशांशद्वयदीपनम् ॥ २९ ॥ तथाहुः—"इह छब्बिय दसभाए जंबुद्दीवस्स दुन्नि दिवसयरा । ताविंति दित्तलेसा अब्भिन्तरमण्डले संता ॥ ३० ॥ चत्तारि य दसभाए जंबुद्दीवस्स दुन्नि दिवसयरा । ताविंति मंदलेसा बाहिरए मंडले संता ॥ ३१ ॥ स्थापना ॥ एवं प्रकाशक्षेत्रस्य, दशांशकल्पना बुधैः । आपुष्करार्द्धं कर्त्तव्या, रवीनामथ तत्र च ॥ ३२ ॥ द्विशत्येकोनपञ्चाशाश्चतुस्त्रिंशत्सहस्रकाः । द्विचत्वारिंशच्च लक्षाः, कोट्येका परिधिर्भवेत् ॥ ३३ ॥ दशांशत्रितयं लक्षा, द्विचत्वारिंशदस्य च । सप्तत्रिंशाश्चतुस्त्रिंशत्सहस्राः परमे दिने ॥ ३४ ॥ तापक्षेत्रं तिर्यगेतत्, पुष्करार्द्धे विवस्वताम् । ततस्तदर्द्धं पश्यन्ति, तत्रत्याः सूर्यमुद्गतम् ॥३५॥ तथोक्तं—"लक्खेहिं एगवीसाइ साइरेगेहिं पुक्खरद्धंमि । उदए पिच्छंति नरा सूरं उक्कोसए दिवसे ॥३६॥". सर्वान्तमण्डलगतसूर्ययोरातपाकृतिः । ऊर्द्धास्यनालिकापुष्पसंस्थानसंस्थिता मता ॥ ३७ ॥ मेरुदिश्यर्द्धवलयाकारा वारिनिधेर्दिशि । शकटोद्धीमूलभागानुकारेयं प्रकीर्तिता ॥३८॥ मेरोर्दिशि संकुचिता, विस्तृता चाम्बुधेर्निशि । प्रत्येकमस्या आयामो, दक्षिणोत्तरयोर्दिशोः ॥ ३९ ॥ स्थापना ॥ मेरोरन्ताद्योजनानां, सहस्राण्यष्टसप्ततिः । शतत्रयं त्रयस्त्रिंशं, तृतीययोजनांशयुक् ॥ ४० ॥ सहस्राः पञ्चचत्वारिंशद्योजनानि तत्र च । जंबूद्वीपे शेष—( ३३३३३ऽ३)

मण्डलमाने नदिनरात्रिभागाः ३

१५

२०

२५

॥२३१॥

२८

मब्धौ, द्वयोर्योगे यथोदितम् ॥ ४१ ॥ मेरुणा यन्मते सूर्यप्रकाशः प्रतिहन्यते । तेषां मते मानमिदं, तापक्षेत्रायतेर्ध्रुवम् ॥ ४२ ॥ येषां मते मेरुणाऽर्कप्रकाशो नाभिहन्यते । किंतु मेरुगुहादीनामप्यन्तः प्रथते महः ॥४३॥ तेषां मते मन्दरार्द्धादारभ्य लवणादधेः । षड्भागं यावदायामस्तापक्षेत्रस्य निश्चितः ॥ ४४ ॥ तदा च–योजनानां सहस्राणि, पञ्च राशौ पुरातने । क्षिप्यन्ते मन्दरार्द्धस्य, ततो मानमिदं भवेत् ॥ ४५ ॥ योजनानां सहस्राणि, त्र्यशीतिस्त्रिशती तथा । त्रयस्त्रिंशत्समधिका, तृतीयोऽंशश्च योजनः ॥ ४६ ॥ सुपर्वपर्वतादेवं, पूर्वपश्चिमयोरपि । तापक्षेत्रस्य प्रत्येकमायामो ज्ञायतामियान् ॥ ४७ ॥ सर्वेषु मण्डलेष्वेष, चरतोर्भानुमालिनोः । अवस्थितः सदा तापक्षेत्रायामः प्रकीर्तितः ॥ ४८ ॥ विष्कम्भस्तु मेरुपार्श्वे, तस्यार्द्धवलयाकृतेः । स्यान्मेरुपरिधेर्भागे, दशमे त्रिगुणीकृते ॥ ४९ ॥ तथा च–सहस्रा नव षडशीत्यधिका च चतुःशती । योजनानां दशच्छिन्नाः, योजनस्य लवा नव ॥ ५० ॥ विष्कम्भोऽम्भोधिपार्श्वे तु, तापक्षेत्रस्य निश्चितः । अन्तर्मण्डलपरिधिर्दशांशे त्रिगुणीकृते ॥ ५१ ॥ स चायं–योजनानां सहस्राणि, चतुर्नवतिरेव च । षड्विंशाः पंचशत्यंशाः, षष्टिजाद्यब्धि ( ४२ ) संमिताः ॥ ५२ ॥ नन्वेवमब्धेः षड्भागं, यावद्व्याप्तिमुपेयुषः । तापक्षेत्रस्य विष्कम्भः, संभवेन्नाधिकः कथम् ? ॥५३॥ तथाहि–पूर्वोक्ततापक्षेत्रस्य, प्रान्तेऽब्धौ परिधिस्तु यः । तद्दशांशत्रयमितो, विष्कम्भः संभवेन्न किम् ? ॥ ५४ ॥ अत्रोच्यते–संभवत्येव किंत्वत्र, करणेनैष संवदन् । चतुर्नवतिसहस्रादिक एव मतो बुधैः ॥५५॥ व्यक्तिस्तु करणस्यास्य, मुहूर्त्तगतिचिन्तया । कार्या दृग्गोचरस्येव, साम्यात् दृक्पथतापयोः ॥ ५६ ॥

५

१०

१४

तथाहुः—अत्रोदयास्तान्तरं प्रकाशक्षेत्रं तापक्षेत्रमित्येकार्थाः। विष्कम्भस्त्वेष तापस्य, द्विविधोऽप्यनवस्थितः। याम्येऽयने हीयमानः, सौम्ये वृद्धिमवाप्नुयात् ॥ ५७ ॥ मुहूर्तैकषष्टिभागद्वयगम्यं तु यद्भवेत्। क्षेत्रं तावन्मिता वृद्धिर्हानिश्च प्रतिमण्डलम् ॥ ५८ ॥ तथा च मण्डलैः सार्द्धत्रिंशतैकैकभानुमान्। क्षेत्रं गम्यं मुहूर्त्तेन, वर्द्धयेद्वा क्षयं नयेत् ॥ ५९ ॥ मण्डलानां सत्र्यशीतिशतेनैवमनुक्रमात्। वर्द्धितं क्षपितं ताभ्यां, सौम्ययाम्यायनान्तयोः ॥ ६० ॥ मुहूर्त्तैः षड्भिराक्रम्य, क्षेत्रं स्यादेष एव च। बाह्याभ्यन्तरमण्डलाभ्यां, दशांशो वृद्धिहानिभाक् ॥६१॥ युग्मम् ॥ प्रकाशपृष्ठं लग्नस्यान्धस्येव तमसोऽप्यथ। आकृतिश्चिन्त्यते भान्वोः, सर्वान्तमण्डलस्थयोः ॥ ६२ ॥ अस्याप्याकृतिरूर्ध्वास्यनालिकापुष्पसंस्थिता। तापक्षेत्रवदायाममानं चास्याप्यवस्थितम् ॥६३॥ अस्तं गते दिनपतौ, मेरोरपि गुहादिषु। ध्वान्तोपलब्धेरायामस्तमसोऽपि प्रकाशवत् ॥ ६४ ॥ विष्कम्भो मेरुसंलग्ने, स्यादेवं ध्वान्तचोलके। मन्दराद्रिपरिक्षेपदशांशद्विगुणीकृते ॥६५॥ षड् योजनसहस्राणि, चतुर्विंशं शतत्रयम्। दशभागीकृतस्यैकयोजनस्य लवाश्च षट् ॥ ६६ ॥ लवणाम्भोधिदिशि तु, विष्कम्भस्तमसो भवेत्। अन्तर्मण्डलपरिधेर्दशांशे द्विगुणीकृते ॥ ६७ ॥ स चायं—योजनानां सहस्रास्त्रिषष्टिः ससदशाधिकाः। अष्टाचत्वारिंशदंशाः, षष्टिजास्तत्र मण्डले ॥ ६८ ॥ इति कर्कसंक्रान्तौ आतपक्षेत्रतमःक्षेत्रयोः स्वरूपं ॥ सर्वबाह्यमण्डलं तु, प्राप्तयोरुष्णरोचिषोः। तापान्धकारयोः प्राग्वत्संस्थानादिनिरूपणम् ॥६९॥ किंत्वब्धिदिशि विष्कम्भे, विशेषोऽस्ति भवेत्स च। बाह्यमण्डलपरिधेर्दशांशे द्विगुणीकृते ॥ ७० ॥ स्युस्त्रिषष्टिः सहस्राणि, सत्रिषष्टिश्च

२०

२५

॥२३२॥

२८

षट्शती । तद्दशांशे त्रिगुणिते, ध्वान्तव्यासोऽप्यसौ तदा ॥ ७१ ॥ सहस्राः पञ्चनवतिश्चत्वार्येव शतानि च ।
चतुर्नवतियुक्तानि, त्रिंशदंशाश्च षष्टिजाः ॥ ७२ ॥ बाह्यान्तर्मण्डलस्थार्कतापक्षेत्रानुसारतः । वृद्धिहानिव्य-
तीहारः, प्रकाशतमसोर्भवेत् ॥ ७३ ॥ सामीप्याद्दीप्रतेजस्त्वात्सर्वान्तर्मण्डलेऽर्कयोः । दिनातपक्षेत्रवृद्धिर्घर्म-
स्तीव्रस्तमोऽल्पता ॥ ७४ ॥ मन्दतेजस्तया दूरतया च बाह्यमण्डले । निशातमःक्षेत्रवृद्धिस्तापक्षेत्राल्पता दिने
॥ ७५ ॥ यत्तु–जम्बूद्वीपप्रज्ञप्तिसूत्रे सर्वान्तर्मण्डलस्थे रवौ समुद्रदिशि तापक्षेत्रविष्कम्भः चतुर्नवतिर्योजनस-
हस्राणि अष्टौ शतानि अष्टषष्ट्यधिकानि चतुरश्च दशभागान् योजनस्योक्तः, तथा ध्वान्तविष्कम्भश्च त्रिष-
ष्टिर्योजनसहस्राणि द्वे च पञ्चचत्वारिंशदधिके योजनशते षट् च दशभागा योजनस्य, अयमेव च सर्वबाह्य-
मण्डलस्थे रवौ तापक्षेत्रध्वान्तक्षेत्रयोर्विपर्ययेण विष्कम्भ उक्तः, स तु जम्बूद्वीपपरिधेरेव दशांशद्वयत्रयकल्प-
नयेति व्यामोहो न विधेयः, यत्तु तत्र सर्वान्तर्मण्डले उभयतः समुदितं द्वीपसंबन्धि षष्ठ्यधिकं योजनशतत्रयं
न्यूनतया न विवक्षितं यच्च सर्वबाह्यमण्डले उभयतः समुदितानि समुद्रसंबन्धीनि षष्ट्यधिकानि षट् योजनश-
तान्यधिकतया न विवक्षितानि तत्राविवक्षैव बीजमित्यादिकमर्थत उपाध्यायश्रीशान्तिचन्द्रोपज्ञजम्बूद्वीपप्रज्ञ-
प्तिवृत्तेरवसेयं । तापक्षेत्रस्य च व्यासो, यावान् स्याद्यत्र मण्डले । करप्रसारस्तस्यार्द्धं, पूर्वतोऽपरतोऽपि च
॥ ७६ ॥ मेरोर्दिशि तु मेर्वर्द्धं, यावत्तेजः प्रसर्पति । पाथोधिदिशि पाथोधेः, षड्भागं यावदर्कयोः ॥ ७७ ॥ करप्र-
सार ऊर्द्ध्वं तु, योजनानां शतं मतः । यत्तापयत एतावदूर्द्ध्वं निजविमानतः ॥ ७८ ॥ शतेष्वष्टासु सूर्याभ्यामध-

५

१०

१४

स्तात्समभूतलम् । सहस्रं च योजनानामधोग्रामास्ततोऽप्यधः ॥ ७९ ॥ तांश्च यावत्तापयतः, प्रसरन्ति करास्ततः । विवस्वतोर्योजनानामष्टादश शतान्यधः ॥ ८० ॥ सप्तचत्वारिंशदथ, सहस्राणि शतद्वयम् । त्रिषष्टिश्च योजनानां, षष्ठ्यंशा एकविंशतिः ॥ ८१ ॥ करप्रसार एतावान्, सर्वान्तर्मण्डलेऽर्कयोः । पूर्वतोऽपरतश्चाथ, दक्षिणोत्तरयोर्ब्रुवे ॥ ८२ ॥ सहस्राणि पञ्चचत्वारिंशत्स्वर्गिगिरेर्दिशि । साशीतियोजनशतोनान्यथाब्धेर्दिशि ब्रुवे ॥८३॥ त्रयस्त्रिंशत्सहस्राणि, त्रयस्त्रिंशं शतत्रयम् । योजनत्र्यंशयुग् वार्द्धौ, द्वीपेऽशीतियुतं शतम् ॥ ८४ ॥ सर्वबाह्यमण्डले तु, चरतोरुष्णरोचिषोः । करप्रसार एतावान्, स्यात्पूर्वापरयोर्दिशोः ॥ ८५ ॥ एकत्रिंशत्सहस्राणि, शतान्यष्टौ तथोपरि । एकत्रिंशद्योजनानि, त्रिंशदंशाश्च षष्टिजाः ॥ ८६ ॥ मेरोर्दिशि योजनानां, वार्द्धौ त्रिंशं शतत्रयम् । द्वीपे च पञ्चचत्वारिंशत्सहस्रास्ततः परम् ॥ ८७ ॥ त्रयस्त्रिंशत्सहस्राणि, सत्र्यंशं योजनत्रयम् । करप्रसारो भान्वोः स्याल्लवणाब्धौ शिखादिशि ॥ ८८ ॥ ऊर्द्ध्वं तु योजनशतं, तुल्यं सर्वत्र पूर्ववत् । अष्टादश योजनानां, शतान्यधस्तथैव च ॥ ८९ ॥ इति क्षेत्रविभागेन दिनरात्रिमानप्ररूपणा, तत्प्रसङ्गादातपतमःसंस्थानादिप्ररूपणा च ३ ॥

कृता क्षेत्रविभागेन, दिनरात्रिप्ररूपणा । परिक्षेपमिति ब्रूमः, साम्प्रतं प्रतिमण्डलम् ॥ ९० ॥ वगाह्योभयतो द्वीपे, सर्वान्तर्मण्डलं स्थितम् । साशीतियोजनशतं, द्विघ्नं कार्यमिदं ततः ॥ ९१ ॥ सषष्टियोजनशतत्रयं जातमिदं पुनः । द्वीपव्यासाल्लक्षरूपाद्विशोध्यते ततः स्थितम् ॥ ९२ ॥ विष्कम्भायामतो नूनं, सर्वाभ्यन्तरमण्ड-

मण्डलक्षेत्राणां परिधिः ४

२०

२५

॥ २३३ ॥

२८

सहस्रैः नवनवतिश्चत्वारिंशा च षट्शती ॥ ९३ ॥ परिधिस्तु यथाऽऽम्नायमस्य लक्षत्रयं युतम् । सहस्रैः
लम् । सहस्रा नवनवतिश्चत्वारिंशा च षट्शती ॥ ९३ ॥ परिधिस्तु यथाऽऽम्नायमस्य लक्षत्रयं युतम् । सहस्रैः
पञ्चदशभिर्नवाशीतिश्च साधिका ॥९४॥ सषष्टियोजनशतत्रयं यत्प्रागपाकृतम् । तस्य वा परिधिः कार्यः, पृथ-
गीदृग्विधस्तु सः ॥ ९५ ॥ एकादश शतान्यष्टत्रिंशान्येनं विशोधयेत् । जंबूद्वीपस्य परिधेः, स्यादप्येवं यथो-
दितः ॥ ९६ ॥ अथैकतः स्थितं सर्वान्तरानन्तरमण्डलम् । अष्टचत्वारिंशदंशान्, सर्वान्तमण्डलात्मकान्
॥९७॥ द्वे योजने च त्यक्त्वार्वाक्,परतोऽप्येवमेव तत् । एवं पञ्चत्रिंशदंशां, भवेद्योजनपञ्चकम् ॥ ९८ ॥ ततोऽर्क-
युग्मान्तरवद्वर्धन्ते प्रतिमण्डलम् । योजनानि पञ्चपञ्चत्रिंशदंशाश्च विस्तृतौ ॥ ९९ ॥ ततस्तेषां परिक्षेपा, ज्ञेया
व्यासानुसारतः । सपञ्चत्रिंशदंशस्य, योजनपञ्चकस्य वा ॥ २०० ॥ परिक्षेपः पृथक्कार्य, ईदृग्रूपः स जायते ।
साधिकाष्टात्रिंशदंशयुक् ससदशयोजनी ॥ १ ॥ अष्टादश योजनानि, परं तु व्यवहारतः । संपूर्णानि विव-
क्ष्यन्ते, ततोऽष्टादशयोजनीम् ॥ २ ॥ प्राच्यप्राच्यमण्डलस्य, परिक्षेपे नियोजयेत् । ततोऽग्र्याग्र्यमण्डलस्य,
परिक्षेपमितिर्भवेत् ॥ ३ ॥ एवं वृद्धिः परिक्षेपे, यावच्चरममण्डलम् । ततो यथा वृद्धिहानिरासर्वान्तरमण्डलम्
॥ ४ ॥ एवं च परिधिः सर्वान्तरानन्तरमण्डले । लक्षत्रयं पञ्चदश, सहस्राः ससयुक् शतम् ॥ ५ ॥ तार्त्तीयी-
के मण्डले च, सर्वाभ्यन्तरमण्डलात् । लक्षास्तिस्रः पञ्चदश, सहस्राः ससयुक् शतम् ॥ ६ ॥ लक्षास्तिस्रोऽष्टा-
दशैव, सहस्रास्त्रिशती तथा । युक्तोनैः पञ्चदशभिः, सर्वान्त्यपरिधिर्भवेत् ॥ ७ ॥ तथाहुः श्रीमलयगिरिपादाः
क्षेत्रविचारबृहद्वृत्तौ "एवं मण्डले मण्डले आयामविष्कम्भयोः पञ्च पञ्च योजनानि पञ्चत्रिंशदेकषष्टिभागाधि-

कानि परिरयेऽष्टादश २ योजनानि परिवर्द्धयता तावद्वक्तव्यं यावत्सर्वबाह्यमण्डलं एकं योजनशतसहस्रं षट् शतानि षष्ट्यधिकानि आयामविष्कम्भाभ्यां त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि किञ्चिदूनानि परिरय" इति। अत्र च यद्यपि प्रतिपरिक्षेपं अष्टादश २ वृद्धौ त्र्यशीत्यधिकशतस्याष्टादशभिर्गुणने चतुर्नवत्यधिकानि द्वात्रिंशच्छतानि भवन्ति, एतेषां च सैकोननवतिपञ्चदशसहस्राधिकलक्षत्रयरूपप्रथममण्डलपरिक्षेपेण सह योगे सर्वबाह्यमण्डलपरिरयस्तिस्रो लक्षा अष्टादश सहस्रास्त्रिशती त्र्यशीत्युत्तरा भवन्ति, परं तु प्रागुक्तानि सप्तदश योजनानि साधिकयोजनसत्काष्टात्रिंशदेकषष्टिभागाधिकानि प्रतिपरिरयं वृद्धिरिति विभाव्यैव न्यूनपञ्चदशाधिकशतत्रययुक्ताष्टादशसहस्राधिकलक्षत्रयरूपः सर्वबाह्यमण्डलपरिधिरुक्त इति संभाव्यते, यद्यप्यत्रापि उपरितनं शतत्रयं चतुर्दशोत्तरमेव भवति तथापि उपरितनानां अष्टात्रिंशतो भागानां साधिकत्वात् न्यूनानि पञ्चदशैव विवक्षितानीति सम्यग्विभावनीयं गणितज्ञैः ४। एवं कृता मण्डलानां, परिक्षेपप्ररूपणा। गतिं प्रतिमुहूर्त्तं च, ब्रूमहे प्रतिमण्डलम् ॥ ८ ॥ एकैकं मण्डलं ह्येकमार्त्तण्डेन समाप्यते। द्वाभ्यां किलाहोरात्राभ्यां, मुहूर्त्ताः षष्टिरेतयोः ॥ ९ ॥ ततः षष्ट्या विभज्यन्ते, परिक्षेपाः स्वकस्वकाः। एवं सर्वमण्डलानां, मुहूर्त्तगतिराप्यते ॥२१०॥ एवं च-संक्रम्य चरतः सूर्यौ, सर्वान्तर्मण्डले यदा। तदा प्रत्येकमेकैकमुहूर्त्तेऽसौ गतिस्तयोः ॥ ११ ॥ नूनं पञ्च सहस्राणि, योजनानां शतद्वयम्। एकपञ्चाशमेकोनत्रिंशदंशाश्च षष्टिजाः ॥ १२ ॥ द्वितीयादिमण्डलेष्वप्येवं परिरयैः स्वकैः। मुहूर्त्तगतिरानेया, षष्ट्या

मण्डलक्षेत्राणां परिधिः ४

२०

२५

॥२३४॥

२८

भक्तैर्विवस्वतोः ॥ १३ ॥ यद्वा प्रतिपरिक्षेपं, योक्ताऽष्टादशयोजनी । वृद्धिः षष्ट्या विभक्तुं तामूर्ध्वाधस्तद्द्वयं
न्यसेत् (१८॥६०) ॥१४॥ राशिः षष्टेन दत्तेऽशं, तत्राष्टादशलक्षणः । ततोऽष्टादश षष्टिघ्नाः, स्युः सहस्रमशीति-
( १०८० ) युक् ॥ १५ ॥ तेषां षष्ट्या हृते भागे, लब्धा अष्टादश स्फुटम् । एतावन्तः षष्टिभागाः, किञ्चिदूनास्तु
निश्चयात् ॥ १६ ॥ प्राच्यमण्डलमुहूर्त्तगतौ क्षिप्यन्त इत्यतः । यथोक्तं तत्परीमाणं, भवेदेवं यथोत्तरम् ॥१७॥
एतद्याम्यायने सौम्यायने तु प्रतिमण्डलम् । अष्टादशांशाः क्षीयंते, मुहूर्त्तीयगतौ रवेः ॥ १८ ॥ एवं च-सर्व-
वाह्ये योजनानां, पंचोत्तरं शतत्रयम् । सहस्राणि पंच पंचदशभागाश्च षष्टिजाः ॥ १९ ॥ सर्वान्तिमार्वाचीने
तु, त्रिशती चतुरुत्तरा । सहस्राणि पञ्च सप्तपञ्चाशत् षष्टिजा लवाः ॥ २० ॥ मुहूर्त्तगतिरित्येवं, विवस्वतोर्निरू-
पिता । अथ प्रपञ्च्यते दृष्टिपथप्राप्तिप्ररूपणा ॥ २१ ॥ मुहूर्त्तगतिरर्कस्य, या विवक्षितमण्डले । यच्च तस्मिन्दिन-
मानं, द्वयमेतत्पृथग् न्यसेत् ॥ २२ ॥ मुहूर्त्तगतिरेषाऽथ, दिनमानेन गुण्यते । एकार्कस्य तदैकाहःप्रकाश्यं
क्षेत्रमाप्यते ॥ २३ ॥ यावच्चैकाहःप्रकाश्यं, क्षेत्रमेकत्र मण्डले । तदर्द्धेन मनुष्याणां, भवेद् दृग्गोचरो रविः
॥ २४ ॥ अयं भावः—यावत् क्षेत्रं दिनार्द्धेन, भानुर्भावयितुं क्षमः । दृश्यते तावतः क्षेत्रान्मण्डलेष्वखि-
लेष्वपि ॥ २५ ॥ यथा पञ्च सहस्राणि, योजनानां शतद्वयम् । एकपंचाशमेकोनत्रिंशदंशाश्च षष्टिजाः ॥ २६ ॥
मुहूर्त्तगतिरेषा या, प्रोक्ताऽभ्यन्तरमण्डले । गुण्यते सा दिनार्द्धेन, मुहूर्त्तनवकात्मना ॥२७॥ सप्तचत्वारिंशदेवं,
सहस्राणि शतद्वयम् । त्रिषष्टिश्च योजनानां, षष्ट्यंशा एकविंशतिः ॥ २८ ॥ उद्गच्छन्नियतः क्षेत्राद्भानुरस्त-

सूर्यस्य दृष्टिपथप्राप्तिः

मयन्नपि । इहत्यैर्दृश्यते लोकैः, सर्वाभ्यन्तरमण्डले ॥ २९ ॥ ततश्चैतद्विगुणितमुदयास्तान्तरं भवेत् । प्रकाश्य-
क्षेत्रमप्येतावदेवोभयतोऽन्वितम् ॥ ३० ॥ तथाहुः–"रविणो उदयत्थंतर चउणवइ सहस्स पणसय छवीसा ।
बायाल सट्ठिभागा कक्कडसंकंतिदियहंमि ॥ ३१ ॥" एवंच–सहस्रैः सप्तचत्वारिंशता द्वितीयमण्डले । सैको-
नाशीतिना दृश्यो, योजनानां शतेन च ॥ ३२॥ ससपंचाशता षष्टिभागैरेकस्य तस्य च । अंशैरेकोनविंशत्या,
विभक्तस्यैकषष्टिधा ( ४७१७९–५७/६० | १९/६१ ) ॥ ३३ ॥ एवं च–त्र्यशीतिर्योजनान्यंशास्त्रयोविंशतिरेव च । षष्टिभक्तयो-
जनस्यैकस्य षष्टिलवस्य च (८३–२३/६० | ४२/६१) ॥३४॥ एकषष्टिविभक्तस्य, द्विचत्वारिंशदंशकाः । हानिरत्रेयमायात्स्या-
त्, पुरो हानौ ध्रुवोऽप्ययम् ॥३५॥ किंच–सर्वान्तर्मण्डलात्तार्त्तीयीकं यत्किल मण्डलम् । तदेवाद्यं प्रकल्प्याग्रे, २०
येषु येषु विभाव्यते ॥३६॥ दृग्मार्गस्तरणेस्तत्र, तत्रैकद्व्यादिसंख्यया । हत्वा षट्त्रिंशतं भागं, भागांस्तान् योज-
येद्ध्रुवे ॥ ३७ ॥ युग्मं ॥ ततश्च–पूर्वमण्डलदृग्मार्गप्राप्तिस्तेन विवर्जिता । खरांशोर्दृक्पथप्राप्तिमानं स्यादिष्ट-
मण्डले ॥३८॥ यथाऽन्तर्मण्डलात्तार्त्तीयीके तरणिमण्डले । षट्त्रिंशदेकेन गुण्या, स्थितो राशिस्तथैव सः ॥३९॥
ततः षट्त्रिंशदेवैते, त्र्यशीत्युपरिवर्त्तिषु । योजिता भागभागेषु, जातास्ते चाष्टसप्ततिः ॥ ४० ॥ एकषष्ट्या
लवैश्चैकः, षष्टिभागो भवेत् स च । योज्यते षष्टिभागेषु, शेषाः सप्तदश स्थिताः ॥४१॥ एवं च–त्र्यशीतिर्यो- २५
जनान्यंशाः, षष्टिजाता जिनैर्मिताः । सप्तदशैकषष्ट्यंशाः, शोध्यराशिर्भवत्यसौ ॥ ४२ ॥ अनेन राशिना
हीने, द्वितीयमण्डलाश्रिते । दृग्गोचरे तृतीये स्यान्मण्डले दृक्पथो रवेः ॥ ४३ ॥ एवं च–सहस्रैः सप्तचत्वारिं- २८

शता षण्णवतिं श्रितैः। योजनानां षष्टिभागैस्त्रयस्त्रिंशन्मितैस्तथा ॥४४॥ एकस्य षष्टिभागस्य, विभक्तस्यैक-षष्टिधा। भागद्वयेन चोष्णांशुर्दृश्यस्तृतीयमण्डले ॥४५॥ ( ४७०९६–$\frac{३३}{६०}$|$\frac{२}{६१}$ ) एवमुक्तप्रकारेण, बहिर्निष्क्रमतो रवेः। दृक्पथप्राप्तिविषयात्, हीयते प्रतिमण्डलम् ॥४६॥ त्र्यशीतिः साधिका कापि, चतुरशीतिरेव च। साधिका सा कापि पञ्चाशीतिः साप्यधिका कचित् ॥४७॥ योजनानां हानिरेवं, भाव्या गणितपण्डितैः। पूर्वोक्तगणिताम्नायात्, यावत्सर्वान्त्यमण्डलम् ॥४८॥ तत्र चैकत्रिंशतैव, सहस्रैरष्टभिः शतैः। एकत्रिंशैस्त्रिंशता च, षष्ट्यंशैर्दृश्यते रविः ॥४९॥ ( ३१८३१–$\frac{३०}{६०}$ ) यद्यपि अन्तस्तृतीयमण्डलापेक्षया द्व्यशीत्यधिकशततमेऽस्मिन् मण्डले पूर्वोक्तकरणप्रक्रियया शोध्यराशिः पंचाशीतिर्योजनानि एकादश षष्टिभागा एकस्य षष्टिभागस्य सत्काः षडेकषष्टिभागाः (८५|$\frac{११}{६०}$|$\frac{६}{६१}$) एवंरूपो जायते, तथापि पूर्वोक्ताः षट्त्रिंशद्भागभागाः कलान्यूना अपि व्यवहारतः पूर्णा विवक्षिताः, तस्मिंश्च कलान्यूनत्वे अन्त्यमण्डले एकत्र पिण्डिते सति अष्टषष्टिरेकषष्टिभागाः त्रुट्यंति, तदपसारणे पंचाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागा जायन्ते ( ८५|$\frac{९}{६०}$|$\frac{६०}{६१}$ ) अयं च शोध्यराशिः सर्वबाह्यार्वाचीनमण्डलगतदृक्पथप्राप्तिपरिमाणाद्यदि शोध्यते तदा यथोक्तं सर्वान्त्यमण्डले दृक्पथप्राप्तिपरिमाणं भवतीति ध्येयं, पूर्वोक्तध्रुवकाद्युपपत्तिस्त्वत्रोपाध्यायश्रीशान्तिचन्द्रोपज्ञजम्बूद्वीपप्रज्ञप्तिसूत्रवृत्तेरवसेया, ग्रन्थगौरवभयान्नात्रोच्यत इति शेषः ॥ यद्वा–पञ्चयोजनसहस्राः, पञ्चोत्तरं शतत्रयम्। षष्टिभागाः पञ्चदश, मुहूर्त्तगतिरत्र हि ॥ ५० ॥ षण्मुहूर्त्तात्मना चैषा, दिव-

साद्धेंन गुण्यते । ततोऽप्येतद्दृक्पथासिमानं सर्वान्त्यमण्डले ॥ ५१ ॥ सर्वबाह्यावर्त्तने तु, चतुरशीतिवर्जितैः । द्वात्रिंशता योजनानां, सहस्रैर्दृश्यते रविः ॥ ५२ ॥ अंशैश्चैकोनचत्वारिंशता षष्टिसमुद्भवैः । एकस्य षष्टिभागस्य, षष्ट्याऽंशैश्चैकषष्टिजैः ( ३१९१६ ३९/६० । ६०/६१ ) ॥ ५३ ॥ पञ्चाशीतिर्योजनानि, नव भागाश्च षष्टिजाः । षष्ट्यंशस्यैकस्य भागाः, षष्टिस्तथैकषष्टिजाः ( ८५ ९/६० । ६०/६१ ) ॥ ५४ ॥ सर्वान्त्यमण्डलादर्वाचीनद्वितीयमण्डले । एषा वृद्धिस्ततो वृद्धौ, पुरतो ध्रुवकोऽप्यसौ ॥ ५५ ॥ सर्वबाह्यात् तृतीयादिमण्डलेष्वथ दृक्पथम् । ज्ञातुं गुणितया पञ्चाशीत्यैकद्व्यादिसंख्यया ॥ ५६ ॥ ध्रुवाङ्के न्यूनितेऽसौ स्यात्, क्षेप्यराशिरनेन च । प्राच्यमण्डलदृग्मार्गो, युक्तः स्यादिष्टमण्डले ॥ ५७ ॥ तथाहि–तृतीये मण्डले बाह्यात्, पड्विंशदेकताडिता । ध्रुवकात्तद्वस्यैव, विशोध्यते ततः स्थितम् ॥ ५८ ॥ पंचाशीतिर्योजनानि, षष्टिजाश्च लवा नव । षष्ट्यंशस्यैकस्य लवाश्चतुर्विंशतिरेव च ॥ ५९ ॥ द्वितीयमण्डलस्याक्षिगोचारगेन संयुते । तृतीयमण्डले दृष्टिपथमानं भवेदिदम् ॥ ६० ॥ योजनानां सहस्राः स्युर्द्वात्रिंशत् सैकयोजनाः । भागा एकोनपञ्चाशद्, योजनस्य च षष्टिजाः ॥ ६१ ॥ एकषष्टिविभक्तस्यैकस्य षष्टिलवस्य च । त्रयोविंशतिरेवांशा, एवं सर्वत्र भावना ॥ ६२ ॥ एवमन्तः प्रविशतः, सूर्यस्य बाह्यमण्डलात् । पूर्वोक्तरीत्या दृग्मार्गप्रमाणे वर्द्धते रवेः ॥ ६३ ॥ पञ्चाशीतिः सातिरेका, संपूर्णा सैव कुत्रचित् । साधिका चतुरशीतिः, कापि सा केवला क्वचित् ॥ ६४ ॥ त्र्यशीतिः साधिका क्वापि, योजनानां यथायथम् । सर्वान्तमण्डलं यावद्वाच्यं तच्च प्रदर्शितम् ॥ ६५ ॥

सूर्यस्य दृष्टिपथप्राप्तिः

२०

२५

॥ २३६ ॥

२८

यद्यपि बाह्यतृतीयमण्डलादूद्ध्यशीत्यधिकशततमे सर्वाभ्यन्तरमण्डले यथोक्तकरणेन त्र्यशीतिर्योजनानि द्वाविंशतिः षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः पञ्चत्रिंशदेकषष्टिभागाः ॥६६॥ (८३ $\frac{२२}{६०}$|$\frac{३५}{६१}$) एवंरूपः क्षेप्यराशिर्भवति तथापि येऽत्र ध्रुवकात् षड्विंशद्यथोक्तरूपाः शोधितास्ते कलया न्यूना अपि पूर्णा एव विवक्षितास्ततः किञ्चिदधिकं निर्गतं, तच्चाधिक्यं सर्वाभ्यन्तरे मण्डले एकत्र पिण्डितं सत् अष्टषष्टिरेकषष्टिभागा भवन्ति, ततस्ते भूयः क्षेप्यराशौ क्षिप्यन्ते, ततो जातः क्षेप्यराशिः यो० ८३ षष्टिभा० २३ एकस्य षष्टिभागस्य एकषष्टिभा० ४२, अस्मिंश्च राशौ सर्वाभ्यन्तरानन्तरद्वितीयमण्डलगतदृक्पथपरिमाणे योजिते सति यथोक्तं सर्वाभ्यन्तरमण्डले दृक्पथपरिमाणं भवतीति ज्ञेयं। कथं चैवं योजनानां, सहस्रैर्दूरगावपि। आसन्नाविव दृश्येते, तरणी उदयास्तयोः ? ॥ ६७ ॥ मध्याह्ने तु योजनानामष्टशत्यां स्थितावपि। दूरस्थाविव दृश्येते, कथमुष्णत्विषौ ननु ? ॥६८॥ अत्रोच्यते–दूरत्वेन प्रतीघातात्स्वबिम्बमहसां रवी। आसन्नौ सुखदृश्यत्वात्, ज्ञायेते उदयास्तयोः ॥६९॥ मध्याह्ने चासन्नतया, प्रसर्पत्तीव्ररश्मिभिः। ज्ञायेते दुर्निरीक्ष्यत्वादासन्नावपि दूरगौ ॥७०॥ तथा चागमः– "लेस्सापडिघाएणं उग्गमणमुहुत्तंसि दूरे अ मूले अ दीसंति इति, लेसाहितावेणं मज्झंतिअमुहुत्तंसि मूले अ दूरे अ दीसंति, लेसापडिघाएणं अत्थमणमुहुत्तंसि दूरे अ मूले अ दीसंति" अत्र दूरे चेति द्रष्टृस्थानापेक्षया विप्रकृष्टे, मूले चेति द्रष्टृप्रतीत्यपेक्षया आसन्ने इति भग० श० ८ उ० ८। दूरत्वादेव भूलग्नाविव तावुदयास्तयोः। नैकट्यादेव दृश्येते, मध्याह्ने खाग्रगाविव ॥ ७१ ॥ उच्चत्वं तु सर्वदापि, समानमेव सूर्ययोः। योजनानां ह्यष्टशत्या, नार्वाग्

न परतश्च तौ ॥७२॥ एवं दृष्टिपथप्राप्तिप्ररूपणा प्रपंचिता। अथ प्ररूपणां भान्वोः, कुर्मोऽर्द्धमण्डलस्थितेः ॥७३॥६॥

सूर्यस्यार्धमण्डलस्थितिः

एकं मण्डलमेकेनाहोरात्रेण समाप्यते । द्वाभ्यामभिमुखस्थाभ्यां, रविभ्यां प्रतिवादिवत् ॥ ७४ ॥ मेरोर्दक्षिणपूर्वस्यां, यदा प्रथममेव हि। एकः सूर्यः प्रविशति, सर्वाभ्यन्तरमण्डलम् ॥ ७५ ॥ पश्चिमोत्तरदिग्भागे, तदैवान्योऽपि भास्करः। समकालं स्पर्द्धयेव, सर्वान्तर्मण्डले विशेत् ॥ ७६ ॥ इत्थं ताभ्यां प्रविशद्भ्यां, व्यासं यत्प्रथमक्षणे । क्षेत्रं व्यपेक्षया तस्य, कल्प्यमान्तरमण्डलम् ॥ ७७ ॥ प्रथमात्तु क्षणादूर्द्धं, विवस्वन्तौ शनैः शनैः। क्रमादपसरन्तौ च, सर्वाभ्यन्तरमण्डलात् ॥ ७८ ॥ अनन्तरबहिर्भावि- (२०) मण्डलाभिमुखं किल। सर्पन्तौ चरतश्चारं, ततश्च प्रथमक्षणे ॥ ७९ ॥ स्पृष्टं क्षेत्रं यदेताभ्यां, तदपेक्ष्य प्रकल्पितम्। ज्ञेयं मण्डलतुल्यत्वान्मण्डलं न तु तात्त्विकम् ॥ ८० ॥ तथाहुः—"रविदुगभमणवसाओ निप्फज्जइ मंडलं इहं एगं। तं पुण मंडलसरिसंति मंडलं वुचइ तहाहि ॥ ८१ ॥ गिरिनिसढनीलवंतेसु उग्गयाणं रवीण कक्कंमि। पढमाउ चेव समया ओसरणेणं जओ भमणं ॥८२॥ तो नो निच्छयरूवं निप्फज्जइ मंडलं दिणयराणं। चंदाणवि एवं चिय निच्छयओ मंडलाभावो ॥८३॥" मेरोर्दक्षिणपूर्वस्यामेकोऽभ्यन्तरमण्डले। संक्रम्य याम्यदिग्भागं, यदा मेरोः प्रकाशयेत् ॥ ८४ ॥ (२५) तदाऽपरोत्तरदिशि, प्राप्तोऽभ्यन्तरमण्डलम्। अन्यो मेरोरुदग्भागं, प्रकाशयति भानुमान् ॥८५॥ युग्मम्। दक्षिणोत्तरयोर्मेरोः, सर्वोत्कृष्टं दिनं तदा। रात्रिः सर्वजघन्यैषोऽहोरात्रो वत्सरेऽन्तिमः ॥ ८६ ॥ अहोरात्रे नवाब्दस्य, चरतः प्रथमे यदि । द्वितीयस्मिन्मण्डलेऽर्कौ, निष्क्रम्यान्तरम- (२८)

ण्डलात् ॥ ८७ ॥ दाक्षिणात्यस्तदा सूर्यः, सर्वान्तर्मण्डलाश्रितात् । विनिर्गत्य दक्षिणार्द्धाद्वायव्यां सुरभूभृतः
॥ ८८ ॥ द्वितीयस्य मण्डलस्योत्तरार्द्धमाश्रितश्चरन् । मेरोरुत्तरदिग्भागं, प्रकाशयति दीपवत् ॥ ८९ ॥ उत्तराह:-
पतंगस्तु, सर्वान्तर्मण्डलाश्रितात् । उत्तरार्द्धाद्विनिर्गत्य मेरोर्दक्षिणपूर्वतः ॥ ९० ॥ द्वितीयस्य मण्डलस्य,
दक्षिणार्द्धमुपाश्रितः । मेरोर्दक्षिणदिग्भागं, प्रकाशयति लीलया ॥ ९१ ॥ क्षेत्रमाभ्यां च यत्स्पृष्टं, तस्याहुः
प्रथमक्षणे । द्वितीयं मण्डलं बुद्ध्या, कल्प्यते तदपेक्षया ॥९२॥ एवं च–एकैकस्मिन्नहोरात्रे, एकैकमर्द्धमण्डलम् ।
संक्रम्य संचरन्तौ तावन्योऽन्यव्यतिहारतः ॥ ९३ ॥ प्रत्येकं द्वौ मुहूर्त्तैकषष्टिभागौ दिने दिने । क्षपयन्तौ सर्व-
बाह्यमण्डलावधिगच्छतः ॥ ९४ ॥ तस्मिन् पुनः सर्वबाह्यावार्चीनमण्डलस्थितात् । दक्षिणार्द्धाद्विनिर्गत्य,
सर्वान्त्यमण्डलाश्रितम् ॥ ९५ ॥ उत्तरार्द्धं स विशति, यः प्रकाशितवान्पुरा । रविर्मेरोर्याम्यभागं, सर्वाभ्यन्त-
रमण्डले ॥९६॥ यस्तु तत्रोत्तरभागमदिदीपद्रविः पुरा । स सर्वबाह्यावार्चीनमण्डलस्योत्तरार्द्धतः ॥९७॥ निर्गत्य
दीपयेद्याम्यमर्द्धं सर्वान्त्यमण्डले । आद्यं संवत्सरस्यार्द्धमेवमाभ्यां समाप्यते ॥ ९८ ॥ ततस्तौ द्वावपि रवी,
सौम्यायनादिमक्षणे । अनन्तरं सर्वबाह्याद्वितीयं मण्डलं श्रितौ ॥ ९९ ॥ उत्तरार्द्धं योऽदिदीपत्सर्वान्त्यमण्ड-
लाश्रितम् । दीपयेत्सोऽत्र याम्यार्द्धमुत्तरार्द्धं ततः परम् ॥ ३०० ॥ एवं पुनर्मण्डलार्द्धमेकैकं व्यतिहारतः । एकै-
कस्मिन्नहोरात्रे, आक्रामन्तौ दिवाकरौ ॥ १ ॥ प्रत्येकं द्वौ मुहूर्त्तैकषष्टिभागौ दिने दिने । वर्द्धयन्तौ क्रमात्प्राप्तौ,
सर्वाभ्यन्तरमण्डले ॥ २ ॥ मण्डलेऽस्मिन्नहोरात्रे, गताब्दस्यांतिमे रवी । यथाऽदिदीपतामर्द्धं, पुनर्दीपयतस्तथा

॥३॥ इत्यर्द्धमण्डलस्थितिः ७ । सूर्यवक्तव्यता चैवं, यथाम्नायं प्रपंचिता । एवं प्रपञ्चयामोऽथ, चन्द्रचारप्ररूपणाम् ॥ ४ ॥ आदौ क्षेत्रं मण्डलानां १, तद्बाधा २ तदन्तरम् ३ । तच्चारश्च ४ वृद्धिहानिप्रतिभासप्ररूपणा ५ ॥ ५ ॥ अत्रानुयोगद्वाराणि, पञ्चाहुस्तत्त्ववेदिनः । तत्रादौ मण्डलक्षेत्रपरिमाणं प्रतन्यते ॥ ६ ॥ मण्डलानि पञ्चदश, चन्द्रस्य सर्वसंख्यया । षट्पंचाशद्योजनैकषष्टिभागपृथून्यतः ॥ ७ ॥ गुणिताः पञ्चदशभिः, षट्पञ्चाशद्भवन्ति ते । अष्टौ शतानि चत्वारिंशान्येकषष्टिजा लवाः ॥ ८ ॥ एकषष्ट्या विभज्यन्ते, योजनानयनाय ते । त्रयोदश योजनानि, लब्धान्येतत्तु शिष्यते ॥ ९ ॥ सप्तचत्वारिंशदंशा, योजनस्यैकषष्टिजाः । मण्डलानां पुनरेषा-मन्तराणि चतुर्दश ॥ १० ॥ पञ्चत्रिंशद्योजनानि, त्रिंशत्तथैकषष्टिजाः । लवा एकस्यैकषष्ट्यंशस्य क्षुण्णस्य सप्तधा ॥ ११ ॥ भागाश्चत्वार एकैकमेतावदन्तरं भवेत् । शीतद्युतेर्मण्डलेषु, तत्रोपपत्तिरुच्यते ॥ १२ ॥ चन्द्र-मण्डलविष्कम्भे, प्राग्वत्पञ्चदशाहते । शोधिते मण्डलक्षेत्राद्योजनानां चतुःशती ॥१३॥ शेषा सप्तनवत्याढ्या, एकोऽशश्चैकषष्टिजः । विभज्यन्ते ते च चतुर्दशभिर्मण्डलान्तरैः ॥ १४ ॥ पञ्चत्रिंशद्योजनानि, लब्धान्युद्धरिते हते । एकषष्ट्यैकषष्ट्यंशेनैकेन च समन्विते ॥ १५ ॥ अष्टाविंशा चतुःशत्येतस्याश्च भजने सति । चतुर्दशभिरा-प्यन्ते, त्रिंशदंशाः पुरोदिताः ॥ १६ ॥ शेषा अष्टौ स्थिता भाज्या, भाजकाश्च चतुर्दश । भागाप्राप्त्याऽपव-र्त्यंते, ततो द्वाभ्यामुभावपि ॥ १७ ॥ भागभागास्ततो लब्धाश्चत्वारः सप्तिका इति । एतच्चतुर्दशगुणं, कर्त्तव्यं प्रथमं त्विह ॥ १८ ॥ पञ्चत्रिंशद्योजनानि, चतुर्दशगुणानि वै । शतान्यभूवंश्चत्वारि, नवत्याढ्यानि येऽपि च



२०

२५



२८

॥ १९ ॥ त्रिंशदेकषष्टिभागाश्चतुर्दशगुणीकृताः । जाताः शतानि चत्वारि, विंशत्याढ्यानि तेऽप्यथ ॥ २० ॥
एकषष्ट्या विभज्यन्ते, योजनप्राप्तये ततः । लब्धा षड्योजनी शेषाश्चतुष्पञ्चाशदंशकाः ॥ २१ ॥ सप्तभक्तस्यै-
कषष्टिभागस्य या चतुर्लवी । चतुर्दशगुणा साऽपि, षट्पञ्चाशद्भवन्त्यमी ॥ २२ ॥ अष्टावेकषष्टिभागा, जायन्ते
सप्तभाजिताः । द्वाषष्टिरेते स्युः प्राच्यचतुःपञ्चाशता युताः ॥२३॥ एकषष्ट्यैषां च भागे, प्राप्तं सैकांशयोजनम् ।
योज्यतेंऽशश्चांशराशौ, योजनं योजनेषु च ॥ २४ ॥ एवं च–योजनानां पञ्चशती, दशोत्तरैकषष्टिजाः । अष्टच-
त्वारिंशदंशा,मण्डलक्षेत्रसंमितिः ॥२५॥ कृतैवं मण्डलक्षेत्रपरिमाणप्ररूपणा । संख्याप्ररूपणा त्वेषामाहुः पञ्चद-
शात्मिकाम् ॥ २६ ॥ तत्र पञ्च मण्डलानि, जम्बूद्वीपे जिना जगुः । शेषाणि तु दशाम्भोधौ, मण्डलान्यमृतद्युतेः
॥ २७ ॥ अबाधा तु त्रिधा प्राग्वत्, तत्राद्या मेर्वपेक्षया । ओघतो मण्डलक्षेत्राबाधाऽन्या प्रतिमण्डलं ॥ २८॥
तृतीया तु मिथोऽबाधा,शशिनोः प्रतिमण्डलम् । तत्रौघतोऽर्कवन्मेरोर्मण्डलक्षेत्रमीरितम्॥२९॥चतुश्चत्वारिंशतैव,
सहस्रैरष्टभिः शतैः । विंशत्याढ्यैर्योजनानामियतैवाद्यमण्डलम् ॥ ३० ॥ षट्त्रिंशद्योजनान्येकषष्ट्यंशाः पञ्चविं-
शतिः । एकस्यैकषष्टिजस्य, चत्वारः सप्तजा लवाः ॥३१॥ वर्द्धन्तेऽन्तरमेतावत्प्रतिमण्डलमादिमात् । सर्वान्त्य-
मण्डलं यावत्ततो द्वितीयमण्डलम् ॥३२॥ सत्सहस्रैश्चतुश्चत्वारिंशताऽथाष्टभिः शतैः । षट्पञ्चाशैरेकषष्टिभागै-
स्तत्त्वमितैस्तथा ॥३३॥ एकस्यैकषष्टिजस्य, चतुर्भिः सप्तजैर्लवैः । स्यान्मन्दरादन्तरितमेकतो परतोऽपि च ॥ ३४ ॥
सर्वबाह्यमण्डलं तु, स्थितं दूरे सुमेरुतः । सहस्रैः पंचचत्वारिंशता त्रिंशैस्त्रिभिः शतैः ॥ ३५ ॥ योजनानां योज-

नैकषष्टिभागाष्टकोज्झितैः । अथो मिथोऽन्तरं वक्ष्ये, शशिनोः प्रतिमण्डलम् ॥ ३६ ॥ इंद्वोर्मिथोऽर्कवत्सर्वान्तरङ्गमण्डलेऽन्तरम् । सहस्रा नवनवतिश्चत्वारिंशा च षट्शती ॥ ३७ ॥ इतश्च—द्वासप्ततिर्योजनानामेकपञ्चाशदंशकाः । एकषष्टिभवाः सप्तभक्तस्यास्य लवोऽपि च ॥ ३८ ॥ एतावदन्तरे ग्लावौ, वर्द्धेते प्रतिमण्डलम् । बहिर्निष्क्रमतोरन्तर्विशतोः परिहीयते ॥ ३९ ॥ एतच्च यत्पुरा प्रोक्तं, प्रतिमण्डलमेकतः । अन्तरं तद्द्विगुणितं, भवेत्पार्श्वद्वयोद्भवम् ॥ ४० ॥ एवं च—सहस्रा नवनवतिर्योजनानां शतानि च । द्वादशोपेतानि सप्तविभागाश्चैकषष्टिजाः ॥ ४१ ॥ एकपञ्चाशदेकोऽंश, एकषष्टिलवस्य च । सप्तभागीकृतस्यैतद्द्वितीयमण्डलेऽन्तरम् ॥ ४२ ॥ सर्वान्तिमेऽन्तरं लक्षं, सषष्टीनि शतानि षट् । योजनानामेकषष्टिभागैः षोडशभिर्विना ॥४३॥ अष्टांशोरुव्याससमिह, मण्डलं भानुमण्डलात् । अष्टाष्टावर्कक्षेत्रभागा, आभ्यां रुद्धास्ततोऽधिकाः ॥ ४४ ॥ ततः षोडशभिर्भागैर्न्यूनं परममन्तरम् । सर्वान्त्यमण्डले ग्लावोरर्कयोः परमान्तरात् ॥ ४५ ॥ एवं कृता चंद्रमसोर्मिथोऽबाधाप्ररूपणा । साम्प्रतं मण्डलाचारप्ररूपणा प्रपञ्च्यते ॥४६॥ परिक्षेपा मण्डलानां १, मुहूर्त्तगतिरत्र च २ । मण्डलार्द्धमण्डलयोः, कालसंख्याप्ररूपणा ३ ॥ ४७ ॥ साधारणासाधारणमण्डलानां प्ररूपणा ४ । एवं चत्वार्यनुयोगद्वाराण्यत्र जिना जगुः ॥ ४८ ॥ विष्कम्भायामतस्तत्र, सर्वाभ्यन्तरमण्डलम् । सहस्रा नवनवतिश्चत्वारिंशा च षट्शती ॥ ४९ ॥ तिस्रो लक्षाः पञ्चदश, सहस्रा योजनान्यथ । नवाशीतिः परिक्षेपोऽधिकोऽभ्यन्तरमण्डले ॥ ५० ॥ भावना तूभयोरपि सूर्याभ्यंतरमण्डलवत् । द्वितीयमण्डलव्यासं विभाव्योक्तानुसारतः ।

चन्द्रस्य मण्डलसंख्या मण्डलाबाधा च

२०

२५

॥ २३९ ॥

२८

भावनीयः परिक्षेपः, स चायमुपपद्यते ॥ ५१ ॥ तिस्रो लक्षाः पञ्चदश, सहस्राणि शतत्रयम् । योजनान्येकोनविंशं, साधिकं किञ्चनाथवा ॥ ५२ ॥ पूर्वमण्डलविष्कम्भात्परमण्डलविस्तृतौ । द्वासप्ततिर्योजनानि, वृद्धिः प्राक्प्रत्यपादि या ॥ ५३ ॥ तस्याः पृथक्परिक्षेपः, कर्त्तव्यः कोविदेन्दुना । द्वे शते त्रिंशदधिके, योजनानां भवेदसौ ॥ ५४ ॥ पूर्वपूर्वपरिक्षेपे, यद्ययं क्षिप्यते तदा । परापरपरिक्षेपा, भावनीया यथोत्तरम् ॥ ५५ ॥ इयमिन्दुमण्डलानां, परिक्षेपप्ररूपणा । मुहूर्त्तगतिमाख्यामि, संप्रति प्रतिमण्डलम् ॥ ५६ ॥ उपसंक्रान्तयोरिन्द्वोः, सर्वाभ्यन्तरमण्डले । पञ्च पञ्च सहस्राणि, योजनानां त्रिसप्ततिः ॥ ५७ ॥ सहस्रैस्त्रयोदशभिः, सतत्त्वैः सप्तभिः शतैः । छिन्नस्य योजनस्यांशशताश्च सप्तसप्ततिः ॥ ५८ ॥ चतुश्चत्वारिंशदाढ्या ५०७३ ७७४४/१३७२५, मुहूर्त्तगतिरेषिका । जिज्ञास्यतेऽस्याश्चेद्बीजं, श्रूयतां तर्हि भावना ॥ ५९ ॥ इहैकैकोऽप्यमृतांशुरेकैकमर्द्धमण्डलम् । एकेनाहोरात्रेणैकमुहूर्त्ताधिक्यशालिना ॥ ६० ॥ शताभ्यामेकविंशाभ्यां, द्वाभ्यां छिन्नस्य निश्चितम् । मुहूर्त्तस्यैकादशभिः, सार्द्धैर्भागैः प्रपूरयेत् ॥ ६१ ॥ युग्मं । एवं शशी द्वितीयोऽपि, द्वितीयमर्द्धमण्डलम् । कालेनैतावतैव द्राग्, भ्रमणेन प्रपूरयेत् ॥ ६२ ॥ संपूर्णस्य मण्डलस्य, पूर्त्तिकालो यदेष्यते । अहोरात्रद्वयं द्वाभ्यां, मुहूर्त्ताभ्यां युतं तदा ॥ ६३ ॥ एकविंशत्यधिकाभ्यां, शताभ्यां चूर्णितस्य च । त्रयोविंशतिरंशानां, मुहूर्त्तस्य विनिर्दिशेत् ॥ ६४ ॥ दि० २-२-२३/२२१ । मण्डले पूर्त्तिकाले च, प्रत्ययः केन चेदिति । त्रैराशिकेन तदपि, श्रूयतां यदि कौतुकम् ॥ ६५ ॥ भानुर्लघुविमानत्वाच्छीघ्रगामितयाऽपि च । षष्ट्या मुहूर्त्तैरेकैकं, मण्डलं परिपूरयेत्

॥ ६६ ॥ तद्वैपरीत्याद् द्वाषष्ट्या, साग्रया तैर्विधुस्तु तत्। साष्टषष्टिः ससदशशती तानि युगे ततः ॥६७॥ एक-
चन्द्रापेक्षयाऽर्द्धमण्डलानि भवन्ति हि। तावन्त्येव च पूर्णानि, द्वयोरिन्द्वोरपेक्षया ॥ ६८ ॥ ततश्च—साष्टषष्टिस-
सदशशतमानार्द्धमण्डलैः। युगान्तर्भाविभी रात्रिन्दिवानां यदि लभ्यते ॥ ६९ ॥ अष्टादशशती त्रिंशा, तदा
ननु किमाप्यते। द्वाभ्यामर्द्धमण्डलाभ्यामिति राशित्रयं लिखेत् ॥ ७० ॥ १७६८।१८३०-२ ॥ अन्त्येन राशिना
राशौ, मध्यमे गुणिते सति। जातः शतानि षट्त्रिंशत्सषष्टीन्येप भज्यते ॥ ७१ ॥ साष्टपष्टिससदशशतात्म-
काद्यराशिना। अहोरात्रद्वयं लब्धं, चतुर्विंशं शतं स्थितम् ॥ ७२ ॥ अहोरात्रस्य च त्रिंशन्मुहूर्त्ता इति ताडि-
तम्। त्रिंशताऽभूद्विंशतियुक्, ससत्रिंशच्छतात्मकम् ॥७३॥ अस्मिन्साष्टपष्टिससदशशत्या हृते द्वयम्। लब्धं
मुहूर्त्तयोः शेषं, शतं चतुरशीतियुक् ॥ ७४॥१८४ ॥ भागाप्राप्त्याऽपवर्त्यंते, अष्टभिर्भाज्यभाजकौ। त्रयोविंश-
तिरेकोऽन्यश्चैकाविंशं शतद्वयम् ॥ १७६८। ७५ ॥ एषा मुहूर्त्तद्वाषष्टिः, सवर्णनाय गुण्यते। एकविंशाभ्यां
शताभ्यां, ये चोपरितना लवाः ॥७६ ॥ त्रयोविंशतिरुक्ताः प्राक्, ते क्षिप्यन्ते भवेत्ततः। त्रयोदश सहस्राणि
(१३७२५), सतत्त्वा ससशत्यपि ॥७७॥ सर्वान्तर्मण्डलस्थस्य, परिधिर्यः पुरोदितः। एकविंशत्यधिकाभ्यां, शता-
भ्यां सोऽपि गुण्यते ॥ ७८ ॥ जाताः षट् कोटयः षण्णवतिर्लक्षाः स्वरूपतः। चतुस्त्रिंशत्सहस्राणि, षट्शत्येको-
नससतिः ॥ ७९ ॥ सहस्रैस्त्रयोदशभिः, सतत्त्वैः ससभिः शतैः। एषां भागे हृते लब्धा, मुहूर्त्तगतिरैन्दवी
॥ ८० ॥ योजनानां सहस्राणि, पञ्चोपरि त्रिससतिः। चतुश्चत्वारिंशान्यंशशतानि ससससतिः ॥८१॥ मुहूर्त्त-

चन्द्रस्य मण्डलपरिक्षेपो मुहूर्त्तगतिश्च

२०

२५

॥ २४० ॥

२८

ारित्येवं, भाव्येन्द्वोः प्रतिमण्डलम् । विभाज्योक्तभाजकेन, प्राग्वत्परिरयं निजम् ॥ ८२ ॥ मुहूर्तीयगतौ
।, वर्द्धन्ते प्रतिमण्डलम् । त्रियोजनी पञ्चपञ्चांशाश्च षण्णवतिः शताः ॥ ८३ ॥ भागा एकयोजनस्य, विभ-
य सहस्रकैः । त्रयोदशमितैः सप्तशत्या च पंचविंशया ॥ ८४ ॥ अत्रोपपत्तिः—योजनद्विशती त्रिंशा, या
ः प्रतिमण्डलम् । उक्ता परिरये गुण्या, सा द्विशत्येकविंशया ॥ ८५ ॥ भक्तत्रयोदशसहस्रादिना राशि-
च सा । दत्ते त्रियोजनीं शेषानंशानपि यथोदितान् ॥ ८६ ॥ सर्वान्तर्मण्डले चन्द्रौ, जनानां दृष्टिगोचरौ ।
तैः सप्तचत्वारिंशता त्रिषष्टियुक्तया ॥ ८७ ॥ द्विशत्या च योजनानां, एकस्य योजनस्य च । षष्ट्यंशैरेक-
त्या, तत्रोपपत्तिरुच्यते ॥ ८८ ॥ अन्तर्मण्डलपरिधेर्दशांशे त्रिगुणीकृते । इन्दोः प्रकाशक्षेत्रं स्यात्, ताप-
मिवार्कयोः ॥ ८९ ॥ अर्द्धं प्रकाशक्षेत्रस्य, पूर्वतोऽपरतोऽपि च । इन्द्वोरपि दृष्टिपथप्राप्तिर्विवस्वतोरिव
० ॥ तथा च जम्बूद्वीपप्रज्ञप्तिसूत्रं—"तया णं इहगयस्स मणूसस्स सीयालीसाए जोअणसहस्सेहिं दोहि
वट्ठेहिं जोअणसएहिं एगवीसाए सट्ठिभाएहिं जोअणस्स चंदे चक्खुफासं हव्वमागच्छइ" एतद्वृत्तौ च—"यत्तु
भागीकृतयोजनसत्कैकविंशतिभागाधिकत्वं तत्तु संप्रदायगम्यं, अन्यथा चन्द्राधिकारे साधिकद्वाषष्टि-
र्तप्रमाणमण्डलपूर्त्तिकालस्य छेदराशित्वेन भणनात् सूर्याधिकारसत्कषष्टिमुहूर्त्तप्रमाणमण्डलपूर्त्तिकालस्य
ाशित्वेनानुपपद्यमानत्वात् इति दृश्यते, तदत्र तत्त्वं बहुश्रुतगम्यं" । पञ्च योजनसहस्राः, पंचविंशतियुक्
ः। योजनस्य तथैकस्य, पञ्चविंशतिसंयुतैः ॥ ९१ ॥ त्रयोदशभिः सहस्रैर्भक्तस्य सप्तभिः शतैः । भागा

नवत्यधिकानि, शतान्येकोनसप्ततिः ॥ ९२ ॥ मुहूर्त्तगतिरेषेन्द्वोः, सर्वपर्यन्तमण्डले । अथात्रैव दृष्टिपथप्राप्ति-
र्विविच्यतेऽनयोः ॥ ९३ ॥ एकत्रिंशता योजनसहस्रैरष्टभिः शतैः । एकत्रिंशैः सर्वबाह्ये, दृश्येत मण्डले विधू
॥ ९४ ॥ "अत्र सूर्याधिकारोक्तं तीसाए सट्ठिभाएहिं इत्यधिकं मन्तव्यं" इति जम्बूद्वीपप्रज्ञप्तिवृत्तौ । अत्र
सर्वाभ्यन्तरसर्वबाह्यचन्द्रमण्डलयोर्दृष्टिपथप्रापिता दर्शिता, शेषमंडलेषु सा चंद्रप्रज्ञप्तिवृहत्क्षेत्रसमासज-
म्बूद्वीपप्रज्ञप्तिसूत्रवृत्त्यादिषु ग्रन्थेषु पूर्वैः क्वापि दर्शिता नोपलभ्यते ततोऽत्रापि न दर्शितेति ज्ञेयं,
प्रतिमण्डलमित्येवं, मुहूर्त्तगतिरीरिता । मण्डलार्द्धमण्डलयोः, कालमानमथ ब्रुवे ॥ ९५ ॥ नवशत्या विभक्तस्य,
चत्वत्पञ्चदशाढ्यया । विभागैर्मण्डलार्द्धस्य, किलैकत्रिंशतोनितम् ॥९६॥ अर्द्धमण्डलमेकेनाहोरात्रेण समाप्यते ।
एकैकेन शशाङ्केन, यत्र कुत्रापि मण्डले ॥९७॥ द्विचत्वारिंशदधिकैः, शतैश्चतुर्भिरेव च । अहोरात्रस्य भक्तस्य,
लवैकत्रिंशताऽधिकौ ॥ ९८ ॥ अहोरात्रौ पूर्त्तिकाल, एकस्मिन् मण्डले विधोः । रविस्तु पूरयेत्पूर्णाहोरात्रद्वित-
येन तत् ॥ ९९ ॥ मण्डलार्द्धमण्डलयोरुक्तैवं कालसंमितिः । साधारणासाधारणमंडलानि ब्रवीम्यथ ॥ ४०० ॥
प्रथमं च तृतीयं च, षष्ठं सप्तममष्टमम् । दशमैकादशे पञ्चदशमित्यष्टमण्डली ॥ १ ॥ नक्षत्रैरविरहिता,
सदाऽपि तु हिमद्युतेः । मंडलेष्वेषु नक्षत्राण्यपि चारं चरन्ति यत् ॥ २ ॥ द्वितीयं च चतुर्थं च, पञ्चमं नवमं
तथा । त्रीणि च द्वादशादीनि, किलैषा सप्तमण्डली ॥ ३ ॥ ऋक्षैः सदा विरहिता, मण्डलेष्वेषु नो भवेत् ।
कदापि चारऋक्षाणामूषरेषु गवामिव ॥ ४ ॥ प्रथमं तृतीयमेकादशं पञ्चदशं तथा । रविचन्द्रोडुसामान्या,

चन्द्रस्य दृक्पथप्राप्तिः मण्डलार्धमण्डलकालः

२०

२५



२८

लानां चतुष्टयी ॥ ५ ॥ एतेषु मण्डलेष्विन्दुर्नक्षत्राणि तथा रविः । चारं चरन्ति सर्वेऽपि, राजमार्गे
इव ॥ ६ ॥ षष्ठादीनि पञ्च सूर्यचारहीनानि सर्वथा । शेषाणि मण्डलानीन्दोः, किञ्चिद्भानुः स्पृशेदपि
॥ स्थापना ॥ साधारणासाधारणमण्डलान्येवमूचिरे । सम्प्रतीन्दोर्वृद्धिहानिप्रतिभासः प्ररूप्यते ॥ ८ ॥
स्थितस्वभावं हि, स्वरूपेणेन्दुमण्डलम् । सदापि हानिर्वृद्धिर्वा, येक्ष्यते सा न तात्त्विकी ॥ ९ ॥ केवलं या
पक्षे, वृद्धिर्हानिस्तथा परे । राहुविमानावरणयोगात् सा प्रतिभासते ॥ १० ॥ तथाहि–ध्रुवराहुः पर्वराहुरेवं
द्वेधा भवेत् । ध्रुवराहोस्तत्र कृष्णतमं विमानमीरितम् ॥ ११ ॥ तच्च चन्द्रविमानस्य, प्रतिष्ठितमधस्तले ।
ङ्गुलमप्राप्तं, चारं चरति सर्वदा ॥१२॥ तेनापावृत्त्य चावृत्य, चरत्यधः शनैः शनैः । वृद्धिहानिप्रतिभासः,
कुरीतीन्दुमण्डले ॥१३॥ तथोक्तं—"चंदस्स नेव हाणी नवि वुड्ढी वा अवट्ठिओ चंदो । सुक्किलभावस्स पुणो
इ वुड्ढी य हाणी य ॥१४॥ किण्हं राहुविमाणं निच्चं चंदेण होइ अविरहियं । चउरंगुलमप्पत्तं हिट्ठा चंदस्स तं
॥१५॥ तेणं वड्ढइ चंदो परिहाणी वावि होइ चंदस्स" तत्र प्रकल्प्य द्वाषष्टिं, भागान् शशाङ्कमण्डले । ह्रियते
शभिर्लभ्यतेऽशचतुष्टयम् ॥ १६ ॥ एतावदाव्रियते तत्, प्रत्यहं भरणीभुवा । अहोभिः पञ्चदशभिरेवमाव्रि-
खिलम् ॥ १७ ॥ द्वौ भागौ तिष्ठतः शेषौ, सदैवानावृतौ च तौ । एषा कला षोडशीति, प्रसिद्धिमगमद्
॥ १८ ॥ कल्प्यंतेऽशाः पंचदश, विमाने राहवेऽथ सः । जयत्येकैकांशवृद्ध्या, नीतिज्ञोऽरिमिवोडुपम्
॥ तच्चैवं–स्वीयपञ्चदशांशेन, कृष्णप्रतिपदि ध्रुवम् । मुक्त्वांशौ द्वावनावार्यौ, शेषषष्टेः सितत्विषः ॥ २०॥

५

१०

१४

चतुर्भागात्मकं पञ्चदशं भागं विधुंतुदः । आवृणोति द्वितीयायां, निजभागद्वयेन च ॥ २१ ॥ अष्टभागात्मकौ पञ्चदशांशौ द्वौ रुणद्धि सः । षष्टिं भागानित्यमायां, खैः पञ्चदशभिर्लवैः ॥२२॥ त्रिभिर्विशेषकं ॥ ततः शुक्लप्रतिपदि, चतुर्भागात्मकं लवम् । एकं पञ्चदशं व्यक्तीकरोत्यपसरन् शनैः ॥ २३ ॥ द्वितीयायां द्वौ विभागौ, पूर्णिमायामिति क्रमात् । द्वाषष्ट्यंशात्मकः सर्वः, स्फुटीभवति चन्द्रमाः ॥ २४ ॥ इन्दोश्चतुर्लवात्मांशो, यावत्कालेन राहुणा । विधीयते मुच्यते च, तावत्कालमिता तिथिः ॥ २५ ॥ इन्दोः पिधीयमानाः स्युः, कृष्णाः प्रतिपदादिकाः । तिथयो मुच्यमानाः स्युः, शुक्लाः प्रतिपदादिकाः ॥ २६ ॥ तथाहुः—"कालेण जेण हायइ सोलसभागो उ सा तिही होइ । तह चेव य वुड्ढीए एवं तिहिणो समुप्पत्ती ॥ २७ ॥" एकोनत्रिंशता पूर्णैर्मुहूर्तैश्च द्विषष्टिजैः । द्वात्रिंशता मुहूर्तांशैरेकैको रजनीपतेः ॥ २८ ॥ चतुर्द्वौ षष्ट्यंशरूपो, राहुणाऽऽच्छाद्यते लवः । मुच्यते च तदेतावन्मानाः स्युस्तिथयोऽखिलाः ॥ २९ ॥ एवंच—द्वाषष्टिभक्ताहोरात्रस्यैकषष्ट्या लवैर्मिता । तिथिरेवं वक्ष्यते यद्, तद्युक्तमुपपद्यते ॥ ३० ॥ तिथिमानेऽस्मिंश्च हते, त्रिंशता स्याद्यथोदितैः । मासश्चान्द्र एवमपि, त्रिंशत्तिथिमितः खलु ॥ ३१ ॥ ननु राहुविमानेन, योजनार्द्धमितेन वै । षट्पञ्चाशद्योजनैकषष्टिभागमितं खलु ॥ ३२ ॥ कथमाच्छादितुं शक्यं, गरीयः शशिमण्डलम् ?। लघीयसा गरीयो हि, दुरावारमिति स्फुटम् ॥ ३३ ॥ एवमुत्तरयन्त्यत्र, केचित्प्राक्तनपण्डिताः । लघीयसोऽप्यस्य कान्तिजालैरत्यंतमेचकैः ॥३४॥ आच्छाद्यते महदपि, शशिबिम्बं प्रसृत्वरैः । दावानलोच्छलद्धूमस्तोमैरिव नभोऽङ्गणम् ॥ ३५ ॥ अन्ये त्व-

साधारणेतरमण्डलानि वृद्धिर्हानिश्च

२०

२५

॥ २४२ ॥

२८

धुर्वीरा, योजनार्द्धं यदुच्यते । मानं ग्रहविमानस्य, तदेतत्प्रायिकं ततः ॥ ३६ ॥ योजनायामविष्कम्भं,
त्रैशांशमेदुरम् । स्वर्भानुमण्डलं तेन, विधुराव्रियते सुखम् ॥ ३७ ॥ तथा चाहुः—"आयामो विक्खंभो
णमेगं तु तिगुणिओ परिही । अड्ढाइज्ज धणुसया राहुस्स विमाणबाहल्लम् ॥ ३८ ॥" संग्रहण्यादर्शे प्रक्षे-
र्यं दृश्यते, भगवतीवृत्तावप्येतस्याश्चालनाया एवं प्रत्यवस्थानं—"यदिदं ग्रहविमानमर्द्धयोजनप्रमाणमिति
यिकं, ततश्च राहोर्ग्रहस्योक्ताधिकप्रमाणमपि विमानं संभाव्यते, अन्ये पुनराहुः—लघीयसोऽपि राहुविमा- ५
महता तमिस्ररश्मिजालेन तदाव्रियते" इति भगवतीसूत्रवृत्तौ १२ शते पञ्चमोद्देशके, तत्त्वं तु केव-
विदन्ति । कदाचिद् ग्रहण इव, विमानमुपलभ्यते । वृत्ताकृति ध्रुवराहोः, कदाचिन्न तथा च किम् ? ॥३९॥
येषु तमसाऽभिभूतः स्यात्कृशं शशी । तेषूपलभ्यते वृत्तं, विमानमस्य येषु च ॥ ४० ॥ शशी विशुद्धकां-
त्तमसा नाभिभूयते । वृत्तं विमानं नैतस्य, दिनेषु तेषु दृश्यते ॥ ४१ ॥ तथोक्तं—"वट्टच्छेओ कइवइ
धुवराहुणो विमाणस्स । दीसइ परं न दीसइ जह गहणे पव्वराहुस्स ॥ ४२ ॥" "आचार्य आह—अच्चत्थं १०
तमसाऽभिभूयते जं ससी विसुज्झंतो । तेण न वट्टच्छेओ गहणे उ तमो तमोबहुलो ॥ ४३ ॥" भगवती-
॥ यदा तु लेश्यामावृण्वन्, पर्वराहुर्व्रजत्यधः । पुष्पदन्तमण्डलयोर्यथोक्तकालमानतः ॥ ४४ ॥ तदा भव-
गो, यथार्हं चन्द्रसूर्ययोः । जनैर्ग्रहणमित्यस्य, प्रसिद्धिः परिभाव्यते ॥ ४५ ॥ जघन्यतस्तत्र षण्णां,
न्ते शशिग्रहः । उत्कर्षतो द्विचत्वारिंशतो मासामतिक्रमे ॥ ४६ ॥ मासैर्जघन्यतः षड्भिर्जायते तरणि- १४

राहुस्वरूपं चन्द्रस्य अयनानि च

ग्रहः । संवत्सरैरष्टचत्वारिंशतोत्कर्षतः पुनः ॥ ४७ ॥ यदा स्वर्भानुरागच्छन्, गच्छन्वा पुष्पदन्तयोः । लेश्या-
मावृणुयात्तर्हि, वदन्ति मनुजा भुवि ॥ ४८ ॥ चन्द्रो रविर्वा तमसा, गृहीत इति यद्यथ । लेश्यामावृत्त्य
पार्श्वेन, गच्छत्यर्कशशाङ्कयोः ॥ ४९ ॥ तदा वदन्ति मनुजा, रविणा शशिनाऽथवा । राहोः कुक्षिर्भिन्न इति,
यदा पुनर्विधुन्तुदः ॥ ५० ॥ अर्केन्दुलेश्यामावृत्त्यापसर्प्पति तदा भुवि । वदन्ति मनुजा वान्तौ, राहुणा
शशिभास्करौ ॥ ५१ ॥ यदा तु गच्छन् वाऽऽगच्छन्, राहुश्चन्द्रस्य वा रवेः । लेश्यामावृत्त्य मध्येन, गच्छ-
त्याहुर्जनास्तदा ॥ ५२ ॥ राहुणा रविरिन्दुर्वा, विभिन्न इति चेत्पुनः । सर्वात्मना चन्द्रसूर्यलेश्यामावृत्त्य-
तिष्ठति ॥ ५३ ॥ वावदन्तीह मनुजाः, परमार्थाविदस्तदा । राहुणा क्षुधितेनेव, ग्रस्तश्चन्द्रोऽथवा रविः ॥ ५४ ॥ २०
शृङ्गाटकश्च जटिलः, क्षेत्रकः खरकस्तथा । दुर्द्धरः सगरो मत्स्यः, कृष्णसर्प्पश्च कच्छपः ॥ ५५ ॥ इत्यस्य नव
नामानि, विमानास्त्वस्य पञ्चधा । कृष्णनीलरक्तपीतशुक्लवर्णमनोरमाः ॥५६॥ भगवतीसूत्रशत १२ षष्ठोद्दे-
शके । संपूर्णसर्वावयवो विशिष्टालङ्कारमाल्याम्बररम्यरूपः । महर्द्धिको राजति राहुरेष, लोकप्रसिद्धो न तु
मौलिमात्रम् ॥ ५७ ॥ ( उपजातिः ) किञ्च–विधोरेकैकमयनमहोरात्रांस्त्रयोदश । चतुश्चत्वारिंशदहोरात्रांशाः २५
सप्तषष्टिजाः ॥ ५८ ॥ द्वाभ्यां चन्द्रायणाभ्यां स्याद्भमासः सप्तविंशतिः । अहोरात्राः सप्तषष्टिभागास्तत्रैकविं-
शतिः ॥ ५९ ॥ अत्रोपपत्तिस्त्वेवं–सर्वोडूनां चन्द्रभोगो, वक्ष्यमाणः समुच्चितः । मुहूर्त्तानां शतान्यष्टैकोनविं- ॥२४३॥
शान्यथो लवाः ॥ ६० ॥ स्युः सप्तविंशतिः सप्तषष्टिजास्त्रिंशता हृतः । मुहूर्त्ताङ्के ततो लब्धाऽहोरात्रसप्तविं- २८

शतिः ॥ ६१ ॥ मुहूर्त्ता नव शिष्यन्ते, भागाश्च सप्तविंशतिः । मुहूर्त्ताः सप्तषष्टिघ्नाः, कार्याः कर्त्तुं सवर्ण्णनम् ॥ ६२ ॥ षट्शती त्र्युत्तरा स्यात्सा, सप्तविंशतिभागयुक् । बभूव षट्शती त्रिंशा, भागेऽस्यास्त्रिंशतः पुनः ॥ ६३ ॥ सप्तषष्टिभवा भागा, लभ्यन्ते एकविंशतिः । यथोक्तोऽयं भमासोऽस्यार्द्धार्द्धं याम्योत्तरायणे ॥ ६४ ॥ चन्द्रोत्तरायणारम्भो, युगादिसमये भवेत् । प्रागुत्तरायणः पश्चाद्याम्यायनमिति क्रमः ॥६५॥ प्रवृत्तिः स्याद्यतो ज्योतिश्चक्रचारैकमूलयोः । सूर्ययाम्यायनशीतांशूत्तरायणयोः किल ॥६६॥ युगादावेव युगपत्तत्रार्कदक्षिणायनम् । पुष्यसप्तषष्टिजांशत्रयोविंशत्यतिक्रमे ॥ ६७ ॥ युगादावभिजिद्योगप्रथमक्षण एव तु । चन्द्रोत्तरायणारम्भस्ततो युक्तं पुरोदितम् ॥ ६८ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ—"सकलज्योतिश्चारमूलस्य सूर्यदक्षिणायनस्य चन्द्रोत्तरायणस्य च युगपत्प्रवृत्तिर्युगादावेव, सोऽपि चन्द्रायणस्याभिजिद्योगप्रथमसमय एव, सूरायणस्य तु पुष्यस्य त्रयोविंशतौ सप्तषष्टिभागेषु व्यतीतेषु, तेन सिद्धं युगस्यादित्व"मिति । पुष्यस्य सप्तषष्ट्युत्थविंशत्यंशाधिके ततः । मुहूर्त्तदशके भुक्ते, मुहूर्त्तैकोनविंशतौ ॥ ६९ ॥ भोग्यायां सप्तचत्वारिंशदंशायां समाप्यते । विधुनोदीच्यमयनं, याम्यमारभ्यतेऽपि च ॥ ७० ॥ एवं च सर्वनक्षत्रभोगार्द्धानुभवात्मके । सामर्थ्यादवसीयेते, याम्योत्तरायणे विधोः ॥ ७१ ॥ नन्वाद्यान्त्यमण्डलाभिमुखप्रसर्प्पणात्मके । याम्योत्तरायणे स्यातां, भानोरिव विधोरपि ॥ ७२ ॥ किञ्च—लोकप्रसिद्धेर्मकरे, कर्कराशिस्थितस्ततः । उदीच्यं याम्यमयनं, विधुरारभते क्रमात् ॥७३॥ युगे युगे चतुस्त्रिंशं, शतं चन्द्रायणानि वै । त्रिंशान्यष्टादश शतान्येभिश्च युगवासराः ॥७४॥

युगातीतपर्वसंख्या, कार्या पञ्चदशाहता । क्षिप्यंते तत्र तिथयः, पर्वोपरिगतास्ततः ॥ ७५ ॥ राशेरस्माद्विवर्ज्यन्तेऽवमरात्रास्ततः परम् । ऋक्षमासार्द्धेन भागे, यत् लब्धं तद्विचार्यते ॥ ७६ ॥ लब्धे समेऽङ्के विज्ञेयमतीतं दक्षिणायनम् । विषमेऽङ्के पुनर्लब्धे, व्यतीतमुत्तरायणम् ॥ ७७ ॥ शेषांस्तूद्धरितानंशान्, सप्तषष्ट्या हरेद्बुधः । लब्धाङ्कप्रमिता वर्त्तमानायनदिना गताः ॥ ७८ ॥ तत्राप्युद्धरिता येऽङ्कास्ते विज्ञेया विशारदैः । दिनस्य सप्तषष्ट्यंशा, दृश्यतेऽत्र निदर्शनम् ॥ ७९ ॥ यथा युगादेरारभ्य, नवमासव्यतिक्रमे । पञ्चम्यां केनचित्पृष्टं, किं चन्द्रायणमस्ति भोः ? ॥ ८० ॥ कुर्यात्पञ्चदशघ्नानि, पर्वाण्यष्टादशात्र च । क्षिपेद्गतान्पञ्च तिथीन्, त्यक्त्वाऽवमचतुष्टयम् ॥ ८१ ॥ एकसप्तत्या समेतं, संजातं शतयोर्द्वयम् । भाजकोऽस्य भमासार्द्धं, पूर्णरूपात्मकं न तत् ॥ ८२ ॥ किंतु सप्तषष्टिभागैः, कियद्भिरधिकं ततः । एष राशिः सप्तषष्ट्या, भागसाम्याय गुण्यते ॥ ८३ ॥ अष्टादश सहस्राणि, सप्तपञ्चाशताऽधिकम् । शतं ( १८१५७ ) जातमितश्चोडुमासार्द्धदिवसा अपि ॥ ८४ ॥ सप्तषष्ट्या हताः शेषैर्वेदवेद लवैर्युताः । जाताः पञ्चदशाढ्यानि, शतानि नव तैः पुनः ॥ ८५ ॥ हृते भाज्याङ्केऽयनानि, लब्धान्येकोनविंशतिः । शेषा भागसप्तशती, द्विसप्तत्यधिका स्थिता ॥ ८६ ॥ अस्या भागे सप्तषष्ट्या, लब्धा रुद्रमिता दिनाः । शेषाः पंचत्रिंशदंशास्तिष्ठंति सप्तषष्टिजाः ॥८७॥ चन्द्रायणान्यतीतानीत्येवमेकोनविंशतिः । अनन्तरमतीतं यत्तचन्द्रस्योत्तरायणम् ॥ ८८ ॥ वर्त्तमानस्य च याम्यायनस्य वासरा गताः । एकादश लवाः पंचत्रिंशच्च सप्तषष्टिजाः ॥ ८९ ॥ अत्र पूर्णा भविष्यन्ति, समासे पञ्चमे तिथौ । एवमन्य-

चन्द्रस्यायनानि

२०

२५



२८

त्रापि भाव्यं, करणं गणकोत्तमैः ॥९०॥ इन्दुस्तत्परिवारश्च, रूपकान्त्यादिभिर्भृशम् । सश्रीक इति विख्यातः, शशी प्राकृतभाषया ॥ ९१ ॥ मृगश्चिह्नं विमानेऽस्य, पीठिकायां प्रतिष्ठितम् । मृगाङ्कितविमानत्वान्मृगाङ्क इति वोच्यते ॥ ९२ ॥ तथा च पंचमाङ्गे–"से केणट्ठेणं भंते ! एवं वुच्चइ–चंदे ससी चंदे ससी ?, गो० ! चंदस्स णं जोतिसिंदस्स जोतिसरण्णो मियंके विमाणे कंता देवा कंताओ देवीओ"इत्यादि ॥ १२ श० ५ उ० । इति चन्द्रस्वरूपनिरूपणं ॥

एवं संक्षेपतश्चन्द्रनिरूपणं यथा कृतम् । तथैव वर्णयामोऽथ, नक्षत्राणां निरूपणम् ॥ ९३ ॥ आदौ संख्या मण्डलानां १ तेषां क्षेत्रप्ररूपणा २ । एकऋक्षविमानानां, तथाऽन्तरं परस्परम् ३ ॥ ९४ ॥ सुमेरोर्मण्डलाबाधा ४, विष्कम्भादि च मण्डले ५ । मुहूर्त्तगति ६ रावेशः, शशाङ्कमण्डलैः सह ७ ॥ ९५ ॥ दिग्योगो ८ देवता ९ स्तारासंख्यो १० डूनां तथाऽऽकृतिः ११ । सूर्येन्दुयोगाद्धामानं १२ कुलाद्याख्यानिरूपणम् १३ ॥ ९६ ॥ अमावास्यापूर्णिमानां, नक्षत्रयोगकीर्त्तनम् १४ । प्रतिमासमहोरात्रसमापकानि तानि च १५ ॥ ९७ ॥ एभिश्च पञ्चदशाभिर्द्वारैः पूर्गोपुरैरिव । गम्योडुपरिपाटीति, तामेव प्रथमं ब्रुवे ॥ ९८ ॥ अभिजिच्छ्रवणं चैव, धनिष्ठा शततारिका । पूर्वाभद्रपदा सैवोत्तरादिकाऽथ रेवती ॥ ९९ ॥ अश्विनी भरणी चैव, कृत्तिका रोहिणी तथा । मृगशीर्ष तथा चाऽऽर्द्रा, पुनर्वसू ततः परम् ॥५००॥ पुष्योऽश्लेषा मघाः पूर्वा, फल्गुन्युत्तरफाल्गुनी । हस्तश्चित्रा तथा स्वातिर्विशाखा चानुराधिका ॥ १ ॥ ज्येष्ठा मूलं तथा पूर्वाषाढा सैवोत्तरापि च । जिनप्रवचनोपज्ञं, नक्ष-

त्राणामयं क्रमः ॥ २ ॥ अश्विन्याः कृत्तिकाया वा, प्रसिद्धं लौकिकक्रमम् । उल्लङ्घ्यात्र प्रवचने, यदेतत्क्रमदर्शनम् ॥ ३ ॥ तत्र हेतुः प्रथमतः, संयोगः शशिना समम् । युगस्यादावभिजितः, शेषाणां तु ततः क्रमात् ॥ ४ ॥ कृत्तिकादिक्रमस्तु लोके सप्तशलाकचक्रादिष्वेव स्थानेषु उपयोगी श्रूयते ॥ आरभ्य नन्वभिजितो, नक्षत्रानुक्रमो यदि । शेषोडूनामिव कथं, व्यवहार्यत्वमस्य न ? ॥ ५ ॥ अत्रोच्यतेऽस्य शशिना, योगो यदल्पकालिकः । ऋक्षांतरानुप्रविष्टतयाऽस्य तद्विवक्षणम् ॥ ६ ॥ यदुक्तं समवायांगे सप्तविंशे समवाये–'जंबुदीवे २ अभीइवज्जेहिं सत्तावीसाहिं णक्खत्तेहिं संववहारे वट्टइ' एतद्वृत्तिर्यथा–"जम्बूद्वीपे, न धातकीषण्डादौ, अभिजिद्वर्जैः सप्तविंशत्या नक्षत्रैर्व्यवहारः प्रवर्त्तते, अभिजिन्नक्षत्रस्योत्तराषाढाचतुर्थपादानुप्रवेशनादिति, लोके तु–उत्तराषाढमन्त्याङ्घ्रिचतस्रश्च श्रुतेर्घटीः । वदन्त्यभिजितो भोगं, वेधलत्ताद्यवेक्षणे ॥ ७ ॥ अष्टावेव मण्डलानि, स्युरष्टाविंशतेरपि । उडूनां तत्र चारस्तु, नियते स्वस्वमण्डले ॥ ८ ॥ इति मंडलसंख्या ॥ साशीतियोजनशते, द्वीपस्यान्तरवर्त्तिनि । उक्तं मुक्तिवधूकान्तैर्नक्षत्रमण्डलद्वयम् ॥ ९ ॥ त्रिंशे च योजनशतत्रये लवणवारिधेः । षड् नक्षत्रमण्डलानि, दृष्टानि विष्टपेक्षिभिः ॥ १० ॥ नक्षत्रमण्डलं चक्रवालविष्कम्भतो भवेत् । गव्यूतमेकं प्रत्येकं, गव्यूतार्द्धं च मेदुरम् ॥ ११ ॥ एवं नक्षत्रजातीयमंडलक्षेत्रसंमितिः । दशोत्तरा पंचशती, योजनानां निरूपिता ॥ १२ ॥ नत्वेकैकस्य ऋक्षस्य, मण्डलक्षेत्रसंभवः । रवेरिवायनाभावात्सदा चारात्स्वमण्डले ॥ १३ ॥ इति मण्डलक्षेत्रं ।

नक्षत्राणां मण्डलानि तेषां क्षेत्रं च

२०

२५
॥ २४५ ॥

२८

यत्र यत्र यानि यानि, वक्ष्यन्ते भानि मण्डले । स्यात्तदीयविमानानां, द्वे योजने मिथोऽन्तरम् ॥ १४ ॥ मिथोऽन्तरमुडूनां चेदिदमेव भवेत्तदा । मण्डलक्षेत्रमन्यत्स्याद्धशून्यं तच्च नेष्यते ॥१५॥ यत्तु-"दो जोअणाइं णक्खत्तमंडलस्स णक्खत्तमंडलस्स य आबाहाए अंतरे पण्णत्ते" इत्येतत् जम्बूद्वीपप्रज्ञप्तिसूत्रं तत् अष्टास्वपि मण्डलेषु यत्र २ मण्डले यावन्ति नक्षत्राणां विमानानि तेषामन्तरबोधकं, यच्च अभिजिन्नक्षत्रविमानस्य श्रवणनक्षत्रविमानस्य च परस्परमन्तरं द्वे योजने इतिउ० श्रीशान्तिचन्द्रगणिभिः स्वकृतवृत्तौ व्याख्यायि तदभिप्रायं सम्यग् न विद्मः, यदपि उ० श्रीधर्मसागरगणिभिः स्वकृतवृत्तौ एतत्सूत्रव्याख्याने द्वे योजने नक्षत्रस्य २ चाबाधया अन्तरं प्रज्ञप्तमित्येव लिखितमस्ति तदप्यभिप्रायशून्यमेवच ॥ चतुश्चत्वारिंशतैव, सहस्रैरष्टभिः शतैः । विंशैश्च योजनैर्मेरोः, सर्वान्तरं भमण्डलम् ॥ १६ ॥ सहस्रैः पञ्चचत्वारिंशता विंशैस्त्रिभिः शतैः । योजनैर्मेरुतः सर्वबाह्यं नक्षत्रमण्डलम् ॥ १७ ॥ इति सुमेरोरबाधा ।

विष्कम्भायामपरिधिप्रमुखं मानमेतयोः । रवेः सर्वान्तरसर्वबाह्यमण्डलयोरिव ॥ १८ ॥ इति मण्डलविष्कम्भादि ॥ सहस्राणि पञ्च शतद्वयं च पञ्चषष्टियुक् । योजनानि योजनस्य, भक्तस्यैकस्य निश्चितम् ॥ १९ ॥ एकविंशत्या सहस्रैः, षष्ट्याढ्यैर्नवभिः शतैः । विभागाश्च समधिकाः, पूर्वोक्तयोजनोपरि ॥ २० ॥ अष्टादश सहस्राणि, शतद्वयं त्रिषष्टियुक् । सर्वान्तर्मण्डलोडूनां, मुहूर्त्तगतिरेषिका ॥ २१ ॥ उपपत्तिश्चात्र-नक्षत्रं सर्वमप्यत्र, पूरयेत् स्वस्वमण्डलम् । मुहूर्त्तैरेकोनषष्ट्या, मुहूर्त्तस्य तथा लवैः ॥२२॥ सप्तसप्तषष्टित्रिंशद्विभक्तस्य त्रिभिः शतैः ।

५
१०
१४

ससोत्तरैः प्रत्ययश्च, त्रैराशिकात्तदुच्यते ॥ २३ ॥ नक्षत्रार्द्धमण्डलानां, संपूर्णयुगवर्त्तिनाम् । पञ्चत्रिंशत्समधिकैर्यद्यष्टादशभिः शतैः ॥ २४ ॥ अष्टादशशती त्रिंशाहोरात्राणामवाप्यते । द्वाभ्यामर्द्धमण्डलाभ्यां, किमाप्यते तदा वद ॥२५॥ १८३५ । १८३० । २ । अत्रान्त्यराशिना राशौ, मध्यमे गुणिते सति । त्रिसहस्री षट्शती च, जाता षष्ट्यधिका किल ॥ २६ ॥ पञ्चत्रिंशत्समधिकेनाष्टादशशतात्मना । आद्येन राशिना भागे, रात्रिन्दिवमवाप्यते ॥ २७ ॥ अष्टादशशती शेषा, पञ्चविंशतियुक् स्थिता । मुहूर्त्तानयनायैषा, त्रिंशता गुणिताऽभवत् ॥ २८ ॥ चतुःपञ्चाशत्सहस्राः, सार्द्धा ससशतीति च । एषां भागेऽष्टादशभिः, पञ्चत्रिंशद्युतैः शतैः ॥ २९ ॥ लब्धा मुहूर्त्ता एकोनत्रिंशत्ततोऽपवर्त्तनम् । छेद्यच्छेदकयो राश्योः, पञ्चभिस्तौ ततः स्थितौ ॥ ३० ॥ ससाढ्या त्रिशती भाज्यो, भाजकः ससषष्टियुक् । त्रिशती येऽत्र लब्धाश्चैकोनत्रिंशन्मुहूर्त्तकाः ॥ ३१ ॥ त्रिंशन्मुहूर्त्तरूपेऽहोरात्रे पूर्वागतेऽन्विताः । ते मुहूर्त्ताः स्युरेकोनषष्टी राशिरसौ पुनः ॥ ३२ ॥ गुण्यते भागसाम्याय, ससषष्टिसमन्वितैः । त्रिभिः शतैः क्षिप्यतेऽस्मिन्, ससाढ्यांशशतत्रयी ॥ ३३ ॥ सषष्टिर्नवशत्येवं, सहस्राश्चैकविंशतिः । अयं च राशिः परिधेर्भाजकः प्रतिमण्डलम् ॥ ३४ ॥ तिस्रो लक्षाः पञ्चदश, सहस्राणि तथोपरि । नवाशीतिः परिक्षेपः, सर्वाभ्यन्तरमण्डले ॥ ३५ ॥ राशिर्योजनरूपोऽयं, भागात्मकेन राशिना । कथं विभाज्योऽसदृशस्वरूपत्वादसौ ततः ॥ ३६ ॥ तेनैवाहति गुणनं, गुणितो येन भाजकः । ततस्त्रिभिः शतैः ससषष्ट्याढ्यैरेष गुण्यते ॥ ३७ ॥ जाता एकादश कोट्यः, षट्पञ्चाशच्च लक्षकाः । ससत्रिंशत्सहस्राणि, षट्-

अन्तरमवाधा विष्कम्भादि मुहूर्त्तगतिश्च

२०

२५

॥ २४६ ॥

२८

शती च त्रिषष्टियुक् ॥३८॥ सहस्रैरेकविंशत्या, षष्ट्याढ्यैर्नवभिः शतैः। भागेऽस्य राशेः प्रागुक्ता, मुहूर्त्तगति- राप्यते ॥ ३९ ॥ तथा—योजनानां त्रिपञ्चाशच्छती सैकोनविंशतिः । सहस्रैरेकविंशत्या, षष्ट्याढ्यैर्नवभिः शतैः ॥ ४० ॥ भक्तस्य योजनस्यांशाः, सहस्राः षोडशोपरि। सपञ्चषष्टिस्त्रिशती, गतिः सर्वान्त्यमण्डले ॥४१॥ तथाहि—लक्षत्रयं योजनानामष्टादशसहस्रयुक्। शतत्रयं पञ्चदश, परिक्षेपोऽन्त्यमण्डले ॥ ४२ ॥ अयं त्रिभिः ससषष्टिसहितैस्ताडितः शतैः। कोट्य एकादश लक्षा, अष्टषष्टिः किलाधिकाः ॥ ४३ ॥ सहस्रैरेकविंशत्या, शतैः षड्भिः सपञ्चभिः। राशेरस्यैकविंशत्या, सहस्रैर्नवभिः शतैः ॥ ४४ ॥ हृते षष्ट्यधिकैर्भागे, मुहूर्त्तगति- राप्यते । नक्षत्राणां किल सर्वबाह्यमण्डलचारिणाम् ॥ ४५ ॥ इति मुहूर्त्तगतिः ॥

षट्सु शेषमण्डलेषु, मुहूर्त्तगतिसंविदे । सुखेन तत्तत्परिधिज्ञानाय क्रियतेऽधुना ॥ ४६ ॥ भमण्डलानां सर्वेषां, मण्डलेष्वमृतद्युतेः । समवतारस्तत्राद्यमाद्ये शशाङ्कमण्डले ॥ ४७ ॥ भमण्डलं द्वितीयं च, तृतीये चन्द्रमण्डले। षष्ठे तृतीयं विज्ञेयं, लवणोदधिभाविनि ॥ ४८ ॥ चतुर्थं सप्तमे ज्ञेयं, तथा पञ्चममष्टमे । विज्ञेयं दशमे षष्ठमेकादशे च सप्तमम् ॥ ४९ ॥ अष्टमं च पञ्चदशे, शेषाणि तु सदोडुभिः। सप्त चन्द्रमण्डलानि, रहितानि विनिर्दिशेत् ॥ ५० ॥ एषां चन्द्रमण्डलानां, परिक्षेपानुसारतः । पूर्वोक्तविधिना भानां, मुहूर्त्तग- तिराप्यते ॥ ५१ ॥ इति चन्द्रमण्डलावेशः ॥

अभिजिच्छ्रवणश्चैव, धनिष्ठा शततारिका । पूर्वोत्तराभद्रपदा, रेवती पुनरश्विनी ॥ ५२ ॥ भरणी फाल्गुनी

५

१०

१४

पूर्वा, फाल्गुन्येव तथोत्तरा । स्वातिश्च द्वादशैतानि, सर्वाभ्यन्तरमण्डले ॥ ५३ ॥ चरन्ति तन्मण्डलार्द्धं, यथोक्तकालमानतः । पूरयन्ति तदन्यार्द्धं, तथा तान्यपराण्यपि ॥ ५४ ॥ पुनर्वसू मघाश्चेति, द्वयं द्वितीयमण्डले । तृतीये कृत्तिकास्तुर्ये, चित्रा तथा च रोहिणी ॥ ५५ ॥ विशाखा पञ्चमे षष्ठेऽनुराधा सप्तमे पुनः । ज्येष्ठाऽष्टमे त्वष्ट भानि, सदा चरन्ति तद्यथा ॥५६॥ आर्द्रा मृगशिरः पुष्योऽश्लेषा मूलं करोऽपि च । पूर्वाषाढोत्तराषाढे, इत्यष्टान्तिममण्डले ॥५७॥ पूर्वोत्तराषाढयोस्तु, चतुस्तारकयोरिह । द्वे द्वे स्तस्तारके मध्ये, बहिश्चाष्टममण्डलात् ॥५८॥ अष्टानां द्वादशानां च, बाह्याभ्यन्तरचारिणाम् । सर्वेभ्योऽपि बहिर्मूलं, सर्वेभ्योऽप्यन्तरेऽभिजित् ॥ ५९ ॥ तथाहुः–"अह भरणि साइ उवरि बहि मूलोऽभिन्तरे अभिई" यानि द्वादश ऋक्षाणि, सर्वाभ्यन्तरमण्डले । तानि चन्द्रस्योत्तरस्यां, संयुज्यन्तेऽमुना समम् ॥ ६० ॥ एभिर्यदोडुभिः सार्द्धं, योगस्तदा स्वभावतः । शेषेष्वेव मण्डलेषु, भवेच्चारो हिमद्युतेः ॥ ६१ ॥ सर्वान्तर्मण्डलस्थानामेषामुत्तरवर्त्तिता । चन्द्राद्युक्ता तदेभ्यश्च, विधोर्दक्षिणवर्त्तिता ॥ ६२ ॥ मध्यमीयमण्डलेषु, यान्युक्तान्यष्ट तेषु च । विना ज्येष्ठां त्रिधा योगः, सप्तानां शशिना समम् ॥ ६३ ॥ उत्तराहो दाक्षिणात्यो, योगः प्रमर्दनामकः । आद्यो बहिश्चरे चन्द्रे, द्वितीयोऽन्तश्चरे स्वतः ॥ ६४ ॥ प्रमर्दो भविमानानि, भित्त्वेन्दोर्गच्छतो भवेत् । योगः प्रमर्द एव स्याज्ज्येष्ठायाः शशिना समम् ॥ ६५ ॥ उडून्याद्यानि षड् भेषु, बाह्यमण्डलवर्त्तिषु । इन्दोर्दक्षिणदिक्स्थानि, संयुज्यन्तेऽमुना समम् ॥ ६६ ॥ पूर्वोत्तराषाढयोस्तु, बाह्यताराव्यपेक्षया । याम्यायां शशिनो योगः, प्रज्ञप्तः परमर्षिभिः ॥ ६७ ॥ द्वयोर्द्वयो-

चन्द्र-मण्डलावेशः दिग्योगः

२०

२५



२८

स्तारयोस्तु, चन्द्रे मध्येन गच्छति । भवेत्प्रमर्दयोगोऽपि, ततो योगोऽनयोर्द्विधा ॥ ६८ ॥ उदीच्यां दिशि योगस्तु, संभवेन्नानयोर्भयोः । यदाभ्यां परतश्चारः, कदापीन्दोर्न वर्त्तते ॥ ६९ ॥ विभिन्नमण्डलस्थानां, पृथङ्मण्डलवर्त्तिनाम् । नक्षत्राणां चन्द्रमसा, यथा योगस्तथोच्यते ॥ ७० ॥ स्वस्वकालप्रमाणेनाष्टाविंशत्या किलोडुभिः । निजगत्या व्याप्यमानं, क्षेत्रं यावद्विभाव्यते ॥ ७१ ॥ तावन्मानमेकमर्द्धमण्डलं कल्प्यते धिया । द्वितीयोडुकदम्बेन, द्वितीयमर्द्धमण्डलम् ॥ ७२ ॥ अष्टानवतिशताढ्यं लक्षं संपूर्णमण्डलेषु स्युः । सर्वेष्वंशा एष च विज्ञेयो मण्डलच्छेदः ॥ ७३ ॥ ( आर्या ) ननुच–मण्डलेषु येषु यानि, चरन्त्युडूनि तेष्विदम् । चन्द्रादियोगयोग्यानां, भांशानां कल्पनोचिता ॥ ७४ ॥ सर्वेष्वपि मण्डलेषु, सर्वोडुभागकल्पना । इयर्त्ति कथमौचित्यमिति चेच्छ्रूयतामिह ॥ ७५ ॥ भानां चन्द्रादिभिर्योगो, नैवास्ति नियते दिने । न वा नियतवेलायां, दिनेऽपि नियते न सः ॥ ७६ ॥ तेन तत्तन्मण्डलेषु, यथोदितलवात्मसु । तत्तन्नक्षत्रसंबन्धी, सीमाविष्कम्भ आहितः ॥ ७७ ॥ प्राप्तौ सत्यां मृगाङ्कादेर्योगः स्यादुडुभिः सह । एवमर्कस्यापि योगो, भिन्नमण्डलवर्त्तिनः ॥ ७८ ॥ स्थापना ॥ एवं भसीमाविष्कम्भादिषु प्राप्तप्रयोजनः । प्रागुक्तो मण्डलच्छेद, इदानीमुपपाद्यते ॥ ७९ ॥ त्रिविधानीह ऋक्षाणि, समक्षेत्राणि कानिचित् । कियन्ति चार्द्धक्षेत्राणि, सार्द्धक्षेत्राणि कानिचित् ॥ ८० ॥ क्षेत्रमुष्णत्विषा यावदहोरात्रेण गम्यते । तावत्क्षेत्रं यानि भानि, चरन्ति शशिना समम् ॥ ८१ ॥ समक्षेत्राणि तानि स्युरर्द्धक्षेत्राणि तानि च । अर्द्धं यथोक्तक्षेत्रस्य, यान्ति यानीन्दुना सह ॥ ८२ ॥ यथोक्तं क्षेत्रमद्ध्यर्द्धं, प्रयान्ति

यानि चेन्दुना । स्युस्तानि सार्द्धक्षेत्राणि, वक्ष्यन्तेऽग्रेऽभिधानतः ॥ ८३ ॥ तत्र पञ्चदशाद्यानि, षट्कं षट्कं परद्वयम् । अहोरात्रः सप्तषष्टिभागीकृतोऽत्र कल्प्यते ॥ ८४ ॥ ततः समक्षेत्रभानि, प्रत्येकं सप्तषष्टिधा । कल्प्यानीति पञ्चदश, सप्तषष्टिगुणीकृताः ॥ ८५ ॥ जातं सहस्रं पञ्चाढ्यमर्द्धक्षेत्रेषु भेषु च । सार्द्धास्त्रयस्त्रिंशदंशाः प्रत्येकं कल्पनोचिताः ॥ ८६ ॥ ततश्च–षड्घ्नाः सार्द्धास्त्रयस्त्रिंशज्जातं सैकं शतद्वयम् । सार्द्धक्षेत्रेषु प्रत्येकं, भागाश्चार्द्धांशयुक् शतम् ॥ ८७ ॥ सार्द्धक्षेत्राणि षडिति, त एते षड्गुणीकृताः । सत्रीणि षट् शतान्येकविंशतिश्चाभिजिल्लवाः ॥ ८८ ॥ अष्टादश शतान्येवं, त्रिंशानि सर्वसंख्यया । एतावदंशप्रमितं, स्यादेकमर्द्धमण्डलम् ॥ ८९ ॥ तावदेवापरमिति, द्वाभ्यामिदं निहन्यते । षष्ट्याधिकानि षट्त्रिंशच्छतानीत्यभवन्निह ॥ ९० ॥ त्रिंशन्मुहूर्त्ता एकस्मिन्नहोरात्र इति स्फुटम् । सषष्टिषट्त्रिंशदंशशतेषु कल्पनोचिता ॥ ९१ ॥ त्रिंशद्विभागाः प्रत्येकं, गुण्यन्ते त्रिंशतेति ते । जातं लक्षमेकमष्टानवत्या सहितं शतैः ॥ ९२ ॥ एतस्मान्मण्डलच्छेदमानादेव प्रतीयते । शशाङ्कभास्करोडूनां, गत्याधिक्यं यथोत्तरम् ॥ ९३ ॥ तथाहि–एकैकेन मुहूर्त्तेन, शशी गच्छति लीलया । प्रक्रान्तमण्डलपरिक्षेपांशानां यदा तदा ॥ ९४ ॥ अष्टषष्ट्या समधिकैरधिकं सप्तभिः शतैः । सहस्रमेकमर्कस्तु, मुहूर्त्तेनोपसर्पति ॥ ९५ ॥ त्रिंशान्यष्टादश शतान्युडूनि संचरन्ति च । पञ्चत्रिंशत्समधिकान्यष्टादश शतानि वै ॥ ९६ ॥ उक्तेन्दुभास्करोडूनां, गतिः प्राग् योजनात्मिका । इयं त्वंशात्मिका चिन्त्यं, पौनरुक्त्यं ततोऽत्र न ॥ ९७ ॥ विशेषस्त्वनयोर्गत्योः, कश्चिन्नास्ति स्वरूपतः । प्रत्ययः

समक्षेत्रत्वादि

२०

२५

॥२४८॥

२८

कोऽत्र यद्येवं, तत्रोपायो निशम्यताम् ॥ ९८ ॥ खखमण्डलपरिधिर्मण्डलच्छेदराशिना । विभज्यते यल्लब्धं तत्, सुधिया ताड्यते किल ॥९९॥ उक्तेन्दुकोंडुभागात्ममुहूर्त्तगतिराशिभिः । मुहूर्त्तगतिरेषां स्यात्पूर्वोक्ता योजनात्मिका ॥ ६०० ॥ त्रैराशिकेन यद्वा, प्रत्ययोऽस्या विधीयताम् । किं तत्त्रैराशिकमिति, यदीच्छा तन्निशम्यताम् ॥ १ ॥ स्यान्मण्डलापूर्त्तिकालो, विधोः प्राग्वत्सवर्णितः । पंचविंशाः शताः सप्त, सहस्राश्च त्रयोदश ॥ २ ॥ अस्योपपत्तिर्योजनात्मकमुहूर्त्तगत्यवसरे दर्शिताऽस्ति, ततश्च–पञ्चविंशसप्तशतत्रयोदशसहस्रकैः । मुहूर्त्तांशैर्लक्षमष्टानवतिश्च शता यदि ॥ ३ ॥ मण्डलांशा अवाप्यन्ते, प्राप्यन्ते तदा कति । एकेनान्तर्मुहूर्त्तेन, राशित्रयमिदं लिखेत् ( १३७२५।१०९८००।१ ) ॥ ४ ॥ आद्यो राशिर्मुहूर्तांशरूपोऽन्त्यस्तु मुहूर्त्तकः । सावर्ण्यार्थमेकविंशद्विशत्याऽन्त्यो निहन्यते ॥५॥ एकविंशा द्विशती स्यान्मध्यराशिरथैतया । हतः कोटिद्वयं लक्षा द्विचत्वारिंशदेव च ॥६॥ पञ्चषष्टिः सहस्राणि, शतान्यष्ट भवन्त्यथ । पञ्चविंशसप्तशतत्रयोदशसहस्रकैः ॥७॥ एषां भागे हृते लब्धा, मुहूर्त्तगतिरैन्दवी । भागात्मिका यथोक्ता च, सा रवेरपि भाव्यते ॥ ८ ॥ पूर्वोक्तो मण्डलच्छेदराशिः षष्ट्या मुहूर्त्तकैः । यद्याप्यते मुहूर्त्तेन, तदेकेन किमाप्यते ॥ ९ ॥ ( १०९८००।६०।१ ) गुणितोऽन्त्येनैककेन, मध्यराशिस्तथा स्थितः । अष्टादशशतीं त्रिंशां, यच्छत्याद्येन भाजितः ॥ १० ॥ भमण्डलपूर्त्तिकालमानं भवेत् सवर्णितम् । षष्टियुक्ता नवशती, सहस्राश्चैकविंशतिः ॥ ११ ॥ उपपत्तिरस्य योजनात्मकगत्यवसरे दर्शिताऽस्ति ॥ ततश्च–एतावद्भिर्मुहूर्त्तांशैर्मण्डलच्छेदसंचयः । प्रागुक्तश्चेल्लभ्यते तन्मुहूर्त्तेन

५ १० १४

किमाप्यते ॥ ( २११।६०।१०९८००।१ ) ॥ १२ ॥ सावर्ण्यायाद्यान्तिमयोर्गुण्यतेऽन्तिम एककः । सप्तसप्तषष्ट्या त्रिशत्या, तादृग्रूपः स जायते ॥ १३ ॥ हतोऽनेन मध्यराशिश्चतस्रः कोट्यो भवेत् । द्वे लक्षे षण्णवतिश्च, सहस्राः षट् शतानि च ॥ १४ ॥ तस्याद्यराशिना भागे, लब्धा भानां लवात्मिका । अष्टादशशती पञ्चत्रिंशा मुहूर्त्तजा गतिः ॥ १५ ॥ इति दिग्योगस्तत्प्रसङ्गात्सीमाविष्कम्भादिनिरूपणं च ॥



ब्रह्मा १ विष्णु २ र्वसु ३ श्चैव, वरुणा ४ जा ५ भिवृद्धयः । ६ पूषा ७ ऽश्वश्च ८ यमो ९ ऽग्निश्च १०, प्रजापति ११ स्ततः परम् ॥ १६ ॥ सोमो १२ रुद्रो १३ ऽदितिश्चैव, १४ बृहस्पति १५ स्तथापरः । सर्पो १६ ऽपरः पितृनामा १७, भगोऽ १८ र्यमाभिधोऽपि च १९ ॥ १७ ॥ सूर २० स्त्वष्टा २१ तथा वायु २२ रिन्द्राग्नी एकनायकौ २३ । मित्रें २४ द्र २५ नैर्ऋता २६ आपो २७, विश्वे देवास्त्रयोदश २८ ॥१८॥ अभिवृद्धेरहिर्बुध्न्यः, इत्याख्याऽन्यत्र गीयते । सोमश्चन्द्रो रविः सूर, ईदृशाख्याः परे सुराः ॥ १९ ॥ बृहस्पतिरपि प्रसिद्धो ग्रह एव । अमी अभिजिदादीनामुडूनामधिपाः स्मृताः । येषु तुष्टेषु नक्षत्रतुष्टी रुष्टेषु तद्रुषः ॥ २० ॥ देवानामप्युडूनां स्युर्यदधीशाः सुराः परे । तत्पूर्वोपार्जिततपस्तारतम्यानुभावतः ॥ २१ ॥ स्वामिसेवकभावः स्याद्यत्सुरेष्वपि नृष्विव । यथासुकृतमैश्वर्यतेजःशक्तिसुखादि च ॥ २२ ॥ विख्यातौ चन्द्रसूर्यौ यौ, सर्वज्योतिष्कनायकौ । तयोरप्यपरः स्वामी, परेषां तर्हि का कथा ? ॥ २३ ॥ तथा च पञ्चमाङ्गे—"सक्कस्स देविंदस्स देवरण्णो सोमस्स महारण्णो इमे देवा आणाउववायवयणनिद्देसे चिट्ठंति, तंजहा—सोमकाइयाति वा सोमदेवकाइया वा विज्जु-

२०

२५

॥२४९॥

२८

कुमारा विज्जुकुमारीओ अग्गिकुमारा अग्गिकुमारीओ वाउकुमारा वाउकुमारीओ चंदा सूरा गहा णक्खत्ता तारारूवा"इत्यादि ॥ इति देवता ॥

तिस्रस्तिस्रः पञ्च शतं, द्वे द्वे द्वात्रिंशदेव च । तिस्रस्तिस्रः षट् च पञ्च, तिस्र एका च पञ्च च ॥ २४ ॥ तिस्रः पञ्च सप्त च द्वे, द्वे पञ्चैकैकिका द्वयोः । पञ्च चतस्रस्तिस्रश्च, तत एकादश स्मृताः ॥ २५ ॥ चतस्रश्च चतस्रश्च, तारासंख्याऽभिजित्क्रमात् । ज्ञेयान्युडुविमानानि, ताराशब्दाद्बुधैरिह ॥ २६ ॥ न पुनः पञ्चमज्योतिर्भेदगाः किल तारकाः । विजातीयः समुदायी, विजातीयोच्चयान्न हि ॥ २७ ॥ प्रथीयांसि विमानानि, नक्षत्राणां लघूनि च । तारकाणां ततोऽप्यैक्यं, युक्तिं सासहि नानयोः ॥ २८ ॥ किंच कोटाकोटिरूपा, तारासंख्याऽतिरिच्यते ॥ अष्टाविंशतिरूपा च, ऋक्षसंख्या विलीयते ॥ २९ ॥ तद्वित्र्यादिविमानेशः, स्याद्देवोऽभिजिदादिकः । गृहद्वया-द्यधिपतिर्यथा कश्चिन्महर्द्धिकः ॥ ३० ॥ एवं च न काप्यनुपपत्तिः । तारासंख्याप्रयोजनं च—वारुण्यां दशमी त्याज्या, द्वितीया पौष्णभे तथा । शेषोडुष्वशुभा स्वस्वतारासंख्यासमा तिथिः ॥ ३१ ॥ इति तारासंख्या ॥ गोशीर्षपुद्गलानां या, दीर्घा श्रेणिस्तदाकृति । गोशीर्षावलिसंस्थानमभिजित् कथितं ततः ॥ ३२ ॥ कासाराभं श्रवणभं, पक्षिपंजरसंस्थिता । धनिष्ठा शततारा च, पुष्पोपचारसंस्थिता ॥ ३३ ॥ पूर्वोत्तराभद्रपदे, अर्द्धार्द्ध-वापिकोपमे । एतदर्द्धद्वययोगे, पूर्णा वाप्याकृतिर्भवेत् ॥ ३४ ॥ पौष्णं च नौसमाकारमश्वस्कन्धाभमश्विनम् । भरणी भगसंस्थाना, क्षुरधारेव कृत्तिकाः ॥३५॥ शकटोद्धिसमा ब्राह्मी, मार्गं मृगशिरःसमम् । आर्द्रा रुधिरबि-

५

१०

१४

न्द्राभा, पुनर्वसू तुलोपमौ ॥ ३६ ॥ वर्द्धमानकसंस्थानः, पुष्योऽश्लेषाकृतिः पुनः । पताकाया इव मघाः, प्राकाराकारचारवः ॥३७॥ पूर्वोत्तरे च फाल्गुन्यावर्द्धपल्यङ्कसंस्थिते । अत्राप्येतद्वययोगे, पूर्णा पल्यङ्कसंस्थितिः ॥ ३८ ॥ हस्तो हस्ताकृतिश्चित्रा, संस्थानतो भवेद्यथा । मुखमण्डनरैपुष्पं, स्वातिः कीलकसंस्थिता ॥ ३९ ॥ विशाखा पशुदामाभा, राधैकावलिसंस्थिता । गजदन्ताकृतिर्ज्येष्ठा, मूलं वृश्चिकपुच्छवत् ॥ ४० ॥ गजविक्रमसंस्थानाः, पूर्वाषाढाः प्रकीर्त्तिताः । आषाढाश्चोत्तराः सिंहोपवेशनसमा मताः ॥ ४१ ॥ लोके तु रत्नमालायां— तुरगमुखसदृक्षं योनिरूपं क्षुराभं, शकटसममथैणस्योत्तमाङ्गेन तुल्यम् । मणिगृहशरचक्रं नाभिशालोपमं भं, शयनसदृशमन्यचात्र पर्यङ्करूपम् ॥ ४२ ॥ ( मालिनी ) हस्ताकारनिभं च मौक्तिकनिभं चान्यत्प्रवालोपमं, धिष्ण्यं तोरणवत् स्थितं मणिनिभं सत्कुण्डलाभं परम् । कुध्यत्केसरिविक्रमेण सदृशं शय्यासमानं परं, चान्यद्दन्तिविलासवत् स्थितमतः शृङ्गाटकव्यक्ति च ॥ ४३ ॥ ( शार्दूल० ) त्रिविक्रमाभं च मृदङ्गरूपं, वृत्तं ततोऽन्यद्यमलद्वयाभम् । पर्यङ्करूपं मुरजानुकारमित्येवमश्वादिभचक्ररूपम् ॥ ४४ ॥ ( उपजातिः ) इत्याकृतिः ॥ ससषष्टिलवैः सप्तविंशत्याभ्यधिकान्यथ । योगो नव मुहूर्त्तानि, शशिनाऽभिजितो मतः ॥ ४५ ॥ ज्येष्ठाश्लेषाभरण्यार्द्रा, स्वातिश्च शततारिका । मुहूर्त्तानि पञ्चदश, योग एषां सुधांशुना ॥ ४६ ॥ उत्तरात्रितयं ब्राह्मी, विशाखा च पुनर्वसू । पञ्चचत्वारिंशदेषां, मुहूर्त्तान् योग इन्दुना ॥ ४७ ॥ पञ्चदशानां शेषाणामुडूनां शशिना सह । योगस्त्रिंशन्मुहूर्त्तानीत्येवमाहुर्जिनेश्वराः ॥ ४८ ॥ प्रयोजनं त्वेषां—मृते साधौ पञ्चदशमुहूर्त्ते नैव पुत्रकः ।



२०

२५
॥२५०॥

२८.

एकत्रिंशन्मुहूर्तैस्तु, क्षेप्यः शेषैस्तु भैरुभौ ॥ ४९ ॥ एतान्यर्द्धसार्द्धसमक्षेत्राण्याहुर्यथाक्रमम् । अथैषां रविणा योगो, यावत्कालं तदुच्यते ॥ ५० ॥ मुहूर्त्तैरेकविंशत्याढ्यानि रात्रिन्दिवानि षट् । अर्द्धक्षेत्राणामुडूनां, योगो विवस्वता सह ॥ ५१ ॥ सार्द्धक्षेत्राणां तु भानां, योगो विवस्वता सह । त्रिभिर्मुहूर्त्तैर्युक्तानि, रात्रिन्दिवानि विंशतिः ॥ ५२ ॥ समक्षेत्राणामुडूनामहोरात्रांस्त्रयोदश । मुहूर्त्तैश्च द्वादशभिरधिकान् रविसंगतिः ॥ ५३ ॥ रात्रिन्दिवानि चत्वारि, षण्मुहूर्त्ताधिकानि च । नक्षत्रमभिजिच्चारं, चरत्युष्णरुचा सह ॥ ५४ ॥ अत्रायमाम्नायः–ससषष्ट्युद्भवानंशानहोरात्रस्य यावतः । यन्नक्षत्रं चरत्यत्र, रजनीपतिना सह ॥ ५५ ॥ तन्नक्षत्रं तावतोऽहोरात्रस्य पञ्चमान् लवान् । भानुना चरतीत्यत्र, दृष्टांतोऽप्युच्यते यथा ॥ ५६ ॥ ससषष्टिलवानेकविंशतिं शशिना सह । चरत्यभिजिदर्केण, तावतः पञ्चमान् लवान् ॥५७॥ अहोरात्रस्येति शेषः । अथैकविंशतिः पञ्चभक्ता दिनचतुष्टयीम् । दद्यादेकोऽंशकः शेषास्त्रिंशता स निहन्यते ॥ ५८ ॥ जाता त्रिंशदथैतस्याः, पञ्चभिर्भजने सति । षण्मुहूर्त्ताः करं प्रासा, एवं सर्वत्र भावना ॥५९॥ तथाहुः–"जं रिक्खं जावइए वच्चइ चंदेण भाग सत्तट्ठी । तं पणभागे राइंदियस्स सूरेण तावइए ॥ ६० ॥" ससषष्टिस्तदर्द्धं च, ( ३३ ॥ ) चतुस्त्रिंशं तथा शतम् ( १३४ )। समा १ र्द्ध २ सार्द्ध ३ क्षेत्रेषु, ससषष्टिलवाः क्रमात् ॥ ६१ ॥ इति सूर्येन्दुयोगाद्धामानं। ऋक्षेषु येषु मासानां, प्रायः परिसमाप्तयः । तानि माससमाख्यानि, स्युर्ऋक्षाणि कुलाख्यया ॥ ६२ ॥ प्रायोग्रहणतश्चात्र, कदाप्युपकुलोडुभिः । समाप्तिर्जायते मासां, भैः कुलोपकुलैरपि ॥ ६३ ॥ कुलोडुभ्योऽधस्तनानि, भव-

५

१०

१५

न्त्युपकुलान्यथ। स्युः कुलोपकुलाख्यानि, तेभ्योऽप्यधस्तनानि च ॥ ६४ ॥ तानि चैवमाहुः–कुलभान्यश्विनी पुष्यो, मघा मूलोत्तरात्रयम्। द्विदैवतं मृगश्चित्रा, कृत्तिका वासवानि च॥ ६५ ॥ उपकुल्यानि भरणी, ब्राह्मं पूर्वात्रयं करः। ऐन्द्रमादित्यमश्लेषा, वायव्यं पौष्णवैष्णवे ॥ ६६ ॥ कुलोपकुलभान्यार्द्राऽभिजिन्मैत्राणि वारुणमिति ॥ कुलादिप्रयोजनं त्विदं–पूर्वेषु जाता दातारः, संग्रामे स्थायिनां जयः। अन्येषु त्वन्यसेवार्त्ता, यायिनां च सदा जयः ॥ ६७ ॥ इति कुलाद्याख्यानिरूपणं ॥ धनिष्ठाऽथोत्तराभद्रपदाश्विनी च कृत्तिकाः। मार्गः पुष्यश्चैव मघा, उत्तराफाल्गुनीति च ॥ ६८ ॥ चित्रा विशाखा मूलं चोत्तराषाढा यथाक्रमम्। श्रावणादिमासराकाः, प्रायः समापयन्ति यत् ॥ ६९ ॥ तत एव पूर्णिमानां, द्वादशानामपि क्रमात्। एषामुडूनां नाम्ना स्युर्नामधेयानि तद्यथा ॥ ७० ॥ श्राविष्ठी च प्रौष्ठपदी, तथैवाश्वयुजीत्यपि। कार्त्तिकी मार्गशीर्षी च, पौषी माघी च फाल्गुनी ॥७१॥ चैत्री च वैशाखी ज्यैष्ठी, मौलीत्याख्या तथापरा। आषाढीत्यन्विता एताः, सदा रूढाश्च कर्हिचित् ॥७२॥ श्रविष्ठा स्याद्धनिष्ठेति, तयेन्दुयुक्तयान्विता। श्राविष्ठी पौर्णमासी स्यादेवमन्या अपि स्फुटम् ॥ ७३ ॥ यदा चोपकुलाख्यानि, समापयन्ति पूर्णिमाः। पाश्चात्यानि तदैतेभ्यः, श्रवणादीन्यनुक्रमात् ॥ ७४ ॥ राकास्त्विमाः समाप्यन्ते, कुलोपकुलभैर्यदा। तदोपकुलपाश्चात्यैरभिजित्प्रमुखैरिह ॥ ७५ ॥ यद्यप्यभिजिता क्वापि, राकापूर्त्तिर्न दृश्यते। श्रुतियोगात्तथाप्येतद्राकापूरकमुच्यते ॥ ७६ ॥ यस्मिन् ऋक्षे पूर्णिमा स्यात्ततः पञ्चदशेऽथवा। चतुर्दशेऽमावास्या स्याद्, गणने प्रातिलोम्यतः ॥ ७७ ॥ तद्यथा–माघे राका मघो-

योगकालः कुलोपकुलानि च

२०

२५

॥ २५१ ॥

२८

पेताऽमावस्या च सवासवा । सवासवायां राकायां, श्रावणेऽमा मघान्विता ॥ ७८ ॥ एवमन्यत्रापि भाव्यं,
इत्यमावास्यापूर्णिमायोगकीर्त्तनं ॥ यदा यदा यैर्नक्षत्रैरस्तं यातैः समाप्यते । अहोरात्रस्तानि वक्ष्ये, नामग्राहं
यथाक्रमम् ॥ ७९ ॥ तदा समाप्यते ऋक्षै, रात्रिरप्येभिरेव यत् । उच्यते रात्रिनक्षत्राण्यप्यमून्येव तद्बुधैः
॥ ८० ॥ समापयति तत्राद्यानहोरात्रांश्चतुर्दश । नभोमास्युत्तराषाढा, ससैतान्यभिजित्तदा ॥ ८१ ॥ ततः
श्रवणमप्यष्टावेकोना त्रिंशदित्यमूः । धनिष्ठा श्रावणस्यान्त्यमहोरात्रं ततो नयेत् ॥ ८२ ॥ नयेद्धनिष्ठाऽहोरा-
त्रान्, भाद्रस्याद्यांश्चतुर्दश । ततः शतभिषक् सप्त, पूर्वाभद्रपदाष्ट च ॥ ८३ ॥ सौत्तरान्त्यमहोरात्रं, सैवेषस्य
चतुर्दश । ततः पौष्णं पञ्चदश, चरममेकमश्विनी ॥ ८४ ॥ अश्विन्येव कार्त्तिकस्य, नयत्याद्यांश्चतुर्दश । अहो-
रात्रान् पञ्चदश, भरण्येकं च कृत्तिकाः ॥ ८५ ॥ समापयन्ति ता एव, सहस्याद्यांश्चतुर्दश । ब्राह्मी पञ्चदशा-
न्त्यं च, मृगशीर्षं समापयेत् ॥ ८६ ॥ पौषस्यापि तदेवाद्यानहोरात्रान् समापयेत् । चतुर्दश तथाऽऽर्द्राऽष्टौ,
ततः सप्त पुनर्वसू ॥ ८७ ॥ पुष्योऽस्यान्त्यमहोरात्रं, माघेऽप्याद्यांश्चतुर्दश । समापयेत् पञ्चदशाश्लेषा तथा-
न्तिमं मघाः ॥ ८८ ॥ पूरयन्ति फाल्गुनस्य, मघा आद्यांश्चतुर्दश । ततः पञ्चदश पूर्वाफाल्गुनी सोत्तराऽन्तिमम्
॥ ८९ ॥ उत्तराफाल्गुनी चैत्रे, नयत्याद्यांश्चतुर्दश । ततो हस्तः पञ्चदश, चित्राहोरात्रमन्तिमम् ॥ ९० ॥ अहो-
रात्रांस्ततश्चित्रा, नयेच्चतुर्दशादिमान् । वैशाखस्य पञ्चदश, स्वातिरन्त्यं विशाखिका ॥ ९१ ॥ समापयत्यथ
ज्येष्ठे, विशाखाद्यांश्चतुर्दश । ससानुराधा ज्येष्ठाष्टौ, मूलः पर्यन्तवर्त्तिनम् ॥ ९२ ॥ मूलः समापयत्याद्यानाषा-

दिनरात्रि-समापकता

ढस्य चतुर्दश । पूर्वाषाढा पञ्चदशोत्तराषाढान्त्यवर्त्तिनम् ॥ ९३ ॥ संग्रहश्चात्र—"सत्तट्ठ अभिइसवणे तह सय-भिसए य पुव्वभद्दवए । अद्दा पुणवसूए राहा जेट्ठा य अणुक्कमसो ॥९४॥ पन्नरस दिणे सेसा रत्तिविरामं कुणंति णक्खत्ता । उत्तरसाढा आसाढ चरिमदिवसा गणिज्जंति ॥९५॥" प्रयोजनं त्वेषां–यथा नभश्चतुर्भागमारूढेऽर्के प्रतीयते । प्रथमा पौरुषी मध्यमह्नश्च व्योममध्यगे ॥ ९६ ॥ चतुर्भागावशेषं च, नभःप्राप्तेऽन्त्यपौरुषी । ज्ञायन्ते रजनीयामा, अप्येभिरुडुभिस्तथा ॥ ९७ ॥ तथाहुरुत्तराध्ययने–"जं णेइ जया रत्तिं णक्खत्तं तंमि णहचउब्भागे । संपत्ते विरमेज्जा सज्झाय पओसकालंमि ॥ ९८ ॥ तम्मेव य नक्खत्ते गयणचउब्भागसावसेसंमि । वेरत्तियंपि कालं पडिलेहित्ता मुणी कुणइ ॥ ९९ ॥ ग्रन्थान्तरे च–दहतेरहसोलहमे वीसइमे सूरियाओ नक्खत्ता । मत्थयगयंमि णेयं रयणीजामाण परिमाणं ॥७००॥" शीतकाले च दिनाधिकमानायां रात्रौ सूर्यभात् एकादशचतुर्दशसप्तदशैकाविंशतितमैर्नक्षत्रैर्नभोमध्यंप्राप्तैर्यथाक्रमं प्रथमादिप्रहरान्तः स्यादिति संप्रदायः । लोके च–"रविरिक्खाओ गणियं सिररिक्खं जाव सत्तपरिहीणं । सेसं दुगुणं किचातीया राई फुडा हवई ॥ १ ॥" इत्यादि बहुधा ॥ इत्यहोरात्रसमापकनक्षत्रकीर्त्तनं । समाप्तं चेदं नक्षत्रप्रकरणं ॥

२०

विकालकोऽङ्गारकश्च, लोहिताङ्कः शनैश्चरः । आधुनिकः प्राधुनिकः, कणः कणक एव च ॥ २ ॥ नवमः कणकणकस्तथा कणवितानकः । कणसंतानकश्चैव, सोमः सहित एव च ॥ ३ ॥ अश्वसेनस्तथा कार्योपगः कर्बुरकोऽपि च । तथाऽजकरको दुन्दुभकः शङ्खाभिधः परः ॥४॥ शङ्खनाभस्तथा शङ्खवर्णाभः कंस एव च । कंसना-

२५
॥ २५२ ॥
२८

भस्तथा कंसवर्णाभो नील एव च ॥ ५ ॥ नीलावभासो रूपी च, रूपावभासभस्मकौ । भस्मराशि–तिल-
तिलपुष्पवर्णदकाभिधाः ॥ ६ ॥ दकवर्णस्तथा कायोऽवन्ध्य इन्द्राग्निरेव च । धूमकेतुर्हरिः पिङ्गलको बुधस्त-
थैव च ॥ ७ ॥ शुक्रो बृहस्पती राहुरगस्तिर्माणवकाभिधः । कामस्पर्शश्च धुरकः, प्रमुखो विकटोऽपि च ॥ ८ ॥
विसन्धिकल्पः प्रकल्पः, स्युर्जटालारुणाग्नयः । षट्पञ्चाशत्तमः कालो, महाकालस्ततः परः ॥ ९ ॥ स्वस्तिकः
सौवस्तिकश्च, वर्द्धमानः प्रलम्बकः । नित्यालोको नित्योद्योतः, स्वयंप्रभावभासकौ ॥ १० ॥ श्रेयस्करस्तथा
क्षेमङ्कर आभङ्करोऽपि च । प्रभङ्करोऽरजाश्चैव, विरजा नाम कीर्त्तितः ॥ ११ ॥ अशोको वीतशोकश्च, विम-
लाख्यो वितसकः । विवस्त्रश्च विशालश्च, शालः सुव्रत एव च ॥ १२ ॥ अनिवृत्तिश्चैकजटी, द्विजटी करिकः
करः । राजाऽर्गलः पुष्पकेतुर्भावकेतुरिति ग्रहाः ॥ १३ ॥ ग्रहास्तु सर्वे वक्रातिचारादिगतिभावतः । गता-
वनियतास्तेन, नैतेषां प्राक्तनैः कृता ॥ १४ ॥ गतिप्ररूपणा नापि, मण्डलानां प्ररूपणा । लोकात्तु केषां-
चित्किञ्चिद्गत्यादि श्रूयतेऽपि हि ॥ १५ ॥ मेरोः प्रदक्षिणावर्त्तं, भ्रमन्त्येतेऽपि मण्डलैः । सदाऽनवस्थितैरेव,
दिवाकरशशाङ्कवत् ॥१६॥ अवस्थायिमण्डलत्वाचन्द्राद्ययोगचिन्तनात् । नापि चक्रे तारकाणां, मण्डलादिनि-
रूपणं ॥ १७ ॥ तथोक्तं जीवाभिगमसूत्रे "णक्खत्ततारगाणं, अवट्ठिया मण्डला मुणेयव्वा । तेऽविय पयाहि-
णावत्तमेव मेरुं अणुपरिंति" ॥१८॥ एवं रवीन्दुग्रहऋक्षताराचारस्वरूपं किमपि न्यगादि । शेषं विशेषं तु यथो-
पयोगं, ज्योतिष्कचक्रावसरेऽभिधास्ये ॥१९॥ (इन्द्रवज्रा) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राज-

५

१०

१४

श्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः। काव्यं यत् किलतत्र निश्चितजगत्तत्त्वप्रदीपोपमे सर्गो निर्गलितार्थसार्थसुभगो विंशः समासः सुखम् ॥ २० ॥ इति विंशतितमः सर्गः ॥

## ॥ अभिजिदादीनां तारासंख्या आकारः रात्रिसंख्या मासक्रमश्च ॥

| | नक्षत्र | संख्या | आकार | | मास | |
|---|---|---|---|---|---|---|
| १ | अभिजित् | ३ | गोशीर्षावली | ७ | श्रावण | १४ |
| २ | श्रवण | ३ | कासार | ८ | | ८ |
| ३ | धनिष्ठा | ५ | पक्षिपंजर | १५ | भाद्रवा | १४ |
| ४ | शतभिषक् | १०० | पुष्पोपचार | ७ | | ७ |
| ५ | पूर्वाभाद्रपदा | २ | अर्द्धवापी | ८ | | ८ |
| ६ | उत्तराभाद्रपदा | २ | अर्द्धवापी | १५ | आसो | १४ |
| ७ | रेवती | ३२ | नौकासंस्थान | १५ | | १५ |
| ८ | अश्विनी | ३ | अश्वस्कंध | १५ | कार्त्तिक | १४ |
| ९ | भरणी | ३ | भगसंस्थान | १५ | | १५ |
| १० | कृत्तिका | ६ | क्षुरधारा | १५ | मागसीर | १४ |
| ११ | रोहिणी | ५ | शकटोद्धी | १५ | | १५ |
| १२ | मृगशीर्ष | ३ | मृगशीर | १५ | पोसी | १४ |
| १३ | आर्द्रा | १ | रुधिरविन्दु | ८ | | ८ |
| १४ | पुनर्वसु | ५ | तुला | ७ | | ७ |
| १५ | पुष्य | ३ | वर्द्धमानक | १५ | माहा | १४ |
| १६ | अश्लेषा | ५ | पताका | १५ | | १५ |
| १७ | मघा | ७ | प्राकार | १५ | फागुण. | १४ |
| १८ | पूर्वाफा० | २ | अर्द्धपल्यंक | १५ | | १५ |
| १९ | उ० फा० | २ | अर्द्धपल्यक | १५ | चैत्र | १४ |
| २० | हस्त | ५ | हस्ततल | १५ | | १५ |
| २१ | चित्रा | १ | मुखमंडन० स्वर्ण. | १५ | वै० | १४ |
| २२ | स्वाति | १ | कीलक | १५ | | १५ |
| २३ | विशाखा | ५ | पशुदाम | १५ | ज्येष्ठ | १४ |
| २४ | अनुराधा | ४ | एकावली | ८ | | ८ |
| २५ | ज्येष्ठा | ३ | गजदंत | ७ | | ७ |
| २६ | मूल० | ११ | वृश्चिकपुच्छ | १५ | आषाढ | १४ |
| २७ | पूर्वाषाढा | ४ | गजविक्रम | १५ | | १५ |
| २८ | उत्तराषाढा | ४ | सिंहनीषदिन | १५ | | १ |

## ॥ अथैकविंशतितमः सर्गः प्रारभ्यते ॥

अथास्य जम्बूद्वीपस्य, परिक्षेपकमम्बुधिम् । कीर्त्तयामि कीर्त्तिगुरुप्रसादप्रथितोद्यमः ॥ १ ॥ तस्थुषो भोगिन इवावेष्ट्यैनं द्वीपशेवधिम् । क्षारोदकत्वादस्याब्धेर्लवणोद इति प्रथा ॥ २ ॥ चक्रवालतया चैष, विस्तीर्णो लक्षयोर्द्वयम् । योजनानां परिक्षेपपरिमाणमथोच्यते ॥ ३ ॥ एकाशीतिसहस्राढ्या, लक्षाः पञ्चदशाथ च । शतमेकोनचत्वारिंशताऽऽढ्यं किञ्चिदूनया ॥४॥ एषोऽस्य बाह्यपरिधिर्धातकीखण्डसन्निधौ । जम्बूद्वीपस्य परिधिर्यः स एवान्तरः पुनः ॥ ५ ॥ पूर्वपूर्वद्वीपवार्द्धिपरिक्षेपा हि येऽन्तिमाः । त एवाग्र्याग्र्यपाथोधिद्वीपेष्वभ्यन्तरा मताः ॥ ६ ॥ अभ्यन्तरबाह्यपरिक्षेपयोगेऽर्द्धिते सति । परिक्षेपा मध्यमाः स्युर्विनाऽऽद्यं द्वीपवार्द्धिषु ॥ ७ ॥ लक्षा नवाष्टचत्वारिंशत्सहस्राणि षट्शती । त्र्यशीतिश्च मध्यमोऽयं, परिधिर्लवणोदधौ ॥ ८ ॥ प्रवेशमार्गरूपो यस्तटाकादिजलाश्रये । भूप्रदेशः क्रमान्नीचः,सोऽत्र गोतीर्थमुच्यते ॥ ९ ॥ गोतीर्थं तच्च लवणाम्बुधावुभयतोऽपि हि । प्रत्येकं पञ्चनवर्तिं, सहस्रान् यावदाहितम् ॥ १० ॥ जम्बूद्वीपवेदिकान्तेऽङ्गुलासंख्यांशसंमितम् । गोतीर्थं धातकीखण्डवेदिकान्तेऽपि तादृशम् ॥ ११ ॥ ततश्च—अब्धावुभयतो यावद्गम्यतेऽंशाङ्गुलादिकम् । भक्ते तस्मिन् पञ्चनवत्याऽऽप्तं यत्तन्मितोण्डता ॥१२॥ यथा पञ्चनवत्याऽंशैरतिक्रान्तैः पयोनिधौ । भुवोऽंशो हीयते पञ्चनवत्याऽङ्गुलमङ्गुलैः ॥ १३ ॥ योजनैश्च पञ्चनवत्यैकं योजनमप्यथ । शतैः पञ्चनवत्या च,

लवणा
वृताहः

योजनानां शतं ह्रसेत् ॥ १४ ॥ एवं च पञ्चनवतिसहस्रान्ते समक्षितेः । निम्नतोभयतोऽप्यत्र, जाता सहस्र-योजना ॥ १५ ॥ तथाहुः—"जत्थिच्छसि उव्वेहं ओगाहित्ताण लवणसलिलस्स । पंचाणउइविभत्ते जं लद्धं सो उ उव्वेहो ॥ १६ ॥" ततश्च—द्वयोर्गोतीर्थयोर्मध्ये, सहस्रयोजनोन्मितः । स्यादुद्वेधः सहस्राणि, दश यावत्समोऽ-भितः ॥ १७ ॥ जम्बूद्वीपवेदिकान्तेऽङ्गुलासङ्ख्यांशसंमितम् । सलिलं धातकीखण्डवेदिकान्तेऽपि तादृशम् ॥१८॥ ततः पञ्चनवत्यांशैर्वर्द्धन्ते षोडशांशकाः । अङ्गुलैः पञ्चनवत्या, वर्द्धते षोडशाङ्गुली ॥ १९ ॥ अत्रायमाम्नायः—धातकीखण्डतो जम्बूद्वीपतो वा पयोनिधौ । जिज्ञास्यते जलोच्छ्रायो, यावत्स्वंशाङ्गुलादिषु ॥ २० ॥ पञ्चोनशतभक्तेषु, सत्सु तेषु यदाप्यते । तत् षोडशगुणं यावत्तावांस्तत्र जलोच्छ्रयः ॥ २१ ॥ यथाऽत्र पञ्चनवतेर्योजनानामतिक्रमे । विभज्यन्ते योजनानि, पञ्चोनेन शतेन वै ॥ २२ ॥ एकं योजनमाप्तं यत्तत्षोडशभिराहतम् । योजनानि षोडशैवं, ज्ञातस्तत्र जलोच्छ्रयः ॥ २३ ॥ तथाहुः क्षमाश्रमणमिश्राः—"जत्थिच्छसि उस्सेहं ओगाहित्ताण लवणसलिलस्स । पंचाणउइविभत्ते सोलसगणिए गणियमाहू ॥ २४ ॥" एतच्च धातकीखण्डजम्बूद्वीपान्त्यभूमितः । दत्त्वा दवरिकां मध्ये, शिखोपरितलस्य वै ॥ २५ ॥ अपान्तराले च किमप्याकाशं यत् जलोज्झितम् । तत् सर्वं कर्णगत्यैतत्संबन्धीति जलैर्भृतम् ॥ २६ ॥ विवक्षित्वा मानमुक्तं, जलोच्छ्रयस्य निश्चितम् । मेरोरेकादशभागपरिहाणिरिवागमे ॥ २७ ॥ तथाहुः श्रीमलयगिरिपादाः—"इह षोडशसहस्रप्रमाणायाः शिखायाः शिरसि उभयोश्च वेदिकान्तयोर्मूले दवरिकायां दत्तायां यदपान्तराले किमपि जलरहित-

२०
२५
॥ २५४ ॥
२७

माकाशं तदपि कर्णगत्या तदाभाव्यमिति सजलं विवक्षित्वा विवक्षितमुच्यमानमुच्चत्वपरिमाणमवसेयं, यथा मन्दरपर्वतस्यैकादशभागपरिहाणि"रिति । वस्तुतः पुनरुभयोर्द्वीपयोर्वेदिकान्ततः । प्रदेशवृद्ध्योभयतो, वर्द्धतेऽम्बु क्रमात्तथा ॥ २८ ॥ यथाऽस्मिन् पञ्चनवतिसहस्रान्ते भवेज्जलम् । योजनानां सप्त शतान्युच्छ्रितं समभूतलात् ॥ २९ ॥ योजनानां सहस्रं चोद्वेधोऽत्र समभूतलात् । एवं सप्तदश शतान्युद्वेधोऽत्र पयोनिधेः ॥३०॥ ततः परे मध्यभागे, सहस्रदशकातते । जलोच्छ्रयो योजनानां, स्यात्सहस्राणि षोडश ॥ ३१ ॥ सहस्रमत्राप्युद्वेध, उच्छ्रयोद्वेधतस्ततः । योजनानां सप्तदश, सहस्राण्युदकोच्चयः ॥ ३२ ॥ एवं जघन्योच्छ्रयोऽस्याङ्गुलासङ्ख्यांशसंमितः । उत्कर्षतो योजनानां, सहस्राणि च षोडश ॥ ३३ ॥ मध्यमस्तूच्छ्रयो वाच्यो, यथोक्ताम्नायतोऽम्बुधेः । तत्र तत्र विनिश्चित्य, जलोच्छ्रयमनेकधा ॥ ३४ ॥

अथास्य लवणाम्भोधेर्गणितं प्रतरात्मकम् । घनात्मकं च निर्णेतुं, यथाऽऽगममुपक्रमे ॥ ३५ ॥ लवणाम्बुधिविस्तारात्सहस्राणि दश स्फुटम् । शोधयित्वा शेषमर्द्धीकृतं दशसहस्रयुक् ॥ ३६ ॥ जातं पञ्चसहस्राढ्यं, लक्षमेकमिदं पुनः । अस्मिन् प्रकरणे कोटिरित्येवं परिभाषितम् ॥ ३७ ॥ अथैवंरूपया कोट्या, गणयेल्लवणाम्बुधेः । मध्यमं परिधेर्मानं, स्यादेवं प्रतरात्मकम् ॥ ३८ ॥ तच्चेदं—सहस्रा नव कोटीनां, तथा नव शतान्यपि । एकषष्टिः कोटयश्च, लक्षाः सप्तदशोपरि ॥ ३९ ॥ सहस्राणि पञ्चदश, योजनानामिदं जिनैः । प्रतरं लवणे प्रोक्तं, सर्वक्षेत्रे फलात्मकम् ॥ ४० ॥ मध्यभागे सप्तदश, सहस्राणि यदीरितम् । जलमानं तदनेन,

५

१०

१४

प्रतरेणाहतं घनम् ॥ ४१ ॥ कोट्यः षोडश कोटीनां, लक्षास्त्रिनवतिस्तथा । एकोनचत्वारिंशच्च, सहस्राणि ततः परम् ॥ ४२ ॥ सपञ्चदशकोटीनि, नव कोटीशतान्यथ । परिपूर्णा योजनानां, लक्षाः पञ्चाशदेव च ॥४३॥ एतावद् घनगणितं, कथितं लवणार्णवे । विलसत्केवलालोकविलोकितजगत्त्रयैः ॥ ४४ ॥ नन्वेतावद् घनमिह, कथमुत्पद्यते ? यतः । न सर्वत्र सप्तदश, सहस्राणि जलोच्छ्रयः ॥ ४५ ॥ किंतु मध्यभाग एव, सहस्रदशकावधि । अत्रोच्यते सत्यमेतत्तत्त्वमाकर्ण्यतां परम् ॥ ४६ ॥ युग्मम् ॥ अधः शिखाया उपरि, द्वयोश्च वेदिकान्तयोः । दत्तायां दवरिकायामृज्व्यामेकान्ततः किल ॥ ४७ ॥ अन्तराले यदाकाशं, स्थितमम्बुधिवर्जितम् । तत्सर्वमेतदाभाव्यमित्यम्बुधितयाऽखिलम् ॥ ४८ ॥ विवक्षित्वा मानमेतन्निरूपितं घनात्मकम् । एतद्विवक्षाहेतुस्तु, गम्यः केवलशालिनाम् ॥ ४९ ॥ तथाहुर्दुष्षमाध्वान्तनिमग्नागमदीपकाः । विशेषणवतीग्रन्थे, जिनभद्रगणीश्वराः ॥ ५० ॥ "एयं उभयवेइयंताओ सोलससहस्सुस्सेहस्स कन्नगईए जं लवणसमुद्दाभवं जलसुन्नंपि खित्तं तस्स गणियं, जहा मंदरस्स पव्वयस्स एक्कारसभागहाणी कण्णगइए आगासस्सवि तदाभवंतिकाऊण भणिया तहा लवणसमुद्दस्सवि"

मुखैश्चतुर्मुख इव, द्वारैश्चतुर्भिरेष च । जगत्याऽऽलिङ्गितो भाति, स्थितैर्दिक्षु चतसृषु ॥ ५१ ॥ पूर्वस्यां विजयद्वारं, शीतोदायाः किलोपरि । धातकीखण्डपूर्वार्द्धाद्विशंत्या लवणाम्बुधौ ॥ ५२ ॥ द्वाराणि वैजयन्तादीन्यप्येवं दक्षिणादिषु । सन्त्यस्य दिक्षु तिसृषु, जम्बूद्वीप इव क्रमात् ॥ ५३ ॥ विजयाद्याश्च चत्वारो, द्वारा-

२०

२५

॥२५५॥

२८

धिष्ठायकाः सुराः । ज्ञेयाः प्रागुक्तविजयसदृक्षाः सकलात्मना ॥ ५४ ॥ एतेषां राजधान्योऽपि, स्मृताः सर्वात्मना समाः । राजधान्या विजयया, प्राक्प्रपञ्चितरूपया ॥ ५५ ॥ एताः किंतु स्वस्वदिशि, क्षारोदकभयादिव । असङ्ख्यद्वीपपाथोधीनतीत्य परतः स्थिताः ॥ ५६ ॥ नाम्नैव लवणाम्भोधौ, रुचिरेक्षुरसोदके । योजनानां सहस्राणि, वगाह्य द्वादश स्थिताः ॥ ५७ ॥ सहस्राः पञ्चनवतिस्तिस्रो लक्षाः शतद्वयम् । अशीतियुक् योजनानां, क्रोशो द्वारामिहान्तरम् ॥ ५८ ॥ द्वाराणां परिमाणं च, निःशेषरचनाश्चितम् । जम्बूद्वीपद्वारगतमनुसंधीयतामिह ॥ ५९ ॥

अथास्मिन्नम्बुधौ वेला, वर्द्धते हीयते च यत् । तत्रादिकारणीभूतान्, पातालकलशान् ब्रुवे ॥ ६० ॥ सहस्रान् पञ्चनवतिं, वगाह्य लवणाम्बुधौ । योजनानां स एकैको, मेरोर्दिक्षु चतसृषु ॥ ६१ ॥ एवं च—पातालकुम्भाश्चत्वारो, महालिञ्जरसंस्थिताः । वैरं स्मृत्वाऽब्धिना ग्रस्ता, अगस्त्यस्येव पूर्वजाः ॥ ६२ ॥ वडवामुखनामा प्रागपाक्केयूपसंज्ञितः । प्रतीच्यां यूपनामायमुदीच्यामीश्वराभिधः ॥ ६३ ॥ दाक्षिणात्यकलशस्य बृहत्क्षेत्रसमासवृत्तौ केयूप इति नाम, प्रवचनसारोद्धारवृत्तौ केयूर इति, समवायांगवृत्तौ स्थानांगवृत्तौ च केतुक इति॥ कालो महाकालनामा, वेलम्बश्च प्रभञ्जनः । क्रमादधीश्वरा एषां, पल्यायुषो महर्द्धिकाः ॥ ६४ ॥ समन्ततो वज्रमयात्मनामेषां निरूपिताः । बाहल्यतष्ठिक्करिकाः, सहस्रयोजनोन्मिताः ॥ ६५ ॥ योजनानां सहस्राणि,

१ केऊए इति देश्यशब्देन त्रयाणामप्यवगमनस्य नासंभवः ।

दश मूले मुखेऽपि च । विस्तीर्णा मध्यभागे च, लक्षयोजनसंमिताः ॥ ६६ ॥ एकप्रादेशिकया श्रेण्या मूलाद्विवर्द्धमानाः स्युः । मध्यावधि वक्त्रावधि ततस्तथा हीयमानाश्च ॥ ६७ ॥ ( आर्या ) इति प्रवचनसारोद्धारवृत्तौ, परमेतत्तदोपपद्यते यद्येषां मध्यदेशे दश योजनसहस्राणि यावत् लक्षयोजनविष्कम्भता स्याद्, यतः प्रदेशवृद्ध्या ऊर्द्ध्वं पंचचत्वारिंशद्योजनसहस्रातिक्रम एव उभयतो मूलविष्कम्भाधिकायां पञ्चचत्वारिंशत्सहस्ररूपायां विष्कम्भवृद्धौ सत्यां यथोक्तलक्षयोजनरूपो विष्कम्भः संपद्यते, एवं हानिरपि, सा त्वेषां मध्ये दश योजनसहस्राणि यावल्लक्षयोजनविष्कम्भता काप्युक्ता न दृश्यते, तदत्र तत्त्वं बहुश्रुता विदन्ति । योजनानां लक्षमेकमवगाढा भुवोऽन्तरे । रत्नप्रभामूलभागं, द्रष्टुमुत्कण्ठिता इव ॥ ६८ ॥ लक्षद्वयं योजनानां, सहस्राः सप्तविंशतिः । ससत्याढ्यं शतमेकं, त्रयः क्रोशास्तथोपरि ॥ ६९ ॥ एतत्पातालकलशमुखानामन्तरं मिथः । एतन्मूलविभागानामप्येतावदिहान्तरम् ॥ ७० ॥ उपपत्तिश्चात्र—एषां चतुर्णां वदनविस्तारपरिवर्जिते । पयोधिमध्यपरिधौ, चतुर्भक्ते मुखान्तरम् ॥ ७१ ॥ तथाऽब्धिमध्यपरिधेरेतेषां मध्यविस्तृतौ । शोधितायां चतुर्भक्ते, शेषे स्याज्जठरान्तरम् ॥ ७२ ॥ योजनानां लक्षमेकं, सप्तत्रिंशत्सहस्रयुक् । ससत्याढ्यं शतं क्रोशास्त्रयस्तदिदमीरितम् ॥ ७३ ॥ कल्प्यन्तेंऽशास्त्रयोऽमीषां, स चैकैकः प्रमाणतः । त्रयस्त्रिंशत्सहस्राणि, त्रयस्त्रिंशं शतत्रयम् ॥ ७४ ॥ योजनानां योजनस्य, तृतीयांशेन संयुतम् । अधस्तने तृतीयांशे, तत्र वायुर्विजृ-

१५

२०

॥२५६॥

२५

२६

१ प्रदेशोऽत्र विवक्षितो भागः, एकस्मिन् प्रदेशे जलावगाहाभावात्, तद्वृद्धौ च समप्रमाणाविरोधात्, प्रत्यंशमेव वृद्धिरत्रेत्यर्थकमेतत् ।

म्भते ॥ ७५ ॥ मध्यमे च तृतीयांशे, वायुर्वारि च तिष्ठतः । तृतीये च तृतीयांशे, वर्त्तते केवलं जलम् ॥७६॥ अन्येऽपि लघुपातालकलशा लवणाम्बुधौ । सन्ति तेषामन्तरेषु, क्षुद्रालिञ्जरसंस्थिताः ॥ ७७ ॥ तथोक्तं जीवाभिगमवृत्तौ—"तेषां पातालकलशानामन्तरेषु तत्र तत्र देशे या(तावत्)वत् क्षुद्रालञ्जरसंस्थानाः क्षुल्लाः पातालकलशाः प्रज्ञप्ता" इति, अत्रायं संप्रदायः—जम्बूद्वीपवेदिकान्तादतीत्य लवणाम्बुधौ । सहस्रान् पञ्चनवतिं, तत्रायं परिधिः किल ॥ ७८ ॥ सलक्षद्वयनवतिसहस्रविस्तृतेर्भवेत् । नव लक्षाः ससदश, सहस्राणि च षट्शती ॥ ७९ ॥ अयं भावः—पञ्चनवतिः सहस्राः समुद्रसंबन्धिन एकपार्श्वे, तावन्त एव द्वितीयपार्श्वे, मध्ये चैकं लक्षं जम्बूद्वीपसंबन्धि, एवं द्विलक्षनवतिसहस्रविष्कम्भक्षेत्रस्य परिधिर्नव लक्षाः ससदश सहस्राः षट्शतीत्येवंरूपो भवतीति ॥ चत्वारिंशत्सहस्रात्मा, शोध्यते मुखविस्तृतिः । महापातालकुम्भानामस्माद्राशेस्ततः स्थितम् ॥ ८० ॥ अष्टौ लक्षाः षष्ट्यधिकाः, सहस्राः सप्तसप्ततिः । भागे चतुर्भिरेतेषां, लब्धं तत्रान्तरं भवेत् ॥ ८१ ॥ लक्षद्वयं सहस्राणामेकोनविंशतिस्तथा । सपञ्चषष्टिद्विशती, कुम्भानां महतां पृथक् ॥ ८२ ॥ चतुर्ष्वप्यन्तरेष्वेषु, पङ्क्तयो नव नव स्थिताः । लघुपातालकुम्भानामाद्यपङ्क्तौ च ते स्मृताः ॥ ८३ ॥ प्रत्येकं द्वे शते पञ्चदशोत्तरे किलान्तरम् । पूर्वोक्तं गुरुकुम्भानामेवमेभिश्च पूर्यते ॥ ८४ ॥ एकैकस्योदरव्यासः, सहस्रयोजनात्मकः । ततः शतद्वयं पञ्चदशसहस्रताडितम् ॥ ८५ ॥ सहस्रैः पञ्चदशभिर्युक्तं लक्षत्रयं भवेत् । लघुकुम्भैरियद्रुद्धमेकैकस्यान्तरस्य वै ॥ ८६ ॥ शेषं सहस्राश्चत्वारो, द्विशती पञ्चषष्टियुक् । रुद्धं कथंचित्त-

५

१०

१४

पाताल-
कलशाः

त्पौढकुम्भान्तरमिथोऽन्तरैः ॥ ८७ ॥ परिधेर्वर्द्धमानत्वात्पङ्क्तौ पङ्क्तौ यथोत्तरम् । एकैककलशस्यापि, वृद्धि-
र्वाच्या वचस्विभिः ॥ ८८ ॥ ततः पङ्क्तौ द्वितीयस्यां, द्वे शते षोडशोत्तरे । पङ्क्तौ नवम्यामेवं स्युस्त्रयोविंशं
शतद्वयम् ॥ ८९ ॥ एकसप्तत्युपेतानि, शतान्येकोनविंशतिः । एकैकस्मिन्नन्तरे स्युर्लघवः सर्वसङ्ख्यया ॥ ९० ॥
चतुर्णामन्तराणां च, मिलिताः सर्वसङ्ख्यया । स्फुरच्चतुरशीतीनि, स्युः शतान्यष्टसप्ततिः ॥ ९१ ॥ अयं च
संप्रदायो 'वीरं जयसेहरे' त्यादिक्षेत्रसमासवृत्त्यभिप्रायेण, बृहत्क्षेत्रसमासवृत्तौ जीवाभिगमवृत्त्यादौ त्वयं न
दृश्यते। लघुपातालकलशा, अमी सर्वेऽप्यधिष्ठिताः । सदा महर्द्धिकैर्देवैः, पल्योपमार्द्धजीविभिः ॥ ९२ ॥ अयं
क्षेत्रसमासवृत्त्याद्यभिप्रायः, जीवाभिगमसूत्रवृत्तौ च अर्द्धपल्योपमस्थितिकाभिर्देवताभिः[1] परिगृहीता
इत्युक्तं। शतयोजनविस्तीर्णा, एते मूले मुखेऽपि च । मध्ये सहस्रं विस्तीर्णाः, सहस्रं क्ष्मोदरे स्थिताः ॥ ९३ ॥
दशयोजनबाहल्यवज्रकुड्यमनोरमाः । वायुवायूदकाम्भोभिः, पूर्णत्र्यंशत्रयाः क्रमात् ॥ ९४ ॥ सयोजनतृती-
यांशं, त्रयस्त्रिंशं शतत्रयम् । तृतीयो भाग एकैक, एषां निष्टङ्कितो बुधैः ॥ ९५ ॥ लघवोऽपि महान्तोऽपि,
यावन्मग्ना भुवोन्तरे । उच्चुङ्गास्तावदेव स्युर्भूमीतलसमाननाः ॥ ९६ ॥ एषां पातालकुम्भानां, लघीयसां मही-
यसाम् । मध्यमेऽधस्तने चैवं, त्र्यंशे जगत्स्वभावतः ॥ ९७ ॥ समकालं महावाताः, संमूर्च्छन्ति सहस्रशः ।
क्षुभितैस्तैश्चोपरिस्थं, बहिर्निस्सार्यते जलम् ॥ ९८ ॥ तेन निस्सार्यमाणेन, जलेन क्षुभितोऽम्बुधिः । वेलया

२०
२५
२७

[1] देवताशब्दस्य स्वार्थप्रत्ययान्तत्वेन देवदेव्युभयसाधारणत्वात् ।

व्याकुलात्मा स्यादुद्भ्रमन्निव वातकी ॥९९॥ जगत्स्वाभाव्यत एव, शान्तेषु तेषु वायुषु । पुनः पातालकुम्भानां,
जलं स्वस्थानमाश्रयेत् ॥ १०० ॥ जलेषु तेषु स्वस्थानं, प्राप्तेषु सुस्थितोदकः । स्वास्थ्यमापद्यतेऽम्भोधिर्वातकीव
कृतौषधः ॥ १ ॥ मूर्च्छन्ति द्विरहोरात्रे, वाताः स्वस्थीभवन्ति च । ततो द्विः प्रत्यहोरात्रं, वर्द्धते हीयते-
ऽम्बुधिः ॥ २ ॥ तथाह जीवाभिगमः-"लवणे णं भंते ! समुद्दे तीसाए मुहुत्ताणं कइखुत्तो अइरेगं वड्ढइ वा
हायइ वा ?, गो० ! दुक्खुत्तो अइरेगं वड्ढइ वा हायइ वा" राकादर्शादितिथिषु, चातिरेकेण तेऽनिलाः । क्षोभं
प्रयान्ति मूर्च्छन्ति, तथा जगत्स्वभावतः ॥ ३ ॥ ततश्च पूर्णिमाऽमादितिथिष्वतितमामयम् । वेलया वर्द्धते
वार्द्धिर्दशम्यादिषु नो तथा ॥ ४ ॥ लोकप्रथानुसारेण त्वेवमवोचं-"यथा यथेन्दोर्निजनन्दनस्य, कालक्रमप्रा-
सकलाकलस्य । आश्लिष्यतेऽब्धिर्मृदुभिः करार्ग्रैस्तथा तथोद्वेलमुपैति वृद्धिम् ॥ ५ ॥ दर्शे त्वपश्यन्नतिदर्श-
नीयं, निजाङ्गजं शीतकरं पयोधिः । विवृद्धवेलावलयच्छलेन, दुःखाग्नितप्तो भुवि लोलुठीति ॥ ६ ॥" योजना-
नामुभयतो, विमुच्य लवणाम्बुधौ । सहस्रान् पञ्चनवतिं, मध्यदेशे शिखैधते ॥ ७ ॥ योजनानां सहस्राणि,
दशेयं पृथुलाऽभितः । चकास्ति वलयाकारा, जलभित्तिरिव स्थिरा ॥ ८ ॥ सहस्राणि, षोडशोच्चा, समभूमिस-
मोदकात् । योजनानां सहस्रं च, तत्रोद्वेधेन वारिधिः ॥ ९ ॥ शिखामिषाद्दधद्योगपट्टं योगीव वारिधिः ।
ध्यायतीव परब्रह्म, जन्मजाड्योपशान्तये ॥ १० ॥ सुभगंकरणीं यद्वा, हारिहारलतामिमाम् । श्यामोऽपि सुभ-
गत्वेच्छुर्दधौ वार्द्धिः शिखोपधेः ॥ ११ ॥ जम्बूद्वीपोपाश्रयस्थान्, मुनीनुत निनंसिषुः । कृतोत्तरासङ्गसङ्गः,

५

१०

१४

शिखावलयकैतवात् ॥ १२ ॥ पूर्णकुक्षि भृशं रत्नैरुन्मदिष्णुतयाऽथवा । पट्टबद्धोदर इव, विद्याद्दसकुवादिवत् ॥ १३ ॥ भाति भूयोऽब्धिभूपालवृतो दैवतसेवितः । शिखामिषात्तमुकुटो, दधद्वा वार्द्धिचक्रिताम् ॥ १४ ॥ त्रिभिर्विशेषकं ॥ पातालकुम्भसंमूर्च्छद्वायुविक्षोभयोगतः । उपर्यस्याः शिखायाश्च, देशोनमर्द्धयोजनम् ॥१५॥ द्वौ वारौ प्रत्यहोरात्रमुदकं वर्द्धतेतराम् । तत्प्रशान्तौ शाम्यति च, भवेद्वेलेयमूर्द्धगा ॥ १६ ॥ तां च वेलामुच्छलन्तीं, दर्व्यग्रकराः सुराः । शमयन्ति सदा नागकुमारा जगतः स्थितेः ॥ १७ ॥ तत्र जम्बूद्वीपदिशि, शिखावेलां प्रसृत्वरीम् । द्विचत्वारिंशत्सहस्रा, धरन्ति नागनाकिनः ॥ १८ ॥ धातकीखण्डदिशि च, प्रसर्पन्तीमिमां किल । निवारयन्ति नागानां, सहस्राणि द्विसप्ततिः ॥ १९ ॥ देशोनं योजनार्द्धं यद्वर्द्धतेऽम्बु शिखोपरि । षष्टिर्नागसहस्राणि, सततं वारयन्ति तत् ॥ २० ॥ लक्षमेकं सहस्राणि, चतुःसप्ततिरेव च । वेलन्धरा नागदेवा, भवन्ति सर्वसंख्यया ॥ २१ ॥ एषामुपक्रमेणैव, निरुद्धा नावतिष्ठते । वेलेयं चपलाऽतीव, महेलेव रसाकुला ॥ २२ ॥ किंतु द्वीपस्थसंघार्हद्देवचक्र्यादियुग्मिनाम् । पुण्याज्जगत्स्वभावाच्च, मर्यादां न जहाति सा ॥ २३ ॥ इदं जीवाभिगमसूत्रवृत्त्यभिप्रायेण, पञ्चमाङ्गे तद्वृत्तौ च–'जया णं दीविच्चया ईसिं णो णं तया सामुद्दया ईसिं, जया णं सामुद्दया ईसिं णो णं तया दीविच्चया ईसिं ?, गो०! तेसिं णं वायाणं अन्नमन्नविवच्चासेणं लवणसमुद्दे वेलं नातिक्कमइ," "अन्योऽन्यव्यत्यासेन" यदेके ईषत् पुरोवातादिविशेषणा वान्ति तदेतरे न तथा-

विधा वान्तीत्यर्थः। 'वेलं नाइक्कमइ'त्ति तथाविधवायुद्रव्यसामर्थ्याद्वेलायास्तथास्वभावत्वाचे"त्युक्तं; अत्र ईसिं पुरोवातादीनि विशेषणानि त्वेवं-'ईसिं पुरोवाय'त्ति मनाक् सत्रेहवाताः 'पच्छा वाय'त्ति पथ्या वनस्पत्यादिहिता वायवः 'मंदा वाय'त्ति मन्दाः-शनैः शनैः संचारिणः, अमहावाता इत्यर्थः 'महावाय'त्ति उद्दण्डा वाताः, अनल्पा इत्यर्थः। वेलन्धराणामेतेषां, भवन्त्यावासपर्वताः। अस्मिन्नेवाम्बुधौ पूर्वादिषु दिक्षु चतसृषु ॥ २४ ॥ तथाहि-जम्बूद्वीपवेदिकान्तात्पूर्वस्यां दिशि वारिधौ। गोस्तूपः पर्वतो भाति, वेलन्धरसुराश्रयः ॥ २५ ॥ नानाजलाशयोद्भूतैः, शतपत्रादिभिर्यतः। गोस्तूपाकृतिभी रम्यो, गोस्तूपोऽयं गिरिस्ततः ॥ २६ ॥ जलं यद्भासयत्यष्टयोजनीं परितोऽंशुभिः। ततो नाम्नोदकभासोऽपाच्यां वेलन्धराचलः ॥ २७ ॥ पश्चिमायां शङ्खनामा, नगः सोऽप्यन्विताभिधः। शङ्खाभैः शतपत्राद्यैर्जलाश्रयोद्भवैर्लसन् ॥ २८ ॥ उत्तरस्यां दिशि वेलन्धरावासधराधरः। दकसीमाभिधः शीताशीतोदोदकसीमकृत् ॥ २९ ॥ शीताशीतोदयोर्नद्योः, श्रोतांसीह धराधरे। प्रतिघातं प्राप्नुवन्ति, दकसीमाभिधस्ततः ॥ ३० ॥ एवं च शीताशीतोदे, पूर्वपश्चिमयोर्दिशोः। प्रविश्य वारिधौ याते, उदीच्यामिति निश्चयः ॥ ३१ ॥ गोस्तूपे गोस्तूपसुरो, दकभासगिरौ शिवः।

१ वातानां तथा वाते जगत्स्वभाववत् द्वीपस्थसद्मादिकारणतायां का हानिः, तत्कृतश्च वेलोपगमाभावः, प्रतिकूलवातेन वेगेन वेलाया आगमः स्यात्, शनैरागमस्तु द्वीपस्थसद्मादिभावकृत एव, तत्त्वतः सकलेष्टप्राप्त्यनिष्टसमागमाभावस्यादृष्टकृतता। २ पूर्वतो महाप्रवाहागमे [illegible]वगाविषु स्यादेव प्रवृत्तिः, तथा च दकसीमाभिधानस्य सार्थकता,।

शङ्खे शङ्खो दकसीमपर्वते च मनःशिलः ॥ ३२ ॥ सामानिकसहस्राणां, चतुर्णां च चतसृणाम् । पट्टाभिषिक्त-
देवीनां, तिसृणामपि पर्षदाम् ॥ ३३ ॥ सैन्यानां सैन्यनाथानां, सप्तानामप्यधीश्वराः । आत्मरक्षिसहस्रैश्च,
सेव्याः षोडशभिः सदा ॥ ३४ ॥ स्वस्वावासपर्वतानामाधिपत्यममी सदा । पालयन्ति पूर्वजन्मार्जितपुण्या-
नुसारतः ॥ ३५ ॥ त्रिभिर्विशेषकं । आज्ञाप्रतीच्छका एषां, सन्त्येतदनुयायिनः । अनुवेलन्धरास्तेषां, विदि-
क्ष्वावासपर्वताः ॥ ३६ ॥ कर्कोटकाद्रिरैशान्यां, विद्युत्प्रभोऽग्निकोणके । कैलाशो वायवीयायां, नैर्ऋत्यामरुण-
प्रभः ॥ ३७ ॥ कर्कोटकः कर्दमकः, कैलाशश्चारुणप्रभः । एषां चतुर्णामद्रीणामीशा गोस्तूपसश्रियः ॥ ३८ ॥
यथास्वमेषामष्टानां, रम्या दिक्षु विदिक्षु च । राजधान्यः स्वस्वनाम्ना, परस्मिन् लवणार्णवे ॥ ३९ ॥ असङ्ख्ये-
यान् द्वीपवार्द्धीनतीत्य परतः स्थिते । योजनानां सहस्राणि, वगाह्य द्वादश स्थिताः ॥ ४० ॥ जम्बूद्वीपवेदि-
कान्तादष्टापि स्वस्वदिक्ष्वमी । द्विचत्वारिंशत्सहस्रयोजनातिक्रमेऽद्रयः ॥ ४१ ॥ सुवर्णाङ्करत्नरूप्यस्फटिकैर्य-
दिताः क्रमात् । दिश्याश्चत्वारोऽपि शैलाः, सर्वे विदिक्षु रत्नजाः ॥ ४२ ॥ अष्टाप्यमी योजनानां, सहस्रं सप्त-
भिः शतैः । एकविंशैः समधिकमुच्चुङ्गत्वेन वर्णिताः ॥ ४३ ॥ चतुःशतीं योजनानां, त्रिंशां क्रोशाधिकाममी ।
वसुधान्तर्गताः पद्मवेदिकावनमण्डिताः ॥ ४४ ॥ मूले सहस्रं द्वाविंशं, सर्वेऽपि विस्तृता अमी । त्रयोविंशानि
मध्ये च, शतानि सप्त विस्तृताः ॥ ४५ ॥ योजनानां चतुर्विंशां, चतुःशतीमुपर्यमी । विस्तृताः सर्वतो व्यास-
ज्ञानोपायोऽथ तन्यते ॥ ४६ ॥ योजनादिषु यावत्सूत्तीर्णेषु शिखराग्रतः । वेलन्धरपर्वतानां, विष्कम्भो ज्ञातु-

वेलन्धरावासाः

१५

२०



२५

मिष्यते ॥४७॥ अतिक्रान्तयोजनादिरूपं तं राशिमञ्जसा । अष्टानवत्याऽभ्यधिकैर्गुणयेः पञ्चभिः शतैः ॥४८॥ जातं चैतेषां गिरीणामुच्छ्रयेण विभाजय । यल्लब्धं तच्चतुर्विंशचतुःशतयुतं कुरु ॥ ४९ ॥ कृते चैवं तत्र तत्र, विष्कम्भोऽभीप्सितास्पदे । वेलन्धराद्रिषु ज्ञेयो, दृष्टान्तः श्रूयतामिह ॥ ५० ॥ सषष्टीनि शतान्यष्ट, द्वौ क्रोशौ च शिरोऽग्रतः । अतीत्य व्यासजिज्ञासा, चेदिदं गुणयेत्तदा ॥ ५१ ॥ अष्टानवत्याढ्यपञ्चशत्यैवं पञ्च लक्षकाः । सहस्राः द्विः सप्त पञ्चशती सैकोनसप्ततिः ॥ ५२ ॥ जातास्ते च हृताः सप्तदशशत्यैकविंशया । शतद्वयीं नवनवत्यधिकां ध्रुवमार्पयत् ॥ ५३ ॥ ततश्च सा चतुर्विंशैः, शतैश्चतुर्भिरन्विता । त्रयोविंशा सप्तशती, जातेयं तत्र विस्तृतिः ॥ ५४ ॥ मध्यव्यासोऽयमेवैषां, सर्वत्रैवं विभाव्यताम् । स्यादुपायान्तरमेतन्मध्यविष्कम्भनिश्चये ॥ ५५ ॥ मूले मध्ये च विष्कम्भौ, यौ तद्योगेऽर्द्धिते सति । सर्वत्र मध्यविष्कम्भो, लभ्योऽत्र भाव्यतां स्वयम् ॥ ५६ ॥ एषां वेलन्धराद्रीणां, मूलांशे परिधिं जिनाः । जगुः शतानि द्वात्रिंशत्, सह द्वात्रिंशतोनया ॥ ५७ ॥ मध्ये सषडशीतीनि, द्वाविंशतिः शतानि च । किञ्चित्सप्ततिरेकाणि, परिक्षेपो निरूपितः ॥ ५८ ॥ उपरि स्यात्परिक्षेपः, शतान्येषां त्रयोदश । किञ्चिदूनैकचत्वारिंशता युक्तानि भूभृताम् ॥ ५९ ॥ द्विसप्ततिः सहस्राणि, शतमेकं चतुर्दशम् । योजनानामष्टभक्तयोजनस्य लवास्त्रयः ॥ ६० ॥ अष्टानामेतदेतेषां, मूलभागे मिथोऽन्तरम् । वेलन्धरसुराद्रीणां, प्रत्ययश्चात्र दृश्यते ॥ ६१ ॥ मध्यभागे यदेतेषामन्तरं ज्ञातुमिष्यते । एकादशा पञ्चशत्येतदर्धगा तदन्विता ॥ ६२ ॥ द्विचत्वारिंशत्सहस्रैर्वार्द्धिगैरेकतो यथा । क्रियते परतोऽप्ये-

५

१०

१४

वमित्येतद् द्विगुणीकुरु ॥ ६३ ॥ पञ्चाशीतिः सहस्राणि, द्वाविंशान्यभवन्निह । मध्यस्थजम्बूद्वीपस्य, लक्षमेकं तु मील्यते ॥ ६४ ॥ एतेषां परिधिः पञ्च, लक्षा योजनसङ्ख्यया । पञ्चाशीतिः सहस्राणि, तथैकनवतिः परा ॥ ६५ ॥ अष्टानामप्यथाद्रीणां, व्यासोऽस्मादपनीयते । षट्सप्तत्याढ्यशतयुक्सहस्राष्टक ( ८१७६ ) संमितः ॥ ६६ ॥ अपनीतेऽस्मिंश्च पूर्वराशिरीदृग्विधः स्थितः । पञ्च लक्षाः सहस्राणि, षट्सप्ततिस्तथोपरि ॥ ६७ ॥ नव पञ्चदशाढ्यानि, शतान्येषामथाष्टभिः । भागे हृते लभ्यते यत्तदद्रीणां मिथोऽन्तरम् ॥ ६८ ॥ एषां समीपेऽम्बुवृद्धिर्जम्बूद्वीपदिशि स्फुटम् । समभूतलतुल्याम्भोऽपेक्षयोर्द्ध्वं पयोनिधौ ॥ ६९ ॥ नवोत्तरं योजनानां, शतत्रयं तथोपरि । पञ्चचत्वारिंशदंशाः, पञ्चोनशतभाजिताः ॥ ७० ॥ निश्चयः पुनरेतस्य, त्रैराशिकात्प्रतीयते । व्युत्पित्सूनां प्रमोदाय, तदप्यातत्य दर्श्यते ॥ ७१ ॥ यदि पञ्चसहस्रोनलक्षेण वर्द्धते जलम् । योजनानां सप्तशती, तदा तद्वर्द्धते कियत् ॥ ७२ ॥ द्विचत्वारिंशत्सहस्रैरिति राशित्रयं लिखेत् । (९५०००–७००–४२०००) आद्यन्तयोस्तत्र राश्योः, कार्यं शून्यापवर्त्तनम् ॥ ७३ ॥ एतयोर्हि द्वयो राश्योः, साजात्यादपवर्त्तनम् । घटते लाघवार्थं च, क्रियते गणकैरिदम् ॥ ७४ ॥ मध्यराशिः सप्तशती, द्विचत्वारिंशदात्मना । अन्त्येन राशिना गुण्यस्तथा चैवंविधो भवेत् ॥ ७५ ॥ नूनं सहस्राण्येकोनत्रिंशत्पूर्णा चतुःशती । ततः पञ्चनवत्याऽयं, भाज्यः प्रथमराशिना ॥ ७६ ॥ भागे हृते च यल्लब्धं, पानीयं तावदुच्छ्रितम् । जम्बूद्वीपदिश्यमीषां, समीपे तत्पुरोदितम् ॥ ७७ ॥ जम्बूद्वीपस्य दिश्येषां, गिरीणामन्तिके पुनः । गोतीर्थेन धरोद्वेधः, स्यात्समोर्व्यपेक्षया

वेलन्धराद्रयः

२०

२५

॥ २६० ॥

२८

॥ ७८ ॥ द्विचत्वारिंशदधिका, योजनानां चतुःशती । दश पञ्चनवत्यंशास्त्रैराशिकात्तु निश्चयः ॥ ७९ ॥ ननु पञ्चसहस्रोनलक्षान्ते यदि लभ्यते । भुवोऽवगाहः सहस्रस्तदाऽसौ लभ्यते कियान् ॥ ८० ॥ द्विचत्वारिंशत्सहस्रपर्यन्त इति लिख्यते । राशित्रयं कार्यमाद्यान्त्ययोः शून्यापवर्त्तनम् ॥ ८१ ॥ (९५–१०००–४२) मध्यराशिः सहस्रात्मा, द्विचत्वारिंशदात्मना । हतोऽन्त्येन द्विचत्वारिंशत्सहस्राणि जज्ञिरे ॥ ८२ ॥ आद्येन पञ्चनवतिलक्षणेनाथ राशिना । भागे हृते लभ्यतेऽयमवगाहो यथोदितः ॥ ८३ ॥ योऽयं भूमेरवगाहो, यश्च प्रोक्तो जलोच्छ्रयः । एतद् द्वयं पर्वतानामुच्छ्रयादपनीयते ॥ ८४ ॥ अपनीतेऽवशिष्टं यत्तावन्मात्रो जलोपरि । जम्बूद्वीपदिश्यमीषां, गिरीणामयमुच्छ्रयः ॥ ८५ ॥ योजनानां नवशती, सैकोनसप्ततिस्तथा । चत्वारिंशद्योजनस्य, पञ्चोनशतजा लवाः ॥ ८६ ॥ अत्र चासर्गसंपूर्त्तिं, यत्र क्वाप्यविशेषतः । वक्ष्यंतेऽंशा अमी सर्वे, पञ्चोनशतभाजिताः ॥ ८७ ॥ शिखराग्राद्थैतावदुत्तीर्य यदि चिन्त्यते । अत्र प्रदेशे विष्कम्भो, ज्ञेयोऽमीषामयं तदा ॥ ८८ ॥ षष्ट्याढ्यानि योजनानां, शतानि सप्त चोपरि । अशीतिर्योजनस्यांशाः, पञ्चोनशतसंभवाः ॥ ८९ ॥ जम्बूद्वीपदिशि तिर्यक्क्षेत्रेणेयता च, जलवृद्धिरवाप्यते । किञ्चिदूनाष्टपञ्चाशदंशाढ्या पञ्चयोजनी ॥ ९० ॥ स चायं–योजनानां प्रोक्तात्, पर्वतानां समुच्छ्रयात् । स्यादस्यामपनीतायां, शिखादिशि नगोच्छ्रयः ॥ ९१ ॥ योजनानां पञ्चदनवशती, त्रिषष्ट्याऽभ्यधिका किल । सप्तसप्ततिरंशाश्च, तथाऽत्र स्याज्जलोच्छ्रयः ॥ ९२ ॥ योजनानां पञ्चद-

शाः, शतास्त्रयोऽष्ट चांशकाः । चतुःशती च पञ्चाशा, दशांशाश्च धरोण्डता ॥ ९३ ॥ एवं वेलन्धरावासपर्वतानां यथामति । स्वरूपं दर्शितं किञ्चिज्जीवाभिगमवर्णितम् ॥ ९४ ॥

सुमेरुतः पश्चिमायां, जम्बूद्वीपान्त्यभूमितः । सहस्रान् द्वादशातीत्य, लवणाम्भोनिधाविह ॥ ९५ ॥ योजनानां सहस्राणि, द्वादशायतविस्तृतः । शोभते गौतमद्वीपः, स्थानं सुस्थितनाकिनः ॥ ९६ ॥ ससत्रिंशत्सहस्राणि, योजनानां शतानि च । नवाष्टचत्वारिंशानि, द्वीपेऽस्मिन् परिधिर्भवेत् ॥ ९७ ॥ द्वे गव्यूते जलादूर्ध्वमुच्छ्रितोऽब्धिशिखादिशि । अन्तेऽस्यास्मिन्नम्बुवृद्धिस्त्रैराशिकात्प्रतीयते ॥ ९८ ॥ तथाहि—सहस्रेषु द्वादशसु, द्वीपोऽयं तावदाततः । चतुर्विंशतिरित्येवं, सहस्रा वारिधेर्गताः ॥ ९९ ॥ ततश्च—सहस्रपञ्चनवतिपर्यन्ते यदि लभ्यते । जलवृद्धिर्योजनानां, शतानि सप्त निश्चिता ॥ २०० ॥ चतुर्विंशत्या सहस्रैः, कियतीयं तदाप्यते । (९५०००–७००–२४०००) राशित्रयेऽन्त्याद्ययोश्च, कार्यं शून्यापवर्त्तनम् (९५–७००–२४) ॥१॥ मध्यराशिः सप्तशती, गुणितोऽन्त्येन राशिना । चतुर्विंशतिरूपेण, सहस्राः षोडशाभवन् ॥ २ ॥ ततश्च पञ्चनवतिरूपेणान्त्येन राशिना । विभज्यते ततो लब्धं, षट्ससत्यधिकं शतम् ॥३॥ अशीतिः पञ्चनवतिभागाश्चैतावती किल । गौतमद्वीपपर्यन्ते, जलवृद्धिः शिखादिशि ॥ ४ ॥ जम्बूद्वीपदिश्यमुष्य, राशेरर्द्धं जलोच्छ्रयः । युक्तश्चैष सहस्राणां, द्वादशानामतिक्रमे ॥ ५ ॥ ततः पूर्वोक्तस्य राशेरर्द्धं यदिदमास्थितम् । अष्टाशीतिर्योजनानि, चत्वारिंशत्तथा लवाः ॥ ६ ॥ इयान् जम्बूद्वीपदिशि, द्वीपस्यास्योच्छ्रयो जलात् । शिखादिगुदितद्वीपोच्छ्रयः



१५

२०

२५



२७

क्रोशद्वयाधिकः ॥ ७ ॥ त्रिंशत्पञ्चनवत्यंशाः, षड्विंशा शतयोजनी । भूनिम्नताऽस्मिन् पर्यन्ते, द्विगुणा च शिखादिशि ॥ ८ ॥ एवं च—मूलादुच्चो द्वीपदिशि, चतुर्दशं शतद्वयम् । क्रोशद्वयाधिकं पञ्चनवत्यंशाश्च सप्ततिः ॥ ९ ॥ चतुःशती योजनानामेकोनत्रिंशताऽधिका । पञ्चचत्वारिंशदंशा, द्वौ क्रोशौ च शिखादिशि ॥ १० ॥ वनाढ्यया पद्मवेद्या, द्वीपोऽयं शोभतेऽभितः । नीलरत्नालियुग्मुक्तामण्डलेनेव कुण्डलम् ॥ ११ ॥

द्वीपस्य मध्यभागेऽस्य, रत्नस्तम्भशताञ्चितम् । भौमेयमस्ति भवनं, क्रीडावासाभिधं शुभम् ॥ १२ ॥ द्वाषष्टिं योजनान्येतद्, द्वौ क्रोशौ च समुच्छ्रितम् । योजनान्येकत्रिंशतं, क्रोशाधिकानि विस्तृतम् ॥ १३ ॥ एतस्यावसथस्यान्तर्भूमिभागे मनोरमे । मध्यदेशे महत्येका, शोभते मणिपीठिका ॥ १४ ॥ योजनायामविष्कम्भा, योजनार्द्धं च मेदुरा । उपर्यस्याः शयनीयं, भोग्यं सुस्थितनाकिनः ॥ १५ ॥ सुस्थितः सुस्थिताभिख्यो, लवणोदधिनायकः । चतुःसामानिकसुरसहस्राराधितक्रमः ॥ १६ ॥ परिवारयुजां चारुचां चतसृणां सदा । पट्टाभिषिक्तदेवीनां, तिसृणामपि पर्षदाम् ॥ १७ ॥ सप्तानां सैन्यसेनान्यामात्मरक्षकनाकिनाम् । षोडशानां सहस्राणामन्येषामपि भूयसाम् ॥ १८ ॥ सुस्थिताख्यराजधानीवास्तव्यानां सुधाभुजाम् । भुङ्क्ते स्वाम्यं तत्र भूरिसुराराधितशासनः ॥ १९ ॥ चतुर्भिः कलापकं ॥ रत्नद्वीपादिपतयो, लवणाम्भोधिवासिनः । देव्यो देवाश्च ते सर्वेऽप्यस्यैव वशवर्त्तिनः ॥ २० ॥ राजधानी सुस्थितस्य, लवणाधिपतेः किल । प्रतीच्यां गौतमद्वीपादसङ्ख्यद्वीपवारिधीन् ॥ २१ ॥ अतीत्य तिर्यगन्यस्मिंल्लवणाम्भोनिधौ भवेत् । योजनानां सहस्रैर्द्वा-

५

१०

१४

दशाभिर्विजयोपमा ॥ २२ ॥ जम्बूद्वीपवेदिकान्तात्, प्रतीच्यामेव मेरुतः । योजनानां सहस्राणि, द्वादशातीत्य वारिधौ ॥ २३ ॥ स्युश्चत्वारो रविद्वीपा, द्वौ जम्बूद्वीपचारिणोः । भान्वोर्द्वौ चार्वाक् शिखाया, लवणाम्बुधिचारिणोः ॥२४॥ मेरोः प्राच्यां दिशि जम्बूद्वीपस्य वेदिकान्ततः । स्युर्योजनसहस्राणां, द्वादशानामनन्तरम् ॥२५॥ चत्वारोऽत्र शशिद्वीपा, द्वौ जम्बूद्वीपचारिणोः । इन्द्वोर्द्वौ चार्वाक् शिखाया, लवणोदधिचारिणोः ॥ २६ ॥ तथैव धातकीखण्डवेदिकान्तादतिक्रमे । स्युर्योजनसहस्राणां, द्वादशानामिहाम्बुधौ ॥ २७ ॥ जम्बूद्वीपस्थायिमेरोः, प्रतीच्यां दिशि निश्चितम् । अष्टौ दिनकरद्वीपा, दीपा इव महारुचः ॥ २८ ॥ युग्मम् ॥ बहिःशिखायाश्चरतोर्द्वौ द्वीपावर्कयोर्द्वयोः । षट् षण्णां धातकीखण्डार्वाचीनार्द्धप्रकाशिनाम् ॥ २९ ॥ तथैव धातकीखण्डवेदिकान्तादनन्तरम् । योजनानां सहस्रेषु, गतेषु द्वादशस्विह ॥ ३० ॥ प्राच्यां जम्बूद्वीपमेरोः, सन्त्यष्टौ लवणोदधौ । शशिद्वीपास्तत्र च द्वौ, शिखायाश्चरतोर्बहिः ॥ ३१ ॥ षडन्ये धातकीखण्डार्वाक्तनार्द्धप्रचारिणाम् । षण्णां हिमरुचामेवमेते सर्वेऽपि संख्यया ॥ ३२ ॥ स्युश्चतुर्विंशतिश्चन्द्रसूर्यद्वीपाः समेऽप्यमी । गौतमद्वीपसदृशा, मानतश्च स्वरूपतः ॥ ३३ ॥ जलोच्छ्रयावगाहादि, सर्वं ततोऽविशेषितम् । गौतमद्वीपवद्वाच्यं, सर्वेषामपि सर्वथा ॥ ३४ ॥ किंतु तत्रास्ति भौमेयमेषु प्रासादशेखरः । वाच्यः प्रत्येकमेकैको, भौमेयसममानकः ॥ ३५ ॥ प्रतिप्रासादमेकैकं, सिंहासनमनुत्तरम् । तेषु चन्द्राश्च सूर्याश्च, प्रभुत्वमुपभुञ्जते ॥ ३६ ॥ सुस्थितामरवत्सैन्याः, सामानिकादिभिः सुरैः । वर्षलक्षसहस्राढ्यपल्योपमायुषः क्रमात् ॥ ३७ ॥ एतेषां राजधा-

भौमेयं रविशशिद्वीपाश्च

२०

२५



२८

न्योऽपि, स्वस्वदिक्षु मनोरमाः । स्युः सुस्थितपुरीतुल्याः, परस्मिंल्लवणार्णवे ॥ ३८ ॥ ये तु सन्त्यन्तरद्वीपाः, षट्पञ्चाशदिहाम्बुधौ । निरूपितास्ते हिमवद्गिरिप्रकरणे मया ॥ ३९ ॥

एवमेकाशीतिरस्मिन्, द्वीपा लवणवारिधौ । वेलन्धराचलाश्चाष्टौ, दृष्टा दृष्टागमाब्धिभिः ॥ ४० ॥ महापातालकलशाश्चत्वारो लघवश्च ते । सहस्राः सप्तचतुरशीतिश्चाष्टौ शतानि च ॥ ४१ ॥ रत्नद्वीपादयो येऽन्ये, श्रूयन्तेऽम्भोनिधाविह । द्वीपास्ते प्रतिपत्तव्याः, प्राप्तरूपैर्यथागमम् ॥ ४२॥ सुधांशवोऽस्मिंश्चत्वारश्चत्वारोऽर्काश्च तोयधौ । संचरन्ति समश्रेण्या, जम्बूद्वीपेन्दुभानुभिः ॥ ४३ ॥ यदा जम्बूद्वीपगतश्चारं चरति भानुमान् । एको मेरोर्दक्षिणस्यां, तदाऽस्मिन्नम्बुधावपि ॥ ४४ ॥ तेन जम्बूद्वीपगेन, समश्रेण्या व्यवस्थितौ । दक्षिणस्यामेव मेरोर्द्वौ चारं चरतो रवी ॥ ४५ ॥ एकस्तत्रार्वाक् शिखायाः, समश्रेण्या सहामुना । शिखायाः परतोऽन्योऽब्धावुक्षेव युगयन्त्रितः ॥ ४६ ॥ एवमुत्तरतो मेरोर्यो जम्बूद्वीपगो रविः । द्वौ पुनस्तत्समश्रेण्या, चरतोऽर्काविहाम्बुधौ ॥ ४७॥ तदा च चरतोर्जम्बूद्वीपे पीयूषरोचिषोः । मेरोः प्राच्यां प्रतीच्यां च, समश्रेण्याऽम्बुधावपि ॥ ४८ ॥ द्वौ द्वौ शशाङ्कौ चरतः, पूर्वपश्चिमयोर्दिशोः । अर्वाक् शिखाया एकैक, एकैकः परतोऽपि च ॥ ४९ ॥ एवं रवीन्दवो येऽग्रे, सन्ति मर्त्त्योत्तरावधि । जम्बूद्वीपपुष्पदन्तसमश्रेण्या चरन्ति ते ॥ ५० ॥ यथोत्तरं यदधिकाधिकक्षेत्राक्रमेऽपि ते । पर्याप्नुवन्ति सह तद्गत्याधिक्यं यथोत्तरम् ॥ ५१ ॥ दृश्यते भ्रमतां श्रेण्या, मेढीमनु गवामिह । अर्वाचीनापेक्षयाऽन्यगत्याधिक्यं यथोत्तरम् ॥ ५२ ॥ एवं सर्वेऽनुवर्त्तन्ते, जम्बूद्वीपेन्दुभास्कराः ।

मण्डलान्तरसंचारायनाहर्वृद्धिहानिभिः ॥ ५३ ॥ ततो जम्बूद्वीप इव, मर्त्योत्तराचलावधि । यदाऽहर्मेरुतोऽपाच्यां, तदैवोत्तरतोऽप्यहः ॥ ५४ ॥ सहैवैवं निशा मेरोः, पूर्वपश्चिमयोर्दिशोः । एवं जम्बूद्वीपरीतिः, सर्वत्राप्यनुवर्त्तते ॥ ५५॥ उक्तं च सूर्यप्रज्ञप्तौ—'जया णं लवणसमुद्दे दाहिणड्ढे दिवसे भवति तया णं उत्तरड्ढेवि दिवसे भवति, तया णं लवणसमुद्दे पुरिमपच्चत्थिमे राई भवइ, एवं जहा जंबुद्दीवे दीवे तहेव" एवं धातकीखण्डकालोदपुष्कराद्र्धसूत्राण्यपि ज्ञेयानि । नन्वत्र षोडशसहस्रोच्चया शिखयाऽम्बुधौ । ज्योतिष्काणां संचरतां, व्याघातो न गतेः कथम्? ॥५६॥ ब्रूमोऽत्र ये ज्योतिषिकविमाना लवणाम्बुधौ । ते भिन्दन्तः संचरन्ति, जलस्फटिकजा जलम् ॥५७॥ तदेतेषां जलकृतो, व्याघातो न गतेर्भवेत् । जलस्फटिकरत्नं हि, स्वभावाज्जलभेदकृत् ॥५८॥ ऊर्द्ध्वलेश्याकास्तथैते, विमाना लवणोदधौ । ततः शिखायामप्येषां, प्रकाशः प्रथतेऽभितः ॥ ५९ ॥ सामान्यस्फटिकोत्थानि, शेषेषु द्वीपवार्द्धिषु । ज्योतिष्काणां विमानानि, नीचैःसर्पन्महांसि च ॥ ६० ॥ तथाह विशेषणवती—"सोलससाहस्सियाए सिहाए कहं जोइसियविघातो न भवति ?, तत्थ भन्नइ, जेणं सूरपण्णत्तीए भणियं—"जोइसियविमाणाइं सव्वाइं हवंति फालियमयाइं । दगफालियामया पुण लवणे जे जोइसविमाणा ॥ १ ॥" जं सव्वदीवसमुद्देसु फालियामयाइं लवणसमुद्दे चेव केवलं दगफालियामयाइं तत्थेदमेव कारणं—मा उदएण विघाओ भवउत्ति, जं सूरपण्णत्तीए चेव भणियं—लवणंतो ( णे जे ) जोइसिया उद्धलेसा भवंति णायव्वा ।

१—२ यद्यप्यत्र सामान्येन सूर्यप्रज्ञप्तिनाम्ना गाथाद्वयमेतत् संमततया दर्शितं परमेतत् सूर्यप्रज्ञप्तिनिर्युक्तिगतं ज्ञेयं, यतः 'अद्धकविट्ठे-ति'गाथावृत्तौ श्रीदेवभद्रा यत् सूर्यप्रज्ञप्तिनिर्युक्तिः—'जोइसियविमाणाई'त्याद्युदितवन्तः ।

रविशशिनां समचारिता

२८

२५



२७

तेणं परं जोइसिया अहलेसागा ( मु ) णेयवा ॥ १ ॥ तंपि उद्गमालावभासणत्थमेव, लोगठिई एसत्ति"
एवं चत्वारोऽत्र सूर्याश्चत्वारश्च सुधांशवः । नक्षत्राणां शतमेकं, प्रज्ञप्तं द्वादशोत्तरम् ॥ ६१ ॥ द्विपञ्चाशत्स-
मधिकं, ग्रहाणां च शतत्रयम् । प्रमाणमथ ताराणां, यथाऽऽम्नायं निरूप्यते ॥ ६२ ॥ द्वे लक्षे ससषष्टिश्च, सह-
स्राणि शतानि च । नवैव कोटाकोटीनां, प्रोक्तानि तत्त्ववेदिभिः ॥ ६३ ॥ अत्रायमाम्नायः—यत्र द्वीपे समुद्रे
वा, प्रमाणं ज्ञातुमिष्यते । ग्रहनक्षत्रताराणां, तत्रत्यचन्द्रसङ्ख्यया ॥ ६४ ॥ एकस्य शशिनो गुण्यो, वक्ष्यमाणः
परिच्छदः । एवं ग्रहोडुताराणां, मानं सर्वत्र लभ्यते ॥ ६५ ॥ एकशशिपरिवारश्चायम्—अष्टाशीतिर्ग्रहा ऋक्षा-
ण्यष्टाविंशतिरेव च । शराश्वाङ्करसरसा ( ६६९७५ ) स्ताराणां कोटिकोटयः ॥ ६६ ॥

लवणाब्धौ च कालोदे, स्वयम्भूरमणेऽपि च । भूयस्यो मत्स्यमकरकूर्माद्या मत्स्यजातयः ॥ ६७ ॥ तत्रास्मिं-
ल्लवणाम्भोधावुत्सेधाङ्गुलमानतः । योजनानां पञ्च शतान्युत्कृष्टमत्स्यभूघनम् ॥ ६८ ॥ शतानि सप्त कालोदे,
सहस्रमंतिमेऽम्बुधौ । गुर्वङ्गमानं मत्स्यानामल्पमत्स्याः परेऽब्धयः ॥ ६९ ॥ स्युर्योनिप्रभवा जातिप्रधानाः कुल-
कोटयः । लवणे सप्त मत्स्यानां, नव कालोदवारिधौ ॥ ७० ॥ अर्द्धत्रयोदश तथा, मत्स्यानां कुलकोटयः ।
स्वयम्भूरमणाम्भोधौ, प्रज्ञप्ताः परमेष्ठिभिः ॥ ७१ ॥ तथा च जीवाभिगमे—'लवणे णं भंते ! समुद्दे कइ मच्छ-
जातिकुलकोडिजोणीपमुहसयसहस्सा पण्णत्ता ?, गो० ! लवणे सत्त, कालोए नव, सयंभूरमणे अद्धतेर-
सत्ति' जम्बूद्वीपे प्रविशन्ति, मत्स्या लवणतोयधेः । नवयोजनप्रमाणा, जगतीविवराध्वना ॥ ७२ ॥ एवं च—

क्वचिदयमुदधिः सुधांशुचन्द्रातपघनसारसमुज्ज्वलश्चकास्ति । गतशिखशिरसः शिखाभिरामो, रहसि हसन्निव वारिधीनशेषान् ॥ ७३ ॥ क्वचिदुदयदमन्दभानुतेजो, घुसृणरसप्रसरारुणान्तरालः । प्रकटमिव वहन्नदीषु रागं, हृदि रसतः पतितासु वल्लभासु ॥ ७४ ॥ युग्मम् ॥ क्वचिदनणुगुणैर्विभाति मुक्तामणिभिरुडुप्रतिबिम्बितैरिवान्तः । अविरतगतिखिन्नभानुमुक्तैः, क्वचन करप्रकरैरिव प्रवालैः ॥ ७५ ॥ क्वचन जलगजैर्नियुद्धसज्जैरसकृदुदस्तकरोद्धुरैः करालः । जगदुपकृतिकारिनीरपानोपनतघनेषु धृतप्रतीभशङ्कैः ॥ ७६ ॥ स्थलचरसमसर्वजातिसत्त्वाकृतिमदनेकझषौघपूर्णमध्यः । प्रलयतरलितं जगद्दधानो, हरिरिव कुक्षिनिकेतने कृपार्द्रः ॥ ७७ ॥ ( प्रमुदितवदना प्रभाश्च ) क्वचिदिह कमलायाः कौतुकादारमंत्या, जलचरनरकन्यालीषु हल्लीसकेन । अयमुपनयतीवापत्यरागैकगृह्यः, पवनजवनवेलागर्जिवाद्यं विनोदात् ॥ ७८ ॥ तरलतरतरङ्गोत्तुङ्गरङ्गत्तुरङ्गः, प्रसरदतुलवेलामत्तमातङ्गसैन्यः । अतिविपुलमनोज्ञद्वीपदुर्गैरुदग्रः, कलयति नृपलक्ष्मीं वाहिनीनां विवोढा ॥ ७९ ॥ ( मालिन्यौ ) स्वच्छोन्मूर्च्छदतुच्छमत्स्यपटलीपुच्छोच्छलच्छीकरच्छेदोत्सेकितबुद्बुदार्बुदमिषोद्भिन्नभ्रमाम्भःकणः । हेलोत्प्लाविततुङ्गपर्वतशतोत्सर्पत्तरङ्गोद्धतो, वीरंमन्य इवैष चिक्रमिषया दिग्भूभृतां धावति ॥ ८० ॥ कुद्धाखण्डलवज्रमण्डलगलज्ज्वालाकरालानलत्रस्तानेकगिरीन्द्रकोटिशरणं कल्पद्रुमाणां वनम् । तत्तद्वस्तुवदान्यतातरलितैरभ्यर्थितो निर्जरैर्यो रत्नाकर इत्यनेककविभिर्नानाविकल्पैः स्तुतः ॥ ८१ ॥ ( शार्दूलविक्रीडिते ) निर्वीडक्रीडदम्भश्चरनरतरुणीक्लृप्तदीपोपचारैर्नूनं रत्नैरयत्नोज्ज्वलघनघृणिभिः क्वापि दीप्रांतरालः ।

मत्स्यानां मानजातयः समुद्रवर्णनोपसंहारश्च

२०

२५

॥२६४॥

२८

क्वापि प्रासप्रकर्षैः पृथुमकरकराकृष्टपाठीनपीठभ्रस्यन्नक्रप्रमोदोल्लुलनचलजलोत्सिक्तडिंडीरपिंडैः ॥ ८२ ॥ ( स्रग्धरा ) दशभिरादिकुलकं ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, संपूर्त्तिं सुखमेकविंशतितमः सर्गो मनोज्ञोऽगमत् ॥ ८३ ॥ ग्रन्थाग्रं ३३७ ॥ ५

॥ इति श्रीलोकप्रकाशे एकविंशतितमः सर्गः समाप्तः ॥

## ॥ अथ द्वाविंशतितमः सर्गः प्रारभ्यते ॥

अथास्माल्लवणाम्भोधेरनन्तरमुपस्थितः । वर्ण्यते धातकीखण्डद्वीपो गुरुप्रसादतः ॥ १ ॥ वृक्षेण धातकीनाम्ना, यदसौ शोभितः सदा । वक्ष्यमाणस्वरूपेण, ततोऽयं प्रथितस्तथा ॥ २ ॥ चतुर्योजनलक्षात्मा, चक्रवालतयाऽस्य च । विस्तारो वर्णितः पूर्णज्ञानालोकितविष्टपैः ॥ ३ ॥ परिक्षेपः पुनरस्य, कुक्षिस्थद्वीपवारिधेः । १० त्रयोदशलक्षरूपः, क्षेत्रलब्धोऽयमीरितः ॥ ४ ॥ लक्षाः किलैकचत्वारिंशत्सहस्राण्यथो दश । योजनानां नवशती, किञ्चिदूनैकषष्टियुक् ॥ ५ ॥ अयं कालोदपार्श्वेऽस्य, परिधिश्चरमो भवेत् । आद्यस्तु लवणाम्भोधेरन्ते यः कथितः पुरा ॥ ६ ॥ मध्यमः परिधिर्लक्षाण्यष्टाविंशतिरेव च । षट्चत्वारिंशत्सहस्राः, पञ्चाशद्योजनाधिकाः ॥ ७ ॥ जम्बूद्वीपवदेषोऽपि, द्वारैश्चतुर्भिरञ्चितः । तेषां नामप्रमाणादि, सर्वं तद्वद्भवेदिह ॥ ८ ॥ किंत्वे- १३

नद्वारपालानां, विजयादिसुधाभुजाम् । परस्मिन् धातकीखण्डे, राजधान्यो निरूपिताः ॥ ९ ॥ दश लक्षा योजनानां, सहस्राः ससविंशतिः । पञ्चत्रिंशा ससशती, मिथो द्वारामिहान्तरम् ॥ १० ॥ दक्षिणस्यामुदीच्यां च, द्वीपस्यैतस्य मध्यगौ । इषुकारौ नगवरौ, जगदाते जगद्धितैः ॥ ११ ॥ योजनानां पञ्च शतान्युच्चौ सहस्र-विस्तृतौ । चत्वारि योजनानां च, लक्षाण्यायामतः पुनः ॥ १२ ॥ अत एव स्पृष्टवन्तौ, कालोदलवणोदधी । आभ्यां संगन्तुमन्योऽन्यं, भुजाविव प्रसारितौ ॥ १३ ॥ कूटैश्चतुर्भिः प्रत्येकं, शोभितौ रत्नभासुरैः । चैत्यमेकैकं च तत्र, कूटे कालोदपार्श्वगे ॥ १४ ॥ चतुर्भिः कुलकं ॥ आभ्यां द्वाभ्यामिषुकारपर्वताभ्यामयं द्विधा । द्वीपो निर्दिश्यते पूर्वपश्चिमार्द्धविभेदतः ॥ १५ ॥ यत्र जम्बूद्वीपमेरोः, प्राच्यां पूर्वार्द्धमस्य तत् । तस्य प्रतीच्यामर्द्धं यत्तत्पश्चिमार्द्धमुच्यते ॥ १६ ॥ द्वयोरप्यर्द्धयोर्मध्य, एकैको मन्दराचलः । तयोरपेक्षया क्षेत्रव्यवस्थाऽत्रापि पूर्ववत् ॥ १७ ॥ तथाहि–अपाच्यामिषुकारो य, इहत्यमेर्वपेक्षया । पूर्वतस्तस्य भरतक्षेत्रं प्रथमतो भवेत् ॥ १८॥ ततो हैमवतक्षेत्रं, हरिवर्षं ततः परम् । ततो महाविदेहाख्यं, रम्यकाख्यं ततः परम् ॥ १९॥ ततश्च हैरण्यवतमैरावतं ततस्ततः । औत्तराह इषुकार, एषा पूर्वार्द्धसंस्थितिः ॥२०॥ पश्चिमायामपि तस्माद्दाक्षिणात्येषुकारतः । प्रथमं भरतक्षेत्रं, ततो हैमवताभिधम् ॥ २१ ॥ एवं यावदौत्तराह, इषुकारधराधरः । पूर्वार्द्धवत्क्षेत्ररीतिरेवं पश्चिमतोऽपि हि ॥ २२ ॥ द्वयोरप्यर्द्धयोरेषां, क्षेत्राणां सीमकारिणः । षट् षट् वर्षधराः प्राग्वत्, सर्वेऽपि द्वादशोदिताः ॥ २३ ॥

धातकीखण्डे क्षेत्रव्यवस्था

१५

२०

२५

जम्बूद्वीपवर्षधराद्रिभ्यो द्विगुणविस्तृताः । तुङ्गत्वेन तु तैस्तुल्याः, सर्वे वर्षधराद्रयः ॥ २४ ॥ आयामतश्च-तुर्लक्षयोजनप्रमिता अमी । पर्यन्तस्पृष्टकालोदलवणोदधिवारयः ॥ २५ तथाह्यत्र हिमवतोर्गिर्योः शिखरिणो-रपि । विष्कम्भोऽयं जिनैरुक्तः, पूर्वापरार्द्धभाविनोः ॥ २६ ॥ योजनानां शतान्येकविंशतिः पञ्च चोपरि । कलाः पञ्चैवाथ महाहिमवतोश्च रुक्मिणोः ॥ २७ ॥ अष्टावेव सहस्राणि, योजनानां चतुःशती । एकविंशत्य-भ्यधिका, तथैवैककलाधिका ॥ २८ ॥ त्रयस्त्रिंशत्सहस्राणि, योजनानां शतानि षट् । स्फुरच्चतुरशीतीनि, कलाश्चतस्र एव च ॥ २९ ॥ विष्कम्भोऽयं निषधयोर्गिर्योर्नीलवतोरपि । द्वादशानामप्यमीषां, व्याससंकलना त्वियम् ॥ ३० ॥ लक्षमेकं योजनानां, षट्सप्ततिसहस्रयुक् । शतान्यष्टौ द्विचत्वारिंशता समधिकानि च ॥३१॥ द्वे योजनसहस्रे च, विष्कम्भ इषुकारयोः । तस्मिंश्च योजितेऽत्राद्रिरुद्धं क्षेत्रमिदं भवेत् ॥ ३२ ॥ एकं लक्षं योजनानां, सहस्राण्यष्टसप्ततिः । द्विचत्वारिंशदधिकान्यष्टौ शतानि चोपरि ॥ ३३ ॥

अथैतल्लवणाम्भोधिपरिधेरपनीयते । द्वादशाभ्यां शताभ्यां च, तेन न्यूनः स भज्यते ॥ ३४ ॥ लब्धानि योजनसहस्राणि षट् षट् शतानि च । चतुर्दशाढ्यानि भागाश्चैकोनत्रिंशकं शतम् ॥ ३५ ॥ द्वादशाढ्यशतद्व-न्द्वक्षुण्णैकयोजनोद्भवाः । तत्रेयत्पृथवस्तेऽंशा, द्विशती द्वादशाभवन् ॥ ३६ ॥ अथ चैतादृशैरंशैर्यथास्वमुपक-ल्पितैः । चतुर्दशानां क्षेत्राणां, लभ्यते मुखविस्तृतिः ॥ ३७ ॥ भागकल्पना चैवं—एकैकोऽंशो भरतयो २-स्तथैरवतयोरपि २ । चत्वारो हैमवतयो ८ हैरण्यवतयोरपि ८ ॥३८॥ हरिवर्षाख्ययोरेवं १६, तथा रम्यकयोरपि

१६। पूर्वापरार्द्धं गतयोरंशाः षोडश षोडश॥ ३९॥ चतुष्षष्टिश्चतुष्षष्टिर्विदेहक्षेत्रयोर्द्वयोः। द्विशती द्वादश चैवं, भागाः स्युः सर्वसंख्यया ॥ ४० ॥ भरतैरवतेभ्यो वा, चतुर्घ्नी मुखविस्तृतिः। विज्ञेया हैमवतयोः, हैरण्यवतयोरपि ॥ ४१ ॥ षोडशघ्ना हरिवर्षरम्यकद्वयविस्तृतिः। तथा चतुष्षष्टिगुणा, विदेहक्षेत्रयोर्द्वयोः ॥ ४२ ॥ एवं च धातकीखण्डे, मध्यमात्परिधेरपि। पूर्वोदितादुक्तशैलरुद्धक्षेत्रविनाकृतात् ॥ ४३ ॥ द्वादशाढ्यशतद्वन्द्वविभक्तादुपकल्पितैः। मुखविस्तृतिवद्भागैर्लभ्यैषां मध्यविस्तृतिः ॥ ४४ ॥ तथाऽत्र कालोदासन्नात्पर्यन्तपरिधेरपि। नगरुद्धक्षेत्रहीनाद्, द्वादशद्विशताहृतात् ॥ ४५ ॥ मुखविस्तृतिवद्भागैर्यथास्वमुपकल्पितैः। चतुर्दशानां क्षेत्राणां, लभ्या पर्यन्तविस्तृतिः ॥ ४६ ॥ एवं च वक्ष्यमाणायां, क्षेत्रविविधविस्तृतौ। मा भूत्संमोह इत्येष, आम्नायः प्राक् प्रपञ्चितः ॥ ४७ ॥ किंच-कृत्वाऽद्रिरुद्धं क्षेत्रं तत्सहस्रद्वितयोज्झितम्। कर्त्तव्याश्चतुरशीतिस्तस्याप्यंशा दिशाऽनया ॥ ४८ ॥ एकैकोऽंशो हिमवतोस्तथा शिखरिणोरपि। अंशाश्चत्वारश्च महाहिमवतोश्च रुक्मिणोः ॥ ४९ ॥ षोडशांशा निषधयोर्नीलवन्नगयोरपि। एवं चतुरशीत्याऽंशैर्वर्षभूधरविस्तृतिः॥ ५०॥ अत एव च वक्ष्यन्ते, भागाश्चतुरशीतिजाः। वर्षाद्रिमानेऽस्मिन् पुष्करार्द्धेऽपि योजनोपरि ॥ ५१ ॥ क्षेत्राण्येतानि दधति, चक्रारकान्तराकृतिम्। क्षाराब्धिदिशि संकीर्णान्यन्यतो विस्तृतानि यत् ॥ ५२ ॥ जम्बूद्वीपक्षारवार्द्धिमध्यनाभिमनोहरे। वर्षाचलेषुकाराद्रिचतुर्दशारकाश्रिते ॥ ५३ ॥ अस्मिन् महाद्वीपचक्रे, कालोदापःप्रधिस्थिरे। अरकान्तरवद्भाति, क्षेत्राणीति चतुर्दश ॥ ५४ ॥ क्षेत्राणामिह पर्यन्त, एषां कालोदसन्निधौ।

मुखं च लवणाम्भोधिसमीपे परिभाषितम् ॥ ५५ ॥ ज्ञेयाः क्षेत्रप्रकरणे, सामान्येनोदिता लवाः । द्वादशद्विश-तक्षुण्णयोजनोत्था बुधैरिह ॥ ५६ ॥ तत्रेह याम्येषुकारहिमवत्पर्वतान्तरे । पूर्वार्द्धे प्रथमं भाति, क्षेत्रं भरत-नामकम् ॥ ५७ ॥ चतुर्दशानि षट्षष्टिशतानि विस्तृतं मुखे । एकस्य योजनस्यांशाश्चैकोनत्रिंशकं शतम् ॥ ५८ ॥ योजनानां सहस्राणि, मध्ये द्वादश विस्तृतम् । सैकाशीतिं पञ्चशतीं, तथा षट्त्रिंशतं लवान् ॥ ५९॥ अष्टादश सहस्राणि, योजनानां शतानि च । पञ्चैव सप्तचत्वारिंशद्योजनाधिकान्यथ ॥ ६० ॥ पञ्चपञ्चाशदधि-कमंशानां नियतं शतम् । एतावद्भरतक्षेत्रं, पर्यन्ते विस्तृतं मतम् ॥ ६१ ॥ त्रैराशिकादिना भाव्यो, विस्तारो-ऽन्यत्र तु स्वयम् । तादृक्क्षेत्राकृत्यभावान्नात्र ज्याधनुरादिकम् ॥ ६२ ॥ मध्यभागेऽस्य वैताढ्य, उच्चत्वपृथुता-दिभिः । जम्बूद्वीपस्थभरतवैताढ्य इव सर्वथा ॥ ६३ ॥ आयामतः किन्तु चतुर्लक्षयोजनसंमितः । युक्तश्चो-भयतः पञ्चपञ्चाशता महापुरैः ॥ ६४ ॥ उत्तरार्द्धमध्यखण्डे, हिमवद्गिरिसन्निधौ । जम्बूद्वीपर्षभकूटतुल्योऽत्र वृषभाचलः ॥ ६५ ॥ शेषा सर्वापि व्यवस्था, षट्खण्डभवनादिका । जम्बूद्वीपभरतवद्, ज्ञेयाऽत्राप्यविशेषिता ॥ ६६ ॥ तथाऽत्र भरतादीनां, तैर्जम्बूद्वीपगैः सह । द्रव्यक्षेत्रकालभावपर्यायाः स्युः समाः क्रमात् ॥ ६७ ॥ परोऽस्माद् हिमवानद्रिः, पञ्चाढ्यानेकविंशतिम् । शतांस्ततो लवान् द्वाविंशतिं चतुरशीतिजान् ॥ ६८ ॥ ननु जम्बूद्वीपहैमवतो माने द्विगुणिते सति यथोक्ता योजनोपरि एकोनविंशतिजाः पञ्च भागा भवन्ति, अत्र च चतुरशीतिजा द्वाविंशतिरुक्तास्ततः कथमस्य ततो द्वैगुण्यं न व्याहन्यते ?, अत्रोच्यते—एषां भागानां द्वैवि-

५

१०

१४

ध्येऽपि विशेषः कोऽपि नास्ति, यतो यावदेकोनविंशतिजैः पञ्चभिर्भागैर्भवति तावदेव चतुरशीतिजैर्द्वाविं-
शत्यापि भवति, उभयत्रापि किञ्चिदधिकयोजनचतुर्थभागस्यैव जायमानत्वादिति, एवमग्रेऽपि भाव्यं। पद्महृ-
दाभिधानोऽस्य, मस्तकेऽस्ति महाह्रदः। योजनानां द्वे सहस्रे, दीर्घः सहस्रविस्तृतः ॥ ६९ ॥ दशयोजनरूपो-
ऽस्योद्वेधोऽब्जवलयादि च। जम्बूद्वीपपद्मह्रद, इवेहापि विभाव्यताम् ॥ ७० ॥ एवं येऽन्ये वर्षधराचलेषु कुरुषु
ह्रदाः। तथा नदीनां कुण्डानि, द्वीपाः कुण्डगताश्च ये ॥ ७१ ॥ अविशेषेण ते सर्वेऽप्युद्वेधोच्छ्रयमानतः।
जम्बूद्वीपस्थायितत्तद्द्वीपकुण्डह्रदैः समाः ॥ ७२ ॥ ततस्तदुद्विद्धतादि, तथाऽब्जवलयादि च। अनुच्यमा-
नमप्यत्र, स्वयं ज्ञेयं यथाऽऽस्पदम् ॥ ७३ ॥ विष्कम्भायामतस्त्वेते, सर्वेऽपि द्विगुणास्ततः। व्यासोद्वेधाभ्यां च
नद्यो, व्यासैर्वनमुखान्यपि ॥७४॥ तथाहुः—"वासहरकुरुसु दहा नईण कुण्डाइं तेसु जे दीवा। उव्वेहुस्सेहतुल्ला
विक्खंभायामओ दुगुणा ॥ ७५ ॥ सव्वाओवि नईओ विक्खंभोव्वेहदुगुणमाणाओ। सीयासीओयाणं वणाणि
दुगुणाणि विक्खंभे ॥ ७६ ॥" एवं च—गङ्गासिन्धुरक्तवतीरक्तेत्याख्यास्पृशामिह। षट्त्रिंशशतसङ्ख्यानां, नदी-
नां ह्रदनिर्गमे ॥ ७७ ॥ अर्द्धार्द्धानि योजनानि, विष्कम्भो द्वादश स्मृतः। पर्यन्ते च पञ्चविंशं, योजनानां
शतं भवेत् ॥ ७८ ॥ आसां तावन्ति कुण्डानि, विस्तृतान्यायतानि च। विंशं हि योजनशतं, द्वीपाः षोड-
शयोजनाः ॥७९॥ स्वर्णकूला रूप्यकूला, रोहिता रोहितांशिका। इत्यष्टादौ विस्तृताः स्युः, पञ्चविंशतियोजनीम्
॥ ८० ॥ अन्ते च सार्द्धां द्विशतीं, सर्वत्रैतावदेव च। चतुर्विंशतिरप्यन्तर्नद्यः स्युरिह विस्तृताः ॥ ८१ ॥ चत्वा-

धातकी०
वर्षधरमा-
नादि

२०

२५
॥२६७॥

२८

रिंशा द्विशत्यासां, कुण्डेष्वायतिविस्तृती । द्वात्रिंशद्योजनान्यासां, द्वीपा आयतविस्तृताः ॥ ८२ ॥ नारीकान्ता नरकान्ता, हरिकान्ताभिधा नदी । हरिसलिलेत्यष्टानां, सरितां मूलविस्तृतिः ॥ ८३ ॥ पञ्चाशद्योजनान्यासां, पर्यन्तविस्तृतिः पुनः । योजनानां पञ्च शतान्युक्तानि तत्त्ववेदिभिः ॥ ८४ ॥ आसां कुण्डायतिव्यासावशीतियुक् चतुःशती । चतुष्षष्टिर्योजनानि, द्वीपाश्चायतविस्तृताः ॥ ८५ ॥ शीताशीतोदाभिधानां, निम्नगानां चतसृणाम् । आद्यान्तयोः क्रमाद्व्यासः, शतं सहस्रमेव च ॥ ८६ ॥ सषष्टिर्नवशत्यासां, कुण्डेष्वायतिविस्तृती । अष्टाविंशं शतं चासां, द्वीपा आयतविस्तृताः ॥ ८७ ॥ षट्त्रिंशं शतमष्टौ च, पुनरष्टौ चतुष्टयम् । चतुर्विधानामित्यासामाद्यन्तोद्विद्धता क्रमात् ॥ ८८ ॥ गव्यूतं योजने सार्द्धे, द्वौ क्रोशौ पञ्चयोजनी । योजनं दश चैतानि, योजने द्वे च विंशतिः ॥ ८९ ॥ अन्तर्नदीनां सर्वासामपि प्रारभ्य मूलतः । पर्यन्तं यावदुद्वेधस्तुल्यः स्यात्पञ्चयोजनी ॥ ९० ॥ स्वकीयमूलविस्तृत्या, जिह्विकाविस्तृतिः समा । मूलोद्वेधसमश्चासां, सर्वासां जिह्विकोच्छ्रयः ॥ ९१ ॥ उक्तशेषं तु स्वरूपं, सकलं वेदिकादिकम् । एतास्वप्यनुसंधेयं, जम्बूद्वीपनदीगतम् ॥ ९२ ॥ पूर्वाभिमुख्याः पूर्वार्द्धे, कालोदे यान्ति निम्नगाः । क्षारोदमपरोन्मुख्योऽपरार्द्धे तु विपर्ययः ॥ ९३ ॥ आसामित्युक्तो विशेषः, प्रसङ्गाल्लाघवाय च । तत्र तत्र नाममात्रं, स्थानाशून्याय वक्ष्यते ॥ ९४ ॥ अथ प्रकृतं–अथैतस्मात्पद्महृदान्नद्यस्तिस्रो विनिर्गताः । गङ्गासिन्धुरोहितांशाः, पूर्वापरोत्तराध्वभिः ॥ ९५ ॥ तत्र गङ्गा च सिन्धुश्च, पूर्वपश्चिमयोर्दिशोः । निर्गत्य स्वदिशोर्गत्वा, यथार्हं पर्वतोपरि ॥ ९६ ॥ स्वस्वावर्त्तनकूटाभ्यां,

५

१०

१५

निवर्त्य दक्षिणामुखे । कुण्डे निपत्य विशतः, कालक्षारोदधी क्रमात् ॥ ९७ ॥ रोहितांशा तूत्तरस्यां, योजनानि नगोपरि । द्विपञ्चाशां पञ्चशतीं, त्रिपञ्चाशल्लवाधिकाम् ॥ ९८ ॥ अतिक्रम्य निजे कुण्डे, निपत्य योजनान्तरा । शब्दापातिगिरेः प्रत्यक्, प्रवृत्ता लवणेऽविशत् ॥ ९९ ॥ अथास्माद्धिमवच्छैलादुत्तरस्यां व्यवस्थितम् । क्षेत्रं हैमवताभिख्यमाकृत्या भरतोपमम् ॥ १०० ॥ षड्विंशतिं सहस्राणि, योजनानां चतुःशतीम् । अष्टपञ्चाशां लवान् द्वानवतिं विस्तृतं मुखे ॥ १ ॥ पञ्चाशतं सहस्राणि, चतुर्विंशं शतत्रयम् । चतुश्चत्वारिंशमंशशतं मध्ये च विस्तृतम् ॥ २ ॥ योजनानां सहस्राणि, चतुःसप्ततिमन्ततः । नवत्याढ्यं शतं षण्णवत्याढ्यं च शतं लवान् ॥ ३ ॥ मध्येऽस्य शब्दापातीति, वृत्तवैताढ्यपर्वतः । सहस्रयोजनोत्तुङ्गः, सहस्रं विस्तृतायतः ॥ ४ ॥ अयं जम्बूद्वीपशब्दापातिना सर्वथा समः । तद्वत्सप्तान्येऽपि वृत्तवैताढ्या इह तत्समाः ॥ ५ ॥ अद्रिरस्यान्ते च महाहिमवान् योजनानि सः । एकविंशानि चतुरशीतिशतान्यथांशकान् ॥ ६ ॥ पूर्वोक्तमानांश्चतुरो, विस्तीर्णस्तस्य चोपरि । पद्मैः परिष्कृतो भाति, महापद्माभिधो ह्रदः ॥ ७ ॥ योजनानां सहस्राणि, चत्वार्येवायमायतः । विष्कम्भतो योजनानां, सहस्रद्वितयं भवेत् ॥ ८ ॥ दक्षिणस्यामुदीच्यां च, नद्यौ द्वे निर्गते ततः । रोहिता हरिकान्ता च, पर्वतोपर्युभे अपि ॥ ९ ॥ योजनानां शतान् द्वात्रिंशतं गत्वा दशोत्तरान् । चतुश्चत्वारिंशतं च, भागान् जिह्विकया गिरेः ॥ १० ॥ पततः स्वस्वकुण्डेऽथ, कालोदं याति रोहिता । द्विधा कृत्वा हैमवतं, वैताढ्याद्योजनान्तरा ॥ ११ ॥ हरिकान्ता च वैताढ्याद्योजनद्वितयान्तरा ।

२०

२५
॥२६८॥

२८

हरिवर्षं विभजंती, प्रयाति लवणोदधौ ॥ १२ ॥ अथोदीच्यां क्षेत्रमस्माद्धरिवर्षं विराजते । सश्रीकमध्यं यद्ग-
न्धापातिवैताढ्यभूभृता ॥ १३ ॥ त्रयस्त्रिंशाष्टपञ्चाशच्छताढ्यां लक्षयोजनीम् । षट्पञ्चाशमंशशतं, विस्तीर्ण-
मिदमानने ॥ १४ ॥ द्वे लक्षे द्वादशशतीं, मध्येऽष्टानवतिं तथा । योजनानामंशशतं, द्विपञ्चाशं च विस्तृतम्
॥ १५ ॥ योजनानां षण्णवत्या, सहस्रकैः समन्वितम् । लक्षद्वयं सप्तशतीं, त्रिषष्ट्याऽभ्यधिकां तथा ॥ १६ ॥
अष्टचत्वारिंशमंशशतं पर्यन्तविस्तृतम् । शेषाऽस्य जम्बूद्वीपस्थहरिवर्षसमा स्थितिः ॥ १७ ॥ क्षेत्रस्यास्य च
पर्यन्ते, निषधो नाम भूधरः । त्रयस्त्रिंशत्सहस्राणि, योजनानां शतानि षट् ॥ १८ ॥ स्याद्विस्तीर्णः स चतुर-
शीतीन्यंशाश्च षोडश । तिगिञ्छिनामा वर्वर्त्ति, महाह्रदोऽस्य चोपरि ॥ १९ ॥ सहस्राणि योजनानामष्टावा-
यामतः स च । विष्कम्भतस्तु चत्वारि, सहस्राणि भवेदसौ ॥ २० ॥ दक्षिणस्यामुदीच्यां च, ह्रदादस्मान्नि-
रीयतुः । वाहिन्यौ हरिसलिलाशीतोदे ते नगोपरि ॥ २१ ॥ योजनानां सहस्राणि, चतुर्दश शतानि च ।
अष्टौ द्विचत्वारिंशानि, परिक्रम्याष्ट चांशकान् ॥ २२ ॥ स्वस्वजिह्विकया स्वस्वकुण्डे निपततस्ततः । हरिः
स्ववृत्तवैताढ्याद्योजनद्वितयान्तरा ॥ २३ ॥ हरिवर्षाभिधं वर्षं, द्विधा विदधती सती । कालोदाब्धौ निपतति,
रमेवाच्युतवक्षसि ॥ २४ ॥ चतुर्भिः कलापकम् । शीतोदा च देवकुरुभद्रसालविभेदिनी । चतुर्भिर्योजनैर्मेरोर्दू-
रस्था पश्चिमोन्मुखी ॥ २५ ॥ प्रत्यग्विदेहविजयसीमाकरणकोविदा । गोत्रवृद्धेव मध्यस्था, यात्यन्ते लवणो-
दधिम् ॥ २६ ॥ शीताप्येवं नीलवतो, निर्गता केसरिह्रदात् । कुण्डोत्थितोत्तरकुरुभद्रसालप्रभेदिनी ॥ २७ ॥

चतुर्भिर्योजनैर्मेरोर्दूरस्था पूर्वतोमुखी । प्राग्विदेहान् विभजंती, याति कालोदवारिधौ ॥ २८ ॥ वाच्योदीच्यां रम्यकान्ता, तथैरवतादिका । क्षेत्रत्रयी शिखर्याद्या, नीलान्ता च नगत्रयी ॥ २९ ॥ यथेयं हरिवर्षान्ता, त्रिवर्षी भरतादिका । उक्ता हिमवदाद्या च, निषधान्ता नगत्रयी ॥ ३० ॥ तद्वत्रिधा क्षेत्रमानमादिमध्यान्तगोचरम् । तावदायामविस्तारा, ह्रदा वर्षधरोपरि ॥ ३१ ॥ तावदेवातिक्रमणं, नदीनां पर्वतोपरि । सैवाकृतिर्नाममात्रे, विशेषः सोऽभिधीयते ॥ ३२ ॥ ऐरावतमुदीच्येषुकारात्स्वस्वगिरेर्दिशि । शिखरी पर्वतोऽन्तेऽस्य, पुण्डरीकह्रदाश्रितः ॥ ३३ ॥ अस्माद्रक्ता रक्तवती, स्वर्णकूला विनिर्ययुः । रक्तैरवतमध्येन, याति कालोदवारिधिम् ॥ ३४ ॥ लवणाब्धौ प्रविशति, तथैव रक्तवत्यथ । स्वर्णकूला तु कालोदं, हैरण्यवतमध्यगा ॥ ३५ ॥ परं शिखरिणः क्षेत्रं, हैरण्यवतनामकम् । विकटापातिना वृत्तवैताढ्येन सुशोभितम् ॥ ३६ ॥ ततो रुक्मी नाम महापुण्डरीकह्रदाश्रितः । गिरिस्ततो रूप्यकूलानरकान्ते विनिर्गते ॥ ३७ ॥ हैरण्यवतमध्येन, क्षारोदं रूप्यकूलिका । कालोदं नरकान्ता च, याति रम्यकमध्यतः ॥ ३८ ॥ ततः परं रुक्मिगिरेः, क्षेत्रं राजति रम्यकम् । मध्ये माल्यवता वृत्तवैताढ्येन विभूषितम् ॥ ३९ ॥ ततोऽपि परतो भाति, नीलवान्नाम पर्वतः । महाह्रदः केसरीति, तस्योपरि विराजते ॥ ४० ॥ शीता च नारीकान्ता च, ततो नद्यौ निरीयतुः । नारीकान्ता रम्यकान्तर्यूदेति लवणोदधिम् ॥४१॥ शीता नदी तु पूर्वोक्तरीत्या कालोदवारिधौ । व्रजति प्राग्विदेहस्थविजयव्रजसीमकृत् ॥ ४२ ॥ योजने द्वे च विकटापातिमाल्यवतोर्भवेत् । चत्वारि मेरोः स्वक्षेत्रनदीभ्यामन्तरं क्रमात्



२०

२५



२८

॥ ४३ ॥ अथास्ति मध्ये नगयोर्नीलवन्निषधाख्ययोः । क्षेत्रं महाविदेहाख्यं, मन्दरालङ्कृतान्तरम् ॥ ४४ ॥ त्रयो-
विंशत्या सहस्रैर्योजनानां त्रिभिः शतैः । चतुस्त्रिंशैः समधिका, लक्षाश्चतस्र एव च ॥ ४५ ॥ द्वादशद्विशत-
क्षुण्णयोजनस्य लवाः पुनः । द्वे शते विस्तीर्णमेतल्लवणाम्भोधिसन्निधौ ॥ ४६ ॥ ततं लक्षाणि मध्येऽष्टावेकप-
ञ्चाशतं शतान् । चतुर्नवत्याढ्यानंशशतं चतुरशीतियुक् ॥ ४७ ॥ अन्ते चैकादश लक्षाः, ससाशीतिं सहस्र-
कान् । चतुष्पञ्चाशान् लवानां, साष्टषष्टिशतं ततम् ॥ ४८ ॥ जातं चतुर्धैतदपि, जम्बूद्वीपविदेहवत् । देवकु-
रूत्तरकुरुपूर्वापरविदेहकैः ॥ ४९ ॥ स्युर्देवकुरवोऽपाच्यामुदीच्यां कुरवः पराः । मेरोः प्राच्यां प्राग्विदेहाः,
प्रतीच्यामपरे पुनः ॥ ५० ॥ शीताशीतोदानदीभ्यां, विदेहास्ते द्विधाकृताः । प्राग्वदेव चतुर्ष्वंशेष्वष्टाष्ट
विजया इह ॥ ५१ ॥ तथैवोदक्कुरुप्राच्यसीमकृन्माल्यवद्गिरेः । आगन्धमादनं सृष्ट्या, क्रमस्तैरेव नामभिः ॥५२॥
चतुर्ष्वंशेष्वन्तरेषु, वक्षस्कारास्तथैव च । चत्वारश्चत्वार एव, तिस्रस्तिस्रोऽन्तरापगाः ॥ ५३ ॥ विजयेष्वेषु
वैताढ्या, नदीकुण्डर्षभाद्रयः । षट् खण्डा राजधान्यश्च, तन्नामानस्तथा स्थिताः ॥ ५४ ॥ तथैव चत्वारोऽ-
प्यंशाः, पर्यन्ते वनराजिताः । केवलं परिमाणानां, विशेषः सोऽभिधीयते ॥ ५५ ॥ वक्षस्कारवनमुखान्तर्न-
दीमेरुकाननैः । विष्कम्भतः संकलितैः, स्याद्राशिर्विजयान् विना ॥ ५६ ॥ लक्षद्वयं षट्चत्वारिंशत्सहस्राः
शतत्रयम् । षट्चत्वारिंशतोपेतं, योजनानामनेन च ॥ ५७ ॥ चतुर्लक्षात्मके द्वीपविष्कम्भे राशिनोज्झिते ।
हृते षोडशभिर्मानं, लभ्यं विजयविस्तृतेः ॥ ५८ ॥ योजनानां सहस्राणि, नव त्र्याढ्या च षट्शती । षट् षोड-

शांशाः प्रत्येकं, ज्ञेया विजयविस्तृतिः ॥ ५९ ॥ एवमिष्टान्यविष्कम्भवर्जितद्वीपविस्तृतेः । स्वस्वसङ्ख्याविभक्ताया, लभ्यतेऽभीष्टविस्तृतिः ॥ ६० ॥ तत्र च–विनाऽद्रीन् विजयादीनां, व्याससङ्कलना त्वियम् । तिस्रो लक्षा द्विनवतिः, सहस्रा योजनात्मकाः ॥ ६१ ॥ अनेन वर्जिते द्वीपविष्कम्भे विहृतेऽष्टभिः । वक्षस्कारादिविष्कम्भो, लभ्यः सहस्रयोजनः ॥ ६२ ॥ अन्तर्नदीर्विना शेषव्याससङ्कलना भवेत् । लक्षास्तिस्रोऽष्टनवतिः, सहस्राः पञ्चशत्यपि ॥ ६३ ॥ अनेन वर्जिते द्वीपविष्कम्भे षड्भिराहृते । सार्द्धे द्वे योजनशते, व्यासोऽन्तःसरितामयम् ॥ ६४ ॥ विदेहानां यत्र यावान्, स्याद्व्यासोऽन्तमुखादिषु । तस्मिन् सहस्रोरुशीताशीतोदान्यतरोज्झिते ॥ ६५ ॥ शेषेऽर्द्धिते तत्र तत्र, तावान् भाव्यो विवेकिभिः । विजयान्तर्नदीवक्षस्कारायामः स्वधिया ॥ ६६ ॥ द्वयोरप्यर्द्धयोरस्मिन्, द्वीपे वनमुखानि च । वक्षस्कारक्षितिभृतो, विजयाश्चान्तरापगाः ॥ ६७ ॥ लवणोदृदिशि ह्रस्वाः, क्षेत्रसांकीर्ण्यतः स्मृताः । दीर्घाः कालोदककुभि, क्षेत्रबाहुल्यतः क्रमात् ॥ ६८ ॥ अष्टानां वनमुखानां, कले द्वे विस्तृतिर्लघुः । गुरुश्चतुश्चत्वारिंशाष्टपंचाशच्छती भवेत् ॥ ६९ ॥ तत्र द्वयोर्द्वयोः पूर्वापरार्द्धे वर्त्तिनोस्तयोः । क्षाराब्ध्यासन्नयोः शीताशीतोदासीम्नि सा लघुः ॥ ७० ॥ गुरुस्तु नीलनिषधान्तयोरेतच्च युक्तिमत् । अमीषां वलयाकारं, क्षाराब्धिं स्पृशतां बहिः ॥ ७१ ॥ अपरेषां तु कालोदवलयाभ्यन्तरस्पृशाम् । लघ्वी निषधनीलान्ते, गुर्वी सा सरिदन्तिके ॥ ७२ ॥ तथोक्तं वीरंजयक्षेत्रसमासवृत्तौ–"तथा वनमुखानां विस्तारो द्विगुण उक्तः, परं लवणोदधिदिशि वनमुखपृथुत्वं विपरीतं संभाव्यते, यथा नद्यन्ते कलाद्वयं,

गिर्यन्ते चतुश्चत्वारिंशदधिकान्यष्टपञ्चाशच्छतानि पृथुत्व"मिति संप्रदाय इति । बृहत्क्षेत्रसमासवृत्तौ तु एषां जघन्यं मानं नीलवन्निषधान्ते, शीताशीतोदोपान्ते चोत्कृष्टमुक्तं, न च कश्चिद्विशेषोऽभिहितः । अथ देवोत्तरकुरुक्षेत्रसीमाविधायिनः । गजदन्ताकृतीन् शैलान्, चतुरश्चतुरो ब्रुवे ॥ ७३ ॥ तत्र देवकुरूणां यः, प्रत्यग् विद्युत्प्रभो गिरिः । तथोत्तरकुरूणां च, प्रत्यग् यो गन्धमादनः ॥ ७४ ॥ द्वावप्यायामत इमौ, षट्पञ्चाशत्सहस्रकाः । लक्षास्तिस्रो योजनानां, सप्तविंशं शतद्वयम् ॥ ७५ ॥ युग्मम् । अथ देवकुरूणां प्राग्गिरिः सौमनसोऽस्ति यः । तथोत्तरकुरूणां प्राक्, पर्वतो माल्यवांश्च यः ॥ ७६ ॥ एतावायामतः पञ्च, लक्षा एकोनसप्ततिः । सहस्राणि योजनानां, द्विशत्येकोनषष्टियुक् ॥ ७७ ॥ युग्मम् । इदं प्रमाणं पूर्वार्द्धे, भावनीयं विचक्षणैः । परार्द्धे क्षेत्रविस्तारव्यत्यासेन विपर्ययः ॥ ७८ ॥ पूर्वार्द्धे हि भवेत्क्षेत्रं, प्राच्यां विस्तीर्णमन्यतः । संकीर्णमपरार्द्धे तु, प्रत्यक् पृथ्वन्यतोऽन्यथा ॥ ७९ ॥ ततः पूर्वार्द्धे यदुक्तं, मानं प्राचीनशैलयोः । सौमनसमाल्यवतोस्तत्प्रतीचीनयोरिह ॥ ८० ॥ ज्ञेयं विद्युत्प्रभगन्धमादनाद्रयोः परार्द्धके । यत्प्रतीचीनयोस्तत्र, मानं तत्प्राच्ययोरिह ॥ ८१ ॥ एते चत्वारोऽपि शैलाः, स्वस्ववर्षधरान्तिके । सहस्रयोजनव्यासास्तनवो मेरुसन्निधौ ॥ ८२ ॥ शेषवर्णविभागादि, कूटवक्तव्यतादि च । जम्बूद्वीपगजदन्तगिरिवच्चिन्त्यतामिह ॥ ८३ ॥ अथ स्वस्वप्रतीचीनप्राचीनगजदन्तयोः । आयाममानयोर्योगे, धनुर्मानं कुरुद्वये ॥ ८४ ॥ नव लक्षा योजनानां, सहस्राः

१ कालोदध्यासन्नभागापेक्षया एतदभिधाने न क्षतिः, लवणदिशि न विवक्षाऽस्येति ।

पञ्चविंशतिः । तथा शतानि चत्वारि, षडशीत्यधिकानि च ॥ ८५ ॥ भद्रसालायतिर्द्विघ्ना, मेरुविष्कम्भसंयुता । गजदन्तद्वयव्यासहीना ज्या कुरुषु स्फुटा ॥ ८६ ॥ त्रयोविंशत्या सहस्रैरधिकं लक्षयोर्द्वयम् । योजनानामष्टपञ्चाशताधिकं तथा शतम् ॥ ८७ ॥ विदेहमध्यविष्कम्भे, मेरुविष्कम्भवर्जिते । अर्द्धीकृते च प्रत्येकं, लभ्यते कुरुविस्तृतिः ॥ ८८ ॥ सा चेयं–त्रिलक्षीसप्तनवतिः, सहस्राण्यष्टशत्यपि । सप्तनवतिर्योजनानां द्विनवतिर्लवाः ॥ ८९ ॥ अथापाच्यामुदीच्यां च, नीलवन्निषधाद्रितः । प्रत्येकं यमकाद्री स्तो, जम्बूद्वीपकुरुष्विव ॥ ९० ॥ जम्बूद्वीपयमकवत्स्वरूपमेतयोरपि । सहस्रयोजनोच्चत्वविस्तारायामशालिनोः ॥ ९१ ॥ क्रमात्ततो ह्रदाः पञ्च, तन्नामानस्तथा स्थिताः । तटद्वये दश दश, काञ्चनाचलचारवः ॥ ९२ ॥ ह्रदाः पञ्चाप्यमी तादृग्नामभिः सेविताः सुरैः । तद्वत्पद्माश्रितास्तेभ्यो, द्विगुणायतविस्तृताः ॥ ९३ ॥ तटद्वये दश दश, ये चात्र काञ्चनाद्रयः । सश्रीकास्तेऽपि मानेन, तैर्जम्बूद्वीपगैः समाः ॥ ९४ ॥ किंतु संबद्धमूलास्तेऽमी तु व्यवहिता मिथः । योजनानां शतेनैकादशेन नवमांशिना ॥ ९५ ॥ तच्चैवं—एषां दशानां पृथुत्वे, सहस्रं मिलिते भवेत् । तत्सहस्रद्वयादेकह्रदायामाद्वियोज्यते ॥ ९६ ॥ शेषं स्थितं सहस्रं यन्नवभिस्तद्विभज्यते । अन्तरैः काञ्चनाद्रीणामेवं यथोक्तमन्तरम् ॥ ९७ ॥ जम्बूद्वीपे तु ह्रदानां, सहस्रायामभावतः । न किञ्चित्काञ्चनाद्रीणां, व्यवधानं परस्परम् ॥ ९८ ॥ यमकाद्रिह्रदायामवर्जितात्सप्तभिर्हृतात् । लभ्यन्ते कुरुविष्कम्भात्सप्तान्तराणि तानि च ॥ ९९ ॥ यमकाद्र्योर्नीलवतस्ताभ्यामाद्यह्रदस्य च । क्रमाच्चतुर्णां ह्रदानां, क्षेत्रान्तस्यान्तिमह्रदात् ॥ २०० ॥

सहस्राः पञ्चपञ्चाशद्योजनानां शतद्वयम् । एकसप्तत्याऽधिकं तद्ववेदेकैकमन्तरम् ॥ १ ॥ आसूत्तरासु कुरुषु, नीलवद्गिरिसन्निधौ । राजते धातकीवृक्षो, जम्बूवृक्ष इवापरः ॥ २ ॥ माने स्वरूपे त्वनयोर्विशेषोऽस्ति न कश्चन । किंतु तस्यानादृतवद्स्य देवः सुदर्शनः ॥ ३ ॥ उदीचीनासु कुरुषु, पश्चार्द्धेऽप्येवमीदृशः । स्यान्महाधातकी वृक्षः, प्रियदर्शनदैवतः ॥ ४ ॥ उत्तरासां कुरूणां यत्स्वरूपमिह वर्णितम् । तदेव देवकुरुषु, विज्ञेयमर्द्धयोर्द्वयोः ॥ ५ ॥ किंत्वासु नीलवत्स्थाने, वक्तव्यो निषधाचलः । गिरी चित्रविचित्राख्यौ, वाच्यौ च यमकास्पदे ॥ ६ ॥ पूर्वापरार्द्धयोर्देवकुरुषु स्तो यथाऽऽस्पदम् । प्राग्वच्छाल्मलिनौ वेणुदेवाभिधसुराश्रयौ ॥ ७ ॥ तथोक्तं स्थानाङ्गद्वितीयस्थानकवृत्तौ—'दो देवकुरुमहादुम'त्ति द्वौ कूटशाल्मलिवृक्षावित्यर्थः, द्वौ तद्वासिदेवौ वेणुदेवावित्यर्थः। शेषं तु ह्रदनामादि, यदत्र नोपदर्शितम् । तज्जम्बूद्वीपवद् ज्ञेयं, विशेषो ह्यत्र दर्श्यते ॥ ८ ॥ मध्येऽत्र मेरुश्चतुरशीतिं तुङ्गः सहस्रकान् । योजनानां सहस्रं चावगाढो वसुधांतरे ॥ ९ ॥ शतानि पञ्चनवतिं, मूले भूमिगते पृथुः । चतुर्नवतिमेव क्ष्मातले शतानि विस्तृतः ॥ २१० ॥ यत्रोत्तीर्य योजनादौ, व्यासोऽस्य ज्ञातुमिष्यते । तस्मिन् दशहृते लब्धे, सहस्राढ्ये च तत्र सः ॥ ११ ॥ तथाहि—शिरोऽग्राच्चतुरशीतेः, सहस्राणामतिक्रमे । व्यासे जिज्ञासित एतान्, सहस्रान् दशभिर्भजेत् ॥ १२ ॥ लब्धान्येवं च चतुरशीतिः शतानि तान्यथ । सहस्राढ्यानि पूर्वोक्तो, विष्कम्भोऽस्य भुवस्तले ॥ १३ ॥ मूलाद्यदोर्द्धगमने, विष्कम्भो ज्ञातुमिष्यते । तदा यावद्यातमूर्द्धं, तत्संख्यां दशभिर्भजेत् ॥ १४ ॥ लब्धे च मूलविष्कम्भाच्छोधिते यत्तु तिष्ठति । तत्र तावत्प-

माणोऽस्य, विष्कम्भो लभ्यते गिरेः ॥ १५ ॥ यथोर्द्ध्वं चतुरशीतौ, सहस्रेषु भुवस्तलात् । गतेषु चतुरशीतिं, सहस्रान् दशभिर्भजेत् ॥ १६ ॥ लब्धानि चतुरशीतिः, शतानि तानि शोधयेत् । भूतलव्यासतः शेषा, साहस्री मूर्ध्नि विस्तृतिः ॥ १७ ॥ आम्नायोऽयं कर्णगत्या, मेरुनिम्नोन्नतत्वयोः । ज्ञेयोऽविवक्षणात्प्राग्वन्मेखलायुग्मजातयोः ॥ १८ ॥ श्रियं श्रयत्ययमपि, चतुर्भिश्चारुकाननैः । दन्तैरैरावत इव, दैत्यारिरिव बाहुभिः ॥ १९ ॥ तत्र भूमौ भद्रसालवनं तरुलताघनम् । तरणित्रासितं ध्वान्तमिवैतत्पादमाश्रितम् ॥ २० ॥ प्राच्यां प्रतीच्यां प्रत्येकं, तद्दीर्घं लक्षयोजनीम् । सहस्रान् सप्तैकोनाशीतीन्यष्ट शतानि च ॥ २१ ॥ प्राच्येऽथवा प्रतीचीने, दैर्घ्येऽष्टाशीतिभाजिते । यल्लब्धं सोऽस्य विष्कम्भो, दक्षिणोत्तरयोः स च ॥ २२ ॥ योजनानां पञ्चविंशाः, शता द्वादश कीर्त्तिताः । एकोनसप्ततिश्चांशा, अष्टाशीतिसमुद्भवाः ॥ २३ ॥ अष्टाशीत्या गुणितायामेतस्यां पुनराप्यते । प्राच्यां प्रतीच्यां चायामो, यः प्रागस्य निरूपितः ॥ २४ ॥ एवं प्रमाणविस्तारायाममेतद् वनं पुनः । गजदन्तमन्दराद्रिनदीभिरष्टधा कृतम् ॥ २५ ॥ तच्च जम्बूद्वीपभद्रसालवद्भाव्यतां बुधैः । तथैवैतद्वक्ष्यमाणवनकूटादिकस्थितिः ॥ २६ ॥ अथोत्क्रम्य योजनानां, शतानि पञ्च भूतलात् । कट्यां नन्दनवन्मेरो, राजते नन्दनं वनम् ॥ २७ ॥ तच्च चक्रवालतया, शतानि पञ्च विस्तृतम् । अनल्पकल्पफलदलतामण्डपमण्डितम् ॥ २८ ॥ बहिर्विष्कम्भोऽत्र मेरोरुक्ताम्नायेन लभ्यते । योजनानां सहस्राणि, नव द्व्यर्द्धं शतत्रयम् ॥ २९ ॥ तथाहि—उत्क्रान्तायाः पञ्चशत्या, दशभिर्भजने सति । लब्धपञ्चाशतोऽधःस्थव्यासात्त्यागे

उत्तरकुर्वादिस्वरूपं

२०

२५



२८

भवेद्‌यम् ॥ ३० ॥ बहिर्व्यासात्पञ्चशत्यास्त्यागे चोभयतः पृथक् । अन्तर्व्यासोऽष्टौ सहस्राणि त्रिशत्या सार्द्ध-
याऽधिकाः ॥ ३१ ॥ सहस्राणि पञ्चपञ्चाशतं पञ्चशतीं तथा । अतिक्रम्य योजनानामूर्द्ध्वं नन्दनकाननात् ॥३२॥
अत्रान्तरे सौमनसं, स्यात्पञ्चशतविस्तृतम् । चक्रवालतया मेरोर्ग्रैवेयकमिवामलम् ॥ ३३ ॥ बहिर्विष्कम्भोऽत्र
गिरेर्गुरुभिर्गदितो मम । योजनानां सहस्राणि, त्रीण्येवाष्टौ शतानि च ॥ ३४ ॥ तथाहि—षट्पञ्चाशत्सह-
स्राणि, यान्यतीतानि भूतलात् । एषां दशमभागः स्यात्षट्पञ्चाशच्छतात्मकः ॥ ३५ ॥ असौ भूतलविष्क-
म्भात्पूर्वोक्तादपनीयते । तस्थुर्यथोदितान्येवमष्टात्रिंशच्छतानि वै ॥ ३६ ॥ सहस्रापगमे चास्मात्स्यादन्तर्गिरि-
विस्तृतिः । द्वे सहस्रे योजनानां, शतैरष्टभिरन्विते ॥ ३७ ॥ अथैतस्माद्वनादूर्द्ध्वमुत्क्रान्तैर्मेरुमूर्द्धनि । अष्टाविं-
शत्या सहस्रैर्योजनैः पण्डकं वनम् ॥ ३८ ॥ चक्रवालतया तच्च, विस्तीर्णं वर्णितं जिनैः । चतुर्नवत्याऽभ्यधिकां,
योजनानां चतुःशतीम् ॥ ३९ ॥ तच्चैवं—मेरुमस्तकविष्कम्भात्सहस्रयोजनोन्मितात् । मध्यस्थचूलिकाव्यासो,
द्वादशयोजनात्मकः ॥ ४० ॥ शोध्यते तच्छेषमर्द्धीकृतं पण्डकविस्तृतिः । शेषा शिलादिस्थितिर्या, सा जम्बू-
द्वीपमेरुवत् ॥ ४१ ॥ तथैवास्य मरकतमयी शिरसि चूलिका । नानारत्ननिर्मितेन, शोभिता जिनसद्मना ॥४२॥
एवं यदन्यदप्यत्र, कूटचैत्यादि नोदितम् । जम्बूद्वीपमेरुवत्तद्वक्तव्यं सुधिया धिया ॥ ४३ ॥ एवं यथाऽस्य
द्वीपस्य, पूर्वार्द्धमिह वर्णितम् । पश्चिमार्द्धमपि तथा, विज्ञेयमविशेषितम् ॥ ४४ ॥ गजदन्तप्रमाणाद्यौ, विशेषो
यस्तु कश्चन । स तु तत्तत्प्रकरणे, नामग्राहं निरूपितः ॥ ४५ ॥ किंच—विजये पुष्कलावत्यां, वप्राख्ये विजये

तथा । वत्से च नलिनावत्यां, विहरन्त्यधुना जिनाः ॥ ४६ ॥ प्राचीनेऽर्द्धे सुजातोऽर्हन्, स्वयंप्रभर्षभाननौ ।
श्रीमाननन्तवीर्यश्च, पश्चिमार्द्धे तु तेष्वमी ॥ ४७ ॥ सूरप्रभो जिनः श्रीमान्, विशालो जगदीश्वरः । जग-
त्पूज्यो वज्रधरश्चन्द्राननः प्रभुः क्रमात् ॥ ४८ ॥ एवं चात्र—श्रियं दधाते द्वौ मेरू, द्वीपस्यास्य कराविव । उद-
स्तौ पृथुताद्पान्नभसो निजिघृक्षया ॥ ४९ ॥ यद्वोद्दण्डकरौ बद्धकच्छौ च नन्दनच्छलात् । स्पर्द्धया संमुखिनौ
द्वौ, महामल्लाविवोत्थितौ ॥ ५० ॥ स्थापयत्येकधाऽऽत्मानं, मेर्वैकाङ्गुलिसंज्ञया । जम्बूद्वीपेऽयमेताभ्यां, द्विधा तं
स्थापयन्निव ॥ ५१ ॥ अनलंभूष्णुनोत्थातुं, द्वीपेनानेन वाङ्कात् । धृतौ दण्डाविवोदण्डौ, मेरू द्वाविह राजतः
॥ ५२ ॥ वर्षाद्रयो द्वादशाष्टषष्टिर्वैताढ्यभूधराः । दीर्घा अष्टौ च वृत्तास्ते, काञ्चनाद्रिचतुःशती ॥ ५३ ॥ वक्ष-
स्काराद्रयो द्वात्रिंशदष्टौ गजदन्तकाः । द्वौ चित्रौ द्वौ विचित्रौ च, चत्वारो यमकाचलाः ॥ ५४ ॥ इषुकारद्वयं
चैवं, सर्वाग्रेणात्र भूभृताम् । चत्वारिंशा पञ्चशती, चत्वारश्च महाद्रुमाः ॥ ५५ ॥ चतुर्दशात्र वर्षाणि, चतस्रः
कुरवोऽपि च । षट् कर्मभूमयोऽकर्मभूमयो द्वादश स्मृताः ॥ ५६॥ दीर्घवैताढ्येषु कूटाः, प्राग्वन्नव नवोदिताः ।
सक्रोशषड्योजनोच्चा, द्वादशा षट्शतीति ते ॥ ५७ ॥ रुक्मिमहाहिमवन्तः, कूटैरष्टभिरष्टभिः । सप्तभिश्च
सौमनसौ, तथा च गन्धमादनौ ॥ ५८ ॥ मेर्वोर्द्धे नन्दनवने, निषधौ नीलवद्गिरी । विद्युत्प्रभौ माल्यवन्तौ,
नवकूटाः समेऽप्यमी ॥ ५९ ॥ हिमवन्तौ शिखरिणौ, तैरेकादशभिर्युतौ । वक्षस्कारगिरीणां च, प्रत्येकं तच्चतु-
ष्टयम् ॥ ६० ॥ त्रयः शताः स्युर्द्वाविंशाः, कूटान्येतानि तत्र च । षोडश त्रिशती प्रोक्तहिमवद्गिरिकूटवत्

मेरुतद्वन-विहरज्जिनादिस्वरूपम्

२०

२५



२८

॥ ६१ ॥ हरिकूटौ द्वयोर्विद्युत्प्रभयोर्यौ हरिस्सहौ । माल्यवतोर्बलकूटौ, मेरुनन्दनयोश्च यौ ॥ ६२ ॥ एते षडपि
साहस्रास्त्रैधानामिति मानतः । चतुस्त्रिंशाद्रिकूटानामेवं नवशती भवेत् ॥ ६३ ॥ सहेषुकारकूटैर्द्वाचत्वारिंशा
शता नव । तत्रेषुकारकूटानां, मानं तु नोपलभ्यते ॥ ६४ ॥ चतुःषष्टौ विजयेषु, भरतैरवतेषु च । स्युरष्टषष्टि-
र्वृषभकूटा एकैकभावतः ॥ ६५ ॥ धातक्यादिषु चतुष्के, द्वयोश्च भद्रसालयोः । अष्टाष्टेति च सर्वाग्रे, भूकूटाः
षोडशं शतम् ॥ ६६ ॥ एतेषां वक्तुमुचिते, पर्वतत्वेऽपि वस्तुतः । कूटत्वव्यवहारस्तु, पूर्वाचार्यानुरोधतः ॥६७॥
महाह्रदा द्वादशैव, विंशतिश्च कुरुह्रदाः । श्रीह्रीधृतिकीर्त्तिबुद्धिलक्ष्मीनां च द्वयं द्वयम् ॥ ६८ ॥ सहस्रा द्वाद-
शैकोनत्रिंशल्लक्षाश्च कीर्त्तिताः । तरङ्गिणीनामेतस्मिन्, द्वीपे मतान्तरे पुनः ॥ ६९ ॥ पञ्चत्रिंशल्लक्षाणि चतु-
रशीतिः सहस्रकाश्चैव । इह संभवन्ति सरितां तत्त्वं तु विदन्ति तत्त्वज्ञाः ॥ ७० ॥ ( आर्या ) विदेहयुग्मे
प्रत्येकं, स्युः कुण्डान्यष्टसप्ततिः । द्वे द्वे च शेषवर्षेषु, शतमेवमशीतियुक् ॥ ७१ ॥ एतेऽद्रयो ह्रदाः कूटाः,
कुण्डान्येतान्यथापगाः । स्युर्वेदिकावनोपेतास्तत्स्वरूपं तु पूर्ववत् ॥ ७२ ॥ एषां याम्योदीच्यवर्षसरिच्छैलादिव-
र्त्तिनाम् । विजयस्वर्गिवत्प्रौढसमृद्धीनां सुधाभुजाम् ॥ ७३ ॥ दक्षिणस्यामुदीच्यां च, जम्बूद्वीपस्थमेरुतः ।
अन्यस्मिन् धातकीखण्डे, राजधान्यो जिनैः स्मृताः ॥ ७४ ॥ श्रेण्यश्चतस्रः प्रत्येकं, वैताढ्येष्विति मीलिताः ।
श्रेण्यो भवन्ति द्वीपेऽस्मिन्, द्विशती सद्विसप्ततिः ॥ ७५ ॥ दशोत्तरं पुरशतं, प्रतिवैताढ्यमित्यतः । तेषां
सहस्राः सप्त स्युः, साशीतिश्च चतुःशती ॥ ७६ ॥ जघन्यतोऽष्टेह जिना भवेयुरुत्कर्षतस्ते पुनरष्टषष्टिः । जघ-

न्यतः केशवचक्रिरामा, अष्टावथोत्कृष्टपदे तु षष्टिः ॥ ७७ ॥ ( उपजातिः )। सद्वादशा स्युर्निधयोऽत्र षट्-शती, प्रक ( प्रोत्क ) र्षतस्तान्युपभोगभाञ्जि तु । द्विविंशतिः पञ्च शतानि च ध्रुवं, द्वासप्ततिस्तानि जघन्यत-स्तथा ॥ ७८ ॥ ( इन्द्रवंशा ) विंशानि चत्वारि शतानि पञ्चैकाक्षाणि रत्नानि पृथग् भवेयुः । उत्कर्षतस्तानि जघन्यतश्च, पञ्चाशदाढ्या ननु षड्भिरेव ॥ ७९ ॥ ( इन्द्रवज्रा ) द्वादशोष्णमहसः सुधांशवो, द्वादश ग्रहसह-स्रमन्वितम् । षड्युतार्द्धशतकेन (१०५६) भानि षट्त्रिंशता समधिकं शतत्रयम् ॥ ८० ॥ ( रथोद्धता ) त्रिभिः सहस्रैरधिकानि लक्षाण्यष्टौ तथा सप्त शतानि चात्र । स्युः कोटिकोट्यः किल तारकाणां, तमोऽङ्कुरोन्मूलन-कारकाणाम् ॥ ८१ ॥ ( उपजातिः ) द्वीपोऽयमेवं गदितस्वरूपः, कालोदनाम्नोदधिना परीतः । विभाति दीप्र-प्रधिनेव चक्रमिवेभसेनावलयेन भूपः ॥ ८२ ॥ ( उप० ) कालो महाकाल इतीह देवौ, प्राच्यप्रतीच्यार्द्धधृताधि-कारौ । तद्दैवतः श्यामतमोदकश्च, तदेष कालोद इति प्रसिद्धः ॥ ८३ ॥ ( उप० ) लक्षाण्यष्टौ विस्तृतो योज-नानामुद्विद्धोऽयं योजनानां सहस्रम् । आदावन्ते मध्यदेशे समानोद्वेधः सर्वत्रापि पूर्णह्रदाभः ॥ ८४ ॥ ( शालिनी ) न चूला न वेला न च क्षोभितास्मिन्, न पातालकुम्भादिका वा व्यवस्था । सदम्भोदमुक्तोदक-स्वादुनीरः, प्रसन्नश्च साधोर्मनोवद्गभीरः ॥ ८५ ॥ ( भुजंगप्रयातं ) लक्षाण्यथैकनवतिः परिधिः सहस्राः, स्यात् ससतिः षडिह पञ्चयुताः शताश्च । द्वारैश्चतुर्भिरयमप्यभितो विभाति, पूर्वादिदिक्षु विजयादिभिरुक्तरूपैः ॥८६॥ ( वसन्ततिलका ) लक्षा द्वाविंशतिश्च द्विनवतिरुपरि स्युः सहस्राणि नूनं, षट्चत्वारिंशदाढ्या जिनपतिग-

कूटश्रेणिनगरनिधिरत्नसूर्यादिसंख्या

२०

२५



२८

दिता षट्शती योजनानाम् । पादोनं योजनं चान्तरमिह निखिलद्वार्षु तुल्यप्रमाणं, (३२९२६४६ क्रो ३) कालोदे द्वारपानां विजयवदुदिता राजधान्योऽपरस्मिन् ॥ ८७ ॥ ( स्रग्धरा ) प्राक्प्रतीच्योर्दिशोर्द्वादश द्वादश, द्वादशेभ्यः सहस्रेभ्य एवान्तरे । सन्ति कालोदधौ धातकीखण्डतोऽत्रान्तरींपा अमुष्यामृतोष्णत्विषाम् ॥ ८८ ॥ ( मौक्तिकदाम ) पुष्करद्वीपतोऽप्येवमत्राम्बुधौ, तावता प्राक्प्रतीच्योः सुधोष्णत्विषाम् । नेत्रवेदैर्मिता (४२) नेत्रवेदैर्मिता (४२), एतदब्धिस्पृशामन्तरीपाः स्थिताः ॥ ८९ ॥ ( मौक्ति० ) अन्तरीपा अमी गौतमद्वीपवद्भावनीयाः स्वरूपप्रमाणादिभिः । वेदिकाकाननालङ्कृताः सर्वतः, क्रोशयुग्मोच्छ्रिता वारिधेर्वारितः ॥९०॥ (मौक्ति०) अथाम्भोधावस्मिन्नमृतरुचयस्तिग्मकिरणा, द्विचत्वारिंशत्स्युर्ग्रहगृहसहस्रत्रयमथ । शतैः षड्भिर्युक्तं षडधिकनवत्या समधिकैः, सहस्रं षट्सप्तत्यधिकशतयुक् चात्र भगणः ॥ ९१ ॥ ( शिखरिणी ) पंचाशदूना नियतं सहस्रास्त्रयोदशेभाक्षि (२८) मिताश्च लक्षाः । स्युस्तारकाणामिह कोटिकोट्यः (२८१२ ९५० शू १४), कालोदधौ तीर्थकरोपदिष्टाः ॥ ९२ ॥ (उपजातिः) विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, द्वाविंशो मधुरः समाप्तिमगमत्सर्गो निसर्गोज्ज्वलः ॥ ९३ ॥

॥ इति श्रीलोकप्रकाशे धातकीवर्णको द्वाविंशतितमः सर्गः समाप्तः ॥ ग्रन्थाग्रं ३१४ ॥

## ॥ अथ त्रयोविंशतितमः सर्गः प्रारभ्यते ॥



वक्ष्येऽथ पुष्करवरद्वीपं कैकयदेशवत् । विशेषितार्द्धमावेष्ट्य, स्थितं कालोदवारिधिम् ॥ १ ॥ वक्ष्यमाणस्वरूपैर्यच्छोभितश्चारुपुष्करैः । ततोऽयं पुष्करवर, इति प्रसिद्धिमीयिवान् ॥ २ ॥ चक्रवालतयैतस्य, विस्तारो वर्णितः श्रुते । योजनानां षोडशैव, लक्षा न्यक्षार्थवेदिभिः ॥ ३ ॥ द्वीपस्यास्य मध्यदेशे, शैलोऽस्ति मानुषोत्तरः । अन्विताख्यो नरक्षेत्रसीमाकारितयोत्तरः ॥ ४ ॥ उभयोः पार्श्वयोश्चारुवेदिकावनमण्डितः । योजनानामेकविंशान्, शतान् सप्तदशोच्छ्रितः ॥ ५ ॥ चतुःशतीं योजनानां, त्रिंशां क्रोशाधिकां भुवि । मग्नो मूले सहस्रं च, द्वाविंशं किल विस्तृतः ॥ ६ ॥ त्रयोविंशानि मध्येऽयं, शतानि सप्त विस्तृतः । चतुर्विंशानि चत्वारि, शतान्युपरिविस्तृतः ॥ ७ ॥ यथेष्टस्थानविष्कम्भज्ञानोपायस्तु साम्यतः । भाव्यो वेलन्धरावासगोस्तूपादिगिरिष्विव ॥ ८ ॥ अग्रेतनं पादयुग्मं, यथोत्तम्भ्य निषीदति । पुताभ्यां केसरी पादद्वयं संकोच्य पश्चिमम् ॥ ९ ॥ ततः शिरःप्रदेशो स, विभाति भृशमुन्नतः । तथा पाश्चात्यभागे च, निम्नो निम्नतरः क्रमात् ॥ १० ॥ तद्वदेष गिरिः सिंहोपवेशनाकृतिस्ततः । यद्वा यवार्द्धसंस्थानसंस्थितोऽयं तथैव हि ॥ ११ ॥ समभित्तिः सर्वतुङ्गो, जम्बूद्वीपस्य दिश्ययम् । प्रदेशहान्या पश्चात्तु, निम्नो निम्नतरः क्रमात् ॥ १२ ॥ अत्रायं संप्रदायः—द्वे सहस्रे चतुश्चत्वारिंशे मूले सुविस्तृतम् । शतान्यष्टाष्टचत्वारिंशानि मूर्ध्नि च विस्तृतम् ॥ १३ ॥ एकविंशान् शतान्

संसदशोच्चं वलयाकृतिम् । प्रकल्प्याद्रिं ततोऽस्याभ्यन्तरार्द्धेऽपहृते सति ॥ १४ ॥ विस्तारमधिकृत्याथ, शेषस्ति-
ष्ठति यादृशः । तादृशोऽयं संप्रदायात्, प्रज्ञप्तो मानुषोत्तरः ॥ १५ ॥ वसन्त्यस्योर्द्धं सुपर्णकुमारा निर्जरा बहिः ।
मध्ये मनुष्याश्चेत्येष, त्रिधा गिरिरलङ्कृतः ॥ १६ ॥ तथोक्तं जीवाभिगमसूत्रे—"माणुसुत्तरस्स णं पव्वयस्स
अंतो मणुआ उप्पिं सुवण्णा बाहिं देवा" इति। जाम्बूनदमयश्चित्रमणिरत्नविनिर्मितैः । लतागृहैर्दीर्घिकाभि-
र्मण्डपैश्चैष मण्डितः ॥ १७ ॥ कूटैः षोडशभिश्चैष, समन्तादृत्यलङ्कृतः । नानारत्नमयै रम्यैः, प्राकारोऽट्टाल-
कैरिव ॥ १८ ॥ त्रयं त्रयं स्यात्कूटानां, पङ्क्त्या दिशां चतुष्टये । द्वादशाप्येकैकदेवाधिष्ठितानि भवन्त्यथ ॥१९॥
उक्तं च स्थानाङ्गवृत्तौ—"पुव्वेण तिन्नि कूडा दाहिणओ तिन्नि तिन्नि अवरेण । उत्तरओ तिन्नि भवे चउद्दिसिं
माणुसनगस्स ॥ २० ॥" त्ति । विदिक्षु चत्वारि तत्राग्नेय्यां रत्नाभिधं भवेत् । निवासभूतं तद्वेणुदेवस्य गरुडे-
शितुः ॥ २१ ॥ रत्नोच्चयाख्यं नैर्ऋत्यां, वेलम्बस्यानिलेशितुः । नाम्ना विलम्बसुखदमित्यप्येतन्निरूपितम् ॥ २२ ॥
पूर्वोत्तरस्यां च कूटं, सर्वरत्नाभिधं भवेत् । तत्सुपर्णकुमारेन्द्रवेणुदालेः किलास्पदम् ॥ २३ ॥ तथाऽपरोत्तरस्यां
स्यात्तद्रत्नसंचयाभिधम् । प्रभञ्जनपराख्यं च, प्रभञ्जनसुरेशितुः ॥ २४ ॥ अत्र यद्यपि रत्नादीनि चत्वारि कूटानि
स्थानाङ्गसूत्रे चतुर्दिशमुक्तानि, तथाहि—"माणुसुत्तरस्स णं पव्वयस्स चउदिसिं चत्तारि कूडा पं० तं०–रयणे
रयणुच्चये सव्वरयणे रयणसंचए"इति, तथाप्येतत्सूत्रं श्रीअभयदेवसूरिभिरेवं व्याख्यातं—तथाहि—"इह च
दिग्ग्रहणेऽपि विदिक्ष्विति द्रष्टव्यं, तथा एवं चैतद्व्याख्यायते द्वीपसागरप्रज्ञप्तिसंग्रहण्यनुसारेणे"त्यादि । चतु-

५

१०

१४

दिशमिहैकैकः, कूटे भाति जिनालयः । दिशां चतसृणां रत्नकिरीट इव भासुरः ॥ २५ ॥ तथोक्तं चिरं जयक्षेत्रसमाससूत्रे—"चउसुवि उसुयारेसुं इक्किकं नरनगंमि चत्तारि । कूडोवरि जिणभवणा कुलगिरिजिणभवणपरिमाणा ॥ २६ ॥" इति । साक्षान्न यद्यपि प्रोक्तः, सिद्धान्तेऽत्र जिनालयः । तथाप्यागमवाग्लिङ्गादनुमानात्प्रतीयते ॥ २७ ॥ यतो विद्याचारणर्षितिर्यग्गतिनिदर्शने । विश्रामोऽत्र गिरौ प्रोक्तश्चैत्यवन्दनपूर्वकः ॥ २८ ॥ तथाह पञ्चमाङ्गे—"विज्जाचारणस्स णं भंते ! तिरियं केवतिए गतिविसए पन्नत्ते ?, गो० ! से णं इओ एगेणं उप्पाएणं माणुसुत्तरे पव्वए समोसरणं करेइ, माणु० २ त्ता तहिं चेइयाइं वंदति" । एतच्चास्मिन् विना चैत्यं, कथमौचित्यमञ्चति ?। ततोऽत्र जिनचैत्यानि, युक्तमूचुर्महर्षयः ॥ २९ ॥ एवं शाश्वतचैत्यानां, मान्यत्वं यो न मन्यते । सोऽप्यनेनैव वाक्येनोत्थातुं नेष्टे पराहतः ॥ ३० ॥ यश्चात्र चैत्यशब्दार्थं, विपर्यस्यति वातकी। तस्याप्येतच्चारणर्षिनमस्यावाक्यमौषधम् ॥ ३१ ॥ नहीदृशास्तपःशक्तिलब्धैतादृशलब्धयः । विना जिनादीन् वन्दन्ते, सम्यक्त्वभ्रंशभीलुकाः ॥ ३२ ॥ अथ प्रकृतं—अनेन पुष्करवरद्वीपो द्वेधा व्यधीयत । भित्त्येव गृहमस्यार्द्धद्वयं निर्दिश्यते ततः ॥ ३३ ॥ अभ्यन्तरं पुष्करार्द्धं, बाह्यं तदर्द्धमेव च । अर्वाचीनमान्तरार्द्धं, बाह्यमर्द्धं ततः परम् ॥ ३४ ॥ मानुषोत्तरशैलस्तु, बाह्यार्द्धक्षेत्ररोधकः । इत्यान्तरार्द्धं पूर्णाष्टलक्षयोजनसंमितम् ॥ ३५ ॥ तथाहुर्ज्ञानचन्दनमलयगिरयो मलयगिरयः—"अयं च मानुषोत्तरपर्वतो बाह्यपुष्करवरार्द्धभूमौ प्रतिपत्तव्य" इति बृहत्क्षेत्रसमासवृत्तौ । कोटिरेका द्विचत्वारिंशल्लक्षाणि सहस्रकाः । चतुस्त्रिंशच्छतान्यष्टौ, त्रयोविंशानि

मानुषोत्तरे कूटाश्चैत्यानि च

२०

२५



२८

चोपरि ॥ ३६ ॥ एतावद्योजनमितो, मानुषोत्तरभूभृतः । स्यान्मध्ये परिधिर्मौलौ, त्वस्यायं परिधिर्भवेत् ॥३७॥ कोटिरेकाऽथ लक्षाणि, द्विचत्वारिंशदेव च । द्वात्रिंशच्च सहस्राणि, द्वात्रिंशच्च शता नव ॥ ३८ ॥ पृथगुक्तौ परिक्षेपौ, यो मध्येऽस्य तथोपरि । बहिर्भागापेक्षया तौ, पार्श्वेऽस्याभ्यन्तरे पुनः ॥ ३९ ॥ समानभित्तिकतया, मूले मध्ये तथोपरि । तुल्य एव परिक्षेपः, सर्वत्राप्यवसीयताम् ॥ ४० ॥ एका कोटिर्द्विचत्वारिंशल्लक्षाणि सहस्रकाः । षट्त्रिंशच्च शताः सप्त, त्रयोदशसमन्विताः ॥ ४१ ॥ इति बृहत्क्षेत्रसमासवृत्त्यभिप्रायेण, जीवाभिगमसूत्रे 'सत्त चोद्दसुत्तरे जोअणसए' इत्युक्तं । एतावन्ति योजनानि, दृष्टानि जिननायकैः । मानुषोत्तरशैलस्य, बाह्यस्य परिधेर्मितौ ॥ ४२ ॥ द्विचत्वारिंशता लक्षैरेककोटिसमन्विता । त्रिंशत्सहस्राश्चैकोनपञ्चाशा द्विशती तथा ॥ ४३ ॥ मानुषोत्तरशैलस्यैतावान् परिधिरान्तरः । एष एवाभ्यन्तरस्य, पुष्करार्द्धस्य चान्तिमः ॥ ४४ ॥ नृक्षेत्रस्यापि परिधिरेष एवावसानिकः । अथास्य पुष्करार्द्धस्य, मध्यमः परिधिस्त्वयम् ॥ ४५ ॥ एका कोटी योजनानां, लक्षाः सप्तदशोपरि । सप्तविंशत्यन्वितानि, चत्वार्येव शतानि च ॥ ४६ ॥ कालोदस्यान्त्यपरिधिर्यः पूर्वमिह दर्शितः । स एव पुष्करार्द्धस्य, भवेत्परिधिरान्तरः ॥ ४७ ॥ द्विधेदमिषुकाराभ्यां, धातकीखण्डवत्कृतम् । अभ्यन्तरे पुष्करार्द्धे, तस्थिवद्‌भ्यामपागुदक् ॥ ४८ ॥ धातकीखण्डेषुकारसधर्माणाविमावपि । चतुष्कूटावन्त्यकूटस्थितोत्तुङ्गजिनालयौ ॥ ४९ ॥ एकेनान्तेन कालोदं, परेण मानुषोत्तरम् । स्पृष्टवन्तौ योज-

१ किंचिदधिकस्य योजनभागस्य व्यवहारेण योजनतया विवक्षणाद् चतुर्दशोत्तरसप्तशती अत्राख्याता स्यात् ॥

नानां, लक्षाण्यष्टायताविति ॥ ५० ॥ एवमभ्यंतरं पुष्करार्द्धं निर्दिश्यते द्विधा । पूर्वार्द्धं पश्चिमार्द्धं च, प्रत्येकं मेरुणाऽञ्चितम् ॥५१॥ पूर्वापरार्द्धयोरत्र, कालोदवेदिकान्ततः । पुरतः पुनरर्वाक् च, मानुषोत्तरपर्वतात् ॥ ५२ ॥ सहस्रान्नवनवतिं, प्रत्येकं लक्षकत्रयम् । योजनानामतीत्यास्ति, कुण्डमेकैकमद्भुतम् ॥ ५३ ॥ अधस्ते विस्तृते स्तोक-मुपर्युपर्यनुक्रमात् । विस्तीर्णे विस्तीर्णतरे, जायमाने शराववत् ॥५४॥ भुवस्तले द्वे सहस्रे, विस्तीर्णे योजनान्यथ । उद्विद्धे दश शुद्धाम्भोवीचीनिचयचारुणी ॥५५॥ द्वयोरप्यर्द्धयोरत्रैकैकमन्दरनिश्रया । षट् षट् वर्षधराः सप्त, सप्त क्षेत्राणि पूर्ववत् ॥ ५६ ॥ धातकीखण्डस्थवर्षधरद्विगुणविस्तृताः । भवन्त्यत्र वर्षधरा, उच्चत्वेन तु तैः समाः ॥ ५७ ॥ एवमत्रेषुकाराभ्यां, सह वर्षमहीभृताम् । विष्कम्भसंकलनया, नगरुद्धं भवेदियत् ॥ ५८ ॥ तिस्रो लक्षा योजनानां, पञ्चपञ्चाशदेव च । सहस्राणि चतुरशीत्यधिकानि शतानि षट् ॥ ५९ ॥ आद्यमध्या-न्त्यपरिधौ, प्राग्वदेतेन वर्जिते । द्वादश द्विशतक्षुण्णे, कल्प्यन्ते प्राग्वदंशकाः ॥ ६० ॥ वर्षवर्षधरभागकल्पना त्वत्र धातकीखण्डवद् ज्ञेया । द्वादशद्विशतोत्थास्ते, येऽत्रांशा योजनोपरि । क्षेत्राणामभिधिदिश्यादिरन्तश्च नगिरेर्दिशि ॥ ६१ ॥ तत्र याम्येषुकारस्योभयतोऽप्यर्द्धयोर्द्वयोः । एकैकमस्ति भरतं, स्वस्वस्वर्णगिरेर्दिशि ॥६२॥ सहस्राण्येकचत्वारिंशच्छतान् पञ्च विस्तृतम् । सैकोनाशीतीन् मुखेऽशशतं च सत्रिसप्ततिः ॥ ६३ ॥ त्रिपञ्चा-शत्सहस्राणि, द्वादशा पञ्चशत्यपि । शतं नवनवत्याढ्यमंशाश्च मध्यविस्तृतिः ॥ ६४ ॥ पञ्चषष्टिं सहस्राणि, योजनानां चतुःशतीम् । षट्चत्वारिंशां लवांश्च, त्रयोदशान्तविस्तृतः ॥ ६५ ॥ मध्यभागेऽस्य वैताढ्यो,

मानुषोत्तरः
इषुकारौ
कुण्डे भरते

२०

२५
॥२७७॥
२७

लक्षाण्यष्टौ स चायतः । धातकीखण्डवैताढ्यवच्छेषं त्विह भाव्यताम् ॥ ६६ ॥ अन्येऽपि दीर्घवैताढ्याः, स्युः ससषष्टिरीदृशाः । भरतैरवतक्षेत्रविदेहविजयोद्भवाः ॥ ६७ ॥ उत्तरार्द्धमध्यखण्डे, गाङ्गसैन्धवकुण्डयोः । मध्ये वृषभकूटोऽस्ति, जम्बूद्वीपर्षभाद्रिवत् ॥ ६८ ॥ पर्यन्तेऽस्य ततः शैलो, हिमवान्नाम वर्त्तते । आयामतोऽष्टौ लक्षाणि, विष्कम्भतो भवेदियान् ॥ ६९ ॥ योजनानां द्विचत्वारिंशच्छता दशसंयुताः । चतुश्चत्वारिंशदंशा-श्चतुरशीतिनिर्मिताः ॥ ७० ॥ तस्योपरि पद्महृदः, प्राग्वत्पद्मालिमण्डितः । सहस्रांश्चतुरो दीर्घः, सहस्रद्वय-विस्तृतः ॥ ७१ ॥ गङ्गासिन्धुरोहितांशास्ततो नद्यो विनिर्ययुः । प्राच्यां प्रतीच्यामुदीच्यां, क्रमात्तत्रादिमे उभे ॥ ७२ ॥ हृदोद्गमे योजनानि, विस्तीर्णे पञ्चविंशतिम् । उद्विद्धे च योजनार्द्धं, समुद्रसंगमे पुनः ॥ ७३ ॥ विस्तीर्णे द्वे शते सार्द्धे, उद्विद्धे पञ्चयोजनीम् । तत्र सिन्धुः प्राच्यपुष्करार्द्धात्कालोदमञ्चति ॥ ७४ ॥ गङ्गा तु प्राप्य पूर्वस्यां, मानुषोत्तरभूधरम् । सुमतिर्दुष्टसंसर्गादिव तत्र विलीयते ॥ ७५ ॥ पश्चिमार्द्धात्पुनर्गङ्गा, याति कालोदवारिधौ । सिन्धुर्नरोत्तरनगपादमूले विलीयते ॥ ७६ ॥ एवं नरोत्तरनगाभिमुखाः सरितोऽखिलाः । विलीयन्त इह ततः, परं तासामभावतः ॥ ७७ ॥ गङ्गासिन्धुप्रपाताख्ये, कुण्डे विष्कम्भतो मते । चत्वारिंश-त्समधिकं, योजनानां शतद्वयम् ॥ ७८ ॥ तदन्तर्वर्त्तिनौ द्वीपौ, प्रज्ञप्तौ विस्तृतायतौ । द्वात्रिंशद्योजनी मूलप्र-वाह इव जिह्विके ॥ ७९ ॥ गङ्गासिन्धुरक्तवतीरक्तास्वेतन्निरूपणम् । षट्त्रिंशशतसङ्ख्यासु, सर्वमप्यविशेषितम् ॥ ८० ॥ रोहितांशा योजनानि, पञ्चाशन्नदनिर्गमे । विस्तीर्णैकयोजनं चोद्विद्धोदीच्यां नगोपरि ॥ ८१ ॥ एका-

५

१०

१४

दश योजनानां, शतान् पञ्चसमन्वितान् । अंशान् द्वाविंशतिं गत्वा, कुण्डं प्राप्याथ पूर्ववत् ॥ ८२ ॥ क्षेत्रं
हैमवतं द्वेधा, स्वप्रवाहेण कुर्वती । कालोदं याति पूर्वार्द्धे, परार्द्धे मानुषोत्तरम् ॥ ८३ ॥ त्रिभिर्विशेषकम् ।
अस्याः कुण्डं योजनानामशीत्याढ्या चतुःशती । विष्कम्भायामतो मूलप्रवाहवच्च जिह्विका ॥ ८४ ॥ अस्याः
कुण्डान्तर्गतश्च, द्वीपो भवति यः स तु । चतुःषष्टिर्योजनानि, विष्कम्भायामतो मतः ॥ ८५ ॥ रूप्यकूले
स्वर्णकूले, रोहिते रोहितांशिके । अष्टाप्येतास्तुल्यरूपाः, स्वरूपपरिवारतः ॥ ८६ ॥ अथोत्तरं हिमवतः, क्षेत्रं
हैमवतं स्थितम् । वृत्तवैताढ्येन शब्दापातिनाऽलङ्कृतान्तरम् ॥ ८७ ॥ मुखे लक्षं योजनानां, षट्षष्टिं च सहस्र-
कान् । एकोनविंशां त्रिशतीं, षट्पञ्चाशल्लवांस्ततम् ॥ ८८ ॥ लक्षद्वयं योजनानां, सहस्राणि चतुर्दश । एकप-
ञ्चाशानि ततं, मध्येऽंशान् षष्टियुक् शतम् ॥ ८९ ॥ अन्ते शतान् सचतुरशीतीन् सप्त सहस्रकान् । एकषष्टिं
द्विलक्षीं च, द्वापञ्चाशल्लवांस्ततम् ॥ ९० ॥ जम्बूद्वीपस्थायिवृत्तवैताढ्यैः सदृशा यथा । धातकीखण्डस्थवृत्तवै-
ताढ्याः सर्वथा तथा ॥ ९१ ॥ अत्रापि वृत्ता वैताढ्याः, पूर्वोक्तैः सदृशाः समे । शब्दापातिप्रभृतयः, प्रत्ये-
तव्या मनस्विभिः ॥ ९२ ॥ द्वाभ्यां चतुर्भिरष्टाभिर्योजनैरन्तरं क्रमात् । स्वापगाभ्यां शब्दगन्धापातिमेरुमही-
भृताम् ॥ ९३ ॥ विकटापातिनोमाल्यवतोस्तथान्तरं क्रमात् । स्वस्वक्षेत्रापगाभ्यां द्वे, योजने तच्चतुष्टयम् ॥९४॥
अस्योत्तरस्यां च महाहिमवान् वर्त्तते गिरिः । लक्षाणयष्टायतो मौलौ, महापद्मह्रदाङ्कितः ॥ ९५ ॥ योजनानां
सहस्राणि, षोडशाष्टौ शतानि च । द्विचत्वारिंशदाढ्यानि, कलाश्चाष्टैष विस्तृतः ॥ ९६ ॥ महापद्मह्रदस्त्वष्टौ,

सहस्राण्यायतो भवेत् । योजनानां सहस्राणि, चत्वारि चैष विस्तृतः ॥ ९७ ॥ दक्षिणस्यामुदीच्यां च, नद्यौ द्वे निर्गते इतः । रोहिता हरिकान्ता च, ते उभे पर्वतोपरि ॥ ९८ ॥ चतुःषष्टिं शतान्येकविंशान्यंशचतुष्टयम् । अतीत्य स्वस्वकुण्डान्तर्निपत्य निर्गते ततः ॥ ९९ ॥ पूर्वार्द्धाद् हैमवतगा, नराद्रिं याति रोहिता । अपरार्द्धात्तु सा याति, कालोदनामवारिधिम् ॥ १०० ॥ हरिकान्ता पुनर्याति, कालोदं हरिवर्षगा । पूर्वार्द्धादपरार्द्धात्तु, याति सा मानुषोत्तरम् ॥ १ ॥ नद्योर्हरिसलिलयोर्हरिकान्ताख्ययोरपि । तयोर्नारीकान्तयोश्च, तथैव नरकान्तयोः ॥ २ ॥ इत्यष्टानामापगानां, विष्कम्भो ह्रदनिर्गमे । भवेच्छतं योजनानामुण्डत्वं योजनद्वयम् ॥ ३ ॥ पर्यन्ते च योजनानां सहस्रमिह विस्तृतिः । उण्डत्वं च योजनानां, विंशतिः परिकीर्त्तितम् ॥ ४ ॥ विष्कम्भायामतः कुण्डान्येतासां जगदुर्जिनाः । षष्ट्याढ्यानि योजनानां, शतानीह नव श्रुते ॥ ५ ॥ अष्टाविंशं शतं द्वीपाश्चैतासां विस्तृतायताः । जिह्विका विस्तृतोद्विद्धाश्चासां मूलप्रवाहवत् ॥ ६ ॥ शैलात्ततः परं क्षेत्रं, हरिवर्षं विराजते । तद्गन्धापातिवैताढ्येनाश्रितं विस्तृतं मुखे ॥ ७ ॥ लक्षाणि षड् योजनानां, पञ्चषष्टिं सहस्रकान् । द्वे शते सप्तसप्तत्याऽधिके द्वादश चांशकान् ॥ ८ ॥ युग्मम् ॥ अष्टौ लक्षाः सहस्राणि, षट्पञ्चाशच्छतद्वयम् । सप्तोत्तरं योजनानां, मध्येऽशांश्चतुरस्ततम् ॥ ९ ॥ सहस्रैः सप्तचत्वारिंशताढ्या दशलक्षिकाः । षट्त्रिंशं च योजनानां, शतमंशशतद्वयम् ॥ १० ॥ अष्टाढ्यं विस्तीर्णमन्ते, स्वरूपमपरं पुनः । जम्बूद्वीपहरिवर्षवदिहापि विभाव्यताम् ॥ ११ ॥ इतः परश्च निषधः, पर्वतः सर्वतः स्फुरन् । ह्रदेनालङ्कृतो मूर्ध्नि, सद्बोन तिगि-

ञ्छिना ॥ १२ ॥ सप्तषष्टिं सहस्राणि, साष्टषष्टि शतत्रयम् । योजनानां लवान् द्वात्रिंशतं स्यादेष विस्तृतः
॥ १३ ॥ तिगिञ्छिस्तु योजनानां, सहस्राण्यष्ट विस्तृतः । सहस्राणि षोडशैष, भवेदायामतः पुनः ॥ १४ ॥ एत-
साद्धरिसलिला, शीतोदेति निरीयतुः । दक्षिणस्यामुदीच्यां च, पर्वतोपर्यमू उभे ॥ १५ ॥ एकोनत्रिंशतं गत्वा,
सहस्रान् षट् शतानि च । योजनानां सचतुरशीतीन् षोडश चांशकान् ॥ १६ ॥ पततः स्वस्वकुण्डान्तर्हरिव-
र्षान्तराध्वना । पूर्वार्द्धार्द्धरिसलिला, प्राप्नोति मानुषोत्तरम् ॥ १७ ॥ पश्चिमार्द्धगता सा तु, कालोदमुपसर्पति ।
सर्वासां दिग्विनिमय, एवं पूर्वापरार्द्धयोः ॥ १८ ॥ पूर्वार्द्धशीतोदा प्रत्यग्विदेहार्द्धविभेदिनी । कालोदमन्या-
र्द्धस्था तु, प्राप्नोति मानुषोत्तरम् ॥ १९ ॥ एताश्चतस्रो विस्तीर्णा, द्वे शते ह्रदनिर्गमे । चत्वार्युण्डा योजनानि,
प्रान्ते दशगुणास्ततः ॥ २० ॥ विस्तीर्णान्यायतान्यासां, कुण्डानि च चतसृणाम् । सविंशानि योजनानां,
शतान्येकोनविंशतिम् ॥ २१ ॥ एतत्कुण्डान्तर्गताश्च, द्वीपाः प्रोक्ता महर्षिभिः । पट्पञ्चाशे योजनानां, द्वे
शते विस्तृतायताः ॥ २२ ॥ सर्वे कुण्डगता द्वीपाः, कोशद्वयोच्छ्रिता इति । तैर्जम्बूद्वीपगैस्तुल्या, उच्छ्रयेण
नगा इव ॥ २३ ॥ यथेदमर्द्धं व्याख्यातं, याम्यं पूर्वापरार्द्धयोः । तथा ज्ञेयमुदीच्यार्द्धमपि मानस्वरूपतः ॥ २४ ॥
किन्तूदीच्येषुकारार्द्धे, परतः पार्श्वयोर्द्वयोः । स्याद्वैकैकमैरवतक्षेत्रं भरतसन्निभम् ॥ २५ ॥ पुण्डरीकह्रदोपेतस्त-
त्र शिखरी गिरिः । तस्माद्रक्ता रक्तवती, स्वर्णकूला विनिर्ययुः ॥ २६ ॥ तत्रादिमे द्वे सरितौ, क्षेत्रमैरवतं
गते । जगाम हैरण्यवतं, स्वर्णकूला तु वाहिनी ॥ २७ ॥ ततश्च हैरण्यवतं, विकटापातिनाऽङ्कितम् । ततो महा-

रोहितादि
नरकान्ता-
न्तं

२०

२५
॥२७९॥

२८

पुंडरीकह्रद्वान् रुक्मिपर्वतः ॥ २८ ॥ एतद्भवा रूप्यकूला, हैरण्यवतगामिनी । रम्यकान्तर्नरकान्ता, प्रयात्येत-
त्समुद्भवा ॥ २९ ॥ ततोऽर्वाग् रम्यकक्षेत्रं, माल्यवद्वृत्तभूधरम् । केसरिह्रद्वन्नीलवन्नामा पर्वतस्ततः ॥ ३० ॥
प्रवर्त्तते विदेहान्तः, शीतैतन्नगसंम्भवा । नारीकान्ता रम्यकान्तः, प्रसर्पत्येतदुद्गता ॥ ३१ ॥ एषु क्षेत्रेषु पूर्वा-
र्द्धान्नद्यो याः पूर्वसंमुखाः । ता मानुषोत्तरं यान्ति, कालोदं पश्चिमामुखाः ॥ ३२ ॥ पश्चिमार्द्धात्तु कालोदं,
प्रयान्ति पूर्वसंमुखाः । पश्चिमाभिमुखास्तास्तु, प्रयान्ति मानुषोत्तरम् ॥ ३३ ॥ मध्ये क्षेत्रं विदेहाख्यं, नील-
वन्निषधागयोः । एकैकं मेरुणोपेतं, भाति पूर्वापरार्द्धयोः ॥ ३४ ॥ अष्टाचत्वारिंशदंशान्, लक्षाः षड्विंशतिं
मुखे । योजनान्येकषष्टिं सहस्रान् साष्टशतं ततम् ॥ ३५ ॥ २६६११०८ ऽ ४८ । तथा लक्षाश्चतुस्त्रिंशद्योज-
नानां समन्विताः । चतुर्विंशत्या सहस्रैरष्टाविंशं शताष्टकम् ॥ ३६ ॥ षोडशांशाश्च विस्तीर्णं, मध्ये तस्य च
विस्तृतिः । लक्षाण्यथैकचत्वारिंशदष्टाशीतिरेव च ॥ ३७ ॥ सहस्राणि ससचत्वारिंशा पञ्चशती तथा । योज-
नानामंशशतं, षण्णवत्या समन्वितम् ॥ ३८ ॥ सहस्राणि योजनानामेकोनविंशतिस्तथा । सचतुर्नवतिः ससं-
शती क्रोशस्तथोपरि ॥ ३९ ॥ विष्कम्भः प्रतिविजयं, प्रत्येकमर्द्धयोर्द्वयोः । योजनानां द्वे सहस्रे, वक्षस्काराद्रि-
विस्तृतिः ॥ ४० ॥ प्रत्येकमन्तर्नद्यश्च, शतानि पञ्च विस्तृताः । स्वरूपं सर्वमत्रान्यद्धातकीखण्डवद्भवेत् ॥ ४१ ॥
अष्टानां वनमुखानां, विस्तृतिः स्याल्लघीयसी । एकोनविंशतिभवाश्चत्वारो योजनांशकाः ॥ ४२ ॥ एकादश
सहस्राणि, योजनानां शतानि षट् । साष्टाशीतीनि चैतेषां, विस्तृतिः स्याद्गरीयसी ॥ ४३ ॥ उपवर्षधरं गुर्वी,

लघ्वी च सरिदन्तिके । तेषां चतुर्णां कालोदबहिर्भागस्पृशां भवेत् ॥ ४४ ॥ चतुर्णां तु नरनगासन्नानां विस्तृतिर्गुरुः । शीताशीतोदान्तिकेऽन्या, नीलवन्निषधान्तिके ॥ ४५ ॥ पूर्वापरं भद्रसालवनायामः समन्वितः । मेरुविष्कम्भेण सह, गर्भभागात्मको भवेत् ॥ ४६ ॥ चत्वारिंशत्सहस्राणि, लक्षाश्चतस्र एव च । योजनानां नवशती, निर्दिष्टा षोडशोत्तरा ॥ ४७ ॥ षोडशानां विजयानां, व्याससंकलना त्वियम् । तिस्रो लक्षा योजनानां, सहस्राणि च षोडश ॥ ४८ ॥ सप्तशत्यष्टोत्तराऽथ, वक्षस्कारमहीभृताम् । अष्टानां तत्संकलना, स्युः सहस्राणि षोडश ॥ ४९ ॥ षण्णामन्तर्नदीनां तु, व्याससङ्कलना भवेत् । सहस्राणि त्रीणि वनमुखयोरुभयोस्त्वियम् ॥ ५० ॥ षट्सप्ततिस्पृक् त्रिशती, सहस्राक्ष्यक्षि ( २३ ) संमिताः । द्वीपव्यासोऽष्ट लक्षाणि, सर्वसंकलने भवेत् ॥ ५१ ॥ अत्रापीष्टान्यविष्कम्भवर्जितद्वीपविस्तृतेः । स्वस्वसङ्ख्याविभक्ताया, लभ्यतेऽभीष्टविस्तृतिः ॥ ५२ ॥ भावना धातकीखण्डवत् । महाविदेहविष्कम्भे, यथेष्टस्थानगोचरे । शीताशीतोदान्यतरव्यासहीनेऽर्द्धिते सति ॥ ५३ ॥ विजयांतर्नदीवक्षस्कारान्तिमवनायतिः । ज्ञायते सा तत्र तत्र, स्थाने भाव्या स्वयं बुधैः ॥ ५४ ॥ अथ देवकुरूणां यः, प्राच्यां सौमनसो गिरिः । तथोत्तरकुरूणां यः, पूर्वस्यां माल्यवानिमौ ॥ ५५ ॥ त्रिचत्वारिंशत्सहस्रान्, लक्षा विंशतिमायतौ । एकोनविंशां द्विशतीं, योजनानामुभावपि ॥ ५६ ॥ देवोत्तरकुरुभ्यश्च, प्रतीच्यां यौ व्यवस्थितौ । विद्युत्प्रभगिरिर्गन्धमादनश्चायतावुभौ ॥ ५७ ॥ योजनानां षोडशैव, लक्षाः षड्विंशतिं तथा । सहस्राणि शतमेकं, संपूर्णं षोडशोत्तरम् ॥ ५८ ॥ इदं मानं पुष्करार्द्धप्राचीनार्ध-

रम्यकादि गजदन्तान्तं

२०

२५



२८

व्यपेक्षया । पश्चिमार्द्धे विपर्यासो, धातकीखडवत् स तु ॥ ५९ ॥ अष्टाप्येते गजदन्ता, नीलवन्निषधान्तिके । सहस्रद्वयविस्तीर्णाः, सूक्ष्माश्च मन्दरान्तिके ॥६०॥ विदेहमध्यविष्कम्भान्मेरुव्यासे विशोधिते । शेषेऽर्द्धिते च विष्कम्भः, प्रत्येतव्यः कुरुद्वये ॥६१॥ लक्षाः सप्तदश सप्त, सहस्राणि शतानि च । चतुर्दशानि सप्तैव, योजनानां लवाष्टकम् ॥ ६२॥ मेरुयुक्तभद्रसालायामात्प्रागुपदर्शितात् । गजदन्तद्वयहीनाच्छेषं जीवा कुरुद्वये ॥ ६३ ॥ लक्षाश्चतस्रः षट्त्रिंशत्, सहस्राणि शतानि च । नवैव षोडशाढ्यानि, योजनानीति तन्मितिः ॥६४॥ आयाममानयोः प्राच्यप्रतीच्यगजदन्तयोः । योगे भवेद्धनुःपृष्ठं, कुरुद्वय इदं तु तत् ॥ ६५ ॥ लक्षाः षट्त्रिंशदेकोनसप्ततिश्च सहस्रकाः । शतत्रयं योजनानां, पञ्चत्रिंशत्समन्वितम् ॥ ६६ ॥ धातकीखण्डवदिहाप्यग्रतो नीलवद्गिरेः । यमकावुदक्कुरुषु, सहस्रं विस्तृतायतौ ॥ ६७॥ ततः परं ह्रदाः पञ्च, स्युर्दक्षिणोत्तरायताः । सहस्रांश्चतुरो दीर्घा, द्वे सहस्रे च विस्तृताः ॥ ६८ ॥ नीलवतो यमकयोस्ताभ्यामाद्यह्रदस्य च । मिथो ह्रदानां क्षेत्रान्तसीम्नश्च पञ्चमह्रदात् ॥ ६९ ॥ सप्ताप्येतान्यन्तराणि, तुल्यान्यैकैकं पुनः । लक्षद्वयं योजनानां, चत्वारिंशत्सहस्रकाः ॥ ७० ॥ शतानि नव चैकोनषष्टीनि योजनस्य च । सप्तक्षुण्णस्यैकभागस्तत्रोपपत्तिरुच्यते ॥७१॥ दैर्घ्यं ह्रदानां पञ्चानां, यत्सहस्राणि विंशतिः । सहस्रयमकव्यासयुक्तं तत्कुरुविस्तृतेः ॥७२॥ विशोध्यतेऽथ यच्छेषं, तत्सप्तभिर्विभज्यते । सप्तानां व्यवधानानामेवं मानं यथोदितम् ॥ ७३ ॥ उदक्कुरुषु पूर्वार्द्धे, पद्मनामा महातरुः । पश्चिमार्द्धे महापद्मस्तौ जम्बूवृक्षसोदरौ ॥७४॥ पद्मनाम्नो भूमिरुहः, पद्मनामा सुरः पतिः । महापद्मस्य तु स्वामी, पुण्डरीकः

५

१०

१४

सुरोत्तमः ॥ ७५ ॥ स्युर्देवकुरवोऽप्येवं, किंत्वत्र निषधात्परौ । विचित्रचित्रावचलौ, ततः पञ्च ह्रदाः क्रमात्
॥ ७६ ॥ पूर्वार्द्धे चापरार्द्धे च, स्यातां शाल्मलिनाविह । जम्बूवृक्षसधर्माणावेतावपि स्वरूपतः ॥ ७७ ॥ पुष्क-
रार्द्धेऽथ यौ मेरू, स्यातां पूर्वापरार्द्धयोः । धातकीखण्डस्थमेरुसमानौ तौ तु सर्वथा ॥ ७८ ॥ किंत्वेतयोर्भद्र-
सालवनयोरायतिर्भवेत् । लक्षद्वयं पंचदश, सहस्राणि शतानि तु ॥ ७९ ॥ अष्टपञ्चाशानि सप्त, पूर्वपश्चि-
मयोर्दिशोः । प्रत्येकं दक्षिणोदीच्यः, स्याद्व्यासस्त्वयमेतयोः ॥ ८० ॥ द्विसहस्रैकपञ्चाशा, योजनानां चतुःशती ।
अष्टाशीत्या योजनस्य, भक्तस्यांशाश्च सप्ततिः ॥ ८१ ॥ उपपत्तिस्त्वत्र प्राग्वत् । शेषा त्वत्र नन्दनादिवन-
वक्तव्यताऽखिला । धातकीखण्डमेरुभ्यां, पुनरुक्तेति नोच्यते ॥ ८२ ॥ जाम्बूद्वीपो महामेरुश्चतुर्भिर्मेरुभिः
श्रियम् । धत्ते तीर्थंकर इव, चतुर्भिः परमेष्ठिभिः ॥ ८३ ॥ प्रागुक्ताख्येषु पूर्वार्द्धे, विजयेष्वधुना जिनाः ।
चन्द्रबाहुर्भुजङ्गश्चेश्वरो नेमिप्रभोऽपि च ॥ ८४ ॥ पश्चिमार्द्धे तु तेष्वेव, वीरसेनो जिनेश्वरः । महाभद्रदेव-
यशोऽजितवीर्या इति क्रमात् ॥ ८५ ॥ द्वीपार्धेऽस्मिन्नगादीनां, संग्रहः सर्वसंख्यया । धातकीखण्डवद् ज्ञेयोऽवि-
शेषान्नोदितः पृथक् ॥ ८६ ॥ द्विसप्ततिः शशभृतस्तावन्त एव भास्कराः । षट् सहस्राणि षट्त्रिंशा, त्रिंश-
त्यत्र महाग्रहाः ॥ ८७ ॥ नक्षत्राणां सहस्रे द्वे, प्रज्ञप्ते षोडशोत्तरे । प्रमाणमथ ताराणां, पुष्करार्द्धे निरूप्यते
॥ ८८ ॥ अष्टचत्वारिंशदिह, लक्षा द्वाविंशतिस्तथा । सहस्राणि द्वे शते च, स्युस्ताराः कोटिकोटयः ॥ ८९ ॥
एवं च-लक्षाण्यष्टौ पुष्करार्द्धे, तावान्कालोदवारिधिः । चत्वारि धातकीखण्डो, द्वे लक्षे लवणोदधिः ॥ ९० ॥

कुर्वादि मू-
र्यादिमानं
च

२०

२५



२८

एवं द्वाविंशतिर्लक्षाण्येकतः परतोऽपि च। मध्ये जम्बूद्वीप एकं, लक्षमायतविस्तृतः ॥ ९१ ॥ पञ्चचत्वारिंशदेवं, लक्षाण्यायतविस्तृतम्। नरक्षेत्रं परिक्षेपो, ज्ञेयोऽस्य पुष्करार्द्धवत् ॥ ९२ ॥ एतावतो नरक्षेत्रात्, परतो न भवेन्नृणाम्। गर्भाधानं जन्ममृत्यू, संमूर्छिमनरोद्भवः ॥ ९३ ॥ आसन्नप्रसवां कश्चित्स्त्रियं नयति चेत्सुरः। नरक्षेत्रात्परं नासौ, प्रसूते तत्र कर्हिचित् ॥ ९४ ॥ यदि कण्ठगतप्राणो, मनुष्यक्षेत्रतः परम्। मनुष्यो नीयते नासौ, म्रियते तत्र कर्हिचित् ॥ ९५ ॥ अथावश्यंभाविजन्मक्षीणायुष्कौ च तौ यदि। तदा सुरस्य तन्नेतुर्भवेद्वाऽन्यस्य कस्यचित् ॥ ९६ ॥ मनस्तथैव येनैनामासन्नप्रसवां स्त्रियम्। तं वा कण्ठगतप्राणं, नरक्षेत्रे पुनर्नयेत् ॥ ९७ ॥ युग्मम्। एवं नातः परमहर्निशादिसमयस्थितिः। न बादराग्निर्न नदी, न विद्युद्गर्जिनीरदाः ॥ ९८ ॥ नार्हदाद्या न निधयो, नायने नैव चाकराः। नेन्दुवृद्धिक्षयौ नोपरागोऽर्केन्द्वोर्न वा गतिः ॥ ९९ ॥ तथाहुः–“अरिहंतसमयबायरअग्गी विज्जू बलाहगा थणिआ। आगरनइनिहिउवराग निग्गमे वुड्ढिअयणं च ॥ २०० ॥” एतत्सर्वमर्थतो जीवाभिगमसूत्रे चतुर्थप्रतिपत्तौ। क्षेत्रेषु पञ्चचत्वारिंशतीह भरतादिषु। अन्तर्द्वीपेषु षट्पञ्चाशत्येव संभवेन्नृणाम् ॥१॥ बाहुल्याज्जन्म मृत्युश्च, वार्द्धिवर्षधरादिषु। शेषेषु तु नृणां जन्म, प्रायेण नोपपद्यते ॥ २ ॥ युग्मम्। मृत्युस्तु संहरणतो, विद्यालब्धिबलेन वा। गतानां तत्र तत्रायुःक्षयात्संभवति क्वचित् ॥ ३ ॥ अथैतस्मिन्नरक्षेत्रे, वर्षक्षेत्रादिसंग्रहः। क्रियते सुखबोधाय, तदर्थोऽयं ह्युपक्रमः ॥ ४ ॥ अध्यर्द्धौ द्वाविह द्वीपौ, द्वावेव च पयोनिधी। भरतान्यैरवतानि, विदेहाः पञ्च पञ्च च ॥ ५ ॥ एवं पञ्चदश कर्मभूमयोऽत्र

प्रकीर्त्तिताः । देवोत्तराख्याः कुरवो, हैरण्यवतरम्यके ॥ ६ ॥ हैमवतं हरिवर्षं, पञ्च पञ्च पृथक् पृथक् । सर्वा-
ण्यपि त्रिंशदेवं, भवंत्यकर्मभूमयः ॥ ७ ॥ अन्तर्द्वीपाश्च षट्पञ्चाशदेवं युग्मिभूमयः । षडशीतिर्नरस्थानान्ये-
वमेकोत्तरं शतम् ॥ ८ ॥ तथाऽत्र मेरवः पञ्च, विंशतिर्गजदन्तकाः । वक्षस्काराद्रयोऽशीतिः, सहस्रं काञ्चना-
चलाः ॥ ९ ॥ विचित्राः पञ्च चित्राश्च, पञ्चाथ यमकाचलाः । दश त्रिंशद्वर्षधरा, इषुकारचतुष्टयम् ॥ १० ॥
विंशतिर्वृत्तवैताढ्याः, शतं दीर्घाः ससप्ततिः । एकोनपञ्चाशान्यद्रिशतान्येवं त्रयोदश ॥ ११ ॥ अष्टौ दाढाः
पार्वताः स्युः, कूटास्त्विह चतुर्विधाः । वैताढ्यशेषाद्रिसहस्रांकभूकूटभेदतः ॥ १२ ॥ तत्र च-सार्द्धं सहस्रं वैता-
ढ्यकूटानां त्रिशताऽधिकम् । शेषाद्रिकूटानामष्टशती षडधिका भवेत् ॥ १३ ॥ सहस्राङ्काः पञ्चदशेत्येवं
कूटानि भूभृताम् । सर्वाग्रेणैकपञ्चाशे, द्वे सहस्रे शतत्रयम् ॥ १४ ॥ भद्रसालवने मेरोर्यानि दिक्षु विदिक्षु च ।
तानि दिग्गजकूटानि, चत्वारिंशद्भवेदिह ॥ १५ ॥ द्रूणां दशानामष्टाष्ट, यानि दिक्षु विदिक्षु च । कूटानि
तान्यशीतिः स्युर्नृक्षेत्रे सर्वसंख्यया ॥ १६ ॥ शतं वृषभकूटानां, ससत्याऽधिकमाहितम् । भवन्त्येवं भूमिकूटा,
नवत्याढ्यं शतद्वयम् ॥ १७ ॥ महावृक्षा दश तत्र, पञ्च शाल्मलिसंज्ञकाः । शेषा जम्बूर्धातकी च, पद्म-
श्चान्यौ महापरौ ॥ १८ ॥ महाह्रदास्त्रिंशदिह, पञ्चाशच्च कुरुह्रदाः । भवत्यशीतिरित्येवं, ह्रदानां सर्व-
संख्यया ॥ १९ ॥ भरतादिक्षेत्रमहानदीकुण्डानि सप्ततिः । विदेहविजयस्थानि, तानि विंशं शतत्रयम् ॥२०॥
षष्टिरन्तर्नदीनां स्युरित्येवं सर्वसंख्यया । चतुःशतीह कुण्डानां, पञ्चाशदधिका भवेत् ॥ २१ ॥ भरतादि-

नृक्षेत्रीयाः पदार्थाः

२०

२५



२८

क्षेत्रगता, महानद्योऽत्र ससतिः । विदेहविजयस्थानां, तासां विंशं शतत्रयम् ॥ २२ ॥ अन्तर्नद्यः षष्टिरिति, परिच्छदजुषामिह । पञ्चाशा मुख्यसरितां, सर्वाग्रेण चतुःशती ॥ २३ ॥ सा चैवं-गंगासिन्धुरक्तवतीरक्ताः प्रत्येकमीरिताः । पञ्चाशीतिस्तथा शीताशीतोदारूप्यकूलिकाः ॥ २४ ॥ स्वर्णकूला नरकान्ता, नारीकान्ता च रोहिता । रोहितांशा हरिकान्ता, हर्यादिसलिलापि च ॥ २५ ॥ द्वादशान्तरनद्यश्च, पञ्च पञ्चाखिला इमाः । परिच्छदापगास्त्वासां, ज्ञेयाः पूर्वोक्तया दिशा ॥ २६ ॥ एवं द्विसप्ततिर्लक्षा, अशीतिश्च सहस्रकाः । भवंति मनुजक्षेत्रे, नद्योऽन्यस्मिन् मते पुनः ॥ २७ ॥ एकोननवतिर्लक्षाः, सहस्राः षष्टिरेव च । एतच्चान्तरापगानां, पृथक्तत्रविवक्षया ॥ २८ ॥ इदं च नदीसर्वाग्रं जम्बूद्वीपगतमहानदीतुल्यपरिवाराणां धातकीखण्डपुष्करार्द्धगतमहानदीनां संभावनयोक्तं, धातकीखण्डपुष्करार्द्धयोर्महानदीनां परिवारे जम्बूद्वीपवर्त्तिमहानदीपरिवारापेक्षया द्वैगुण्यादिविशेषस्तु बृहत्क्षेत्रविचारादिषु क्वापि न दृष्ट इति नोक्त इति ज्ञेयं । उत्कर्षतो जिना अत्र, स्युः सप्तत्यधिकं शतम् । ते द्वितीयार्हतः काले, विहरन्तोऽभवन्निह ॥ २९ ॥ केवलज्ञानिनामेवमुत्कर्षान्नव कोटयः । नव कोटिसहस्राणि, तथोत्कर्षेण साधवः ॥ ३० ॥ जघन्यतो विंशतिः स्युर्भगवन्तोऽधुनापि ते । विदेहेष्वेव चत्वारश्चत्वारो विहरन्ति हि ॥ ३१ ॥ ते चामी-सीमंधरं १ स्तौमि युगंधरं २ च, बाहुं ३ सुबाहुं ४ च सुजातदेवम् ५ । स्वयंप्रभं ६ श्रीवृषभाननाख्य ७ मनन्तवीर्यं ८ च विशालनाथम् ९ ॥ ३२ ॥ (उप.) । सूरप्रभं १० वज्रधरं ११ च चंद्राननं १२ नमामि प्रभुभद्रबाहुम् १३ ।

भुजङ्ग १४ नेमिप्रभ १५ तीर्थनाथावथेश्वरं १६ श्रीजिनवीरसेनम् १७ ॥ ३३ ॥ (उप.) स्तवीमि च महाभद्रं १८, श्रीदेवयशसं १९ तथा । अर्हन्तमजितवीर्यं २०, वन्दे विंशतिमर्हताम् ॥ ३४ ॥ पञ्चस्वपि विदेहेषु, पूर्वापरार्द्धयोः किल । एकैकस्य विहरतः, संभवाज्जगदीशितुः ॥ ३५ ॥ दशैव विहरन्तः स्युर्जघन्येन जिनेश्वराः । इत्यूचुः सूरयः केचित्, तत्त्वं वेत्ति त्रिकालवित् ॥ ३६ ॥ तथोक्तं प्रवचनसारोद्धारसूत्रे–'सत्तरिसयमुक्कोसं जहन्न वीसा य दस य विहरंति' इति, उक्ताज्जघन्यादूनास्तु, विहरन्तो भवन्ति न । ततोऽन्येऽपि यथास्थानं, स्युर्गार्हस्थ्याद्यवस्थया ॥ ३७ ॥ कोटिद्वयं केवलिनो, द्वे च कोटिसहस्रके । साधवः स्युर्जघन्येन, न्यूना इतो भवन्ति न ॥ ३८ ॥ यद्येकः केवली तेभ्यः, सिद्ध्येत्साधुर्दिवं व्रजेत् । तदाऽवश्यं भवेदन्यः, केवली प्रव्रजेत्परः ॥३९॥ चक्रिशार्ङ्गिशीरिणां च, शतं पञ्चाशताधिकम् । उत्कर्षतो जघन्येन, ते भवन्तीह विंशतिः ॥ ४० ॥ तथोक्तं प्रवचनसारोद्धारे–"उक्कोसेणं चक्की सयं दिवड्ढं च कम्मभूमिसुं । वीसं जहन्नभावे केसवसंखावि एमेव ॥ ४१ ॥" जम्बूद्वीपप्रज्ञप्त्या अप्ययमेवाभिप्रायः; श्रीसमवायांगे तु–"धायईसंडे णं दीवे अडसट्ठिं चक्किविजया य अडसट्ठिं रायहाणीओ, तत्थ णं उक्कोसपए अडसट्ठिं अरहंता समुप्पज्जिंसु वा ३, एवं चक्कवट्टी समुप्पज्जिंसु वा ३, एवं बलदेवा वासुदेवा समु०, पुक्खरदीवड्ढेणं अडसट्ठिं विजया, एवं अरिहंता

१ अनार्षमिदं, यत एवं सति प्रभूतानां जिनानामेकस्मिन् क्षेत्रे संभवापत्तिः, कपिलहरिवृत्तेक्षकाणां विरुद्धश्चार्हदादिद्वयस्याप्येकक्षेत्रे सद्भावः न चैवं तीर्थसत्तापि तेषां स्यात् निर्वाणात् परतः, हीरप्रश्ने एतद्वक्तृतायाः कटुकमतिनिश्रिततया भणनाच्च, विहरच्छब्देन सद्भाव एव ।

नरक्षेत्रे नद्यादिमानं

२०

२५
२६

समु० जाव वासुदेवा," इत्युक्तमिति ज्ञेयं। स्यान्निधीनां पञ्चदशशती त्रिंशाऽत्र सत्तया। जघन्यतश्चक्रिभोग्यं, तेषां शतमशीतियुक् ॥ ४२ ॥ उत्कर्षतश्चक्रिभोग्यनिधीनां पुनरेकदा। पञ्चशताधिकानीह, स्युः शतानि त्रयोदश ॥ ४३ ॥ उत्कर्षतोऽत्र रत्नानां, स्युः शतान्येकविंशतिः। जघन्यतः पुनस्तेषां, द्विशत्यशीतिसंयुता ॥ ४४ ॥ पञ्चाक्षैकाक्षरत्नानां, चत्वारिंशं शतं भवेत्। जघन्येनोत्कर्षतश्च, सपञ्चाशं सहस्रकम् ॥ ४५ ॥ शतं सप्तत्या समेतं, चक्रिजेतव्यभूमयः। भरताद्या दशक्षेत्री, विजयाः षष्टियुक् शतम् ॥ ४६ ॥ आभियोगिकविद्याभृच्छ्रेणीनां सर्वसंख्यया। साशीतीनि षट् शतानि, विद्याभृतां पुराणि च ॥ ४७ ॥ अष्टादश सहस्राणि, शतानि सप्त चोपरि। अयोध्यादिराजधान्यः, शतं सप्ततिसंयुतम् ॥ ४८ ॥ द्वे पङ्क्ती इह चन्द्राणां, द्वे च पङ्क्ती विवस्वताम्। एकैकान्तरिता एवं, चतस्र इह पङ्क्तयः ॥ ४९ ॥ प्रतिपङ्क्ति च षट्षष्टिसंख्याकाः शशिभास्कराः। सूचीश्रेण्या स्थिता जम्बूद्वीपेन्दुरविभिः समम् ॥ ५० ॥ एवं पङ्क्तयश्चतस्रोऽपि, पर्यटन्ति दिवानिशम्। मृगयन्त्य इवाशेषवश्चकं कालतस्करम् ॥ ५१ ॥ द्वात्रिंशं शतमित्येवं, नरक्षेत्रे हिमांशवः। द्वात्रिंशं शतमर्काश्च, शोभन्तेऽदभ्रतेजसः ॥ ५२ ॥ नक्षत्राणां पङ्क्तयश्च, षट्पञ्चाशद्भवेदिह। प्रतिपङ्क्ति च षट्षष्टिः, षट्षष्टिः स्युरुडून्यपि ॥ ५३ ॥ जम्बूद्वीपस्थतत्तद्भैः, पङ्क्त्या चरन्त्यमून्यपि। जम्बूद्वीपग्रहैः पङ्क्त्या, चरन्त्येवं ग्रहा अपि ॥ ५४ ॥ ग्रहाणां पङ्क्तयश्चात्र, षट्सप्तत्यधिकं शतम्। प्रतिपङ्क्ति च षट्षष्टिः, षट्-

१ भिन्नकालापेक्षयैतत्, प्राक्तनं त्वेककालापेक्षमिति न विरुद्धता, मूलागम एव विदेहेषु चक्रिकालासंभविवासुदेवचतुष्कोक्तेः।

षष्टिः स्युर्ग्रहा अपि ॥ ५५ ॥ एवं च–भानां शतानि षट्त्रिंशत्, पणवत्यधिकान्यथ । एकादश ग्रहसहस्राः शताः षोडशाश्च षट् ॥ ५६ ॥ स्युस्ताराः कोटिकोट्योऽष्टाशीत्या लक्षकैर्मिताः । सहस्रैरपि चत्वारिंशता शतैश्च सप्तभिः ॥ ५७ ॥

अथात्र यानि चैत्यानि, शाश्वतान्यथ तेषु याः । अर्हतां प्रतिमा वन्दे, ताः संख्याय श्रुतोदिताः ॥ ५८ ॥ शतास्त्रयोदशैकोनपञ्चाशा ये पुरोदिताः । गिरीणां तेषु ये पञ्च, मेरवः प्राग्निरूपिताः ॥ ५९ ॥ मेरौ मेरौ काननेषु, चतुर्षु दिक्चतुष्टये । चैत्यमेकैकमेकं च, मूर्ध्नि सप्तदशेति च ॥ ६० ॥ प्रतिमाः प्रतिचैत्यं च, विंशं शतमिहोदिताः । त्रिद्वारेषु हि चैत्येषु, भवन्तीयत्य एव ताः ॥ ६१ ॥ प्रतिद्वारं शाश्वतेषु, यच्चैत्येष्वखिलेष्वपि । स्युः षट् षट् स्थानानि तथा, ह्येकः स्यान्मुखमण्डपः ॥ ६२ ॥ ततो रङ्गमण्डपः स्यात्पीठं मणिमयं ततः । स्तूपस्तदुपरि चतुःप्रतिमालङ्कृतोऽभितः ॥ ६३ ॥ ततोऽशोकतरोः पीठं, पीठं केतोस्ततः परम् । ततोऽप्यग्रे भवेद्वापी, स्वर्वापीवामलोदका ॥ ६४ ॥ एवं त्रयाणां द्वाराणां, प्रतिमा द्वादशाभवन् । अष्टोत्तरं शतं गर्भगृहे विंशं शतं ततः ॥ ६५ ॥ चतुर्द्वाराणां च तेषामर्चा द्वारेषु षोडश । गर्भालये साष्टशतं, चतुर्विंशं शतं ततः ॥ ६६ ॥ नन्दीश्वरे द्विपञ्चाशत्कुण्डले रुचकेऽपि च । चत्वारि चत्वारि षष्टिरित्येवं सर्वसंख्यया ॥ ६७ ॥ चतुर्द्वाराणि चैत्यानि, शेषाणि तु जगत्त्रये । त्रिद्वाराण्येव चैत्यानि, विज्ञेयान्यखिलान्यपि ॥ ६८ ॥ युग्मम् । ज्योतिष्कभवनाधीशव्यन्तरावसथेषु च । सभार्चाभिस्सहैषु स्यात्साशीति प्रतिमाशतम् ॥ ६९ ॥ तच्चैवं–उपपाताभिषेकाख्ये,

नरक्षेत्रे निध्यादिमानं शाश्वतचैत्यप्रतिमामानं

२०

२५

॥ २८४

२७

अलङ्कारसभा पि च । व्यवसायसुधर्माख्ये, भान्ति पञ्चाप्यमूः सभाः ॥७०॥ द्वारैस्त्रिभिस्त्रिभिर्द्वारे, द्वारेऽर्चाभि-
श्चतसृभिः । भाति स्तूपः प्रतिसभं, द्वादश द्वादशेति ताः ॥ ७१ ॥ षष्टिः पञ्चानां सभानामिति प्रतिसुरालयम् ।
प्राग्वद्विंशं शतं चैत्ये, इत्यशीतियुतं शतम् ॥७२॥ एवमाद्वादशस्वर्गं, साशीतिप्रतिमाशतम् । ग्रैवेयकादिषु शतं,
विंशं चानुत्तरावधि ॥ ७३ ॥ अथ प्रकृतं–पञ्चानामिति मेरूणां, पञ्चाशीतिर्जिनालयाः । जिनार्चानां सहस्राणि,
दशोपरि शतद्वयम् ॥ ७४ ॥ शेषेषु सर्वगिरिषु, स्यादेकैको जिनालयः । सहस्रं ते चतुश्चत्वारिंशैस्त्रिभिः शतै-
र्युतम् ॥ ७५ ॥ सहस्रैरेकषष्ट्याढ्यं, लक्षमेकं शतद्वयम् । अशीत्याभ्यधिकं चात्र, जिनार्चाः प्रणिदध्महे ॥ ७६ ॥
यानि दिग्गजकूटानि, चत्वारिंशदिहोचिरे । तेष्वेकैकं चैत्यमष्टचत्वारिंशच्छतानि च ॥७७॥ अर्चास्तत्र नमस्कुर्मो,
भवेच्चैत्यमथैककम् । दशस्वपि कुरुष्वर्चाशतानि द्वादशात्र च ॥ ७८ ॥ जम्बूप्रभृतयो येऽत्र, महावृक्षा दशोदिताः ।
शतं ससदशं तेषु, प्रत्येकं स्युर्जिनालयाः ॥ ७९ ॥ एकस्तत्र मुख्यवृक्षे, शतमष्टाधिकं पुनः । अष्टाधिके वृक्षशते,
तत्परिक्षेपवर्त्तिनि ॥ ८० ॥ तद्दिग्विदिग्वर्त्तिकूटेष्वेकैक इति मीलिताः । एकादशशती ससत्याख्या वृक्ष-
जिनालयाः ॥ ८१ ॥ लक्षमेकं सहस्राणि, चत्वारिंशदथोपरि । चतुःशतीं जिनार्चानां, वृक्षेषु दशसु स्तुमे
॥ ८२ ॥ चतुःशतीह कुण्डानां, या पञ्चाशा निरूपिता । तत्र प्रासाद एकैकः, प्रतिमास्तत्र चार्हताम् ॥ ८३ ॥
चतुष्पञ्चाशत्सहस्रमिता नमस्करोम्यहम् । प्राक्तनैस्त्वत्र कुण्डानां, साशीतिस्त्रिशतीरिता ॥ ८४ ॥ पृथगम-
हानदीचैत्यसप्ततिश्च मया पुनः । महानदीष्वपि कुण्डेष्वेवं प्रासादसंभवः ॥ ८५ ॥ इत्थं संभाव्य पञ्चाशा,

चतुःशती यदीरिता। कुण्डचैत्यानां तदत्र, नदीचैत्यविवक्षया ॥ ८६ ॥ यदि चान्यत्र कुण्डेभ्यो, नदीषु चैत्यसंभवः। तदा वृद्धोक्तिरेवास्तु, प्रमाणं नाग्रहो मम ॥ ८७ ॥ अशीतिर्हृदचैत्यानि, प्रत्येकमेकयोगतः। अर्चा नव सहस्राणि, तेषु वन्दे शतानि षट् ॥ ८८ ॥ एवं मनुष्यक्षेत्रेऽस्मिंश्चैत्यानां सर्वसंख्यया। शतानि सैकोनाशीतीन्येकात्रिंशद्भवन्ति हि ॥ ८९ ॥ लक्षास्तिस्रो जिनार्चानां, तथैकाशीतिमेषु च। सहस्राणि नमस्यामि, साशीतिं च चतुःशतीम् ॥९०॥ नरक्षेत्रात्तु परतश्चत्वारि मानुषोत्तरे। नन्दीश्वरेऽष्टपष्टिश्च, रुचके कुण्डलेऽपि च ॥९१॥ चत्वारि चत्वारि चैत्यान्यशीतिरेवमत्र च। सहस्राणि नवार्चानां, चत्वारिंशाष्टशत्यपि ॥९२॥ एवं च तिर्यग्लोकेऽस्मिंश्चैत्यानां सर्वसंख्यया। सहस्राणि त्रीणि शतद्वयी चैकोनषष्टियुक् ॥ ९३ ॥ सहस्राण्येकनवतिं, लक्षास्तिस्रः शतत्रयम्। विंशमत्र जिनार्चानां, तिर्यग्लोके नमाम्यहम् ॥ ९४ ॥ ज्योतिष्काणां व्यन्तराणामसंख्येयेष्वसंख्यशः। विमानेषु नगरेषु, चैत्यान्यर्चाश्च संस्तुवे ॥ ९५ ॥ अधोलोकेऽपि भवनाधीशानां सप्त कोटयः। लक्षा द्विसप्ततिश्चोक्ता, भवनानां पुराऽत्र याः ॥ ९६ ॥ प्रत्येकं चैत्यमेकैकं, तत्रेति सप्त कोटयः। लक्षा द्विसप्ततिश्चाधोलोके चैत्यानि संख्यया ॥ ९७ ॥ त्रयोदश कोटिशतान्येकोननवतिं तथा। कोटीः षष्टिं च लक्षाणि, तत्रार्चानां स्मराम्यहम् ॥ ९८ ॥ ऊर्ध्वलोकेऽपि सौधर्मात्प्रभृत्यनुत्तरावधि। विमानसंख्या चतुरशीतिर्लक्षाणि वक्ष्यते ॥ ९९ ॥ सहस्राः सप्तनवतिस्त्रयोविंशतिरेव च। तावन्त्येवात्र चैत्यानि, प्रत्येकमेकयोगतः ॥ ३०० ॥ एकं कोटिशतं पूर्णं, द्विपञ्चाशच्च कोटयः। लक्षैश्चतुर्नवत्याढ्यः सहस्रैरपि संयुताः ॥ १ ॥

नरक्षेत्रे नन्दीश्वरादिषु च चैत्यमूर्तिमानं

२०

२५

चतुश्चत्वारिंशतैव, षष्ठ्याढ्यैः सप्तभिः शतैः । अर्चयामो जिनार्चानामूर्ध्वलोके सुरार्चिताः ॥ २ ॥ लक्षाणि सप्तपञ्चाशदित्येवमष्ट कोटयः । त्रैलोक्ये नित्यचैत्यानां, सद्व्यशीति शतद्वयम् ॥ ३ ॥ कोटीशतानीह पञ्चदशोपरि च कोटयः । द्विचत्वारिंशदेवाष्टपञ्चाशल्लक्षसंयुताः ॥ ४ ॥ सहस्राणि च षट्त्रिंशत्साशीतीनि जगत्रये । नौमि नित्यजिनार्चानां, करवै सफलं जनुः ॥ ५ ॥ उत्सेधाङ्गुलनिष्पन्नसप्तहस्तमिताः खलु । शाश्वत्यः प्रतिमा जैन्य, ऊर्ध्वाधोलोकयोर्मताः ॥ ६ ॥ तिर्यग्लोके तु निखिलास्ताः पञ्चभिर्धनुःशतैः । मिता निरूपितास्तत्त्वपरिच्छेदपयोधिभिः ॥ ७ ॥ तथाहुः–"उस्सेहमंगुलेणं अहउड्ढमसेससत्तरयणीओ । तिरिलोए पणधणुसय सासयपडिमा पणिवयामि ॥ ८ ॥" राजप्रश्नीयोपाङ्गवृत्तौ सूर्याभविमाने तु–'जिणुस्सेहपमाणमेत्ताओ संपलियंकनिसन्नाओ' अस्य व्याख्याने जिनोत्सेधप्रमाणमात्राः, जिनोत्सेध उत्कर्षतः पञ्च धनुःशतानि, जघन्यतः सप्त हस्ताः, इह तु पञ्च धनुःशतानि संभाव्यंते इत्युक्तमिति ज्ञेयं । वैमानिकविमानेषु, द्वीपे नन्दीश्वरेऽपि च । कुण्डले रुचकद्वीपे, प्रासादा ये स्युरर्हताम् ॥ ९ ॥ योजनानां शतं दीर्घाः, पञ्चाशतं च विस्तृताः । उत्तुङ्गाः कथिताः प्राज्ञैर्योजनानां द्विसप्ततिम् ॥ १० ॥ देवकुरूत्तरकुरुसुमेरुकाननेषु च । वक्षस्कारभूधरेषु, गजदन्ताचलेष्वपि ॥ ११ ॥ इषुकाराद्रिषु वर्षधरेषु मानुषोत्तरे । असुराणां निवासेषु, ये

१ शिष्यते–विशिष्यते इति शेषा–उत्कृष्टा न तथा अशेषा इति व्याख्याने न विरोधः, तिर्यग्लोके तु एक एव पक्षः पञ्चधनुःशतात्मकः ।

५ १० १२

प्रागुक्ता जिनालयाः ॥ १२ ॥ पञ्चाशतं योजनानि, दीर्घास्तदर्द्धविस्तृताः । पट्त्रिंशतं योजनानि, ते चोत्तुङ्गाः प्रकीर्त्तिताः ॥ १३ ॥ नागादीनां निकायानां, नवानां भवनेषु ये । जिनालया योजनानां, दीर्घास्ते पञ्चविंशतिम् ॥ १४ ॥ तानि द्वादश सार्द्धानि, पृथवोऽष्टादशोच्छ्रिताः । त्रिधाप्येतदर्द्धमाना, व्यन्तराणां जिनालयाः ॥ १५ ॥ ज्योतिष्कगतचैत्यानां, न मानमुपलभ्यते । प्रायः क्वाप्यागमे तस्मादस्माभिरपि नोदितम् ॥ १६ ॥ येऽथ मेरुचूलिकासु, तथैव यमकाद्रिषु । काञ्चनाद्रिदीर्घवृत्तवैताढ्येषु ह्रदेषु च ॥ १७ ॥ तथा दिग्गजकूटेषु, जम्ब्वादिषु द्रुमेषु च । प्रागुक्तेषु च कुण्डेषु, निरूपिता जिनालयाः ॥१८॥ क्रोशार्द्धपृथुलाः क्रोशदीर्घाश्चापशतानि च । चत्वारिंशानि ते सर्वे, चतुर्दश समुच्छ्रिताः ॥ १९ ॥ चैत्यानि यानि रचितानि जिनेश्वराणामन्यान्यपीह भरतप्रमुखैर्जगत्याम् । तेष्वार्हतीः प्रतिकृतीः प्रणमामि भक्त्या, त्रैकालिकीस्त्रिकरणामलतां विधाय ॥ २० ॥ ( वसन्ततिलका ) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रातिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गोऽन्यक्षिमितः समासिमगमत्पीयूषसारोपमः ॥ २१ ॥

॥ इति श्रीलोकप्रकाशे मानुषोत्तरनगनरक्षेत्रनिरूपणो नाम त्रयोविंशतितमः सर्गः समासः ॥ ग्रन्थाग्रं ३४८ ॥

त्रैलोक्ये चैत्येषु विष्कंमादि मूर्तिप्रमाणं च

२०

## ॥ अथ चतुर्विंशतितमः सर्गः प्रारभ्यते ॥

परस्मिन् पुष्करार्द्धेऽथ, मानुषोत्तरशैलतः । परतः स्थिरचन्द्रार्कव्यवस्था प्रतिपाद्यते ॥ १ ॥ द्वीपार्णवेषु सर्वेषु, मानुषोत्तरतः परम् । ज्योतिष्काः पञ्चधापि स्युः, स्थिराश्चन्द्रार्यमादयः ॥ २ ॥ स्थिरत्वादेव नक्षत्र-योगोऽप्येषामवस्थितः । चन्द्राः सदाऽभिजिद्युक्ताः, सूर्याः पुष्यसमन्विताः ॥ ३ ॥ तथोक्तं जीवाभिगमसूत्रे— "वहियाउ माणुसनगस्स चंदासूराणऽवट्ठिया जोगा । चंदा अभीइजुत्ता सूरा पुण होंति पुस्सेहिं ॥ ४ ॥" गिरिकूटावस्थितानामेतेषामन्तरं द्विधा । तद्रवीन्द्वोरेकमन्यदिन्द्वोस्तथाऽर्कयोर्मिथः ॥ ५ ॥ योजनानां सहस्राणि, पञ्चाशत्तत्र चादिमम् । द्वितीयं तु योजनानां, लक्षं साधिकमन्तरम् ॥ ६ ॥ इदमर्थतो जीवाभिगम-सूत्रचन्द्रप्रज्ञप्तिसूत्रादिषु । साधिकत्वं तु पूर्वोक्तं, चन्द्रार्कान्तरमीलने । तन्मध्यवर्त्तिसूर्येंदुबिम्बविष्कम्भयोगतः ॥ ७ ॥ तथोक्तं—'ससिससि रविरवि साहिय जोअणलक्खेण अंतरं होइ' इति । शशिनाऽन्तरितो भानु-र्भानुनाऽन्तरितः शशी । राकानिशान्तवच्चित्रान्तरास्ते चन्द्रिकातपैः ॥ ८ ॥ तत एव चित्रलेश्याः, शैत्यो-ष्ण्यादन्तरान्तरा । वाग्मिनो वाक्यसंदर्भा, इवानुनयकाङ्क्षिणः ॥ ९ ॥ चन्द्रास्तत्र सुखलेश्या, नात्यन्तं शीतलत्विषः । मनुष्यलोके शीतर्त्तुभाविपीयूषभानुवत् ॥ १० ॥ भानवोऽपि मन्दलेश्या, न त्वतीवोष्ण-

५

१०

१२

लोकप्रकाशे २४ सर्गे नरलोक-स्थितिः

॥ २८७ ॥

...न्तराः । नरक्षेत्रे निदाघर्तुभाविति[illegible]मांशुबिम्बवत् ॥ ११ ॥ एषां प्रकाश्यक्षेत्राणि, विष्कम्भाल्लक्षमेककम् । योजनानामनेकानि, लक्षाण्यायामतः पुनः ॥ १२ ॥ पक्वेष्टकाकृतीन्येवं, चतुरस्राणि यद्भवेत् । पक्वेष्टका चतुष्कोणा, बहागामाऽल्पविस्तृतिः ॥ १३ ॥ तथाहुर्जम्बूद्वीपप्रज्ञप्तिसूत्रे—'बहिया णं भंते ! माणुसुत्तरस्स पव्वयस्स जे चंदिम जाव तारारूवा तं चेव णेयव्वं णाणत्तं णो विमाणोववण्णगा णो चारट्ठिइया णो गइरइया, पक्किट्ठगसंठाणसंठिएहिं जोअणसयसाहस्सिएहिं तावखित्तेहिं जाव ओभासंति." इत्थमेतज्जीवाभिगमसूत्रवृत्त्योरपि, जम्बूद्वीपप्रज्ञप्तिसूत्रौ त्वेतदेवं भावितं, तथाहि—"इयमत्र भावना—मानुषोत्तरपर्वताद्योजनलक्षातिक्रमे करणविभावनोक्तकरणानुसारेण प्रथमा चन्द्रसूर्यपङ्क्तिः, ततो योजनलक्षातिक्रमे द्वितीया पङ्क्तिः, तेन प्रथमपङ्क्तिगतचन्द्रसूर्याणामेतावांस्तापक्षेत्रस्यायामः विस्तारश्च एकसूर्यादपरसूर्यो लक्षयोजनातिक्रमे तेन लक्षयोजनप्रमाणः, इयं च भावना प्रथमपङ्क्त्यपेक्षया बोद्धव्या, एवमग्रेऽपि भाव्यमित्यादि." एवं चात्र सूर्याणां द्विविधमन्तरं कथं संगच्छते ? तथाऽऽत्तपक्षेत्रं भिन्नमतेन अन्तरं च भिन्नमतेन, तदपि कथं युक्तमित्यादि बहुश्रुतेभ्यो भावनीयं । अभिप्रायं संख्यापाङ्क्तीश्चन्द्राश्च स्युर्द्विसप्ततिः । द्वीपे संपूर्णेऽत्र चतुश्चत्वारिंशं शतं हि ते ॥१४॥ तथाहि—कालोदधार्द्धरारभ्य, संख्यां शीतोष्णरोचिषाम् ॥ निश्चेतुमेतत्करणं, पूर्वाचार्यैः प्रदर्शितम् ॥ १५ ॥ विवक्षितद्वीपवार्धौ, ये स्युः शीतोष्णरोचिषः । त्रिघ्नास्ते प्राक्तनैर्जम्बूद्वीपादिद्वीपवार्द्धिगैः

१ [illegible] [illegible] सर्वं [illegible] [illegible] [illegible] समागतं, पक्षोऽत्र लक्षान्तरितत्वमानान्तरयोर्भिन्नमतत्वं ।

ज्योतिष्कसंख्यासंस्थानादि

१५

२०

॥ २८७ ॥

२१

॥ १६ ॥ सूर्येन्दुभिर्मीलिताः स्युर्यावन्तः शशिभास्कराः । अनन्तरानन्तरे स्युर्द्वीपे तावन्त एव ते ॥ १७ ॥ चतुश्चत्वारिंशमेवं, शतं स्युः पुष्करेऽखिले । द्वयोस्तदर्द्धयोस्तस्माद्, द्विसप्ततिर्द्विसप्ततिः ॥ १८ ॥ एवं शेषेष्वपि द्वीपवार्द्धिष्विन्दुविवस्वताम् । अनेनैव करणेन, कार्यः संख्याविनिश्चयः ॥ १९ ॥ यतो मूलसंग्रहण्यां, तथा क्षेत्रसमासके । सर्वद्वीपोदधिगतार्केन्दुसंख्याभिधायकम् ॥ २० ॥ करणं ह्येतदेवोक्तं, जिनभद्रगणीश्वरैः । न चोक्तमपरं किंचित्करुणावरुणालयैः ॥ २१ ॥ तथा च मूलसंग्रहणीटीकायां हरिभद्रसूरिः—"एवंऽणंतराणंतरे खित्ते पुक्खरदीवे चोयालं चंदसयं हवइ, एवं शेषेष्वप्यमुनोपायेन चन्द्रादिसंख्या विज्ञेयेति." युक्ता चेयं व्याख्या, चन्द्रप्रज्ञप्तौ सूर्यप्रज्ञप्तौ जीवाभिगमे च सकलपुष्करवरद्वीपमाश्रित्येत्थमेव चन्द्रादिसंख्याभिधानात्, तथाहि तद्ग्रंथः—"पुक्खरवरदीवे णं भंते! दीवे केवइया चंदा पभासिंसु वा पभासंति वा पभासिस्संति वा ?, गो० ! चोयालं चंदसयं पभासिंसु वा पभासंति वा पभासिस्संति वा, चोयालं सूरियाण सयं तविंसु वा तवंति वा तविस्संति वा." इत्यादि. तथा तस्मिन्नेवार्थे सूर्यप्रज्ञप्तौ संग्रहणीगाथाः—"चोयालं चंदसयं चोयालं चेव सूरियाण सयं । पुक्खरवरंमि दीवे चरंति एए पगासंता ॥ २२ ॥ चत्तारि सहस्साइं बत्तीसं चेव होंति नक्खत्ता । छच्च सया बावत्तर महागहा बारस सहस्सा ॥२३॥ छन्नउइ सयसहस्सा चोयालीसं भवे सहस्साइं । चत्तारिं च सयाइं तारागणकोडिकोडीणं ॥ २४॥" ज्योतिष्करण्डकेऽप्याहुः—"धायइसंडप्पभिइं उद्दिट्ठा तिगुणिया भवे चंदा । आइल्लचंदसहिया ते हुंति अणंतरं परओ ॥ २५ ॥ आइच्चाणंपि भवे एमेव विही अणेण

कायव्वा। दीवेसु समुद्देसु अ एमेव परंपरा जाण ॥२६॥” अनन्तरं नरक्षेत्रात्सूर्यचंद्राः कथं स्थिताः ?। तदागमेषु गदितं, सांप्रतं नोपलभ्यते ॥ २७ ॥ केवलं चन्द्रसूर्याणां, यत्प्राक्कथितमन्तरम् । तदेव सांप्रतं चन्द्रप्रज्ञप्त्यादिषु दृश्यते ॥ २८ ॥ तथोक्तं चन्द्रप्रज्ञप्तिसूत्रे जीवाभिगमसूत्रे च—“चंदाओ सूरस्स य सूरस्स य ससिणो य अंतरं होइ । पन्नास सहस्साइं जोअणाणं अणूणाइं ॥ २९ ॥ सूरस्स य सूरस्स य ससिणो ससिणो य अंतरं दिट्ठं । बहियाउ माणुसनगस्स जोयणाणं सयसहस्सं ॥ ३० ॥ सूरंतरिया चंदा चंदंतरिया य दिणयरा दित्ता। चित्तंतरलेसागा सुहलेसा मंदलेसा य ॥ ३१ ॥” ततश्च—एषां संभाव्यते चन्द्रप्रज्ञप्त्याद्यनुसारतः। सूचीश्रेण्या स्थितिर्नैव, श्रेण्या परिरयाख्यया ॥ ३२ ॥ तथोक्तं जीवाभिगमवृत्तौ सूर्यसूर्यान्तरसूत्रव्याख्याने—“एतच्चैवमन्तरपरिमाणं सूचीश्रेण्या प्रतिपत्तव्यं, न वलयाकारश्रेण्ये”ति, संग्रहणीलघुवृत्तेरप्ययमेवाभिप्रायः, यथागमं भावनीयमन्यथा वा बहुश्रुतैः। श्रेयसेऽभिनिवेशोऽर्थे, न ह्यागमाविनिश्चिते ॥ २५ ॥ (स्थापना) चन्द्रार्कपङ्क्तिविषये, नरक्षेत्राद्बहिः किल । मतान्तराणि दृश्यन्ते, भूयांसि तत्र कानिचित् ॥ २६ ॥ अनुग्रहार्थं शिष्याणां, दर्श्यन्ते प्रथमं त्विदम् । दिगंबराणां तत्कर्मप्रकृत्यादिषु दर्शनात् ॥ २७ ॥ युग्मं ॥ लक्षार्द्धातिक्रमे मर्त्योत्तरशैलादनन्तरम् । वृत्तक्षेत्रस्य विष्कम्भः, संपद्यते इयानिह ॥ २८ ॥ षट्चत्वारिंशता लक्षैर्मितोऽस्य परिधिः पुनः । कोट्येका पञ्चचत्वारिंशता लक्षैः समन्विता ॥ २९ ॥ षट्चत्वारिंशत्सहस्राः, शतैश्चतुर्भिरन्विताः। सससससत्यभ्यधिका, योजनानामुदीरिताः ॥ ३० ॥ प्रतियोजनलक्षं चैकैकसूर्येन्दुभावतः। प्रत्येकमा-

चन्द्रसूर्याणां संख्या संस्थानं च

२०

२५



२८

द्यल्पां पञ्चचत्वारिंशं शतं तयोः ॥ ३१ ॥ पूर्वोक्तपरिधौ कोटेर्लक्षेभ्यश्चाधिकस्य तु । विभक्तस्य नवत्याढ्यद्वि-
शत्या शशिभास्करैः ॥ ३२ ॥ लब्धे क्षिप्ते चन्द्रसूर्यान्तरेषु स्यात्तदन्तरम् । लक्षार्द्धं किञ्चिदधिकषष्टियुक्तशता-
धिकम् ॥ ३३ ॥ लक्षान्तरे द्वितीयैवं, पङ्क्तिर्लोकान्तसीमया । योजनलक्षान्तरालाः, स्युः सर्वा अपि पङ्क्तयः
॥३४॥ तथा—यावल्लक्षप्रमाणो यो, द्वीपो वाऽप्यथवाऽम्बुधिः । स्युस्तावत्यः परिरयश्रेणयस्तत्रेन्दुभास्वताम् ॥ ३५ ॥
वृद्धिः पङ्क्तौ द्वितीयस्यामाद्यपङ्क्तेरनन्तरम् । षण्णां प्रत्येकमर्काणामिन्दूनां च निरूपिता ॥ ३६ ॥ तृतीयस्यां तु
ससानां, वृद्धिः षण्णां ततो द्वयोः । पुनः पङ्क्तौ तृतीयस्यां, ससानां वृद्धिरेव हि ॥ ३७ ॥ तथाहि—पङ्क्त्योर्द्वयो-
र्योजनानां, लक्षमन्तरमेकतः । परतोऽप्यन्तरं तावत्ततो लक्षद्वयाधिके ॥ ३८ ॥ विष्कम्भे पूर्वविष्कम्भात्, प्रति-
पंक्ति विवर्द्धते । लक्षद्वयं योजनानां, तस्यायं परिधिर्भवेत् ॥ ३९ ॥ लक्षाणि षड् योजनानां, द्वात्रिंशच्च सह-
स्रकाः । पञ्चपञ्चाशदाढ्यानि, चत्वार्येव शतानि च ॥ ४० ॥ पूर्वपूर्वपङ्क्तिगतपरिधिष्वस्य योजनात् । अग्र्या-
ग्र्यपङ्क्तिपरिधिः, सर्वत्र क्षेप एष वै ॥ ४१ ॥ अथैतस्यादिमपङ्क्तिपरिधौ क्षेपतः किल । द्वितीयपङ्क्तिसंबंधी,
परिधिः स भवेदियान् ॥ ४२ ॥ एकपञ्चाशता लक्षैरेका कोटी समन्विता । अष्टसप्तत्या सहस्रैर्द्वात्रिंशैर्नवभिः
शतैः ॥ ४३ ॥ षडेव लक्षाः पूर्वस्मात्परिधेरधिकास्ततः । षण्णां वृद्धिः प्रतिलक्षमेकैकार्केन्दुवृद्धितः ॥ ४४ ॥ एवं
पङ्क्तौ द्वितीयस्यां, संमिता लक्षसंख्यया । प्रत्येकमेकपञ्चाशं, शतमिन्दुदिवाकराः ॥ ४५ ॥ द्वितीयपङ्क्तिप-
रिधौ, ततः क्षेपाङ्कयोगतः । तृतीयपङ्क्तिपरिधिरेतावानिह जायते ॥ ४६ ॥ एका कोट्यष्टपञ्चाशल्लक्षाण्येकाद-

शापि च । सहस्राणि त्रिशती च, ससाशीतिसमन्विताः ॥ ४७ ॥ पूर्वस्मात्परिधेः सप्त, लक्षा जाता इहाधिकाः । वृद्धिस्ततस्तृतीयस्यां, ससानामिन्दुभास्वताम् ॥ ४८ ॥ तुर्यपञ्चम्योस्तु पङ्क्त्योः, षण्णां षण्णां ततः परम् । वृद्धिः षष्ठ्यां तु ससानां, षण्णां षण्णां ततो द्वयोः ॥ ४९ ॥ लोकान्तं यावदाधिक्यमेवमिन्दुविवस्वताम् । वाच्यमेवं पुष्करोत्तरार्द्धेऽष्टास्वपि पङ्क्तिषु ॥ ५० ॥ ससत्रिंशदधिकानि, शतान्येव त्रयोदश । प्रत्येकमिन्दुसूर्याणां, भवन्ति सर्वसंख्यया ॥५१॥ एतदर्थसंग्राहिकाश्च पूर्वाचार्यकृता एव इमा गाथाः—"माणुसनगाओ परओ लक्खद्धे होइ खेत्तविक्खंभो । छायालीसं लक्खा परिही तस्सेगकोडी उ ॥ ५२॥ छायालीसं च जोअणसहस्सा । चउरो सयाइं तह सत्तहत्तरी जोअणाणं तु ॥५३॥ पणयालीसं लक्खा तरठिय ससीण सूराणं । पंतीए पढमाए पणयालसयं तु पत्तेयं ॥ ५४॥ साहिअजोअणलक्खद्धेगंतराओ । जो जइलक्ख दिवोदहि तत्थ तावइय पंतीओ ॥ ५५ ॥ तप्परओ पंतीओ जोअणलक्खंतराओ सव्वाओ । तप्परओ दुदु पंती छगवुड्ढी तइय सगवुड्ढी ॥ ५६ ॥ वुड्ढी दुइयगपंतीओं छण्ह तइयाए होइ सत्तण्हं । तप्परओ दुदु पंती छगवुड्ढी तइय सगवुड्ढी ॥ ५६ ॥ मतान्तरं करणविभावनायामिदं स्मृतम् । लक्षार्द्धातिक्रमे पङ्क्तिराद्यमर्त्योत्तराचलात् ॥ ५७ ॥ द्विससतिः शशभृतां, द्विससतिश्च भास्वताम् । चतुश्चत्वारिंशमाद्यपङ्क्तावेवं शतं भवेत् ॥ ५८ ॥ यावद्योजनलक्षाणि, द्वीपः पाथोनिधिश्च यः । पङ्क्तयस्तत्र तावत्यो, मतेऽत्रापि समं ह्यदः ॥ ५९ ॥ भान्विन्द्वोः समुदितयोस्ततः शेषासु पङ्क्तिषु । चतुष्कस्य चतुष्कस्य, वृद्धिर्लोकान्तसीमया ॥ ६० ॥ एवं च पङ्क्तावष्टम्यां, द्वीपार्द्धेऽत्रेन्दुभास्वताम् । संजातं समुदितानां, द्विससत्यधिकं शतम्

नृलोकाद्बहिः सूर्यचन्द्रस्थितिः

२०

२५



२८

॥ ६१ ॥ एवं च पुष्करार्द्धेऽस्मिन्, समुदितेन्दुभास्वताम् । शतानि द्वादश चतुःषष्टिश्च सर्वसंख्यया ॥ ६२ ॥ तत्तत्पङ्क्तिस्थपरिधौ, खखभान्विन्दुभाजिते । लब्धमन्तरमर्केन्द्वोर्द्विघ्नमिन्द्वोस्तथाऽर्कयोः ॥ ६३ ॥ यथाऽऽद्यपङ्क्ति-संबन्धिपूर्वोक्तपरिधौ किल । चतुश्चत्वारिंशशताऽर्केन्दुभक्ते भवेदिदम् ॥ ६४ ॥ लक्षमेकं सहस्रं च, स्फुटं सप्त-दशोत्तरम् । चतुश्चत्वारिंशशतभक्तस्य योजनस्य च ॥ ६५ ॥ एकोनत्रिंशदंशाश्चा–( १०१०१७ $\frac{२३}{१४४}$ ) केन्द्वोरेतन्मिथोऽन्तरम् । अस्मिंश्च द्विगुणेऽन्योऽन्यं, भान्वोरिन्द्वोश्च तद्भवेत् ( २०२०३४ $\frac{३६}{७२}$ ) ॥ ६६ ॥ द्वैगु-ण्यायात्र भागानां, द्वाभ्यां खल्वपवर्त्यते । छेदकात् छेदके तष्टे, ह्यंशराशिर्भवेन्महान् ॥ ६७ ॥ मतेऽस्मिंश्च प्रतिद्वीपं, वार्द्धीन्दुतिग्मरोचिषाम् । संख्याभिधायि करणं, न प्रोक्तं विस्तृतेर्भिया ॥ ६८ ॥ तदर्थिभिस्तु करण-विभावना विभाव्यताम् । पूर्वसंग्रहणीटीका, कृता वा मलयर्षिभिः ॥ ६९ ॥ एतन्मतसंग्राहिके च गाथे इमे—"चोयालसयं पढमिल्लुयाएँ पंतीइ चंदसूराणं । तेण परं पंतीओ चउउत्तरियाएँ वुड्ढीए ॥ ७० ॥ बावत्तरि चंदाणं बावत्तरि सूरियाण पंतीओ । पढमाए अंतरं पुण चंदा चंदस्स लक्खदुगं ॥७१॥" अत्र 'लक्खदुगं'ति लक्षद्विकं विंशत्या शतैश्चतुस्त्रिंशैर्योजनस्य द्विसप्ततितमैरेकोनत्रिंशद्भागैरधिकं बोद्धव्यं । श्रेणिः परिरयाख्यैव, मतयोरेत-योर्द्वयोः । न तु सूचीश्रेणिरत्र, वेत्ति तत्त्वं तु केवली ॥ ७२ ॥ योगशास्त्रचतुर्थप्रकाशवृत्तावप्युक्तं–"मानुषो-त्तरात्परतः पञ्चाशता योजनसहस्रैः परस्परमन्तरिताश्चन्द्रान्तरिताः सूर्याः सूर्यान्तरिताश्चन्द्रा मनुष्यक्षेत्री-यचन्द्रसूर्यप्रमाणाद् यथोत्तरं क्षेत्रपरिधेर्वृद्ध्या संख्येया वर्द्धमानाः शुभलेश्या ग्रहनक्षत्रतारापरिवारा घंटाकारा

असङ्ख्येया आस्वयंभूरमणाल्लक्षयोजनान्तरिताभिः पंक्तिभिस्तिष्ठन्ती"ति, तथा परिशिष्टपर्वण्यपि श्रीहेमचन्द्रसूरिभिः परिरयश्रेणिरेवोपमिता, तथाहि राजगृहवप्रवर्णने—"तत्र राजतसौवर्णः, प्राकारः कपिशीर्षकैः। भाति चन्द्रांशुमद्भिर्स्वैर्मर्त्योत्तर इवाचलः॥ १ ॥" इति श्रीपरिरयश्रेणिः॥ स्थापना

परतः पुष्करद्वीपात्पुष्करोदः पयोनिधिः। समन्ततो द्वीपमेनमवगूह्य प्रतिष्ठितः॥ ६६ ॥ अतिपथ्यमतिस्वच्छं, जात्यं लघु मनोरमम्। स्फुटस्फटिकरत्नाभमस्य वारि सुधोपमम्॥ ६७ ॥ सदा सपरिवाराभ्यां, भासुराभ्यां महौजसा। श्रीधरश्रीप्रभाभिख्यदेवताभ्यामहर्निशम्॥ ६८ ॥ इन्द्रकाभ्यां पुष्करवद्विभात्यस्योदकं यतः। पुष्करोदस्तत एष, भुवि ख्यातः पयोनिधिः॥ ६९ ॥ अस्य योजनलक्षाणि, द्वात्रिंशच्चक्रवालतः। विस्तारः परिधिस्त्वस्य, भाव्यो व्यासानुसारतः॥ ७० ॥ परतः पुष्कराम्भोधेर्द्वीपोऽस्ति वारुणीवरः। सद्वारुणीव वाप्यादौ, जलमस्येत्यसौ तथा॥ ७१ ॥ देवौ द्वावत्र वरुणवरुणप्रभसंज्ञितौ। तत्स्वामिकत्वाद्वरुणवरोऽप्येष निगद्यते॥ ७२ ॥ चतुःषष्टिर्योजनानां, लक्षाणि चैष विस्तृतः। चक्रवालतया ज्ञेयः, परिधिस्त्वस्य पूर्ववत्॥ ७३ ॥ वारुणीवरोदनामा, द्वीपादस्मात्परोऽम्बुधिः। मदकारिवरास्वादोदकप्राग्भारभासुरः॥ ७४ ॥ सुजातपरमद्रव्यसम्मिश्रमदिरारसात्। अतिस्वादूदकयोगात्, ख्यातोऽयं तादृशाभिधः॥ ७५ ॥ वारुणिवारुणकान्तस्वामिकयोगतोऽथवा। स्याद्वारुणवरोदाख्यो, वरुणोदोऽप्ययं भवेत्॥ ७६ ॥ एका योजनकोट्यष्टाविंशत्या लक्षकैः सह। चक्रवालतयैतस्य, विस्तारो निश्चितो बुधैः॥ ७७ ॥ अथ क्षीरवरो द्वीपः, परतोऽस्मा-

परिरयश्रेणिः पुष्करोदादयः

२०

२५



२८

त्पयोनिधेः। क्षीरोपमं जलं वाप्यादिषु यस्येत्यसौ तथा ७८ ॥ पुण्डरीकपुष्पदन्तौ, यद्वा क्षीरोज्ज्वलौ सुरौ।
अत्रेति तत्स्वामिकत्वात्, ख्यातः क्षीरवराभिधः ॥ ७९ ॥ विष्कम्भोऽस्य योजनानां, द्वे कोट्यौ चक्रवालतः।
षट्पञ्चाशल्लक्षयुक्ते, परिधिश्चिन्त्यतां स्वयम् ॥ ८० ॥ ततः क्षीरवरद्वीपात्परं क्षीरोदवारिधिः। कर्पूरपूरडि-
ण्डीरपिण्डडम्बरपाण्डुरः ॥ ८१ ॥ त्रिभागावर्त्तितचतुर्भागसच्छर्करान्वितम्। स्वादनीयं दीपनीयं, मदनीयं वपुष्म-
ताम् ॥ ८२ ॥ बृंहणीयं च सर्वाङ्गेन्द्रियाह्लादकरं परम्। वर्णगन्धरसस्पर्शसंपन्नमतिपेशलम् ॥ ८३ ॥ ईदृग् यच-
क्रिगोक्षीरं, तस्मादपि मनोहरम्। अस्य स्वादूदकमिति, क्षीरोदः प्रथितोऽम्बुधिः ॥ ८४ ॥ तथा च जीवाभिगम-
सूत्रे—"खंडमच्छंडिओववेए रण्णो चाउरंतचक्कवट्टिस्से"त्यादि। क्षीरोज्ज्वलाङ्गविमलविमलप्रभदेवयोः। संबन्धि
सलिलं ह्यस्येत्यपि क्षीरोदवारिधिः ॥ ८५ ॥ जिनजन्मादिषु कृतार्थोदकत्वादिवोल्लसन्। समीरलहरीसंगरङ्गत्क-
ल्लोलकैतवात् ॥ ८६ ॥ गुरुश्रीकीर्त्तिविजययशोभिस्तुलितो बुधैः। इत्युद्भूताद्भुतानन्दाद्, द्विगुणश्वैत्यवानिव ॥ ८७ ॥
जिनस्नात्रार्थकलशैरलङ्कृततटद्वयः। गुरुः शुश्रूषुभिः शिष्यैरिव स्वच्छामृतार्थिभिः ॥ ८८ ॥ दिव्यकुम्भे-
ष्वाहरत्सु, प्रणम्य शिरसोदकम्। लोलत्कल्लोलनिनदैरनुज्ञां वितरन्निव ॥ ८९ ॥ समन्ततस्तटोद्भिन्नचलद्बुद्बुद-
दन्तुरः। ताटङ्क इव मेदिन्याः, स्फुरन्मौक्तिकपङ्क्तिकः ॥ ९० ॥ लोलकल्लोलसंघट्टोच्छलच्छीकरकैतवात्।
सिद्धान्नभोगतान् मुक्ताकणैरवकिरन्निव ॥ ९१ ॥ धृतो निर्णिज्य विधिनातपाय स्थिरभास्वताम्। शोभतेऽसौ
मध्यलोकनिचोलक इवोज्ज्वलः ॥ ९२ ॥ सप्तभिः कुलकं ॥ अस्य द्वादशलक्षाढ्या, विष्कम्भः पञ्च कोटयः।

योजनानां परिधिस्तु, स्वयं भाव्या मनीषिभिः ॥ ९३ ॥ परतोऽस्मात्पयोराशेर्द्वीपो घृतवराभिधः । घृत-
तुल्यं जलं वाप्यादिषु यस्येत्यसौ तथा ॥ ९४ ॥ घृतवर्णौ च कनककनकप्रभनामकौ । स्वामिनाविह तद्योगात्,
ख्यातो घृतवराभिधः ॥ ९५ ॥ चतुर्विंशतिलक्षाढ्या, दश योजनकोटयः । व्यासोऽस्य परिधिर्ज्ञेयः, स्वयं
व्यासानुसारतः ॥ ९६ ॥ एवमग्रेऽपि । द्वीपादस्मात्परो वार्द्धिर्घृतोदाख्यो विराजते । हैयङ्गवीनसुरभिस्वा-
दुनीरमनोरमः ॥ ९७ ॥ अयं कान्तसुकान्ताभ्यां, स्वामिभ्यां परिपालितः । वाणिजाभ्यां घृतकुतूरि-
व साधारणी द्वयोः ॥ ९८ ॥ विष्कम्भोऽस्य योजनानां, विंशतिः किल कोटयः । अष्टचत्वारिंशताऽऽढ्या,
लक्षैर्दक्षैर्निरूपिताः ॥ ९९ ॥ द्वीपः क्षोदवराभिख्यः, परोऽस्मात्तोयराशितः । निर्जरौ स्वामिनावस्य,
स्तः सुप्रभमहाप्रभौ ॥ १०० ॥ क्षोदो नाम क्षोदरसः, स इक्षुरस उच्यते । तद्रूपमुदकं वाप्यादिषु यस्येत्यसौ
तथा ॥ १ ॥ चत्वारिंशत्कोटयोऽस्य, विष्कम्भः कथितो जिनैः । षण्णवत्याऽन्विता लक्षैः, सुरलक्षनिषेवितैः
॥ २ ॥ ततः परं तु क्षोदोदाभिधानः खलु वारिधिः । वर्ततेऽत्यंतमधुरधुरन्धरपयोधरः ॥ ३ ॥ त्वगेलाकेसरै-
स्तुल्यं, त्रिसुगन्धि त्रिजातकम् । मरिचैश्च समायुक्तं, चतुर्जातकमुच्यते ॥ ४ ॥ ततश्च—चतुर्जातकसम्मिश्रा-
त्रिभागावर्त्तितादपि । अतिस्वादुवारिरिक्षुरसादप्येष तोयधिः ॥ ५ ॥ एवं च लवणाम्भोधिः, कालोदः
पुष्करोदधिः । स्वयंभूर्वारुणीवार्द्धिर्घृतक्षीरपयोनिधी ॥ ६ ॥ एतान् विहाय ससाब्धीन्, सर्वेऽप्यन्ये पयोधयः ।
तादृगिक्षुरसोत्कृष्टस्वादूदकमनोरमाः ॥ ७ ॥ एकाशीतिः कोटयोऽथ, लक्षा द्विनवतिस्तथा । पयोधेरस्य वलय-

विष्कम्भः परिकीर्त्तितः ॥ ८ ॥ अथ नन्दीश्वरो द्वीपः, क्षोदोदाम्भोनिधेः परः । प्ररूपितो विष्टपेष्टैरष्टमः
कष्टमर्दिभिः ॥ ९ ॥ मधुरेक्षुरसस्वादूदकेषु दीर्घिकादिषु । जलाश्रयेषु फुल्लाब्जमकरन्दसुगन्धिषु ॥ १० ॥ स्फुर-
त्पुष्पफलोद्दामाभिरामद्रुमशालिषु । अत्रोत्पातपर्वतेषु, सर्वरत्नमयेषु च ॥ ११ ॥ आसते शेरते स्वैरं, क्रीडन्ति
व्यन्तरामराः । व्यन्तरीभिः सह प्राच्यपुण्यानां भुञ्जते फलम् ॥ १२ ॥ इहत्यमाधिपत्यं द्वौ, कैलासहरिवा-
हनौ । धत्तः समृद्धौ देवौ द्योः, सूर्याचन्द्रमसाविव ॥ १३ ॥ एवं नन्द्या समृद्ध्याऽसावीश्वरः स्फातिमानिति । ५
नन्दीश्वर इति ख्यातो, द्वीपोऽयं सार्थकाभिधः ॥ १४ ॥ त्रिषष्ट्या कोटिभिर्युक्तमेकं कोटिशतं किल । लक्षै-
श्चतुरशीत्याढ्यमेतद्वलयविस्तृतिः ॥ १५ ॥ द्वीपस्यास्य बहुमध्ये, शोभन्ते दिक्चतुष्टये । जात्याञ्जनरत्नमयाश्च-
त्वारोऽञ्जनपर्वताः ॥ १६ ॥ पूर्वस्यां देवरमणो, नित्योद्योतस्वयंप्रभौ । क्रमाद्पाक्प्रतीच्यां चोदीच्यां च रमणी-
यकः ॥ १७ ॥ वर्णशोभां वर्णयामः, किमेतेषां स्फुरद्रुचाम्? । नाम्नैव ये स्वमौज्ज्वल्यं, प्रथयन्ति यथास्थितम्
॥ १८ ॥ स्फुरद्धवलसब्रह्मचारितेजोभिरास्तृतैः । तेऽमुं द्वीपं सृजन्तीव, कस्तूरीद्रवमण्डितम् ॥ १९ ॥ स्वच्छ- १०
गोपुच्छसंस्थानस्थिता रजोमलोज्झिताः । अभ्रङ्कषोत्तुङ्गशृङ्गा, मृष्टाः श्लक्ष्णाः प्रभास्वराः ॥ २० ॥ सहस्रांश्चतुर-
शीतिं, भूतलात्ते समुच्छ्रिताः । सहस्रं च योजनानामवगाढा भुवोऽन्तरे ॥ २१ ॥ योजनानां सहस्राणि, पृथवो
भूतले दश । योजनानां सहस्रं च, विस्तीर्णास्ते शिरस्तले ॥ २२ ॥ मतान्तरे शतान्येते, चतुर्णवतिमानताः ।
स्युर्भूतले योजनानां, सहस्रं मूर्ध्नि विस्तृताः ॥ २३ ॥ चतुर्भिः कलापकं ॥ तथोक्तं स्थानाङ्गवृत्तौ–इहाञ्जनका १४

मूले दश योजनसहस्राणि विष्कम्भेणेत्युक्तं, द्वीपसागरप्रज्ञप्तिसंग्रहण्यां तूक्तं—"नव चेव सहस्साइं चत्तारि य होंति जोअणसयाइं । अंजणगपव्वयाणं धरणियले होइ विक्खंभो ॥ ६ ॥" इति, तदिदं मतान्तरमित्यवसेयं, एवमन्यत्रापि, मतान्तरबीजानि तु केवलिगम्यानीति । यस्मिन्मते सहस्राणि, भूतले दश विस्तृताः । वृद्धिक्षयौ मते तस्मिन्, योजनं योजनं प्रति ॥ २३ ॥ अष्टाविंशांशत्रितयमुपर्यारोहणे क्षयः । तावत्येवोपरितलाद्वृद्धिः स्यादवरोहणे ॥ २४ ॥ भावना त्वेवं—महीतलगतव्यासात्, सहस्रदशकात्मकात् । सहस्राण्यपचीयन्ते, नवोपरितलावधि ॥ २५ ॥ ततो नव सहस्राणि, भाज्यानि नाप्यते परम् । सहस्रैश्चतुरशीत्या, भागो भाज्यस्य लाघवात् ॥ २६ ॥ ततश्च—भाज्यभाजकयो राश्योः ९०००× ८४००० कृते शून्यापवर्त्तने । भाज्यो नवात्मा चतुरशीत्यात्मा स्याच्च भाजकः ९×८४ ॥ २७ ॥ उभावप्यपवर्त्त्यैते, ततोऽंशच्छेदकौ त्रिभिः । योजनांशत्रयं लब्धमष्टाविंशतिजं ततः ॥ २८ ॥ यद्वा—अष्टाविंशतिगुणितो भाज्यो राशिर्लवात्मको भवति । द्वे लक्षे द्वापञ्चाशता सहस्रैर्युते तेऽंशाः ॥ २९ ॥ तेषां सहस्रैश्चतुरशीत्या भागे हृते सति । लब्धं विभागत्रितयमष्टाविंशतिसंभवम् ॥ ३० ॥ चतुःशताधिकनवसहस्रयोजनात्मकात् । मतान्तरे स्थुडव्यासात्सहस्रोरुशिरोऽवधि ॥ ३१ ॥ मध्ये शतानि चतुरशीतिः क्षीयन्त इत्यतः । भज्यन्ते तानि चतुरशीत्या किल सहस्रकैः ॥ ३२ ॥ भागाप्राप्त्या च चतुरशीत्या शतैस्तयोर्द्वयोः । कृतेऽपवर्त्तने लभ्यो, योजनांशो दशोद्भवः ॥ ३३ ॥ यद्वा प्राग्वद्भाज्यराशिर्दशघ्नः स्याल्लवात्मकः । सहस्राश्चतुरशीतिस्तेषां भागे च

नन्दीश्वरः अञ्जनगिरयः

२०

२५

॥२९२॥

२८

लभ्यते ॥ ३४॥ दशमो योजनस्यांशो, भाज्यभाजकसाम्यतः।क्षयवृद्धौ मानमेतत्, स्यादारोहवरोहयोः ॥ ३५॥
एकत्रिंशत्सहस्राणि, योजनानां शतानि षट् । त्रयोविंशानि परिधिर्भवत्येषां महीतले ॥ ३६ ॥ योज-
नानां सहस्राणि, त्रीणि द्वाषष्टियुक् शतम् । साधिकं मूर्ध्नि परिधिः, प्रज्ञप्तः परमर्षिभिः ॥ ३७ ॥
अथैषामञ्जनाद्रीणां, प्रत्येकं च चतुर्दिशि । गते लक्षे योजनानां, लक्षमायतविस्तृताः ॥ ३८ ॥ पुष्करिण्यश्चतस्रः
स्युरुद्विद्धा दशयोजनीम् । निर्मत्स्यस्वच्छसलिलोल्लसत्कल्लोलवेल्लिताः ॥ ४० ॥ जीवाभिगमसूत्रवृत्तौ प्रवचन-
सारोद्धारवृत्तौ च एता दशयोजनोद्विद्धा उक्ताः, नन्दीश्वरस्तोत्रे नन्दीश्वरकल्पे च सहस्रयोजनोद्विद्धा
उक्ताः, स्थानाङ्गसूत्रेऽपि—'ताओ णं णंदाओ पुक्खरणीओ एगं जोअणसयसहस्सं आयामेणं पन्नासं जोअण-
सहस्साइं विक्खंभेणं दस जोअणसयाइं उव्वेहेणं' इत्युक्तमिति ज्ञेयं। चतुर्दिशं त्रिसोपानप्रतिरूपकबन्धुराः ।
चतुर्दिशं च प्रत्येकं, रम्यास्ते रत्नतोरणैः ॥ ४१ ॥ दलच्छतदलश्रेणिगलन्मरन्दलेपतः । अन्योऽन्यमितरभ्रान्ति-
भ्रमद्भृङ्गतदङ्गनाः ॥ ४२ ॥ अनरालैर्मरालाद्यैर्मृणालैर्ललितान्तराः । आमुक्तव्यक्तशृङ्गारहारैरिव मनोहराः ॥ ४३ ॥
सोपानावतरत्स्वःस्त्रीनूपुरध्वनिबोधितैः । मरालैर्मधुरध्वानैर्मुदोपवीणिता इव ॥ ४४ ॥ क्रीडद्दिव्याङ्गनोत्तुङ्ग-
वक्षोजास्फालनोर्जितैः । आत्तरङ्गैः सत्तरङ्गैरिवाङ्गीकृतताण्डवाः ॥ ४५ ॥ अर्हदर्चार्चनोद्युक्तस्नातस्वःस्त्रीस्तन-
च्युतैः । कस्तूरीचन्द्रघुसृणैः, शोभन्ते चित्रिता इव ॥ ४६ ॥ षड्भिः कुलकं ॥ नन्दिषेणा तथाऽमोघा, गोस्तूपा

१ आयामविष्कम्भावपेक्ष्य पुष्करिणीनां दशशतोद्वेधयोग्यतेति अध्याहार्यो दशशब्दात् शतशब्दः, ततो न विरोधः केषामपि ।

पुष्करिण्यः दधिमुखाश्च

च सुदर्शना । स्युर्वाप्यो देवरमणात्पूर्वादिदिक्चतुष्टये ॥ ४७ ॥ नन्दोत्तरा तथा नन्दा, सुनन्दा नन्दिवर्द्धना । पुष्करिण्यश्चतस्रः स्युर्नित्योद्योताश्चतुर्दिशम् ॥४८॥ भद्रा विशाला कुमुदा, चतुर्थी पुण्डरीकिणी । स्वयंप्रभगिरेः पूर्वादिषु दिक्ष्विति वापिकाः ॥ ४९ ॥ विजया वैजयन्ती च, जयन्ती चापराजिता । वाप्यः प्राच्यादिषु दिक्षु, रमणीयाञ्जनागिरेः ॥ ५० ॥ अयं नन्दीश्वरस्तवनन्दीश्वरकल्पाभिप्रायेण षोडशानामपि पुष्करिणीनां नामक्रमः, स्थानाङ्गजीवाभिगमाभिप्रायेण त्वेवं—नन्दोत्तरा तथा नंदा, चानन्दा नन्दिवर्द्धना । चतुर्दिशं पुष्करिण्यः, पौरस्त्यस्याञ्जनागिरेः ॥ ५१ ॥ भद्रा विशाला कुमुदा, चतुर्थी पुण्डरीकिणी । चतुर्दिशं पुष्करिण्यो, दाक्षिणात्याञ्जनागिरेः ॥ ५२ ॥ नन्दिषेणा तथाऽमोघा, गोस्तूपा च सुदर्शना । चतुर्दिशं पुष्करिण्यः, प्रतीचीनाञ्जनागिरेः ॥ ५३ ॥ उदीच्ये तूभयोरपि मतयोस्तुल्यमेव ॥ एकैकस्याः पुष्करिण्या, व्यतीत्य दिक्चतुष्टये । योजनानां पञ्च शतान्येकैकमस्ति काननम् ॥ ५४ ॥ अस्त्यशोकवनं प्राच्यां, सप्तपर्णवनं ततः । याम्यां प्रत्यक् चम्पकानामथाम्राणामुदग् वनम् ॥ ५५ ॥ योजनानां लक्षमेकमायतान्यखिलान्यपि । शतानि पञ्च पृथुलान्यद्भुतान्यद्भुतश्रिया ॥५६॥ सच्छायैः सुमनोरम्यैर्महास्कन्धैः समुन्नतैः । विभान्ति तरुभिस्तानि, कुलानीव नरोत्तमैः ॥ ५७॥ सौरभ्याकृष्टमधुपा, लीलानर्त्तितपल्लवाः । उद्बुद्धकुसुमास्तेषु, लताः पण्याङ्गना इव ॥ ५८ ॥ तेषां कुञ्जेषु निश्छिद्रपरिच्छदाद्रिभित्तिषु । न विशन्तीशगेहेषु, चौरा इव करा रवेः ॥ ५९ ॥ षोडशानामप्यमूषां, वापिकानां किलोदरे । स्यादेकैको दधिमुखः, स्फारस्फटिकरत्नजः ॥ ६० ॥ मुखं शिखरमेतेषां, यतो दधिवदुज्ज्व-

२०
२५
॥ २९३ ॥
२७

लम् । ततो ह्येते दधिमुखा, रौप्यशृङ्गमनोरमाः ॥ ६१ ॥ धान्यपल्यसमाकाराः, सर्वतः सदृशा इमे । उपर्यधो योजनानां, सहस्राणि दशाततताः ॥ ६२ ॥ चतुःषष्टिं सहस्राणि, कीर्त्तितास्ते समुच्छ्रिताः । सहस्रं च योजनानामुद्विद्धा वसुधान्तरे ॥ ६३ ॥ तथोक्तं जीवाभिगमे—"दस जोअणसहस्साइं विक्खंभेणं" श्रीसमवायाङ्गे तु—"सव्वेवि णं दधिमुहपव्वया पल्लगसंठाणसंठिया सव्वत्थ समा विक्खंभुस्सेहेणं[1] चउसट्ठिं जोअणसहस्साइं पण्णत्ता" इत्युक्तमिति ज्ञेयं ॥ पुष्करिण्यः समस्तास्तास्तेनैकैकेन भूभृता । विभान्ति प्रौढमहिला, इव क्रोडीकृतार्भकाः ॥ ६४ ॥ चतुर्णामञ्जनाद्रीणां, घनाघनघनत्विषाम् । षोडशानां दधिमुखगिरीणामुपरि स्फुरत् ॥ ६५ ॥ जिनायतनमेकैकमेवं स्युः सर्वसङ्ख्यया । तृतीयाङ्गादिसिद्धान्तेषूक्तान्येतानि विंशतिः ॥ ६६ ॥ जीवाभिगमवृत्त्यादिग्रन्थेषु च निरूपितौ । वापीचतुष्कान्तरेषु, द्वौ द्वौ रतिकराचलौ ॥ ६७ ॥ षोडशानां वापिकानां, षोडशस्वन्तरेष्वमी । द्वात्रिंशद् द्विद्विभावेन, पद्मरागनिभाः समे ॥ ६८ ॥ इति प्रवचनसारोद्धारसूत्रवृत्त्यभिप्रायेण एते पद्मरागमयाः, स्थानाङ्गवृत्त्यभिप्रायेण तु सौवर्णा[2] इति । उपर्येकैकमेतेषां, सर्वेषामपि भूभृताम् । चैत्यं नित्यार्हतां चारु, चलाचलध्वजाञ्चलम् ॥ ६९ ॥ चत्वारो दधिमुखस्था, एकैकाञ्जनभूभृतः । अष्टानां च रतिकराद्रीणामष्टौ जिनालयाः ॥ ७० ॥ इत्येवमेकैकदिशि, त्रयोदश त्रयोदश । एवं संकलिताश्चैते, द्विपञ्चा-

१ सर्वत्र समा विष्कम्भेन उत्सेधेन चतुष्षष्टिः सहस्राणि इत्येवं व्याख्याने न विरोधः, अविभक्तिकनिर्देशो विष्कम्भशब्दस्यात्र, न चात्र 'विक्खंभुस्सेहेहिं' ति बहुवचनमस्ति येनागतिकता स्यात् । २ सुष्ठुवर्णमया इत्यर्थकत्वेन विरोधः, यद्वा पद्मरागो रक्तः सुवर्णं च रक्तमपि स्यात् ।

शाज्जिनालयाः ॥ ७१ ॥ स्थानाङ्गवृत्तावप्युक्तं—"सोलस दहिमुहसेला कुंदामलसंखचंदसंकासा । कणयनिभा
बत्तीसं रइकर गिरिबाहिरा तेसिं ॥ ७२ ॥ अंजणगाइगिरीणं नाणामणिपज्जलंतसिहरेसु । बावन्नं जिणणि-
लया मणिरयणसहस्सकूडवरा ॥ ७३ ॥" प्रासादास्ते योजनानां, भवन्ति शतमायताः । पञ्चाशतं ततास्तुङ्गा,
योजनानि द्विसप्ततिम् ॥ ७४ ॥ हावभावाद्यभिनयविलासोल्लासिपुत्रिकाः । दिदृक्षानिश्चलैर्दिव्याङ्गनावृन्दैरि-
वाश्रिताः ॥ ७५ ॥ चित्रोत्कीर्णैर्हयगजसुरदानवमानवैः । अद्भुतालोकनरसस्थितत्रिभुवना इव ॥ ७६ ॥ अष्ट-
भिर्मङ्गलैः स्पष्टं, विशिष्टा अपि देहिनाम् । सेवाजुषां वितन्वाना, कोटिशो मङ्गलावलीः ॥ ७७ ॥ प्रीत्योन्नतप-
द्मासैर्नृत्यद्भिरिव केतुभिः । त्वरितं प्रोल्लसद्भक्तीनाह्वयन्त इवाङ्गिनः ॥ ७८ ॥ स्थिताः सिंहनिषदनाकाराः
स्फारामलत्विषः । भव्याघघोरमातङ्गघटामिव जिघांसवः ॥ ७९ ॥ षड्भिः कुलकं ॥ तथाहुः—"अंजनगपव्वयाणं
सिहरतलेसु हवंति पत्तेयं । अरिहंतायणाहिं सीहणिसायाइं तुंगाइं ॥ ८० ॥" द्वारैश्चतुर्भिः प्रत्येकं, ते
विभान्ति सुकान्तिभिः । चतुर्गतित्रस्तलोकत्राणदुर्गा इवोद्भटाः ॥ ८१ ॥ प्राच्यां देवाभिधं द्वारं, तद्भवेद्देवदैव-
तम् । असुराख्यं दक्षिणस्यां, द्वारं चासुरदैवतम् ॥ ८२ ॥ पश्चिमायां च नागाख्यं, तन्नागामररक्षितम् । उत्त-
रस्यां सुवर्णाख्यं, सुवर्णसुररक्षितम् ॥ ८३ ॥ योजनानि षोडशैतदेकैकं द्वारमुच्छ्रितम् । योजनान्यष्टविस्तीर्णं,
प्रवेशे तावदेव च ॥ ८४ ॥ प्रतिद्वारमथैकैकः, पुरतो मुखमण्डपः । चैत्यस्य यो मुखे द्वारे, पट्टशालासमो मतः
॥ ८५ ॥ तस्यापि पुरतः प्रेक्षामण्डपः श्रीभिरद्भुतः । प्रेक्षा प्रेक्षणकं तस्मै, गृहरूपः स मण्डपः ॥ ८६ ॥ योज-

रतिकराः
जिनालयाः
द्वारादि च
१५

२०


२५
२६

नानां शतं दीर्घौ, पञ्चाशत्तानि विस्तृतौ। योजनानि षोडशोच्चौ, त्रिभिर्द्वारैर्मनोरमौ ॥ ८७ ॥ तथोक्तं जीवाभिगमवृत्तौ—"मुखमण्डपानां प्रत्येकं प्रत्येकं त्रिदिशं-तिसृषु दिक्षु, एकैकस्यां दिशि एकैकभावेन त्रीणि द्वाराणि," जीवाभिगमसूत्रादर्शे तु 'तेसि णं मुहमंडवाणं चउद्दिसिं चत्तारि दारा पण्णत्ता' इति दृश्यते[1]। प्रेक्षामण्डपमध्ये च, वज्ररत्नविनिर्मितः। एकैकोऽक्षाटकस्तस्य, मध्येऽस्ति मणिपीठिका ॥ ८८ ॥ योजनान्यष्ट विस्तीर्णायता चत्वारि चोच्छ्रिता। उपर्यस्याश्चेन्द्रयोग्यं, सिंहासनमनुत्तरम् ॥ ८९ ॥ सिंहासनस्य तस्योर्ध्वं, दूष्यं विजयनामकम्। वितानरूपं तद्रत्नवस्त्रमत्यन्तनिर्मलम् ॥ ९० ॥ मुक्तादामालम्बनाय, मध्येऽस्य वाज्रिकोऽङ्कुशः। तस्मिन्मुक्तादामकुम्भप्रमाणमौक्तिकाञ्चितम् ॥ ९१ ॥ तच्च स्वार्द्धोच्चत्वमानैर्मुक्तादामभिरञ्चितम्। चतुर्दिशमर्द्धकुम्भप्रमाणमौक्तिकान्वितैः ॥ ९२ ॥ तथा चाह स्थानाङ्गे—"तेसु णं वइरामएसु अंकुसेसु चत्तारि कुंभिक्का मुत्तादामा प०, ते णं कुंभिक्का मुत्तादामा पत्तेयं पत्तेयं तदद्धुच्चत्तप्पमाणमित्तेहिं चउहिं अद्धकुंभिक्केहिं मुत्तादामेहिं सवतो समंता संपरिक्खित्ता," एतट्टीकापि—"कुंभो मुक्ताफलानां परिमाणतया विद्यते येषु तानि कुंभिकानि मुक्तादामानि-मुक्तामालाः, कुंभप्रमाणं च-'दो असती पसई, दो पसइउ सेतिया, चत्तारि सेतियाओ कुलओ, चत्तारि कुलवा पत्थो, चत्तारि पत्था आढयं, चत्तारि आढया दोणो, सट्ठी आढयाइं जहन्नो कुंभो, असीइं मज्झिमो, सयमुक्कोसो'त्ति 'तदद्ध'त्ति तेषामेव मुक्तादाम्नामर्द्धमुच्चत्वस्य प्रमाणं येषां तानि तद-

१ जीवाभिगमे सूत्रस्य वृत्तेश्च भिन्नभिन्ना आदर्शाः इति स्पष्टं व्याख्याविलोककानां.

द्वोंचत्वप्रमाणानि तान्येव तन्मात्राणि तैः, 'अद्धकुंभिकेहिं'ति मुक्ताफलार्द्धकुम्भवद्भिरिति । ततः प्रेक्षामण्डपाग्रे, प्रत्येकं मणिपीठिका । उच्छ्रिता योजनान्यष्टौ, षोडशायतविस्तृता ॥ ९३ ॥ चैत्यस्तूपस्तदुपरि, स योजनानि षोडश । आयतो विस्तृतस्तुङ्गः, सातिरेकाणि षोडश ॥ ९४ ॥ मणिपीठिकाश्चतस्रः, स्तूपस्यास्य चतुर्दिशम् । योजनान्यष्ट विस्तीर्णायताश्चत्वारि चोच्छ्रिताः ॥ ९५ ॥ इति जीवाभिगमवृत्तौ । तासामुपरि च स्तूपाभिमुख्याः श्रीमदर्हताम् । जयन्ति प्रतिमाश्चञ्चन्मरीचिनिचयाश्रिताः ॥ ९६ ॥ चैत्यस्तूपात्परा तस्माद्विभाति मणिपीठिका । विष्कम्भायामतः स्तूपपीठिकासन्निभैव सा ॥ ९७ ॥ उपर्यस्याः पीठिकायाश्चैत्यवृक्षो विराजते । विजयाराजधान्युक्तचैत्यवृक्षसहोदरः ॥ ९८ ॥ वीक्ष्य चैत्यश्रियं रम्यां, विश्वलक्ष्मीविजित्वरीम् । मरुच्चलशिरोव्याजादाश्चर्यं व्यञ्जयन्निव ॥ ९९ ॥ योजनान्यष्ट विस्तीर्णायता चत्वारि मेदुरा । पीठिका तस्यां, महेन्द्रध्वज उज्ज्वलः ॥ २०० ॥ तुङ्गः षष्टिं योजनानि, विस्तीर्णश्चैकयोजनम् । तदग्रे चोद्विद्धः, शुद्धरत्नविनिर्मितः ॥ १ ॥ ततो नन्दापुष्करिणी, योजनान्यायता शतम् । एतावद्देव सा च, दशोद्विद्धा प्रकीर्त्तिता ॥ २ ॥ द्विसप्ततिं योजनानामुद्विद्धा लुब्धषट्पदैः । पञ्चाशं विस्तृता रन्दैर्वासितोदकाः ॥ ३ ॥ युग्मम् ॥ अशोकसप्तपर्णाख्यचम्पकाम्रवनैः क्रमात् । अब्जैरत्यन्तसुरभिमचतसृष्वपि ॥ ४ ॥ तथोक्तं स्थानाङ्गे—"पुव्वेण असोगवणं दाहिणओ होइ सत्तवण्णवणं । पूर्वादिषु मनोज्ञेयं, ककुप्सु अवरेण चंपगवणं चूअवणं उत्तरे पासे ॥ ५ ॥" द्वौ मण्डपौ स्तूप एकश्चैत्यवृक्षो महाध्वजः । वापी वनाढ्या वस्तूनि, प्रतिद्वार-

ममूनि षट् ॥६॥ प्रतिप्रासादमेवं च, चत्वारो मुखमण्डपाः । अभ्रङ्कषोत्तुङ्गशृङ्गाश्चत्वारो रङ्गमण्डपाः ॥७॥ स्तूपाश्चत्वारस्तथैव, चैत्यवृक्षेन्द्रकेतवः । चतस्रः पुष्करिण्यश्च, तद्वनानि च षोडश ॥ ८ ॥ प्रासादानामथो मध्ये—ऽस्त्येकैका मणिपीठिका । विष्कम्भायामतः सा च, योजनानीह षोडश ॥ ९ ॥ अष्टोच्छ्रिता तदुपरि, स्याद् देवच्छन्दकः स च । ततायतः पीठिकावत्तुङ्गोऽधिकानि षोडश ॥ १० ॥ चतुर्दिशं तत्र भान्ति, रत्नसिंहासनस्थिताः । अर्हतां प्रतिमा नित्याः, प्रत्येकं सप्तविंशतिः ॥ ११ ॥ प्रतिप्रासादमित्येवं, तासामष्टोत्तरं शतम् । द्वारस्थाः षोडशेत्येवं, चतुर्विंशं शतं स्तुवे ॥ १२ ॥ ऋषभो वर्द्धमानश्च, चन्द्राननजिनेश्वरः । वारिषेणश्चेति नाम्ना, पर्यङ्कासनसंस्थिताः ॥ १३ ॥ द्वे द्वे च नागप्रतिमे, जिनार्चापुरतः स्थिते । द्वे द्वे च यक्षभूतार्चे, आज्ञाभृत्प्रतिमे अपि ॥१४॥ विनयेन संमुखीनघटिताञ्जलिसंपुटे । भक्त्या पर्युपासमाने, स्थिते किञ्चिन्नते इव ॥ १५ ॥ युग्मम् ॥ एकैका चामरधरप्रतिमा पार्श्वयोर्द्वयोः । पृष्ठतश्च छत्रधरप्रतिमैकाऽत्र निश्चिता ॥ १६ ॥ तथोक्तमावश्यकचूर्णौ—"जिणपडिमाणं पुरओ दो दो नागपडिमाओ, दो दो जक्खपडिमाओ, दो दो भूअपडिमाओ, दो दो कुंडधरपडिमाओ" इत्यादि, दामानि धूपघट्योऽष्टौ, मङ्गलानि ध्वजास्तथा । भान्ति षोडश कुम्भादीन्येष्वलङ्करणानि च ॥ १७ ॥ घण्टा वन्दनमालाश्च, भृङ्गाराश्चात्मदर्शकाः । सुप्रतिष्ठकचङ्गेर्यश्छत्रैः पटलकैर्युताः ॥ १८ ॥ युग्मम् ॥ स्वर्णवर्णचारुरजोवालुकाभिर्मनोरमाः । भूमयस्तेषु राजन्ते, मूर्त्तैः शोभालवैरिव ॥ १९ ॥ अथ कैश्चित्कृतस्नानैः, सद्ध्यानैर्धृतधौतिकैः । अन्तर्बहिश्चावदातैः, शरत्कालह्रदैरिव ॥ २० ॥ कैश्चित्कृतोत्त-

रासङ्गैर्मुखकोशावृताननैः । तत्कालनष्टान्तःपापपरावृत्तिभयादिव ॥ २१ ॥ मर्दयद्भिश्चन्दनेन, कैश्चित्कर्पूरकुङ्कुमे । मोहप्रतापयशसी; चूर्णयद्भिरिवोर्जिते ॥ २२ ॥ कैश्चिद् घुसृणनिर्यासोल्लासिकचोलकच्छलात् । हृद्यमान्तं भक्तिरागं, दधद्भिः प्रकटं बहिः ॥ २३ ॥ कैश्चिन्नानावर्णपुष्पोद्दामदामौघदम्भतः । श्रयद्भिरद्भुतश्रेयःश्रेणीमिव करे कृताम् ॥ २४ ॥ वन्दमानैः पर्युपासमानैः पूजापरायणैः । प्रासादास्तेऽभितो भान्ति, सुरासुरनभश्चरैः ॥ २५ ॥ षड्भिः कुलकं ॥

सिद्धायतनानि महोत्सवाश्च २०

अर्हत्कल्याणकमहचिकीर्षयाऽऽगताः सुराः । इह विश्रम्य संक्षिप्तयाना यान्ति यथेप्सितम् ॥ २६ ॥ ततः प्रत्यावर्त्तमानाः, कृतकृत्या इहागताः । रचयन्त्यष्ट दिवसान्, यावदुत्सवमुच्चकैः ॥ २७ ॥ प्रतिवर्षं पर्युषणाचतुर्मासकपर्वसु । इहाष्टौ दिवसान् यावदुत्सवं कुर्वते सुराः ॥ २८ ॥ तथोक्तं जीवाभिगमसूत्रे—'तत्थ णं बहवे भवणवइवाणमंतरजोइसवेमाणिया देवा चउमासियापाडिवएसु संवच्छरिएसु वा अण्णेसु बहुसु जिणजम्मणणिक्खमणणाणुप्पत्तिपरिणिवाणमादिएसु देवकज्जेसु य यावत् अट्ठाहिताओ महामहिमाओ कारेमाणा पालेमाणा सुहंसुहेणं विहरंति" तत्रापि नियतस्वस्वस्थानेषु सुरनायकाः । उत्सवान्सपरीवाराः, कुर्वन्ति भक्तिभासुराः ॥२८॥ तथाह नन्दीश्वरकल्पः—"प्राच्येऽञ्जनगिरौ शक्रः, कुरुतेऽष्टाहिकोत्सवम् । प्रतिमानां शाश्वतीनां, चतुर्द्वारे जिनालये ॥२९॥ तस्य चाद्रेश्चतुर्दिक्स्थमहावापीविवर्त्तिषु । स्फाटिकेषु दधिमुखपर्वतेषु चतुर्ष्वपि ॥३०॥ चत्वारः शक्रदिक्पालाः, कुर्वतेऽष्टाहिकोत्सवम् ॥ ३१ ॥ ईशानेचैत्येष्वर्हत्प्रतिमानां, शाश्वतीनां यथाविधि ।

२५ ॥ २९६ ॥ २८

कुर्वते ॥ ३२ ॥ चमरेन्द्रो दाक्षिणात्या-
न्द्रस्त्वौत्तराहेऽञ्जनाद्रौ विदधाति तम् । तल्लोकपालास्तद्वापीदध्याद्यद्रिषु कुर्वते ॥ ३२ ॥ चमरेन्द्रो दाक्षिणात्या-
ञ्जनाद्रावुत्सवं सृजेत् । तद्वाप्यन्तर्दधिमुखेष्वस्य दिक्पतयः पुनः ॥ ३३ ॥ पश्चिमेऽञ्जनशैले तु, बलीन्द्रः कुरुते
महम् । तद्दिक्पालास्तु तद्वाप्यन्तर्भाग्दधिमुखाद्रिषु ॥ ३४ ॥" एतत्सर्वमर्थतो जम्बूद्वीपप्रज्ञप्तिसूत्रेऽपि । तत्र
गायन्ति गन्धर्वा, मधुरैर्नादविभ्रमैः । समानतालविविधातोद्यनिर्घोषबन्धुरैः ॥ ३५ ॥ मृदङ्गवेणुवीणादितूर्याणि
संगतैः स्वरैः । कौशलं दर्शयन्तीव, तस्यां विबुधपर्षदि ॥३६॥ नृत्यद्देवनर्त्तकीनां, रणन्तो मणिनूपुराः । वदन्तीव
निर्दयांह्रिपातैर्मृदङ्गंह्रिपीडनम् ॥ ३७ ॥ तासां तिर्यग् भ्रमन्तीनामुच्छलन्तः स्तनोपरि । मुक्ताहारा रसावेशान्,
नृत्यन्तीवाप्यचेतनाः ॥ ३८ ॥ धिद्धिधिद्धिधिमिधिमिथेईथेईतिनिस्वनाः । तासां मुखोद्गताश्चेतः, सुखयन्ति सुधा-
भुजाम् ॥ ३९ ॥ पूर्वं हासाप्रहासाभ्यां, स्वर्णकृत् स्वपतीकृतः । कृत्रिमैर्विभ्रमैर्विप्रलोभ्य यः स्त्रीषु लम्पटः
॥ ४० ॥ सोऽत्र कण्ठान्निराकुर्वन्निपतन्तं बलाद्गले । मृदङ्गं भङ्गुरग्रीवो, विलक्षोऽहासयत्सुरान् ॥४१॥ अच्युत-
त्रिदशीभूतप्राग्जन्मसुहृदा कृतः । नागिलेनाप्तसम्यक्त्वः, प्रासेनामरपर्षदि ॥ ४२ ॥ त्रिभिर्विशेषकं ॥ जङ्घा-
विद्याचारणानां, समुदायो महात्मनाम् । इह चैत्यनमस्यार्थं, श्रद्धोत्कर्षादुपेयुषाम् ॥ ४३ ॥ ददात्युपदिशन् धर्मं,
युगपद्भावशालिनाम् । सज्जङ्गमस्थावरयोस्तीर्थयोः सेवनाफलम् ॥ ४४ ॥ द्वीपस्य मध्यभागेऽस्य, चतुष्के विदिशां
स्थिताः । चत्वारोऽन्ये रतिकरा, गिरयः सर्वरत्नजाः ॥ ४५ ॥ योजनानां सहस्राणि, ते दशायतविस्तृताः ।
सहस्रमेकमुत्तुङ्गा, आकृत्या झल्लरीनिभाः ॥ ४६ ॥ सार्द्धे द्वे योजनशते, भूमग्नाः परिवेषतः । एकत्रिंशत्स-

महोत्सवः रतिकराः राजधान्यः

हस्राणि, त्रयोविंशा च षट्शती ॥ ४७ ॥ तेभ्यो लक्षं योजनानामतिक्रम्य चतुर्दिशम् । जम्बूद्वीपसमा राज-
धान्यः प्रत्येकमीरिताः ॥ ४८ ॥ तत्र दक्षिणपूर्वस्यां, स्थिताद्रतिकराचलात् । प्राच्यां पद्मानामदेव्याः, पद्मसा
सुमनाः पुरी ॥ ४९ ॥ शिवादेव्या दक्षिणस्यां, पुरी सौमनसाभिधा । अर्चिर्माली प्रतीच्यां स्याच्छचीदेव्या
महापुरी ॥५०॥ उत्तरस्यां मञ्जुनाम्न्या, राजधानी मनोरमा । दक्षिणपश्चिमायां च, स्थिताद्रतिकरादथ ॥ ५१ ॥ २०
पूर्वस्याममलादेव्या, भूता नाम महापुरी । भूतावतंसका याम्यामप्सरोऽभिधभर्तृका ॥ ५२ ॥ प्रतीच्यां नव-
मिकाया, गोस्तूपाख्या महापुरी । स्यादुत्तरस्यां रोहिण्या, राजधानी सुदर्शना ॥ ५३ ॥ अष्टाप्येवं राजधान्योऽ-
नयोर्दिशां चतुष्टये । अष्टानां मुख्यदेवीनां, वज्रपाणेः सुरेशितुः ॥ ५४ ॥ अथ चोत्तरपूर्वस्यां, योऽसौ रतिक-
राचलः । कृष्णादेव्यास्ततः प्राच्यां, पुरी नन्दोत्तराभिधा ॥ ५५ ॥ दक्षिणस्यां कृष्णराज्या, देव्या नन्दाभि-
धा पुरी । पश्चिमायां तु रामायाः, पुर्युत्तरकुराभिधा ॥ ५६ ॥ उदग्रामरक्षितायाः, पुरी देवकुराभिधा । योऽप्यु- २५
त्तरपश्चिमायां, शैलो रतिकरस्ततः ॥ ५७ ॥ वसुदेव्या राजधानी, प्राच्यां रत्नाभिधा भवेत् । याम्यां तु वसु- ॥२९७॥
गुप्ताया, रत्नोच्चयाभिधा पुरी ॥ ५८ ॥ प्रतीच्यां वसुमित्रायाः, सर्वरत्नाभिधा पुरी । वसुन्धरायाश्चोदीच्यां,
नगरी रत्नसंचया ॥५९॥ एता ईशानेन्द्रदेवीराजधान्योऽष्ट पूर्ववत् । एकैकार्हच्चैत्यलब्धसुषमाः षोडशाप्यमूः ॥ २८
॥ ६० ॥ इत्यर्थतः स्थानाङ्गादिषु । मतान्तरे तूत्तराशासंबद्धौ यावुभौ गिरी । तयोः प्रत्येकमष्टासु, दिक्ष्वीशान-
सुरेशितुः ॥६१॥ महिषीणां राजधान्योऽष्टानामष्टाष्ट निश्चिताः । एवं च याम्यदिक्संबद्धयो रतिकरागयोः ॥६२॥

प्रत्येकमष्टासु दिक्षु, वज्रपाणेर्बिडौजसः । इन्द्राणीनां राजधान्योऽष्टानामष्टाष्ट निश्चिताः ॥ ६३ ॥ तथोक्तं जिनप्रभसूरिकृते नन्दीश्वरकल्पे—"तत्र द्वयो रतिकराचलयोर्दक्षिणस्थयोः । शक्रस्येशानस्य पुनरुत्तरस्थितयोः पृथक् ॥ ६४ ॥ अष्टानां महादेवीनां, राजधान्योऽष्ट दिक्षु ताः । लक्षाबाधा लक्षमाना, जिनायतनभूषिताः ॥ ६५ ॥ सुजाता च सौमनसा, चार्चिर्माली प्रभाकरा । पद्मा शिवा शच्यंजने, भूता भूतावतंसिका ॥ ६६ ॥ गोस्तुपासुदर्शने अप्यमलाप्सरसौ तथा । रोहिणी नवमी चाथ, रत्ना रत्नोच्चयापि च ॥ ६७ ॥ सर्वरत्ना रत्नसंचया वसुर्वसुमित्रिका । वसुभागापि च वसुन्धरानन्दोत्तरे अपि ॥ ६८ ॥ नन्दोत्तरकुरुर्देवकुरुः कृष्णा ततोऽपि च । कृष्णराजीरामारामरक्षिताः प्राक्क्रमादमूः ॥ ६९ ॥ इत्यादि । स्थापना । षोडशैवं राजधानीचैत्यानि प्राक्तने मते । मतान्तरे पुनर्द्वात्रिंशदेतानीति निर्णयः ॥ ७० ॥ तथाह नन्दीश्वरस्तोत्रकारः—इअ वीसं बावन्नं च जिणहरे गिरिसिहरेसु संथुणिमो । इंदाणिरायहाणिसु वत्तीसं सोलस व वंदे ॥ ७१ ॥" एतत्सर्वमप्यर्थतो नन्दीश्वरस्तोत्रं सर्वं सूत्रतोऽपि योगशास्त्रवृत्तावप्यस्ति । दीपोत्सवामावास्याया, आरभ्य प्रत्यमादिनम् । अपोषणं वितन्वाना, वर्षं यावन्निरन्तरम् ॥ ७२ ॥ भक्त्या श्रीजिनचैत्यानां, कुर्वन्तो वन्दनार्चनम् । नन्दीश्वरस्तुतिस्तोत्रपाठपावितमानसाः ॥ ७३ ॥ भव्या नन्दीश्वरद्वीपमेवमाराधयन्ति ये । तेऽर्जयन्त्यार्जवोपेताः, श्रेयसीं आयसीं श्रियम् ॥ ७४ ॥

१ द्वयोर्वैमानिकेन्द्रयोः षोडशेन्द्राण्यःज्योतिष्कव्यन्तरेन्द्राण्योऽपि तावत्य इत्येकैकपक्षोभयपक्षयोश्च विवक्षायां न विरोधः ।

इत्थं व्यावर्णितरूपं, द्वीपं नन्दीश्वराभिधम् । तिष्ठत्यावेष्ट्य परितो, नन्दीश्वरोदवारिधिः ॥ ७५ ॥ सुमनःसुमनोभद्रौ, सुरौ समृद्धिमत्तया । नन्दीश्वरौ तत्संबन्धि, जलमस्येत्यसौ तथा ॥ ७६ ॥ लग्नं नन्दीश्वरे द्वीपे, जलं वाऽस्येत्यसौ तथा । असौ नन्दीश्वरद्वीपाद्वार्द्धिर्द्विगुणविस्तृतः ॥ ७७ ॥ एनमावेष्ट्य परितः, स्थितो द्वीपोऽरुणाभिधः । नन्दीश्वराब्धेर्द्विगुणविष्कम्भोऽसौ निरूपितः ॥ ७८ ॥ असौ निजाधीश्वरयोरशोकवीतशोकयोः । सुरयोः प्रभया रक्तकान्तित्वादरुणाभिधः ॥ ७९ ॥ यद्वैतत्पर्वतादीनां, सद्वज्ररत्नजन्मनाम् । प्रसरद्भिः प्रभाजालैररुणत्वात्तथाभिधः ॥ ८० ॥ अरुणोदाभिधो वार्द्धिरेनमावृत्त्य तिष्ठति । विस्तारतोऽरुणद्वीपद्विगुणः परतोऽप्यसौ ॥ ८१ ॥ सुभद्रसुमनोभद्राभिधयोरेतदीशयोः । भूषणाभाभिररुणं, जलं यस्येत्यसौ तथा ॥ ८२ ॥ यद्वाऽरुणद्वीपपरिक्षेप्यमुष्योदकं स्फुरत् । ततोऽरुणोदाभिधानः, प्रसिद्धोऽयं पयोनिधिः ॥ ८३ ॥ एवमन्येष्वपि ज्ञेया, निःशेषद्वीपवार्द्धिषु । व्यासद्वैगुण्यनामार्थौ, स्वामिनश्च स्वयं श्रुतात् ॥ ८४ ॥ ततोऽरुणवरो द्वीपस्तमप्याश्रित्य तिष्ठति । पारावारोऽरुणवरो, महाभोगीव सेवधिम् ॥ ८५ ॥ एनं द्वीपोऽरुणवरावभासः परिषेवते । आलिङ्गत्यरुणवरावभासस्तं च वारिधिः ॥ ८६ ॥ ततश्च कुण्डलद्वीपो, मेदिन्या इव कुण्डलम् । अयं त्रिप्रत्यवतारापेक्षया द्वादशो भवेत् ॥ ८७ ॥ स्थानाङ्गतृतीयस्थानवृत्तौ च अरुणादीनां त्रिप्रत्यवतारमनाश्रित्यायमेकादशोऽभिहितः, तथाहि—"जंबूदीवो १ धायइ २ पुक्खरदीवो ३ अ वारुणिवरो ४ य । खीरवरोवि य दीवो ५ घयवरदीवो य ६ खोदवरो ७ ॥ ८८ ॥ नंदीसरो अ ८ अरुणो ९ अरुणोवाओ य १० कुंडल-

२०
२५
॥२९८॥
२७

वरो य ११ । तह संख १२ रुअग १३ भुअवर १४ कुस १५ कुंचवरो य तो १६ दीवो ॥ ८९ ॥” इति क्षमापेक्ष-
यैकादशो कुण्डलद्वीपे” इत्युक्तं, एवं भगवतीशतकचतुर्थोद्देशकवृत्तावप्ययमेकादशोऽभिहित इति, तत्त्वं बहु-
श्रुता विदन्ति ॥ अस्मिंश्च कुण्डलगिरिर्मानुषोत्तरवत्स्थितः । योजनानां द्विचत्वारिंशतं तुङ्गः सहस्रकान् ॥ ९० ॥
सहस्रमेकं भूमग्नो, मूले मध्ये तथोपरि । विस्तीर्णोऽयं भवेच्छैलो, मानुषोत्तरशैलवत् ॥ ९१ ॥ चतुर्दिशं चतु-
र्द्वाराश्चत्वारोऽत्र जिनालयाः । चतुर्गतिभवारण्यभ्रान्ताङ्गिविश्रमा इव ॥ ९२ ॥ सर्वमेषां स्वरूपं तु, नन्दीश्व-
राद्रिचैत्यवत् । पार्श्वेऽथाभ्यन्तरेऽस्याद्रेर्दक्षिणोत्तरयोर्दिशोः ॥ ९३ ॥ चत्वारश्चत्वार एव, प्रत्येकं सन्ति भूधराः ।
सोमयमवैश्रमणवरुणप्रभसंज्ञकाः ॥ ९४ ॥ अष्टाप्येते रतिकरपर्वताकृतयो मताः । उद्वेधोच्चत्वविष्कम्भैरुदाम-
रामणीयकाः ॥ ९५ ॥ एकैकस्याथ तस्याद्रे, राजधान्यश्चतुर्दिशम् । जम्बूद्वीप इव द्वात्रिंशदेता विस्तृतायताः
॥ ९६ ॥ सोमा सोमप्रभा शिवप्राकारा नलिनापि च । राजधान्यो गिरेः सोमप्रभात्प्राच्यादिषु स्थिताः ॥९७॥
विशालाऽतिविशाला च, शय्याप्रभा तथाऽमृता । यमप्रभगिरेरेता, राजधान्यश्चतुर्दिशम् ॥ ९८ ॥ भवत्यचल-
नद्धाख्या, समक्कसा कुबेरिका । धनप्रभा वैश्रमणप्रभशैलाच्चतुर्दिशम् ॥ ९९ ॥ वरुणप्रभशैलाच्च, वरुणा वरु-
णप्रभा । पुर्यपाच्यादिषु दिक्षु, कुमुदा पुण्डरीकिणी ॥ ३०० ॥ दक्षिणस्यां च या एता, नगर्यः षोडशोदिताः ।
चतुर्णां लोकपालानां, ताः सौधर्मेन्द्रसेविनाम् ॥ १ ॥ उत्तरस्यां पुनरिमा, याः षोडश निरूपिताः । चतुर्णां
लोकपालानां, ता ईशानेन्द्रसेविनाम् ॥ २ ॥ तथोक्तं द्वीपसागरप्रज्ञप्तिसंग्रहण्यां—“कुंडलनगस्स अब्भंतर-

पासे हुंति रायहाणीओ। सोलस दक्खिणपासे सोलस पुण उत्तरे पासे ॥ १ ॥" इत्यादि भगवतीतृतीयशताष्टमोद्देशकवृत्तौ। एवं च परितो भाति, कुण्डलोदः पयोनिधिः। तं कुण्डलवरो द्वीपः, परिक्षिप्याभितः स्थितः ॥ ३ ॥ स्यात्कुण्डलवरोदाब्धिस्ततो द्वीपः स्थितोऽभितः। कुण्डलवरावभासस्तन्नामाग्रे पयोनिधिः ॥४॥ अग्रे शङ्खाभिधो द्वीपः, शङ्खवार्द्धिपरिष्कृतः। ततः शङ्खवरो द्वीपस्ततः शङ्खवरोऽम्बुधिः ॥ ५ ॥ द्वीपस्ततः शङ्खवरावभास इति विश्रुतः। स विष्वगञ्चितः शङ्खवरावभासवार्धिना ॥ ६ ॥ ततोऽग्रे रुचकद्वीप, एष चाष्टादशो भवेत्। त्रिप्रत्यवतारमतेऽन्यथा द्वीपस्त्रयोदशः ॥ ७ ॥ अरुणादीनां द्वीपसमुद्राणां त्रिप्रत्यवतारश्च जीवाभिगमसूत्रवृत्त्यादौ सविस्तरं स्पष्ट एव, जीवाभिगमचूर्णावपि—"अरुणादीया दीवसमुद्दा तिपडोयारा यावत्सूर्यवरावभास' इत्युक्तमिति ज्ञेयं, संग्रहणीलघुवृत्त्यभिप्रायेण त्वयं रुचकद्वीपोऽनिश्चितसंख्याकोऽपि, जंबूधायइ पुक्खरेत्यादि संग्रहणीगाथायां 'रुणवायत्ति' पदेनारुणादीनां त्रिप्रत्यवतारस्य सूचितत्वात्, कुंडलवरावभासात्परं संख्याक्रमेणानभिधानाच्च, तथा च तद्ग्रन्थः—"एतानि च जम्बूद्वीपादारभ्य क्रमेण द्वीपानां नामानि, अत ऊर्ध्वं तु शङ्खादिनामानि यथा कथंचित्, परं तान्यपि त्रिप्रत्यवताराणी"त्यादि, जम्बूद्वीपप्रज्ञप्तिवृत्तौ तु एकेनादेशेन एकादशो द्वितीयादेशेन त्रयोदशो तृतीयादेशेन एकविंशो रुचकद्वीपे इत्युक्तमिति ज्ञेयं, जीवसमासवृत्तौ तु ईक्षुरससमुद्रादनन्तरं नन्दीश्वरो द्वीपः ८ अरुणवरः ९ अरुणावासः १० कुण्डलवरः ११ शंखवरः १२ रुचकवरः १३ इति, अनुयोगद्वारचूर्ण्यभिप्रायेण त्रयोदशो रुचकवरः, अनुयोगद्वारसूत्रे

कुण्डलगिरिः तत्संख्याविचारः

२०

२५



२८

त्वरुणावासशङ्खवरद्वीपौ लिखितौ न दृश्येते, अतस्तदभिप्रायेणैकादशो रुचकवरः, परमार्थं तु योगिनो विदन्तीति । तथा जीवसमासवृत्त्यभिप्रायेण जम्बूद्वीपादयो रुचकवरपर्यन्ता द्वीपसमुद्रा नैरन्तर्येणावस्थिता नामतः प्रतिपादिताः, अत ऊर्ध्वं तु भुजंगवरकुशवरक्रौंचवरा असङ्ख्येयतमा असंख्येयतमा इति ध्येयं । द्वीपस्यास्य बहुमते, वर्त्तते वलयाकृतिः । पर्वतो रुचकाभिख्यः, स्फारो हार इवोल्लसन् ॥८॥ योजनानां सहस्राणि, चतुरशीतिमुच्छ्रितः । मूले दश सहस्राणि, द्वाविंशानि स विस्तृतः ॥९॥ मध्ये सप्त सहस्राणि, त्रयोविंशानि विस्तृतः । चतुर्विंशांश्च चतुरः, सहस्रान् मूर्ध्नि विस्तृतः ॥ १० ॥ एवं महापर्वताः स्युः, कुण्डलाकृतयस्त्रयः । मर्त्योत्तरः कुण्डलश्च, तथाऽयं रुचकाचलः ॥ ११ ॥ तथोक्तं स्थानाङ्गे—"ततो मंडलियपव्वता पं०, तं०—माणुसुत्तरे कुंडलवरे रुअगवरे" तुर्ये सहस्रे मूर्ध्न्यस्य, मध्ये चतसृणां दिशाम् । अस्ति प्रत्येकमेकैकं, सुन्दरं सिद्धमन्दिरम् ॥ १३ ॥ तानि चत्वारि चैत्यानि, नन्दीश्वराद्रिचैत्यवत् । स्वरूपतश्चतसृणां, तिलकानीव दिक्श्रियाम् ॥ १४ ॥ चैत्यस्य तस्यैकैकस्य, प्रत्येकं पार्श्वयोर्द्वयोः । सन्ति चत्वारि चत्वारि, कूटान्यभ्रङ्कषानि वै ॥ १५ ॥ विदिक्षु तस्यैव मूर्ध्नि, स्याच्चतुर्थे सहस्रके । एकैकं कूटमुत्तुङ्गमभङ्गुरश्रियाऽञ्चितम् ॥ १६ ॥ षट्त्रिंशत्येषु कूटेषु, तावत्यो दिक्कुमारिकाः । वसंति ताश्चतस्रस्तु, द्वीपस्याभ्यन्तरार्द्धके ॥ १७ ॥ तथोक्तं षष्ठाङ्गे मल्ल्यध्ययनवृत्तौ—"मज्झिमरुअ-

---

१ श्रीमद्भिरभयदेवसूरिभिः त्रिप्रत्यवतारतया अविवक्षा यथा सूचिता कुण्डलस्थाने तथाऽत्र ग्रहणे न विरोधः कोऽपि, अनुयोगसूत्रे तु गाथाबन्धानुलोम्येन 'परमाणु' इति गाथायां उच्छ्लक्ष्णश्लक्ष्णिकादीनामिवाग्रहणं, द्वादशता तु न कथंचनापि.

गवत्यथवा' इत्यत्र रुचकद्वीपस्याभ्यन्तरार्द्धवासिन्य" इति, एवमावश्यकवृत्त्यादिष्वपि, जम्बूद्वीपप्रज्ञप्तिवृत्तौ तु चतुर्विंशत्यधिकचतुःसहस्रप्रमाणे रुचकगिरिविस्तारे द्वितीयसहस्रे चतुर्दिग्वर्त्तिषु कूटेषु पूर्वादिदिक्क्रमेण चतस्रो वसन्ती"त्युक्तमिति ज्ञेयं, अयं च रुचकद्वीपो, रुचकाब्धिपरिष्कृतः। द्वीपोऽग्रे रुचकवरस्तादृक्पाथोधिसंयुतः ॥ १८ ॥ ततोऽग्रे रुचकवरावभासद्वीप इष्यते। परिष्कृतोऽसौ रुचकवरावभासवार्द्धिना ॥ १९ ॥ एवमब्धिः सूर्यवरावभासोऽन्ते ततः परम्। देवद्वीपः स्थितो देववार्द्धिश्चावेष्ट्य तं स्थितः ॥ २० ॥ नागद्वीपस्तमभितो, नागाब्धिश्च ततः परम्। यक्षद्वीपस्तदग्रे च, यक्षोदवारिधिस्ततः ॥ २१ ॥ भूताभिधस्ततो द्वीपस्ततो भूतोदवारिधिः। स्वयंभूरमणद्वीपः, स्वयंभूरमणाम्बुधिः ॥ २२ ॥ अन्ते स्थितः सर्वगुरुः, क्रोडीकृत्याखिलानपि। पितामह इवोत्सङ्गक्रीडत्पुत्रपरम्परः ॥ २३ ॥ आसेवितोऽसौ जलधिर्जगत्या, वृद्धः पतिः सत्कुलभार्ययेव। वलीपिनद्धः पलितावदातस्तरङ्गलेखाब्धिकफच्छलेन ॥ २४ ॥ लोकं परीत्यायमलोकमासमिवोत्सुको लोलतरोर्मिचक्रैः। तस्थौ च रुद्धः प्रियया जगत्या, लोकस्थितिच्छेदकलङ्कभीतेः ॥ २५ ॥ ( इन्द्रवज्रा ) तस्याः पुरस्त्वविलया वलया घनाब्धिमुख्या मिथः समुदिता उदिता दिताघैः। ये रक्षयन्ति परितोऽलमलोकसङ्गाद्, रत्नप्रभां कुलवधूं स्थविरा इवोच्चैः ॥ २६ ॥ ( वसन्त० ) विश्वाश्चर्यदकीर्त्तिकीर्त्ति० सर्गः पूर्त्तिमियाय संप्रति चतुर्विंशो निसर्गोज्ज्वलः ॥ २७ ॥ इति श्रीलोकप्रकाशे चतुर्विंशतितमः सर्गः। ग्रंथाग्रं ४२७

कुण्डलवरपर्वतः देवादिद्वीपादयश्च

१५

२०

॥३००॥

२५

१ वहिर्वर्तिनीनां चतुर्थे सहस्रे अभ्यन्तरवासिनीनां तु द्वितीये सहस्रेऽवस्थानं स्यात् तदा न विरोधः।

# अथ लोकप्रकाशे पञ्चविंशः सर्गः ।

॥ अथैतस्मिन्नेव तिर्यग्लोके सदा प्रतिष्ठितम् । वक्ष्ये चराचरं ज्योतिश्चक्रं गुरूपदेशतः ॥ १ ॥ मेरुमध्याष्टप्रदेश-
स्वरूपात् समभूतलात् । ससोत्पत्य योजनानां, शतानि नवतिं तथा ॥ २ ॥ ज्योतिश्चक्रोपक्रमः स्यादतीत्योर्द्ध्वं
ततः परम् । दशाढ्यं योजनशतमेति सम्पूर्णतामिदम् ॥ ३ ॥ एकादशैकविंशानि, योजनानां शतान्यथ ।
ज्योतिश्चक्रं भ्रमत्यर्वाक्, चक्रवालेन मेरुतः ॥ ४ ॥ तिष्ठत्यलोकतश्चार्वाग्, ज्योतिश्चक्रं स्थिरात्मकम् । एकादशै-
र्योजनानां, नन्वेकादशभिः शतैः ॥ ५ ॥ एवं तत् सर्वतो मेरोर्न्यूनार्द्धरज्जुविस्तृतम् । दशाढ्यं योजनशतं, स्यात्
सर्वत्रापि मेदुरम् ॥ ६ ॥ अन्यान्यकाष्ठाश्रयणादावृत्ताभिर्निरन्तरम् । घटीकाभिर्हरन्तीभिर्जनजीवातुजीवनम्
॥ ७ ॥ लब्धात्मलाभां दिवसनिशामालां सुबिभ्रतम् । कुर्वन्तं फलनिष्पत्तिं, विष्वक् क्षेत्रानुसारिणीम् ॥ ८ ॥
नानारकस्थितियुतं, नरक्षेत्रोरुकूपके । कालारघट्टं भ्रमयन्त्यर्कचन्द्रादिधूर्वहाः ॥ ९ ॥ त्रिभिर्विशेषकम् ॥
ज्योतिश्चक्रस्यास्य तारापटलं स्यादधस्तनम् । योजनानां ससशत्या, सनवत्या समक्षितेः ॥ १० ॥ योजनैर्दश-
भिस्तस्मादूर्द्ध्वं स्यात्सूरमण्डलम् । अष्टभिर्योजनशतैरेतच्च समभूतलात् ॥ ॥ ११ ॥ अशीत्या योजनैः सूरमण्ड-
लाच्चन्द्रमण्डलम् । अष्टशत्या योजनानां, साशीत्येदं समक्षितेः ॥ १२ ॥ नवत्या च योजनैस्तत्तारावृन्दादध-
स्तनात् । विंशत्या योजनैश्चन्द्रात्तारावृन्दं तथोर्द्ध्वगम् ॥ १३ ॥ नवभिर्योजनशतैः, समक्षितेरधस्तनात् । तारा-

५

१०

१३

वृन्दाद्दशोपेतशतेन च भवेदिदम् ॥ १४ ॥ अत्र सङ्ग्रहणीवृत्त्यादावयं विशेषः—चत्वारि योजनानीन्दोर्गत्वा नक्षत्रमण्डलम् । चतुर्भिर्योजनैस्तस्माद्बुधानां पटलं स्थितम् ॥ १५ ॥ त्रिभिश्च योजनैः शुक्रमण्डलं बुधमण्डलात् । योजनैस्त्रिभिरेतस्मात्, स्याद्वाचस्पतिमण्डलम् ॥ १६ ॥ गुरूणां पटलाद्भौममण्डलं योजनैस्त्रिभिः । त्रिभिश्च योजनैर्भौमात्, स्याच्छनैश्चरमण्डलम् ॥ १७ ॥ विंशत्या योजनैरेतत्, स्थितं शशाङ्कमण्डलात् । नवभिर्योजनशतैः, स्थितं च समभूतलात् ॥ १८ ॥ तथाऽऽह सङ्ग्रहणी—"ताररविचंदरिक्खा बुहसुक्का जीवमंगलसणीया । सगसयनउअ दस असीइ चउ चउ कमसो तिआ चउसु ॥१९॥" जम्बूद्वीपप्रज्ञप्तिवृत्तावपि—शतानि सप्त गत्वोर्द्ध्वं, योजनानां भुवस्तलात् । नवतिं च स्थितास्तारा:, सर्वाधस्तान्नभस्तले ॥ २० ॥ तारकापटलाद्गत्वा, योजनानि दशोपरि । सूराणां पटलं तस्मादशीतिं शीतरोचिषाम् ॥ २१ ॥ चत्वारि तु ततो गत्वा, नक्षत्रपटलं स्थितम् । गत्वा ततोऽपि चत्वारि, बुधानां पटलं भवेत् ॥ २२ ॥ शुक्राणां च गुरूणां च, भौमानां मन्दसंज्ञिनाम् । त्रीणि त्रीणि च गत्वोर्द्ध्वं, क्रमेण पटलं स्थितम् ॥ २३ ॥ इति ॥ गन्धहस्ती त्वाह—"सूर्याणामधस्तान्मङ्गलाश्चरन्ती"ति, हरिभद्रसूरिः पुनरधस्तने भरण्यादिकं नक्षत्रमुपरितने च स्वात्यादिकमस्तीत्याह, तथा च तट्टीका—"सत्तहिं नउएहिं उप्पिं हेट्ठिल्लो होइ तलोत्ति, भरणिमाइ जोइसपयरो भवतीत्यर्थः, तथोपरितलः स्वात्युत्तरो ज्योतिषां प्रतर इति, तत्त्वं पुनः केवलिनो विदन्तीति सङ्ग्रहणीवृत्तौ, योगशास्त्रचतुर्थप्रकाशवृत्ता-

१ पूर्वं पटलशब्देन स्थितेरुक्तत्वाद् अत्र सूर्यचारापेक्षेणोक्तेन पाठेन तारकादीनां चारोऽनियत इति न विरोधः ।

ज्योतिष्क-
समभूतल-
योरन्तरं

२०


२५
२६

वपि, अत्र सर्वोपरि किल स्वातिनक्षत्रं सर्वेषामधो भरणिनक्षत्रं सर्वदक्षिणो मूलः सर्वोत्तरश्चाभीचिरित्युक्त-
मिति ज्ञेयम् ॥ नक्षत्रपटले सर्वान्तरङ्गमभिजिद्भवेत् । यद्यप्यभिजिदादीनि, द्वादशान्तरमण्डले ॥ २४ ॥
चरन्ति चारमृक्षाणि, मेरोर्दिशि तथाप्यदः । शेषैकादशनक्षत्रापेक्षयाऽन्तः प्रवर्त्तते ॥ २५ ॥ तद्वन्मूलं सर्व-
बाह्यं, यद्यप्यष्टममण्डले । बहिश्चराण्युडूनि स्युर्मृगशीर्षादिकानि षट् ॥ २६ ॥ तथाप्यपरबाह्यर्क्षापेक्षयाऽम्भो-
निधेर्दिशि । किञ्चिद्बहिस्ताच्चरति, ततस्तादृशमीरितम् ॥ २७ ॥ ज्योतिश्चक्रदशोपेतशतयोजनमेदुरे । नक्षत्र-
पटलांशो यश्चतुर्योजनमेदुरः ॥ २८ ॥ तस्योपरितले स्वातिर्भरणी स्यादधस्तले । एवं नक्षत्रपटलं, चिह्नैश्चतुर्भि-
रङ्कितम् ॥ २९ ॥ इदमर्थतो जम्बूद्वीपप्रज्ञप्तिवृत्तौ । चरज्योतिश्चक्रगता, अपि प्रोक्ता ध्रुवा स्थिराः । तत्पार्श्ववर्तिन-
स्तारास्तानेवानुभ्रमन्ति च ॥ ३० ॥ ज्योतिश्चक्रे चरन्त्यस्मिन्, ज्योतिष्काः पञ्चधा सुराः । विमानैः स्वैश्चन्द्र-
सूर्यग्रहनक्षत्रतारकाः ॥ ३१ ॥ पञ्चानामप्यथैतेषां, विमानान्यनुकुर्वते । संस्थानेन कपित्थस्य, फलमुत्तानमर्द्धितम्
॥ ३२ ॥ ननु ज्योतिर्विमानानि, कपित्थार्द्धाकृतीनि चेत् । सूर्यचन्द्रविमानानां, स्थूलानामपि तादृशाम् ॥ ३३ ॥
बाढमस्तु दूरतया, मस्तकोपरिवर्त्तिनाम् । वर्त्तुलत्वप्रतिभासोऽधोवर्त्तिषु जनेष्वयम् ॥ ३४ ॥ यत्कपित्थफला-
र्द्धस्याप्यूर्द्ध्वं दूरं कृतस्थितेः । परभागादर्शनतो, वर्त्तुलत्वमवेक्ष्यते ॥ ३५ ॥ किन्तूदयास्तसमये, तिर्यक् चङ्क्रमणे
कथम् । न तथा तानि दृश्यन्ते, तिर्यक्क्षेत्रस्थितान्यपि ? ॥ ३६ ॥ अत्रोच्यते—सामस्त्येन कपित्थार्द्धफलाका-
राण्यमूनि न । किन्त्वमीषां विमानानां, पीठानि तादृशान्यथ ॥ ३७ ॥ प्रासादाश्चैतदुपरि, तथा कथंचन

५ १० १४

स्थिताः । यथा पीठैः सहाकारो, भूम्ना वर्त्तुलतां श्रयेत् ॥ ३८ ॥ एकान्ततः समवृत्ततया तु दूरभावतः । चन्द्रादिमण्डलाकारो, जनानां प्रतिभासते ॥ ३९ ॥ तथाहुः विशेषणवतीकाराः—"अद्धकविट्ठागारा उदयत्थमणम्मि कह न दीसंति । ससिसूराण विमाणाइं तिरियखेत्तट्ठियाइं च ॥१॥ उत्ताणद्धकविट्ठागारं पीढं तदुवरि पासाओ । वट्टालेखेण तओ समवट्टं दूरभावाओ ॥ २ ॥ विशेषश्चात्र प्रज्ञापनासूत्रे–"जे य गहा जोइसम्मि चारं चरंति केऊ अगतिरतिया अट्ठावीसतिविहा णक्खत्तदेवगणा(ते) णाणासंठाणसंठिया य," जीवाभिगमवृत्तावपि–तथा ये ग्रहा ज्योतिश्चक्रे चारं चरन्ति केतवो ये च बाह्यद्वीपसमुद्रेष्वगतिरतिका ये चाष्टाविंशतिदेवनक्षत्रगणास्ते सर्वेऽपि नानाविधसंस्थानसंस्थिताः, चशब्दात्तसतपनीयवर्णाश्च ॥ एकस्य योजनस्यांशानेकषष्टिसमुद्भवान् । षट्पञ्चाशतमिन्दोः स्याद्विमानं विस्तृतायतम् ॥ ४० ॥ अंशानेतादृशानष्टाविंशतिं तत् समुच्छ्रितम् । सर्वे ज्योतिर्विमाना हि, निजव्यासार्द्धमुच्छ्रिताः ॥ ४१ ॥ अष्टचत्वारिंशतं प्रागुक्तांशान् विस्तृतायतम् । विवस्वन्मण्डलं भागांश्चतुर्विंशतिमुच्छ्रितम् ॥ ४२ ॥ विशेषतस्तु–चतुर्दश शतान्यष्टषष्टिः क्रोशास्तथोपरि । धनुःशता सप्तदश, चतुर्युक्ताः करत्रयम् ॥ ४३ ॥ अङ्गुलाः पञ्चदश च, चत्वारः साधिका यवाः । ततायतं चन्द्रबिम्बमुत्सेधाङ्गुलमानतः ॥ ४४ ॥ शतानि द्वादशैकोनषष्टिः क्रोशास्तथोपरि । चापा द्वात्रिंशत्रिहस्ती, त्रयोऽङ्गुलाश्च साधिकाः ॥ ४५ ॥ ततायतं सूर्यबिम्बमुत्सेधाङ्गुलमानतः । परिक्षेपस्तु विज्ञेयः, स्वयमेवानयोर्द्वयोः ॥ ४६ ॥ प्रमाणाङ्गुलजक्रोशद्वयमायतविस्तृताः । स्युर्ग्रहाणां विमानास्ते, क्रोशमेकं समुच्छ्रिताः ॥ ४७ ॥ नक्षत्राणां

नक्षत्रादिस्थानं विमानानामाकाराः विष्कम्भादि च

२०

२५



२८

विमानाश्च, क्रोशमायतविस्तृताः । क्रोशार्द्धमुच्छ्रिताः प्रोक्ताः, प्रमाणाङ्गुलमानतः ॥ ४८ ॥ प्रमाणाङ्गुलजेष्वाससहस्रायतविस्तृताः । ताराविमानाः स्युः पञ्चशतचापसमुच्छ्रिताः ॥ ४९ ॥ एतच्च तारादेवानामुत्कृष्टस्थितिशालिनाम् । परीमाणं विमानानां, जघन्यायुर्जुषां पुनः ॥ ५० ॥ विमाना धनुषां पञ्च, शतान्यायतविस्तृताः । तेषामर्द्धतृतीयानि, शतानि पुनरुच्छ्रिताः ॥ ५१ ॥ तथा च तत्त्वार्थभाष्यम्–"सर्वोत्कृष्टायास्ताराया अर्द्धक्रोशो जघन्यायाः पञ्च धनुःशतानि, विष्कम्भार्द्धबाहल्याश्च भवन्ति सर्वे," नरक्षेत्रात्तु परतो, मानमेषां यथाक्रमम् । एतदर्द्धप्रमाणेन, विज्ञेयं स्थायिनां सदा ॥ ५२ ॥ तथोक्तम्–"नरखेत्ताउ बहिं पुण अद्धपमाणा ठिया निच्चं" योगशास्त्रे चतुर्थप्रकाशवृत्तौ तु–"मानुषोत्तरात्परतश्चन्द्रसूर्या मनुष्यक्षेत्रीयचन्द्रसूर्यप्रमाणा" इत्युक्तमिति ज्ञेयम्, निरालम्बान्यनाधाराण्यविश्रामाणि यद्यपि । चन्द्रादीनां विमानानि, चरन्ति स्वयमेव हि ॥ ५३ ॥ तथापीदृक्षाभियोग्यनामकर्म्मानुभावतः । स्फारितस्कन्धशिरसः, सिंहाद्याकारधारिणः ॥ ५४ ॥ अपरेषु सजातीयहीनजातीयनाकिषु । निजस्फातिप्रकटनादत्यन्तं प्रीतचेतसः ॥ ५५ ॥ स्थित्वा स्थित्वाऽधो वहन्ते, निर्जरा आभियोगिकाः । तदेककर्म्माधिकृताः, सर्वदाऽखिन्नमानसाः ॥ ५६ ॥ त्रिभिर्विशेषकम् ॥ प्रत्यक्षं वीक्ष्यमाणत्वान्न चैतन्नोपपद्यते । अस्मिन्मनुष्यलोकेऽपि, केचिद्यथाऽऽभियोगिकाः ॥ ५७ ॥ तादृक्कर्मानुभावेनानुभवन्तोऽपि दासताम् । सजातीयेतरेषूच्चैर्दर्शयन्तः स्ववैभवम् ॥ ५८ ॥ ख्यातस्य नेतुरस्य

५ १० १३

१ क्षेत्रमानमपेक्ष्य चन्द्रसूर्यमानार्थमेतत्, न त्वत्र विमानायामाद्यतिदेश इति ।

सः, संमता इति सम्मदात् । रथादिलग्ना धावन्तः, सेवन्ते स्वमधीश्वरम् ॥ ५९ ॥ त्रिभिर्विशेषकम् ॥ नीचोत्तमानि कृत्यानि, प्रोक्तानि स्वामिना मनाक् । धावन्तः पञ्चषा एकपदे कुर्वन्ति हर्षिताः ॥ ६० ॥ तथाह तत्त्वार्थभाष्यम्–"अमूनि च ज्योतिष्कविमानानि लोकस्थित्या प्रसक्तावस्थितगतीन्यपि ऋद्धिविशेषदर्शनार्थमाभियोग्यनामकर्म्मोदयाच्च नित्यं गतिरतयो देवा वहन्ती"ति । तत्रापीन्दुविमानस्य, पूर्वस्यां सुभगाग्रिमाः । गोक्षीरफेनशीतांशुदधिशङ्खतलोज्वलाः ॥ ६१ ॥ तीक्ष्णवृत्तास्थिरस्थलदंष्ट्राङ्कुरवराननाः । रक्तोत्पलदलाकारलोला ललिततालवः ॥ ६२ ॥ क्षौद्रपिण्डपिंगलाक्षाः, पूर्णोरुस्कन्धबन्धुराः । सलक्षणस्वच्छसटाः, पुच्छातुच्छश्रियोद्भटाः ॥ ६३ ॥ तपनीयमयप्रौढचित्रयोक्त्रकयन्त्रिताः । सलीलगतयः स्फारबलवीर्यपराक्रमाः ॥ ६४ ॥ सिंहनादैः कृताह्लादैः, पूरयन्तो दिशो दश । चतुःसहस्रप्रमिता, वहन्ति सिंहनिर्जराः ॥ ६५ ॥ पञ्चभिः कुलकम् ॥ दक्षिणस्यां स्थूलवज्रमयं कुम्भस्थलोद्धुराः । स्वैरं कुण्डलितोद्दण्डशुण्डामण्डलमण्डिताः ॥ ६६ ॥ तपनीयमयश्रोत्राञ्चलचाञ्चल्यचञ्चवः । सुवर्णखचितप्रान्तसदन्तमुशलद्वयाः ॥ ६७ ॥ भूरिसिन्दूरशिरसश्चलचामरचारवः । सुवर्णकिङ्किणीकीर्णमणिग्रैवेयकोग्रभाः ॥ ६८ ॥ रूप्यरज्जुलसद्घण्टायुगलध्वनिमञ्जुलाः । वैडूर्यदण्डोद्दण्डांशुतीव्रवज्रमयाङ्कुशाः ॥ ६९ ॥ पुनः पुनः परावृत्तपुच्छपुष्टा महोन्नताः । कूर्माकारक्रमा वल्गुगतयः स्फारविक्रमाः ॥ ७० ॥ विमानानि शशाङ्कानां, वहन्ति गजनिर्जराः । घनवन्मञ्जु गर्जन्तश्चतुःसहस्रसम्मिताः ॥ ७१ ॥ षड्भिः कुलकम् ॥ प्रतीच्यां सुभगाः श्वेता, दृप्यत्ककुदसुन्दराः । अयोघनघनस्थूलतनवः पूर्णलक्षणाः

॥ ७२ ॥ अत्यन्तकमनीयौष्ठाः, कम्रेषन्नम्रिताननाः । सुस्निग्धलोमद्युतयः, पीनवृत्तकटीतटाः ॥ ७३ ॥ सुपार्श्वा मांसलस्कन्धाः, प्रलम्बपुच्छपेशलाः । तुल्यातितीक्ष्णशृङ्गाग्रा, नानागतिविशारदाः ॥ ७४ ॥ तपनीयोद्भूतजिह्वातालवो वज्रजित्खुराः । स्फाटिकस्फारदशना, गम्भीरोर्जितगर्जिताः ॥ ७५ ॥ सौवर्णभूषणा रत्नकिङ्किणीमालभारिणः । चतुःसहस्रसङ्ख्यास्तान्युद्वहन्ति वृषामराः ॥ ७६ ॥ पञ्चभिः कुलकम् ॥ उदीच्यां सुप्रभाः श्वेताः, युवानः पीवरोन्नताः । मल्लिकापुष्पशुभ्राक्षाः, साक्षात्तार्क्ष्याग्रजा इव ॥ ७७ ॥ अभ्यस्तनानागमना, जवनाः पवना इव । धावनोल्लङ्घनक्रीडाकूर्दनादिजितश्रमाः ॥ ७८ ॥ लक्षणोपेतसर्वाङ्गाः, शस्तविस्तीर्णकेसराः । व्यञ्जयन्तश्चलत्पुच्छचामरेणाश्वराजताम् ॥ ७९ ॥ तपनीयखुराजिह्वातालवः स्थासकादिभिः । रम्या रत्नमयैर्वक्त्रललाटादिविभूषणैः ॥ ८० ॥ हरिमेलकगुच्छेन, मूर्ध्नि निर्मितशेखराः । हर्षहेषितहेलाभिः, पूरयन्तोऽभितोऽम्बरम् ॥ ८१ ॥ चत्वार्येव सहस्राणि, हयरूपभृतः सुराः । सुधांशूनां विमानानि, वहन्ति मुदिताः सदा ॥ ८२ ॥ षड्भिः कुलकम् ॥ सूर्योदयाङ्किता प्राची, यथाऽन्यदेहिनां तथा । ज्योतिष्काणां निश्चितैवं, न सम्भवति यद्यपि ॥ ८३ ॥ चन्द्रादीनां तथाऽप्येषां, या दिग्गन्तुमभीप्सिता । सा प्राची स्यान्निमित्तज्ञैः, क्षुतादौ कल्प्यते यथा ॥ ८४ ॥ ततस्तदनुसारेण, दिशोऽन्या दक्षिणादिकाः । विमानवाहिनामेव, सूक्तः प्राग्दिग्विनिश्चयः ॥ ८५ ॥ षोडशैवं सहस्राणि, कृतसिंहादिमूर्त्तयः । विमानान्यमृतांशूनां, वहन्ति त्रिदशाः सदा ॥ ८६ ॥ अनेनैव दिक्क्रमेण, विमानान् भास्वतामपि । वहन्त्येतावन्त एव, सिंहाद्याकृतयः सुराः ॥ ८७ ॥ वहन्ति च विमानानि, ग्रहाणां

५

१०

१४

तादृशाः सुराः । द्वे द्वे सहस्रे प्रत्याशं, सहस्राण्यष्ट तेऽखिलाः ॥ ८८ ॥ उद्वहन्ति च नक्षत्रविमानाँस्तादृशाः
सुराः । स्थिताः प्रत्याशमेकैकं, सहस्रप्रमिताः सदा ॥ ८९ ॥ समुद्वहन्ति प्रत्याशं, पञ्चपञ्चशताः स्थिताः । तार-
काणां विमानानि, सिंहाद्याकृतयोऽमराः ॥ ९० ॥ सर्वेभ्यो मन्दगतयः, शशाङ्काः शीघ्रगास्ततः । तिग्मत्विषो
ग्रहास्तेभ्यः, ख्याताः सत्वरगामिनः ॥ ९१ ॥ विशेषस्त्वेष तत्रापि, सर्वाल्पगतयो बुधाः । तेभ्यः शुक्राः शीघ्र-
तरास्तेभ्योऽपि क्षितिसूनवः ॥ ९२ ॥ प्रकृष्टगतयस्तेभ्यः, सुराचार्यास्ततोऽपि हि । ख्याताः शनैश्चराः क्षिप्रगत-
यस्तत्त्ववेदिभिः ॥ ९३ ॥ तेभ्यस्त्वरितयायीनि, नक्षत्राणि ततोऽपि च । तारकाः क्षिप्रगतयो, निर्दिष्टाः स्पष्ट-
दृष्टिभिः ॥ ९४ ॥ सर्वेभ्योऽप्येवमल्पिष्ठगतयोऽमृतभानवः । सर्वेभ्यः क्षिप्रगतयस्तारकाः परिकीर्त्तिताः ॥ ९५ ॥
जम्बूद्वीपेऽथ ताराणामेषां द्वेधा मिथोऽन्तरम् । निर्व्याघातिकमित्येकं, परं व्याघातसम्भवम् ॥ ९६ ॥ तत्र
मध्यस्थशैलादिव्यवधायकनिर्मितम् । व्याघातिकमन्तरं स्याद्वितीयं तु स्वभावजम् ॥ ९७ ॥ स्याद् द्विधैकैकमप्ये-
तज्जघन्योत्कृष्टभेदतः । एवं चतुर्विधं ताराविमानानां मिथोऽन्तरम् ॥ ९८ ॥ तत्र च–शतानि पञ्च धनुषां,
स्वाभाविकं जघन्यतः । उत्कर्षतो द्वे गव्यूते, जगत्स्वाभाव्यतस्तथा ॥ ९९ ॥ जघन्यतो योजनानां, सषट्षष्टि
शतद्वयम् । व्याघातिकमन्तरं स्याद्भावना तत्र दर्श्यते ॥ १०० ॥ चत्वारि योजनशतान्युत्तुङ्गो निषधाचलः ।
कूटान्यस्योपरि पञ्चशततुङ्गानि तानि च ॥ १०१ ॥ विष्कम्भायामतः पञ्च, योजनानां शतान्यधः । मध्यदेशे पुनः
पञ्चसप्तत्याढ्यं शतत्रयम् ॥ १०२ ॥ उपर्यर्द्धतृतीयानि, शतान्यथ स्वभावतः । विमुच्य योजनान्यष्टाष्टैतेषां

वृषभगजाः
ज्योतिष्क-
गतिः तारा-
न्तरं च

२०

२५
॥३०४॥

२८

पार्श्वयोर्द्वयोः ॥ १०३ ॥ परिभ्रमन्ति ताराणां, विमानानि भवेत्ततः। तेषां प्रागुदितं व्याघातिकं जघन्यम-
न्तरम् ॥ १०४ ॥ योजनानां सहस्राणि, द्वादश द्वे शते तथा। द्विचत्वारिंशदधिके, ज्येष्ठं व्याघातिकान्तरम् ॥१०५॥
एतत्ताराविमानानां, स्यान्मेरौ व्यवधायके। यद्योजनसहस्राणि, दशासौ विस्तृतायतः ॥ १०६ ॥ एकादश
शतान्येकविंशान्यस्माच्च दूरतः। भ्रमन्त्युभयतस्तारास्ततः स्यादुक्तमन्तरम् ॥१०७॥ यद्यप्यूर्द्ध्वं सनवतेः, सप्तशत्या
व्यतिक्रमे। मेरौ यथोक्तौ न व्यासायामौ सम्भवतो यतः ॥ १०८॥ नवैकादशजा अंशा, योजनान्येकसप्ततिः।
इयद्भूनिष्ठविष्कम्भायामादत्रास्य हीयते ॥ १०९ ॥ परमुक्तमिदं स्वल्पोनताया अविवक्षया। अन्यथा प्रत्यवस्थानं,
ज्ञेयं वाऽस्य बहुश्रुतात् ॥ ११० ॥ एवं जम्बूद्वीप एव, विज्ञेयं तारकान्तरम्। लवणाब्धिप्रभृतिषु, त्वेतदुक्तं
न दृश्यते ॥ १११ ॥ तथोक्तं सङ्ग्रहणीसूत्रे—"तारस्स य तारस्स य जंबूदीवम्मि अंतरं गुरुयं।" जम्बूद्वीपप्रज्ञ-
सिसूत्रेऽपि—"जंबुद्दीवे णं दीवे ताराए २ केवइए अबाहाए अंतरे पण्णत्ते ?" इत्यादि। अमी विमानाः सर्वेऽपि,
समन्ततः प्रसृत्वरैः। अत्युज्ज्वलाः प्रभापूरैर्दूरीकृततमोऽङ्कुराः ॥ ११२ ॥ आश्चर्यकृन्नूलरत्नस्वर्णविच्छित्ति-
शालिनः। वातोद्धूतवैजयन्तीपताकाकान्तमौलयः ॥ ११३ ॥ छत्रातिच्छत्रकोपेताः, स्वर्णरत्नविनिर्मितैः। स्तूपि-
काशिखरैः शस्ताः, सुखस्पर्शाः समन्ततः ॥ ११४ ॥ विकस्वरैः शतपत्रैः, पुण्डरीकैश्च पुण्ड्रकैः। रत्नार्द्धचन्द्रै-
रम्याश्च, विविधैर्मणिदामभिः ॥ ११५ ॥ अन्तर्बहिस्तपनीयवालुकाप्रस्तटोद्धटाः। रत्नस्तम्भशतोदञ्चन्मरीचि-

१ सामान्येन ज्योतिषां मेरोरबाधा एकविंशत्यधिकैकादशशतमिता, ताराणां किंचिद्दूरतोऽवस्थानाद्धेदमन्तरं स्यात्।

५ १० १३

चक्रचारवः॥११६॥तत्र स्वस्वविमानेषु, स्वस्वोत्पादास्पदेषु च। उत्पद्यन्ते ज्योतिषिकाः, स्वस्वपुण्यानुसारतः॥११७॥ ज्योतिश्चक्राधिपौ तत्र, महान्तौ शशिभास्करौ। सामानिकसहस्राणां चतुर्णामात्मरक्षिणाम् ॥ ११८ ॥ षोडशानां सहस्राणां, पर्षदां तिसृणामपि। सेनापतीनां सप्तानां, सैन्यानामपि तावताम्॥ ११९॥तथा सपरिवाराणां, महिषीणां चतसृणाम्। ज्योतिर्विमानकोटीनामीशाते पुण्यशालिनौ ॥ १२० ॥ त्रिभिर्विशेषकम् ॥ सभायामभ्यन्तरायामेतयोः सन्ति नाकिनाम्। अष्टौ सहस्राणि पल्योपमार्द्धस्थितिशालिनाम् ॥ १२१ ॥ निर्जराणां सहस्राणि, दश मध्यमपर्षदि। न्यूनपल्योपमार्द्धायुःशालिनां गुणमालिनाम्॥ १२२॥ द्वादशाथ सहस्राणि, देवानां बाह्यपर्षदि। सातिरेकपल्यचतुर्विभागस्थितिधारिणाम् ॥ १२३ ॥ देवीनां शतमेकैकं, पर्षत्स्वस्ति तिसृष्वपि। तासां स्थितिः क्रमात्पल्योपमतुर्यलवोऽधिकः ॥ १२४ ॥ एष एव परिपूर्णो, देशन्यूनोऽयमेव च। इयं च जीवाभिगमातिदिष्टाऽऽसां स्थितिः किल ॥ १२५ ॥ जम्बूद्वीपप्रज्ञप्तिसूत्रसङ्ग्रहण्याद्यभिप्रायेण तु चन्द्रसूर्यविमानेषु जघन्यतोऽपि पल्योपमचतुर्थभाग एव स्थितिः किल उक्तेति ज्ञेयम्॥तुम्बा तुटिता पर्वाभिधा एता भवन्त्यथ। सूर्येन्द्वोः सामानिकानां, स्त्रीणामपि सभा इमाः ॥ १२६ ॥ ननु पर्षत्त्रयं सर्वसुरेन्द्राणां निरूप्यते। विशेषस्तत्र क इवान्तर्मध्यबाह्यपर्षदाम्! ॥१२७॥ अत्र ब्रूमः-शीघ्रमभ्यन्तरा पर्षदाहूतोपैति नान्यथा। प्रभोराकारणारूपं, गौरवं सा यतोऽर्हति ॥१२८॥ मध्यमा पर्षदाहूताऽनाहूताऽप्युपसर्पति। सा मध्यमप्रतिपत्तिविषयो यदधीशितुः ॥ १२९ ॥ अनाहूतैव बाह्या तु, पर्षदायाति सत्वरम्। कदापि नायकाह्वानगौरवं सा हि नार्हति

तारान्तरं ज्योतिष्कदेवदेवीपर्षदः

२०

२५



२७

॥ १३० ॥ यद्वोत्पन्ने कार्यजाते, प्रागालोचयति प्रभुः । यया स्फीतधिया संसत्, साऽभ्यन्तरा सगौरवा ॥ १३१ ॥
निर्णीतमेतदस्माभिः, कृते चास्मिन्नयं गुणः । एतच्च नैव कर्त्तव्यं, दोषोऽस्मिन् विहिते ह्ययम् ॥ १३२ ॥ इत्थमा-
लोचितं पूर्वं, यया सह प्रपञ्चयेत् । गुणदोषोद्भावनात्सा, मध्यमा नातिगौरवा ॥ १३३ ॥ आलोचनागौरवात्तु,
बाह्या बाह्या भवेत्सभा । कर्त्तव्यमेतद्युष्माभिरित्याज्ञामेव साऽर्हति ॥ १३४ ॥ च्युते चन्द्रेऽथवा भानौ, यावन्नो-
त्पद्यतेऽपरः । तावदिन्द्रविरहिते, काले तत्स्थानकस्थितिम् ॥१३५॥ सामानिकाः समुदिताश्चत्वारः पञ्च चोत्तमाः ।
पालयन्ति राज्यमिव, शून्यं प्रधानपूरुषाः ॥ १३६ ॥ इन्द्रशून्यश्च कालः स्याज्जघन्यः समयावधिः । उत्कर्षतश्च
षण्मासानित्युक्तं सर्वदर्शिभिः ॥ १३७ ॥ तथोक्तं जीवाभिगमसूत्रे जम्बूद्वीपप्रज्ञप्तिसूत्रेऽपि—"तेसि णं भंते !
देवाणं इंदे चुए से कहमियाणिं पकरेंति ?" इत्यादि । ज्योतिष्काः पञ्चधाऽप्येते, देवाश्चन्द्रार्यमादयः ।
विशिष्टवस्त्राभरणकिरणोज्ज्वलभूघनाः ॥१३८॥ नानानूत्नरत्नशालिमौलिमण्डितमौलयः । सौन्दर्यलक्ष्मीकलिता,
द्योतन्ते ललितद्युतः ॥ १३९ ॥ तत्र चन्द्रमसः सर्वे, प्रभामण्डलसन्निभम् । मुकुटाग्रे दधत्यङ्कं, सचन्द्रमण्ड-
लाकृतिम् ॥ १४० ॥ सूर्यास्तु चिह्नं दधति, मुकुटाग्रप्रतिष्ठितम् । विवस्वन्मण्डलाकारं, प्रभाया इव मण्डलम्
॥ १४१ ॥ एवं स्वस्वमण्डलानुकारिचिह्नाढ्यमौलयः । शीतोग्रभानुवज्ज्ञेया, ग्रहनक्षत्रतारकाः ॥ १४२ ॥ तथा च
तत्त्वार्थभाष्यम्—"मुकुटेषु शिरोमुकुटोपगूहिभिः प्रभामण्डलकल्पैरुज्ज्वलैः सूर्यचन्द्रग्रहनक्षत्रतारामण्डलैर्यथास्वं
चिह्नैर्विराजमाना द्युतिमन्तो ज्योतिष्का भवन्ती"ति, अत्र शिरोमुकुटोपगूहिभिरिति मुकुटाग्रभागवर्त्तिभिरिति ।

ग्रन्थान्तरे पुनरुक्तमेते चन्द्रार्यमादयः । स्वनामाङ्कप्रकटितं, मुकुटं मूर्ध्नि बिभ्रति ॥ १४३ ॥ तथोक्तं जीवाभिगमवृत्तौ–"सर्वेऽपि प्रत्येकं नामाङ्केन प्रकटितं चिह्नं मुकुटे येषां ते तथा, किमुक्तं भवति ?–चन्द्रस्य मुकुटे चन्द्रमण्डलं लाञ्छनं स्वनामाङ्कप्रकटितं, सूर्यस्य सूर्यमण्डलं, ग्रहस्य ग्रहमण्डल" मित्यादि, प्रज्ञापनायामपि, 'पत्तेयनामंकपायडियचिंधमउडा' इति । उत्तप्तस्वर्णवर्णाङ्गा, सर्वे ज्योतिषिकामराः । पञ्चवर्णाः पुनरमी, तारकाः परिकीर्त्तिताः ॥ १४४ ॥ सर्वेभ्योऽल्पर्द्धयस्तारास्तेभ्यो नक्षत्रनिर्जराः । महर्द्धिका ग्रहास्तेभ्यो, भवन्ति प्रचुरर्द्धयः ॥ १४५ ॥ ग्रहेभ्योऽपि विवस्वन्तो, महर्द्धिकास्ततोऽपि च । ज्योतिश्चक्रस्य राजानो, राजानोऽधिकऋद्धयः ॥ १४६ ॥ चतस्रोऽग्रमहिष्यः स्युः, शीतांशोस्ताश्च नामतः । चन्द्रप्रभा च ज्योत्स्नाभाऽप्यर्चिर्माला प्रभङ्करा ॥ १४७ ॥ साम्प्रतं तु—एताः पूर्वभवेऽरक्षुपुर्यां वृद्धकुमारिकाः । चन्द्रप्रभादिस्वाख्यानुरूपाख्यपितृकाः स्मृताः ॥ १४८ ॥ चन्द्रश्रीप्रभृतिस्वाख्यातुल्याख्यमातृकाः क्रमात् । पुष्पचूलार्यकाशिष्याः, श्रीपार्श्वात् प्राप्तसंयमाः ॥ १४९ ॥ किञ्चिद्विराध्य चारित्रमप्रतिक्रम्य पाक्षिकीम् । कृत्वा संलेखनां मृत्वा, विमाने चन्द्रनामनि ॥ १५० ॥ चन्द्राग्रमहिषीत्वेनोत्पन्नाः सिंहासनेषु च । भान्ति स्वाख्यासमाख्येषु, भर्तृस्थित्यर्द्धजीविताः ॥ १५१ ॥ सूर्याग्रमहिषीणामप्येवं चरितमूह्यताम् । किन्तु ता मथुरापूर्यामभूवन् पूर्वजन्मनि ॥ १५२ ॥ एकैकस्याः पट्टदेव्याः, परिवारः पृथक् पृथक् । चत्वार्येव सहस्राणि, देवीनामुत्कटत्विषाम् ॥ १५३ ॥ एवमुक्तप्रकारेण, सपूर्वापरमीलने । स्युः पत्नीनां सहस्राणि, षोडशानुष्णरोचिषः ॥ १५४ ॥ तथैकैकाऽग्रमहिषी, प्रागुक्ता शीतरोचिषः । भर्तुस्तथा-

पर्षदः अन्तरं चिह्नानि देव्यश्च

२०

२५

॥ २०६ ॥

२८

विधामिच्छामुपलभ्य रतक्षणे ॥ १५५ ॥ विलासहासललितान्, सलीलादभ्रविभ्रमान्। देवीसहस्रांश्चतुरः, स्वात्मतुल्यान् विकुर्वयेत् ॥ १५६ ॥ तथोक्तं जीवाभिगमसूत्रे–"पभू णं ताओ एगमेगा देवी अन्नाइं चत्तारि देवीसहस्साइं परिवारं विउवित्तए" इति। यत्तु जम्बूद्वीपप्रज्ञप्तिसूत्रे "पभू णं ताओ एगमेगा देवी अन्नं देविसहस्सं विउविउत्तए।" इति उक्तं तदिदं मतान्तरं ज्ञेयम् ॥ तदेतचन्द्रदेवस्यान्तःपुरं परिकीर्त्तितम्। सिद्धान्तभाषया चैतत्त्रुटिकं परिभाषितम् ॥१५७॥ उक्तश्च जीवाभिगमचूर्णौ–"त्रुटिकमन्तःपुरमपदिश्यते" इति। ज्योतिष्केन्द्रस्य सूर्यस्याप्येवमन्तःपुरस्थितिः। तावान् देवीपरिवारो, विकुर्वणाऽपि तावती ॥ १५८ ॥ नाम्नाऽर्काग्रमहिष्यस्तु, प्रोक्तास्तीर्थंकरैरिमाः। सूर्यप्रभा चातपाभाऽथार्चिर्माली: प्रभङ्करा ॥ १५९ ॥ अनेनान्तःपुरपरिच्छदेनेन्दुदिवाकरौ। नित्यं परिवृतौ स्वस्वविमानान्तर्यथासुखम् ॥ १६० ॥ सुधर्मायां संसदीन्दुसूर्यसिंहासने स्थितौ। हृद्यातोद्यनादमिश्रैर्गीतैः स्फीतैश्च नाटकैः ॥ १६१[1] ॥ भुञ्जानौ दिव्यविषयोपभोगान् भाग्यभासुरौ। न जानीतो व्यतीतानि, संवत्सरशतान्यपि ॥ १६२ ॥ न शक्नुतः सुधर्म्मायां, परं कर्त्तुं रतिक्रियाम्। तत्रासन्नजिनसक्थ्याशातनाभयभीरुकौ ॥ १६३ ॥ सन्ति ह्यत्र माणवकचैत्यस्तम्भे स्वयम्भुवाम्। वाज्रिकेषु समुद्गेषु, सक्थीनि शिवमीयुषाम् ॥ १६४ ॥ तानि चेन्दोश्च भानोश्च, परेषामपि नाकिनाम्। वन्दनीयानि पूज्यानि, स्तुत्यानि जिनचैत्यवत् ॥ १६५ ॥ एवं ग्रहाणां नक्षत्रताराकाणामपि स्फुटम्। चतस्रोऽग्रमहिष्यः स्युः, तासां नामान्यमूनि च ॥ १६६ ॥ विजया वैज-

१ स्वतन्त्रतया चेद्विकुर्वणं स्वकार्ये तदा सहस्रं, प्रभोरिच्छां चानुसृत्य पूर्वोक्तमानमिति.

यन्ती च, जयन्ती चापराजिता । भवन्त्यमीषां सर्वेषामप्येतैरेव नामभिः ॥ १६७ ॥ अथ चन्द्रविमानेऽस्मिन्, जघन्या नाकिनां स्थितिः । पल्योपमस्य तुर्यांश, उत्कृष्टाऽथ निरूप्यते ॥ १६८ ॥ एकं पल्योपमं वर्षलक्षेणैकेन साधिकम् । जघन्याऽर्कविमानेऽपि, स्थितिश्चन्द्रविमानवत् ॥ १६९ ॥ उत्कृष्टाब्दसहस्रेणाधिकं पल्योपमं भवेत् । यद्यपि स्थितिरर्केन्द्वोः, कनीयसी न सम्भवेत् ॥ १७० ॥ तथाप्येषु विमानेषु, त्रिविधाः सन्ति नाकिनः । विमाननायकाश्चन्द्राद्यस्तत्सदृशाः परे ॥ १७१ ॥ परिवारसुराश्चान्ये, स्युरात्मरक्षकादयः । तत्राधीश्वरतत्तुल्यापेक्षया परमा स्थितिः ॥ १७२ ॥ जघन्यात्मरक्षकादिपरिच्छदव्यपेक्षया । एवं ग्रहविमानादिष्वपि भाव्यं स्थितिद्वयम् ॥ १७३ ॥ चान्द्रे विमाने देवीनां, स्थितिरुक्ता गरीयसी । पल्योपमार्द्धं पञ्चाशत्संवत्सरसहस्रयुक् ॥ १७४ ॥ स्थितिः सूर्यविमानेषु, देवीनां परमा भवेत् । अर्द्धं पल्योपमस्याब्दशतैः पञ्चभिरन्वितम् ॥ १७५ ॥ सूर्यचन्द्रविमानेषु, स्थितिरासां जघन्यतः । पल्योपमचतुर्थांशः, प्रज्ञप्तो ज्ञानिपुङ्गवैः ॥ १७६ ॥ ग्रहाणां च विमानेषु, देवानामल्पिका स्थितिः । पल्योपमस्य तुर्यांशो, गुर्वी पल्योपमं मतम् ॥१७७॥ स्थितिर्देवीनां तु पल्योपमतुर्यलवो लघुः । तेषूत्कृष्टा तु निर्दिष्टा, पल्यार्द्धं जगदीश्वरैः ॥१७८॥ नक्षत्राणां विमानेषु, जघन्या नाकिनां स्थितिः । पल्योपमचतुर्थांशः, पल्योपमार्द्धमुत्तरा ॥ १७९ ॥ तेषु पल्यस्य तुर्यांशो, देवीनां स्थितिरल्पिका । उत्कृष्टा तु भवेत्तासां, स एव खलु साधिकः ॥१८०॥ स्थितिस्ताराविमानेषु, देवानां स्याल्लघीयसी । पल्योपमस्याष्टमोऽंशस्तुर्योऽंशस्तु गरीयसी ॥१८१॥ स्थितिर्देवीनां तु तेषु, लघ्वी दृष्टा जिनेश्वरैः । पल्यस्यैवाष्टमो भागो, गुर्वी स एव साधिकः

अन्तःपुरं जिनसक्थीनि स्थितिश्च

२०

२५



२७

॥१८२॥ एषु सूर्यश्चेन्दवश्च, सर्वस्तोका मिथः समाः। तेभ्यो भानि ग्रहास्तेभ्यस्ताराः सङ्ख्यगुणाः क्रमात् ॥१८३॥ एते चन्द्रादयः प्रायः, प्राणिनां प्रसवक्षणे। तत्तत्कार्योपक्रमे वा, वर्षमासाद्युपक्रमे ॥ १८४ ॥ अनुकूलाः सुखं कुर्युस्तत्तद्राशिमुपागताः। प्रतिकूलाः पुनः पीडां, प्रथयन्ति प्रथीयसीम् ॥१८५॥ ननु दुःखसुखानि स्युः, कर्म्मायातानि देहिनाम्। ततः किमेभिश्चन्द्राद्यैरनुकूलैरुतेतरैः? ॥१८६॥ आनुकूल्यं प्रातिकूल्यमागता अप्यमी किमु। शुभाशुभानि कर्म्माणि, व्यतीत्य कर्त्तुमीशते? ॥१८७॥ ततो मुधाऽऽस्तामपरे, निर्ग्रन्था निःस्पृहा अपि। ज्योतिःशास्त्रानुसारेण, मुहूर्त्तेक्षणतत्पराः ॥ १८८ ॥ प्रव्राजनादिकृत्येषु, प्रवर्त्तन्ते शुभाशयाः। स्वामी मेघकुमारादिदीक्षणे तत् किमैक्षत? ॥ १८९ ॥ चतुर्भिः कलापकम् ॥ अत्रोच्यतेऽपरिचितश्रुतोपनिषदामयम्। अनाघ्रातगुरुपरम्पराणां वाक्यविप्लवः ॥ १९० ॥ श्रूयतामत्र सिद्धान्तरहस्यामृतशीतलम्। अनुत्तरसुराराध्यपारम्पर्यासमुत्तरम् ॥ १९१ ॥ विपाकहेतवः पञ्च, स्युः शुभाशुभकर्मणाम्। द्रव्यं क्षेत्रं च कालश्च, भावो भवश्च पञ्चमः ॥ १९२ ॥ तथोक्तम्–"उदयक्खयखओवसमोवसमा जं च कम्मुणो भणिया। दव्वं खेत्तं कालं भावं च भवं च संपप्प ॥१९३॥" यथा विपच्यते सातं, द्रव्यं स्रक्चन्दनादिकम्। गृहारामादिकं क्षेत्रमनुकूलगृहादिकम् ॥ १९४ ॥ वर्षावसन्तादिकं वा, कालं भावं सुखावहम्। वर्णगन्धादिकं प्राप्य, भवं देवनरादिकम् ॥ १९५ ॥ युग्मम् ॥ विपच्यतेऽसातमपि, द्रव्यं खड्गविषादिकम्। क्षेत्रं कारादिकं कालं, प्रतिकूलगृहादिकम् ॥ १९६ ॥ भावमप्रशस्तवर्णगन्धस्पर्शरसादिकम्। भवं च तिर्यङ्नरकादिकं प्राप्येति दृश्यते ॥१९७॥ शुभानां कर्म्मणां तत्र, द्रव्यक्षेत्रादयः शुभाः। विपा-

५ १० १४

कर्महेतवः प्रायोऽशुभानां च ततोऽन्यथा ॥ १९८ ॥ ततो येषां यदा जन्मनक्षत्रादिविरोधभाक् । चारश्चन्द्रार्यमादीनां, ज्योतिःशास्त्रोदितो भवेत् ॥ १९९ ॥ प्रायस्तेषां तदा कर्म्माण्यशुभानि तथाविधाम् । लब्ध्वा विपाकसामग्रीं, विपच्यन्ते तथा तथा ॥ २०० ॥ विपाकानि च तान्येवं, दुःखं दद्युर्महीस्पृशाम् । आधिव्याधिद्रव्यहानिकलहोत्पादनादिभिः ॥ २०१ ॥ यदा तु येषां जन्मर्क्षाद्यनुकूलो भवेदयम् । ग्रहचारस्तदा तेषां, शुभं कर्म्म विपच्यते ॥ २०२ ॥ तथा विपक्वं तद्दत्तेऽङ्गिनां घनाङ्गनादिजम् । आरोग्यतुष्टिपुष्टीष्टसमागमादिजं सुखम् ॥ २०३ ॥ एवं कार्यादिलग्नेऽपि, तत्तद्भावगता ग्रहाः । सुखदुःखपरीपाके, प्राणिनां यान्ति हेतुताम् ॥ २०४ ॥ तथाऽऽह भगवान् जीवाभिगमः—"रयणियरदिणयराणं नक्खत्ताणं महग्गहाणं च । चारविसेसेण भवे सुहदुक्खविही मणुस्साणं ॥ १" अत एव महीयांसो, विवेकोज्ज्वलचेतसः । प्रयोजनं स्वल्पमपि, रचयन्ति शुभक्षणे ॥ २०५ ॥ ज्योतिःशास्त्रानुसारेण, कार्यं प्रव्राजनादिकम् । शुभे मुहूर्त्ते कुर्वन्ति, तत एवर्षयोऽपि हि ॥ २०६ ॥ इत्थमेवावर्त्तताऽऽज्ञा, स्वामिनामर्हतामपि । अधिकृत्य शुभं कृत्यं, पाठप्रव्राजनादिकम् ॥ २०७ ॥ सुक्षेत्रे शुभतिथ्यादौ, पूर्वोत्तरादिसम्मुखम् । प्रव्राजनव्रतारोपादिकं कार्यं विचक्षणैः ॥२०८॥ तथोक्तं पञ्चवस्तुके—"एस जिणाणं आणा खेत्ताईया उ कम्मुणो भणिआ । उदयाइकारणं जं तम्हा सव्वत्थ जइयव्वं ॥१॥" अर्हदाद्याः सातिशयज्ञाना ये तु महाशयाः । ते तु ज्ञानबलेनैव, ज्ञात्वा कार्यगतायतिम् ॥२०९॥ अविघ्नां वा सविघ्नां वा, प्रवर्त्तन्ते यथा शुभम् । नापेक्षन्तेऽन्यजनवन्मुहूर्त्तादिनिरीक्षणम् ॥२१०॥ तद्वद्विचिन्त्यापरेषां तु, तथा नौचित्यमश्नुति । मत्तेभस्पर्द्धयाऽवीना-

ज्योतिष्कचारेण शुभाशुभादि

२०

२५



२८

मिवाघातो महाद्रुषु ॥२११॥ इदमर्थतो जीवाभिगमवृत्तौ ॥ चरं ज्योतिश्चक्रमेवं, नरक्षेत्रावधि स्मृतम् । ततः परं चालोकान्तं, ज्योतिश्चक्रमवस्थितम्॥२१२॥ स्थापना। यत्र सन्ति नियताः सुधांशवस्तत्र भूरचलचारुचन्द्रिका। यत्र तीव्ररुचयः सनातनास्तत्र चातपवितानचित्रिताः ॥ २१३ ॥ (रथोद्धता) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सम्पूर्णः खलु पञ्चविंशतितमः सर्गो निसर्गोज्ज्वलः ॥ २१४ ॥ इति श्रीलोकप्रकाशे ज्योतिश्चक्रवर्णनो नाम पञ्चविंशतितमः सर्गः ॥ ग्रं० २५६ ॥ ५

## अथ ऊर्ध्वलोकनिरूपणामयः षड्विंशः सर्गः ।

जीयात् शङ्खेश्वरः स्वामी, गोस्वामीव नभोभुवि । गावो यस्योर्ध्वलोकेऽपि, चेरुः क्षुण्णतमोऽङ्कुराः ॥ १ ॥ वैमानिकसुरावासशोभासंसारभासुरम् । स्वरूपमूर्ध्वलोकस्य, यथाश्रुतमथ ब्रुवे ॥ २ ॥ योजनानां नवशत्या, रुचकोर्ध्वमतिक्रमे । तिर्यग्लोकान्तः स एव, चोर्ध्वलोकादिरिष्यते ॥ ३ ॥ ततो न्यूनसप्तरज्जुप्रमाणः कथितः स च । ईषत्प्राग्भारोर्ध्वभागे, सिद्धक्षेत्रावधिर्मतः ॥ ४॥ तथोर्ध्वं च रुचकाद्यरज्जोरन्ते प्रतिष्ठितौ । सौधर्मैशाननामानौ, देवलोकौ स्फुरद्रुची ॥५॥ समश्रेण्या स्थितावर्द्धचन्द्रसंस्थानसंस्थितौ । चिन्त्येते चेत्समुदितौ, तदा पूर्णेन्दुसंस्थितौ ॥ ६ ॥ मेरोर्दक्षिणतस्तत्र, सौधर्माख्यः सुरालयः । ईशानदेवलोकश्च, मेरोरुत्तरतो भवेत् ॥७॥ १० १३

प्राक्प्रत्यगायतावेतावुद्ग्दक्षि... विस्तृतौ । योजनानां कोटिकोट्योऽसंख्येया विस्तृतायतौ ॥ ८ ॥ निकायभूमिकाकाराः, प्रस्तटाः स्युस्त्रयोदश । प्रायः परस्परं तुल्यविमानाद्यन्तयोस्तयोः ॥ ९ ॥ प्रत्येकमनयोर्यद्यप्येते सन्ति त्रयोदश । तथापि ह्येकवलयस्थित्या यदनयोः स्थितिः ॥१०॥ तत्तयोः समुदितयोस्त्रयोदश विवक्षिताः । अन्येष्वप्येकवलयस्थितेष्वेवं विभाव्यताम् ॥११॥ त्रयोदशानामप्येषां, मध्य एकैकमिन्द्रकम् । विमानं मौक्तिकमिव, प्रतरस्वस्तिकोपरि ॥ १२ ॥ उडु १ चन्द्रं २ च रजतं ३, वल्गुं ४ वीर्यमथापरम् ५ । वरुणं ६ च तथाऽऽनन्दं ७, ब्रह्म ८ काञ्चनसंज्ञकम् ९ ॥ १३ ॥ रुचिरं १० चन्द्रसंज्ञं ११ चारुणं १२ दिशाभिधानकम् १३ । त्रयोदशेन्द्रका एते, सौधर्मेशाननाकयोः ॥ १४ ॥ सनत्कुमारमाहेन्द्रस्वर्गयोः समसंस्थयोः । द्वादश प्रस्तटाः षट् ते, ब्रह्मलोके च केवले ॥ १५ ॥ लान्तके प्रस्तटाः पञ्च, शुक्रे चत्वार एव ते । सहस्रारेऽपि चत्वारः, समश्रेणिस्थयोस्ततः ॥ १६ ॥ किलानतप्राणतयोरारणाच्युतयोरपि । चत्वारश्चत्वार एव, प्रस्तटाः परिकीर्त्तिताः ॥ १७ ॥ नव ग्रैवेयकाणां ते, पञ्चस्वनुत्तरेषु च । एको द्वाषष्टिरित्येवमूर्ध्वलोके भवन्त्यमी ॥ १८ ॥ सौधर्मेशानयोस्तत्र, प्रथमप्रस्तटस्थितात् । उडुनाम्नो विमानेन्द्राच्चतुर्दिशं विनिर्गताः ॥ १९ ॥ पङ्क्तिरेकैका विमानैर्द्वाषष्ट्या शोभिता ततः । द्वितीयादिप्रस्तटेषु, ताश्चतस्रोऽपि पङ्क्तयः ॥ २० ॥ एकैकेन विमानेन, हीना यावदनुत्तरम् । एवं विमानमेकैकं, दिक्षु तत्रावतिष्ठते ॥ २१ ॥ पाङ्क्तेयानां विमानानामाद्यप्रतरवर्त्तिनाम् । तिर्यग्लोकानुवादेन, स्थानमेवं स्मृतं श्रुते ॥ २२ ॥ देवद्वीपे तदेकैकं, नागद्वीपे द्वयं द्वयम् । ततश्चत्वारि चत्वारि, यक्षद्वीपे जिना जगुः ॥ २३ ॥ अष्टाष्टौ भूतपाथोधौ,

इन्द्रकाः प्रस्तटाश्च

१५

२०

२५

॥३०९॥

२७

तानि षोडश षोडश । स्वयंभूरमणद्वीपे, स्वयंभूवारिधौ ततः ॥ २४॥ एकत्रिंशदेकत्रिंशदग्रिमप्रतरेषु च । स्युर्विमानानि पाङ्क्तयान्यधःस्थैः पङ्क्तिगैः सह ॥ २५ ॥ स्थितान्यूर्ध्वसमश्रेण्या, चरमैकैकहानितः । द्वितीयप्रस्तटस्येति, स्वयंभूरमणाम्बुधौ ॥ २६ ॥ त्रिंशत्रिंशद्विमानानि, प्रतरेऽनुत्तरे त्वतः । भवेद्विमानमेकैकं, देवद्वीपे चतुर्दिशम् ॥ २७ ॥ एवं पङ्क्तिविमानानामन्तरं नियमान्मिथः । असंख्येयानीरितानि, योजनानि जिनेश्वरैः ॥ २८॥ पुष्पावकीर्णानां त्वेषां, संख्येययोजनात्मकम् । केषांचित्केषांचिदसंख्येययोजनसंमितम् ॥ २९ ॥ विमानमिन्द्रकं यत्तु, प्रतरेष्वखिलेष्वपि । मेरोरूर्ध्वसमश्रेण्या, तदुपर्युपरिस्थितम् ॥ ३० ॥ प्रतरेषु च सर्वेषु, स्युर्विमानाः किलेन्द्रकाः । वृत्तास्तेभ्योऽनन्तरं च, संस्थिता ये चतुर्दिशम् ॥३१॥ ते त्रिकोणाः प्रतिपङ्क्ति, त्रिकोणानन्तरं पुनः । चतुरस्रा विमानाः स्युस्तेभ्यः पुनरनन्तरम् ॥ ३२ ॥ वृत्ता विमानास्तेभ्योऽपि, पुनस्त्र्यस्रास्ततः पुनः । चतुरस्राः पुनर्वृत्ताः पङ्क्तिरेवं समाप्यते ॥ ३३ ॥ वृत्तत्र्यस्रचतुरस्रा, अग्रिमप्रतरेष्वपि । ज्ञेयाः क्रमेणानेनैवानुत्तरप्रतरावधि ॥ ३४ ॥ यदुक्तं—"सव्वेसु पत्थडेसुं मज्झे वट्टं अणंतरं तंसं । तयणंतर चउरंसं पुणोवि वट्टं तओ तंसं ॥३५॥" अधस्तनप्रस्तटेषु, ये ये वृत्तादयः स्थिताः । तेषामूर्ध्वसमश्रेण्या, सर्वेषु प्रतरेष्वपि ॥ ३६ ॥ वृत्तास्त्र्यस्राश्चतुरस्रा, विमानाः संस्थिताः समे । तत एवानुत्तराख्ये, प्रस्तटे स्युश्चतुर्दिशम् ॥ ३७ ॥ विमानानि त्रिकोणानि, वृत्तान्मध्यस्थितेन्द्रकात् । त्रिकोणान्येव सर्वासु, यद्भवन्तीह पङ्क्तिषु ॥३८॥ यदाह—"वट्टं वट्टस्सुवरिं तंसं तंसस्स उप्परिं होइ । चउरंसे चउरंसं उड्ढं च विमाणसेढीओ ॥३९॥" द्वाषष्टि १ रेकषष्टिश्च २, षष्टि ३ रेकोनषष्टकिः४ । तथाऽष्ट ५ सस ६-

षट् ७ पञ्च ८ चतु ९ स्त्रि १० द्व्ये ११ ककाधिकाः १२ ॥ ४० ॥ पञ्चाशदथ पञ्चाश१३त्सौधर्मेशानयोः क्रमात् । प्रतरेषु विमानानां, पङ्क्तौ पङ्क्तौ मितिर्मता ॥ ४१ ॥ स्वस्वपङ्क्तिविमानानि, विभक्तानि त्रिभिस्त्रिभिः । त्र्यस्राणि चतुरस्राणि, वृत्तानि स्युर्यथाक्रमम् ॥ ४२ ॥ त्रिभिर्विभागे शेषं चेदेकमुद्धरितं भवेत् । क्षेप्यं त्र्यस्रेऽथ शेषे द्वे, ते त्र्यस्रचतुरस्रयोः ॥ ४३ ॥ प्रतिपङ्क्त्यत्र वक्ष्यन्ते, वृत्तत्रिचतुरस्रकाः । चतुर्गुणास्ते प्रतरे, प्रतरे सर्वसंख्यया ॥ ४४ ॥ त्र्यस्राणि चतुरस्राणि, प्रतिपङ्क्त्येकविंशतिः । प्रथमप्रस्तटे वृत्तविमानानि च विंशतिः ॥ ४५ ॥ प्रथमप्रतरे पङ्क्तिविमानाः सर्वसंख्यया । अष्टाचत्वारिंशतैवमधिकं शतयोर्द्वयम् ॥ ४६ ॥ द्वितीयप्रतरे पङ्क्तौ, पङ्क्तौ त्र्यस्रा विमानकाः । एकविंशतिरन्ये च, विंशतिर्विंशतिः पृथक् ॥ ४७ ॥ चतुश्चत्वारिंशमेवं, विमानानां शतद्वयम् । द्वितीयप्रतरे पङ्क्तिगतानां सर्वसंख्यया ॥ ४८ ॥ तार्त्तीयीके प्रस्तटे तु, चतसृष्वपि पङ्क्तिषु । वृत्तत्र्यस्रचतुरस्रा, विमाना विंशतिः पृथक् ॥ ४९ ॥ चत्वारिंशत्समधिके, द्वे शते सर्वसंख्यया । प्रतरे च तुरीयेऽपि, निखिलास्वपि पङ्क्तिषु ॥ ५० ॥ एकोनविंशतिर्वृत्तास्त्र्यस्राश्च चतुरस्रकाः । विंशतिर्विंशतिः सर्वे, ते षट्त्रिंशं शतद्वयम् ॥ ५१ ॥ पञ्चमे च प्रतिपङ्क्ति, त्रिकोणाः किल विंशतिः । चतुरस्राश्च वृत्ताश्च, पृथगेकोनविंशतिः ॥ ५२ ॥ शतद्वयं च द्वात्रिंशमस्मिंस्ते सर्वसंख्यया । षष्ठे च प्रतिपङ्क्त्येते, त्रयेऽप्येकोनविंशतिः ॥ ५३ ॥ अष्टाविंशे द्वे शते चास्मिन्नमी सर्वसंख्यया । पङ्क्तौ पङ्क्तौ सप्तमे तु, वृत्ता अष्टादश स्मृताः ॥ ५४ ॥ एकोनविंशतिस्त्र्यस्राश्चतुरस्राश्च तत्र च । सर्वाग्रेण विमानानां, चतुर्विंशं शतद्वयम् ॥ ५५ ॥ प्रतिपङ्क्त्यष्टमे त्र्यस्राः, प्रोक्ता एकोनविंशतिः ।

प्रस्तटेषु वृत्तत्र्यस्रचतुरस्रविमानाः

२०

२५



२८

वृत्ताश्च चतुरस्राश्चाष्टादशाष्टादश स्फुटम् ॥ ५६ ॥ विंशं शतद्वयं सर्वसंख्ययाऽत्र भवन्ति ते । नवमे प्रतिप-
ङ्क्त्येते, त्रिधाप्यष्टादशोदिताः ॥५७॥ अस्मिन् सर्वसंख्यया तु, द्वे शते षोडशाधिके । दशमे प्रतिपङ्क्त्यष्टादश
त्रिचतुरस्रकाः॥५८॥वृत्ताः सप्तदशेत्येवं, विमानाः पङ्क्तिवर्त्तिनः। द्विशती द्वादशोपेता, सर्वाग्रेण भवन्त्यमी॥५९॥
एकादशेऽथ प्रतरे, त्र्यस्रा अष्टादशोदिताः । चतुरस्राः सप्तदश, वृत्तास्तावन्त एव च ॥ ६० ॥ द्विशत्यष्टाधिका
सर्वसंख्यया द्वादशेऽथ च । पङ्क्तौ पङ्क्तौ सप्तदशप्रमितास्त्रिविधा अपि ॥ ६१ ॥ द्विशती चतुरधिका, स्युस्तत्र
सर्वसंख्यया । त्रयोदशे प्रस्तटेऽथ, वृत्ता भवन्ति षोडश ॥ ६२ ॥ त्रिचतुष्कोणकाः सप्तदश सर्वे शतद्वयम् ।
सौधर्मेशानयोरेवं, स्वर्गयोः सर्वसंख्यया ॥ ६३॥ द्विपञ्चाशदधिकानि, शतानि नव वृत्तकाः । त्रिकोणानां नव
शतान्यष्टाशीत्यधिकानि च ॥ ६४ ॥ चतुष्कोणा द्विसप्तत्याऽधिका नवशतीति च । सह संकलिता एते, त्रयोद-
शभिरिन्द्रकैः ॥ ६५ ॥ सर्वसंख्या पङ्क्तिगतविमानानां भवेदिह । द्वौ सहस्रौ नवशताधिकौ सपञ्चविंशती ॥ ६६ ॥
चतसृणां च पूर्वोक्तपङ्क्तीनामन्तरेष्विह । सर्वेष्वपि प्रस्तटेषु, प्राचीमेकां दिशं विना ॥ ६७ ॥ पुष्पावकीर्णकाः
सन्ति, विमाना विलसद्रुचः । सौधर्मेशानयुगले, भवन्ति सर्वसंख्यया ॥ ६८ ॥ एकोनषष्टिर्लक्षाणि, ते सप्तनव-
तिस्तथा । सहस्राणि तदुपरि, केवला पञ्चसप्ततिः ॥ ६९ ॥ निर्व्यवस्थाः स्थिता एते, विकीर्णपुष्पपुञ्जवत् ।
इतस्ततस्ततः पुष्पावकीर्णा इति विश्रुताः ॥ ७० ॥ प्रतिप्रतरमेतेषां, पङ्क्तिप्रासविमानवत् । संख्या पुष्पावकी-
र्णानां, न पृथक् क्वापि लभ्यते ॥ ७१ ॥ पङ्क्तिपुष्पावकीर्णाश्च, सर्वे संकलिताः पुनः । सौधर्मेशानयोः षष्टिर्ल-

क्षाणि स्युर्विमानकाः ॥ ७२ ॥ द्वात्रिंशत्तत्र लक्षाणि, सौधर्मस्य भवन्त्यमी । लक्षाण्यष्टाविंशतिश्च, स्युरीशानत्रिविष्टपे ॥ ७३ ॥ अथैतयोर्वासवयोः, संबन्धीनि पृथक् पृथक् । पाङ्क्तेयानि विमानानि, प्रोक्तान्येवं पुरातनैः ॥ ७४ ॥ तथाहुस्तपागच्छपतयः श्रीरत्नशेखरसूरयः श्राद्धविधिवृत्तौ—"दक्षिणस्यां विमाना ये, सौधर्मेशस्य तेऽखिलाः । उत्तरस्यां तु ते सर्वेऽपीशानेन्द्रस्य सत्तया ॥ ७५ ॥ पूर्वस्यामपरस्यां च, वृत्ताः सर्वे विमानकाः । त्रयोदशापीन्द्रकाश्च, स्युः सौधर्मसुरेशितुः ॥ ७६ ॥ पूर्वापरदिशोस्त्र्यस्राश्चतुरस्राश्च ते पुनः । सौधर्माधिपतेरर्द्धा, अर्द्धा ईशानचक्रिणः ॥ ७७ ॥" संग्रहणीवृत्तावपि—"जे दाहिणेण इंदा दाहिणओ आवली भवे तेसिं । जे पुण उत्तर इंदा उत्तरओ आवली तेसिं ॥ ७८ ॥ पुव्वेण पच्छिमेण य सामन्ना आवली भवे तेसिं । जे पुण वट्टविमाणा मज्झिल्ला दाहिणिल्लाणं ॥ ७९ ॥ पुव्वेण पच्छिमेण य जे वट्टा तेऽवि दाहिणिल्लाणं । तंसचउरंसगा पुण सामन्ना हुंति दुण्हंपि ॥ ८० ॥" प्रत्येकं त्वथ सौधर्मेशानयोर्देवलोकयोः । वृत्तादीनां पङ्क्तिगानां, संख्यैवं गदिता श्रुते ॥ ८१ ॥ सप्तविंशा सप्तशती, वृत्तानां प्रथमे भवेत् । त्रिकोणानामथ चतुर्नवत्याढ्या चतुःशती ॥ ८२ ॥ चतुष्कोणानां च चतुःशत्येव षडशीतियुक् । शतान्येवं सप्तदश, सप्तोत्तराणि पङ्क्तिगाः ॥ ८३ ॥ लक्षाण्येकत्रिंदशदष्टानवतिश्च सहस्रकाः । द्वे शते त्रिनवत्याढ्ये, इह पुष्पावकीर्णकाः ॥ ८४ ॥ एषां योगे तु पूर्वोक्ता, लक्षा द्वात्रिंशदेव ते । ईशानेऽप्यथ वृत्तानामष्टत्रिंशं शतद्वयम् ॥ ८५ ॥ त्रिचतुष्कोणसंख्या तु, सौधर्मवद्भवेदिह । अष्टादशोत्तराण्येवं, शतानि द्वादशाखिलाः ॥ ८६ ॥ पुष्पावकीर्ण-

कानां तु, लक्षाणां सप्तविंशतिः । सहस्राण्यष्टनवतिर्द्व्यशीतिः सप्तशत्यपि ॥ ८७ ॥ लक्षाण्यष्टाविंशतिर्या, सर्वसंख्या पुरोदिता । एषां योगेन सा प्राज्ञैर्भावनीया बहुश्रुतैः ॥ ८८ ॥ तत्रापि—सौधर्मेन्द्रविमानेभ्य, ईशानस्य सुरेशितुः । विमाना उच्छ्रिताः किंचित्प्रमाणतो गुणैरपि ॥८९॥ यत्तु पञ्चशतोच्चत्वं, प्रासादानां द्वयोरपि । स्थूलन्यायात्तदुदितं, ततस्तन्न विरुध्यते ॥ ९० ॥ वस्तुतः सौधर्मगतप्रासादेभ्यः समुन्नताः । ईशानदेवलोकस्य, प्रासादाः सुंदरा अपि ॥ ९१ ॥ यथा करतले कश्चिन्निम्नः कश्चित्तथोन्नतः । देशस्तथा विमानानामेतयोर्निम्नतो- 5
न्नती ॥ ९२ ॥ तथाऽऽहुः—"सक्कस्स णं भंते ! देविंदस्स देवरण्णो विमाणेहिंतो ईसाणस्स देविंदस्स देवरण्णो विमाणा ईसिं उच्चयरा ईसिं उन्नययरा" इत्यादि भगवतीशतक ३।१ उ० वृ० । इदमेव मनसि विचिंत्य तत्त्वार्थ-भाष्यकारैरुक्तं—"सौधर्मस्य कल्पस्योपरि ऐशानः कल्पः, ऐशानस्योपरि सनत्कुमारः, सनत्कुमारस्योपरि माहेन्द्र इत्येवमासर्वार्थसिद्धा"दिति । वृत्ताः स्युर्वलयाकारास्त्र्यस्राः शृङ्गाटकोपमाः । भवन्त्यक्षाटकाकाराश्च- 10
तुरस्रा विमानकाः ॥ ९३ ॥ ये तु पुष्पावकीर्णाख्या, विमानका भवन्ति ते । नन्द्यावर्त्तानुकृतयः, केचिदन्येऽ-सिसंस्थिताः ॥ ९४ ॥ अपरे स्वस्तिकाकाराः, श्रीवत्साकृतयः परे । पद्माकाराः केचिदेवं, नानाकाराः स्थिता इति ॥९५॥ प्राकारेण परिक्षिप्ता, वृत्ताः पङ्क्तिविमानकाः । द्वारेणैकेन महता, मण्डिताः पिण्डितश्रिया ॥ ९६ ॥ 13
त्र्यस्रानां तु विमानानां, यस्यां वृत्तविमानकाः । तस्यां दिशि वेदिका स्यात्प्राकारः शेषदिक्षु च ॥ ९७ ॥ मुण्ड-

प्राकाररूपैव, वेदिका तु भवेदिह । द्वाराणि च त्रिकोणेषु, त्रीण्येवेति जिनैर्मतम् ॥ ९८ ॥ चतुर्दिशं वेदिकाभिश्चतुरस्रास्तु चारवः । स्फारैर्द्वारैश्चतुर्भिश्च, चतुर्दिशमलङ्कृताः ॥ ९९ ॥

स्वरूपं किंचन ब्रूमः, सौधर्मैशाननाकयोः । विमानानामथो जीवाभिगमादिश्रुतोदितम् ॥ १०० ॥ विमानानामत्र पृथ्वी, घनोदधिप्रतिष्ठिता । स्त्यानीभूतोदकरूपः, ख्यात एव घनोदधिः ॥ १०१ ॥ जगत्स्वभावादेवासौ, स्पन्दते न हि कर्हिचित् । विमाना अपि तत्रस्था, न जीर्यन्ति कदाचन ॥ १०२ ॥ घनोदधिः स चाकाश, एवाधारविवर्जितः । निरालम्बः स्थितश्चित्रं, स्वभावाज्ज्योतिषादिवत् ॥ १०३ ॥ महानगरकल्पानि, विमानानि भवन्त्यथ । प्राकाराश्च तदुपरि, वनखण्डपरिष्कृताः ॥ १०४ ॥ प्राकारास्ते योजनानां, समुत्तुङ्गाः शतत्रयम् । शतं तदर्द्धं तत्पादं, मूलमध्योर्ध्वविस्तृताः ॥ १०५ ॥ चतुर्द्वारसहस्राढ्या, द्वारमेकैकमुच्छ्रितम् । योजनानां पञ्चशतीं, सार्द्धं द्वे च शते ततम् ॥ १०६ ॥ चक्र १ मृग २ गरुड ३ र्क्ष ४ च्छत्र ५ लसत्पिच्छ ६ शकुनि ७ सिंह ८ वृषाः ९ । अपि च चतुर्दन्तगजाः १० आलेख्यैरेभिरतिरम्याः ॥ १०७ ॥ प्रत्येकं शतमष्टाधिकमेते केतवो विराजन्ते । साशीतिसहस्रं ते, सर्वेऽप्यत्र प्रतिद्वारम् ॥ १०८ ॥ (आर्ये) शेषं द्वारवर्णनं च, श्रीसूर्याभविमानवत् । राजप्रश्नीयतो ज्ञेयं, नात्रोक्तं विस्तृतेर्भयात् ॥ १०९ ॥ विस्तृतानि योजनार्द्धमायतान्येकयोजनम् । प्राकारकपिशीर्षाणि, नानामणिमयानि च ॥ ११० ॥ प्रासादास्तेषु देवानां, सन्ति रत्नविनिर्मिताः । तत्रैतयोस्ताविषयोर्विमानानां वसुन्धरा ॥ १११ ॥ योजनानां शताः सप्तविंशतिः पिण्डतो भवेत् । प्रासादाश्च तदुपरि, प्रोक्ताः पञ्चशतोन्नताः

पुष्पावकीर्णाः सौधर्मैशानविमानस्वरूपं

२०

२५



२७

॥ १२ ॥ इदमुच्चत्वमानं तु, मूलप्रासादगोचरम् । प्रासादपरिपाट्यस्तु, तदर्द्धार्द्धमिता मताः ॥ १३ ॥ एवं च
पृथ्वीपिण्डेन, सह द्वात्रिंशदेव हि। शतानि तुङ्गत्वमिह, प्रासादशिखरावधि ॥ १४ ॥ एवं सर्वत्र भूपीठप्रासादौ-
च्चत्ययोजनात् । द्वात्रिंशद्योजनशता, विमानोच्चत्वमूह्यताम् ॥ १५ ॥ भूपीठस्य च बाहल्यं, प्रासादानां च
तुङ्गता । पृथक् पृथक् यथास्थानं, सर्वस्वर्गेषु वक्ष्यते ॥ १६ ॥ विष्कम्भायामतस्त्वत्र, विमानाः कथिता द्विधा ।
संख्येयैर्योजनैः केचिदसंख्येयैर्मिताः परे ॥ १७ ॥ व्यासायामपरिक्षेपाः, संख्येयैर्योजनैर्मिताः । आद्यानाम-
परेषां तेऽसंख्येयैर्योजनैर्मिताः ॥१८॥ स्वर्गयोरेनयोस्तत्र, प्रथमप्रतरेऽस्ति यत् । उडुनामैन्द्रकं व्यासायामतस्तत्प्रकी-
र्तितम् ॥१९॥ योजनानां पञ्चचत्वारिंशल्लक्षाणि सर्वतः । परिधिस्त्वस्य मनुजक्षेत्रस्येव विभाव्यताम् ॥२०॥ एवं च—
सिद्धक्षेत्रमुडुनामैन्द्रकं नृक्षेत्रमेव च । सीमन्तो नरकावासश्चत्वारः सदृशा इमे ॥२१॥ व्यासायामपरिक्षेपैरुपर्युपरि
संस्थिताः । दृष्टाः केवलिभिर्ज्ञानदृष्टिदृष्टत्रिविष्टपैः ॥२२॥ अन्येषां तु विमानानां, केषांचिन्नाकयोरिह । व्यासायाम-
परिक्षेपमानमेवं निरूपितम् ॥ २३ ॥ जम्बूद्वीपं प्रोक्तरूपं, यथा गत्यैकविंशतिम् । वारान् प्रदक्षिणीकुर्यात्सुरश्च-
प्पुटिकात्रयात् ॥ २४ ॥ षण्मासान् यावदुत्कर्षात्, तया गत्या प्रसर्पति । कानिचित्स विमानानि, व्यतिव्रजति वा न
वा ॥ २५ ॥ अथापरप्रकारेण, विमानमानमुच्यते । सौधर्मादिषु नाकेषु, यथोक्तं पूर्वसूरिभिः ॥ २६ ॥ कर्क-
संक्रान्तिघस्रे यदुदयास्तान्तरं रवेः । योजनानां सहस्राणि, चतुर्नवतिरीरितम् ॥ २७ ॥ षड्विंशा च पञ्चशती
( ९४५२६ क, ४२।६०), एकस्य योजनस्य च । षष्टिभागा द्विचत्वारिंशदास्त्रिगुणीकृते ॥ २८ ॥ लक्षद्वयं योज-

नानां, त्र्यशीतिश्च सहस्रकाः । साशीतयः शताः पञ्च, पष्ट्यंशाः पट् सुरक्रमः (२८३५८० क ६।६०) ॥ २९ ॥ सूर्योदयास्तान्तरेऽथ, प्रागुक्ते पञ्चभिर्हते । पूर्वोदितात्क्रमात्प्रौढः, क्रमो दिव्यो भवेत्परः ॥३०॥ स चायं—चतुर्लक्षी योजनानां, द्विसप्ततिः सहस्रकाः । पट्शती च त्रयस्त्रिंशा, पष्ट्यंशास्त्रिंशदेव च ॥ ३१ ॥ ( ४७२६३३ क. ३०।६०) उदयास्तान्तरे भानोः, सप्तभिर्गुणिते भवेत् । दिव्यः क्रमस्तृतीयोऽयं, प्रौढः पूर्वोदितक्रमात् ॥ ३२ ॥ पट् लक्षाण्येकपष्टिश्च, सहस्राणि शतानि पट् । पडशीतिर्योजनानां, चतुःपञ्चाशदंशकाः ॥ ३३ ॥ ( ६६१६८६ क. ५४।६०) अर्कोदयास्तान्तरेऽथ, नवभिर्गुणिते सति । एप दिव्यः क्रमस्तुर्यः, स्यान्महान् प्राक्तनत्रयात् ॥३४॥ अप्योर्द्धान्यष्ट लक्षाणि, योजनानां शतानि च । ससैव चत्वारिंशानि, कलाश्चाष्टादशोपरि (८५०७४०क. १८।६०) ॥ ३५ ॥ चण्डा चपला जवना, वेगा चेति यथोत्तरम् । चतस्रो दिव्यगतयः, शीघ्रशीघ्रतराः स्मृताः ॥ ३६ ॥ केचिद्वेगाभिधानां तु, तुरीयां मन्वते गतिम् । नाम्ना जवनतरिकामभिन्नां च स्वरूपतः ॥ ३७ ॥ कस्याप्यथ विमानस्य, पारं प्राप्तुमुपस्थिताः । शाक्रस्येव प्राप्तरूपाश्चत्वारो युगपत्सुराः ॥ ३८ ॥ एकस्तस्य विमानस्य, मिनोति तत्र विस्तृतिम् । आद्यक्रमेणाद्यगत्या, पण्मासान् यावदश्रमम् ॥ ३९ ॥ द्वितीयः पुनरायामं, तस्य मातुमुपस्थितः । क्रमैर्द्वितीयजातीयैर्गत्याऽपि चपलाख्यया ॥ ४० ॥ तृतीयो मध्यपरिधिं, मिमीते मतिमान् सुरः । क्रमैस्तृतीयजातीयैर्गच्छन् गत्या तृतीयया ॥ ४१ ॥ तुर्यस्तु बाह्यपरिधिं, मिमीपुरन्तिमैः क्रमैः । विमानमभितो भ्राम्यामीति गत्या तुरीयया ॥ ४२ ॥ मिन्वन्त एवं पण्मासान्, येपां पारं न ते गताः । सौधर्मादिषु

विमानानामायामादिमानं

२०

२५



२८

सन्त्येवंविधाः केचिद्विमानकाः ॥ ४३ ॥ अथ प्रकारान्तरेण, परिमाणं निरूप्यते । सौधर्मादिविमानानामनुत्त-
राश्रयावधि ॥ ४४ ॥ क्रमैः प्रथमजातीयैराद्यस्वर्गचतुष्टये । विष्कंभं चण्डया गत्याऽऽयामं चपलया पुनः ॥४५॥
जवनयाऽन्तः परिधिं, बाह्यं गत्या च वेगया । मिनुयान्निर्जरः कश्चिद्विमानमतिकौतुकी ॥ ४६ ॥ अच्युतान्तेषु
चाष्टासु, व्यासादीन्मिनुयात्क्रमात् । क्रमैर्द्वितीयजातीयैराद्यादिगतिभिर्युतैः ॥ ४७ ॥ ग्रैवेयकेषु नवसु,
विष्कम्भादीन्मिनोति सः । क्रमैस्तृतीयजातीयैश्चतुर्गतियुतैः क्रमात् ॥ ४८ ॥ विजयादिविमानेषु, चतुर्ष्वपि
मिनोत्यसौ । विष्कम्भादिक्रमैस्तुर्यैश्चतुर्गतिसमन्वितैः ॥ ४९ ॥ विमानमेकमप्येष, मासैः षड्भिरपि स्फुटम् ।
पूर्णं न गाहते सन्ति, विमानानीदृशान्यपि ॥ ५० ॥ जीवाभिगमसूत्रे तु, भेदांश्चण्डादिकान् गतेः । व्यासादि
चाविवक्षित्वा, विमानमानमीरितम् ॥ ५१ ॥ तथाहि—स्वस्तिकं १ स्वस्तिकावर्त्तं २, स्वस्तिकप्रभमित्यपि ३ ।
तुर्यं स्वस्तिककान्ताख्यं ४, परं स्वस्तिकवर्णकम् ५ ॥ ५२ ॥ षष्ठं स्वस्तिकलेश्याख्यं ६, सप्तमं स्वस्तिकध्वजम् ७ ।
अष्टमं स्वस्तिकसितं ८, स्वस्तिककूटमित्यथ ९ ॥ ५३ ॥ ततः स्वस्तिकशिष्टाख्यं १०, विमानं दशमं भवेत् ।
एकादशं स्वस्तिकोत्तरावतंसकमीरितं ११ ॥५४॥ षड्भिर्मासैः क्रमैराद्यैर्मिन्वानो नावगाहते । एषां मध्ये विमा-
नानां, किंचित्किंचित्तु गाहते ॥५५॥ अर्चि १ स्तथाऽर्चिरावर्त्तं २ मर्चिःप्रभ ३ मथापरम् । अर्चिःकान्त ४ मर्चि-
र्वर्णं ५ मर्चिर्लेश्यं ६ तथापरम् ॥ ५६ ॥ अर्चिर्ध्वज ७ मर्चिःसित ८ मर्चिःकूटं ९ ततः परम् । अर्चिःशिष्ट १०-
मर्चिरुत्तरावतंसकमन्तिमम् ११ ॥ ५७ ॥ किंचिद्विमानेष्वेतेषु, मिन्वन्नैवावगाहते । क्रमैर्द्वितीयैः षण्मास्या,

किंचित्पुनर्विगाहते ॥ ५८ ॥ कामं कामावर्त्तमेव, कामप्रभमथापरम् । कामकान्तं कामवर्णं, कामलेश्यं ततः परम् ॥ ५९ ॥ कामध्वजं कामसीतं, कामकूटं भवेत्परम् । कामशिष्टं तथा कामोत्तरावतंसकाभिधम् ॥ ६० ॥ किंचिदेषां विमानानां, मध्ये मिन्वन् विगाहते । क्रमैस्तृतीयैः पण्मास्या, किंचित्तु नावगाहते ॥ ६१ ॥ विजयं वैजयन्तं च, जयन्तमपराजितम् । विमानं किंचिदप्येषु, मिन्वन्नैवावगाहते ॥ ६२ ॥ पड्भिर्मासैः क्रमैस्तुर्यैः, सचातुर्यैः स निर्जरः । मानमेवं विमानानामुक्तं वैमानिकार्चितैः ॥ ६३ ॥ युग्मं ॥ तथा च तद्ग्रंथः—"अत्थि णं भंते ! विमाणाइं सोत्थियाइं जाव सोत्थोत्तरवडिंसयाइं ?, हंता अत्थि, ते णं भंते ! विमाणा केमहालया प० ?, गो० ! जावइयं च णं सूरिए उदेइ जावइअं च णं सूरिए अत्थमेइ एवइयाइं तिन्नि उवासंतराइं अत्थेगइयस्स देवस्स एगे विक्कमे सिया, से णं देवे ताए उक्किट्ठाए तुरियाए जाव दिव्वाए देवगतीए वीईवयमाणे २ जाव एगाहं वा दुयाहं वा उक्कोसेणं छम्मासे वीईवएज्जा, अत्थेगइयं विमाणं वीइवइज्जा, अत्थेगइयं विमाणं नो वीईवइज्जा," इत्यादि । कस्मिन्नमी देवलोके, विमानाः स्वस्तिकादयः । विजयादीन् विना सम्यगेतन्न ज्ञायतेऽधुना ॥ ६४ ॥ ननु चण्डादिगतिभिः, पण्मास्या तादृशैः क्रमैः । न केषांचिद्विमानानां, पारं यान्ति सुरा यदि ॥ ६५ ॥ तद् द्रुतं जिनजन्मादिकल्याणकोत्सवार्थिनः । तस्मिन्नेव क्षणे तत्तत्स्थानमायान्त्यमी कथम् ? ॥ ६६ ॥ ( युग्मम् ) अत्रोच्यते—गतिक्रमाविमावुक्तौ, पल्योपमादिपल्यवत् । विमानमानज्ञानाय, कल्पितौ न

१ केषांचित् समवायाङ्गोक्तस्थित्यनुसारेण स्यात् निर्णयः, परं न यथावदिलेवमुल्लेखः ।

स्वस्तिकादिविमानमानं

२०

२५



२७

तु वास्तवौ ॥ ६७ ॥ वास्तवी तु गतिर्दिव्या, दिव्यः क्रमश्च वास्तवः । अत्यन्तसत्वरतरौ, तथा भवस्वभावतः ॥ ६८ ॥ ततश्च जिनजन्मादिप्रमोदप्रचयोत्सुकाः । सुरा अचिन्त्यसामर्थ्यादत्यन्तं शीघ्रगामिनः ॥ ६९ ॥ अच्युतादिककल्पेभ्योऽभ्युपेत्य प्रौढभक्तयः । स्वं स्वं कृतार्थयन्त्यर्हत्कल्याणकोत्सवादिभिः ॥ ७० ॥ इदृशानि विमानानि, महान्त्याद्यद्वितीययोः । स्वर्गयोः पञ्चवर्णानि, विराजन्ते प्रभाभरैः ॥ ७१ ॥ जात्याञ्जनमयानीव, स्युर्मेचकानि कानिचित् । इन्द्रनीलरत्नमयानीव नीलानि कानिचित् ॥ ७२ ॥ पद्मरागमयानीव, रक्तवर्णानि कान्यपि । स्वर्णपीतरत्नमयानीव पीतानि कानिचित् ॥ ७३ ॥ कानिचिच्छुक्लवर्णानि, कृतानि स्फटिकैरिव । सर्वाणि नित्योद्योतानि, भासुराणि प्रभाभरैः ॥ ७४ ॥ यथा निरभ्रनभसि, मध्याह्नेऽनावृतस्थले । इह प्रकाशः स्यात्तेषु, ततः स्फुटतरः सदा ॥ ७५ ॥ तमःकणेन न कदाप्येषु स्थातुं प्रभूयते । संशयेनेव चेतस्सु[2], केवलज्ञानशालिनाम् ॥ ७६ ॥ अहोरात्रव्यवस्थापि, न भवेत्तेषु कर्हिचित् । दुरवस्थेव गेहेषु, जाग्रत्पुण्यौघशालिनाम् ॥ ॥ ७७ ॥ व्यवहारस्त्वहोरात्रादिकोऽत्रत्यव्यपेक्षया । तत एव च तत्रत्या, गतं कालं विदन्ति न[3] ॥ ७८ ॥

चन्दनागुरुचन्द्रैणमदकश्मीरजन्मनाम् । यूथिकाचम्पकादीनां, पुष्पाणां च समन्ततः ॥ ७९ ॥ यथा विकी-

---

१ गत्यनुमानेन विमानमानज्ञापनायैतत्, वास्तव्यदेवगतेस्तु मानस्य विमानमानवत् ज्ञेयतैव, न तु निश्चितता. २ चेतो ज्ञानमत्र, तेन केवलिनां नोसंज्ञिनोअसंज्ञित्वेऽपि न विरोधः । ३ नारकाणामपि सूर्यादेरुदयाद्यभावः, नृलोकबहिःस्थानां तिरश्चामपि, परं तेषां न गतस्य कालस्याज्ञानं, ततः सुखप्राचुर्यमेव गतकालस्याज्ञाततायाः कारणमुचितं, व्यन्तराणामपि 'तहिं देवा वंतरिये'त्यादिना तथोक्तेः ।

यमाणानां, सौरभ्यमिव जृम्भते। घ्राणाघ्राणकरं पीयमानमुत्फुल्लनासिकैः ॥ ८० ॥ ततोऽपीष्टतरस्तेषां, विमानानां स्वभावतः। स्वाभाविकः परिमलः, पुष्णाति परमां मुदम् ॥ ८१ ॥ त्रिभिर्विशेषकं ॥ रूतबूरनवनीतशिरीषकुसुमादितः। तेषामतिमृदुः स्पर्शः, स्वाभाविकः सनातनः ॥ ८२ ॥

चतुर्दिशं विमानेभ्यस्तेभ्यः पञ्चशतोत्तराः। चत्वारो वनखण्डाः स्युर्नानावृक्षालिमण्डिताः ॥ ८३ ॥ प्राच्यामशोकविपिनं, याम्यां सप्तच्छदाभिधम्। प्रतीच्यां चम्पकवनमुदगाम्रवणं तथा ॥ ८४ ॥ प्रत्येकं वनखण्डास्ते, प्राकारेण विभूषिताः। पञ्चवर्णमणितृणवरेण्यसमभूमयः ॥८५॥ सरस्यो वापिकाश्चैषु, पुष्करिण्यश्च दीर्घिकाः। रूप्यकूलास्तपनीयतलाः सौवर्णवालुकाः ॥ ८६ ॥ जात्यासवघृतक्षीरक्षोदस्वादूदकाञ्चिताः। क्रीडदप्सरसां वक्तैः, पुनरुक्तीकृताम्बुजाः ॥८७॥ चतुर्दिशं त्रिसोपानप्रतिरूपकराजिताः। विभान्ति तोरणैश्छत्रातिच्छत्रैश्च ध्वजैरपि ॥ ८८ ॥ त्रिभिर्विशेषकं ॥ तासु तासु पुष्करिण्यादिषु भान्ति पदे पदे। क्रीडार्हा मण्डपाः शैला, विविधान्दोलका अपि ॥ ८९ ॥ वैमानिका यत्र देवा, देव्यश्च सुखमासते। प्रायः सदा भवधारणीयाङ्गेनारमन्ति च ॥ ९० ॥ तत्र क्रीडामण्डपादौ, हंसासनादिकान्यथ। आसनानि भान्ति तेषां, भेदा द्वादश ते त्वमी ॥ ९१ ॥ हंसे १ कोंचे २ गरुडे ३ ओणय ४ पणए य ५ दीह ६ भद्दे य ७। पक्खी ८ मयरे ९ पउमे १० सीह ११ दिसासोत्थि १२ बारसमे ॥ ९२ ॥ वनखण्डेषु तेष्वेवं, राजन्ते जातिमण्डपाः। यूथिकामल्लि-

१५

२०

॥३१५॥

२४

१ वनखण्डादिषु भवधारणीयेन देवानां स्थितिरित्येवंविधस्पष्टोल्लेखाभावात् विरुद्धलेखस्यापि चाभावात् प्राय इत्युक्तिः।

कानागवल्लीद्राक्षादिमण्डपाः ॥ ९३ ॥ आस्थानप्रेक्षणस्नानालङ्कारादिगृहाण्यपि । शोभन्ते मोहनगृहाः, सुरतार्थं सुधाभुजाम् ॥ ९४ ॥ शिलापट्टा विभान्त्येषु, मण्डपेषु गृहेषु च । हंसक्रौञ्चादिसंस्थाना, नानारत्नविनिर्मिताः ॥ ९५ ॥ तेषु वैमानिका देवा, देव्यश्च सुखमासते । तिष्ठन्ति शेरते स्वैरं, विलसन्ति हसन्ति च ॥ ९६ ॥ सुकृतानां प्राक्कृतानां, भूयसां भुञ्जते फलम् । शमयन्त इव प्राच्यतपःसंयमजं श्रमम् ॥ ९७ ॥

मध्येवनमथैकैकः, प्रासादस्तत्र तिष्ठति । वनाधिकारी प्रत्येकं, सुरो वनसमाभिधः ॥ ९८ ॥ एवमेषां विमानानां, बहिर्भागो निरूपितः । अन्तर्भागो विमानानां, यथाऽऽम्नायमथोच्यते ॥ ९९ ॥ मध्यदेशे विमानानामुपकार्या विराजते । एषा च राजप्रासादावतंसकस्य पीठिका ॥ २०० ॥ उक्तं च—"गृहस्थानां स्मृता राज्ञामुपकार्योपकारिके"ति, परितस्तां पद्मवरवेदिका स्याद्वनाश्रिता । गवाक्षजालाकृतिना, रत्नजालेन राजिता ॥ १ ॥ तथासौ किङ्किणीजालैर्मणिमुक्तादिजालकैः । घण्टाजालैः स्वर्णजालैः, परिक्षिप्ताऽब्जजालकैः ॥ २ ॥ चतुर्दिशं त्रिसोपानप्रतिरूपकमञ्जुला । ध्वजतोरणसच्छत्रातिच्छत्राढ्यानि तान्यपि ॥ ३ ॥ मध्येऽस्या उपकार्याया, विमानस्वामिनो महान् । योजनानां शतान् पञ्चोत्तुङ्गः प्रासादशेखरः ॥ ४ ॥ मूलप्रासादात्समन्तात्, स्युः प्रासादावतंसकाः । चत्वारो द्वे शते सार्द्धे, योजनानां समुच्छ्रिताः ॥ ५ ॥ तेषां चतुर्णां प्रत्येकं, चत्वारो ये चतुर्दिशम् । प्रासादास्ते योजनानां, शतं सपादमुच्छ्रिताः ॥ ६ ॥ प्रत्येकमेषां चत्वारः, प्रासादा ये चतुर्दिशम् । द्वाषष्टिं ते योजनानामर्द्धयर्द्धां स्युः समुच्छ्रिताः ॥ ७ ॥ एषामपि परीवारप्रासादास्ते चतुर्दिशम् ।

५ १० १४

योजनानां स्युः सपादामेकत्रिंशतमुच्छ्रिताः ॥ ८ ॥ तेषामपि परीवारप्रासादाः स्युः समुच्छ्रिताः । योजनानि पञ्चदश, सार्द्धं क्रोशद्वयं तथा ॥ ९ ॥ सर्वेऽप्यमी स्युः प्रासादा, निजोच्चत्वार्द्धविस्तृताः । एवं च पञ्च प्रासादपरिपाट्यः प्रकीर्त्तिताः ॥ १० ॥ एकैकस्यां च दिश्येकचत्वारिंशं शतत्रयम् । त्रयोदश शताः पञ्चषष्ट्याढ्याः सर्वसंख्यया ॥ ११ ॥ राजप्रश्नीयटीकाया, अभिप्रायोऽयमीरितः । तत्सूत्रे तु तिस्र एव, परिपाट्यः प्ररूपिताः ॥ १२ ॥ पञ्चाशीतिरमी सूत्रमते तु सर्वसंख्यया । सूत्रवृत्त्योर्विसंवादे, निदानं वेद तत्त्ववित् ॥ १३ ॥ पञ्चमाङ्गे द्वितीयस्य, शतस्योद्देशकेऽष्टमे । वृत्तौ चतस्रः प्रासादपरिपाट्यः प्ररूपिताः ॥ १४ ॥ एवं चात्र मतत्रयं । विचारसप्ततौ च महेन्द्रसूरिभिरेवमुक्तं—"ओआरिअलयणंमी, पहुणो पणसीइ हुंति पासाया । तिसय इगचत्त कत्थइ कत्थइ पणसट्ठी तेरसयं ॥ १५ ॥ पणसीई इगवीसा पणसी पुण एगचत्त तिसईए । तेरससय पणसट्ठी तिसई इगचत्त पइक्कुहं ॥ १६ ॥" "विमानेषु प्रथमं प्राकारस्तस्य सर्वमध्ये उपरिकालयनं पीठिकेत्यर्थः, तस्यां सर्वमध्ये प्रभोः पञ्चाशीतिः प्रासादाः, कुत्रापि विमानस्योपरिकालयने एकचत्वारिंशदधिकानि त्रीणि शतानि प्रासादाः, कुत्रापि पञ्चषष्ट्यधिकानि त्रयोदश शतानि प्रासादाः, एवं भेदत्रयमेवेति" विचारसप्ततिकावचूरौ । एवं च—अन्यस्वर्गेष्वपि मूलप्रासादोन्नत्यपेक्षया । अर्द्धार्द्धमानः प्रासादपरिवारो विभाव्य-

[1] आदर्शानां वैचित्र्यात् भेदे नासंभवः, एवं भवने प्रासादपङ्क्तिविषयोऽपि भेदस्तत एव सुसंभवः, अनुयोगनवमांगाद्योपांगादिवृत्त्यवलोकानां नात्र चित्रं । यद्वा विचारसप्ततौ कत्थइ कत्थईत्युल्लेखात् विविधेषु विमानेषु विविधा प्रासादपरिपाटी ।

उपकार्याप्रासादपरिपाट्यः

२०

२५

२६

ताम् ॥ १७ ॥ अमी समग्राः प्रासादा, वैडूर्यस्तम्भशोभिताः । उत्तुङ्गतोरणा रत्नपीठिकाबन्धबन्धुराः ॥ १८ ॥ विमानस्वामिसंभोग्यरत्नसिंहासनाश्रिताः । यथार्हं तत्परीवारसुरभद्रासनैरपि ॥ १९ ॥ एवं सामानिकादीनामपि संपत्तिशालिनाम् । रम्या भवन्ति प्रासादा, स्वर्णरत्नविनिर्मिताः ॥ २० ॥ पौरस्थानीयदेवानामन्येषामप्यनेकशः । स्वस्वपुण्यानुसारेण, प्रासादाः सन्ति शोभनाः ॥ २१ ॥ तत एव विमानास्ते, शृङ्गाटकैरलङ्कृताः । त्रिकैश्चतुष्कैरपि च, चत्वरैश्च चतुष्पथैः ॥ २२ ॥ चतुर्मुखैरपि महापथैः समन्ततोऽश्रिताः । प्राकाराट्टालकवरचरिकाद्वारतोरणैः ॥ २३ ॥ पूर्वोक्तमूलप्रासादादथैशान्यां भवेदिह । सभा सुधर्मा तिसृषु, दिक्षु द्वारैस्त्रिभिर्युता ॥ २४ ॥ प्राच्यां याम्यामुदीच्यां च, भान्ति द्वाराणि तान्यपि । अष्टभिर्मङ्गलैश्छत्रैर्विराजन्ते ध्वजादिभिः ॥ २५ ॥ प्रतिद्वारमथैकैको, विभाति मुखमण्डपः । त्रिभिर्द्वारैर्युतः सोऽपि, सभावद्रम्यभूतलः ॥ २६ ॥ प्रतिद्वारमथ मुखमण्डपानां पुरः स्फुरन् । प्रेक्षागृहमण्डपः स्यात्त्रिद्वारः सोऽपि पूर्ववत् ॥ २७ ॥ प्रेक्षागृहमण्डपानां, मध्ये वज्राक्षपाटकः । सिंहासनान्विता तत्र, प्रत्येकं मणिपीठिका ॥ २८ ॥ प्रतिद्वारं तथा प्रेक्षागृहमण्डपतः पुरः । मध्ये चैत्यस्तूपयुक्ताश्चतस्रो मणिपीठिकाः ॥ २९ ॥ प्रतिद्वारमथैतेभ्यः, स्तूपेभ्यः स्युश्चतुर्दिशम् । एकैका पीठिका स्तूपाभिमुखप्रतिमाश्रिता ॥ ३० ॥ तेषां च चैत्यस्तूपानां, पुरतो मणिपीठिका । प्रतिद्वारं चैत्यवृक्षस्तत्र नानाद्रुमान्वितः ॥ ३१ ॥ चैत्यवृक्षेभ्यश्च तेभ्यः, पुरतो मणिपीठिका । प्रतिद्वारं भवेत्तत्र, महेन्द्रध्वज उच्छ्रितः ॥ ३२ ॥ पञ्चवर्णह्रस्वकेतुसहस्रालङ्कृतः स च । छत्रातिच्छत्रकलितस्तुङ्गो गगनमुल्लिखन्

॥ ३३ ॥ तस्यां सौधर्म्यां सभायां, स्युर्मनोगुलिकाभिधाः । सहस्राण्यष्टचत्वारिंशद्रत्नमयपीठिकाः ॥ ३४ ॥ प्राक्प्रतीच्योः सहस्राणि, तत्र षोडश षोडश । अष्टाष्ट च सहस्राणि, दक्षिणोत्तरयोर्दिशोः ॥ ३५ ॥ स्वर्णरूप्यमयास्तासु, फलका नागदन्तकैः । माल्यदामाञ्चितैर्युक्ताः, स्युर्गोमानसिका अपि ॥ ३६ ॥ तथैव तावत्य एव, शय्यारूपास्त्विमा इह । फलका नागदन्ताढ्या, घट्यो धूपस्य तेषु च ॥ ३७ ॥ तस्याः सौधर्म्याः सभाया, मध्ये च मणिपीठिका । उपर्यस्या माणवकश्चैत्यस्तम्भो भवेन्महान् ॥ ३८ ॥ तुङ्गः षष्टिं योजनानि, विस्तृतश्चैकयोजनम् । एकं योजनमुद्विद्धः, शुद्धरत्नप्रभोद्भटः ॥ ३९ ॥ उपर्यधो योजनानि, द्वादश द्वादश ध्रुवम् । वर्जयित्वा मध्यदेशे, रैरूप्यफलकाञ्चितः ॥ ४० ॥ फलकास्ते वज्रमयनागदन्तैरलङ्कृताः । तेषु सिक्यकविन्यस्ता, वज्रजाताः समुद्गकाः ॥ ४१ ॥ एतेषु चार्हत्सक्थीनि, निक्षिपन्त्यसकृत्सुराः । प्राच्यानि च विलीयन्ते कालस्य परिपाकतः ॥ ४२ ॥ विमानस्वामिनामेतान्यन्येषामपि नाकिनाम् । दैवतं मङ्गलं चैत्यमिव पूज्यानि भक्तितः ॥ ४३ ॥ एतत्प्रक्षालनजलाभिषेकेण क्षणादपि । क्लेशावेशादिका दोषा, विलीयन्ते सुधाभुजाम् ॥ ॥ ४४ ॥ एषामाशातनाभीताः, सभायामिह निर्जराः । न सेवन्ते निधुवनक्रीडां व्रीडां गता इव ॥ ४५ ॥ चैत्यस्तम्भादितः प्राच्यां, स्याद्रत्नपीठिकाऽत्र च । विमानस्वामिनः सिंहासनं परिच्छदान्वितम् ॥ ४६ ॥ तस्यैव चैत्यस्तम्भस्य, प्रतीच्यां मणिपीठिका । विमानस्वामिनो योग्यं, शयनीयं भवेदिह ॥ ४७ ॥ चैत्यस्तम्भपीठिकाऽत्र, षोडशाऽऽयतविस्तृता । अष्टोच्चा योजनान्यर्द्धमानास्तिस्रोऽपरास्ततः ॥४८॥ शयनीयादथैशान्यां, महती

विमानानां द्वारादि मनोगुलिकादि

२०

२५

॥ ३१७ ॥

२८

मणिपीठिका । क्षुल्लो महेन्द्रध्वजोऽस्यां, चैत्यस्तम्भोक्तमानभृत् ॥ ४९ ॥ ध्वजादेतस्मात्प्रतीच्यां, विमानस्वामिनो भवेत् । चोपालाख्यः प्रहरणकोशः शस्त्रशताञ्चितः ॥ ५० ॥ मानमस्या वक्ष्यमाणसभाऽर्हद्वेश्मनामपि । तद्द्वारमण्डपस्तूपवृक्षादीनां च तीर्थपैः ॥ ५१ ॥ नन्दीश्वरद्वीपगतचैत्यवत् सकलं स्मृतम् । पीठिकादौ विशेषस्तु, प्रोक्तोऽत्राग्रेऽपि वक्ष्यते ॥ ५२ ॥ एवं सभा सुधर्माख्या, लेशतो वर्णिता मया । वैमानिकविमानेषु, सिद्धान्तोक्तानुसारतः ॥ ५३ ॥ तस्याः सौधर्म्याः सभाया, अथैशान्यां भवेदिह । अर्हदायतनं नित्यमत्यन्तविततद्युति । ॥ ५४ ॥ भवेत्सर्वं सुधर्मावदिह द्वारत्रयादिकम् । विज्ञेयं तत्स्वरूपं च, पूर्वोक्तमनुवर्त्तते ॥ ५५ ॥ यावदभ्यन्तरे भागे, स्युर्मनोगुलिकाः शुभाः । तथैव गोमानसिकास्ततश्चैतद्विशिष्यते ॥ ५६ ॥ तस्य सिद्धायतनस्य, मध्यतो मणिपीठिका । उपर्यस्या भवत्येको, देवच्छन्दक उद्भटः ॥ ५७ ॥ अष्टोत्तरशतं तत्र, प्रतिमाः शाश्वतार्हताम् । वैमानिका देवदेव्यो, भक्तितः पूजयन्ति याः ॥ ५८ ॥ घण्टाकलशभृङ्गारदर्पणाः सुप्रतिष्ठकाः । स्थाल्यो मनोगुलिकाश्च, चित्ररत्नकरण्डकाः ॥ ५९ ॥ पात्र्यो वातकरकाश्च, गजाश्वनरकण्ठकाः । महोरगकिंपुरुषवृषकिन्नरकण्ठकाः ॥ ६० ॥ पुष्पमाल्यचूर्णगंधवस्त्राभरणपूरिताः । चङ्गेर्यः सिद्धार्थलोमहस्तकैरपि ता भृताः ॥ ६१ ॥ पुष्पादीनां पटलानि, च्छत्रचामरकेतवः । तैलकोष्ठशतपत्रतगरैलासमुद्गकाः ॥ ६२ ॥ हंसपादहरितालमनःशिलाञ्जनैर्भृताः । समुद्गकाश्च घण्टाद्यास्तत्राष्टाढ्यं शतं समे ॥ ६३ ॥ अष्टोत्तरशतं धूपकडुच्छकाश्च रत्नजाः । भवन्ति सिद्धायतने, श्रीजिनप्रतिमाग्रतः ॥ ६४ ॥ अथैतस्माज्जिनगृहादैशान्यां महती भवेत् ।

५

१०

१४

उपपातसभा साऽपि, सुधर्मेव स्वरूपतः ॥ ६५ ॥ चत्वारि योजनान्यत्रोच्छ्रिताऽष्टौ च ततायता । पीठिकाऽस्यां विमानेशोपपातशयनीयकम् ॥ ६६ ॥ अथैशान्यामुपपातसभायाः स्यान्महाह्रदः । शतं दीर्घस्तदर्द्धोरुर्दशोण्डो योजनानि सः ॥ ६७ ॥ ह्रदादस्मादथैशान्यामभिषेकसभा भवेत् । त्रिद्वारा स्यात् सापि सर्वात्मना तुल्या सुधर्मया ॥ ६८ ॥ विभाति मध्यदेशेऽस्या, महती मणिपीठिका । विमानेशाभिषेकार्हं, तत्र सिंहासनं स्फुरत् ॥ ॥ ६९ ॥ सन्ति तत्परिवारार्हभूरिभद्रासनान्यपि । विमानेशाभिषेकार्थस्तत्र सर्वोऽप्युपस्करः ॥ ७० ॥ अमुष्या अप्यथैशान्यां, सुधर्मासदृशी भवेत् । अलङ्कारसभा मध्यदेशेऽस्या मणिपीठिका ॥ ७१ ॥ तस्यां च सपरीवारं, रत्नसिंहासनं भवेत् । विमानस्वामिनः सर्वोऽलङ्कारोपस्करोऽपि च ॥ ७२ ॥ अलङ्कारसभाया अप्यैशान्यां शोभना भवेत् । व्यवसायसभा सर्वात्मना तुल्या सुधर्मया ॥ ७३ ॥ तस्यां रत्नपीठिकायां, रत्नसिंहासनं भवेत् । सत्पुस्तकं चाङ्करत्नमयपत्रैरलङ्कृतम् ॥ ७४ ॥ रिष्ठरत्नमये तस्य, पृष्ठके शिष्टकान्तिनी । रूप्योत्पन्नदवरकप्रोता च पत्रसंततिः ॥ ७५ ॥ ग्रन्थिर्दवरकस्यादौ, नानामणिमयो भवेत् । न निर्गच्छन्ति पत्राणि, दृढं रुद्धानि येन वै ॥ ७६ ॥ मषीभाजनमेतस्य, वर्यवैडूर्यरत्नजम् । तथा मषीभाजनस्य, शृङ्खला तपनीयजा ॥ ॥ ७७ ॥ मषीपात्राच्छादनं च, वरिष्ठरिष्ठरत्नजम् । लेखनी स्याद्वज्रमयी, मषी रिष्ठमयी भवेत् ॥ ७८ ॥ रिष्ठरत्नमया वर्णाः, सुवाचाः पीनवर्त्तुलाः । धार्मिको व्यवसायश्च, लिखितस्तत्र तिष्ठति ॥ ७९ ॥ व्यवसायसभायाश्चैशान्यामत्यन्तशोभना । नन्दा पुष्करिणी फुल्लाम्भोजकिञ्जल्कपिञ्जरा ॥ ८० ॥ उपपातसभावत् स्यात्,

२०

२५

॥ ३१८ ॥

२८

सभासूक्तासु पीठिकाः । पूर्वोक्तह्रदवन्नन्दापुष्करिण्यपि मानतः ॥ ८१ ॥ अस्या नन्दापुष्करिण्या, ऐशान्या-
मतिनिर्मलम् । बलिपीठं रत्नमयं, दीप्यते दीप्ततेजसा ॥ ८२ ॥ वैमानिकविमानानि, किंचिदेवं स्वरूपतः ।
वर्णितानि विशेषं तु, शेषं जानन्ति तीर्थपाः ॥ ८३ ॥

एतेषु स्वर्विमानेषु, योपपातसभोदिता । तत्रोपपातशय्या या, देवदूष्यसमावृता ॥ ८४ ॥ सूरिश्रीहीरविज-
यश्रीकीर्त्तिविजयादिवत् । शुद्धं धर्मं समाराध्य, साधितार्थाः समाधिना ॥ ८५ ॥ साधवः श्रावकास्तस्यां, विमा-
नेन्द्रतया क्षणात् । उत्पद्यन्तेऽङ्गुलासंख्यभागमात्रावगाहनाः ॥ ८६ ॥ युग्मं ॥ ततश्चान्तर्मुहूर्त्तेन, पञ्चपर्याप्तिं-
शालिनः । द्वात्रिंशद्वर्षतरुणा, इव भोगप्रभूष्णवः ॥ ८७ ॥ समन्ततो जय जय नन्द नन्देतिवादिभिः । देवाङ्ग-
नानां निकरैः, सस्नेहमवलोकिताः ॥ ८८ ॥ स्वाम्युत्पत्तिप्रमुदितैः, सुरैः सामानिकादिभिः । अष्टाङ्गस्पृष्टभूपी-
ठैर्नम्यन्ते भक्तिपूर्वकम् ॥ ८९ ॥ त्रिभिर्विशेषकं ॥ पञ्च पर्याप्तयस्तेषामुक्तास्तीर्थंकरैरिति । यद्भाषाचित्तपर्याप्त्योः,
समाप्ती स्तोकमन्तरम् ॥ ९० ॥ तदुक्तं राजप्रश्नीयवृत्तौ—"इहं भाषामनःपर्याप्त्योः समाप्तिकालान्तरस्य प्रायः
शेषपर्याप्तिसमाप्तिकालान्तरापेक्षया स्तोकत्वादेकत्वेन विवक्षणमिति ' पंचविहाए पज्जत्तीए पज्जत्तिभावं गच्छ-
इ'त्युक्तं । एषामुत्पन्नमात्राणां, देहा वस्त्रविवर्जिताः । स्वाभाविकस्फाररूपा, अलङ्कारोज्झिता अपि ॥९१॥ ततोऽने-
नैव देहेनाभिषेककरणादनु । वक्ष्यमाणप्रकारेणालङ्कारान् दधति ध्रुवम् ॥९२॥ विरच्यन्ते पुनर्ये तु, सुरैरुत्तरवै-

१ वैक्रिये इन्द्रियादिपर्याप्तीनां समाप्त्यन्तरस्य समयत्वाचिन्त्यमेतत्, अत एवाभयदेवैः हेतुविशेषो न निरदेशि । अनभिसन्धितभाषाऽभावेनैक्यं ।

५

१०

१३

क्रियाः। ते स्युः समसमुत्पन्नवस्त्रालङ्कारभासुराः ॥९३॥ तथोक्तं जीवाभिगमसूत्रे—"सोहम्मीसाणदेवा केरिसया विभूसाए प० ?, गो० ! दुविहा पण्णत्ता, तं०–वेउव्वियसरीरा य अवेउव्वियसरीरा य, तत्थ णं जे ते वेउव्वियसरीरा ते हारविराइयवच्छा जाव दस दिसाओ उज्जोएमाणा" इत्यादि. 'तत्थ णं जे ते अवेउव्वियसरीरा ते णं आभरणवसणरहिया पगतित्था विभूसाए पण्णत्ता" तत शय्यानिविष्टानां, तेषां चेतस्ययं भवेत्। अभिप्रायः स्फुटः सुप्तोत्थितानामिव धीमताम् ॥ ९४ ॥ कर्त्तव्यं प्राक्किमस्माभिः, किं कर्त्तव्यं ततः परम्। किं वा हितं सुखं श्रेयः, पारम्पर्यशुभासिकृत् ?॥ ९५॥ ततः स्वस्वामिनामेवमभिप्रायं मनोगतम्। ज्ञात्वा सामानिका देवा, वदन्ति विनयानताः ॥ ९६ ॥ जिनानां प्रतिमाः स्वामिन्निह सन्ति जिनालये । अष्टोत्तरशतं चैत्यस्तम्भेऽस्थीनि तथाऽर्हताम् ॥ ९७ ॥ पूज्यानि तास्तानि चात्र, युष्माकं चान्यनाकिनाम्। प्राक् च पश्चाच कार्यं च, एतन्निःश्रेयसावहम् ॥ ९८ ॥ इह लोके परलोके, हितावाप्तिर्भविष्यति । युष्माकमर्हत्प्रतिमापूजनस्तवनादिभिः ॥ ९९ ॥ वाक्यानि तेषामाकर्ण्येत्युत्थाय शयनीयतः। निर्यान्ति पूर्वद्वारेणोपपातमन्दिरात्ततः ॥३००॥ ह्रदं पूर्वोक्तमागत्य, तत्र कृत्वा प्रदक्षिणाम्। प्रविशन्ति च पौरस्त्यतत्रिसोपानकाध्वना ॥ १ ॥ तत्राचान्ताः शुचीभूताः, सद्योनिर्मितमज्जनाः। ह्रदान्निर्गत्याभिषेकसभामागत्य लीलया॥ २ ॥ प्रदक्षिणीकृत्य पूर्वद्वारा विशन्ति तामपि। तत्र सिंहासने पूर्वाभिमुखास्ते किलासते ॥ ३ ॥ ततः सामानिकास्तेषामाभियोगिकनिर्जरान्। आकार्याज्ञापयन्त्येवं, सावधाना भवन्तु भोः ॥ ४॥ अस्य नः स्वामिनो योग्यां, गत्वाऽनर्घ्यां महीयसीम्। इन्द्राभिषेकसामग्रीमिहानयत

देवानां पर्याप्तिता कार्यं च

२०

२५



२७

सत्वरम् ॥ ५ ॥ ततस्तेऽपि प्रमुदिताः, प्रतिपद्य तथा वचः । ऐशान्यामेत्य कुर्वन्ति, समुद्घातं च वैक्रियम् ॥६॥
द्विस्तं कृत्वा च सौवर्णान्, रौप्यान् रत्नविनिर्मितान् । सुवर्णरूप्यजान् स्वर्णरत्नजान् रूप्यरत्नजान् ॥७॥ स्वर्णरू-
प्यरत्नमयांस्तथा मृत्स्नामयानपि । सहस्रमष्टाभ्यधिकं, प्रत्येकं कलशानमून् ॥ ८ ॥ भृङ्गारादर्शकस्थालपात्रिकासु-
प्रतिष्ठकान् । करण्डकान् रत्नमयान्, चङ्गेरीर्लोमहस्तकान् ॥ ९ ॥ छत्राणि चामराण्येवं, तैलादीनां समुद्गकान् ।
सहस्रमष्टभिर्युक्तं, तथा धूपकडुच्छकान् ॥ १० ॥ एतत्सर्वं विकुर्व्याथ, सहजान् विकृतांश्च तान् । गृहीत्वा
कलशादींस्ते, निर्गत्य स्वविमानतः ॥ ११ ॥ गत्वा च पुष्करक्षीरांबुध्योः पद्महृदादिषु । गङ्गादिकास्वापगासु, तीर्थेषु
मागधादिषु ॥ १२ ॥ तत्रत्यानि पयोमृत्स्नापुष्पमाल्याम्बुजान्यथ । सहस्रशतपत्राणि, सिद्धार्थान् सकलौषधीः
॥ १३ ॥ भद्रशालसौमनसादिभ्योऽपि निखिलर्तुजान् । फलप्रसूनसिद्धार्थान्, गोशीर्षचन्दनानि च ॥ १४ ॥
समादायाथ संभूय, ते सर्वेऽप्याभियोगिकाः । विमानस्वामिनामग्रे, ढौकन्ते नतिपूर्वकम् ॥ १५ ॥ सामानिकादयः
सर्वे, ततो विमानवासिनः । देवा देव्यश्च कलशैः, स्वाभाविकैर्विकुर्वितैः ॥ १६ ॥ अभिषिञ्चन्ति तानिन्द्राभि-
षेकेण गरीयसा । पुष्पैः सर्वर्तुकैः सर्वौषधीभिरर्चयन्ति च ॥ १७ ॥ युग्मम् ॥ तेषामिन्द्राभिषेकेऽथ, वर्त्तमाने मुदा
तदा । सुराः सुगन्धाम्बुवृष्ट्या, केचित्प्रशान्तरेणुकम् ॥ १८ ॥ केचित्संमृष्टोपलिप्तशुच्यध्वापणवीथिकम् ।
मञ्चातिमञ्चभृत्केचित्, केऽपि नानोच्छ्रितध्वजम् ॥ १९ ॥ आबद्धतोरणं लम्बिपुष्पदामोच्चयं परे । द्वार्न्यस्तचन्दनघटं,
दत्तकुङ्कुमहस्तकम् ॥ २० ॥ केचित्पञ्चवर्णपुष्पोपचारचारुभूतलम् । दग्धकृष्णागुरुधूपधूमैरन्यैः सुगन्धितम् ॥ २१ ॥

५ १० १४

तत्तद्विमानं कुर्वन्ति, परे नृत्यन्ति निर्जराः । हसन्ति केचिद्गायन्ति, तूर्याणि वादयन्ति च ॥ २२ ॥ केचिद्वर्षन्ति रजतस्वर्णरत्नवराम्बरैः । वज्रैः पुष्पैर्माल्यगन्धैर्वासैश्चाभरणैः परे ॥ २३ ॥ केचिद्गर्जन्ति हेषन्ते, भूमिमास्फोटयन्ति च । सिंहनादं विदधते, विद्युद्वृष्ट्यादि कुर्वते ॥२४॥ हक्कारैरथ बूत्कारैर्वल्गनोच्छलनादिभिः । स्वाम्युत्पत्तिप्रमुदिताश्चेष्टन्ते बहुधा सुराः ॥२५॥ अष्टभिः कुलकं ॥ अभिषिच्योत्सवैरेवं, सुराः स्तुवन्ति तानिति । चिरं जीव चिरं नंद, चिरं पालय नः प्रभो ॥२६॥ विपक्षपक्षमजितं, जय दिव्येन तेजसा । जितानां सुहृदां मध्ये, तिष्ठ कष्टविवर्जितः ॥ २७ ॥ सुरेन्द्र इव देवानां, ताराणामिव चन्द्रमाः । नराणां चक्रवर्त्तीव, गरुत्मानिव पक्षिणाम् ॥ २८ ॥ विमानस्यास्य देवानां, देवीनामपि भूरिशः । पल्योपमसागरोपमानि पालय वैभवम् ॥ २९ ॥ इत्येवमभिषिक्तास्तेऽभिषेकभवनात्ततः । निर्गत्य पूर्वद्वारेण, यान्त्यलङ्कारमन्दिरम् ॥ ३० ॥ प्रदक्षिणीकृत्य पूर्वद्वारेण प्रविशन्ति तत् । सिंहासने निषीदन्ति, तत्र ते पूर्वदिग्मुखाः ॥ ३१ ॥ ततः सामानिका देवा, वस्त्रभूषासमुद्गकान् । शाश्वतान् ढौकयन्त्युद्यद्रत्नरश्मिकृताद्भुतान् ॥३२॥ ततस्ते प्रथमं चारुवस्त्ररूक्षितविग्रहाः । सुवर्णखचितं देवदूष्यं परिदधत्यथ ॥३३॥ हारमेकावलिं रत्नावलीं मुक्तावलीमपि । केयूरकटकस्फाराङ्गदकुण्डलमुद्रिकाः ॥ ३४ ॥ ततोऽलङ्कृतसर्वाङ्गा, मौलिभ्राजिष्णुमौलयः । चारुचन्दनकृताङ्गरागास्तिलकशालिनः ॥ ३५ ॥ स्रक्केशवस्त्राभरणैरलङ्कारैश्चतुर्विधैः । संपूर्णप्रतिकर्माण, उत्तिष्ठंत्यासनात्ततः ॥ ३६ ॥ अलङ्कारगृहात्पूर्वद्वारा निर्गत्य पूर्ववत् । व्यवसायसभां प्राग्द्वारेण प्रविशन्त्यमी ॥ ३७ ॥ तत्र सिंहासने स्थित्वा, सामानिकोपढौकितम् । पुस्तकं वाचयित्वाऽस्मात्, स्थितिं



२०

२५



२८

जानन्ति धार्मिकीम् ॥ ३८ ॥ सिंहासनादथोत्थाय, व्यवसायनिकेतनात् । निर्गत्य प्राग्दिशा नन्दापुष्करिण्यां विशन्ति च ॥ ३९ ॥ तत्राचान्ताः शुचीभूता, धौतहस्तक्रमाः क्रमात् । रौप्यं भृङ्गारमम्भोभिः, प्रपूर्य दधतः करे ॥ ४० ॥ नानापद्मान्युपादाय, पुष्करिण्या निरीय च । सिद्धायतनमायान्ति, सिद्धायतनवोदयाः ॥ ४१ ॥ ततस्ताननुगच्छन्ति, देवाः सामानिकादयः । देवपूजार्हपुष्पादिवस्तुसंपूर्णपाणयः ॥ ४२ ॥ अथाप्सरोगीतमिश्रातोद्यनादभृताम्बराः । महासमृद्ध्या सिद्धानां, सदने प्रविशन्ति ते ॥ ४३ ॥ देवच्छन्दकमागत्य, श्रीजिनार्चावलोकने । प्रणमय्य शिरः सुष्ठु, नमन्त्यञ्जलिपूर्वकम् ॥ ४४ ॥ ततो लोमहस्तकेन, प्रमार्ज्य श्रीमदर्हताम् । अर्चाः सुगन्धिभिर्नीरैः, स्नपयन्ति यथाविधि ॥ ४५ ॥ तत्र यद्यपि कुन्थ्वादिजन्तवो न तथाप्यसौ । प्रमार्जनादियतनापूर्विकैवार्हतक्रिया ॥ ४६ ॥ यद्वा पूर्वभवेऽभ्यस्तं, सप्रमार्जनमर्चनम् । जिनार्चानां ततोऽभ्यासादत्राप्येवं सृजन्त्यमी ॥ ४७ ॥ गोशीर्षचन्दनेनाथ, प्रत्यङ्गं पूजयन्ति ताः । प्रत्येकमासां परिधापयन्ति वस्त्रयोर्युगम् ॥ ४८ ॥ पुष्पमाल्यैर्गन्धचूर्णैर्वस्त्रैराभरणैरपि । पूजयित्वा लम्बयन्ति, पुष्पदामान्यनेकशः ॥ ४९ ॥ ततः करतलक्षिप्तैः, पञ्चवर्णैर्मणीचकैः । चित्रोपचाररुचिरं, रचयन्ति भुवस्तलम् ॥ ५० ॥ पुरतोऽथ जिनार्चानामच्छै रजततण्डुलैः । लिखित्वा मङ्गलान्यष्टौ, पूजयन्ति जगद्गुरून् ॥ ५१ ॥ ततश्चान्द्रप्रभं वज्रवैडूर्यदण्डमण्डितम् । करे कृत्वा मणिस्व-

१ बहुशस्तत्र प्रमार्जनं, विलम्ब्य चान्तरान्तरा, ततो नायं सम्यग्घेतुः सर्वेषां प्राग्भवे जिनमूर्त्तिपूजासंभवाभावाच्च, कल्पः स पूजाया इत्येव यथार्थं, २ तत्र कच्छादिवस्त्रचिह्नाभावात् युक्तमिदं, अधुना तु प्रतिमानामेव तथाविधानात् न वस्त्रपरिधापनम् ।

५ १० १२

र्णचित्रं धूपकडुच्छकम् ॥५२॥ दह्यमानकुन्दुरुष्ककृष्णागुरुतुरुष्ककैः। धूपं दत्त्वा जिनेन्द्राणां, प्रक्रमन्ते स्तुति-
क्रियाम् ॥ ५३ ॥ धूपं दत्त्वा जिनेन्द्राणामित्युक्तं यदिहागमे। साक्षाज्जिनप्रतिमयोस्तदभेदविवक्षया ॥ ५४ ॥
सत्यप्येवं न मन्यन्ते, येऽर्चामर्चां जगत्पतेः। तान् धावतो मुद्रिताक्षानानयामः कथं पथम् ? ॥ ५५ ॥ नमस्ते
समस्तप्रशस्तर्द्धिधाम्ने, क्षमाश्लेषिनम्रेन्द्रकोटीरदाम्ने। भवापारपाथोधिपारप्रदाय, प्रदायाङ्गिनां संपदां निर्मदाय
॥ ५६ ॥ भुजङ्गप्र०। इत्याद्यष्टोत्तरशतं, श्लोकानस्तोकधीधनाः। कुर्वन्त्यदोपान् प्रौढार्थकलितान् ललितान् पदैः
॥५७॥ नमस्कारैः सुधासारसारैः स्तुत्वा जिनानिति। शक्रस्तवादिकां चैत्यवन्दनां रचयन्त्यमी ॥५८॥ वन्दित्वाऽथ
नमस्कृत्य, ततः पुनरपि प्रभून्। चैत्यस्यास्य मध्यदेशं, प्रमृज्याभ्युक्ष्य चाम्बुभिः ॥ ५९ ॥ धृताकल्पं कल्पयन्त-
श्चारुचन्दनहस्तकैः। पुष्पपुञ्जोपचारेण, धूपैश्चाभ्यर्चयन्त्यमी॥ ६०॥ चैत्यस्याथ दाक्षिणात्यं, द्वारमेत्यात्र संस्थिताः।
द्वारशाखापुत्रिकाश्च, व्यालरूपाणि पूर्ववत् ॥ ६१ ॥ प्रमार्जनाभ्युक्षणाभ्यां, पुष्पमाल्यविभूषणैः। स्रग्दामभि-
श्चार्चयन्ति, धूपधूमान् किरन्ति च ॥ ६२ ॥ ततश्च दक्षिणद्वारस्योपत्ये मुखमण्डपम्। प्राग्वत्तस्य मध्यदेशे,
कुर्वन्ति हस्तकादिकम् ॥ ६३ ॥ ततश्चास्य मण्डपस्य, पूर्वद्वारेऽपि पूर्ववत्। द्वारशाखाद्यर्चयन्ति, स्तम्भांश्च दक्षि-
णोत्तरान् ॥ ६४ ॥ शेषद्वारद्वयेऽप्येवं, ततः प्रेक्षणमण्डपे। मध्यं द्वारत्रयं सिंहासनं समणिपीठिकम् ॥ ६५ ॥
निर्गत्य दक्षिणद्वारा, ततः प्रेक्षणमण्डपात्। दाक्षिणात्यं महाचैत्यस्तूपमभ्यर्चयन्ति ते ॥ ६६ ॥ तस्माच्चतुर्दिशं
यास्तु, प्रतिमाः श्रीमदर्हताम्। तासामालोके प्रणामं, कुर्वन्ति पश्चिमादितः ॥ ६७ ॥ ताः पूर्ववत्प्रपूज्याष्टौ,

पुस्तकवाचनं जिनार्चा च

१५

२०



२५

२६

मङ्गलानि प्रकल्प्य च। साष्टोत्तरशतश्लोकां, कुर्वंति चैत्यवन्दनाम् ॥ ६८ ॥ दाक्षिणात्यचैत्यवृक्षमहेन्द्रध्वजपूजनम्।
कृत्वा नन्दापुष्करिणीं, दाक्षिणात्यां व्रजन्ति ते ॥ ६९ ॥ तत्तोरणत्रिसोपानप्रतिरूपकपुत्रिकाः। व्यालरूपाण्य-
र्चयन्ति, पुष्पधूपादिकैरथ ॥ ७० ॥ चैत्यं प्रदक्षिणीकृत्योत्तराहद्वारसंस्थिताम्। नन्दापुष्करिणीमेत्य, कुर्वन्ति प्राग्व-
दर्चनम् ॥ ७१ ॥ उदीच्यान् केतुचैत्यद्रुस्तूपांस्तत्प्रतिमाः क्रमात्। उदक्प्रेक्षामण्डपं चार्चयन्ति मुखमण्डपम्
॥ ७२ ॥ ततो द्वारमौत्तराहं, प्राच्यं द्वारं ततः क्रमात्। प्राच्यान्मुखमण्डपादीन्, प्रपूजयन्ति याम्यवत् ॥ ७३ ॥
ततः सभां सुधर्मां ते, प्रविश्य पूर्वया दिशा। यत्र माणवकश्चैत्यस्तम्भस्तत्राभ्युपेत्य च ॥ ७४ ॥ आलोके तीर्थकृ-
त्सक्थनां, प्रणता लोमहस्तकैः। प्रमार्जितादाददते, तानि वज्रसमुद्गकात् ॥ ७५ ॥ ततो लोमहस्तकेन, प्रमृज्यो-
दकधारया। प्रक्षाल्याभ्यर्च्य पुष्पाद्यैर्निक्षिपन्ति समुद्गके ॥ ७६ ॥ समुद्गकं यथास्थानमवलम्ब्यार्चयन्ति च।
पुष्पमाल्यगन्धवस्त्रैश्चैत्यस्तम्भं ततोऽत्र च ॥ ७७ ॥ कृत्वा सिंहासनस्यार्चां, मणिपीठिकया सह। क्षुल्लकेन्द्रध्व-
जस्यार्चां, कुर्वते ते सुमादिभिः ॥ ७८ ॥ कोशं प्रहरणस्याथ, समेत्य संप्रमृज्य च। खड्गादीनि प्रहरणान्यभ्य-
र्चयन्ति पूर्ववत् ॥ ७९ ॥ सुधर्मामध्यदेशेऽथ, प्रकल्प्य हस्तकादिकम्। देवशय्यां पूजयन्ति, मणिपीठिकया सह
॥ ८० ॥ ततश्चैते सुधर्मातो, निर्यान्तो याम्यया दिशा। सिद्धायतनवद् द्वारत्रयमर्चन्ति पूर्ववत् ॥ ८१ ॥ एवं
ह्रदं सभाश्चान्याः, स्वस्वोपस्करसंयुताः। व्यवसायसभां चान्ते, पूजयित्वा सपुस्तकाम् ॥ ८२ ॥ व्यवसायस-
भावर्त्तिप्राच्यपुष्करिणीतटात्। कुर्वते बलिपीठे ते, गत्वा बलिविसर्जनम् ॥ ८३ ॥ स्वीयस्वीयविमानानां,

शृङ्गाटकत्रिकादिषु । उद्यानादौ चार्चनिकां, कारयन्त्याभियोगिकैः ॥ ८४ ॥ अथैवं कृतकृत्यास्ते, ऐशानकोणसंस्थिताम् । नन्दापुष्करिणीमेत्य, तस्याः कृत्वा प्रदक्षिणाम् ॥ ८५ ॥ प्रक्षाल्य हस्तपादादि, विलसन्ति यथारुचि । सभां सुधर्मामेत्य प्राग्मुखाः सिंहासने स्थिताः ॥ ८६ ॥ एवमत्रामुत्र लोके, हितावहं जिनार्चनम् । इति तत्रालोकमात्रात्प्रणमन्ति पुनः पुनः ॥ ८७ ॥ न नमन्ति न वा तानि स्तुवन्ति च मनागपि । लोकस्थित्या धर्मबुद्ध्या, कृतयोर्यन्तरं महत् ॥ ८८ ॥ स्तुवन्ति नव्यैः काव्यैश्च, तथा शक्रस्तवादिभिः । शेषाणि तु स्थितिकृते, पूजयन्ति सुमादिभिः ॥ ८९ ॥ सत्यप्येवं स्थितिमेव, ये वदन्ति जिनार्चनम् । कथं ते लुप्तनयना, बोध्या रैताभ्रयोर्भिदाम् ॥ ९० ॥ राजप्रश्नीयसूत्रे यत्सूर्याभस्य सुपर्वणः । विमानवर्णनं तस्योत्पत्तिरीतिश्च दर्शिता ॥ ९१ ॥ मया तदनुसारेण, वैमानिकसुपर्वणाम् । विमानवर्णनोत्पत्ती, सामान्यतो निरूपिते ॥ ९२ ॥ विशेषमुक्तशेषं तु, जानन्त्यशेषवेदिनः । गीतार्था निहतानर्था, यद्वा तद्वाक्यपारगाः ॥ ९३ ॥ देव्यो देवाः परेऽप्येवं, तत्तद्विमानवासिनः । जायन्ते स्वस्वशय्यायां, स्वस्वपुण्यानुसारतः ॥ ९४ ॥





येयमुक्ता विमानानां, स्थितिस्तत्स्वामिनामपि । अच्युतस्वर्गपर्यन्तं, सा सर्वाऽप्यनुवर्त्तते ॥ ९५ ॥ परतस्त्वहमिन्द्राणां, न स्वामिसेवकादिका । स्थितिः काचित्सुमनसां, कल्पातीता हि ते यतः ॥ ९६ ॥ ते प्राग्जन्मोपात्तशस्तनामकर्मानुभावतः । न्यक्षसल्लक्षणोपेतसर्वाङ्गोपाङ्गशोभिताः ॥ ९७ ॥ जात्यस्वर्णवर्णदेहा, आद्यसंस्थानसंस्थिताः । अत्यन्तसुन्दराकाराः, सारपुद्गलयोनयः॥ ॥ ९८ ॥ असृग्मांसवसामेदःपुरीषमूत्रचर्मभिः ।

अत्रास्थिश्मश्रुनखररोमोद्गमैश्च वर्जिताः ॥९९॥ कुन्देन्दुश्वेतदशनाः, प्रवालजित्वराधराः । घनाञ्जनश्यामकेश-
पाशपेशलमौलयः ॥१००॥ तथोक्तमौपपातिके–"पंडुरससिसकलविमलनिम्मलसंखगोखीरफेणदगरयमुणालिया-
धवलदंतसेढी, तथा–अंजणघणकसिणणिद्धरमणीयणिद्धकेसा" इत्यादि, संग्रहण्यां तु 'केसट्ठिमंसुनहरोमरहिया'
इत्युक्तमिति ज्ञेयं। अत्यन्तस्वच्छवपुषः, सुगन्धिमुखमारुताः । अप्रस्वेदा रजोलेपोज्झिताः जात्यसुवर्णवत् ॥४००॥
सर्वोत्कृष्टवर्णगन्धरसस्पर्शादिशोभनाः । सौभाग्यादिगुणग्रामाभिरामोद्दामविग्रहाः ॥ १ ॥ मृगकासररूपादि-
चिह्नश्रीभरभूषितम् । नूतनरत्नमुकुटं, दधते मूर्ध्नि बन्धुरम् ॥ २॥ तथा च प्रज्ञापनासूत्रे—"ते णं मिग १ महिस-
२ वराह ३ सीह ४ छगल ५ दद्दुर ६ हय ७ गयवइ ८ भुयग ९ खग्ग १० उसभंक ११ विडिम १२ पायडिय-
चिंधमउडा" इति, अत्र ते इति सौधर्माद्योऽच्युतान्ताः क्रमेण देवाः, खड्गो–गण्डकनामा आटव्यश्चतुष्पद-
विशेषः, यदाह शाश्वतः–'खड्गो गण्डकशृंगासिबुद्धभेदेषु गण्डके" इति, विडिमस्तु मृगविशेषो लक्ष्यते, तथा
च देशीशास्त्रं—'विडिमो सिसुमयगंडेसु' औपपातिके त्वेवं चिह्नविभागो दृश्यते–सोहम्म १ ईसाण २ सणं-
कुमार ३ माहिंद ४ बंभ ५ लंतग ६ महासुक्क ७ सहस्सार ८ आणयपाणय ९ आरणअच्चुय १० वई पालय १-
पुप्फय २ सोमणस ३ सिरिवच्छ ४ नंदियावत्त ५ कामगम ६ पीइगम ७ मणोरम ८ विमल ९ सव्वओभद्द १०-
नामधिज्जेहिं विमाणेहिं ओइन्ना वंदगा जिणंदं मिग १ महिस २ वराह ३ छगल ४ दद्दुर ५ हय ६ गयवई ७ भुयग-

१ औपपातिके आगतसुराणामुत्तरवैक्रियवर्णनं संग्रहण्यां तु स्वाभाविकस्थितेरिति न भिन्नता ।

८ खग्ग ९ उसभं १० कविडिमपायडियचिंधमउडा" इति, अत्र मृगादयोऽङ्का–लाञ्छनानि विटपेषु–विस्तारेषु येषां मुकुटानां तानि तथा, तानि प्रकटितचिह्नानि रत्नादिदीप्त्या प्रकाशितमृगादिलाञ्छनानि मुकुटानि येषां ते तथा इति, तत्त्वं तु सर्वविदो विदन्ति॥ विवक्षवस्त्वमी अर्द्धमागध्या रम्यवर्णया। भाषन्ते चतुरस्वान्तचमत्कारकिरा गिरा ॥४॥ तथाहुः—'गो०! देवाणं अद्धमागहाए भासाए भासंति' भगवतीपञ्चमशतकचतुर्थोद्देशके। लोके तु 'संस्कृतं स्वर्गिणां भाषे[3]त्यादि। प्रत्येकमङ्गोपाङ्गेषु, रत्नाभरणभासुराः। अस्पृष्टकासश्वासादिविविधव्याधिवेदनाः ॥ ५ ॥ पुण्यनैपुण्यलावण्याः, सदावस्थायियौवनाः। अभङ्गकामरागार्द्रा, दिव्याङ्गनाकटाक्षिताः ॥ ६ ॥ दिव्याङ्गरागसुरभीकृतसर्वाङ्गशोभनाः। कामकेलिकलाभ्यासविलासहासवेदिनः ॥ ७ ॥ स्वभावतो निर्निमेषविशेषललितेक्षणाः। अम्लानपुष्पदामानः, स्वैरं गगनगामिनः ॥ ८ ॥ मनश्चिन्तितमात्रेण, सर्वाभीष्टार्थसाधकाः। वचनातिगसामर्थ्यान्निग्रहानुग्रहक्षमाः ॥ ९ ॥ प्रयोजनविशेषेण, प्राप्ता अपि भुवस्तलम्। तिष्ठन्ति

१ आद्ये पक्षे चिह्नानि द्वादश अन्त्ये दशेति भेदः, परं आद्ये 'उसभंक' इत्यत्रैवांकशब्ददर्शनात् विडिमस्याङ्कार्थताऽयोग्या, न च द्वादश वैमानिकानामिन्द्रा इति 'सिंह' शब्दोऽपपाठः २ अर्धमागधी भाषा अष्टादशदेश्यभाषामिश्रेति आबालगोपाङ्गनं बोद्धुं शक्या सर्वविषयवासिनां च पूर्वसंगतिकानां सुबोधा, प्रत्नदेशभाषापि शिलादिपुल्लिखिता दृश्यते, भाष्यकृद्भिरपि नानादेशीया भाषास्तथाविधा एव दर्शिताः, ३ कस्यांचिद् भाषायां संस्कारकरणात् संस्कृतत्वं, तेन नेयं मूलभाषा भवितुमर्हति, प्राकृता तु स्वाभाविकी, प्रकृतिः संस्कृतं, तत्र भवं प्राकृतमिति तु संस्कृतभवतयाऽभिप्रेतायाः लक्षणाख्यानं, व्याकरणसूत्रापेक्षया वैतत्, यत आख्यायते तत्र 'शेषं संस्कृतवदिति।

ते व्यवहिताश्चतुर्भिरङ्गुलैर्भुवः ॥ १० ॥ वायूत्तरेशानदिक्षु, सेव्याः सामानिकैः सुरैः । अग्नियाम्यानैर्ऋतीषु, पर्षद्भिस्तिसृभिर्युताः ॥ ११ ॥ पुरोऽग्रमहिषीभिश्च, पृष्ठतोऽनीकनायकैः । सेव्याः समन्ताद्विविधायुधाढ्यैश्चात्मरक्षकैः ॥ १२ ॥ सुखरैर्दिव्यगन्धर्वैर्गीतासु पदपङ्क्तिषु । दत्तोपयोगाः सत्तालमूर्छनाग्रामचारुषु ॥ १३ ॥ अप्सरोभिः प्रयुक्तेषु, नाट्येषु दत्तचक्षुषः । अज्ञातानेहसः सौख्यैः, समयं गमयन्त्यमी ॥ १४ ॥ एकादशभिः कुलकं । कामलीलाभिलाषे तु, विसृज्य देवपर्षदम् । सुधर्मायाः सभायाश्च, निर्गत्यान्तःपुरैः सह ॥ १५ ॥ गत्वोक्तरूपप्रासादोद्यानादिष्वास्पदेषु ते । मनोऽनुकूलाः सर्वाङ्गसुभगा दिव्यकामिनीः ॥ १६ ॥ रम्यालङ्कारनेपथ्या, रूपयौवनशालिनीः । कटाक्षविशिखैर्नर्मोक्तिभिर्द्विगुणितस्पृहाः ॥ १७ ॥ भर्तृचित्तानुसारेणानेकरूपाणि कुर्वतीः । प्रतिरूपैः स्वयमपि, प्रेमतो बहुभिः कृतैः ॥ १८ ॥ हठात्प्रत्यङ्गमालिङ्ग्य, वक्त्रमुन्नम्य चुम्बनैः । ससीत्कारं सुधाधारमधुराधरखण्डनैः ॥ १९ ॥ निःशङ्कमङ्कमारोप्य, निर्दयं स्तनमर्दनैः । मज्जन्तो मैथुनरसे, मनुष्यमिथुनादिवत् ॥ २० ॥ इत्थं सर्वाङ्गीणकायक्लेशोत्थां स्पर्शनिर्वृतिम् । आसादयन्तस्तृप्यन्ति, क्लिष्टपुंवेदवेदनाः ॥ २१ ॥ सप्तभिः कुलकं ॥ रतामृतास्वादलोलाः, कदाचिन्मदनोन्मदाः । मुग्धावत्कम्पनैर्भीतिरुतैर्दूरापसर्पणैः ॥ २२ ॥ कदाचिच्चारुमध्यावल्लज्जाललितचेष्टितैः । कदाचित्प्रौढमहिला, इव वैयात्यवल्गितैः ॥ २३ ॥ कदाचिद्रोषतोषार्द्रैः, परुषैः पुरुषायितैः । प्रत्याश्लेषप्रतिवचःप्रतिचुम्बनवल्गनैः ॥ २४ ॥ पारापतादिशब्दैश्च, द्विगुणामुन्मुदिष्णुताम् । जनयन्त्यश्चिरं भर्तुर्देव्योऽपि सुरतोत्सवैः ॥ २५ ॥ शुक्रस्य वैक्रियस्याङ्गे, संचाराद-

खिले सुखम् । आसादयन्त्यस्तृप्यन्ति, क्लिष्टस्त्रीवेदवेदनाः ॥ २६ ॥ पञ्चभिः कुलकं ॥ ते शुक्रपुद्गला भुज्यमानदिव्यमृगीदृशाम् । चक्षुःश्रोत्रघ्राणजिह्वात्वगिन्द्रियतयाऽसकृत् ॥ २७ ॥ द्रुतं परिणमन्त्येते, रूपलावण्यवैभवम् । परभागं प्रापयन्ति, सौभाग्यं यौवनं तथा ॥ २८ ॥ तथा च प्रज्ञापना—"अत्थि णं भंते ! तेसिं देवाणं सुक्कपुग्गला ?, हंता, ते णं भंते ! तासिं अच्छराणं कीसत्ताए भुज्जो भुज्जो परिणमंति ? गो० ! सोइंदियत्ताए जाव फासिंदियत्ताए इट्ठत्ताए कंतत्ताए मणुन्नत्ताए मणामत्ताए सुभत्ताए सोहग्गरूवजोव्वणगुणलावणत्ताए एयासिं भुज्जो भुज्जो परिणमंति" एवं केचित्सुरास्तीव्रमदनोन्मत्तचेतसः । स्वनायिकोपभोगेनातृप्ताः कृतापराशयाः ॥ २९ ॥ वर्यचातुर्यसौन्दर्यपुण्याः पण्याङ्गना इव । निजानुरक्ता अपरिगृहीता भुञ्जते सुधीः ॥ ३० ॥ तथा ह्युन्मत्तता द्वेधा, देवानामपि वर्णिता । एका यक्षावेशभवा, मोहनीयोदयात् परा ॥३१॥ अल्पर्द्धिकं तत्र देवं, रुष्टो देवो महर्द्धिकः । दुष्टपुद्गलनिक्षेपात्, कुर्यात् परवशं क्षणात् ॥३२॥ ततश्च ग्रहिलात्माऽसौ, यथा तथा विचेष्टते । द्वितीया द्विविधा तत्र, मिथ्यात्वात्प्रथमा भवेत् ॥ ३३ ॥ अतत्त्वं मन्यते तत्त्वं, तत्त्वं चातत्त्वमेतया । चारित्रमोहनीयोत्था, परा तयाऽपि चेष्टते ॥ ३४ ॥ भूताविष्ट इवोत्कृष्टमन्मथादिव्यथार्दितः । यक्षावेशोत्था सुमोचा, दुर्मोचा मोहनीयजा ॥ ३५ ॥ तथाहुः—"असुरकुमाराणं भंते ! कइविहे उम्माए प० ?, गो० दुविहे प०, एवं जहेव णेरतियाणं, णवरं देवे वा से महिड्ढियतराए असुभे पुग्गले पक्खिवेज्जा, से णं तेसिं असुभाणं पुग्गलाणं पक्खिवणत्ताए जक्खाएसं उम्मायं पाउणिज्जा, मोहणिज्जस्स वा, सेसं तं चेव,

वाणमंतरजोतिसवेमाणियाणं जहा असुरकुमाराणं," भगवतीसूत्रे। पश्यतैवं शक्तियुक्ता, विवेकिनोऽपि
नाकिनः। हन्तानेन विडम्ब्यन्ते, सत्यं सर्वङ्कषः स्मरः ॥ ३६ ॥ योऽखर्वयत्सर्वगर्वसर्वस्वमौर्वदुर्वहः। किमपूर्व-
मखर्वोऽयं, निर्वपुर्यत्सुपर्वजित् ॥ ३७ ॥ भवनव्यन्तरज्योतिष्काद्यकल्पद्वयावधि। विडम्बनैवं कामस्य, ज्ञेया
नातः परं तथा ॥ ३८ ॥ अथो यथोक्तकालेन, यद्याहारार्थिनः सुराः। तदा संकल्पमात्रेणोपस्थिताः सारपुद्गलाः
॥ ३९ ॥ सर्वगात्रेन्द्रियाह्लादप्रदाः परिणमन्ति हि। सर्वाङ्गमाहारतया, शुभकर्मानुभावतः ॥ ४० ॥ प्राप्नुवन्तः
परां तृप्तिमाहारेणामुना सुराः। विन्दते परमानन्दं, स्वादीयोभोजनादिव ॥ ४१ ॥ अत एवाभिधीयन्ते, ते
मनोभक्षिणः सुराः। प्रज्ञापनादिसूत्रेषु, पूर्वर्षिसंप्रदायतः ॥ ४२ ॥ तथाहुः—"मणोभक्खिणो ते देवगणा
पण्णत्ता समणाउसो !"। आहार्यपुद्गलांस्तांश्च, विशुद्धावधिलोचनाः। अनुत्तरसुरा एव, पश्यन्ति न पुनः परे
॥ ४३ ॥ सहस्राणि दशाब्दानां, येषामायुर्जघन्यतः। भवनेशव्यन्तरास्तेऽहोरात्रसमतिक्रमे ॥ ४४ ॥ इच्छन्ति
पुनराहारं, तथा स्तोकैश्च सप्तभिः। उच्छ्वसन्ति शेषकाले, नोच्छ्वासो न मनोऽशनम् ॥ ४५ ॥ दशभ्योऽब्द-
सहस्रेभ्यो, वर्द्धमानैः क्षणादिभिः। किंचिदूनसागरान्तं, यावद्येषां स्थितिर्भवेत् ॥ ४६ ॥ तेषां दिनपृथक्त्वैः
स्याद्वृद्धिभाग् भोजनान्तरम्। मुहूर्त्तानां पृथक्त्वैश्च, श्वासोच्छ्वासान्तरं क्रमात् ॥ ४७ ॥ पृथक्त्वं तु द्विप्रभृति-
नवपर्यन्तमुच्यते। पूर्णाम्भोधिस्थितीनां तु, ततः सागरसंख्यया ॥ ४८ ॥ आहारोऽब्दसहस्रैः स्यात्पक्षैरुच्छ्वास
एव च। एवं च स्वर्गयोराद्यद्वितीययोः सुधाभुजः ॥ ४९ ॥ जघन्यजीविनो घस्रपृथक्त्वेनैव भुञ्जते। मुहूर्त्तानां

पृथक्त्वेन, श्वासोच्छ्वासं च कुर्वते ॥ ५० ॥ द्वाभ्यां वर्षसहस्राभ्यामश्नन्त्युत्कृष्टजीविनः । मासेन चोच्छ्वसन्त्येवं, भाव्या मध्यमजीविनः ॥ ५१ ॥ एवमेते कृताहाराः, पुनरप्यप्सरोजनैः । उपक्रान्ते नाटकादौ, प्रवर्त्तयन्ति मानसम् ॥ ५२ ॥ कदाचिच्च जलक्रीडां, कदाचिन्मज्जनक्रियाम् । कदाचिच्च सुहृद्गोष्ठीसुखान्यनुभवन्त्यमी ॥ ५३ ॥ कदाचिद्यान्ति सुहृदां, वेश्मसु प्रेमनिर्भराः । तेऽपि तानुपसर्पन्ति, कृत्वाऽभ्युत्थानमादरात् ॥ ५४ ॥ आसनं ददते हस्ते, धृत्वोपवेशयन्ति च । योजिताञ्जलयः सत्कारयन्त्यम्बरभूषणैः ॥ ५५ ॥ एवमागच्छतां प्रत्युद्गमनं पर्युपासनम् । स्थितानां गच्छतां चानुगमनं रचयन्त्यमी ॥ ५६ ॥ तथोक्तं—"अत्थि णं भंते ! असुरकुमाराणं सक्कारेति वा जाव पडिसंसाहणया ?, जाव वेमाणियाणं" ततो विनीतैस्तैर्मित्रदेवैः सह कदाचन । तेषामेव विमानेषु, क्रीडन्तः सुखमासते ॥ ५७ ॥ एकैकस्मिन्नाट्यकामक्रीडागोष्ठ्यादिशर्मणि । यात्यविज्ञात एवाशु, कालो भूयान्निमेषवत् ॥ ५८ ॥ तथाह त्रुटितगाथा—"दो वाससहस्साइं उड्ढं अमराण होइ विसयसुहं । पणसयपणसयहीणं जोइसवणभवणवासीणं ॥ ५९ ॥" एवं तत्तन्निधुवनसंगीतप्रेक्षणादिभिः । सदाप्यसंपूर्णकार्या, न तेऽत्रागन्तुमीशते ॥ ६० ॥ किंच—तत्तद्विमानाभरणदेवाङ्गनादिवस्तुषु । संक्रान्तनव्यप्रेमाणो, नैतेऽत्रागन्तुमीशते ॥ ६१ ॥ कदाचिदुत्सहन्ते चेत्पूर्वजन्मोपकारिणः । मातापितृस्निग्धबन्धुगुरुशिष्यप्रियाङ्गजान् ॥ ६२ ॥ द्रष्टुं दर्शयितुं स्वीयदिव्यसंपत्तिवैभवम् । तदागत्यार्गलायन्तेऽनर्गलाः स्वर्गयोषितः ॥ ६३ ॥ किमेतदाद्यकवले, मक्षिकापतनोपमम् । आरब्धं क्षणमप्येकं, त्वां विना प्राणिमः कथम् ? ॥ ६४ ॥

देवानां उच्छ्वासाहारौ अनागमनं च

२०

२५

॥३२५॥

२८

अद्यापि तादृशः स्नेहस्तासु पूर्वप्रियासु चेत् । तदाऽस्मान् कृत्रिमप्रेम्णा, कदर्थयसि नाथ किम् ? ॥ ६५ ॥ अथ यास्यथ तत्राद्यमिदमादिममङ्गलं । दृष्ट्वा यथेच्छं गच्छन्तु, किं रुध्याः करिणः करैः ? ॥ ६६ ॥ इत्यादिप्रेमसंदर्भगर्भितैस्तद्वचोगुणैः । नियन्त्रितास्तद्दाक्षिण्यात्, तत्रैते ददते मनः ॥ ६७ ॥ तत्ताण्डवसमास्या तु, पूर्वसंबन्धिनां नृणाम् । भवा भवन्ति भूयांसः, प्रायः स्वल्पायुषामिह ॥ ६८ ॥ किंच प्राग्भवबन्धूनां, तादृक्पुण्याद्यभावतः । नागन्तुमीशते तेऽत्राषाढाचार्याद्यशिष्यवत् ॥ ६९ ॥ तथोक्तं स्थानाङ्गे—"तिहिं ठाणेहिं अहुणोववन्ने देवे देवलो- ५
गेसु इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तए, णो चेव णं संचाएति हव्वमागच्छित्तए, अहुणोववन्ने देवे देवलोए दिव्वेसु कामभोएसु मुच्छिए गिद्धे गढिए अज्झोववण्णे, से णं माणुस्सए कामभोए नो आढाति नो परि० नो अट्ठं बंधइ नो नियाणं पक० नो ठितिपगप्पं क० १ अहुणोववन्ने देवे देवलोएसु दिव्वेसु कामभोएसु मुच्छिए गिद्धे गढिए अज्झोववन्ने० तस्स णं माणुस्सए पेम्मे वोच्छिन्ने भवइ, दिव्वे पेम्मे संकंते भवइ २ अहुणोववन्ने देवे देवलोएसु दिव्वेसु कामभोगेसु मुच्छिए जाव अज्झो० तस्स णं एवं भवइ इयणिंह गच्छं, मुहुत्ता गच्छं, तेणं कालेणं अप्पा- १०
उया मणुया कालधम्मुणा संजुत्ता भवंति ३" इत्यादि । तथाऽस्य नरलोकस्य, दुर्गन्धोऽपि प्रसर्पति । नानामृतकविण्मूत्राद्यशुचिप्रभवो महान् ॥ ७० ॥ तत्राप्यजितदेवादिकालेऽतिप्रचुरा नराः । तथा भवन्ति तिर्यञ्चः, क्षेत्रेषु निखिलेष्वपि ॥ ७१ ॥ तदा मूत्रपुरीषादिबाहुल्यात्पूतिपुद्गलाः । ऊर्ध्वं यान्तो वासयन्ति, पुद्गलानपरापरान् ॥७२॥ योजनानां शतान्येवं, पञ्च यावत्परैः परैः । दूष्यन्ते पुद्गला जीवा, इवोत्सूत्रप्ररूपकैः ॥७३॥ यदा तु नर- १४

तिर्यञ्चो, नरक्षेत्रे स्युरल्पकाः । तदा पूतिपुद्गलानामल्पत्वादूर्ध्वगामिनाम् ॥ ७४ ॥ चतुःशतीं योजनानां, यावत्तैरपरापरैः । व्रजद्भिरूर्ध्वं भाव्यन्ते, प्रोक्तयुक्त्यैव पुद्गलाः ॥ ७५ ॥ एवं परं योजनेभ्यो, नवभ्यो गन्धपुद्गलाः । कथं स्युर्घ्राणविषया, नैषा शङ्काऽपि संभवेत् ॥ ७६ ॥ उक्तं च—"चत्तारि पंच जोअणसयाइं गंधो य मणुअलोअस्स । उड्ढं वचइ जेणं नहु देवा तेण आवंति ॥ १ ॥" उपदेशमालाकर्णिकायां तु—"ऊर्ध्वंगत्या शतान्यष्टौ, सहस्रमपि कर्हिचित् । मर्त्यानां याति दुर्गन्धस्तेनेहायान्ति नामराः ॥ १[1] ॥" इत्युक्तमिति ज्ञेयं तथा च-मलमूत्रश्लेष्मपूर्णे, मक्षिकाकोटिसंकटे । समन्ततोऽतिचपलकृमिकीटशतावटे ॥ ७७ ॥ पुरीषसदने स्थित्वा, मित्रकल्पेन केनचित् । एहि मित्र! क्षणं तिष्ठ, किञ्चिद्वच्मीत्यनेकशः ॥ ७८ ॥ आहूयेत जनः कश्चित्, सद्यःस्नातः कृताशनः । कृतचन्दनकर्पूरकस्तूर्यादिविलेपनः ॥ ७९ ॥ जानन्नपि स तत्रेष्टं, यथा गन्तुं न शक्नुयात् । तद्दुर्गन्धपराभूतिसंकोचितविकूणिकः ॥ ८० ॥ तथा भूयः स्मरन्तोऽपि, नृक्षेत्रे पूर्वबान्धवान् । दुर्गन्धाभिभवादत्र, न तेऽभ्यागन्तुमीशते ॥ ८१ ॥ पञ्चभिः कुलकं ॥ सत्यप्येवमतिप्रौढपुण्यप्राग्भारशालिनाम् । श्रीमतामर्हतां तेषु, कल्याणकेषु पञ्चसु ॥ ८२ ॥ मारुताश्वत्थपर्णाभकर्णकम्प्रनिजासनाः । स्वश्रद्धातिशयात्केचिद्देवेन्द्रशासनात्परे ॥ ८३ ॥ मित्रानुवर्त्तनात्केचित्पत्नीप्रेरणया परे । स्थितिहेतोः परे देवदेवीसंपातकौतुकात् ॥ ८४ ॥ क्षणादेवातिदुर्गन्धमपि लोकं नृणामिमम् । अर्हत्पुण्यगुणाकृष्टा, इवायान्त्युत्सुकाः स्वयम् ॥ ८५ ॥

१ अधोलौकिकमध्यमग्रामापेक्षया तथाविधोपद्रवप्रचुरकालापेक्षया वाऽपवाद[illegible]तत् स्यात् ।

त्रिभिर्विशेषकं ॥ महात्मनां महर्षीणां, यद्वोत्कृष्टतपस्विनाम् । माहात्म्यमुद्भावयितुमिहायान्ति सुधाभुजः
॥ ८६ ॥ अश्रद्दधाना यदिवा, साधुश्राद्धादिसद्गुणान् । सम्यग्दृग्वर्णितांस्तेऽत्रायान्ति तांस्तान् परीक्षितुम्
॥ ८७ ॥ यद्वा तादृक्पुण्यशालिशालिभद्रादिवद्भृशम् । पुत्रादीनां प्रेमधाम्नां, स्नेहोद्रेकैर्वशीकृताः ॥ ८८ ॥
गोभद्रादिवदागत्य, नित्यं नवनवैरिह । दिव्यभोगसंविभागैः, स्नेहं संफलयन्ति ते ॥ ८९ ॥ यद्वा प्रागुक्तवच-
नस्मरणाद्विस्मृतादराः । स्वान् बोधयितुमायान्त्याषाढाचार्यान्त्यशिष्यवत् ॥ ९० ॥ एवं पूर्वभवस्नेहकार्मणेन
वशीकृताः । नरकेष्वपि गच्छन्ति, केचिद्वैमानिकामराः ॥९१॥ तथाहि द्वारकादग्धभङ्गे जराङ्गजेषुणा । मृत्वाऽ-
न्तिमो वासुदेवस्तृतीयं नरकं गतः ॥ ९२ ॥ रामोऽथ मोहात् षण्मासान्, व्यूढभ्रातृकलेवरः । शिलातलाम्भो-
जवापादिभिर्देवेन बोधितः ॥ ९३ ॥ भ्रातुर्देहस्य संस्कारं, कृत्वा संवेगमागतः । प्रव्रज्य नेमिप्रहितचारण-
श्रमणान्तिके ॥ ९४ ॥ पारणाय व्रजन् क्वापि, स्वरूपव्यग्रया स्त्रिया । दृष्ट्वा घटभ्रमात्कूपे, क्षिप्यमाणं निजाङ्ग-
जम् ॥ ९५ ॥ वन एव मया स्थेयमित्यभिग्रहवान्मुनिः । तुङ्गिकाद्रौ तपः कुर्वन्, वन्यसत्त्वान्निबोधयन् ॥ ९६ ॥
दत्ताहारो रथकृता, हरिणेनानुमोदितः । तरुशाखाहतस्ताभ्यां, सह ब्रह्मसुरोऽभवत् ॥ ९७ ॥ पञ्चभिः कुलकं ॥
बलदेवसुरः सोऽथ, प्रयुक्तावधिलोचनः । भ्रातरं नरके दृष्ट्वोत्सुकस्तत्र द्रुतं गतः ॥ ९८ ॥ तमुद्दिधीर्षुर्नरकाद्वो-
चत् केशवः सुरम् । भ्रातरेवं भृशं पीड्ये, सूतपातं पतत्तनुः ॥ ९९ ॥ मया कृतानि कर्माणि, भोक्तव्यानि
मयैव हि । वचः किमन्यथा तत्स्याद्यन्नेमिस्वामिनोदितम् ॥ ५०० ॥

गच्छ बन्धो! ततस्तुभ्यं, भद्रं स्तात्कर्हिचित्स्मरेः। प्रथयेर्महिमानं नो, दुर्यशो यन्निवर्त्तते ॥ १ ॥ ततः स बान्धवप्रेम्णा, विमाने श्रीधरं हरिम्। पीताम्बरं चक्रपाणिं, विकृत्य हलभृद्युतम् ॥ २ ॥ द्वारिकेयमनेनैव, कृताऽनेनैव संहृता। कर्त्तुं हर्त्तुं हरिरेव, क्षमोऽसौ जगदीश्वरः ॥ ३ ॥ तस्माद्भुक्तिं च मुक्तिं च, प्रेप्सुभिः सेव्यतामयम्। आगत्य भरतक्षेत्रे, सर्वत्रेत्युदघोषयत् ॥ ४ ॥ एवं सर्वत्र विस्तार्य, महिमानं महीतले। यथास्थानं सुरोऽयासीभ्रातृदुःखेन दुःखितः ॥ ५ ॥ इत्थमेव च सीताया, जीवोऽच्युतसुरेश्वरः। गत्वाऽऽशु देवरप्रेम्णा, चतुर्थीं नरकावनीम् ॥ ६ ॥ युद्ध्यमानौ मिथः पूर्ववैराल्लक्ष्मणरावणौ। युद्धाद्व्यवर्त्तयद्धर्मवचनैः प्रतिबोधयन् ॥ ७ ॥ पञ्चमाङ्गेऽपि सप्तम्या, अधस्तादेवकर्तृकम्। ऊचेऽब्दवर्षणादीनि, तत्राप्येषां गतिः स्मृता ॥ ८ ॥ तथाहुः—"अत्थि णं भंते! इमीसे रयणप्पहाए अहे उराला बलाहया संसेयंति संमुच्छंति वासं वासंति, ? हंता अत्थि, तिन्निवि पकरेंति देवोऽवि असुरोऽवि नागोऽवि, एवं दोच्चाए पुढवीए भाणियव्वं, एवं तच्चाए पुढवीए भा०, नवरं देवोऽवि प०, असुरोवि प०, नो नागो, एवं चउत्थीएवि, नवरं देवो एक्को प०, नो असु० नो नाओ, एवं हेट्ठिल्लासु सव्वासु देवो एक्को प०, नो नाओत्ति, नागकुमारस्य तृतीयपृथिव्या अधोगमनं नास्तीत्यत एवानुमीयते 'नो असुरो नो नाओ'त्ति इहाप्यत एव वचनाच्चतुर्थ्यादीनामधोऽसुरकुमारनागकुमारयोर्गमनं नास्तीत्यनुमीयते" भगवतीसूत्रवृत्तौ षष्ठशतकसप्तमोद्देशके, तत्त्वार्थवृत्तौ तु "येषां द्वे सागरोपमे जघन्या स्थितिस्ते किल देवाः सप्तमधरां प्रयान्ति, ते च सनत्कुमारकल्पात्प्रभृति लभ्यन्ते, शक्तिमात्रं चैतद्वर्ण्यते, न पुनः कदाचिदप्यगमन्, तिर्यगसंख्येयानि योजन-

देवानां नरके गतिः

२०

२५

॥३२७॥

२८

कोटीनां कोटिसहस्राणि, 'ततः पर'मित्यादि, सागरोपमद्वयादधो जघन्या स्थितिर्येषां न्यूना न्यूनतमा चेति,
ते चैकैकहीनां भुवमनुप्राप्नुवन्ति यावत्तृतीया पृथिवी, तां च तृतीयां पूर्वसंगतिकाद्यर्थं गता गमिष्यन्ति,
परतस्तु सत्यामपि शक्तौ न गतपूर्वा नापि गमिष्यन्ति औदासीन्यात्–माध्यस्थ्याद्, उपर्युपरि न गतिरतयो
देवा जिनाभिवन्दनादीन् मुक्त्वे"ति, पञ्चसंग्रहे तु—"सहसारंतिअदेवा नारयनेहेण जंति तइयभुवं ।
निज्जंति अच्चुअं जा अच्चुअदेवेण इयरसुरा ॥ १ ॥ एतट्टीकायामपि श्रीमलयगिरिविरचितायां—आनतादयो ५
देवाः पुनरल्पस्नेहादिभावात् स्नेहादिप्रयोजनेनापि नरकं न गच्छंतीति सहस्रारांतग्रहण"मिति । एवं मित्रा-
दिसाहाय्यादिनोर्ध्वं यावदच्युतम् । यान्त्यायान्ति च कल्पस्थाः, परतस्तु न जातुचित् ॥ ९ ॥ केचित्स्वल्प-
र्द्धिका देवा, यावच्चत्वारि पञ्च वा । देवावासानतिक्रम्य, स्वशक्त्या परतस्ततः ॥१०॥ गन्तुं न शक्नुव-
न्त्यन्यसाहाय्यात् शक्नुवन्त्यपि । महर्द्धिकानां मध्येऽपि, नैवामी गन्तुमीशते ॥ ११ ॥ अल्पर्द्धिकानां मध्ये तु,
सुखं यान्ति महर्द्धिकाः । समर्द्धिकानां मध्ये चेद्यियासन्ति समर्द्धिकाः ॥ १२ ॥ तदा विमोह्य महिकाद्यन्धका- १०
रविकुर्वणात् । अपश्यत इमान् देवानतिक्रामन्ति नान्यथा ॥ १३ ॥ तथोक्तं—"आतिड्डीएणं भंते ! देवे जाव
चत्तारि पंच देवावासंतराइं विइक्कंते, तेण परं परिड्ढीएणं," इत्यादि, भगवतीदशमशतकतृतीयोद्देशके ।
सौधर्मेशानयोर्देवलोकयोरथ नाकिनः । उत्कृष्टस्थितयः शक्रशक्रसामानिकादयः ॥१४॥ रत्नप्रभायाः सर्वाधो-
भागं यावदधो दिशि । स्वयोग्यं मूर्त्तिमद्द्रव्यं, पश्यन्त्यवधिचक्षुषा ॥ १५ ॥ तिर्यग्दिशि त्वसंख्येयान्, पश्यन्ति १४

द्वीपवारिधीन् । ऊर्ध्वं स्वस्वविमानानां, चूलिकाग्रध्वजावधि ॥ १६ ॥ अनुत्तरान्ताः सर्वेऽप्यसंख्येयान् द्वीपवारिधीन् । तिर्यक् प्रपश्यन्त्यधिकाधिकान् किंतु यथोत्तरम् ॥ १७ ॥ वैमानिकानां यदधोऽवधिर्भूम्ना विजृम्भते । भवनेशव्यन्तराणामूर्ध्वं भूम्ना प्रसर्पति ॥ १८ ॥ ज्योतिषां नारकाणां तु, तिर्यग् भृशं प्रसर्पति । नृतिरश्चामनियतदिको नानाविधोऽवधिः ॥ १९ ॥ स्वयंभूरमणाम्भोधौ, यथा मत्स्या जगद्गतैः । भवन्ति सर्वैराकारैर्नृतिर्यगवधिस्तथा ॥ २० ॥ मत्स्यास्तु वलयाकारा, न भवेयुरयं पुनः । संभवेद्वलयाकारोऽप्यसौ नानाकृतिस्ततः ॥ २१ ॥ तथोक्तं संग्रहणीवृत्तौ–"नाणागारो तिरिए मणुए मच्छा सयंभूरमणेव । तत्थ वलयं निसिद्धं तस्स पुण तयंपि होज्जाहि ॥ २२ ॥" वैमानिकानां सर्वेषां, जघन्योऽवधिगोचरः । अङ्गुलासंख्येयभागमानो ज्ञेयो मनस्विभिः ॥ २३ ॥ ननु सर्वजघन्योऽसौ, नृतिर्यक्ष्वेव संभवेत् । सर्वोत्कृष्टो नरेष्वेव, राद्धान्तोऽयं व्यवस्थितः ॥ २४ ॥ तथोक्तं—"उक्कोसो मणुएसुं मणुस्सतेरिच्छिएसु अ जहन्नो" त्ति, कथं वैमानिकानां तत्, प्रोक्तः सर्वजघन्यकः । अङ्गुलासंख्येयभागमात्रोऽथात्र निरूप्यते ॥ २५ ॥ केषांचिदिह देवानां, उत्पत्तौ तादृशोऽवधिः । भवेत्प्राग्भवसंबन्धी, स जघन्योऽत्र दर्शितः ॥ २६ ॥ आगमे तु नैष पारभविकत्वाद्विवक्षितः । तथा च भगवानाह, क्षमाश्रमणपुंगवः ॥२७॥ "वेमाणियाणमंगुलभागमसंखं जहन्नओ होइ । उववाए परभविओ, तब्भवजो होइ तो पच्छा ॥२८॥" मृदङ्गाकृतिरित्येवं, वैमानिकावधिर्भवेत् । ऊर्ध्वायतो मृदङ्गो हि, विस्तीर्णोऽधः कृशो मुखे ॥२९॥

स्थितिमानमथ द्वैधं, जघन्योत्कृष्टभेदतः । सौधर्मेशानदेवानां, प्रतिप्रतरमुच्यते ॥३०॥ एकस्य सागरस्यांशाः,

द्वितीयप्रतरे भागाश्चत्वारस्तादृशाः
प्रकल्प्यन्ते त्रयोदश । प्रथमप्रतरे भागौ, तादृशौ द्वौ परा स्थितिः ॥ ३१ ॥ द्वितीयप्रतरे भागाश्चत्वारस्तादृशाः
स्थितिः । तृतीये षट् चतुर्थेऽष्टौ, पञ्चमे च लवा दश ॥ ३२ ॥ षष्ठे द्वादश भागास्ते, सप्तमे सागरोपमम् । एकं
त्रयोदशैनैकभागेनाभ्यधिका स्थितिः ॥ ३३ ॥ त्रिभिस्त्रयोदशैर्भागैरधिकं सागरोपमम् । अष्टमे प्रतरे ज्ञेयं,
नवमे पञ्चभिश्च तैः ॥ ३४ ॥ दशमे सप्तभिर्भागैरधिकं सागरोपमम् । एकादशे च नवभिर्द्वादशे प्रतरे पुनः
॥ ३५ ॥ एकादशभिरंशैस्तैः, साधिकं सागरोपमम् । त्रयोदशे च प्रतरे, पूर्णे द्वे सागरोपमे ॥ ३६ ॥ त्रयोद-
शस्वपि तथा, प्रतरेषु जघन्यतः । स्थितिः पल्योपममेकं, नास्माद्धीना भवेदिह ॥ ३७ ॥ कल्पेषु शेषेष्वप्येवं, या
या यत्र जघन्यतः । एकरूपैव सा सर्वप्रतरेषु भवस्थितिः ॥ ३८ ॥ नत्वाद्यप्रतरोत्कृष्टा, प्रतरे ह्युत्तरोत्तरे । जघ-
न्यतः स्थितिश्चिन्त्या, नरकप्रस्तटादिवत् ॥ ३९ ॥ एवमीशानेऽपि भाव्या, स्थितिः सौधर्मवद्बुधैः । वाच्या किन्त्व-
धिका किञ्चिज्जघन्या परमापि च ॥ ४० ॥ अधिकत्वं तु सामान्यान्निरूपितमपि श्रुते । पल्योपमस्यासंख्येयभागे-
नाहुर्महर्षयः ॥ ४१ ॥ संग्रहणीवृत्त्यभिप्रायोऽसौ ॥

सप्तहस्तमितं देहमिह स्वाभाविकं भवेत् । अङ्गुलासंख्येयभागमानमेतज्जघन्यतः ॥ ४२ ॥ कृत्रिमं वैक्रियं
तत्तु, लक्षयोजनसंमितम् । इदमङ्गुलसंख्येयभागमात्रं जघन्यतः ॥४३॥ जघन्यं द्वैधमप्येतत्प्रारम्भसमये भवेत् ।
कृत्रिमं वैक्रियं त्वेतत्तुल्यमेवाच्युतावधि ॥ ४४ ॥ ग्रैवेयकानुत्तरेषु, विमानेषु तु नाकिनाम् । तादृक्प्रयोजना-
भावान्नास्त्येवोत्तरवैक्रियम् ॥ ४५ ॥

लेश्याऽत्र तेजोलेश्यैव, भवेद्भवस्वभावतः । द्रव्यतो भावतस्त्वेषां, विवर्त्तन्ते षडप्यमूः ॥ ४६ ॥ गर्भजा नरतिर्यञ्च, एवोत्पद्यन्त एतयोः । स्वर्गयोर्नापरेऽत्वत्या, देवा गच्छन्ति पञ्चसु ॥ ४७ ॥ गर्भजेषु नृतिर्यक्षु २, संख्यातायुष्कशालिषु । पर्याप्तबादरक्षोणी३पाथो४वनस्पतिष्वपि५ ॥ ४८ ॥ द्वेधा भवन्ति देव्योऽत्र, काश्चित्कुलाङ्गना इव । सभर्तृकास्तदन्यास्तु, स्वतन्त्रा गणिका इव ॥ ४९ ॥ आद्ये परिगृहीतानां, स्थितिरुत्कर्षतो भवेत् । पल्योपमानि सप्तैव, पल्योपमं जघन्यतः ॥ ५० ॥ तासामीशाननाके तु, नवपल्योपमात्मिका । गरीयसी लघु पल्योपमं समधिकं स्थितिः ॥ ५१ ॥ साधारणीनां सौधर्मे, विमानाः सुरयोषिताम् । षड् लक्षाणि द्वितीये तु, लक्षाश्चतस्र एव ते ॥ ५२ ॥ साधारणसुरस्त्रीणां, सौधर्मे स्याद्गुरुः स्थितिः । पल्योपमानि पञ्चाशत्, पल्योपमं जघन्यतः ॥ ५३ ॥ आसामीशाने तु पञ्चपञ्चाशत्परमा स्थितिः । पल्योपमानि हीना तु, पल्यं किंचन साधिकम् ॥ ५४ ॥ यासां सौधर्मेऽथ साधारणदिव्यमृगीदृशाम् । स्थितिः पल्योपममेकं, ताः स्तोकद्युतिवैभवाः ॥ ५५ ॥ सौधर्मनाकिनामेव, तादृक्पण्याङ्गनादिवत् । भोग्या नतूपरितनस्वर्गिणां प्रायशः खलु ॥ ५६ ॥ यासां त्वेकादिसमयाधिकपल्योपमादिका । स्थितिः क्रमाद्वर्द्धमाना, दशपल्योपमावधि ॥ ५७ ॥ सनत्कुमारदेवानां, भोग्यास्ता नोर्ध्ववर्त्तिनाम् । दशभ्यश्च परं पल्योपमेभ्यः समयादिभिः ॥ ५८ ॥ स्थितिः समधिका यावत्पल्योपमानि विंशतिः । यासां ता ब्रह्मदेवानां, भोग्या नोपरिवर्त्तिनाम् ॥ ५९ ॥ समयाद्यधिका पल्योपमेभ्यो विंशतेः परम् । यासां स्थितिः स्याद्देवीनां, त्रिंशत्पल्योपमावधिः ॥ ६० ॥ शुक्रदेवोपभोग्यास्तास्त्रिंशत्पल्योपमोपरि । समया-

अत्रचेः तनोर्मानं लेश्या अपरिगृहीताश्च

२०

२५



२८

द्यधिका चत्वारिंशत्पल्योपमावधिः ॥ ६१ ॥ यासां स्थितिस्ता भोग्याः स्युरानतस्वर्गवासिनाम् ।
श्चत्वारिंशतश्च समयादिभिः ॥ ६२ ॥ वर्द्धमाना क्रमात्पञ्चाशत्पल्यावधिका स्थितिः । यासां ताः परिभोग्याः
स्युरारणस्वर्गवर्त्तिनाम् ॥ ६३ ॥ ईशानेऽप्येवमधिकपल्योपमस्थितिस्पृशः । देव्यस्तद्वासिनामेव, देवानां यान्ति
भोग्यताम् ॥ ६४ ॥ ततः समधिकात्पल्योपमाच्च समयादिभिः । वर्द्धमाना स्थितिः पञ्चदशपल्योपमावधिः
॥ ६५ ॥ यासां माहेन्द्रदेवानां, भोग्यास्ताः सुरयोषितः । पल्योपमेभ्योऽथ पञ्चदशभ्यः समनन्तरम् ॥ ६६ ॥
समयाद्यधिका पल्योपमानि पञ्चविंशतिम् । यावद्यासां स्थितिर्भोग्यास्ता लान्तकसुधाभुजाम् ॥ ६७ ॥
पल्योपमेभ्योऽथ पञ्चविंशतिः समनन्तरम् । समयाद्यधिका पञ्चत्रिंशत्पल्योपमावधिः ॥ ६८ ॥ यासां
स्थितिः सहस्रारदेवभोग्या भवन्ति ताः । ततः परं पञ्चचत्वारिंशत्पल्योपमावधिः ॥ ६९ ॥ स्थितिर्यासां तास्तु
भोग्याः, प्राणतस्वर्गसद्मनाम् । ततोऽग्रे पञ्चपञ्चाशत्पल्योपमावधिः स्थितिः ॥ ७० ॥ यासां ता अच्यु-
तस्वर्गदेवानां यान्ति भोग्यताम् । नाधस्तनानां निःस्वानां, समृद्धा गणिका इव ॥ ७१ ॥ विमानसं-
ख्यानियमो, विशेषश्च स्थितेरपि । प्रतिप्रतरमासां नो, जानीमोऽसंप्रदायतः ॥ ७२ ॥ किंतु संभाव्यत एवम-
धिकाधिकजीविताः । ऊर्ध्वोर्ध्वप्रतरे यावच्चरमे परमायुषः ॥ ७३ ॥ आहारोच्छ्वाससमयदेहमानादिकं किल ।
अशेषमुक्तं शेषं च, भाव्यमासां सुपर्ववत् ॥ ७४ ॥ तथा—भवनव्यन्तरज्योतिष्कादिदेवव्यपेक्षया । वैमा-
निकानां सौख्यानि, बहून्युग्रशुभोदयात् ॥ ७५ ॥ तच्चैवं–चतुर्विधानां देवानां, स्युः पुण्यकर्मपुद्गलाः । उत्कृ-

ष्टोत्कृष्टतरकोत्कृष्टतमानुभागकाः ॥ ७६ ॥ आयुःकर्मसहचरा, अनन्तानन्तका अथ । तन्मध्याद्यावता कर्मविभागान् व्यंतरामराः ॥ ७७ ॥ अनन्तानपि तुच्छानुभागानब्दशतेन वै । जरयन्ति मितस्नेहभोज्यवत् क्षुधिता जनाः ॥ ७८ ॥ कर्मांशांस्तावत एव, जरयन्त्यसुरान् विना । नव नागाद्यो वर्षशताभ्यां स्निग्धभोज्यवत् ॥ ७९ ॥ असुरास्तावतः कर्मांणून् वत्सरशतैस्त्रिभिः । वत्सराणां चतुःशत्या, ग्रहनक्षत्रतारकाः ॥८०॥ पञ्चभिश्च वर्षशतैर्निशाकरदिवाकराः । एकेनाब्दसहस्रेण, सौधर्मेशाननाकिनः ॥ ८१ ॥ द्वाभ्यां वर्षसहस्राभ्यां, तृतीयतुर्यनाकगाः । त्रिभिः सहस्रैर्वर्षाणां, ब्रह्मलान्तकवासिनः ॥ ८२ ॥ चतुःसहस्र्याऽब्दैः शुक्रसहस्रारभवाः सुराः । वर्षपञ्चसहस्र्या चानतादिस्वश्चतुष्कगाः ॥ ८३ ॥ अधोग्रैवेयका वर्षलक्षेण मध्यमास्तु ते । द्वाभ्यां वत्सरलक्षाभ्यां, लक्षैस्त्रिभिस्तदूर्ध्वगाः ॥ ८४ ॥ चतुर्भिश्च वर्षलक्षैर्विजयादिविमानगाः । पञ्चभिर्वर्षलक्षैश्च, सर्वार्थसिद्धनाकिनः ॥ ८५ ॥ तुल्यप्रदेशा अप्येवं, क्रमोत्कृष्टानुभागतः । कर्मांशाः स्युश्चिरक्षेप्याः, स्निग्धचक्र्यादिभोज्यवत् ॥ ८६ ॥ तथा च सूत्रं—"अत्थि णं भंते ! देवाणं अणंते कम्मंसे जे जहण्णेणं एक्केण वा दोहिं तिहिं वा उक्कोसेणं पंचहिं वाससएहिं खवयंति, ? हंता अत्थि' इत्यादि भगवतीअष्टादशशतकसप्तमोदेशके ॥ ततोऽमीषां शुभोत्कृष्टानुभागकर्मयोगतः । चिरस्थायीनि सौख्यानि, पुष्टान्यच्छिद्रुराणि च ॥ ८७ ॥ एवं स्वस्वस्थित्यवधिं, देवा देव्यो यथाकृतम् । प्रायः सुखं कदाचित्तु, दुःखमप्युपभुञ्जते ॥ ८८ ॥ उक्तं च—"भवणवइवाणमंतरजोइसियवेमाणिया एगंतसायं वेदणं वेदिंति, आहच्च अस्सायं" भगवतीसूत्रे षष्टशतक-

दशमोद्देशके ॥ तत्त्वार्थचतुर्थाध्यायटीकायामप्युक्तं—"यदा नाम केनचिन्निमित्तेनाशुभवेदना देवानां प्रादुरस्ति तदाऽन्तर्मुहूर्त्तमेव स्यात्, ततः परं नानुबध्नाति. सद्वेदनापि संततं षाण्मासिकी भवति, ततः परं विच्छिद्यतेऽन्तर्मुहूर्त्तं, ततः पुनरनुवर्त्तते" इति। तथा हि तुल्यस्थितिषु, निर्जरेषु परस्परम् । प्रागुत्पन्नाः सुराः पश्चादुत्पन्नेभ्योऽल्पतेजसः ॥ ८९ ॥ पश्चादुत्पन्नाश्च पूर्वोत्पन्नेभ्योऽधिकतेजसः । इत्थं कथंचित्स्यात्तेषां, जरा कान्त्यादिहानितः ॥ ९० ॥ ततस्तेजस्विनो वीक्ष्य, नवोत्पन्नान् परान् सुरान्। वृद्धा यून इवोद्वीक्ष्य, ते खिद्यन्तेऽपि केचन ॥ ९१ ॥ युद्धादिषु मिथस्तेषां, प्रतिपक्ष्यादिनिर्मिता । शस्त्रादिघातजा जातु, देहपीडाऽपि संभवेत् ॥९२॥ तथा प्रियादीष्टवस्तुविनाशविप्रयोगजः । शोको मनःखेदरूपो, मरुतामपि संभवेत् ॥ ९३ ॥ यदाहुः—"जे णं जीवा सारीरं वेदणं वेदेंति तेसि णं जीवाणं जरा, जे णं जीवा माणसं वेदणं वेदेंति तेसि णं जीवाणं सोगे, से तेणट्ठेणं जाव सोगेऽवि, एवं जाव वेमाणियाणं," भगवतीषोडशशतकद्वितीयोद्देशके। तथा प्राक् प्रौढपुण्यासां, केऽपि दृष्ट्वा परश्रियम् । मत्सरेणाभिभूयन्ते, निष्पुण्याः सुखलिप्सवः ॥ ९४ ॥ उक्तं च—"ईसाविसाय०"। किंच माल्यम्लानिकल्पवृक्षप्रकम्पनादिभिः । चिह्नैर्जानन्ति तेऽमीभिः, षण्मासान्तर्गतां मृतिम् ॥ ९५ ॥ तथाहि—"माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः । दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टेर्भ्रंशो वेपथुश्चारतिश्च ॥ ९६ ॥" स्थानाङ्गसूत्रेऽप्युक्तं—"तिहिं ठाणेहिं देवे चतिस्सामित्ति जाणइ, विमाणाइं णिप्पभाइं पासित्ता १ कप्परुक्खगं मिलायमाणं पासित्ता २ अप्पणो तेयलेसं परिहायमाणिं जाणित्ता ३" इत्यादि ॥

तां समृद्धिं विमानाद्यामासन्नं च्यवनं ततः। गर्भोत्पत्त्यादिदुःखं च, तत्राहारादिवैशसम् ॥ ९७॥ चित्ते चिन्तयतां तेषां, यद्दुःखमुपजायते । तज्जानन्ति जिना एव, तन्मनो वा परे तु न ॥ ९८॥ उक्तं च—"तं सुरविमाणविभवं, चिंतिय चवणं च देवलोयाओ । अइबलियं चिय जं नवि फुट्टइ सयसक्करं हिययं ॥९९॥" तथा—विपाकोदयरूपा च, चक्षुर्निमीलनादिभिः । व्यक्तैश्चिह्नैर्भवेद्व्यक्ता, तेषां निद्रा न यद्यपि ॥ ६००॥ प्रदेशोदयतस्त्वेषां, स्यात्तथाप्यन्यथा कथम् । दर्शनावरणीयस्य, सतोऽप्यनुदयो भवेत् ? ॥ १ ॥ क्षयश्चोपशमश्चास्य, देवानां क्वापि नोदितः । श्रुतेऽप्येषां कर्मबन्धहेतुत्वेनेयमीरिता ॥ २ ॥ तथाहुः—"जीवे णं भंते ! निद्दायमाणे वा पयलायमाणे वा कति कम्मपगडीओ बंधइ ?, गो० ! सत्तविहबंधए वा, अट्ठविहबन्धए वा, एवं जाव वेमाणिए, एवं जीवे णं भंते ! हसमाणे वा उस्सुयायमाणे वा कति क० बं० ?, गो० ! सत्तविहबं० वा, अट्ठविहबं० वा, एवं जाव वेमाणिए" भगवतीसूत्रे पञ्चमशतकचतुर्थोद्देशके, इह च पृथिव्यादीनां हासः प्राग्भविकतत्परिणामादवसेय" इत्येतद्वृत्तौ । एवं स्वभावतो निद्रासद्भावेऽपि सुधाभुजाम् । येयं तन्द्रा मृतेश्चिह्नं, सा तु भिन्नैव भाव्यते ॥ ३ ॥ किंच—षड्जीवकायारम्भेषु, रता मिथ्यात्वमोहिताः । यागादिभिर्जीवहिंसोपहारैर्मुदिताशयाः ॥ ४ ॥ शरीरासनशय्यादिभाण्डोपकरणेष्वपि । विमानदेवदेवीषु, हर्म्यक्रीडावनादिषु ॥ ५ ॥ पूर्वप्रेम्णा स्वीकृतेषु, न्नतिर्यक्ष्वपि मूर्च्छिताः । सचित्ताचित्तमिश्रेषु, मग्नाः परिग्रहेष्विति ॥ ६ ॥ तथाहुः—"असुरकुमारा पुढविकायं समारभंति जाव तसकायं समारभंति, सरीरा परिग्गहिया भवंति, कम्मा प० भ०, भवणा प० भ०, देवा देवीओ मणूसीओ

देवानां सातजराच्युतिदुःखनिद्रारंभाः

२०

२५

॥३३१॥

२८

तिरिक्खजोणिआ तिरिक्खजोणिणीओ प० भ०, आसणसयणभंडमत्तोवगरणा परि० भ०, सचित्ताचित्तमी-
सयाइं दवाइं प० भ०, वाणमंतरा जोतिसेवमाणिया जहा भवणवासी तहा णेयवा" । एवं मिथ्यादृशो यान्ति,
सारम्भाः सपरिग्रहाः । च्युत्वोपार्जितपाप्मान, एकेन्द्रियादिदुर्गतिम् ॥ ७ ॥ सम्यग्दृशः पुनस्तत्त्वत्रितये कृत-
निश्चयाः । जिनादिसेवया यद्वा, पूर्वाधीतश्रुतस्मृतेः ॥ ८ ॥ विचारयन्तस्तत्त्वानि, सिद्धान्तोक्तानि चेतसा ।
शुद्धोपदेशैः सम्यक्त्वं, प्रापयन्तः परानपि ॥ ९ ॥ उत्सवेषु महोत्साहा, अर्हत्कल्याणकादिषु । जिनोपदेशान्
शृण्वन्तः, सेवमाना जिनेश्वरान् ॥ १० ॥ महर्षीणां नृणां सम्यग्दृशामथ तपस्विनाम् । हितकामाः कृच्छ्रमग्न-
संघसाहाय्यकारिणः ॥ ११ ॥ दृष्ट्वार्षिं भावितात्मानं, कुर्वन्तो वन्दनादिकम् । तन्मध्येन न गच्छन्ति, स्तब्धमि-
थ्यात्विदेववत् ॥ १२ ॥ तथाहुः—"तत्थ जे अमायिसम्मदिट्ठिउववण्णए देवे से णं अणगारं भावियप्पाणं
पासति, पासित्ता णं वंदति णमंसति जाव पज्जुवासति, से णं अणगारस्स भावियप्पणो मज्झंमज्झेणं णो विती-
वएज्जा" भगवतीसूत्रे श. १४ उ. ३ । एवमर्जितपुण्यास्ते, महर्द्धिभरशालिषु । प्रत्यायान्ति कुलेष्वेकेष्वासन्नभव-
सिद्धिकाः ॥ १३ ॥ षड्भिः कुलकं ॥ तत्रापि सुभगाः सर्वोत्कृष्टरूपा जनप्रियाः । भोगान् भुक्त्वाऽऽत्तचारित्राः,
क्रमाद्यान्ति परां गतिम् ॥१४॥ नन्वेवमुदिताः सूत्रे, अधर्मे संस्थिताः सुराः। कथं तदेष भावार्थो, न तेन विघ-
टिष्यते ?॥ १५ ॥ तथाहि—"जीवा णं भंते ! किं धम्मे ठिया अधम्मे ठिया धम्माधम्मे ठिया ?, गो० ! जीवा धम्मे-
वि ठिया, अधम्मे०, धम्माधम्मे०, णेरइया णं पुच्छा, गो०, ! णेरइया नो धम्मे०, नो धम्माधम्मे०, अधम्मे ठिया,

मणु० जहा जीवा, वाणमंतर० जोइ० वेमा० जहा णेरइया," भगवतीसूत्रे सप्तदशशतकद्वितीयोद्देशके १७-२। अत्रोच्यते-एषामुक्तमिदं देशसर्वविरत्यभावतः। तथैवात्रोद्देशकादौ, सूत्रेऽपि प्रकटीकृतम् ॥ १६ ॥ "से णूणं संजयविरयपडिहयपचक्खायपावकम्मे धम्मे ठिए अस्संजय० अधम्मे ठिए संजयासंजए धम्माधम्मे ठिए." सर्वथा संवराभावापेक्षं नत्वेतदीरितम्। संवरद्वाररूपस्य, सम्यक्त्वस्यैषु संभवात् ॥ १७ ॥ सम्यक्त्व मपि मिथ्यात्वनिरोधात्संवरः स्फुटः। संवरेष्वत एवेदं, श्रुते पञ्चसु पठ्यते ॥ १८ ॥ तथाहुः स्थानाङ्गे समवायाङ्गे भगवत्यां च-पंच संवरदारा प०, तं०-सम्मत्तं विरती अपमादो अकसाइत्तं अजोगित्तं" एको द्वित्रादिसंख्येया, असंख्या अपि कर्हिचित्। उत्पद्यन्ते च्यवन्तेऽमी, एकस्मिन् समये सह ॥ १९ ॥ उत्पत्तेश्च्यवनस्यापि, विरहो यदि भाव्यते। सौधर्मेशानयोर्देवलोकयोरमृताशिनाम् ॥ २० ॥ स चतुर्विंशतिं यावन्मुहूर्त्तान् परमो भवेत्। जघन्यतस्तु समयं, यावदुक्तो जिनेश्वरैः ॥ २१ ॥

इन्द्रयोरथ सौधर्मेशानस्वर्गाधिकारिणोः। स्वरूपमुच्यते किंचिन्मत्वा गुरूपदेशतः ॥ २२ ॥ तत्रादिमे देवलोके, प्रतरे च त्रयोदशे। मेरोर्दक्षिणतः पञ्च, स्युर्विमानावतंसकाः ॥ २३ ॥ प्रथमं दिशि पूर्वस्यां, तत्राशोकावतंसकं। दक्षिणस्यां सप्तपर्णावतंसकमिति स्मृतम् ॥ २४ ॥ पश्चिमायां चम्पकावतंसकाख्यं निरूपितम्। उत्तरस्यां तथा चूतावतंसकमुदीरितम् ॥ २५ ॥ तेषां चतुर्णां मध्येऽथ, स्यात्सौधर्मावतंसकम्। महाविमानं यत्राऽऽस्ते, स्वयं शक्रः सुरेश्वरः ॥ २६ ॥ एतद्योजनलक्षाणि, सार्द्धानि द्वादशायतम्। विस्तीर्णं च परिक्षेपो,

सम्यग्दृष्ट्यादेर्धर्माधर्मौ

२०

२५

॥ ३३२ ॥

२८

योजनानां भवेदिह ॥ २७ ॥ लक्षाण्येकोनचत्वारिंशद् द्विपञ्चाशदेव च । सहस्राण्यष्टशत्यष्टाचत्वारिंशत्सम-
न्विता ॥ २८ ॥ समन्ततोऽस्य प्राकारो, वनखण्डाश्चतुर्दिशम् । प्रासादशेखरो मध्ये, प्रासादपङ्क्तिवेष्टितः
॥ २९ ॥ प्रासादात्तत ऐशान्यामुपपातादिकाः सभाः । एवं प्रागुक्तमास्थेयं, सर्वं विमानवर्णनम् ॥ ३० ॥
अत्रोपपातसदने, शय्यायां सुकृताश्रिताः । उत्पद्यन्ते शक्रतया, क्रमोऽत्र प्राक् प्रपञ्चितः ॥ ३१ ॥ यथा हि
साम्प्रतीनोऽसौ, सौधर्मनाकनायकः । प्रागासीत्कार्त्तिकः श्रेष्ठी, पृथिवीभूषणे पुरे ॥ ३२ ॥ तेन श्राद्धप्रति-
मानां, शतं तत्रानुशीलितम् । ततः शतक्रतुरिति, लोके प्रसिद्धिमीयिवान् ॥ ३३ ॥ स चैकदा गैरिकेन,
मासोपवासभोजिना । दृढार्हतत्वरुष्टेन, नुन्नस्य क्ष्मापतेर्गिरा ॥ ३४ ॥ गैरिकं भोजयामास, पारणायां नृपा-
लये । ततः स दुष्टो धृष्टोऽसीत्यंगुल्या नासिकां स्पृशन् ॥ ३५ ॥ जहास श्रेष्ठिनं सोऽपि, गृहे गत्वा विर-
क्तधीः । जग्राहाष्टसहस्रेण, वणिक्पुत्रैः समं व्रतम् ॥३६॥ अधीतद्वादशाङ्गीको, द्वादशाब्दानि संयमम् । पाल-
यित्वाऽनशनेन, मृत्वा देवेश्वरोऽभवत् ॥३७॥ चतुर्भिः कलापकं । गैरिकस्तापसः सोऽपि, कृत्वा बालतपो मृतः ।
अभूदैरावणसुरः, सौधर्मेन्द्रस्य वाहनम् ॥३८॥ अयं तावत्कल्पवृत्त्याद्यभिप्रायः, भगवतीसूत्राभिप्रायस्त्वयं—

हस्तिनागपुरे श्रेष्ठी, कार्त्तिकोऽभून्महर्द्धिकः । सहस्राम्रवणे तत्रागतोऽर्हन्मुनिसुव्रतः ॥ ३९ ॥ कार्त्तिका-
द्यास्तत्र पौरा, जिनं वन्दितुमैयरुः । प्रबुद्धः कार्त्तिकः श्रुत्वा, जिनोपदेशमञ्जसा ॥ ४० ॥ गृहे गत्वा ज्ञाति-
मित्रस्वजनान् भोजनादिभिः । संतोष्य ज्येष्ठतनये, कुटुम्बभारमक्षिपत् ॥ ४१ ॥ स्वस्वज्येष्ठसुते न्यस्त-

५ १० १४

गृहभारैः समन्ततः । अष्टाधिकसहस्रेणानुगतो नैगमोत्तमैः ॥ ४२ ॥ सहस्रपुरुषोद्वाह्यामारुह्य शिबिकां महैः । मुनिसुव्रतपादान्ते, स प्रव्रज्यामुपाददे ॥४३॥ अधीत्य द्वादशाङ्गानि, द्वादशाब्दानि संयमम् । धृत्वा मासमुपोष्यान्ते, सौधर्मनायकोऽभवत् ॥ ४४ ॥ तथा च सूत्रं–'इहेव जंबुद्दीवे भारहे वासे हत्थिणाउरे नामं नयरे होत्था' इत्यादि" भगवतीसूत्रे श०१८ उ० २। एवमुत्पन्नः स शक्रः, प्राग्वत्कृत्वा जिनार्चनम् । सुखमास्ते सुधर्मायां, पूर्वामुखो महासने ॥४५॥ तिस्रोऽस्य पर्षदस्तत्राभ्यन्तरा समिताभिधा । तस्यां देवसहस्राणि, द्वादशेति जिना जगुः ॥ ४६ ॥ देवीशतानि ससास्यां, मध्या चंडाभिधा सभा । चतुर्दश सहस्राणि, देवानामिह पर्षदि ॥४७॥ षट् शतानि च देवीनां, बाह्या जाताभिधा सभा । स्युः षोडश सहस्राणि, पर्षदीह सुधाभुजाम् ॥ ४८ ॥ शतानि पञ्च देवीनां, यथाक्रममथोच्यते । आयुःप्रमाणमेतासां, तिसृणामपि पर्षदाम् ॥ ४९ ॥ अन्तःपर्षदि देवानां, पञ्चपल्योपमात्मिका । स्थितिस्तथात्र देवीनां, पल्योपमत्रयं भवेत् ॥ ५० ॥ पल्योपमानि चत्वारि, मध्यपर्षदि नाकिनाम् । स्थितिर्देवीनां तु पल्योपमद्वयं भवेदिह ॥ ५१ ॥ बाह्यपर्षदि देवानां, पल्योपमत्रयं स्थितिः । एकं पल्योपमं चात्र, देवीनां कथिता स्थितिः ॥ ५२ ॥ अस्यैवं सामानिकानां, त्रायस्त्रिंशकनाकिनाम् । लोकपालानां तथाग्रमहिषीणामपि ध्रुवम् ॥ ५३ ॥ भवन्ति पर्षदस्तिस्रः, समिताद्या यथाक्रमम् । अच्युतान्तेन्द्रसामानिकादीनामेवमेव ताः ॥ ५४ ॥ इति स्थानाङ्गसूत्रे ॥ सहस्राण्यस्य चतुरशीतिः सामानिकाः सुराः । ते चेन्द्रत्वं विना शेषैः, कान्त्यायुर्वैभवादिभिः ॥ ५५ ॥ समानाः सुरनाथेन, सामानिकास्ततः

शिमानस्य साम्प्रतीनेन्द्रस्य च वर्णनं

२०

२५



२८

श्रुताः । अमात्यपितृगुर्वादिवत्सन्मान्या बिडौजसः ॥ ५६ ॥ स्वामित्वेन प्रतिपन्ना, एतेऽपि सुरनायकम् । भवन्ति वत्सलाः सर्वकार्येषु बान्धवा इव ॥ ५७ ॥ त्रायस्त्रिंशास्त्रयस्त्रिंशद्देवाः स्युर्मन्त्रिसन्निभाः । सदा राज्यभारचिन्ताकर्त्तारः शक्रसंमताः ॥ ५८ ॥ पुरोहिता इव हिताः, शान्तिकपौष्टिकादिकम् । कुर्वन्तोऽवसरे शक्रं, प्रीणयन्ति महाधियः ॥ ५९ ॥ दोगुन्दकापराह्वाना, महासौख्याश्चिता अमी । निदर्शनतयोच्यन्ते, श्रुतेऽतिसुखशालिनाम् ॥ ६० ॥ तथोक्तं मृगापुत्रीयाध्ययने–"नंदणे सो उ पासाए, कीलए सह इत्थिए । देवो दोगुंदगो चेव, निच्चं मुइयमाणसो ॥ ६१ ॥–त्रायस्त्रिंशा देवा भोगपरायणा दोगुंदका इति भण्यन्ते" इत्युत्तराध्ययनावचूर्णौ । साम्प्रतीनास्त्वमी जम्बूद्वीपेऽस्मिन्नेव भारते । पालकसन्निवेशस्थास्त्रयस्त्रिंशन्महर्द्धिकाः ॥ ६२ ॥ अभूवन् गृहपतयः, सहायास्ते परस्परम् । उग्राचारक्रियासाराः, संसारभयभीरवः ॥ ६३ ॥ प्रपाल्याब्दानि भूयांसि, श्रावकाचारमुत्तमम् । आलोचितप्रतिक्रान्तातिचाराश्चतुराशयाः ॥ ६४ ॥ मासमेकमनशनं, कृत्वा मृत्वा समाधिना । त्रायस्त्रिंशाः समभवन्मान्या वृन्दारकेशितुः ॥ ६५ ॥ न चैवमेतेभ्य एव, त्रायस्त्रिंशा इति प्रथा । नामधेयं नित्यमेतदव्युच्छित्तिनयाश्रयात् ॥ ६६ ॥ शतानि मन्त्रिणः पञ्च, सन्त्यन्येऽपीन्द्रसंमताः । येषामक्षिसहस्रेण, सहस्राक्षः स गीयते ॥ ६७ ॥ तथोक्तं कल्पसूत्रवृत्तौ–"सहस्सक्खे'त्ति मन्त्रिपञ्चशत्या लोचनानि इन्द्रसंबन्धीन्येवेति सहस्राक्षः" । तथा सहस्राणि चतुरशीतिरात्मरक्षकाः । अमी चात्मानमिन्द्रस्य, रक्षन्तीत्यात्मरक्षकाः ॥ ६८ ॥ एते त्वपायाभावेऽपि, प्रीत्युत्पत्त्यै सुरेशितुः । तथास्थितेश्च निचितकवचाः परितः

स्थिताः ॥ ६९ ॥ धनुरादिप्रहरणग्रहणव्यग्रपाणयः । तूणीरखड्गफलककुन्तादिभिरलङ्कृताः ॥ ७० ॥ एकाग्रचेतसः स्वामिवदनन्यस्तदृष्टयः । श्रेणीभूताः शक्रसेवां, कुर्वते किङ्करा इव ॥ ७१ ॥ तथा सप्तास्य सैन्यानि, तत्र तादृक्प्रयोजनात् । नृत्यज्जात्योत्तुङ्गचङ्गतुरङ्गाकारधारिणाम् ॥ ७२ ॥ शूराणां युद्धसन्नद्धशस्त्रावरणशालिनाम् । निर्जराणां निकुरम्बं, हयसैन्यमिति स्मृतम् ॥ ७३ ॥ एवं गजानां कटकं, रथानामपि भास्वताम् । विविधायुधपूर्णानामश्वरूपमरुद्भुजाम् ॥ ७४ ॥ तथा वृषभदेवानां, सैन्यमुच्छृङ्गिणां युधे । उद्भटानां पदातीनां, सैन्यमुग्रभुजोष्मणाम् ॥ ७५ ॥ एतानि पञ्च सैन्यानि, गतदैन्यानि वज्रिणम् । सेवन्ते युद्धसज्जानि, नियोगेच्छूनि सन्निधौ ॥ ७६ ॥ शुद्धाङ्गनृत्यवैदग्ध्यशालिनां गुणमालिनाम् । नटानां देवदेवीनां, षष्ठं सैन्यं भजत्यमुम् ॥ ७७ ॥ स्वरमाधुर्यवर्याणां, सैन्यमातोद्यधारिणाम् । गन्धर्वदेवदेवीनां, सप्तमं सेवते हरिम् ॥ ७८ ॥ एतत्सैन्यद्वयं चातिचतुरं गीतताण्डवे । अविश्रमं प्रयुञ्जानमुपभोगाय वज्रिणः ॥ ७९ ॥ सप्तानामप्यथैतेषां, सैन्यानां सप्त नायकाः । सदा सन्निहिताः शक्रं, विनयात् पर्युपासते ॥ ८० ॥ ते चैवं नामतो वायु १ रैरावणश्च २ माठरः ३ । स्याद्दमर्द्धि ४ र्हरिनैगमेषी ५ श्वेतश्च ६ तुम्बरुः ७ ॥ ८१ ॥ सप्तापि सेनापतयः, स्युरेतैरेव नामभिः । तृतीयस्य पञ्चमस्य, सप्तमस्य सुरेशितुः ॥ ८२ ॥ अङ्गीकृत्य द्वादशेन्द्रानानतारणयोरपि । एतन्नामान एवामी, स्थानाङ्गे कथिता जिनैः ॥ ८३ ॥ पादात्येशस्तत्र हरिनैगमेषीति विश्रुतः । शक्रदूतोऽतिचतुरो, नियुक्तः सर्वकर्मसु ॥ ८४ ॥ योऽसौ कार्यविशेषेण, देवराजानुशासनात् । कृत्वा मङ्क्षु त्वचश्छेदं, रोमरन्ध्रैर्नखांकुरैः

सामानिकादिवर्णनं

२०

२५

२८

॥ ८५ ॥ संहर्तुमीष्टे स्त्रीगर्भं, न च तासां मनागपि । पीडा भवेन्न गर्भस्याप्यसुखं किंचिदुद्भवेत् ॥ ८६ ॥
तत्र गर्भाशयाद्गर्भाशये योनौ च योनितः । योनेर्गर्भाशये गर्भाशयाद्योनाविति क्रमात् ॥ ८७ ॥ आकर्षणामो-
चनाभ्यां, चतुर्भङ्ग्यत्र संभवेत् । तृतीयेनैव भङ्गेन, गर्भं हरति नापरैः ॥ ८८ ॥ इदं चार्थतः पञ्चमाङ्गे ॥ पत्ति-
सैन्यपतेरस्य, कच्छाः सप्त प्रकीर्त्तिताः । कच्छाशब्देन च स्वाज्ञावशवर्त्तिसुरव्रजः ॥ ८९ ॥ ईशानाद्यच्युता-
न्तानामेवं सर्वबिडौजसाम् । पत्तिसैन्यपतेः कच्छाः, सप्त सप्त भवन्ति हि ॥ ९० ॥ देवास्तत्राद्यकच्छायां,
स्वेन्द्रसामानिकैः समाः । द्वितीयाद्याः षडन्याश्च, द्विघ्ना द्विघ्ना यथोत्तरम् ॥ ९१ ॥ यथा सौधर्मेन्द्रहरिनैगमे-
षिचमूपतेः । स्यादाद्यकच्छा चतुरशीतिदेवसहस्रिका ॥ ९२ ॥ तथा यानविमानाधिकारी पालकनिर्जरः ।
सदा शक्रनियोगेच्छुरास्ते विरचिताञ्जलिः ॥ ९३ ॥ यदेन्द्रो जिनजन्माद्युत्सवेषु गन्तुमिच्छति । तदा वादयते
घण्टां, सुघोषां नैगमेषिणा ॥ ९४ ॥ वादितायाममुष्यां च, घण्टाः सर्वविमानगाः । शब्दायन्ते समं यन्त्रप्र-
योगप्रेरिता इव ॥ ९५ ॥ ततः पालकदेवेन, रचिते पालकाभिधे । समासीनो महायानविमाने सपरिच्छदः
॥ ९६ ॥ औत्तराहेण निर्याणमार्गेणावतरत्यधः । एत्य नन्दीश्वरद्वीप, आग्नेयकोणसंस्थिते ॥ ९७ ॥ शैले रति-
कराभिख्ये, विमानं संक्षिपेत्ततः । कृतकार्यः स्वर्गमेति, विहिताष्टाहिकोत्सवः ॥ ९८ ॥ तथोक्तं—"तत्र
दक्षिणो निर्याणमार्ग उक्तः, इह तु उत्तरो वाच्यः, तथा तत्र नन्दीश्वरद्वीपे उत्तरपूर्वो रतिकरपर्वत ईशानेन्द्र-
स्यावतारायोक्तः, इह तु दक्षिणपूर्वोऽसौ वाच्य" इति भगवतीसूत्रवृत्तौ शतक १६ द्वितीयोद्देशके, तत्रेति

५ १० १४

ईशानेन्द्राधिकारे, इहेति सौधर्मेन्द्राधिकारे॥स्वर्गेषु विषमेष्वेषा, स्थितिः स्याद्दशमेऽपि च । घण्टापत्तीशाना-
मादिः, समेष्वीशाननाकवत् ॥ ६९९ ॥ तथा देवा महामेघाः, सन्त्यस्य वशवर्त्तिनः । येषां स्वामितया शक्रो,
मघवानिति गीयते ॥ ७०० ॥ तथोचुः–'मघवं'ति मघा–महामेघा वशे सन्त्यस्य मघवान्," कल्पसूत्रवृत्तौ,
तथा हि मेघा द्विविधा, एके वर्षर्त्तुभाविनः । स्वाभाविकास्तदपरे, स्युर्दैवतानुभावजाः ॥ १ ॥ तत्र शक्रो यदा
वृष्टिं, कर्त्तुमिच्छेन्निजेच्छया । आज्ञापयति गीर्वाणांस्तदाऽभ्यन्तरपार्षदान् ॥ २ ॥ ते मध्यपार्षदांस्तेऽपि, बाह्यांस्ते
बाह्यबाह्यकान् । तेऽप्याभियोगिकांस्तेऽपि, ब्रुवते वृष्टिकायिकान् ॥ ३ ॥ ततस्ते कुर्वते वृष्टिं, हृष्टाः शक्रानु-
शिष्टितः । एवमन्येऽपि कुर्वन्ति, सुराश्चतुर्विधा अपि ॥ ४ ॥ जन्मदीक्षाज्ञानमुक्तिमहेषु श्रीमदर्हताम् ।
भक्त्युद्रेकादतिशयोद्भावनाय प्रमोदतः ॥५॥ तथोक्तम्—'जाहे णं भंते ! सक्के देविंदे देवराए वुट्ठिकायं काउकामे
भवइ से कहमिदाणिं पकरेइ ?' इत्यादि भगवतीसूत्रे १४—२। छित्त्वा भित्त्वा कुट्टयित्वा, चूर्णयित्वाऽथवा
स्वयम् । कमण्डल्वां शिरः पुंसः, कस्याप्येष यदि क्षिपेत् ॥ ६ ॥ तथापि किञ्चिदप्यस्य, बाधा न स्यात्तथा-
विधा । भगवत्यां शक्रशक्तिरुक्ता चतुर्दशे शते ॥ ७ ॥ सदा सन्निहितस्तस्यैरावणो वाहनं सुरः । व्यक्तो
नानाशक्तियुक्तो, भक्त्युद्युक्तः सुरेशितुः ॥ ८ ॥ दशार्णनृपबोधाय, यियासोरिव वज्रिणः । आज्ञां प्राप्या-
नेकरूपसमृद्धिं कर्त्तुमीश्वरः ॥ ९ ॥ यदा यदा स चेन्द्रस्य, कचिज्जिगमिषा भवेत् । तदा तदा हस्तिरूपं,
कृत्वेशमुपतिष्ठते ॥ १० ॥ दधात्यसौ करे वज्रममोघशक्तिशालि यत् । निरीक्ष्यैव विपक्षाणां, क्षणात्क्षुभ्यति

हरिनैगमेष्यादि-शक्तिः

२०

२५
॥ ३३५ ॥

२८

तुल्यैव शक्तिस्तिर्यक् तु, संख्येया द्वीपवार्द्धयः ॥३७॥ शक्तेर्विषय एवायं, न त्वेवं कोऽपि कर्हिचित् । चक्रे विकु-
र्वणां नो वा, करोति न करिष्यति ॥ ३८ ॥ शक्रस्याग्रमहिष्यस्तु, भवन्त्यष्टौ गुणोत्तमाः । रूपलावण्यशा-
लिन्यः, प्रोक्तास्ता नामतस्त्विमाः ॥ ३९ ॥ पद्मा १ शिवा २ शच्य ३ थाञ्जू ४ रमलाख्या ५ तथाऽप्सराः ६ ।
ततो नवमिका ७ रोहिण्यभिधा ८ स्यादिहाष्टमी ॥ ४० ॥ साम्प्रतीनानामासां पूर्वभवस्त्वेवं–द्वे श्रावस्ती-
निवासिन्यौ, हस्तिनागपुरालये । द्वे द्वे काम्पिल्यपुरगे, द्वे साकेतपुरालये ॥ ४१ ॥ एताः पद्माख्यपितृका,
विजयाभिधमातृकाः । वृहत्कुमार्योऽष्टाप्यात्तप्रव्रज्याः पार्श्वसन्निधौ ॥ ४२ ॥ पुष्पचूलार्यिकाशिष्याः, पक्षं
संलिख्य सुव्रताः । मृत्वोत्पन्ना विमानेषु, पद्मावतंसकादिषु ॥ ४३ ॥ जाताः शक्रमहिष्योऽष्टौ, सप्तपल्योपमा-
युषः । सिंहासनेषु क्रीडन्ति, पद्माख्यादिषु सोत्सवम् ॥ ४४ ॥ एकैकस्यास्तथैतस्याः, परिवारे सुराङ्गनाः ।
स्वतुल्यरूपालङ्काराः, सहस्राण्येव षोडश ॥ ४५ ॥ षोडशैताः सहस्राणि, विकुर्वन्ति नवा अपि । एवं च
सपरीवाराः, पत्न्यो भवन्ति वज्रिणः ॥ ४६ ॥ अष्टाविंशत्या सहस्रैरधिकं लक्षमेव ताः । भुङ्क्ते तावन्ति
रूपाणि, कृत्वेन्द्रोऽप्येकहेलया ॥ ४७ ॥ तथाहुः–'सक्कस्स णं भंते ! देविंदस्स पुच्छा, अज्जो ! अट्ठ अग्गमहि-
सीओ प०' इत्यादि भगवतीसूत्रे १०–५ । यदा शक्रः सहैताभिः, कामक्रीडां चिकीर्षति । चारु चक्राकारमेकं,
तदा स्थानं विकुर्वयेत् ॥ ४८ ॥ पञ्चवर्णतृणमणिरमणीयमहीतलम् । व्यासायामपरिक्षेपैर्जम्बूद्वीपोपमं च तत्
॥ ४९ ॥ मध्यदेशेऽस्य रचयत्येकं प्रासादशेखरम् । योजनानां पञ्च शतान्युच्चं तदर्द्धविस्तृतम् ॥ ५० ॥ तस्य

सार्द्धं, भयप्रलयगैरतः ॥ २७ ॥ तदा वैमानिका देवाः, काष्ठपर्णतृणादिकम् । शर्कराकणमप्येकमामृशन्ति करेण यत् ॥ २८ ॥ अचिन्त्यपुण्यात्तत्तेषां, प्राप्य प्रहरणात्मताम् । सुभूमचक्रिणः स्थालमिव प्रहरति द्विषः ॥ २९ ॥ तदेतेषां प्रहरणेऽप्यसत्स्वपि न हि क्षतिः । असुराणां तु नैतादृक्, शक्तिः पुण्यापकर्षतः ॥ ३० ॥ नित्यान्येते ततोऽस्त्राणि, वैक्रियाणि च बिभ्रति । ससायाः सुभटंमन्यास्तथाविधनरादिवत् ॥ ३१ ॥ तथाहुः–"देवासुराणं भंते ! संगामे किं णं तेसिं देवाणं पहरणत्ताए परिणमति ?, गो० ! जं णं देवा तणं वा कट्ठं वे"त्यादि भगवतीसूत्रे १८–७ ।

विकुर्वणाशक्तिरपि, वर्त्ततेऽस्य गरीयसी । जम्बूद्वीपद्वयं पूर्णं, यदसौ स्वविकुर्वितैः ॥ ३२ ॥ वैमानिकैर्देवदेवीवृन्दैः संकीर्णयतोऽभितः । ईष्टे पूरयितुं तिर्यगसंख्यान् द्वीपवारिधीन् ॥ ३३ ॥ तथाहुः–"सक्के णं देविंदे देवराया जाव केवलिगं च णं पभू विउवित्तए ?, एवं जहेव चमरस्स, नवरं दो केवलकप्पे जंबुद्दीवे दीवे, अवसेसं तं चेव" भगवतीसूत्रे, अयं भावः–जम्बूद्वीपावधिक्षेत्रं, यावच्छक्रविमानतः । तावद् द्विगुणितं भर्तुमीष्टे स्वैर्विकुर्वितैः ॥ ३४ ॥ तथा च देवेन्द्रस्तवे चमरेन्द्रमाश्रित्य—"जाव य जंबुद्दीवो जाव य चमरस्स चमर चंचाओ। असुरेहिं असुरकन्नाहिं अत्थि विसओ भरेउं जे ॥१॥" न पञ्चमाङ्गवृत्तौ तु, सूत्रमेतत्स्फुटीकृतम् । तिर्यक्षेत्रस्यात्र पृथगुक्तत्वाज्ज्ञायते त्विति ॥ ३५ ॥ तदत्र तत्त्वं बहुश्रुता विदन्ति । सामानिकानामेतस्य, त्रायस्त्रिंशकनाकिनाम् । कर्तुं वैक्रियरूपाणि, शक्तिरेवं प्ररूपिता ॥ ३६ ॥ लोकपालाग्रपत्नीनामपि वैक्रियगोचरा ।

देवानाम-
संगमादि
वैक्रियश-
क्तिः

२०

२५

॥ ३३६ ॥

२८

मानसम् ॥११॥ प्रयुक्तं द्विषतो हन्तुमिन्द्रेण कुपितेन यत् । ज्वालास्फुलिङ्गानभितो, विकिरद्भीषणाकृति ॥१२॥ कुर्वद् दृष्टिप्रतीघातमुत्फुल्लकिंशुकोपमम् । निहन्त्येवानुगम्यैनं, गतं दूरेऽपि साध्वसात् ॥ १३ ॥ यथाऽनेनैव शक्रेण, तन्मुक्तं चमरोपरि । ततो नंष्ट्वा गतस्यास्य, श्रीमद्वीरपदान्तरे ॥ १४ ॥ पृष्ठे पतद्गृहीतं च, जिनावज्ञाभियाऽमुना । चतुर्भिरङ्गुलैर्वीरपादाद्व्यवहितं रयात् ॥ १५ ॥ नन्वध्वन्येव वज्रेण, कथमेष न ताडितः ? । वज्रवचमरेन्द्रोऽपि, नाग्राहि वज्रिणा कथम् ? ॥ १६ ॥ नरादिभिस्त्वधः क्षिप्तं, वस्त्वादातुं न शक्यते । सुरैः किं शक्यते येन, वज्रमग्राहि वज्रिणा ? ॥ १७ ॥ अत्रोच्यते—अधोनिपतने शीघ्रगतयोऽसुरनाकिनः । ऊर्ध्वमुत्पतने मन्दगतयश्च स्वभावतः ॥ १८ ॥ वैमानिकाः पुनरधःपतने मन्दगामिनः । ऊर्ध्वमुत्पतने शीघ्रगतयश्च स्वभावतः ॥ १९ ॥ वज्रमप्यूर्ध्वगमने, शीघ्रं मन्दमधोगमे । असुरेन्द्राद्वज्रिणस्तु, मन्दगामि द्विधाप्यदः ॥२०॥ यावत्क्षेत्रं शक्र एकसमयेनोर्ध्वमुत्पतेत् । वज्रं द्वाभ्यां तावदेव, चमरः समयैस्त्रिभिः ॥ २१ ॥ अधः पुनर्यावदेकसमयेनासुरेश्वरः । तावद् द्वाभ्यां हरिर्वज्रं, त्रिभिर्निपतति क्षणैः ॥ २२ ॥ निग्रहीतुं ततो मार्गे, नाशक्यतासुरप्रभुः । वज्रेणाधो निपतता, स्वतस्त्रिगुणशीघ्रगः ॥ २३ ॥ नाग्राहि शक्रेणाप्येष, स्वतो द्विगुणवेगवान् । वज्रं स्वतो मन्दगति, धृतं पृष्ठानुधाविना ॥ २४ ॥ सुराः सुखेन गृह्णीरन्नधः क्षिप्तं हि पुद्गलम् । यदसौ सत्वरः पूर्वं, पश्चान्मन्दगतिर्भवेत् ॥ २५ ॥ पूर्वं पश्चादपि सुरो, महर्द्धिकस्तु सत्वरः । नरादयस्तु तदनु, नाधः पतितुमीशते ॥ २६ ॥ एवं च—अन्येषामपि देवानां, यदा विमानवासिनाम् । युद्धं स्यादसुरैः

प्रासादस्य नानामणिरत्नमयी मही । ऊर्ध्वभागोऽप्यस्य पद्मलतादिभक्तिशोभितः ॥ ५१ ॥ तस्य प्रासादस्य मध्ये, रत्नयेन्मणिपीठिकाम् । योजनान्यष्ट विस्तीर्णायतां चत्वारि मेदुराम् ॥ ५२ ॥ तस्या मणीपीठिकाया, उपर्येका मनोहराम् । विकुर्वयेद्दिव्यशय्यां, कोमलास्तरणास्तृताम् ॥ ५३ ॥ रत्नश्रेणिनिर्मितोरुप्रतिपादकृतोन्नतिम् । गाथामिथोऽयत्सुवर्णचतुष्पादां सुखावहाम् ॥५४॥ युग्मं ॥ ततः सपरिवाराभिः, प्राणप्रियाभिरष्टभिः । गन्धर्वनाट्यानीकाभ्यां, चानुयातः सुरेश्वरः ॥ ५५ ॥ तत्रोपेत्यानेकरूपो, गाढमालिङ्गय ताः प्रियाः । दिव्यान् पञ्चविधान् कामभोगान् भुङ्क्ते यथासुखम् ॥ ५६ ॥ तथाच सूत्रं–'जाहे णं भंते ! सक्के देविंदे देवराया दिव्वाइं भोगभोगाइं भुंजिउकामे भवइ से कहमिदाणिं पकरेइ ?, गो० ! ताहे चेव णं से सक्के दे० एगं महं नेमिपडिरूवगं विउव्वती'त्यादि' भगवतीसूत्रे १४–६ ॥ चत्वारोऽस्य लोकपालाश्चतुर्दिगधिकारिणः । तेषामपि विमानादिस्वरूपं किञ्चिदुच्यते ॥ ५७ ॥ विमानं तत्र शक्रस्य, यत्सौधर्मावतंसकम् । तस्मात् प्राच्यामसंख्येययोजनानामतिक्रमे ॥ ५८ ॥ तत्र सोममहाराजविमानमतिनिर्मलम् । संध्याप्रभाख्यं देवेन्द्रविमानाभं समन्ततः ॥ ५९ ॥ तत्रोपपातशय्यायामुपपातसभान्तरे । उत्पद्यते सोमराजः, शेषं सर्वं तु पूर्ववत् ॥ ६० ॥ अधोभागे विमानस्य, सोमराजस्य राजते । जम्बूद्वीपसमा तिर्यग्लोके सोमाभिधा पुरी ॥ ६१ ॥ प्रासादपरिपाट्योऽत्र, चतस्रः शेषमुक्तवत् । वैमानिकविमानार्द्धमानमत्रोच्चतादिकम् ॥ ६२ ॥ शेषाणां लोकपालानामप्येवं स्वस्वसंज्ञया । तिर्यग्लोके राजधान्यः, स्वविमानतले मताः ॥ ६३ ॥ सुधर्माख्याः सभास्त्वत्र, न सन्तीति जिना जगुः । नैषां

२०

२५



२८

विमानोत्पन्नानामिहैताभिः प्रयोजनम् ॥ ६४ ॥ रोहिणी मदना चित्रा, सोमा चेत्यभिधानतः । चतस्रोऽग्र-
महिष्योऽस्य, स्युः सहस्रपरिच्छदाः ॥ ६५ ॥ देवीसहस्रं प्रत्येकं, विकुर्वितुमपि क्षमाः । पत्नीसहस्राश्चत्वार-
स्तदेवं सोमभूभृतः ॥ ६६ ॥ त्यक्त्वा सुधर्मामन्यत्राऽर्हत्सक्थ्याशातनाभयात् । सहैताभिः पञ्चविधान्, काम-
भोगान् भुनक्त्यसौ ॥ ६७ ॥ शेषाणां लोकपालानामप्येतैरेव नामभिः । चतस्रोऽग्रमहिष्यः स्युरियत्परि-
च्छदान्विताः ॥ ६८ ॥ सामानिकादयो येऽस्य, ये चैषामपि सेवकाः । तथा विद्युत्कुमाराग्निकुमाराख्याः
सयोषितः ॥ ६९ ॥ मरुत्कुमाराः सूर्येन्दुग्रहनक्षत्रतारकाः । सोमाज्ञावर्त्तिनः सर्वे, ये चान्येऽपि तथाविधाः
॥ ७० ॥ ग्रहाणां दण्डमुसलशृङ्गाटकादिसंस्थितिः । गर्जितं ग्रहसंचारो, गन्धर्वनगराणि खे ॥ ७१ ॥ उल्का-
पाताभ्रवृक्षा दिग्दाहा रजांसि धूम्रिकाः । सुरेन्द्रधनुरर्केन्दूपरागपरिवेषकाः ॥ ७२ ॥ प्राचीनादिमहावाता,
ग्रामादिदहनादिकाः । जम्बूद्वीपदक्षिणार्द्धे, ये चोत्पातास्तथाविधाः ॥ ७३ ॥ जनप्राणधनादीनां, क्षयास्ते
सोमभूभृताम् । तत्सेविनां वा देवानां, नाविज्ञाता न चाश्रुताः ॥ ७४ ॥ विकालकोऽङ्गारकश्च, लोहिताक्षः
शनैश्चरः । चन्द्रसूर्यशुक्रबुधबृहस्पतिविधुन्तुदाः ॥७५ ॥ भवन्त्यपत्यस्थानीयाः, सोमस्यैते दशापि हि । विका-
लकादयः सर्वे, ग्रहा एव पुरोदिताः ॥ ७६ ॥ पल्योपमतृतीयांशयुक्तपल्योपमस्थितिः । सोमराजः सुखं भुङ्क्ते,
दिव्यनाट्यादिलालितः ॥ ७७ ॥ दक्षिणस्यां च सौधर्मावतंसकविमानतः । विमानं वरशिष्टाख्यमस्ति पूर्वोक्त-
मानयुक् ॥ ७८ ॥ यमस्तत्र महाराजो, राजते राजतेजसा । धर्मराज इति ख्यातो, निग्रहानुग्रहक्षमः ॥ ७९ ॥

५

१०

१४

सामानिकादयो येऽस्य, तेषामपि च सेवकाः । ये प्रेतव्यन्तरा ये च, तेषामप्यनुजीविनः ॥ ८० ॥ तथाऽसुर-
कुमाराश्च, सर्वे नरकपालकाः । कान्दर्पिकाद्यास्ते सर्वे, यमाज्ञावशवर्त्तिनः ॥ ८१ ॥ जम्बूद्वीपदक्षिणार्द्धे,
डमराः कलहाश्च ये । अत्यन्तोद्दामसंग्रामा, महापुरुषमृत्यवः ॥ ८२ ॥ देशद्रङ्गग्रामकुलरोगाः शीर्षादिवेदनाः ।
यक्षभूतोपद्रवाश्च, ज्वरा एकाहिकादयः ॥ ८३ ॥ कासश्वासाजीर्णपाण्डुशूलार्शःप्रमुखा रुजः । देशग्रामवंश-
मारिगोत्रप्राणिधनक्षयाः ॥ ८४ ॥ इत्यादयो महोत्पाता, येऽनार्याः कष्टकारिणः । यमस्य तत्सेविनां वा,
नाविज्ञाता भवन्ति ते ॥ ८५ ॥ अम्बादयो ये पूर्वोक्ताः, परमाधार्मिकाः सुराः । भवन्त्यपत्यस्थानीया, यमरा-
जस्य ते प्रियाः ॥ ८६ ॥ अत एव मृतः प्राणी, यमदूतैर्यमान्तिकम् । नीयते कृतमित्यादि, लोकैस्त-
त्वानपेक्षिभिः ॥ ८७ ॥ तथाहुः—"महिषो वाहनं तस्य, दक्षिणा दिग् रविः पिता । दण्डः प्रहरणं तस्य,
धूमोर्णा तस्य वल्लभा ॥ ८८ ॥ पुरी पुनः संयमिनी, प्रतीहारस्तु वैध्यतः । दासौ चण्डमहाचण्डौ, चित्रगुप्तस्तु
लेखकः ॥ ८९ ॥ इत्यादि । तृतीयभागाभ्यधिकपल्योपमस्थितिर्यमः । महाराजः सुखं भुङ्क्ते, दिव्यस्त्रीवर्गसंगतः
॥ ९० ॥ प्रतीच्यामथ सौधर्मावतंसकविमानतः । स्वयंज्वलाभिधं स्फूर्जद्विमानमुक्तमानवत् ॥ ९१ ॥ वरुण-
स्तत्र तरुणप्रतापार्को विराजते । सामानिकादयो येऽस्य, येऽप्येषामनुजीविनः ॥ ९२ ॥ स्तनितोदधिनागाख्याः,
कुमारास्तत्स्त्रियोऽपि च । अन्येऽपि तादृशाः सर्वे, वरुणाज्ञानुसारिणः ॥ ९३ ॥ जम्बूद्वीपदक्षिणार्द्धे, सन्मन्दा-
ल्पातिवृष्टयः । तटाकादिजलभरा, जलोद्भेदा जलोद्वहाः ॥ ९४ ॥ देशग्रामादिवाहाश्च, जलोद्भूता जलक्षयाः ।

शक्रलोकपालाः

२०

२५



२८

नाज्ञाता वरुणस्यैते, सर्वे तत्सेविनामपि ॥ ९५ ॥ अयं पाथःपतिरिति, विख्यातः स्थूलदर्शिनाम् । पश्चिमाशा-
पतिः पाशपाणिर्जलधिमन्दिरः ॥ ९६ ॥ कर्कोटकः कर्दमकोऽञ्जनश्च शङ्खपालकः । पुण्ड्रः पलाशमोदश्च, जयो
दधिमुखस्तथा ॥९७॥ अयंपुलः काकरिकः, सर्वेऽप्येते सुधाभुजः । वरुणस्याधीश्वरस्य, भवन्त्यपत्यवत्प्रियाः॥९८॥
अनुवेलन्धरं नागावासः कर्कोटकाचलः । ऐशान्यां लवणाब्धौ तत्स्वामी कर्कोटकः सुरः ॥९९॥ विद्युत्प्रभाद्रिराग्नेय्यां,
तस्य कर्दमकः पतिः । अञ्जनस्तु लोकपालो, वेलंबस्य सुरेशितुः ॥८००॥ धरणेन्द्रलोकपालस्तुर्योऽत्र शङ्खपालकः
पुंड्राद्यास्तु सुराः शेषा, न प्रतीता विशेषतः ॥ १ ॥ देशोनपल्यद्वितयस्थितिरेष मनोरमान् । वरुणाख्यो महा-
राजो, भुङ्क्ते भोगाननेकधा ॥ २ ॥ उदीच्यामथ सौधर्मावतंसकादतिक्रमे । असंख्येययोजनानां, विमानं वल्गु-
नामकम् ॥ ३ ॥ देवस्तत्र वैश्रमणो, विभाति सपरिच्छदः । यः सौधर्मसुरेन्द्रस्य, कोशाध्यक्ष इति श्रुतः ॥ ४ ॥
अस्य सामानिकाद्या ये, तेषां भृत्याश्च ये सुराः । सुपर्णद्वीपदिग्नागकुमारा व्यन्तरा अपि ॥ ५ ॥ सर्वेऽप्येते
सदेवीका, ये चान्येऽपि तथाविधाः । भवन्ति ते वैश्रमणानुशासनवशीकृताः ॥ ६ ॥ सीसकायस्त्रपुताम्रैर-
रत्नरजताकराः । वज्राकरा वसुधाराः, स्वर्णरत्नादिवृष्टयः ॥ ७ ॥ पत्रपुष्पबीजफलमाल्यचूर्णादिवृष्टयः । वस्त्रा-
भरणसद्गन्धभाजनक्षीरवृष्टयः ॥ ८ ॥ तथा सुकालदुष्कालौ, वस्त्वल्पार्घमहार्घता । सुभिक्षदुर्भिक्षगुडघृत-
धान्यादिसंग्रहाः ॥ ९ ॥ क्रयाश्च विक्रयाश्चैव, चिरलरत्नसंचयाः । प्रहीणस्वामिकादीनि, निधानानि च भूतले ॥
॥ १० ॥ नेत्याद्यविदितं जम्बूद्वीपयाम्यार्द्धगोचरम् । धनदस्य विभोर्यद्वा, नाकिनां तन्निषेविणाम् ॥ ११ ॥ पूर्ण-

माणिशालिभद्राः, सुमनोभद्र इत्यपि । चक्ररक्षः पुण्यरक्षः, शर्वाणश्च ततः परम् ॥ १२ ॥ सर्वयशाः सर्वकामः, समृद्धोऽमोघ इत्यपि । असङ्गश्चापत्यसमा, एते वैश्रमणेशितुः ॥ १३ ॥ असौ कृत्वोत्तुङ्गगेहां, स्वर्णप्राकारशोभिताम् । प्रददावादिदेवाय, विनीतां स्वःपतेर्गिरा ॥ १४ ॥ कृष्णाय द्वारिकामेवं, कृत्वा शक्राज्ञया ददौ । जिनजन्मादिषु स्वर्णं, रत्नौघैश्चाभिवर्षति ॥ १५ ॥ समृद्धश्च वदान्यश्च, लोकेऽनेनोपमीयते । सिद्धान्तेऽपि दानशूरतया गणधरैः स्मृतः ॥ १६ ॥ तथाहुः—"खमासूरा अरिहंता, तवसूरा अणगारा । दाणसूरा वेसमणा, जुद्धसूरा वासुदेवा ॥" एष वैश्रमणः पूर्णपल्योपमद्वयस्थितिः । सुखान्यनुभवत्युग्रपुण्यप्राग्भारभासुरः ॥ १७ ॥ तथोक्तं—"सोमजमाणं सतिभाग पलिय वरुणस्स दुन्नि देसूणा । वेसमणे दो पलिआ एस ठिई लोगपालाणं ॥ १८ ॥" चतुर्णामप्यमीषां येऽपत्यप्रायाः सुधाभुजः । ते पल्यजीविनः सर्वे, विना शशिदिवाकरौ ॥ १९ ॥ एवं सामानिकैस्त्रायस्त्रिंशपार्षदमन्त्रिभिः । पत्नीभिर्लोकपालैश्च, सैन्यैः सेनाधिपैः सुरैः ॥ २० ॥ अन्यैरपि घनैर्देवीदेवैः सौधर्मवासिभिः । सेवितो दक्षिणार्द्धस्य, लोकस्य परमेश्वरः ॥ २१ ॥ यथास्थानं परिहितमौलिमालाद्यलङ्कृतिः । शरत्काल इव स्वच्छाम्बरोऽकेन्द्रच्छकुण्डलः ॥ २२ ॥ पूर्णसागरयुग्मायुरास्ते स्वैरं सुखाम्बुधौ । मग्नो भग्नश्रमः स्वःस्त्रीनाट्यनादप्रमोदितः ॥ २३ ॥ आश्चर्यमीदृगैश्वर्यव्यासक्तोऽप्यन्तरान्तरा । जम्बूद्वीपमवधिना, निरीक्षते महामनाः ॥ २४ ॥ संघे चतुर्विधे तादृग्गुणवन्तं प्रशंसति । सुराणां पर्षदि चमत्कारचञ्चलकुण्डलः ॥ २५ ॥ दर्शं दर्शं जिनांश्चायमुत्सृष्टासनपादुकः । पञ्चाङ्गस्पृष्टभूपीठः, स्तौति

२०

२५

॥३३९॥

२८

शक्रस्तवादिभिः ॥ २६ ॥ छाद्मस्थ्ये वर्द्धमानं यः, प्रौढभक्तिर्व्यजिज्ञपत् । द्वादशाब्दीं तव स्वामिन् !, वैयावृत्त्यं करोम्यहम् ॥ २७ ॥ प्रत्युक्तश्च भगवता, नेदमिन्द्र ! भवेत् क्वचित् । यदर्हन्निन्द्रसाहाय्यात्, कोऽपि कैवल्यमाप्नुयात् ॥ २८ ॥ यो दशार्णेशबोधाय, ऋद्धिं विकृत्य तादृशीम् । नत्वाऽर्हन्तं नृपमपि, क्षमयामास संयतम् ॥ ॥ २९ ॥ ब्राह्मणीभूय यः कल्किनृपं हत्वा तदङ्गजम् । दत्तं राज्येऽभिषिच्यार्हच्छासनं भासयिष्यति ॥ ३० ॥ जिनोपसर्गे यः सङ्गमकामरकृते स्वयम् । निषिद्ध्य नाटकाद्युग्रं, षण्मासान् शोकमन्वभूत् ॥ ३१ ॥ भ्रष्टप्रतिज्ञं तं निर्वासयामास त्रिविष्टपात् । क्षणं मुमोच योऽर्हन्तं, न चित्तात्परमार्हतः ॥ ३२ ॥ यः पालकविमानाधिरूढो राजगृहे पुरे । श्रीवीरं समवसृतं, वन्दित्वेति व्यजिज्ञपत् ॥ ३३ ॥ अवग्रहाः कति विभो !, भगवानाह पञ्च ते । स्वामिना स्वीक्रियते यस्सोऽवग्रह इति स्मृतः ॥ ३४ ॥ देवेन्द्रावग्रहस्तत्र, प्रथमः स्यात्स चेन्द्रयोः । सौधर्मैशानयोर्लोकदक्षिणार्द्धोत्तरार्द्धयोः ॥ ३५ ॥ द्वितीयश्चक्रिणः क्षेत्रेऽखिलेऽपि भरतादिके । तृतीयो मण्डलेशस्य, स च तन्मण्डलावधिः ॥ ३६ ॥ तुरीयस्तु गृहपतेः, स च तद्गृहलक्षणः । पञ्चमः साधर्मिकस्य, पञ्चक्रोशावधिः स च ॥ ३७ ॥ तथोक्तं भगवतीवृत्तौ १६ शतक २ उद्देशके—"साहम्मिउग्गहे'त्ति समानेन धर्मेण चरन्तीति साधर्मिकाः—साध्वपेक्षया साधवः एतेषामवग्रहः—तदाभाव्यं पञ्चक्रोशपरिमाणं क्षेत्रं, ऋतुबद्धे मासमेकं, वर्षासु चतुरो मासान् यावदिति साधर्मिकावग्रहः । आस्पदस्वामिनामेषां, पञ्चनामप्यवग्रहम् । याचन्ते साधवस्तेषामपि पुण्यमनुज्ञया ॥ ३८ ॥ श्रुत्वेति मुदितस्वान्तः, शचीकान्तः प्रभुं नमन् । ऊचे येऽसि-

५

१०

१४

न्मम क्षेत्रे, विहरन्ति मुनीश्वराः ॥ ३९ ॥ तेषामवग्रहमहमनुजानामि भावतः । इत्युक्त्वाऽस्मिन् गते स्वर्गं, प्रभुं पप्रच्छ गौतमः ॥ ४० ॥ सत्यवादी सत्यमाह, शक्रोऽयमथवाऽन्यथा । जिनेनापि तदा सत्यवादीत्येष प्रशंसितः ॥ ४१ ॥ एवं योऽनेकधा धर्ममाराध्येतः स्थितिक्षये । विदेहेषूत्पद्य चैकावतारो मुक्तिमाप्स्यति ॥ ४२ ॥ अस्मिश्च्युते च स्थानेऽस्य, पुनरुत्पत्स्यतेऽपरः । एवमन्येऽपि शक्राद्या, यथास्थानं सुरासुराः ॥ ४३ ॥

अवग्रहार्पणं ईशानेंद्रः तामलिः

ईशानदेवलोकस्य, प्रतरेऽथ त्रयोदशे । मेरोरुत्तरतः पञ्च, स्युर्विमानावतंसकाः ॥ ४४ ॥ अङ्कावतंसकं प्राच्यां, विमानमस्ति शस्तभम् । दक्षिणस्यां स्फटिकावतंसकाख्यं निरूपितम् ॥ ४५ ॥ अपरस्यां तथा रत्नावतंसकमिति स्मृतम् । उत्तरस्यां जातरूपावतंसकाभिधं भवेत् ॥ ४६ ॥ मध्ये चैषामथेशानावतंसकाभिधं महत् । विमानं मानतः सौधर्मावतंसकसन्निभम् ॥ ४७ ॥ तत्रोपपातशय्यायामुपपातसभास्पृशि । ईशानेन्द्रतया प्रौढपुण्य उत्पद्यतेऽसुमान् ॥ ४८ ॥ साम्प्रतीनस्त्वसौ जम्बूद्वीपे क्षेत्रे च भारते । ताम्रलिप्त्यां पुरि मौर्यपुत्रोऽभूत्तामलिर्धनी ॥ ४९ ॥ स चैकदा रात्रिशेषे, जाग्रच्चित्ते व्यचिन्तयत् । नन्वियं यन्मया लब्धा, समृद्धिः सर्वतोमुखी ॥ ५० ॥ तत्प्राच्यप्राज्यपुण्यानां, फलमत्र न संशयः । प्रागेव संचितं भुञ्जे, हन्त नूत्नमनर्जयन् ॥ ५१ ॥ क्षीणेऽस्मिन् किं करिष्ये तद्भवान्तरसुखावहम् । किंचित्पुण्यमर्जयामि, गार्हस्थ्ये तु भवेन्न तत् ॥ ५२ ॥ विचिन्त्येति विचारज्ञः, 'प्रातः प्रीत्या कुटुम्बकम् । आकार्य ज्ञातिमित्रादीनुपचर्याशनादिभिः ॥ ॥ ५३ ॥ कुटुम्बभारमारोप्य, ज्येष्ठपुत्रे विरक्तहृत् । तानापृच्छ्य दारुमयं, गृहीत्वैकं पतद्ग्रहम् ॥ ५४ ॥

२०

२५



२८

प्राणामया प्रवव्राज, प्रव्रज्ययाऽथ तत्र सः । यत्र यं प्राणिनं पश्येदाकाकमासुरेश्वरम् ॥ ५५ ॥ तत्र तं प्रणमन्
षष्ठतपा आतापनामपि । कुर्वाणो भान्वभिमुखः, षष्ठस्य पारणादिने ॥ ५६ ॥ आतापनाभुवः प्रत्युत्तीर्य पुर्यां
कुलान्यटन् । उच्चनीचमध्यमानि, भिक्षार्थमपराह्णके ॥ ५७ ॥ नादत्ते सूपशाकादि, किंतु केवलमोदनैः । पूर्णं
पतद्ग्रहे भिक्षाचर्यायाः स निवर्त्तते ॥ ५८ ॥ एकविंशतिकृत्वस्तं, प्रक्षाल्यौदनमम्बुभिः । तादृग्नीरसमाहार्यं,
षष्ठं करोत्यनन्तरम् ॥ ५९ ॥ एवं वर्षसहस्राणि, षष्टिं तपोऽतिदुष्करम् । कुर्वन् कृशीयान्निर्मांसो, व्यक्तस्ना-
युशिरोऽभवत् ॥ ६० ॥ ततश्चिन्तयति स्मैष, यावदस्ति तनौ मम । शक्तिस्तावदनशनं, कृत्वा स्वार्थं समर्थये ॥
॥ ६१ ॥ ध्यायन्नेवं ताम्रलिप्त्यां, गार्हस्थ्यव्रतसंगतान् । आपृच्छ्य लोकानेकान्ते, त्यक्त्वा पतद्ग्रहादिकम् ॥ ६२ ॥
ऐशान्यां मण्डलं पुर्या, आलिख्यानशनं दधौ । पादपोपगमं मृत्युमनाकांक्षंश्च तिष्ठति ॥ ६३ ॥ तदा च बलिच-
ञ्चाऽऽसीद्राजधानीन्द्रवर्जिता । तत्रत्याश्चासुरा देवदेव्यो निरीक्ष्य तामलिम् ॥ ६४ ॥ इन्द्रार्थिनः समुदितास्त-
त्रैत्येति व्यजिज्ञपन् । क्लिश्यामहे वयं स्वामिन्निर्नाथा विधवा इव ॥ ६५ ॥ इन्द्राधीना स्थितिः सर्वा, सीदत्य-
स्माकमित्यतः । कृत्वा निदानमधिपा, यूयमेव भवन्तु नः ॥ ६६ ॥ इत्यादि निगदन्तस्ते, स्थित्वा तामलिसं-
मुखम् । नानानाट्यादिदिव्यर्द्धिं, दर्शयन्ति मुहुर्मुहुः ॥ ६७ ॥ देवाङ्गना अपि प्राणप्रियप्रेमदृशैकशः । त्यक्त्वा
कठिनतां कान्त !, निभालय निभालय ॥ ६८ ॥ मनाग् मनोऽस्मासु कुर्यास्तपस्विन्नधुना यदि । भवेम तव
किंकर्यस्तपःक्रीत्यो भवावधि ॥ ६९ ॥ तामलिस्तु तद्वचोभिर्मरुद्भिरिव भूधरः । निश्चलस्तस्थिवांस्तूष्णीं, ततस्ते-

ईशानकृतः असुरोपद्रवः

ऽगुर्यथास्पदम् ॥ ७० ॥ ईशानेऽपि तदा देवाश्च्युतनाथास्तदर्थिनः । इन्द्रोपपातशय्यायामसकृद्ददते दृशम् ॥ ॥ ७१ ॥ षष्टिं वर्षसहस्राणि, कृत्वा बालतपोऽद्भुतम् । मासयुग्ममनशनं, धृत्वा मृत्वा समाधिना ॥ ७२ ॥ तत्रोपपातशय्यायां, तस्मिन् काले स तामलिः । ईशानेन्द्रतयोत्पन्नो, यावत्पर्याप्तिभागभूत् ॥ ७३ ॥ बलिचञ्चासुरास्तावद्, ज्ञात्वैतत्कुपिता भृशम् । तामलेर्यत्र मृतकं, तत्रागत्यातिरोषतः ॥७४॥ शुम्बेन बद्ध्वा वामांह्निं, निष्ठीवन्तो मुखेऽसकृत् । ताम्रलिप्त्यां भ्रमयन्तो, मृतकं त्रिकादिषु ॥७५॥ एवमुद्घोषयामासुस्तामलिस्तापसाधमः । धूर्त्तो मूर्त्तो दम्भ इव, पश्यतैवं विडम्ब्यते ॥ ७६ ॥ ईशानेन्द्रतयोत्पन्नोऽप्यसौ नः किं करिष्यति ? । पुरतोऽस्माकमीशानः, किमसौ तापसब्रुवः ? ॥ ७७ ॥ असुरैः क्रियमाणां स्वस्वामिदेहकदर्थनाम् । दृष्ट्वेशानसुरा रुष्टाः, स्वामिने तदजिज्ञपन् ॥ ७८ ॥ ईशानेन्द्रोऽप्युपपातशय्यावस्थित एव ताम् । बलिचञ्चाराजधानीं, दृशाऽपश्यत्सरोषया ॥ ७९ ॥ तस्य दिव्यप्रभावेण, बलिचञ्चाभितोऽभवत् । कीर्णाङ्गारेव तप्तायःशिलामयीव दुस्सहा ॥ ॥ ८० ॥ असुरास्तेऽथ दवथुव्यथार्त्ताः स्थातुमक्षमाः । मीना इव स्थले दीनाः, कृच्छ्रात्कण्ठगतासवः ॥ ८१ ॥ इतस्ततः प्रधावन्तः, कान्दिशीकाः सुरेश्वरम् । संभूय क्षमयामासुरष्टाङ्गस्पृष्टभूतलाः ॥ ८२ ॥ स्वामिन्नज्ञानतोऽस्माभिरपराद्धोऽसि दुर्दशैः । नैवं पुनः करिष्यामः, क्षमस्व स्वस्तवानुगाः ॥ ८३ ॥ पुनः पुनर्विलपतो, दृष्ट्वेतान् करुणस्वरम् । तां शक्तिं संजहारेन्द्रो, दयार्द्रस्तेऽप्ययुः सुखम् ॥ ८४ ॥ एवं तामलिना बालतपसेन्द्रत्वमर्जितम् । सम्यक्त्वैकावतारत्वे, प्राप्य तीर्णो भवार्णवः ॥ ८५ ॥ जैनक्रियापेक्षयेदं, यद्यप्यल्पतरं फलम् ।

२० २५ २८
॥ ३४१ ॥

सम्यग्दृष्टिर्हि तपसा, लभेत मुक्तिमीदृशा ॥ ८६ ॥ तथाहुः—"सट्ठिं वाससहस्सा तिसत्तखुत्तो दएण धोएण ।
अणुचिन्नं तामलिणा अण्णाणतवत्ति अप्पफलो ॥ ८७ ॥" जनप्रवादोऽपि—"तामलितणइ तवेण, जिणमइ
सिज्झइ सत्त जण । अन्नाणह दोसेण, तामलि ईसाणइं गयो ॥ ८८ ॥" तथाप्यस्य निष्फलत्वं, वक्तुं शक्यं न
सर्वथा । सज्ज्ञानाज्ञानतपसोः, फले कुतोऽन्यथाऽन्तरम् ? ॥ ८९ ॥ उक्तं—"जं अन्नाणी कम्मं खवेइ बहुयाहिं
वासकोडीहिं । तं नाणी तिहि गुत्तो खवेइ ऊसासमित्तेणं ॥ ९० ॥" सति मिथ्यादृशामेवं, सर्वथा निष्फलां
क्रियाम् । असत्फलां वा मन्वानास्तन्वते बालचेष्टितम् ॥ ९१ ॥ ततश्चेशाननाथोऽयं, प्राग्वज्जिनार्चनादिकम् ।
कृत्वा सुधर्मासदसि, सिंहासनमशिश्रियत् ॥ ९२ ॥ त्रायस्त्रिंशास्त्वस्य चम्पावास्तव्याः सुहृदः प्रियाः । त्रय-
स्त्रिंशन्मिथो यावज्जीवमुग्राहर्तक्रियाः ॥ ९३ ॥ आराध्यानेकवर्षाणि, धर्ममन्ते प्रपद्य च । द्वौ मासौ प्रायमी-
शाने, त्रायस्त्रिंशकतां दधुः ॥ ९४ ॥ सहस्राणि भवन्त्यस्याशीतिः सामानिकाः सुराः । दिशां चतुष्के प्रत्येकं,
तावन्त आत्मरक्षकाः ॥ ९५ ॥ दश देवसहस्राणि, स्युरभ्यन्तरपर्षदि । शतानि नव देवीनामिहोक्तानि जिने-
श्वरैः ॥ ९६ ॥ मध्यमायां सहस्राणि, स्युर्द्वादश सुधाभुजाम् । उदितानि शतान्यष्टौ, देवीनामिह पर्षदि॥९७॥
चतुर्दश सहस्राणि, सुराणां बाह्यसंसदि । शतानि सप्त देवीनामथायुरुच्यते क्रमात् ॥ ९८ ॥ सप्तपल्योपमा-
न्यायुरन्तःपर्षदि नाकिनाम् । पल्योपमानि पञ्चाशद्देवीनां कथिता स्थितिः ॥ ९९ ॥ मध्यायां देवदेवीनां, षट्
चत्वारि क्रमात् स्थितिः । पञ्च त्रीणि च बाह्यायां, पल्योपमान्यनुक्रमात् ॥ १०० ॥ कृष्णा च कृष्णराजी च,

रामा च रामरक्षिता । वसुश्च वसुगुप्ता च, वसुमित्रा वसुन्धरा ॥ १ ॥ सांप्रतीनानामासां प्राग्भवस्त्वेवं— पूर्वं कासीनिवासिन्यौ, द्वे द्वे राजगृहालये । द्वे श्रावस्तिनिवासिन्यौ, द्वे कौशाम्ब्यां कृतस्थिती ॥ २ ॥ रामाख्यपितृका वृद्धकन्या धर्माख्यमातृकाः । श्रीपार्श्वपुष्पचूलान्तेवासिन्योऽष्टापि सुव्रताः ॥ ३ ॥ अन्ते च पक्षं संलिख्य, कृष्णावतंसकादिषु । समुत्पन्ना विमानेषु, नवपल्योपमायुषः ॥ ४ ॥ त्रिभिर्विशेषकं ॥ षट्पञ्चाशत इत्येवमिन्द्राणां सर्वसंख्यया । इन्द्राण्यो द्वे शते सप्तत्यधिके सन्ति ताः समाः ॥ ५ ॥ पुष्पचूलार्यिकाशिष्याः, श्रीपार्श्वार्पितसंयमाः । कृतार्द्धमासानशना, दिव्यां श्रियमशिश्रियन् ॥ ६ ॥ इत्यर्थतो ज्ञात० द्वितीयश्रुत० । अष्टाप्यग्रमहिष्योऽस्य, सौधर्मेन्द्राङ्गना इव । वसुनेत्रसहस्राढ्यं, लक्षं स्युः सपरिच्छदाः ॥ ॥ ७ ॥ सौधर्मेन्द्रवदेषोऽपि, स्थानं चक्राकृति स्फुरत् । विकुर्व्य भोगानेताभिः, सह भुङ्क्ते यथासुखम् ॥ ८ ॥ सैन्यानि पूर्ववत्सप्त, सप्तास्य सैन्यनायकाः । महावायुः १ पुष्पदन्तो २, महामाठर ३ एव च ॥ ९ ॥ महादामर्द्धिनामा ४ च, तथा लघुपराक्रमः ५ । महाश्वेतो ६ नारदश्च ७, नामतस्ते यथाक्रमम् ॥ १० ॥ तुर्यस्येन्द्रस्य षष्ठस्याष्टमस्य दशमस्य च । द्वादशस्यापि सेनान्यः, स्युरेतैरेव नामभिः ॥ ११ ॥ पादात्याधिपतिर्योऽस्य, नाम्ना लघुपराक्रमः । स पूर्वोक्तहरिनैगमैषिजैत्रपराक्रमः ॥ १२ ॥ अनेन नन्दिघोषाया, घण्टायास्ताडने कृते । युगपन्मुखरायन्ते, घण्टाः सर्वविमानगाः ॥ १३ ॥ अस्य यानविमानं च, प्रज्ञसं पुष्पकाभिधम् । पुष्पकाख्यः सुरश्चास्य, नियुक्तस्तद्विकुर्वणे ॥ १४ ॥ तथोक्तं स्थानाङ्गेऽष्टमे स्थानके—“एतेसु णं अट्ठसु कप्पेसु अट्ठ इंदा प०,

मिथ्यादृग्धर्मफलं ईशानदेव्यः

२०

२५

॥ ३४२ ॥

२८

तं० सक्के जाव सहस्सारे, एतेसि णं अट्ठण्हमिंदाणं अट्ठ परियाणिया विमाणा प०, तं०—पालए १ पुप्फए २ सोमणसे ३ सिरिवच्छे ४ णंदियावत्ते ५ कामकमे ६ पीतीमणे ७ विमले ८" इति । दाक्षिणात्येन निर्याणमार्गेणावतरत्यधः । अयं नन्दीश्वरद्वीपैशान्यां रतिकराचले ॥ १५ ॥ प्रागुक्तवज्राभ्यधिकशक्तिवैभवशोभनम् । शूलमस्य करे साक्षाच्छूलं प्रतीपचेतसाम् ॥ १६ ॥ ऐरावणाधिकस्फातिर्वृषोऽस्य वाहनं सुरः । स च प्रभौ जिगमिषौ, वृषीभूयोपतिष्ठते ॥ १७ ॥ तमस्कायाभिधा देवाः, सन्त्यस्य वशवर्त्तिनः । द्विविधं हि तमः स्वाभाविकं दिव्यानुभावजम् ॥ १८ ॥ तत्रेशानस्वर्गपतिश्चिकीर्षुस्तमसां भरम् । पार्षदादिक्रमात्प्राग्वद्, ज्ञापयत्याभियोगिकान् ॥ १९ ॥ तमस्कायिकदेवांस्तेऽप्यादिशन्त्याभियोगिकाः । तमस्कायं ततश्चाविष्कुर्वन्त्येतेऽधिपाज्ञया ॥ २० ॥ चतुर्विधाः परेऽप्येवं, विकुर्वन्ति सुरास्तमः । क्रीडारतिद्विषन्मोहगोप्यगुप्त्यादिहेतुभिः ॥ २१ ॥ विकुर्वणाशक्तिरपि, स्यादस्य वज्रपाणिवत् । सर्वत्र सातिरेकत्वं, किंतु भाव्यं विवेकिभिः ॥ २२ ॥ चत्वारोऽस्य लोकपालास्तत्रेशानावतंसकात् । असंख्येयसहस्राणां, योजनानामतिक्रमे ॥ २३ ॥ प्राच्यां विमानं सुमनोऽभिधानं सोमदिक्पतेः । विमानं सर्वतोभद्रं, याम्यां यमहरित्पतेः ॥ २४ ॥ अपरस्यां च वरुणविमानं वल्गुनामकम् । विमानं वैश्रमणस्योत्तरस्यां स्यात्सुवल्गुकम् ॥ २५ ॥ सौधर्मेशानवच्चैवं, स्वर्गेषु निखिलेष्वपि । स्वेन्द्रावतंसकाल्लोकपालावासाश्चतुर्दिशम् ॥ २६ ॥ उक्तंच—" कप्पस्स अंतपयरे नियकप्पवडिंसया विमाणाओ । इंदनिवासा तेसिं चउद्दिसिं लोगपाला णं ॥ २७ ॥" अग्रेतनानामप्योजयुजामेवं बिडौजसाम् । तृतीयतुर्य-

५

१०

१४

योर्वाच्यो, व्यत्ययो लोकपालयोः ॥ २८ ॥ यथा तृतीयेन्द्रस्यैते, क्रमात्सौधर्मराजवत् । चतुर्थेन्द्रस्य चेशाने, सुरेन्द्रस्येव ते क्रमात् ॥ २९ विमानानां चतुर्णामप्येषामधो विवर्त्तिनि । तिर्यग्लोके राजधान्यश्चतस्रः प्राग्वदाहिताः ॥ ३० ॥ सौधर्मेशानेन्द्रलोकपालानां यास्तु वर्णिताः । नगर्यः कुण्डलद्वीपे, द्वात्रिंशत्तास्त्वितः पराः ॥ ३१ ॥ स्थितिश्च सोमयमयोः, पल्योपमद्वयं भवेत् । पल्योपमस्य चैकेन, तृतीयांशेन वर्जितम् ॥ ३२ ॥ पूर्णं वैश्रमणस्याथ, स्थितिः पल्योपमद्वयम् । तृतीयांशाधिकं पल्यद्वयं च वरुणस्य सा ॥ ३३ ॥ पृथ्वी राजी च रयणी, विद्युच्चेत्यभिधानतः । चतुर्णामप्यमीषां स्युश्चतस्रः प्राणवल्लभाः ॥ ३४ ॥ एषामपत्यस्थानीयदेववक्तव्यतादिकम् । सर्वमप्यनुसंधेयं, सुधिया पूर्ववर्णितम् ॥ ३५ ॥ किंत्वमीषामौत्तराहा, वश्याः स्युरसुरादयः । उदीच्यामेव निखिलोऽधिकारः पूर्ववर्णितः ॥ ३६ ॥ तथाहुः—"चउसु विमाणेसु चत्तारि उद्देसा अपरिसेसा, नवरं ठितीए णाणत्तं—आदिदुगि तिभागूणा पलिया धणयस्स होंति दो चेव । दो सतिभागा वरुणे पलियमहावच्चदेवाणं ॥ ३७ ॥ भग०" तथा—स्थितेरल्पत्वेऽप्यमीषामाज्ञैश्वर्यं भवेन्महत् । लोकेऽल्पविभवत्वेऽपि, नृपाधिकारिणामिव ॥ ३८ ॥ उक्ता दशाधिपतयः, सौधर्मेशानयोर्यतः । सूत्रे तत्र सुरेन्द्रौ द्वौ, लोकपालास्तथाऽष्ट च ॥ ३९ ॥ तथाहुः—"सोहम्मीसाणेसु णं भंते ! कप्पेसु कइ देवा आहेवच्चं जाव विहरंति ?, गो० ! दस देवा जाव विहरंति" इत्यादि भगवतीसूत्रे । एवमीशानदेवेन्द्रः, सामानिकादिभिर्वृतः । विमानावासलक्षाणामिहाष्टाविंशतेः प्रभुः ॥ ४० ॥ उत्तरार्द्धलोकनेता, कान्त्या विद्योतयन् दिशः । असं-

ईशानेन्द्रतल्लोकपालाः

२०

२५



२८

ख्यदेवीदेवानामीशानस्वर्गवासिनाम् ॥ ४१ ॥ आधिपत्यमनुभवत्युदात्तपुण्यवैभवः । प्रतापनिस्तुलः शूलपा-
णिर्वृषभवाहनः ॥ ४२ ॥ त्रिभिर्विशेषकं । अहो माहात्म्यमस्योच्चैर्यत्सौधर्मेश्वरोऽपि हि । आद्दतः पार्श्वमभ्येतुं,
क्षमते न त्वनादृतः ॥ ४३ ॥ एवमालापसंलापौ, कर्त्तुं संमुखमीक्षितुम् । अनेन सह सौधर्माधीशोऽनीशो ह्यना-
हृतः ॥ ४४ ॥ ईशानेन्द्रस्तु सौधर्माधिपतेरन्तिकं सुखम् । यातीक्षते जल्पति च, नास्यानुज्ञामपेक्षते ॥ ४५ ॥
एवमुत्पन्नेषु नानाकार्येषु च परस्परम् । संभूय गोष्ठीमप्येतौ, कुर्वते प्रश्रयाश्रयौ ॥ ४६ ॥ गच्छेत्कदाचिदी-
शाननाथोऽपि प्रथमान्तिकम् । सौधर्मेन्द्रोऽप्यनुज्ञाप्य, यायादेतस्य सन्निधौ ॥ ४७ ॥ भो दक्षिणार्द्धलोकेन्द्र !,
सौधर्मेन्द्र ! हितावहम् । कार्यमेतदिति गिरा, वदेदीशाननायकः ॥ ४८ ॥ उत्तरार्द्धलोकनेतर्भो ईशानसुरेश्वर ! ।
सत्यमित्यादिकृत्यौघानुभौ विमृशतो मिथः ॥ ४९ ॥ तथाहुः—'पभू णं भंते ! सक्के देविंदे देवराया ईसाणस्स
देविंदस्स देवरण्णो अंतिअं पाउब्भवित्तए ?, हंता पभू !' इत्यादि भगवतीसूत्रे ३, १ । साधारणविमानादि-
हेतोर्जात्वेनयोर्द्वयोः । उत्पद्यते विवादोऽपि, मिथो निर्जरराजयोः ॥ ५० ॥ आध्माततात्रवत्क्रोधात्ताम्रानन-
विलोचनौ । कल्पान्तवह्नितपनाविवाशक्यनिरीक्षणौ ॥५१॥ चण्डरूपौ तदा चैतौ, कोऽन्यो वक्तुमपीश्वरः ? ।
योऽत्र युक्तमयुक्तं वा, निर्णीय शमयेत्कलिम् ॥ ५२ ॥ ततः क्षणान्तरादीषच्छान्तौ विचिन्त्य चेतसा ।
सनत्कुमारं देवेन्द्रं, स्मरतस्तावुभावपि ॥ ५३ ॥ सोऽपि ताभ्यां स्मर्यमाणो, विज्ञायावधिना द्रुतम् । तत्रागत्य
न्याय्यकार्यमाज्ञाप्य शमयेत्कलिम् ॥ ५४ ॥ ततः सनत्कुमारेन्द्रबोधितौ त्यक्तविग्रहौ । तदाज्ञां बिभ्रतो

मौलौ, तौ मिथः प्रीतमानसौ ॥ ५५ ॥ तथाहुः—'अत्थि णं भंते ! सक्कीसाणाणं देविंदाणं देवराईणं विवादा समुप्पज्जंति, ? हंता अत्थीत्यादि' भगवतीसूत्रे ३, १ । कदाचिच्च तथा क्रुद्धौ, युद्धसज्जौ परस्परम् । सामानिकाद्यो देवा, उभयोरपि संमताः ॥ ५६ ॥ अर्हद्दंष्ट्राक्षालनाम्बुसेकात्तौ गतमत्सरौ । निर्माय निर्मायतया, बोधयन्ति नयस्थितिम् ॥ ५७ ॥ पश्यतातितमां रागद्वेषयोर्दुर्विलङ्घताम् । यदेताभ्यां विडम्ब्येते, तादृशावप्यधीश्वरौ ॥ ५८ ॥ एवमीशानदेवेन्द्रोऽनुभवन्नपि वैभवम् । अर्हन्तमर्हद्धर्मं च, चित्तान्न त्यजति क्षणम् ॥५९॥ उत्तरार्द्धजिनेन्द्राणां, कल्याणकेषु पञ्चसु । करोत्यग्रेसरीभूय, सहोत्साहं महोत्सवान् ॥ ६० ॥ जिनेन्द्रपादान् भजते, भरतैरवतादिषु । नन्दीश्वरे च प्रत्यब्दं, करोत्यष्टाह्निकोत्सवान् ॥ ६१ ॥ असकृच्चार्हतां भावपूजामपि करोति सः । अष्टोत्तरं नटनटीशतं विकृत्य नर्त्तयन् ॥ ६२ ॥ देवपर्षत्समक्षं च, चमत्कारातिरेकतः । प्रशंसति नरस्यापि, धर्मदार्ढ्यादिकं गुणम् ॥ ६३ ॥ आराध्यानेकधा धर्मं, सम्यक्त्वाद्येवमुत्तमम् । समाप्यायुः सातिरेकं सागरोपमयोर्द्वयम् ॥६४॥ इतश्च्युत्वैशानराजो, महाविदेहभूमिषु । उत्पद्य प्राप्तचारित्रो, भावी मुक्तिवधूधवः ॥ ६५ ॥ इत्थं मया पृथुसुखौ प्रथमद्वितीयौ, स्वर्गावनर्गलशुभाचरणाधिगम्यौ । साधीश्वरौ श्रुतवतां वचनानुसाराद्यावर्णितौ विभवशालिसुरालिपूर्णौ । ( इन्द्रवज्रा ) ॥ ६६ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, षड्विंशो मधुरः समाप्तिमगमत्सर्गो निसर्गोज्ज्वलः ॥९६७॥ ॥ इति श्रीलोकप्रकाशे षड्विंशः सर्गः समाप्तः ॥ ग्रं० १०८४ ॥

सौधर्मेशानविवादे सनत्कुमार-प्रश्नुता

२०

२५



२८

# ॥ अथ सप्तविंशतितमः सर्गः प्रारभ्यते ॥

सौधर्मेशाननामानावुक्तौ स्वर्गौ सभर्तृकौ । स्वरूपमुच्यते किंचित्तृतीयतुर्ययोरथ ॥ १ ॥ सौधर्मेशानना-काष्ठ्यां, दूरमूर्ध्वं व्यवस्थितौ । योजनानामसंख्येयकोटाकोटिव्यतिक्रमे ॥ २ ॥ सनत्कुमारमाहेन्द्रौ, स्वर्गौ निसर्गसुन्दरौ । सौधर्मेशानवदिमावप्येकवलयस्थितौ ॥ ३ ॥ संस्थानमर्द्धचन्द्राभं, प्रत्येकमनयोर्भवेत् । उभौ पुनः समुदितौ, पूर्णचन्द्राकृती मतौ ॥४॥ तत्रापि सौधर्मस्योर्ध्वं, समपक्षं समानदिक् । सनत्कुमार ईशान—स्योर्ध्वं माहेन्द्र एव च ॥ ५ ॥ प्रतरा द्वादश प्राग्वद्, द्वयोः संगतयोरिह । प्रतिप्रतरमेकैकं, भवेद्विमानमिन्द्रकम् ॥ ६ ॥ वैडूर्यं १ रुचकं २ चैव, रुचिकं ३ च ततः परम् । अङ्कं ४ च स्फटिकं ५ चैव, तपनीयाख्य ६ मेव च ॥ ७ ॥ मेघ ७ मर्घ्यं च ८ हारिद्रं ९, नलिनं १० लोहिताक्षकम् ११ । वज्रं १२ चेति प्रतरेषु, द्वादशस्विन्द्रकाः क्रमात् ॥ ८ ॥ चतस्रः पङ्क्तयो दिक्षु, प्रतिप्रतरमिन्द्रकात् । अन्तरेषु विना प्राचीं, प्राग्वत्पुष्पावकीर्णकाः ॥ ९ ॥ एकोनपञ्चाशदष्टसप्तषट्पञ्चकाधिका । चतुस्त्रिद्व्येकाधिका च, चत्वारिंशत्ततः परं ॥ १० ॥ चत्वारिंशद-थैकोनचत्वारिंशद्विमानकाः । अष्टात्रिंशत्प्रतिपङ्क्ति, प्रतरेषु क्रमादिह ॥ ११ ॥ प्रथमप्रतरे सप्तदश त्र्यस्रा विमानकाः । प्रतिपङ्क्ति चतुष्कोणा, वृत्ताः षोडश षोडश ॥१२॥ सर्वे पङ्क्तिविमानाश्च, षण्णवत्यधिकं शतम् ।

५

१०

१२

द्वितीयप्रतरे त्रैधा, अपि षोडश षोडश ॥ १३ ॥ सर्वे च ते संकलिता, द्विनवत्यधिकं शतम् । तार्त्तीयीके प्रतिपङ्क्ति, वृत्ताः पञ्चदशोदिताः ॥१४॥ षोडश त्रिचतुष्कोणाः, सर्वेऽष्टाशीतियुक् शतम् । तुर्ये त्र्यस्रा षोडशान्ये, द्वैधाः पञ्चदशाखिलाः ॥१५॥ शतं चतुरशीत्याढ्यं,पञ्चमे प्रतरे पुनः । त्रैधा अपि पञ्चदश, सर्वेऽशीत्यधिकं शतम् ॥ १६ ॥ पञ्चदश पञ्चदश, षष्ठे त्रिचतुरस्रकाः । वृत्ताश्चतुर्दशैवं च, षट्सप्ततियुतं शतम् त्र्यस्राः, प्रोक्ताः पञ्चदशोत्तमैः । वृत्ताश्च चतुरस्राश्च, चतुर्दश चतुर्दश ॥१८॥ द्विसप्तत्या समधिकं, शतं सर्वेऽष्टमे ॥ १७ ॥ सप्तमे प्रतरे पुनः । चतुर्दशैव त्रेधापि, सर्वेऽष्टषष्ट्युक् शतम् ॥ १९ ॥ नवमे त्रिचतुष्कोणांश्चतुर्दश चतुर्दश । वृत्तास्त्रयोदशैवं च, चतुःषष्टियुतं शतम् ॥ २० ॥ त्र्यस्राश्चतुर्दशान्ये च, द्वैधा अपि त्रयोदश । षष्ट्याधिकं शतं सर्वे, दशमे प्रतरे पुनः ॥ २१ ॥ एकादशे त्रिधाप्येते, त्रयोदश त्रयोदश । सर्वे पुनः संकलिताः, षट्पञ्चाशद्युतं शतम् ॥ २२ ॥ द्वादशे त्रिचतुष्कोणास्त्रयोदश त्रयोदश । वृत्ताश्च द्वादशैवं च, द्विपञ्चाशं शतं समे ॥ २३ ॥ एवं च पङ्क्तिवृत्तानां, साशीतिरिह षट्शती । पङ्क्तित्र्यस्राणां च सप्त, शतानि द्वादशोपरि ॥ २४ ॥ स्यात्पङ्क्तिचतुरस्राणां, सषण्णवतिषट्शती । द्वादशानामिन्द्रकाणां, क्षेपेऽत्र सर्वसंख्यया ॥ २५ ॥ पाङ्क्तयानि विमानानि, स्युः शतान्येकविंशतिः । भवन्त्यन्यानि पुष्पावकीर्णानि तानि संख्यया ॥ २६ ॥ सहस्राः सप्तनवतिर्लक्षाण्येकोनविंशतिः । शतानि नव सर्वाग्राद्विमानलक्षविंशतिः ॥ २७ ॥ तत्र द्वादश लक्षाणि, सनत्कुमारचक्रिणः । लक्षाण्यष्ट विमानानां, माहेन्द्राधीश्वरस्य च ॥ २८ ॥ सनत्कुमारमाहेन्द्रसुरेन्द्रयोः पृथक् पृथक् । सौधर्मे-

तृतीयतुर्ययोस्त्र्यस्रादिविमानसंख्या
१५

२०

॥३४५॥
२५
२६

शानवद्वृत्तादिषु स्वामित्वमुह्यताम् ॥२९॥ संख्या सनत्कुमारे च, वृत्तानां पङ्क्तिवर्त्तिनाम् । द्वाविंशत्यधिका पञ्चशती प्राच्यैर्निरूपिता ॥३०॥ त्रिकोणानां सर्वसंख्या, षट्पञ्चाशं शतत्रयम् । चतुष्कोणानां तथाष्टचत्वारिंशं शतत्रयम् ॥३१॥ षड्विंशा द्वादशशती, पाङ्क्तेयानां भवेदिह । लक्षाण्येकादशैवाष्टनवतिश्च सहस्रकाः ॥३२॥ सचतुःसप्ततिः सप्तशती पुष्पावकीर्णकाः । एवं द्वादश लक्षाणि, तृतीयस्य सुरेशितुः ॥३३॥ तुर्ये वृत्तविमानानां, सप्तत्याऽभ्यधिकं शतम् । षट्पञ्चाशत्समधिकं, त्रिकोणानां शतत्रयम् ॥ ३४ ॥ चतुष्कोणानां तथाष्टचत्वारिंशं शतत्रयम् । शतान्यष्ट चतुःसप्तत्याढ्यानि सर्वसंख्यया ॥ ३५ ॥ सप्त लक्षाण्यथ नवनवतिश्च सहस्रकाः । षड्विंशं च शतं पुष्पावकीर्णा इह निश्चिताः ॥ ३६ ॥ एषां योगेऽष्टलक्षाणि, माहेन्द्रस्य सुरेशितुः । विमानानीशितव्यानि, भाव्यानि भव्यधीधनैः ॥ ३७ ॥ अमी विमानाः सर्वेऽपि, घनवातप्रतिष्ठिताः । श्यामं विना चतुर्वर्णा, मणिरत्नविनिर्मिताः ॥३८॥ घनवातोऽतिनिचितो, निश्चलो वातसंचयः । जगत्स्वाभाव्यतस्तत्र, विमानाः शश्वदास्थिताः ॥ ३९ ॥ षड्विंशतिः शतान्येषु, पृथ्वीपिण्डो निरूपितः । शतानि षड् योजनानां, प्रासादाः स्युरिहोच्छ्रिताः ॥ ४० ॥ सौधर्मेशाननिष्ठानां, विमानानामपेक्षया । अत्युत्कृष्टवर्णगन्धरसस्पर्शा अमी मताः ॥ ४१ ॥ सौधर्मेशानवच्छेषं, स्वरूपं भाव्यतामिह । विष्कम्भायामपरिधिमानं तु प्राक् प्रदर्शितम् ॥ ४२ ॥ अथैतेषु विमानेषु, पूर्वपुण्यानुसारतः । उत्पद्यन्ते सुरास्तत्र, रीतिस्तु प्राक् प्रपञ्चिता ॥ ४३ ॥ पद्मकेसरवद्गौरास्तेऽथ सर्वाङ्गभूषणाः । वराहचिह्नमुकुटाः, सनत्कुमारनाकिनः ॥ ४४ ॥ सिंहचिह्नधारिचारुकिरीटरम्य-

५

१०

१४

मौलयः। देवा विशिष्टद्युतयो, माहेन्द्रस्वर्गवासिनः ॥ ४५ ॥ जघन्यतोऽपि पाथोधिद्वितयस्थितयः सुराः। सनत्कुमारेऽथोत्कर्षात्, सप्तसागरजीविनः ॥ ४६ ॥ माहेन्द्रे तु जघन्येन, साधिकाब्धिद्वयायुषः। उत्कर्षतः पुनः सातिरेकसप्तार्णवायुषः ॥ ४७ ॥ एकस्य सागरस्यांशाः, कल्प्यन्ते द्वादशोद्दशाः। स्वर्गयोरेतयोर्भागा, ज्ञेयाः स्थितिनिरूपणे ॥ ४८ ॥ प्रथमप्रतरे तत्रोत्कृष्टा जलनिधिद्वयम्। स्थितिः पञ्चलवोपेतं, द्वितीयप्रतरे पुनः ॥ ४९ ॥ दशभागाधिकं वार्द्धिद्वयं स्थितिर्गरीयसी। त्रिभिर्भागैः समधिकास्तृतीये सागरास्त्रयः ॥५०॥ चतुर्थे प्रतरे साष्टभागं वारांनिधित्रयम्। पञ्चमे सैकभागं च, वारांनिधिचतुष्टयम् ॥ ५१ ॥ षड्भागाभ्यधिकं षष्ठे, तदेव सप्तमे पुनः। न्यूनमेकेन भागेन, सागरोपमपञ्चकम् ॥५२॥ एतदेव चतुर्भागाभ्यधिकं प्रतरेऽष्टमे। नवमे नवभागाढ्यमेतत्पयोधिपञ्चकम् ॥५३॥ साधिका दशमे द्वाभ्यां, भागाभ्यां षट् पयोधयः। एकादशेऽप्येत एव, साधिकाः सप्तभिर्लवैः ॥ ५४ ॥ प्रतरे द्वादशे चात्र, देवानां परमा स्थितिः। अर्णवाः सप्त सर्वत्र; जघन्या त्वम्बुधिद्वयम् ॥ ५५ ॥ सनत्कुमारे निर्दिष्टा, येयं ज्येष्ठेतरा स्थितिः। माहेन्द्रेऽपि सैव किंतु, ज्ञेया सर्वत्र साधिका ॥ ५६ ॥ अत्रापि सातिरेकत्वं, सामान्योक्तमपि श्रुते। पल्योपमस्यासंख्येयभागेनेति विभाव्यताम् ॥ ५७ ॥ देहोच्चत्वं सुराणां स्यादिह स्थित्यनुसारतः। द्विसागरायुषस्तत्र, सप्तहस्तोच्चभूघनाः ॥ ५८ ॥ त्रिपाथोधिजीविनां तु, कराः षट् तनुतुङ्गता। एकादशविभक्तस्य, चत्वारोऽंशाः करस्य च ॥ ५९ ॥ त्रयो भागाः कराः षट् च, चतुर्जलधिजीविनाम्। द्वौ भागौ षट् करास्तुङ्गो, देहः पञ्चार्णवायुषाम् ॥ ६० ॥ एको भागः षट् कराश्च, षट्सा-

तृतीयतुर्ययोः देवानां स्थितिः देहोच्छ्वासादि

२०

२५



२८

गरोपमायुषाम् । सप्ताब्धिस्थितयः पूर्णषट्करोत्तुङ्गविग्रहाः ॥ ६१ ॥ ते चोच्छ्वसन्ति मासेनार्णवद्वयायुषस्ततः । स्यात्पक्षवृद्धिरुच्छ्वासान्तरे सप्तार्णवावधि ॥ ६२ ॥ द्वाभ्यां त्रिभिश्चतुःपञ्चषट्सप्तभिः सहस्रकैः । स्थितेरपेक्षयाऽब्दानामाहारयन्ति पूर्ववत् ॥ ६३ ॥ यथोक्तसागरेभ्यश्च, हीनाधिकायुषां पुनः । आहारोच्छ्वासदेहादिमानं हीनाधिकं भवेत् ॥ ६४ ॥ कामभोगाभिलाषे तु, सौधर्मस्वर्गवासिनीः । पल्योपमाधिकदशपल्योपमान्तजीविनीः ॥ ६५ ॥ प्राच्यपुण्यानुसारेण, लब्धाधिकाधिकस्थितीः । स्मरन्ति चेतसा देवीः, स्वार्हाः कामानलैधसा ॥ ६६ ॥ ततस्ता अपि जानन्ति, सद्योऽङ्गस्फुरणादिभिः । स्वकामुकरिरंसां द्रागत्यन्तचतुराशयाः ॥ ६७ ॥ ततश्चाद्भुतशृङ्गारनेपथ्यसुषमाञ्चिताः । उपायान्ति तदभ्यर्णं, भर्त्तुर्गृहमिवाङ्गनाः ॥ ६८ ॥ ततस्ता विनिवेश्यैते, क्रोडसिंहासनादिषु । भुजोपपीडमालिङ्ग्य, पीडयन्तः स्तनौ मुहुः ॥ ६९ ॥ चुम्बन्तोऽधरबिम्बादौ, स्पृशन्तो जघनादिषु । एवं संस्पर्शमात्रेण, तृप्यन्ति सुरतैरिव ॥ ७० ॥ देव्योऽपि ताः स्पर्शभोगैस्तथा दिव्यप्रभावतः । शरीरान्तःपरिणतैस्तृप्यन्ति शुक्रपुद्गलैः ॥ ७१ ॥ एवं पञ्चाक्षविषयास्वादाह्लादैर्निरन्तरम् । जानन्त्येते गतमपि, कालं नैकनिमेषवत् ॥ ७२ ॥ ज्ञानेनावधिना त्वेते, द्वितीयां शर्कराप्रभाम् । पश्यन्त्यधस्तलं यावत्पद्मलेश्याः स्वभावतः ॥ ७३ ॥ गर्भजौ नरतिर्यञ्चौ, संख्येयस्थितिशालिनौ । उत्पद्येते इहैतेऽपि, च्युत्वा यान्त्येतयोर्द्वयोः ॥ ७४ ॥ एकसामयिकी प्राग्वत्संख्योत्पत्तिविनाशयोः । एकसामयिकं ज्ञेयं, जघन्यं चान्तरं तयोः ॥ ७५ ॥ युक्ता मुहूर्त्तैर्विंशत्या, दशभिश्च दिनाः क्रमात् । नव द्वादश च ज्येष्ठान्तरं स्यादनयोर्दिवोः ॥ ७६ ॥ सन-

त्कुमारमाहेन्द्रस्वर्गयोरमृताशिनाम् । उक्तं स्वरूपमनयोः, स्वामिनोस्तदथोच्यते ॥ ७७ ॥ प्रतरे द्वादशे तत्र, सनत्कुमारताविषे । सौधर्मवदशोकाद्याः, प्राच्यादिष्ववतंसकाः ॥ ७८ ॥ मध्ये सनत्कुमारावतंसकः पूर्ववद्भवेत् । तत्रोपपातशय्यायामुपपातसभास्पृशि ॥ ७९ ॥ उत्पद्यते खलु सनत्कुमारेन्द्रतया कृती । कृतपुण्यः करोत्युक्तरीत्याऽर्हदर्चनादिकम् ॥ ८० ॥ ततः सिंहासनासीनश्चारुशृङ्गारभासुरः । सामानिकैर्द्विसप्तत्या, सहस्रैः परितो वृतः ॥ ८१ ॥ पञ्चपल्योपमाढ्यार्द्धपञ्चमाम्भोधिजीविभिः । अन्तःपर्षद्गतैर्देवसहस्रैरष्टभिर्वृतः ॥ ८२ ॥ चतुःपल्याधिकसार्द्धचतुःसागरजीविभिः । मध्यपर्षद्गतैर्देवसहस्रैर्दशभिर्वृतः ॥ ८३ ॥ त्रिपल्याभ्यधिकाध्यर्द्धचतुरर्णवजीविभिः । सहस्रैश्च द्वादशभिर्जुष्टो बाह्यसभासदाम् ॥ ८४ ॥ त्रायस्त्रिंशैर्मन्त्रिभिश्च, लोकपालैश्च पूर्ववत् । आश्रितः सप्तभिः सैन्यैः, सैन्याधिपैश्च सप्तभिः ॥ ८५ ॥ द्विसप्तत्या सहस्रैश्च, पृथक् पृथक् चतुर्दिशम् । सेवितः सज्जकवचैः, शस्त्रोग्रैरात्मरक्षकैः ॥ ८६ ॥ विमानावासलक्षाणां, द्वादशानामधीश्वरः । तद्वासिनां च देवानामसंख्यानां महौजसाम् ॥ ८७ ॥ सदैश्वर्यमनुभवत्युदात्तपुण्यवैभवः । दिव्यशक्तिसंप्रयुक्तपटुनाटकदत्तदृक् ॥ ८८ ॥ अष्टभिः कुलकं । अस्य यानविमानं च, भवेत्सौमनसाभिधम् । देवः सौमनसाख्यश्च, नियुक्तस्तद्विकुर्वणे ॥ ८९ ॥ निजवैक्रियलब्ध्या तु, देवरूपैर्विकुर्वितैः । जम्बूद्वीपांश्चतुरोऽयं, पूर्णान् पूरयितुं क्षमः ॥ ९० ॥ तिर्यक् पुनरसंख्येयान्, भर्तुं द्वीपाम्बुधीन् क्षमः । सौधर्मेशानाधिराजापेक्षया किल भूयसः ॥ ९१ ॥ भोगेच्छुस्तु सुधर्मायां, जिनास्थ्याशातनाभिया । जम्बूद्वीपसमं स्थानं, चक्राकृति

कामभोगरीतिः परीवारः

२०

२५



२८

विकुर्वयेत् ॥ ९२ ॥ मध्ये रत्नपीठिकाख्यं, प्रासादं रचयत्ययम् । षड्योजनशतोत्तुङ्गम्, रत्नचन्द्रोदयाश्चितम्
॥ ९३ ॥ तत्र सिंहासनं रत्नपीठिकायां सृजत्यसौ । न शक्रेशानवच्छय्यां, संभोगाभावतस्तथा ॥ ९४ ॥
सामानिकादिकाशेषपरिवारसमन्वितः । लज्जनीयरताभावात्तत्रोपैत्यथ वासवः ॥ ९५ ॥ सौधर्मस्वर्गवासिन्यस्त-
द्योग्यास्त्रिदशाङ्गनाः । तत्रायान्ति सहैताभिर्भुङ्क्ते वैषयिकं सुखम् ॥ ९६ ॥ माहेन्द्रेन्द्रादयोऽप्येवं, देवेन्द्रा अच्युता-
वधि । चक्राकृतिस्थानकादि, विकृत्य भुञ्जते सुखम् ॥ ९७ ॥ तत्र चक्राकृतिस्थाने, प्रासादांस्तु सृजन्त्यमी ।
स्वस्वविमानप्रासादोत्तुङ्गान् सिंहासनाश्चितान् ॥ ९८ ॥ एवमैश्वर्ययुक्तोऽपि, विरक्त इव धार्मिकः । महोपका-
रिणं प्राज्ञ, इव धर्ममविस्मरन् ॥ ९९ ॥ बहूनां साधुसाध्वीनां, जिनधर्मदृढात्मनाम् । श्रावकाणां श्राविकाणां,
सम्यक्त्वादिव्रतस्पृशाम् ॥ १०० ॥ हितकामः सुखकामो, निःश्रेयसाभिलाषुकः । गुणग्राही गुणवतां, गुण-
वान् गुणिपूजकः ॥ १ ॥ सनत्कुमाराधिपतिर्भव्यः सुलभबोधिकः । महाविदेहेषूत्पद्य, भवे भाविनि सेत्स्यति
॥ २ ॥ माहेन्द्रदेवलोकेऽपि, प्रतरे द्वादशे स्थिताः । पञ्चावतंसका अङ्कादय ईशाननाकवत् ॥ ३ ॥ मध्यस्थि-
तेऽथ माहेन्द्रावतंसकविमानके । उत्पद्योत्पातशय्यायां, प्राग्वत्कृतजिनार्चनः ॥ ४ ॥ सिंहासनसमासीनः,
पीनश्रीभाग्यभासुरः । सामानिकानां सप्तत्या, सहस्रैः परितो वृतः ॥ ५ ॥ सप्तषट्पञ्चपल्याढ्यां, सार्द्धार्णव-
चतुष्टयीम् । यथाक्रमं विक्रमाद्यैर्दधद्भिः स्थितिमायुषः ॥ ६ ॥ षड्भिरान्तरपार्षद्यैरष्टाभिर्मध्यपार्षदैः । दशभिः
बाह्यपार्षद्यैः, सेव्यः सुरसहस्रकैः ॥ ७ ॥ चतुर्भिश्च लोकपालैः, सप्तभिः सैन्यनायकैः । सैन्यैश्च सप्तभिः

सेवाचतुरैरनुशीलितः ॥ ८ ॥ प्राच्यादिदिक्षु प्रत्येकमुद्दण्डायुधपाणिभिः । जुष्टः सहस्रैः सप्तत्या, निर्जरैरात्मरक्षकैः ॥ ९ ॥ जम्बूद्वीपान् सातिरेकान्, चतुरश्च विकुर्वितैः । रूपैर्भर्तुं क्षमस्तिर्यगसंख्यद्वीपवारिधीन् ॥ १० ॥ विमानावासलक्षाणामिहाष्टानामधीश्वरः । देवानां भूयसामेवं, माहेन्द्रस्वर्गवासिनाम् ॥ ११ ॥ ईशानोऽसौ विजयते, दिव्यनाटकदत्तहृत् । माहेन्द्रेन्द्रः सातिरेकसप्तसागरजीवितः ॥ १२ ॥ नवभिः कुलकं ॥ अस्य यानविमानं च, श्रीवत्साख्यं प्रकीर्तितम् । श्रीवत्सनामा देवश्च, नियुक्तस्तद्विकुर्वणे ॥ १३ ॥

सनत्कुमारमाहेन्द्रस्वर्गाभ्यामूर्ध्वमुल्लसन् । असंख्यकोटाकोटीनां, योजनानामतिक्रमे ॥ १४ ॥ सनत्कुमारमाहेन्द्रोपरिस्थितः समानदिक् । ब्रह्मलोकाभिधः स्वर्गो, भाति पूर्णेन्दुसंस्थितः ॥ १५ ॥ षडत्र प्रतराः प्राग्वत्प्रतिप्रतरमिन्द्रकम् । अञ्जनं १ वरमालं च २, रिष्टं ३ च देवसंज्ञकम् ४ ॥ १६ ॥ सोमं च ५ मङ्गलं ६ चैव, क्रमादेभ्यश्चतुर्दिशम् । विमानपङ्क्तयः प्राग्वत्तत्र पुष्पावकीर्णकाः ॥ १७ ॥ सप्तषट्पञ्चयुक्त्रिंशत्, चतुस्त्रिद्व्यधिका च सा । प्रतिपङ्क्ति विमानाः स्युः, प्रतरेषु क्रमादिह ॥ १८ ॥ प्रथमप्रतरे तत्र, प्रतिपङ्क्ति विमानकाः । त्रयोदश त्रिकोणाः स्युर्द्वादश द्वादशापरे ॥ १९ ॥ अष्टचत्वारिंशमेवं, पाङ्क्तेयानां शतं मतम् । त्रैधा अपि द्वितीयेऽस्मिन्, द्वादश द्वादशोदिताः ॥ २० ॥ सर्वे शतं चतुश्चत्वारिंशं चाथ तृतीयके । वृत्ता एकादश द्वैधा, द्वादश द्वादशापरे ॥ २१ ॥ चत्वारिंशं शतं सर्वे, प्रतरेऽथ तुरीयके । वृत्ता द्वादश किंचैकादश त्रिचतुरस्रकाः ॥ २२ ॥ सर्वे शतं च षट्त्रिंशं, पञ्चमे प्रतरे पुनः । एकादशमितास्त्रैधा, द्वात्रिंशं च शतं समे ॥ २३ ॥

२०

२५
॥ ३४८ ॥

२८

चतुःसप्ततियुक्ते द्वे,
षष्ठेऽथ प्रतरे वृत्ताः, प्रतिपङ्क्ति दशापरे । द्विधाप्येकादश पृथगष्टाविंशं शतं समे ॥ २४ ॥ चतुःसप्ततियुक्ते द्वे,
शते च पङ्क्तिवृत्तकाः । भवन्त्येवमिन्द्रकाणां, षण्णां संयोजनादिह ॥ २५ ॥ पङ्क्तित्र्यस्राश्च चतुरशीतियुक्तं शत-
द्वयम् । द्वे शते पङ्क्तिचतुरस्रकाः षट्सप्ततिस्पृशी ॥ २६ ॥ चतुस्त्रिंशाष्टशत्येवं, पाङ्क्तेयाः सर्वसंख्यया । निर्दिष्टाः
पञ्चमस्वर्गे, पञ्चमज्ञानचारुभिः ॥ २७ ॥ लक्षास्तिस्रः सहस्राणां, नवतिश्च नवाधिका । शतमेकं सषट्-
षष्टिरत्र पुष्पावकीर्णकाः ॥ २८ ॥ विमानानां च लक्षाणि, चत्वारि सर्वसंख्यया । निर्दिष्टा ब्रह्मलोकेऽमी,
घनवाते प्रतिष्ठिताः ॥ २९ ॥ प्रासादानामुच्चत्वेषु, शतानि सप्त निश्चितम् । पृथ्वीपिण्डो योजनानां, शतानि
पञ्चविंशतिः ॥ ३० ॥ भवन्ति वर्णतश्चामी, शुक्लपीतारुणप्रभाः । ज्ञेयं शेषमशेषं तु, स्वरूपमुक्तया दिशा ॥
॥ ३१ ॥ उत्पद्यन्तेऽमीषु देवतया सुकृतशालिनः । कृतार्हदर्चनाः प्राग्वद्दिव्यसौख्यानि भुञ्जते ॥ ३२ ॥ मधु-
कपुष्पवर्णाङ्गाः, प्रभाप्राग्भारभासुराः । छागचिह्नाढ्यमुकुटाः, पद्मलेश्याश्रिताशयाः ॥ ३३ ॥ तथाह जीवाभि-
गमः—'बंभलोगलंतगा देवा अल्लमहूयपुप्फवन्नाभा' यत्तु संग्रहण्यां—एते पद्मकेसरगौरा उक्ताः "तत्पक्वमधुक-
पुष्पपद्मकेसरयोर्वर्णे न विशेष" इति तद्वृत्ताविति ध्येयं । जघन्यतोऽप्यमी सप्तसागरस्थितयः सुराः । उत्कर्षतः
पुनः पूर्णदशाम्भोनिधिजीविनः ॥ ३४ ॥ प्रथमप्रतरे त्वत्र, नाकिनां परमा स्थितिः । सार्द्धाः सप्तार्णवास्ते च,
द्वितीयेऽष्टौ प्रकीर्त्तिताः ॥ ३५ ॥ तृतीयेऽष्टाब्धयः सार्द्धाश्चतुर्थे च नवैव ते । पञ्चमे नव सार्द्धाश्च, षष्ठे पूर्णा
दशाब्धयः ॥ ३६ ॥ सर्वत्रापि जघन्या तु, सप्तैव जलराशयः । तथा सप्तार्णवायुष्का, येऽत्र ते षट्करोच्छ्रिताः

॥ ३७ ॥ अष्टाकूपारायुषां तु, देहमानं भवेदिह । कराः पञ्चैकादशांशैः, षड्भिरभ्यधिका अथ ॥ ३८ ॥ नवाब्धिजीविनां पञ्च, कराः पञ्चलवाधिकाः । दशार्णवायुषां पञ्च, कराश्चतुर्लवाधिकाः ॥ ३९ ॥ स्यादेतेषां निजनिजस्थितिसागरसंमितैः । भुक्तिर्वर्षाणां सहस्रैः, पक्षैरुच्छ्वास ईरितः ॥ ४० ॥ एषां कामाभिलाषे तु, देव्योऽभ्यायान्ति चिन्तिताः । सौधर्मस्वर्गवास्तव्यास्तद्योग्याः कान्तिभासुराः ॥ ४१ ॥ तद्राजधानीस्थानीयं, मनोभवमहीपतेः । दिव्यमुन्मादजनकं, स्वरूपं स्वर्गयोषिताम् ॥ ४२ ॥ विलोकयन्तस्तेऽक्षामकामाभिरामया दृशा । प्रतीच्छन्तः कटाक्षांश्च, तासामाकूतकोमलान् ॥ ४३ ॥ एवं पश्यन्त एवामी, तृप्यन्ति सुरतैरिव । प्रागुक्तापेक्षया स्वल्पकामोद्रेकाः सुधाभुजः ॥ ४४ ॥ देव्योऽपि ताः परिणतैस्तादृशैर्दिव्यानुभावतः । दूरादपि निजाङ्गेषु, तृप्यन्ति शुक्रपुद्गलैः ॥ ४५ ॥ सेवार्त्तेन विना ये स्युः, पञ्चसंहननाश्रिताः । गर्भजास्ते नृतिर्यञ्च, उत्पद्यन्तेऽत्र ताविषे ॥ ४६ ॥ नृतिरश्चोरेव गर्भजयोश्च्युत्वोद्भवन्त्यमी । च्यवमानोत्पद्यमानसंख्या त्वत्रापि पूर्ववत् ॥ ४७ ॥ अत्रोत्पत्तिच्यवनयोरन्तरं परमं यदि । द्वाविंशतिर्दिनान्यर्द्धाधिकान्येव भवेत्तदा ॥ ४८ ॥ वसुमत्यास्तृतीयायाः, पश्यन्त्यधस्तलावधि । इहत्या निर्जराः स्वच्छतमेनावधिचक्षुषा ॥ ४९ ॥ अत्रापि प्रतरे षष्ठे, ब्रह्मलोकावतंसकः । अशोकाद्यवतंसानां, मध्ये सौधर्मवद्भवेत् ॥ ५० ॥ तत्र च ब्रह्मलोकेन्द्रो, देवराजो विराजते । सामानिकसुरैः षष्ट्या, सहस्रैः सेवितोऽभितः ॥ ५१ ॥ पञ्चपल्योपमोपेतसार्द्धाष्टसागरायुषाम् ।

चतुःसहस्र्या देवानामन्तःपर्षदि सेवितः ॥ ५२ ॥ षड्भिर्देवसहस्रैश्च, मध्यपर्षदि सेवितः । चतुःपल्योपमोपेत-
सार्द्धाष्टाम्भोधिजीविभिः ॥ ५३ ॥ बाह्यपर्षदि देवानां, सहस्रैरष्टभिर्वृतः । पल्योपमत्रयोपेतसार्द्धाष्टवार्द्धिजी-
विभिः ॥ ५४ ॥ त्रायस्त्रिंशैर्लोकपालैर्मित्रमन्त्रिपुरोहितैः । प्राग्वद्यानविमानाद्यधिकारिवाहनादिभिः ॥ ५५ ॥
एकैकस्यां दिशि षष्ट्या, सहस्रैरात्मरक्षकैः । अनीकैः सप्तभिः सप्तभिः सेव्योऽनीकनायकैः ॥ ५६ ॥ अन्ये-
षामप्यनेकेषां, देवानां ब्रह्मवासिनाम् । विमानावासलक्षाणां, चतुर्णामप्यधीश्वरः ॥ ५७ ॥ जम्बूद्वीपानष्ट
पूर्णान्, रूपैर्नव्यैर्विकुर्वितैः । क्षमः पूरयितुं तिर्यगसंख्यद्वीपवारिधीन् ॥ ५८ ॥ कृतार्हदर्चनः प्राग्वद्धर्मस्थिति-
विशारदः । साम्राज्यं शास्ति संपूर्णदशसागरजीवितः ॥ ५९ ॥ नवभिः कुलकं ॥ अस्य यानविमानं च,
नन्द्यावर्त्तमिति स्मृतम् । नन्द्यावर्त्ताभिधो देवो, नियुक्तस्तद्विकुर्वणे ॥ ६० ॥

अथास्य ब्रह्मलोकस्य, वरिष्ठे रिष्ठनामनि । तृतीयप्रतरे सन्ति, लोकान्तिकाः सुरोत्तमाः ॥ ६१ ॥ तथाह्य-
तिक्रम्य तिर्यग्, जम्बूद्वीपादितः परम् । द्वीपाम्बुधीनसंख्येयान्, द्वीपोऽरुणवरः स्थितः ॥ ६२ ॥ स्थानद्विगुण-
विस्तीर्णतया सोऽसंख्यविस्तृतः । द्विगुणेनायमरुणवरेण वेष्टितोऽब्धिना ॥ ६३ ॥ अथ द्वीपस्यास्य बाह्यवे-
दिकान्तप्रदेशतः । अवगाह्यारुणवरनामधेयं पयोनिधिम् ॥ ६४ ॥ योजनानां सहस्रान् द्वाचत्वारिंशतमत्र
च । जलोपरितलादूर्ध्वमप्कायविकृतिर्महान् ॥ ६५ ॥ तमस्कायो महाघोरान्धकाररूप उद्गतः । परितोऽ-
ब्धिमिमं रुन्धन्, वलयाकृतिनाऽऽत्मना ॥ ६६ ॥ स्थिरार्केन्दुकराक्लिष्टैः, संभूय तिमिरैरिव । रचितः

५

१०

१४

स्वनिवासाय, भीमदुर्गो महाम्भसि ॥ ६७ ॥ योजनानां सप्तदश, शतान्यथैकविंशतिम् । यावदूर्ध्वं समभित्त्याकार एवायमुद्गतः ॥ ६८ ॥ ततश्च विस्तरंस्तिर्यक्क्रमादसंख्यविस्तृतिः । निक्षिप्य कुक्षौ चतुरः, सौधर्मादींस्त्रिविष्टपान् ॥ ६९ ॥ ततोऽप्यूर्ध्वं ब्रह्मलोके, तृतीयप्रस्तटावधि । उद्गत्य निष्ठितः श्रान्त, इवाविश्रममुत्पतन् ॥ ७० ॥ अधश्चायं समभित्त्याकारत्वाद्वलयाकृतिः । शरावबुध्नं तुलयत्यूर्ध्वं कुर्कुटपञ्जरम् ॥७१॥ आदेरारभ्योर्ध्वमयं, संख्येययोजनावधिम् । संख्येयानि योजनानि, विस्तारतः प्रकीर्त्तितः ॥ ७२ ॥ ततः परमसंख्येययोजनान्येष विस्तृतः । परिक्षेपेण सर्वत्राप्येषोऽसंख्येययोजनः ॥७३॥ यद्यप्यधस्तमस्कायः, संख्येयविस्तृतिः स्वयम् । तथाप्यस्य कुक्षिगतासंख्यद्वीपपयोनिधेः ॥ ७४ ॥ परिक्षेपस्त्वसंख्येययोजनात्मैव संभवेत् । क्षेत्रस्यासंख्यमानस्य, परिक्षेपो ह्यसंख्यकः ॥ ७५ ॥ अन्तर्बाह्यपरिक्षेपविशेषस्त्विह नोदितः । उभयोरपि तुल्यरूपतयाऽसंख्येयमाततः ॥ ७६ ॥ इत्थमस्य महीयस्तामाहुः सिद्धान्तपारगाः । महर्द्धिकः कोऽपि देवो, यो जम्बूद्वीपमञ्जसा ॥ ७७ ॥ तिसृणां चप्पुटिकानां, मध्य एवैकविंशतिम् । वारान् प्रदक्षिणीकृत्यागच्छेद्गत्या ययाऽथ सः ॥ ७८ ॥ तयैव गत्या काचित्कं, तमस्कायं व्यतिव्रजेत् । मासैः षड्भिरपि काचित्कं तु नैव व्यतिव्रजेत् ॥७९॥ तत्र संख्येयविस्तारं, व्यतिव्रजेन्न चापरम् । एवं महीयसि तमस्कायेऽथाब्दाः सविद्युतः ॥८०॥ प्रादुर्भवन्ति वर्षन्ति, गर्जन्ति विद्युतोऽपि च । द्योतन्ते विलसद्देवासुरनागविनिर्मिताः ॥ ८१ ॥ तथाहुः—'अत्थि णं भंते ! तमुक्काए उराला बलाहया संसेयंति संमुच्छंति वासं वासंति, ? हंता अत्थि' इत्यादि

२०

२५

॥ ३५० ॥

२८

भगवतीसूत्रे ६-५। यद्यप्यत्र नरक्षेत्राद्बहिर्नाङ्गीकृतं श्रुते। घनगर्जितवृष्ट्यादि, तथापि स्यात्सुरोद्भवम् ॥ ८२ ॥ यथा नराः स्वभावेन, लङ्घितुं मानुषोत्तरम्। नेशा विद्यालब्धिदेवानुभावाल्लङ्घयन्त्यपि ॥८३॥ अत्रोक्ता विद्युतो याश्च, भास्वरास्तेऽपि पुद्गलाः। दिव्यानुभावजा ज्ञेया, बादराग्नेरभावतः ॥ ८४ ॥ तथाहुः—"इह न बादरास्तेजस्कायिका मन्तव्याः, इहैव तेषां निषेत्स्यमानत्वात्, किंतु देवप्रभावजनिता भास्वराः पुद्गला" इति भगवतीवृत्तौ। तथा नात्र तमस्काये, देशग्रामपुरादिकम्। नाप्यत्र चन्द्रचण्डांशुग्रहनक्षत्रतारकाः ॥८५॥ येऽप्यत्रासन्नचन्द्रार्ककिरणास्तेऽपि तामसैः। मलीमसा असत्प्राया, दुर्जने सद्गुणा इव ॥८६॥ अत एवातिकृष्णोऽयमगाधश्च भयङ्करः। रौद्रातिरेकात्पुलकोद्भेदमालोकितः सृजेत् ॥ ८७ ॥ आस्तामन्यः सुरोऽप्येनं, पश्यन्नादौ प्रकम्पते। ततः स्वस्थीभूय शीघ्रगतिरेनमतिव्रजेत् ॥ ८८ ॥ तम १ श्चैव तमस्कायो २ऽन्धकारः ३ स महादिकः ४। लोकान्धकारः ५ स्याल्लोकतमिस्रं ६ देवपूर्वकाः ॥ ८९ ॥ अन्धकार ७ स्तमिस्रं ८ चारण्यं ९ च व्यूह १० एव च। परिघश्च ११ प्रतिक्षोभो १२ऽरुणोदो वारिधिस्तथा १३ ॥ ९० ॥ त्रयोदशास्य नामानि, कथितानि जिनैः श्रुते। तत्र लोकेऽद्वितीयत्वाल्लोकान्धकार उच्यते ॥९१॥ न हि प्रकाशो देवानामप्यत्र प्रथते मनाक्। देवान्धकारोऽयं देवतमिस्रं च तदुच्यते ॥९२॥ बलवद्देवभयतो, नश्यतां नाकिनामपि। अरण्यवच्छरण्योऽयं, देवारण्यं तदुच्यते ॥ ९३ ॥ दुर्भेदत्वाद्व्यूह इव, प्रतिक्षोभो भयावहः। गतिं रुन्धन् परिघवत्, देवव्यूहादिरुच्यते ॥ ९४ ॥ अरुणोदाम्भोधिजलविकारत्वात्तथाभिधः। एवमन्वर्थता नाम्नामन्येषामपि भाव्य-

५

१०

१४

ताम् ॥ ९५ ॥ यत्र रिष्टप्रस्तटेऽयं, तमस्कायश्च निष्ठितः । तस्येन्द्रकविमानस्य, रिष्टाख्यस्य चतुर्दिशम् ॥ ९६ ॥ जीवपुद्गलसत्पृथ्वीपरिणामस्वरूपिके । द्वे द्वे च कृष्णराज्यौ स्तो, जात्याञ्जनघनद्युती ॥ ९७ ॥ तथाहि दिशि पूर्वस्यां, द्वे दक्षिणोत्तरायते । पूर्वपश्चिमविस्तीर्णे, कृष्णराज्यौ प्रकीर्तिते ॥ ९८ ॥ स्यातामपाच्यामप्येवं, ते द्वे पूर्वापरायते । दक्षिणोत्तरविस्तीर्णे, कृष्णराज्यौ यथोदिते ॥ ९९ ॥ प्रतीच्यामपि पूर्वावत्ते दक्षिणोत्तरायते । उदीच्यां च दक्षिणावत्ते द्वे पूर्वापरायते ॥ २०० ॥ प्राच्यां प्रतीच्यां या बाह्या, षट्कोणा सा भवेत्किल । दक्षिणस्यामुदीच्यां च, बाह्या या सा त्रिकोणिका ॥ १ ॥ अभ्यन्तराश्चतुःकोणाः, सर्वा अप्येवमासु च । द्वे षट्कोणे द्वे त्रिकोणे, चतस्रश्चतुरस्रिकाः ॥ २ ॥ पौरस्त्याभ्यन्तरा तत्र, कृष्णराजी स्पृशत्यसौ । निजान्तेन कृष्णराजीं, दाक्षिणात्यां बहिःस्थिताम् ॥ ३ ॥ दक्षिणाभ्यन्तरा चैवं, बाह्यां पश्चिमदिग्गताम् । एवं बाह्यामौत्तराहां, पश्चिमाभ्यन्तरा स्पृशेत् ॥ ४ ॥ उदीच्याभ्यन्तरा बाह्या, प्राचीनिष्ठां स्पृशत्यतः । अष्टापि कृष्णराज्यः स्युरक्षपाटकसंस्थिताः ॥५॥ स्यादासनविशेषो यः, प्रेक्षास्थाने निषेदुषाम् । स चाक्षपाटकस्तद्वदासां संस्थानमीरितम् ॥६॥ एता विष्कम्भतोऽष्टापि, संख्येययोजनात्मिकाः । परिक्षेपायामतश्चासंख्येययोजनात्मिकाः ॥ ७ ॥ तमस्कायमानयोरयसुरो यः प्राग् निरूपितः । स एव च तया गत्या, मासार्द्धेन व्यतिव्रजेत् ॥ ८ ॥ कांचिदत्र कृष्णराजीं, कांश्चिन्नैव व्यतिव्रजेत् । महत्त्वमासामित्येवं, वर्णयन्ति बहुश्रुताः ॥९॥ तमस्कायवदत्रापि, गृहग्रामाद्यसंभवः । नाप्यत्र चन्द्रसूर्याद्या, न तेषां किरणा अपि ॥ १० ॥ अत्राम्भोदवृष्टिविद्युद्गर्जितादि च पूर्ववत् । परं तद्देव-

तमस्कायः कृष्णराज्यः लोकान्तिकविमानाः

२०

२५

॥३५१॥

२८

जनितं, न नागासुरकर्तृकम् ॥ ११ ॥ असुरनागकुमाराणां तत्रागमनासंभवादिति भगवतीवृत्तौ ॥ कृष्णराजी मेघराजी, मघा माघवतीति च । स्याद्वातपरिघो वातप्रतिक्षोभस्तथैव च ॥ १२ ॥ स्याद्देवपरिघो देवप्रतिक्षोभोऽपि नामतः । आसां नामान्यष्ट तेषामन्वर्थोऽथ विभाव्यते ॥ १३ ॥ कृष्णपुद्गलराजीति, कृष्णराजीयमुच्यते । कृष्णाब्दरेखातुल्यत्वान्मेघराजीति च स्मृता ॥ १४ ॥ मघाया माघवत्याश्च, सवर्णत्वाख्यया तथा । वातोऽत्र वात्या तद्वृया, तमिस्रा भीषणापि च ॥ १५ ॥ ततोऽसौ वातपरिघस्तत्प्रतिक्षोभ इत्यपि । स्याद्देवपरिघो देवप्रतिक्षोभश्च पूर्ववत् ॥ १६ ॥ अथासां कृष्णराजीनामन्तरेषु किलाष्टसु । लोकान्तिकविमानानि, निर्दिष्टान्यष्ट पारगैः ॥ १७ ॥ तत्राभ्यन्तरयोः प्राचोदीच्ययोरन्तरे तयोः । विमानमर्चिः प्रथमं, चकास्ति प्रचुरप्रभम् ॥ १८ ॥ अन्तरे प्राच्ययोरेव, बाह्याभ्यन्तरयोरथ । द्वितीयमर्चिर्मालीति, विमानं परिकीर्त्तितम् ॥१९॥ तृतीयमभ्यन्तरयोरन्तरे प्राच्ययाम्ययोः । वैरोचनाभिधं प्रोक्तं, विमानं मानवोत्तमैः ॥ २० ॥ बाह्याभ्यन्तरयोरेवान्तरेऽथ दाक्षिणात्ययोः । प्रभंकराभिधं तुर्यं, विमानमुदितं जिनैः ॥ २१ ॥ अभ्यन्तरदाक्षिणात्यप्रतीच्ययोरथान्तरे । विमानमुक्तं चन्द्राभं, पञ्चमं परमेष्ठिभिः ॥ २२ ॥ स्यात्प्रतीचीनयोरेवं, बाह्याभ्यन्तरयोस्तयोः । विमानमन्तरे षष्ठं, सूर्याभमिति नामतः ॥२३॥ पश्चिमोदीच्ययोरभ्यन्तरयोरन्तरेऽथ च । विमानमुक्तं शुक्राभं, सप्तमं जिनसत्तमैः ॥ २४ ॥ बाह्याभ्यन्तरयोरौत्तराहयोरन्तरेऽथ च । विमानं सुप्रतिष्ठाभमष्टमं परिकीर्त्तितम् ॥ २५ ॥ सर्वासां कृष्णराजीनां, मध्यभागे तु तीर्थपैः । विमानं नवमं रिष्ठाभिधानमिह वर्णितम् ॥ २६ ॥

५

१०

१४

ब्रह्मलोकान्तभावित्वाल्लोकांतिकान्यमून्यथ । लोकान्तिकानां देवानां, संबन्धीनि ततस्तथा ॥ २७ ॥ नवाप्येते विमानाः स्युर्घनवायुप्रतिष्ठिताः । वर्णादिभिश्च पूर्वोक्तब्रह्मलोकविमानवत् ॥ २८ ॥ संस्थानं नैकधाऽमीषामपाङ्क्तेयतया खलु । एभ्यो लोकान्तः सहस्रैर्योजनानामसंख्यकैः ॥ २९ ॥ एतेष्वथ विमानेषु, निवसन्ति यथाक्रमम् । सारस्वतास्तथाऽऽदित्या, वह्नयो वरुणा अपि ॥ ३० ॥ गर्दतोयाश्च तुषिता, अव्याबाधास्तथाऽपरे । आग्नेया अथ रिष्टाश्च, लोकान्तिकसुधाभुजः ॥ ३१ ॥ अत्राग्नेयाः संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते ॥ स्वत एवावबुद्धानामनुत्तरचिदात्मनाम् । विज्ञाय दीक्षावसरं, दित्सूनां दानमाब्दिकम् ॥ ३२ ॥ प्रव्रज्यासमयादर्वाक्, संवत्सरेण तत्क्षणम् । श्रीमतामर्हतां पादान्तिकमेत्य तथास्थितेः ॥ ३३ ॥ विमानयानादुत्तीर्य, सोत्साहाः सपरिच्छदाः । सारस्वतप्रभृतयः, सर्वे लोकान्तिकाः सुराः ॥ ३४ ॥ विज्ञा विज्ञपयन्त्येवं, जय नन्द ! जगद्गुरो ! । त्रैलोक्यबंधो ! भगवन् !, धर्मतीर्थं प्रवर्त्तय ॥३५॥ चतुर्भिः कलापकं ॥ यदेतत्सर्वलोकानां, सर्वलोके भविष्यति । मुक्तिराजपथीभूतं, निःश्रेयसकरं परम् ॥३६॥ इह सारस्वतादित्यद्वये समुदितेऽपि हि । सप्त देवाः सप्त देवशतानि स्यात्परिच्छदः ॥ ३७ ॥ एवं वह्निवरुणयोः, परिवारश्चतुर्दश । देवास्तथाऽन्यानि देवसहस्राणि चतुर्दश ॥ ३८ ॥ गर्दतोयतुषितयोर्द्वयोः संगतयोरपि । सप्त देवाः सप्त देवसहस्राणि परिच्छदः ॥ ३९ ॥ अव्याबाधाग्नेयरिष्टदेवानां च सुरा नव । शतानि नव देवानां, परिवारः प्रकीर्त्तितः ॥ ४० ॥ अव्याबाधाश्चैषु देवाः, पुरुषस्याक्षिपक्ष्मणि । दिव्यं द्वात्रिंशत्प्रकारं, प्रादुष्कुर्वन्ति ताण्डवम् ॥ ४१ ॥ तथापि पुरुषस्यास्य, बाधा काऽपि न जायते । एवंरूपा

लोकान्तिकाः

२०

२५

॥३५२॥

२८

शक्तिरेषां, पञ्चमाङ्गे प्रकीर्त्तिता ॥४२॥ भ० १४,८। लोकान्तिकविमानेषु, देवानामष्ट वार्द्धयः।स्थितिरुक्ता जिनैरेते, पुण्यात्मानः शुभाशयाः ॥ ४३ ॥ एकावतारा: सिद्ध्यन्ति, भवे भाविनि निश्चितम् । अष्टावतारा अप्येते, निरूपिता मतान्तरे ॥ ४४ ॥ तन्मतद्वयं चैवं–लोकान्ते–लोकाग्रलक्षणे सिद्धिस्थाने भवा लोकान्तिकाः, भाविनि भूतवदुपचारन्यायेन एवं व्यपदेशः, अन्यथा ते कृष्णराजीमध्यवर्त्तिनः, लोकान्ते भावित्वं तेषामनन्तरभवे एव सिद्धिगमना"दिति स्थानाङ्गवृत्तौ ९ स्थानके "श्रीब्रह्मलोके प्रतरे तृतीये, लोकान्तिकास्तत्र वसन्ति देवाः । एकावताराः परमायुरष्टौ, भवन्ति तेषामपि सागराणि ॥ १ ॥" इति श्रेणिकचरित्रे। "अट्ठेव सागराइं परमाउं होइ सव्वदेवाणं । एगावयारिणो खलु देवा लोगंतिया नेया ॥ १ ॥" इति प्रवचनसारोद्धारे, तत्त्वार्थटीकायामपि—लोकान्ते भवा लोकान्तिकाः, अत्र प्रस्तुतत्वाद्ब्रह्मलोक एव परिगृह्यते, तदन्तनिवासिनो लोकान्तिकाः, सर्वब्रह्मलोकदेवानां लोकान्तिकप्रसङ्ग इति चेन्न, लोकान्तोपश्लेषात्, जरामरणादिज्वालाकीर्णो वा लोकस्तदन्तवर्त्तित्वाल्लोकान्तिकाः कर्मक्षयाभ्यासीभावाचेति, लब्धिस्तोत्रे तु–सव्वट्ठचुआ चउकयआहारगुवसमगजिणगणहराइं । निअमेण तब्भवसिवा सत्तट्ठभवेहिं लोगंती ॥ १ ॥"

अथोर्ध्वं ब्रह्मलोकस्य, समपक्षं समानदिक् । योजनानामसंख्येयकोटाकोटिव्यतिक्रमे ॥ ४५ ॥ विभाति लान्तकः स्वर्गः, पञ्चप्रतरशोभितः । प्रतिप्रतरमेकैकेनेन्द्रकेण विराजितः ॥ ४६ ॥ प्रथमप्रतरे तत्र, बलभद्राख्यमिन्द्रकम् । चक्रं गदा स्वस्तिकं च, नन्द्यावर्त्तमिति क्रमात् ॥ ४७ ॥ प्रतिप्रतरमेतेभ्यः, पङ्क्तयोऽपि चतुर्दिशम् ।

५

१०

१४

प्राग्वदत्र विना प्राचीं, प्रोक्ताः पुष्पावकीर्णकाः ॥ ४८ ॥ एकत्रिंशदथ त्रिंशदेकोनत्रिंशदेव च । तथाऽष्टाविंशतिः सप्तविंशतिश्च यथाक्रमम् ॥ ४९ ॥ पञ्चस्वेषु प्रतरेषु, प्रतिपङ्क्ति विमानकाः । एकैकस्यामथो पङ्क्तौ, प्रथमप्रतरे स्मृताः ॥ ५० ॥ त्र्यस्रा एकादशान्ये च, द्वैधा दश दशेति च । चतुर्विंशं शतं सर्वे, पङ्क्तिस्थायिविमानकाः ॥ ५१ ॥ वृत्तास्त्र्यस्राश्चतुरस्रा, द्वितीयप्रतरे दश । प्रतिपङ्क्त्यत्र सर्वे च, विंशं शतमुदीरिताः ॥ ५२ ॥ तृतीये त्रिचतुःकोणा, दश वृत्ता नवेति च । सर्वे विमानाः पाङ्क्त्या, भवन्ति षोडशं शतम् ॥ ५३ ॥ वृत्ताश्च चतुरस्राश्च, तुर्ये नव नव स्मृताः । दश त्रिकोणाः सर्वे च, पाङ्क्त्या द्वादशं शतम् ॥ ५४ ॥ पञ्चमे च नव नव, त्रिचतुःकोणवृत्तकाः । अष्टोत्तरं शतं सर्वे, चात्र पङ्क्तिविमानकाः ॥ ५५ ॥ एवं पञ्चेन्द्रकक्षेपे, सर्वेऽत्र पङ्क्तिवृत्तकाः । विमानास्त्रिनवत्याढ्यं, शतं लान्तकताविषे ॥ ५६ ॥ पङ्क्तित्र्यस्राणां शते द्वे, द्विनवत्यधिकं शतम् । स्यात्पङ्क्तिचतुरस्राणामेवं च सर्वसंख्यया ॥ ५७ ॥ पञ्चाशीत्याभ्यधिकानि, शतानि पञ्चपङ्क्तिगाः । सहस्राण्येकोनपञ्चाशच्चत्वारि शतानि च ॥ ५८ ॥ युक्तानि पञ्चदशभिरिह पुष्पावकीर्णकाः । विमानानां सहस्राणि, पञ्चाशत्सर्वसंख्यया ॥५९॥ विहायसि निरालम्बे, प्रतिष्ठितो घनोदधिः । घनवातोऽस्मिन्निहामी, स्युर्विमानाः प्रतिष्ठिताः ॥६०॥ वर्णोच्चत्वादिमानं च, स्यादेषां ब्रह्मलोकवत् । देवास्तत्र शुक्लवर्णाः, शुक्ललेश्या महर्द्धिकाः ॥ ॥ ६१ ॥ इतःप्रभृति देवाः स्युः, सर्वेऽप्यनुत्तरावधि । शुक्ललेश्या शुक्लवर्णाः, किंतूत्कृष्टा यथोत्तरम् ॥ ६२ ॥ प्रथमप्रतरे तत्र, स्थितिर्ज्येष्ठा सुधाभुजाम् । पञ्चभागीकृतस्याब्धेश्चत्वारोंऽशा दशाब्धयः ॥ ६३ ॥ द्वितीयप्रतरे

लान्तके वृत्तविमानादिमानं

२०

२५



२८

भागास्त्रय एकादशाब्धयः । द्वाभ्यां भागाभ्यां समेतास्तृतीये द्वादशाब्धयः ॥६४॥ चतुर्थे त्वेकभागाढ्यास्त्रयो-
दश पयोधयः । पञ्चमे प्रतरे पूर्णाश्चतुर्दशैव वार्द्धयः ॥ ६५ ॥ जघन्येन तु सर्वत्र, दशैव मकरा-
कराः । स्वस्वस्थित्यनुसारेण, देहमानमथ ब्रुवे ॥ ६६ ॥ एकादशोद्धवैर्भागैश्चतुर्भिरधिकाः कराः । पञ्चदेहमा-
नमत्र, दशरत्नाकरायुषाम् ॥ ६७ ॥ त्रिभागाढ्याः कराः पञ्चैकादशार्णवजीविनाम् । हस्ताः पञ्च लवौ द्वौ च,
द्वादशाम्भोधिजीविनाम् ॥ ६८ ॥ सैकभागाः कराः पञ्च, त्रयोदशार्णवायुषाम् । चतुर्दशाब्धिस्थितीनां,
पूर्णाः पञ्च करास्तनुः ॥ ६९ ॥ ईशानस्ववासिनीभिर्देवीभिर्विषयेच्छवः । चिन्तामात्रोपस्थिताभी, रमन्ते ब्रह्म-
देववत् ॥ ७० ॥ च्यवमानोत्पद्यमानसंख्या गत्यागती अपि । अवधिज्ञानविषयः, स्यादत्र ब्रह्मलोकवत् ॥७१॥
अत्रोत्पत्तिच्यवनयोरन्तरं परमं भवेत् । दिनानि पञ्चचत्वारिंशत् क्षणश्च जघन्यतः ॥७२॥ पञ्चमे प्रतरे चात्र,
स्याल्लान्तकावतंसकः । अङ्कावतंसकादीनां, मध्ये ईशाननाकवत् ॥७३॥ लान्तकस्तत्र देवेन्द्रः, पुण्यसारो विराजते ।
सामानिकामरैः पञ्चाशता सेव्यः सहस्रकैः ॥ ७४ ॥ द्वाभ्यां देवसहस्राभ्यां, सेव्योऽभ्यन्तरपर्षदि । मध्य-
मायां चतुर्भिस्तैः, षड्भिश्च बाह्यपर्षदि ॥ ७५ ॥ युग्मम् ॥ सप्तषट्पञ्चभिः पल्योपमैः समधिका स्थितिः ।
द्वादशैवाम्बुनिधयस्तिसृणां पर्षदां क्रमात् ॥ ७६ ॥ आत्मरक्षकदेवानां, पञ्चाशता सहस्रकैः । एकैकस्यां
दिशि सेव्यो, दण्डाद्यायुधपाणिभिः ॥ ७७ ॥ प्राग्वदन्यैरपि मन्त्रित्रायस्त्रिंशकवाहनैः । सैन्यैः सैन्याधिपै-
र्लोकपालैः पालितशासनः ॥ ७८ ॥ जिनार्चनादिकं धर्मं, कुर्वाणः परमार्हतः । दिव्यनाट्यदत्तचेताश्चतुर्दशा-

ब्धिजीवितः ॥ ७९ ॥ सातिरेकानष्ट जम्बूद्वीपान् पूरयितुं क्षमः । रूपैर्विकुर्वितैस्तिर्यगसंख्यद्वीपतोयधीन् ॥ ८० ॥ स विमानसहस्राणां, पञ्चाशतोऽप्यधीश्वरः । साम्राज्यं शास्ति देवानां, लान्तकस्वर्गवासिनाम् ॥ ८१ ॥ पञ्चभिः कुलकं ॥ अस्य यानविमानं च, भवेत्कामगमाभिधम् । देवः कामगमाभिख्यो, नियुक्तस्तद्विकुर्वणे ॥ ८२ ॥

लांतके देहमानादि किल्बिषिकाः

वैमानिकाः किल्बिषिकास्त्रिधा भवन्ति तद्यथा । त्रयोदशाब्धिव्यम्भोधित्रिपल्योपमजीविनः ॥ ८३ ॥ तत्र च—वसन्ति लान्तकस्याधस्त्रयोदशाब्धिजीविनः । अधः सनत्कुमारस्य, त्र्यम्भोधिजीविनः पुनः ॥ ८४ ॥ त्रिपल्यस्थितयस्ते च, सौधर्मेशानयोरधः । स्थानमेवं किल्बिषिकसुराणां त्रिविधं स्मृतम् ॥ ८५ ॥ नन्वत्राधःशब्देन किमभिधीयते ? अधस्तनं प्रस्तटं, तस्मादप्यधोदेशो वा ? अन्यच्च द्वात्रिंशल्लक्षविमानमध्ये साधारणदेवीनामिवैतेषां कतिचिद्विमानानि सन्ति, विमानैकदेशे वा विमानाद्बहिर्वा तिष्ठन्ति ते इति, अत्रोच्यते—अत्राधःशब्दस्तत्स्थानवाचको ज्ञेयो, यतोऽत्राधःशब्दः प्रथमप्रस्तटार्थो न घटते तृतीयषष्ठकल्पसत्ककिल्बिषिकामराणां, तत्प्रथमप्रस्तटयोस्त्रिसागरोपमत्रयोदशसागरोपमस्थित्योरसंभवात्, तथा तद्विमानानां संख्या शास्त्रे नोपलभ्यते, तथा देवलोकगतद्वात्रिंशल्लक्षविमानसंख्यामध्ये तद्विमानगणनं न संभाव्यते इति, तत्त्वं सर्वविद्वेद्यमिति वृद्धाः ॥ अमी च चण्डालप्राया, निन्द्यकर्माधिकारिणः । अस्पृश्यत्वादन्यदेवैर्धिक्कृतास्तर्जनादिभिः ॥ ८६ ॥ देवलोके विमानेषु, स्वधाभुक्पर्षदादिषु । कौतुकादिसंगतेषु, देवानां निकरेषु च ॥ ८७ ॥

२०

२५



२८

॥ ८८ ॥ अष्टाह्निकाद्युत्सवेषु, जिनजन्मोत्सवादिषु । अप्राप्नुवन्तः स्थानं ते, स्वं शोचन्ति विषादिनः ॥ ८८ ॥ असद्भावोद्भाव-
आचार्योपाध्यायगच्छसंघप्रतीपवर्त्तिनः । येऽवर्णवादिनस्तेषामयशःकारिणोऽपि च ॥ ८९ ॥ असद्भावोद्भाव-
नाभिर्मिथ्यात्वाभिनिवेशकैः । व्युद्ग्राहयन्तः स्वात्मानं, परं तदुभयं तथा ॥ ९० ॥ प्रतिपाल्यापि चारित्र-
पर्यायं वत्सरान् बहून् । तेऽनालोच्याप्रतिक्रम्य, तत्कर्माशर्मकारणम् ॥ ९१ ॥ त्रयाणां किल्विषिकानां, मध्ये
भवन्ति कुत्रचित् । तादृशव्रतपर्यायापेक्षया स्थितिशालिनः ॥ ९२ ॥ एभ्यश्च्युत्वा देवनरतिर्यग्नारकजन्मसु ।
चतुरः पञ्च वा वारान्, भ्रान्त्वा सिद्ध्यन्ति केचन ॥ ९३ ॥ केचित्पुनरर्हदादिनिबिडाशातनाकृतः । कृतानन्त-
भवा भीमं, भ्राम्यन्ति भवसागरम् ॥ ९४॥ तथाहुः—"देवकिव्विसिया णं भंते! ताओ देवलोगाओ" इत्यादि ।
जामेयोऽपि च जामाता, यथा वीरजगद्गुरोः । जमालिः किल्विषिकेषूत्पन्नो लान्तकवासिषु ॥ ९५ ॥ स हि
क्षत्रियकुण्डस्थः, क्षत्रियस्ताण्डवादिषु । मग्नः श्रुत्वा महावीरमागतं वन्दितुं गतः ॥ ९६ ॥ श्रुत्वोपदेशं संवि-
ग्नोऽनुज्ञाप्य पितरौ व्रतम् । जग्राह पञ्चभिः पुंसां, शतैः सह महामहैः ॥ ९७ ॥ अधीतैकादशाङ्गीकस्तयैवार्ह-
दनुज्ञया । सेऽन्यः साधुपञ्चशत्या, चकारानेकधा तपः ॥९८॥ पप्रच्छ चैकदाऽर्हन्तं, विजिहीर्षुः पृथग् जिनात् ।
तूष्णीं तस्थौ प्रभुरपि, जानंस्तद्भाववैशसम् ॥ ९९ ॥ अननुज्ञात एवैष, उपेक्ष्य जगदीश्वरम् । विहरन्
सहितः शिष्यैः, श्रावस्तीं नगरीं ययौ ॥ ३०० ॥ तत्र तस्यान्यदा प्रान्ताद्यशनेन ज्वरोऽभवत् । शिष्यान्
शिशयिषुः संस्तारकक्लृप्त्यै समादिशत् ॥ १ ॥ तमास्तरन्ति ते यावत्तावदेषोऽतिपीडितः । ऊचे संस्तारको

हन्त, कृतोऽथ क्रियतेऽथवा ? ॥ २ ॥ द्रागेव क्रियते स्वामिन् !, श्रुत्वेति शिष्यभाषितम् । मिथ्याविपर्यस्तम-
तिरिति चेतस्यचिन्तयत् ॥ ३ ॥ प्रत्यक्षं क्रियमाणोऽयमकृतो यन्न युज्यते । क्रियमाणं कृतमिति, तत्किमाहा-
न्तिमो जिनः ? ॥ ४ ॥ ध्यात्वेति सर्वानाहूय, शिष्यानेषोऽब्रवीदिति । कृतमेव कृतं वस्तु, क्रियमाणं न
तत्तथा ॥ ५ ॥ क्रियमाणं कृतं किंचिन्न चेदाद्यक्षणादिषु । सर्वमन्त्यक्षणे तर्हि, तत्कर्तुं शक्यते कथम् ? ॥ ६ ॥
देशतः कृतमेवेति, क्रियमाणं क्षणे क्षणे । जीर्यमाणं जीर्णमेवं, चलच्चलितमेव च ॥ ७ ॥ युग्मम् । इत्यादियु-
क्तिभिः शिष्यैर्बोधितोऽपि कदाग्रही । कैश्चिद्धर्मार्थिभिस्त्यक्तः, कैश्चित्स एव चादृतः ॥ ८ ॥ यैस्त्यक्तस्ते
महावीरं, चम्पायां पुरि संस्थितम् । अभ्युपेत्य गुरुकृत्योद्युक्ताः स्वार्थमसाधयन् ॥ ९ ॥ क्रमाद्विमुक्तो रोगेण-
द्रव्यतो न तु भावतः । जमालिरपि चम्पायामुपवीरमुपागतः ॥ १० ॥ कदाग्रहग्रहग्रस्तः, प्रशस्तधिषणाबलः ।
इत्याललाप भगवन् !, भवच्छिष्याः परे यथा ॥ ११ ॥ छद्मस्था न तथैवाहं, किंतु जातोऽस्मि केवली । इति
ब्रुवाणं भगवानिन्द्रभूतिस्तमब्रवीत् ॥ १२ ॥ ज्ञानं केवलिनः शक्यं, नावरीतुं पटादिभिः । यदि त्वं केवली
तर्हि, प्रश्नयोर्मे कुरूत्तरम् ॥ १३ ॥ जमाले ! नन्वसौ लोकः, शाश्वतोऽशाश्वतोऽथवा ? । जीवोऽप्यशाश्वतः
किं वा, शाश्वतस्तद्वद द्रुतम् ॥ १४ ॥ जगद्गुरुप्रत्यनीकतया प्रश्नमपीदृशम् । सोऽक्षमः प्रत्यवस्थातुं, बभूव मलि-
नाननः ॥ १५ ॥ ततः स वीरनाथेन, प्रोक्तः किं मुह्यसीह भोः ? । शाश्वताशाश्वतौ ह्येतौ, द्रव्यपर्यायभेदतः
॥ १६ ॥ छद्मस्थाः सन्ति मे शिष्या, ईदृक्प्रश्नोत्तरे क्षमाः । अनेके न तु ते त्वद्वदसत्सार्वज्ञ्यशंसिनः ॥ १७ ॥

किल्बिषिकेषु जमालेरधिकारः

२०

२५



२८

अश्रद्दधत्तज्जिनोक्तं, स्वैरं पुनरपि भ्रमन्। व्युद्ग्राहयंश्च स्वपरं, कुर्वंस्तपांस्यनेकधा ॥ १८ ॥ अन्तेऽर्द्धमासिकं कृत्वाऽनशनं तच्च पातकम्। अनालोच्याप्रतिक्रम्य, मृत्वा किल्विषिकोऽभवत् ॥ १९ ॥ ततश्च्युत्वा च विबुध, तिर्यग्मनुजजन्मसु। उत्पद्य पञ्चशः पञ्चदशे जन्मनि सेत्स्यति ॥ २० ॥ तथाहुः—"गो० ! चत्तारि पञ्च तिरिक्खजोणियमणुस्सदेवभवग्गहणाइं संसारं अणुपरियट्टित्ता ततो पच्छा सिज्झिहिति जाव अंतं काहिति" भगवतीसूत्रे श० ९ उ० ३३ ॥ ग्रन्थान्तरे च यद्यस्यानन्ता अपि भवाः श्रुताः। तदा तदनुसारेण, तथा ज्ञेया विवेकिभिः ॥ २१ ॥ जिनं विनाऽन्यः कस्तत्त्वं, निश्चेतुं क्षमतेऽपरः। ततः प्रमाणमुभयं, श्रीवीराज्ञाऽनुसारिणाम् ॥ २२ ॥ सत्यप्येवं पञ्चमाङ्गवचो विलुप्य ये जडाः। एकान्तेन भवानस्यानन्तान्निश्चिन्वतेऽधुना ॥ २३ ॥ कदाग्रहतमश्छन्ननयनास्ते मुधा स्वयम्। भवैरनन्तैर्युज्यन्ते, परानन्तभवाग्रहात् ॥ २४ ॥ एवं च—"अनन्ताऽसंख्यसंख्येयानुत्सूत्रभाषिणोऽपि हि। परिणामविशेषेण, भवान् भ्राम्यन्ति संसृतौ ॥ २५ ॥" तथोक्तं महानिशीथद्वितीयाध्ययने—"जे णं तित्थगरादीणं महतीं आसायणं कुज्जा से णं अज्झवसायं पडुच्च जावणं अणंतसंसारियत्तणं लभेज्जा," यावच्छब्दमर्यादया चात्र संख्याता असंख्याता अपि भवा लभ्यन्त इति ध्येयं। उत्सूत्रभाषिणां ये चानन्तानेव कदाग्रहात्। भवानूचुरुपेक्ष्यं तत्तेषां वातूलचेष्टितम् ॥२६॥ अतः परं किल्विषिकजातीयानामसंभवः। यथाऽऽभियोगिकादीनामच्युतस्वर्गतः परम् ॥ २७ ॥

अथोर्ध्वं लान्तकस्वर्गात्समपक्षं समानदिक्। योजनानामसंख्येयकोटाकोटिव्यतिक्रमे ॥ २८ ॥ अस्ति

स्वर्गो महाशुक्रः, संपूर्णचन्द्रसंस्थितः । चत्वारः प्रतरास्तत्र, प्रतिप्रतरमिन्द्रकम् ॥ २९ ॥ आभङ्करं गृद्धिसंज्ञं, केतुश्च गरुलाभिधम् । चतस्रः पङ्क्तयस्तेभ्यः, प्राग्वत्पुष्पावकीर्णकाः ॥ ॥ ३० ॥ षड्विंशतिः पञ्चचतुरभ्यधिका विंशतिः क्रमात् । प्रतरेषु चतुर्ष्वेषु, प्रतिपङ्क्ति विमानकाः ॥ ३१ ॥ तत्राद्यप्रतरे पङ्क्तौ, पङ्क्तावष्टैव वृत्तकाः । नव च त्रिचतुःकोणाः, सर्वे चतुर्युतं शतम् ॥ ३२ ॥ द्वितीयप्रतरे त्र्यस्रा, नवाष्टाष्टापरे द्विधा । सर्वे शतं तृतीये च, प्रतरेऽष्टाष्ट ते त्रिधा ॥ ३३ ॥ सर्वे च ते षण्णवतिश्चतुर्थप्रतरे पुनः । अष्टौ त्र्यस्राश्चतुरस्रा, वृत्ताः सप्त विमानकाः ॥ ३४ ॥ सर्वे चात्र द्विनवतिः, पाङ्क्तेयाः परिकीर्तिताः । चतुरिन्द्रकयोगेऽत्र, सर्वे स्युः पङ्क्तिवृत्तकाः ॥ ३५ ॥ अष्टाविंशं शतं पङ्क्तित्र्यस्राः षट्त्रिंशकं शतम् । द्वात्रिंशं च शतं पङ्क्तिचतुरस्राः प्रकीर्तिताः ॥ ३६ ॥ एवं पङ्क्तिविमानानां, महाशुक्रे शतत्रयम् । षण्णवत्या समधिकं, शेषाः पुष्पावकीर्णकाः ॥३७॥ सहस्राण्येकोनचत्वारिंशदेव च षट्शती । चतुर्युतैव सर्वे च, चत्वारिंशत्सहस्रकाः ॥ ३८ ॥ आधारतो लान्तकवद्, द्विधाऽमी वर्णतः पुनः । शुक्लाः पीताश्च पूर्वेभ्यो, वर्णाद्युत्कर्षशालिनः ॥३९॥ पृथ्वीपिण्डः शतानीह, चतुर्विंशतिरीरितः । योजनानां शतान्यष्टौ, प्रासादाः स्युः समुच्छ्रिताः ॥४०॥ प्रथमप्रतरे चात्र, देवानां परमा स्थितिः । पादोनानि पञ्चदश, स्युः सागरोपमाण्यथ ॥ ४१ ॥ द्वितीयप्रतरे पञ्चदश सार्द्धानि तान्यथ । तृतीये च सपादानि, षोडशैतानि निश्चितम् ॥ ४२ ॥ चतुर्थे च सप्तदश, वार्द्धयः परमा स्थितिः । सर्वेष्वपि जघन्या तु, चतुर्दश पयोधयः ॥ ४३ ॥ कराः पञ्च देहमत्र, चतुर्दशाब्धिजीविनाम् । कराश्चत्वारस्त्रयोंऽशाः, पञ्चदशार्ण-

विमानपृथ्वीपिंडस्थित्यधिकारः

२०

२५



२८

वायुषाम् ॥ ४४ ॥ षोडशाब्ध्यायुषां हस्ताश्चत्वारोंऽशद्वयान्विताः । एकांशाढ्यास्ते तु सप्तदशसागरजी-
विनाम् ॥ ४५ ॥ एकादशविभक्तैककरस्यांशा अमी इह । आहारोच्छ्वासकालस्तु, प्राग्वत्सागरसंख्यया
॥ ४६ ॥ कामभोगाभिलाषे तु, तेषां संकेतिता इव । सौधर्मस्वर्गदेव्योऽत्रायान्ति स्वाहा विचिन्तिताः ॥ ४७ ॥
अथासां दिव्यसुदृशां, शृङ्गाररसकोमलम् । गीतं स्फीतं च साकूतं, स्मितं ललितकूजितम् ॥४८॥ विविधान्यो-
क्तिवक्रोक्तिव्यङ्ग्यवल्गुवचोभरम् । हृद्यगद्यपद्यनव्यभव्यकाव्यादिपद्धतिम् ॥ ४९ ॥ कङ्कणानां रणत्कारं, हार-
काञ्चीकलध्वनिम् । मणिमञ्जीरझंकारं, किङ्किणीनिष्क्वणोल्वणम् ॥ ५० ॥ कामग्रहार्त्तिशमनमन्त्राक्षरमिवाद्भु-
तम् । शब्दं शृण्वन्त एवामी, तृप्यन्ति सुरतादिव ॥ ५१ ॥ देव्योऽपि ता दूरतोऽपि, वैक्रियैः शुक्रपुद्गलैः ।
तृप्यन्त्यङ्गे परिणतैस्तादृग्दिव्यप्रभावतः ॥ ५२ ॥ अर्द्धनाराचावसानचतुःसंहननाश्रिताः । गर्भजा नरतिर्यञ्चो,
लभन्तेऽत्रामृताशिताम् ॥ ५३ ॥ अस्माच्च्युत्वा नृतिरश्चोरेव यान्ति सुधाभुजः । च्यवमानोत्पद्यमानसंख्या
त्वत्रापि पूर्ववत् ॥ ५४ ॥ अत्रोत्पत्तिच्यवनयोर्विरहः परमो भवेत् । अशीतिं दिवसानेकं, समयं च जघन्यतः
॥ ५५ ॥ पश्यन्ति देवा अत्रत्या, अवधिज्ञानचक्षुषा । पङ्कप्रभायास्तुर्यायाः, पृथ्व्या अधस्तलावधि ॥ ५६ ॥
अत्रत्यानां च देवानां, दिव्यां देहद्युतिं ननु । सोढुं शक्नोति सौधर्माधिपोऽपि न सुरेश्वरः ॥ ५७ ॥ श्रूयते हि
पुरा गङ्गदत्तमत्रत्यनिर्जरम् । आगच्छन्तं परिज्ञाय, नन्तुं वीरजिनेश्वरम् ॥ ५८ ॥ पूर्वागतो वज्रपाणिस्तत्तेजः
क्षन्तुमक्षमः । प्रश्नानापृच्छ्य संक्षेपात्, संभ्रान्तः प्रणमन् ययौ ॥ ५९ ॥ एतच्चार्थतो भगवतीसूत्रे षोडश-

५

१०

१४

शतकपञ्चमोद्देशके ॥ चतुर्थे प्रतरेऽत्रापि, महाशुक्रावतंसकः । सौधर्मवदशोकाद्यवतंसकचतुष्कयुक् ॥ ६० ॥ उत्पद्यते चात्र महाशुक्रनामा सुरेश्वरः । प्राग्वत्कृत्वाऽर्हदाद्यर्चामलंकुर्यान्महासनम् ॥ ६१ ॥ एकदेवसहस्रेण, सेव्योऽभ्यन्तरपर्षदाम् । पञ्चपल्याधिकापार्द्धषोडशाम्भोधिजीविनाम् ॥ ६२ ॥ सहस्रद्वितयेनैष, सेवितो मध्यपर्षदाम् । चतुःपल्याधिकसार्द्धपञ्चदशार्णवायुषाम् ॥ ६३ ॥ चतुःसहस्र्या देवानां, सेवितो बाह्यपर्षदाम् । त्रिपल्योपमयुक्सार्द्धपञ्चदशार्णवायुषाम् ॥ ६४ ॥ सामानिकानां चत्वारिंशता सेव्यः सहस्रकैः । चतुर्दिशं च प्रत्येकं, तावद्भिरङ्गरक्षकैः ॥ ६५ ॥ त्रायस्त्रिंशैर्लोकपालैरनीकानीकनायकैः । अन्यैरपि महाशुक्रवासिभिः सेवितः सुरैः ॥ ६६ ॥ जम्बूद्वीपान् पूरयितुं, क्षमः षोडश सर्वतः । रूपैर्विकुर्वितैस्तिर्यगसंख्यद्वीपतोयधीन् ॥ ६७ ॥ सद्विमानसहस्राणां, चत्वारिंशत ईश्वरः । महाशुक्रं शास्ति सप्तदशपाथोनिधिस्थितिः ॥ ६८ ॥ सप्तभिः कुलकम् । अस्य यानविमानं च, भवेत्प्रीतिमनोऽभिधम् । देवः प्रीतिमनाः ख्यातो, नियुक्त-स्तद्विकुर्वणे ॥ ६९ ॥

महाशुक्रादथास्त्यूर्ध्वं, सहस्रारः सुरालयः । योजनानामसंख्येयकोटाकोटीव्यतिक्रमे ॥ ७० ॥ चत्वारः प्रतरास्तत्र, प्रत्येकमिन्द्रकाश्रिताः । ब्रह्म ब्रह्महितं ब्रह्मोत्तरं च लान्तकं क्रमात् ॥ ७१ ॥ चतस्रः पङ्क्तयश्चैभ्यः, प्राग्वत्पुष्पावकीर्णकाः । द्वाविंशतिस्तथा चैकविंशतिर्विंशतिः क्रमात् ॥ ७२ ॥ एकोनविंशतिश्चेति, प्रतरेषु चतुर्ष्वपि । एकैकपङ्क्तौ संख्यैवं, विमानानां भवेदिह ॥ ७३ ॥ तत्राद्यप्रतरे

विमानाः

२०

२५

॥३५७॥

२८

त्र्यस्रा, अष्टान्ये सप्त सप्त च। प्रतिपङ्क्त्यथ सर्वेऽत्राष्टाशीतिः पङ्क्तिवर्त्तिनः ॥ ७४ ॥ द्वितीयप्रतरे सप्त सप्तैते त्रिविधा अपि। सर्वे चतुरशीतिश्च, तृतीयप्रतरे पुनः ॥ ७५ ॥ वृत्ताः षट् सप्त सप्तान्येऽशीतिश्च सर्वसंख्यया। तुर्ये त्र्यस्राः सप्त षट् षट्, परे षट्सप्ततिः समे ॥ ७६ ॥ चतुर्णामिन्द्रकाणां च, योगेऽत्र पङ्क्तिवृत्तकाः। अष्टोत्तरशतं पङ्क्तित्र्यस्राश्च षोडशं शतम् ॥ ७७ ॥ अष्टोत्तरं शतं पङ्क्तिचतुरस्रास्ततोऽत्र च। द्वात्रिंशदधिकं पङ्क्तिविमानानां शतत्रयम् ॥ ७८ ॥ षट्शताभ्यधिकाः पञ्च, सहस्राः साष्टषष्टयः। पुष्पावकीर्णका अत्र, सर्वे ते षट्सहस्रकाः ॥ ७९ ॥ आधारवर्णोच्चत्वादि, स्यादेषां शुक्रनाकवत्। उत्पद्यन्त एषु देवतया प्राग्वन्महाशयाः ॥ ८० ॥ सपादा वार्द्धयः सप्तदशाऽऽद्ये प्रतरे स्थितिः। द्वितीये त्वब्धयः सप्तदश सार्द्धाः परा स्थितिः ॥ ८१ ॥ अष्टादश च पादोनास्तृतीये परमा स्थितिः। तुर्येऽष्टादश संपूर्णाः, सागराः स्यात्परा स्थितिः ॥८२॥ सर्वत्रापि जघन्या तु, भवेत्सप्तदशाब्धयः। अथ स्थित्यनुसारेण, देहमानं निरूप्यते ॥ ८३ ॥ चत्वारोऽत्र करा देह, उत्कृष्टस्थितिशालिनाम्। त एवैकादशैकांशयुजो जघन्यजीविनाम् ॥ ८४ ॥ अष्टादशभिरब्दानां, सहस्रैः परमायुषः। जघन्यस्थितयः सप्तदशभिर्भोजनार्थिनः ॥ ८५ ॥ उच्छ्वसन्तीह नवभिर्मासैः परमजीविनः। हीनायुषोऽष्टभिः सार्द्धैः, परे तदनुसारतः ॥ ८६ ॥ भोगो गत्यागती संख्योत्पादच्यवनगोचरा। अवधिज्ञानविषयः, सर्वमत्रापि शुक्रवत् ॥ ८७ ॥ अत्रोत्पादच्यवनयोर्गरीयान् विरहो भवेत्। शतं दिनानामल्पीयान्, स पुनः समयो मतः ॥८८॥ चतुर्थप्रतरेऽत्रापि, सहस्रारावतंसकः। अङ्कावतंसका-

दीनां, चतुर्णां मध्यतः स्थितः ॥ ८९ ॥ सहस्रारस्तत्र देवराजो राजेव राजते । प्राग्वत्कृतजिनाद्यर्चो, महासिंहासने स्थितः ॥ ९० ॥ पञ्चभिर्निर्जरशतैः, सेव्योऽभ्यन्तरपर्षदि । सप्तपल्याधिकापार्द्धाष्टादशाम्भोधिजीविभिः ॥ ॥ ९१ ॥ एकदेवसहस्रेण, सेवितो मध्यपर्षदि । सषट्पल्यसार्द्धसप्तदशतोयधिजीविना ॥ ९२ ॥ द्विसहस्र्या च देवानां, सेवितो बाह्यपर्षदाम् । पञ्चपल्ययुतापार्द्धाष्टादशार्णवजीविनाम् ॥ ९३ ॥ सामानिकामरैः सेव्यः, सहस्रैस्त्रिंशता सदा । सहस्रैस्त्रिंशतैकैकदिश्यात्मरक्षकैः सुरैः ॥ ९४ ॥ प्राग्वत्त्रायस्त्रिंशलोकपालसैन्यतदीश्वरैः । देवैरन्यैरप्युपास्यः, सहस्रारनिवासिभिः ॥ ९५ ॥ सातिरेकान् षोडशैष, जम्बूद्वीपान् विकुर्वितैः । रूपैर्भर्त्तुं क्षमस्तिर्यगसंख्यान् द्वीपवारिधीन् ॥ ९६ ॥ स विमानसहस्राणां, षण्णामैश्वर्यमन्वहम् । भुङ्क्ते भाग्यौजसां भूमिरष्टादशाब्धिजीवितः ॥ ९७ ॥ सप्तभिः कुलकं ॥ अस्य यानविमानं च, विदितं विमलाभिधम् । देवश्च विमलाभिख्यो, नियुक्तस्तद्विकुर्वणे ॥ ९८ ॥

ऊर्ध्वं चाथ सहस्रारादसंख्ययोजनोत्तरौ । आनतप्राणतौ स्वर्गौ, दक्षिणोत्तरयोः स्थितौ ॥ ९९ ॥ अनयोरेकवलयस्थयोरर्द्धार्द्धचन्द्रवत् । चत्वारः प्रतरास्तत्र, प्रतिप्रतरमिन्द्रकम् ॥ ४०० ॥ महाशुक्रसहस्रारमानतं प्राणतं क्रमात् । एभ्यश्च पङ्क्तयः प्राग्वत्पुष्पावकीर्णकास्तथा ॥ १ ॥ अष्टादश सप्तदश, षट्पञ्चाभ्यधिका दश । विमानान्येकैकपङ्क्तौ, प्रतरेषु चतुर्ष्विह ॥ २ ॥ प्रथमप्रतरे तत्र, प्रतिपङ्क्ति विमानकाः । वृत्तत्र्यस्रचतुरस्राः, षट् षट् द्वासप्ततिः समे ॥ ३ ॥ द्वितीयप्रतरे वृत्ताः, पञ्च षट् षट् परे द्विधा । सर्वेऽष्टषष्टिः पाङ्क्तेयास्तृतीय-

२० २५ ॥३५८॥ २८

प्रतरे पुनः ॥ ४ ॥ त्र्यस्राः षट् पञ्च पञ्चान्ये, चतुःषष्टिः समेऽप्यमी । तुर्ये त्रेधाः पञ्च पञ्च, षष्टिश्च सर्वसं-
ख्यया ॥ ५ ॥ चतुर्भिरिन्द्रकैर्युक्ताः, सर्वेऽत्र पङ्क्तिवृत्तकाः । अष्टाशीतिर्द्विनवतिः, पङ्क्तित्र्यस्रा इहोदिताः ॥६॥
अष्टाशीतिः पङ्क्तिचतुरस्राः सर्वे च पङ्क्तिगाः । द्वे शते अष्टषष्टिश्च, शेषाः पुष्पावकीर्णकाः ॥ ७ ॥ शतं
द्वात्रिंशदधिकं, विमानाः सर्वसंख्यया । स्वर्गद्वये समुदिते, स्युश्चत्वारि शतानि ते ॥ ८ ॥ आभाव्यत्वविभा-
गस्तु, विमानानामिहास्ति न । यतोऽनयोरेक एव, द्वयोरपि सुरेश्वरः ॥ ९ ॥ विहायसि निरालम्बा, निरा-
धाराः स्थिता अमी । जगत्स्वभावतः शुक्लवर्णाश्च रुचिरप्रभाः ॥ १० ॥ योजनानां नव शतान्येषु प्रासादतु-
ङ्गता । पृथ्वीपिण्डः शतान्यत्र, त्रयोविंशतिरीरितः ॥ ११ ॥ एषां पूर्वोदितानां च, विमानानां शिरोऽग्रतः ।
ध्वजस्तत्तद्वर्ण एव, स्यान्मरुच्चलाञ्चलः ॥ १२ ॥ अथ सर्वे शुक्लवर्णा, एवैतेऽनुत्तरावधि । किन्तूत्तरोत्तरो-
त्कृष्टवर्णा नभःप्रतिष्ठिताः ॥१३॥ उत्पन्नाः प्राग्वदेतेषु, देवाः सेवाकृतोऽर्हताम् । सुखानि भुञ्जते प्राज्यपुण्यप्रा-
ग्भारभारिणः ॥१४॥ तत्र दक्षिणदिग्वर्त्तिन्यानतस्वर्गसंगते । प्रथमप्रतरेऽमीषां, स्थितिरुत्कर्षतो भवेत् ॥ १५ ॥
अष्टादश सपादा वै, द्वितीयप्रतरेऽब्धयः । सार्द्धा अष्टादश पादन्यूना एकोनविंशतिः ॥ १६ ॥ तृतीयप्रतरे ते
स्युस्तुर्ये चैकोनविंशतिः । सर्वत्रापि जघन्या तु, स्युरष्टादश वार्द्धयः ॥१७॥ प्राणतस्वर्गसंबन्धिन्यथोत्तरदिशि
स्थिते । प्रथमप्रतरे ज्येष्ठा, स्थितिर्भवति नाकिनाम् ॥ १८ ॥ एकोनविंशतिस्तोयधयस्तुर्यलवाधिकाः । एकोन-
विंशतिः सार्द्धा, द्वितीयप्रतरेऽब्धयः ॥ १९ ॥ तृतीयप्रतरेऽब्धीनां, पादोना विंशतिः स्थितिः । तुर्ये च प्रतरे

५ १० १४

ज्येष्ठा, स्थितिर्विंशतिरब्धयः ॥ २० ॥ सर्वत्रापि जघन्या तु, स्थितिरेकोनविंशतिः । पयोधयो देहमानमथ स्थित्यनुसारतः ॥ २१ ॥ कराश्चत्वार एवाङ्गमष्टादशाब्धिजीविनाम् । ते त्रयोऽंशास्त्रयश्चैकोनविंशत्यब्धिजीविनाम् ॥ २२ ॥ विंशत्यब्धिस्थितीनां तु, देहमानं करास्त्रयः । द्विभागाढ्या मध्यमीयायुषां तदनुसारतः ॥ २३ ॥ अष्टादशभिरेकोनविंशत्याऽब्दसहस्रकैः । विंशत्या च यथायोगममी आहारकाङ्क्षिणः ॥ २४ ॥ नवभिः सार्द्धनवभिर्मासैरष्टभिरेव च । उच्छ्वसन्ति यथायोगं, स्वस्वस्थित्यनुसारतः ॥ २५ ॥ रिरंसवस्त्वमी देवाः, सौधर्मस्वर्गवासिनीः । विचिन्तयन्ति चित्तेनानतस्वर्गनिवासिनः ॥ २६ ॥ प्राणतस्वर्गदेवास्तु, विचिन्तयन्ति चेतसा । रिरंसया स्वभोगार्हा, ईशानस्वर्गवासिनीः ॥ २७ ॥ देव्योऽपि ताः कृतस्फारशृङ्गारा मदनोद्धुराः । विदेशस्थाः स्त्रिय इव, कान्तमभ्येतुमक्षमाः ॥ २८ ॥ स्वस्थानस्था एव चेतांस्युच्चावचानि बिभ्रति । देवा अपि तथावस्थास्ताः संकल्प्य स्वचेतसा ॥ २९ ॥ उच्चावचानि चेतांसि, कुर्वन्तो दूरतोऽपि हि । सुरतादिव तृप्यन्ति, मन्दपुंवेदवेदनाः ॥ ३० ॥ देव्योऽपि तास्तथा दूरादपि दिव्यानुभावतः । सर्वाङ्गेषु परिणतैस्तुष्यन्ति शुक्रपुद्गलैः ॥ ३१ ॥ यत ऊर्ध्वं सहस्राराद्न देवीनां गतागते । तत्रस्था एव तेनैते, भजन्ते भोगवैभवम् ॥ ३२ ॥ यश्च तासां सान्तराणामसंख्यैरपि योजनैः । शुक्रसंचारोऽनुभावात्, स ह्यचिन्त्यः सुधाभुजाम् ॥ ३३ ॥ तथा च मूलसंग्रहणीटीकायां हरिभद्रसूरिः—“ देव्यः खल्वपरिगृहीताः सहस्रारं यावद्गच्छन्ति”, तथा च भगवानार्यश्यामोऽपि प्रज्ञापनायामाह—“तत्थ णं जे ते मणपरियारगा देवा तेसिं इच्छामणे समुप्पज्जइ,

स्थितिमनःसुरताधिकारः

२०

२५

॥ ३५९ ॥

२८

इच्छामो णं अच्छराहिं सद्धिं मणपरियारणं करेत्तए, तओ णं तेहिं देवेहिं एवं मणसीकए समाणे खिप्पामेव ताओ अच्छराओ तत्थ गयाओ चेव समाणीओ अणुत्तराइं उच्चावयाइं मणाइं पहारेमाणीओ चिट्ठंति, तओ णं ते देवा ताहिं अच्छराहिं सद्धिं मणपरियारणं करेंति, 'आरेण अच्चुयाओ गमणागमणं तु देवदेवीण'मित्यादिपूर्वसंग्रहणीगतप्रक्षेपगाथायास्तु संवादो न दृश्यते," इति लघुसंग्रहणीवृत्तौ ॥ प्रज्ञप्ताः सर्वतः स्तोका, देवा अप्रविचारकाः । स्युः संख्येयगुणास्तेभ्यश्चेतःसुरतसेविनः ॥ ३४ ॥ तेभ्यः क्रमाच्छब्दरूपस्पर्शसंभोगसेविनः । यथोत्तरमसंख्येयगुणा उक्ता जिनेश्वरैः ॥ ३५ ॥ आद्यैस्त्रिभिः संहननैरुपेता गर्भजा नराः । उत्पद्यन्त एष्वमीभ्यश्च्युत्वाऽप्यनन्तरे भवे ॥ ३६ ॥ गर्भजेषु नरेष्वेवोत्पद्यन्ते नापरेष्वथ । अनुत्तरान्तदेवानामेवं ज्ञेये गतागती ॥ ३७ ॥ एकेन समयेनामी, च्यवन्त उद्भवन्ति च । संख्येया एव नासंख्याः, संख्येयत्वान्नृणामिह ॥ ३८ ॥ अत्रोत्पत्तिच्यवनयोर्विरहः परमो भवेत् । वर्षादर्वागेव मासाः, संख्येयाः प्राणतेऽपि ते ॥ ३९ ॥ अब्दादर्वागेव किंत्वानतव्यपेक्षयाधिकाः । अग्रेऽप्येवं भावनीयं, बुधैर्वर्षशतादिषु ॥ ४० ॥ संपूर्णमभविष्यच्चेद्वर्षवर्षशतादिकम् । तत्तदेवाकथयिष्यन्, सिद्धान्ते गणधारिणः ॥ ४१ ॥ संख्येयानेव मासादीन्, वर्षादेरविवक्षया । केचिन्मन्यन्तेऽविशेषाद्वर्षादेरधिकानपि ॥४२॥ तथाहुः संग्रहणीवृत्तौ–"विशेषव्याख्या चैषा हारिभद्रमूलटीकानुसारतः, केचित्तु सामान्येन व्याचक्षते" पञ्चमीं पृथिवीं यावत्पश्यन्त्यवधिचक्षुषा । आनताः प्राणताश्चैनामेवानल्पाच्छपर्यवाम् ॥ ४३ ॥ आरणाच्युतदेवा अप्येनामेवा-

तिनिर्मलाम् । बहुपर्यायां च तत्राप्यारणेभ्यः परेऽधिकाम् ॥ ४४ ॥ अथात्र प्रतरे तुर्ये, स्यात्प्राणतावतंसकः । सौधर्मवदशोकाद्यवतंसकचतुष्कयुक् ॥ ४५ ॥ प्राणतः स्वःपतिस्तत्रोत्पन्नोऽत्यन्तपराक्रमः । कृत्वाऽर्हत्प्रतिमाद्यर्चां, सिंहासने निषीदति ॥ ४६ ॥ शतैरर्द्धतृतीयैः स, सेव्योऽभ्यन्तरपर्षदाम् । पञ्चपल्याधिकैकोनविंशत्यम्भोधिजीविनाम् ॥ ४७ ॥ पञ्चभिश्च देवशतैर्जुष्टो मध्यमपर्षदाम् । चतुःपल्याधिकैकोनविंशत्यर्णवजीविभिः ॥ ४८ ॥ एकदेवसहस्रेण, सेवितो बाह्यपर्षदि । स त्रिपल्योपमैकोनविंशत्यर्णवजीविना ॥ ४९ ॥ सामानिकानां विंशत्या, सहस्रैः परितो वृतः । एकैकस्यां दिशि वृतस्तावद्भिरङ्गरक्षकैः ॥ ५० ॥ त्रायस्त्रिंशैर्लोकपालैः, सैन्यैः सैन्याधिकारिभिः । आनतप्राणतस्वर्गवासिभिश्चापरैरपि ॥५१॥ अनेकैर्देवनिकरैः, समाराधितशासनः । द्वयोस्ताविषयोरीष्टे, स विंशत्यब्धिजीवितः ॥५२॥ षड्भिः कुलकं ॥ अस्य यानविमानं च, वरनाम्ना प्रकीर्त्तितम् । वराभिधानो देवश्च, नियुक्तस्तद्विकुर्वणे ॥५३॥ द्वात्रिंशदेष संपूर्णान्, जम्बूद्वीपान् विकुर्वितैः । रूपैर्भर्त्तुं क्षमस्तिर्यगसंख्यान् द्वीपवारिधीन् ॥ ५४ ॥



अथानतप्राणतयोरूर्ध्वं दूरमतिक्रमे । असंख्येययोजनानामुभौ स्वर्गौ प्रतिष्ठितौ ॥५५॥ आरणाच्युतनामानौ, सधामानौ मणीमयैः । विमानैर्योगविद् ध्यानैरिवानन्दमहोमयैः ॥५६॥ युग्मम् । चत्वारः प्रतराः प्राग्वद्, द्वयोः साधारणा इह । प्रतिप्रतरमेकैकं, मध्यभागे तथेन्द्रकम् ॥ ५७ ॥ पुष्पसंज्ञमलङ्कारं, चारणं चाच्युतं क्रमात् । एभ्यश्चतुर्दिशं प्राग्वत्पङ्क्तयश्च प्रकीर्णकाः ॥ ५८ ॥ चतुस्त्रिद्व्येकसंयुक्ता, दशैतेषु क्रमादिह । प्रतिपङ्क्ति विमा-

नानि, प्रतरेषु चतुर्ष्वपि ॥ ५९ ॥ अथाद्यप्रतरे पङ्क्तौ, पङ्क्तौ वृत्ता विमानकाः । चत्वारोऽन्ये पञ्च पञ्च, षट्पञ्चा-
शत्समेऽप्यमी ॥ ६० ॥ द्वितीयप्रतरे त्र्यस्राः, पञ्चान्ये द्विविधा अपि । चत्वारश्चत्वार एव, द्विपञ्चाशत्समेऽ-
प्यमी ॥ ६१ ॥ चत्वारश्चत्वार एव, तृतीये त्रिविधा अपि । अष्टचत्वारिंशदेवं, पाङ्क्तेयाः सर्वसंख्यया
॥ ६२ ॥ चतुर्थप्रतरे वृत्तास्त्रयोऽन्ये द्विविधा अपि । चत्वारः स्युश्चतुश्चत्वारिंशच्च सर्वसंख्यया ॥ ६३ ॥
सर्वेऽत्र पङ्क्तिवृत्ताश्च, चतुर्भिरिन्द्रकैः सह । चतुःषष्टिस्तथा पङ्क्तित्रिकोणाश्च द्विसप्ततिः ॥ ६४ ॥ अष्टषष्टिः 5
पङ्क्तिचतुःकोणाः सर्वं शतद्वयम् । चतुर्युतं षण्णवतिश्चेह पुष्पावकीर्णकाः ॥ ६५ ॥ एवं शतानि त्रीण्यत्र,
विमानाः सर्वसंख्यया । एष्वानतप्राणतवद्वर्णाधारोच्चतादिकम् ॥ ६६ ॥ अत्र दक्षिणदिग्भागे, आरणस्वर्ग-
वर्त्तिषु । नाकिनां स्थितिरुत्कर्षात् प्रतरेषु चतुर्ष्वपि ॥ ६७ ॥ सपादविंशतिः सार्द्धविंशतिश्च यथाक्रमम् ।
पादोनैकविंशतिश्च, वार्द्धीनां चैकविंशतिः ॥ ६८ ॥ अथाच्युतस्वर्गसंबन्धिषूदग्भागवर्त्तिषु । प्रतरेषु चतुर्ष्वे-
षूत्कृष्टा सुधाभुजां स्थितिः ॥ ६९ ॥ सपादैकविंशतिश्च, सार्द्धैकविंशतिः क्रमात् । पादोनद्वाविंशतिश्च, 10
द्वाविंशतिश्च वार्द्धयः ॥ ७० ॥ सर्वत्राप्यारणे वारांनिधयो विंशतिर्लघुः । अच्युते सागरा एकविंशतिः सा
निरूपिता ॥ ७१ ॥ द्वाभ्यामेकदशांशाभ्यां, युक्ता इह करास्त्रयः । देहप्रमाणं देवानां, विंशत्यम्भोधिजीविनाम्
॥ ७२ ॥ त एव सैकांशा एकविंशत्युदधिजीविनाम् । त्रयः कराश्च संपूर्णा, द्वाविंशत्यर्णवायुषाम् ॥ ७३ ॥
विंशत्या चैकविंशत्या, द्वाविंशत्या सहस्रकैः । स्वस्वस्थित्यनुसारेण, वर्षैराहारकाङ्क्षिणः ॥ ७४ ॥ दशभिः सार्द्ध- 15

दशभिरेकादशभिरेव च । मासैरमी उच्छ्वसन्ति, स्थितिसागरसंख्यया ॥७५॥ च्युतावुत्पत्तौ न संख्या, भोगो
गत्यागती इह । अवधिज्ञानसीमा च, सर्वं प्राणतनाकवत् ॥ ७६ ॥ किलाद्याभ्यामेव संहननाभ्यां सत्त्व-
शालिनः । आराधिताईताचारा, उत्पद्यन्तेऽत्र सद्गुणाः ॥ ७७ ॥ च्युत्युत्पत्तिविरहोऽत्र, संख्येया वत्सरा
गुरुः । आरणेऽब्दशतादर्वाक्, त एव चाच्युतेऽधिकाः ॥७८॥ अत्रापि प्रतरे तुर्येऽच्युतेऽच्युतावतंसकः । ईशा-
नवद्वेदंकाद्यवतंसकमध्यगः ॥ ७९ ॥ तत्राच्युतस्वर्गपतिर्वरीवर्ति महामतिः । योऽसौ दाशरथेरासीत्प्रेयसी
पूर्वजन्मनि ॥८०॥ शुद्धाऽशुद्धेति को वेद, स्थिता रावणमन्दिरे । किमाद्रताऽपरीक्ष्येति, लोकापवादभीरुणा ॥८१॥
रामेण सा सुशीलापि, सगर्भा तत्यजे वने । सतां लोकापवादो हि, मरणादपि दुस्सहः ॥८२॥ युग्मम् । निन्दयन्ती
सती साऽथ, विपाकं पूर्वकर्मणाम् । भयोद्भ्रान्ता परिश्रान्ता, बभ्रामेतस्ततो वने ॥ ८३ ॥ पुण्डरीकपुराधीशः,
पुण्डरीकोल्लसद्यशाः । गजवाहनराजस्य, बन्धुदेव्याश्च नन्दनः ॥ ८४ ॥ महार्हतो महासत्त्वः, परनारीसहो-
दरः । धार्मिको नृपतिर्वज्रजङ्घस्तत्र समागतः ॥ ८५ ॥ स्वीकृत्य भगिनीत्वेन, तां निनाय स्वमन्दिरम् । तत्र
भ्रातुर्गृह इव, वसति स्म निराकुला ॥८६॥ क्रमात्तन्नारदात् श्रुत्वा, भामण्डलमहीपतिः । पुण्डरीकपुरे सीतां,
समुपेयाय सत्वरः ॥ ८७ ॥ ततश्च जानकी तत्र, सुषुवे दोष्मिनौ सुतौ । नामतोऽनङ्गलवणं, मदनाङ्कुशमप्यथ
॥ ८८ ॥ पितुः स्वरूपमप्राप्तौ, मातरं तौ महाशयौ । जातपूर्वं व्यतिकरमवोचत् साऽपि साश्रुदृक् ॥ ८९ ॥ ततो
निरागसो मातुस्त्यागात्पितरि सक्रुधौ । युद्धाय धीरौ पितरमभ्यषेणयतां द्रुतम् ॥९०॥ उत्पन्नः कोऽपि वैरीति,



२०

२५



२८

तत्स्तौ बलिनौ तीक्ष्णैर्निर्जित्य रणकर्मभिः ।
विषण्णौ रामलक्ष्मणौ । चतुरङ्गचमूचक्रैः, सन्नह्येते स्म सायुधौ ॥९१॥ तत्स्तौ बलिनौ तीक्ष्णैर्निर्जित्य रणकर्मभिः ।
नारदावेदितौ तातं, पितृव्यं च प्रणेमतुः ॥ ९२ ॥ पुत्रौ तावप्युपालक्ष्य, तुष्टौ पुष्टौजसावुभौ । भुजोपपीड-
मालिङ्ग्य, भेजाते परमां मुदम् ॥ ९३ ॥ भवतोर्जननी क्वेति, पृष्टौ ताभ्यां च दर्शिता । गृहायाहूयमाना च,
सती दिव्यमयाचत ॥९४॥ ततः स खातिकां रामोऽङ्गारपूर्णामरीरचत् । पुरुषद्वयदघ्नीं चायतां हस्तशतत्रयीम्
॥ ९५ ॥ पश्यत्सु सर्वलोकेषु, सुरासुरनरादिषु । चमत्कारात्पुलकितेष्वित्यूचे सा कृताञ्जलिः ॥ ९६ ॥ हंहो
भ्रातर्बृहद्भानो!, जागरूको भवान् भुवि । पाणिग्रहणकालेऽपि, त्वमेव प्रतिभूरभूः ॥९७॥ जाग्रत्या वा स्वपत्या वा,
मनोवाक्कायगोचरः । कदापि पतिभावो मे, राघवादपरे यदि ॥ ९८ ॥ तदा देहमिदं दुष्टं, दह निर्दह कौशा-
लम् । न पाप्मने ते स्त्रीहत्या, दुष्टनिग्रहकारिणः ॥ ९९ ॥ त्रिधा च यदि शुद्धाऽहं, तर्हि दर्शय कौतुकम् ।
लोकानेतान् जलीभूय, भूयस्तरङ्गरङ्गितैः ॥ ५०० ॥ अत्रान्तरे च वैताढ्यस्योत्तरश्रेणिवर्त्तिनः । हरिविक्रमभू-
भर्त्तुर्नन्दनो जयभूषणः ॥ १ ॥ ऊढाष्टशतभार्यः स्वकान्तां किरणमण्डलाम् । सुप्तां हेमशिखाख्येन, समं
मातुलसूनुना ॥२॥ दृष्ट्वा निर्वासयामास, दीक्षां च स्वयमाददे । विपद्य समभूत् सापि, विद्युद्दंष्ट्रेति राक्षसी ॥३॥
जयभूषणसाधोश्च, तदाऽयोध्यापुराद्बहिः । तया कृतोपसर्गस्योत्पेदे केवलमुज्ज्वलम् ॥ ४ ॥ आजग्मुस्तत्र
शक्राद्यास्तदुत्सवविधित्सया । आयान्तो ददृशुस्तं च, सीताव्यतिकरं पथि ॥ ५ ॥ ततस्तस्या महासत्याः,
साहाय्यायादिशद्धरिः । पदात्यनीकेशं साधोः, समीपे च स्वयं ययौ ॥ ६ ॥ ततस्तस्यां खातिकायां, सा सीता

निर्भयाऽविशत् । अभूच्च सुरसाहाय्यात्क्षणादप्युदकैर्भृता ॥ ७ ॥ तदुच्छलज्जलं तस्या, उद्वेलस्येव तोयधेः । उत्प्लावयामास मञ्चांस्तुङ्गान् द्रष्टृजनाश्रितान् ॥ ८ ॥ उत्पतन्त्यम्बरे विद्याधरा भीतास्ततो जलात् । चुक्रुशुर्भूचराश्चैवं, पाहि सीते ! महासति ॥ ९ ॥ स्वस्थं चक्रे तदुदकं, ततः संस्पृश्य पाणिना । अचिन्त्याच्छीलमाहात्म्याल्लोके किं किं न जायते ? ॥ १० ॥ तदाऽस्याः शीललीलाभिरनलं सलिलीकृतम् । निरीक्ष्य देवा ननृतुर्ववृषुः कुसुमादि च ॥ ११ ॥ जहृषुः स्वजनाः सर्वे, पौरा जयजयारवैः । तुष्टुवुस्तां सतीं दिव्यो, नव्योऽजनि महोत्सवः ॥ १२ ॥ इत्युन्मृष्टकलङ्कां तां, कान्तां नीत्वाऽऽत्मना सह । जगाम सपरीवारो, रामः केवलिनोऽन्तिके ॥ १३ ॥ पप्रच्छ देशनान्ते च, रामः पूर्वभवान्निजान् । तांश्चाचख्यौ यथाभूतान्, केवली जयभूषणः ॥ १४ ॥ सीताऽपि प्राप्तवैराग्या, संसारासारतेक्षिणी । दीक्षां पार्श्वे मुनेरस्य, जग्राहोत्साहतो रयात् ॥ १५ ॥ षष्टिं वर्षाणि चारित्रमाराध्य विमलाशयात् । त्रयस्त्रिंशदहोरात्रीं, विहितानशना ततः ॥ १६ ॥ मृत्वा समाधिना स्वर्गेऽच्युते लेभेऽच्युतेन्द्रताम् । सोऽथ प्राग्वज्जिनाद्यर्चां, कृत्वा सदसि तिष्ठति ॥ १७ ॥ शतेन पञ्चविंशेन, सेव्योऽभ्यन्तरपर्षदि । एकविंशत्यब्धिसप्तपल्यस्थितिकनाकिनाम् ॥ १८ ॥ सार्द्धद्विशत्या देवानां, मध्यपर्षदि सेवितः । षट्पल्योपमयुक्तैकविंशत्युदधिजीविनाम् ॥ १९ ॥ सेव्यः पर्षदि बाह्यायां, पञ्चभिर्नाकिनां शतैः । एकविंशत्यब्धिपञ्चपल्योपममितायुषाम् ॥ २० ॥ सामानिकानां दशभिः, सहस्रैः सेवितक्रमः । एकैकदिशि तावद्भिस्तावद्भिश्चात्मरक्षकैः ॥ २१ ॥ सैन्यैः सैन्याधिपैस्त्रायस्त्रिंशकैर्लोकपालकैः । सेव्यः परैरपि

अच्युते सीतेन्द्राधिकारः

२०

२५



२८

सुरैरारणाच्युतवासिभिः ॥ २२ ॥ द्वात्रिंशत्साधिकान् शक्तो, जम्बूद्वीपान् विकुर्वितैः । रूपैः पूरयितुं तिर्यक्, चासंख्यद्वीपवारिधीन् ॥ २३ ॥ भुङ्क्ते साम्राज्यमुभयोरारणाच्युतनाकयोः । विमानत्रिशतीनेता, द्वाविंशत्युदधिस्थितिः ॥ २४ ॥ सप्तभिः कुलकं ॥ अस्य यानविमानं स्यात्सर्वतोभद्रसंज्ञकम् । सर्वतोभद्रदेवश्च, नियुक्तस्तद्विकुर्वणे ॥ २५ ॥ स्थानाङ्गपञ्चमस्थाने तु आनतप्राणतयोरारणाच्युतयोश्च प्रत्येकमिन्द्रा विवक्षिता दृश्यन्ते, तथा च तत्सूत्रं—'जहा सक्कस्स तहा सव्वेसिं दाहिणिल्लाणं जाव आरणस्स, जहा ईसाणस्स तहा सव्वेसिं उत्तरिल्लाणं जाव अच्चुयस्स" एतद्वृत्तावपि देवेन्द्रस्तवाभिधानप्रकीर्णक इव द्वादशानामिंद्राणां विवक्षणादारणस्येत्याद्युक्तमिति संभाव्यते, अन्यथा चतुर्षु द्वावेवेन्द्रावत आरणस्येत्याद्यनुपपन्नं स्यादिति, प्रज्ञापनाजीवाभिगमसूत्रादौ तु दशैव वैमानिकेन्द्रा उक्ता इति प्रतीतमेव ॥ अच्युतस्वर्गपर्यन्तमेषु वैमानिकेष्विति । यथासंभवमिन्द्राद्या, भवन्ति दशधा सुराः ॥ २६ ॥ तथाहि—इन्द्राः सामानिकास्त्रायस्त्रिंशास्त्रिविधपार्षदाः । आत्मरक्षा लोकपाला, आनीकाश्च प्रकीर्णकाः ॥ २७ ॥ आभियोग्याः किल्बिषिका, एवं व्यवस्थयाऽन्विताः । अत एव च कल्पोपपन्ना वैमानिका अमी ॥ २८ ॥ एवं च भवनाधीशेष्वप्येते दशधा सुराः । भवन्त्यष्टविधा एव, ज्योतिष्कव्यन्तरेषु तु ॥ २९ ॥ जगत्स्वाभाव्यतस्तत्र, द्वौ भेदौ भवतो न यत् । त्रायस्त्रिंशा लोकपाला, अच्युतात्परतः पुनः ॥ ३० ॥ ग्रैवेयकानुत्तरेषु, स्युः सर्वेऽप्यहमिन्द्रकाः । देवा एकविधा एव, कल्पातीता अमी ततः ॥ ३१ ॥ आरणाच्युतनाकाभ्यां, दूरमूर्ध्वं व्यतिक्रमे । नवग्रैवेयकाभिख्याः, प्रतरा दधति श्रियम् ॥३२॥

५

१०

१४

अधस्तनं मध्यमं च, तथोपरितनं त्रिकम् । त्रिधाऽमी रत्नरुग्रम्याः, संपूर्णचन्द्रसंस्थिताः ॥ ३३ ॥ अनुत्तरमुखस्यास्य, लोकस्य पुरुषाकृतेः । दधते कण्ठपीठेऽमी, मणिग्रैवेयकश्रियम् ॥ ३४ ॥ प्रतरेषु नवस्वेषु, क्रमादेकैकमिन्द्रकं । सुदर्शनं सुप्रबुद्धं, मनोरमं ततः परम् ॥ ३५ ॥ विमानं सर्वतोभद्रं, विशालं सुमनोऽभिधम् । ततः सौमनसं प्रीतिकरमादित्यसंज्ञकम् ॥ ३६ ॥ एभ्यश्च पङ्क्तयो दिक्षु, विमानानां विनिर्गताः । पङ्क्तौ पङ्क्तौ दश नव, विमानान्यष्ट सप्त षट् ॥ ३७ ॥ पञ्च चत्वारि च त्रीणि, द्वे चैतेषु यथाक्रमम् । आद्यग्रैवेयके तत्र, प्रतिपङ्क्ति विमानकाः ॥ ३८ ॥ त्र्यस्राश्चत्वारो द्विधाऽन्ये, त्रयस्त्रयः समे त्वमी । चत्वारिंशत्पङ्क्तिगता, द्वितीयप्रतरे पुनः ॥ ३९ ॥ त्रयस्त्रयस्त्रिधाऽप्येते, षट्त्रिंशत्पङ्क्तिगाः समे । तृतीयप्रतरे वृत्तौ, द्वौ द्विधाऽन्ये त्रयस्त्रयः ॥ ४० ॥ द्वात्रिंशत्पङ्क्तिगाः सर्वे, चतुर्थप्रतरे पुनः । त्र्यस्रास्त्रयः परौ द्वौ द्वौ, सर्वेऽष्टाविंशतिर्मताः ॥४१॥ ग्रैवेयके पञ्चमे च, त्रेधाप्येते द्वयं द्वयम् । सर्वे चतुर्विंशतिश्च, षष्ठे ग्रैवेयके ततः ॥४२॥ द्वौ द्वौ स्तस्त्रिचतुःकोणावेको वृत्तः समे पुनः । विंशतिः पङ्क्तिगा ग्रैवेयके ततश्च सप्तमे ॥ ४३ ॥ एको वृत्तश्चतुःकोण, एकोऽथ त्र्यस्रयोर्द्वयम् । षोडशैवमष्टमे च, त्रिधाप्येकैक इष्यते ॥ ४४ ॥ सर्वे द्वादश नवमग्रैवेयके च पङ्क्तिषु । केवलं त्रिचतुःकोणावेकैकावष्ट तेऽखिलाः ॥ ४५ ॥ अधस्तनत्रिके चैवं, संयुक्तास्त्रिभिरिन्द्रकैः । पञ्चत्रिंशत्पङ्क्तिवृत्ता, विमाना वर्णिता जिनैः ॥ ४६ ॥ चत्वारिंशच्च षट्त्रिंशत्पङ्क्तित्रिचतुरस्रकाः । एवं पाङ्क्तेयाश्च सर्वे, शतमेकादशोत्तरम् ॥ ४७ ॥ तत्रापि—एकचत्वारिंशदाद्ये, सप्तत्रिंशद् द्वितीयके । ग्रैवेयके तृतीये च, त्रयस्त्रिंशत् समे

२०

२५

॥३६३॥

२८

स्मृताः ॥ ४८ ॥ पुष्पावकीर्णकाभावादाद्यग्रैवेयकत्रिके । सर्वसंख्यापि पाङ्क्तेयसंख्याया नातिरिच्यते ॥ ४९ ॥ स्युस्त्रयोत्रिंशतिर्वृत्ताः, सेन्द्रका मध्यमत्रिके । त्र्यस्रा अष्टाविंशतिश्च, चतुरस्रा जिनैर्मिताः ॥ ५० ॥ द्वात्रिंशत्पुष्पावकीर्णाः, ससोत्तरं शतं समे । तृतीये च त्रिके वृत्ता, एकादश सहेन्द्रकाः ॥ ५१ ॥ त्र्यस्राश्च चतुरस्राश्च, षोडश द्वादश क्रमात् । पुष्पावकीर्णका एकषष्टिः शतं च मीलिताः ॥५२॥ ग्रैवेयकेषु नवसु, विमानाः सर्वसंख्यया । अष्टादशाढ्या त्रिशती, वृत्ताश्चैकोनसप्ततिः ॥ ५३ ॥ त्र्यस्राश्चतुरशीतिश्च, चतुरस्रा द्विसप्ततिः । सर्वाग्रेण त्रिनवतिश्चैषु पुष्पावकीर्णकाः ॥ ५४ ॥ द्वाविंशतिर्योजनानां, शतानि पीठपुष्टता । प्रासादाश्च दश शतान्यत्रोच्चाः कम्रकेतवः ॥ ५५ ॥ एषु देवतयोत्पन्ना, जीवाः सुकृतशालिनः । सुखानि भुञ्जते मञ्जुतेजसः सततोत्सवाः ॥५६॥ सर्वेऽहमिन्द्रा अप्रेष्या, अनीशा अपुरोहिताः । तुल्यानुभावास्तुल्याभावलरूपयशःसुखाः ॥ ५७ ॥ स्वाभाविकाङ्गा एवामी, अकृतोत्तरवैक्रियाः । वस्त्रालङ्काररहिताः, प्रकृतिस्था विभूषया ॥ ५८ ॥ तथाहुः—"गेवेज्जगदेवाणं भंते ! सरीरा केरिसा विभूसाए पण्णत्ता ?, गो० ! गेविज्जगदेवाणं एगे भवधारणिज्जे सरीरे, ते णं आभरणवसणरहिया पगतित्था विभूसाए पण्णत्ता." इति जीवाभिगमे । यथाजाता अपि सदा, दर्शनीया मनोरमाः । प्रसृत्वरैर्द्युतिभरैर्द्योतयन्तो दिशो दश ॥ ५९ ॥ यास्तु सन्ति तत्र चैत्ये, प्रतिमाः श्रीमदर्हताम् । भावतस्ताः पूजयन्ति, साधुवद् द्रव्यतस्तु न ॥ ६० ॥ गीतवादित्रनाट्यादिविनोदो नात्र कर्हिचित् । गमनागमनं कल्याणकादिष्वपि न क्वचित् ॥ ६१ ॥ तथोक्तं तत्त्वार्थवृत्तौ—"ग्रैवेयकादयस्तु यथावस्थिता

५

१०

१४

एव कायवाङ्मनोभिरभ्युत्थानाञ्जलिप्रणिपाततथागुणवचनैकाग्र्यभावनाभिर्भगवतोऽर्हतो नमस्यन्ती"ति । सुरते तु कदाप्येषां, मनोऽपि न भवेन्मनाक् । निर्मोहानामिवर्षीणां, सदाप्यविकृतात्मनाम् ॥ ६२ ॥ न चैवं गीतसंगीतसुरतास्वादवर्जितम् । किमेतेषां सुखं नाम, स्पृहणीयं यदङ्गिनाम् ? ॥ ६३ ॥ अत्रोच्यतेऽत्यन्तमन्दपुंवेदोदयिनो ह्यमी । तत्प्राक्तनेभ्यः सर्वेभ्योऽनन्तघ्नसुखशालिनः ॥ ६४ ॥ तथाहि कायसेविभ्योऽनन्तघ्नसुखशालिनः । स्युः स्पर्शसेविनस्तेभ्यस्तथैव रूपसेविनः ॥ ६५ ॥ शब्दोपभोगिनस्तेभ्यस्तेभ्यश्चित्तोपभोगिनः । तेभ्योऽनन्तगुणसुखा, रतेच्छावर्जिताः सुराः ॥ ६६ ॥ यच्चैषां तनुमोहानां, सुखं संतुष्टचेतसाम् । वीतरागाणामिवोच्चैस्तदन्येषां कुतो भवेत् ? ॥ ६७ ॥ मोहानुदयजं सौख्यं, स्वाभाविकमतिस्थिरम् । सोपाधिकं वैषयिकं, वस्तुतो दुःखमेव तत् ॥ ६८ ॥ भोज्याङ्गनादयो येऽत्र, गीयन्ते सुखहेतवः । रोचन्ते न त एव क्षुत्कामाद्यार्त्तिं विनाऽङ्गिनाम् ॥ ६९ ॥ ततो दुःखप्रतीकाररूपा एते मतिभ्रमात् । सुखत्वेन मता लोकैर्हन्त मोहविडम्बितैः ॥ ७० ॥ उक्तं च—"तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि, क्षुधार्त्तः सन् शालीन् कवलयति मांसपाकवलितान् । प्रदीप्ते कामाग्नौ दहति तनुमाश्लिष्यति वधूं, प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥ ७१ ॥" नन्वेवं यदि निर्वाणमदनज्वलनाः स्वतः । कथं ब्रह्मव्रतं नैते, स्वीकुर्वन्ति महाधियः ॥ ७२ ॥ अत्रोच्यते देवभवस्वभावेन कदापि हि । एषां विरत्यभिप्रायो, नाल्पीयानपि संभवेत् ॥ ७३ ॥ भवस्वभाववैचित्र्यं, चाचिन्त्यं पशवोऽपि यत् । भवन्ति देशविरतास्त्रिज्ञाना अप्यमी तु न ॥ ७४ ॥ आद्यग्रैवे-

ग्रैवेयाः स्पर्शादिसुखे क्रमाधिक्यं

२०

२५

॥३६४॥

२८

यकेऽमीषां, स्थितिरुत्कर्षतोऽब्धयः । स्युस्त्रयोविंशतिर्लघ्वी, द्वाविंशतिः पयोधयः ॥ ७५ ॥ कनिष्ठायाः सम-
धिक्रमारभ्य समयादिकम् । यावज्ज्येष्ठां समयोनां, सर्वत्र मध्यमा स्थितिः ॥ ७६ ॥ द्वौ करावष्टभिर्भागैर्यु-
क्तावेकादशोद्भवैः । देहो ज्येष्ठायुषां हीनस्थितीनां तु करास्त्रयः ॥ ७७ ॥ ग्रैवेयके द्वितीये तु चतुर्विंशति-
रब्धयः । ज्येष्ठा स्थितिः कनिष्ठा तु, त्रयोविंशतिरब्धयः ॥ ७८॥ द्वौ करौ सप्तभिर्भागैर्युक्तावेकादशोच्छ्रितैः ।
वपुर्ज्येष्ठायुषां ह्रस्वायुषामष्टलवाधिकौ ॥ ७९ ॥ ग्रैवेयके तृतीये च, वार्द्धयः पञ्चविंशतिः । गुर्वी स्थितिर्ज- ५
घन्या तु, चतुर्विंशतिरेव ते ॥ ८० ॥ ज्येष्ठस्थितीनामत्राङ्गं, द्वौ करौ षड्लवाधिकौ । तत्कनिष्ठस्थितीनां तु,
सप्तांशाढ्यं करद्वयम् ॥ ८१ ॥ ग्रैवेयके तुरीये च, षड्विंशतिः पयोधयः । आयुर्ज्येष्ठं कनिष्ठं तु, पञ्चविंशति-
रब्धयः ॥ ८२ ॥ ज्येष्ठस्थितीनां द्वौ हस्तौ, देहः पञ्चलवाधिकौ । षड्भागाभ्यधिकौ तौ च, तनुर्जघन्यजी-
विनाम् ॥ ८३ ॥ ग्रैवेयके पञ्चमेऽथ, वार्द्धयः सप्तविंशतिः । स्थितिर्ज्येष्ठा कनिष्ठा तु, षड्विंशतिपयोधयः
॥ ८४ ॥ चतुर्लवाधिकौ हस्तौ, द्वावत्राङ्गं परायुषाम् । तौ जघन्यायुषां पञ्चभागयुक्तौ प्रकीर्त्तितौ ॥ ८५ ॥ १०
अष्टाविंशतिरुत्कृष्टा, षष्ठे ग्रैवेयकेऽब्धयः । स्थितिरत्र जघन्या तु, सप्तविंशतिरब्धयः ॥ ८६ ॥ ज्येष्ठस्थिती-
नामत्राङ्गं, द्वौ करौ त्रिलवाधिकौ । तौ कनिष्ठस्थितीनां तु, भागैश्चतुर्भिरन्वितौ ॥ ८७ ॥ ग्रैवेयके सप्तमे स्यु-
रेकोनत्रिंशदर्णवाः । स्थितिर्गरिष्ठा लघ्वी तु, साष्टाविंशतिरब्धयः ॥ ८८ ॥ द्वौ द्विभागाधिकौ हस्तौ, वपु-
र्ज्येष्ठायुषामिह । लघ्वायुषां तु तावेव, त्रिभागाभ्यधिकौ तनुः ॥ ८९ ॥ त्रिंशदम्भोधयो ज्येष्ठा, ग्रैवेयकेऽष्टमे १४

स्थितिः । एकोनत्रिंशदेते च, स्थितिरत्र लघीयसी ॥ ९० ॥ द्वौ करावेकभागाढ्यौ, देहो ज्येष्ठायुषामिह । तावेव द्वौ सद्विभागौ, स्याज्जघन्यायुषां तनुः ॥ ९१ ॥ ग्रैवेयकेऽथ नवम, एकत्रिंशत्पयोधयः । स्थितिर्गुर्वी लघिष्ठा तु, त्रिंशदम्भोधिसंमिता ॥ ९२ ॥ हस्तौ द्वावेव संपूर्णौ, वपुरुत्कृष्टजीविनाम् । द्वौ करावेकभागाढ्यौ, तनुर्जघन्यजीविनाम् ॥ ९३ ॥ स्वस्वस्थित्यम्भोनिधीनां, संख्ययाऽब्दसहस्रकैः । आहारकाङ्क्षिणः पक्षैस्तावद्भिरुच्छ्वसन्ति च ॥ ९४ ॥ आद्यसंहननाः साधुक्रियानुष्ठानशालिनः । आयान्त्येषु नरा एव, यान्ति च्युत्वाऽपि नृष्वमी ॥ ९५ ॥ मिथ्यात्विनो येऽप्यभव्या, उत्पद्यन्तेऽत्र देहिनः । जैनसाधुक्रियां तेऽपि, समाराध्यैव नान्यथा ॥ ९६ ॥ समये च्यवनोत्पत्तिसंख्या चात्र यथाऽच्युते । च्यवनोत्पत्तिविरहः, परमस्तु भवेदिह ॥ ९७ ॥ संख्येया वत्सरशता, आद्यग्रैवेयकत्रिके । अर्वाग्वर्षसहस्रात्ते, मध्यमीयत्रिके पुनः ॥ ९८ ॥ लक्षादर्वाग्वत्सराणां, स्युः संख्येयाः सहस्रकाः । कोटेरर्वाग्वर्षलक्षाः, संख्येयाश्चरमत्रिके ॥ ९९ ॥ आद्यषड्ग्रैवेयकस्थाः, पश्यन्त्यवधिचक्षुषा । षष्ठ्यास्तमोऽभिधानायाः, पृथ्व्या अधस्तलावधि ॥६००॥ अधस्तनापेक्षया च, पश्यन्त्यूर्ध्वोर्ध्वगाः सुराः । विशिष्टबहुपर्यायोपेतामेतां यथोत्तरम् ॥ १ ॥ तृतीयत्रिकगाः पश्यन्त्यधो माघवतीक्षितेः । अवधिज्ञानमेतेषां, पुष्पचङ्गेरिकाकृति ॥ २ ॥ अथोर्ध्वनवमग्रैवेयकाद्दूरमतिक्रमे । स्याद्योजनैरसंख्येयैः, प्रतरोऽनुत्तराभिधः ॥ ३ ॥ नास्त्यस्मादुत्तरः कोऽपि, प्रधानमथवाऽधिकः । ततोऽयमद्वितीयत्वाद्विख्यातोऽनुत्तराख्यया ॥ ४ ॥ सिद्धिसिंहासनस्यैष, बिभर्त्ति पादपीठताम् । चतुर्विमानमध्यस्थरुचिरैकविमानकः

ग्रैवेयकराः

२०

२५



२८

॥ ५ ॥ सर्वोत्कृष्टास्तत्र पञ्च, विमानाः स्युरनुत्तराः । तेष्वेकमिन्द्रकं मध्ये, चत्वारश्च चतुर्दिशम् ॥ ६ ॥ प्राच्यां तत्रास्ति विजयं, विमानवरमुत्तमम् । दक्षिणस्यां वैजयन्तं, प्रतीच्यां च जयन्तकम् ॥ ७ ॥ उत्तरस्यां दिशि भवेद्विमानमपराजितम् । सर्वार्थसिद्धिकृन्मध्ये, सर्वार्थसिद्धिनामकम् ॥ ८ ॥ प्रथमप्रतरे प्रोक्ताः, पङ्क्यो याश्चतुर्दिशम् । द्वाषष्टिकास्ता एकैकहान्याऽत्रैकावशेषिकाः ॥ ९ ॥ मध्ये वृत्तं त्रिकोणानि, दिक्ष्वत्र प्रतरे ततः । पङ्क्तित्रिकोणाश्चत्वारः, पञ्च ते सर्वसंख्यया ॥ १० ॥ सर्वेऽप्येवमूर्ध्वलोके, पङ्क्तिवृत्तविमानकाः । द्व्यशीत्याऽभ्यधिकानि स्युः, शतानि पञ्चविंशतिः ॥ ११ ॥ शतानि साष्टाशीतीनि, षड्विंशतिस्त्रिकोणकाः । षड्विंशतिः शताः पङ्क्तिचतुरस्राश्चतुर्युताः ॥ १२ ॥ चतुःसप्तत्यभ्यधिकैः, शतैरष्टभिरन्विताः । सहस्राः सप्तोर्ध्वलोके, सर्वे पङ्क्तिविमानकाः ॥ १३ ॥ लक्षाश्चतुरशीतिः स्युरेकोननवतिस्तथा । सहस्राण्येकोनपञ्चाशं शते च प्रकीर्णकाः ॥ १४ ॥ सर्वे विमानाश्चतुरशीतिर्लक्षा इहोपरि । सहस्राः सप्तनवतिस्त्रयोविंशतिसंयुताः ॥ १५ ॥ व्यासायामपरिक्षेपैर्जम्बूद्वीपेन संमितम् । विमानं सर्वार्थसिद्धमसंख्येयात्मकाः परे ॥ १६ ॥ ग्रैवेयकवदत्रापि, देवाः सर्वेऽहमिन्द्रकाः । सर्वे मिथः समैश्वर्यरूपकान्तिसुखश्रियः ॥ १७ ॥ येष्वाकाशप्रदेशेषु, शय्यायां प्रथमक्षणे । यथोत्पन्नास्तथोत्तानशया एव भवावधि ॥ १८ ॥ सर्वसंसारिजीवेभ्यः, सर्वोत्कृष्टसुखाशयाः । लीलयैवामितं कालं, गमयन्ति निमेषवत् ॥ १९ ॥ तथाहुर्विशेषावश्यके—"विजयाइसूववाए जत्थोगाढो भवक्खओ जाव । खेत्तेऽवचिट्ठइ तहिं दव्वेसु य देहसयणेसुं ॥२०॥" एकत्रिंशद्वारिधयश्चतुर्षु विजयादिषु । स्थिति-

जघन्योत्कृष्टा तु, त्रयस्त्रिंशत्पयोधयः ॥ २१ ॥ इति प्रज्ञापनाभिप्रायः, समवायाङ्गे तु–"विजयवेजयंतजयंतअपराजियाणं भंते! देवाणं केवइयं कालं ठिई प०?, गो०! जह० बत्तीसं सागर० उक्को० तेत्तीसं साग०"। स्थितिः सर्वार्थसिद्धे तु, स्यादुत्कृष्टैव नाकिनाम्। त्रयस्त्रिंशदम्बुधयो, जघन्या त्वत्र नास्ति सा ॥ २२ ॥ तत्र मध्ये चतुःषष्टिमणप्रमाणमौक्तिकम्। द्वात्रिंशन्मणमानानि, चत्वारि परितस्त्वदः ॥ २३ ॥ अष्टौ तत्परितो मुक्ताः, स्युः षोडशमणैर्मिताः। स्युः षोडशैताः परितो, मुक्ता अष्टमणोन्मिताः ॥ २४ ॥ द्वात्रिंशदेताः परितस्ताश्चतुर्मणसंमिताः। ततः परं चतुःषष्टिर्मणद्वयमितास्ततः ॥ २५ ॥ अष्टाविंशं शतं मुक्ता, एकैकमणसंमिताः। यथोत्तरमथावेष्ट्य, स्थिताः पङ्क्त्या मनोज्ञया ॥ २६ ॥ मौक्तिकानामथैतेषां, मरुत्तरङ्गरङ्गितैः। परस्परेणास्फलतां, जायते मधुरध्वनिः ॥ २७ ॥ सर्वातिशायिमाधुर्यं, तं च श्रोत्रमनोरमम्। चक्रिदेवेन्द्रगन्धर्वादप्यनन्तगुणाधिकम् ॥ २८ ॥ ध्वनितं शृण्वतां तेषां, देवानां लीनचेतसाम्। अप्यब्धयस्त्रयस्त्रिंशदतियान्ति निमेषवत् ॥ २९ ॥ त्रिभिर्विशेषकं। विजयादिविमानेषु, चतुर्षु नाकिनां वपुः। एकत्रिंशदम्बुनिधिस्थितिकानां करद्वयम् ॥ ३० ॥ वपुर्द्वात्रिंशदम्भोधिस्थितीनां तु भवेदिह। एकेनैकादशांशेन, कर एकः समन्वितः ॥ ३१ ॥ एकः करस्त्रयस्त्रिंशदम्भोधिजीविनां तनुः। देवाः सर्वार्थसिद्धे तु, सर्वेऽप्येककरोच्छ्रिताः ॥ ३२ ॥ विजयादिविमानस्थाः, स्वस्थित्यम्बुधिसंख्यया। पक्षैः सहस्रैश्चाब्दानामुच्छ्वसन्त्याहरन्ति च ॥ ३३ ॥ सर्वार्थे तु त्रयस्त्रिंशन्मितैर्वर्षसहस्रकैः। प्सान्ति सार्द्धषोडशभिर्मासैरेवोच्छ्वसन्ति च ॥ ३४ ॥

अनुत्तराः
२५३ मौक्तिकानि

२०

२५

॥ ३६६ ॥

२८

पशुक्रियाभिलाषस्तु, नैतेषां तत्त्वदर्शिनाम् । प्राग्भवाभ्यस्तनवमरसार्द्रीकृतचेतसाम् ॥ ३५ ॥ अतिप्रतनुकर्माणो, महाभागाः सुरा अमी । इहोत्पन्नाः षष्ठभक्तक्षेप्यकर्मावशेषतः ॥ ३६ ॥ यदाहुः पञ्चमाङ्गे—“अनुत्तरोववाइया णं देवा णं भंते ! केवइएणं कम्मावसेसेणं अणुत्तरोववाइयत्तेणं उववण्णा ?, गो० ! जावतियन्नं छट्ठभत्तिए समणे निग्गंथे कम्मं निज्जरेइ एवतिएणं कम्मावसेसेणं अणुत्तरोववाइयत्ताए उववण्णा” इति । शाल्यादिकवलिकानां ससानां छेदने भवति यावान् । कालस्तावति मनुजायुष्केऽपर्याप्तवति मृत्वा ॥ ३७ ॥ मोक्षार्हाध्यवसाया अपि ये कर्मावशेषतो जाताः । लवसत्तमदेवास्ते जयन्ति सर्वार्थसिद्धस्थाः ॥ ३८ ॥ (आर्ये) भगवतीशतक १४ उ० ७ । आद्यसंहननाश्चैषु, स्वाराद्धोज्ज्वलसंयमाः । भव्याः स्वल्पभवा एवायान्ति यान्ति च नृष्वमी ॥ ३९ ॥ कर्मभूमिसमुत्पन्ना, मानुष्योऽपि शुभाशयाः । सम्यग्दृशः शुक्ललेश्या, जायन्तेऽनुत्तरेष्विह ॥४०॥ तथाहुः—‘केरिसिया णं भंते ! मणुस्सी उक्कोसकालठिइयं आउयकम्मं बंधति ?, गो० कम्मभूमीया वा’ इत्यादि प्रज्ञा० त्रयोविंशतितमे पदे । मानुषी सप्तमनरकयोग्यमायुर्न बध्नाति, अनुत्तरसुरायुस्तु बध्नातीत्येतद्वृत्तौ । जीवाः सर्वार्थसिद्धे तूद्भवन्त्येकभवोद्भवाः । च्युत्वा ते भाविनि भवे, सिद्ध्यन्ति नियमादितः ॥ ४१ ॥ उक्तं च—“सवट्ठाओ नियमा एगंमि भवंमि सिज्झए जीवो । विजयाइविमाणेहि य संखिज्जभवा उ बोद्धवा ॥ ४२ ॥” चतुर्विंशतिं भवान्नातिक्रामन्तीति तु वृद्धवादः, तथा—चतुर्ष्वेषु विमानेषु, द्विरुत्पन्ना हि जन्तवः । अनन्तरभवेऽवश्यं, प्रयान्ति परमं पदम् ॥ ४३ ॥ तथोक्तं जीवाभिग-

५

१०

१४

मवृत्तौ—"विजयादिचतुष्टुं वारद्वयं सर्वार्थसिद्धमहाविमान एकवारं गमनसंभवः, तत ऊर्द्धं मनुष्यभवासादनेन मुक्तिप्राप्ते"रिति। योगशास्त्रवृत्तौ तु विजयादिषु चतुर्ष्वनुत्तरविमानेषु 'द्विचरमा' इत्युक्तमिति ज्ञेयं, तत्त्वार्थभाष्येऽपि विजयादिष्वनुत्तरेषु विमानेषु देवा द्विचरमा भवन्ति, द्विचरमा इति ततश्च्युताः परं द्विर्जनित्वा सिद्ध्यन्तीति, एतट्टीकापि—द्विचरमत्वं स्पष्टयति—ततो विजयादिभ्यश्च्युताः परमुत्कर्षेण द्विर्जनित्वा मनुष्येषु सिद्धिमधिगच्छन्ति, विजयादिविमानाच्च्युतो मनुष्यः पुनरपि विजयादिषु देवस्ततश्च्युतो मनुष्यः स सिद्ध्यतीति। पञ्चमकर्मग्रन्थे—'तिरिनरयतिजोआणं नरभवजुअस्स चउपल्लतेसट्ठं ॥' एतद्गाथासूत्रवृत्त्यनुसारेण तु विजयादिविमानेषु द्विर्गतोऽपि संसारे कतिचिद्भवान् भ्रमति, नरकतिर्यग्गतियोग्यमपि कर्म बध्नातीति दृश्यते, तदत्र तत्त्वं केवलिगम्यं। सर्वार्थदेवाः संख्येया, असंख्येयाश्चतुर्षु ते। एतेष्वेकक्षणोत्पत्तिच्युतिसंख्याऽच्युतादिवत् ॥४४॥ पल्योपमस्यासंख्येयो, भागः परममन्तरम्। सुरोत्पत्तिच्यवनयोर्विजयादिचतुष्टये ॥ ४५ ॥ पल्योपमस्यासंख्येयो, भागः परममन्तरम्। सर्वार्थसिद्धे सर्वत्र, जघन्यं समयोऽन्तरम् ॥४६॥ जवनालकापराख्यं, कन्याचोलकमुच्छ्रितम्। आकारेणानुकुरुते, एतेषामवधिर्यतः ॥ ४७ ॥ किंचिदूनां लोकनाडीं, पश्यन्त्यवधिचक्षुषा। ऊनत्वं तु स्वविमानध्वजादूर्द्धमदर्शनात् ॥ ४८ ॥ उक्तं च तत्त्वार्थवृत्तौ—"अनुत्तरवि-

१ वारद्वयमिति द्विचरम इति चैकार्थावेव, आनन्तर्येण चेद्द्विर्जनिर्न स्यात् तदा चतुर्विंशतिं भवान् यावत् संसारः न परत इति तदप्यविरुद्धं, कर्मग्रन्थोक्तं तु उद्योतादीनां बन्धान्तरालस्योत्कर्षस्य संभवमपेक्ष्य, न तु तावता विरोधः।

लवसत्तमे शेषकर्म नारीगमनं भवाः संख्या च २०

२५ २६

मानपञ्चकवासिनस्तु समस्तां लोकनाडीं पश्यन्ति लोकमध्यवर्त्तिनीं, न पुनर्लोक"मिति अत एवावाधज्ञाना-धारपर्यायवत्तया । क्षेत्रस्यावस्थानमुक्तं, त्रयस्त्रिंशतमम्बुधीन् ॥ ४९ ॥ यदेषामुत्पत्तिदेशावगाढानां भवावधि । अवधेरप्यवगाढक्षेत्रावस्थितिनिश्चयः ॥ ५० ॥ तथोक्तं विशेषावश्यके—"खेत्तस्स उऽवट्ठाणं तेत्तीसं सागरा उ कालेणं । दव्वे भिन्नमुहुत्तो पज्जवलंभे य सत्तट्ठ ॥ ५१ ॥"

सर्वार्थसिद्धशृङ्गाग्राद्गत्वा द्वादशयोजनीम् । जात्यार्जुनस्वर्णमयी, भाति सिद्धिशिलाऽमला ॥ ५१ ॥ पञ्चचत्वारिंशता सा, मिता योजनलक्षकैः । विष्कम्भादायामतश्च, परितः परिधिः पुनः ॥ ५२ ॥ एका कोटी योजनानां, सहस्रैस्त्रिंशताऽन्विता । द्विचत्वारिंशता लक्षैर्योजनानां द्विशत्यपि ॥ ५३ ॥ तथा पञ्चाशदेकोना, योजनानां च साधिका । बाहल्यं मध्यभागेऽस्या, योजनान्यष्ट कीर्त्तितम् ॥ ५४ ॥ स मध्यभागो विष्कम्भायामाभ्यामष्टयोजनः । ततोऽङ्गुलपृथक्त्वं च, योजने योजने गते ॥५५॥ बाहल्यं हीयते तेन, पर्यन्तेष्वखिलेष्वपि । अङ्गुलासंख्यभागाङ्गी,मक्षिकापत्रतस्तनुः ॥ ५६ ॥ तुषारहारगोक्षीरधाराधवलरोचिषः । नामान्यस्याः प्रशस्याया, द्वादशाहुर्जिनेश्वराः ॥ ५७ ॥ ईष १ त्तथेषत्प्राग्भारा २, तन्वी च ३ तनुतन्विका ४ । सिद्धिः ५ सिद्धालयो ६ मुक्ति ७ मुक्तालयो ८ ऽपि कथ्यते ॥ ५८ ॥ लोकाग्रं ९ तत्स्तूपिका च १०; लोकाग्रप्रतिवाहिनी ११ । तथा सर्वप्राणभूतजीवसत्त्वसुखावहा १२ ॥ ५९ ॥ उत्तानच्छत्रसंकाशा, घृतपूर्णा करोटिकाम् । तादृशां तलयत्यस्या लोकान्तो योजने गते ॥ ६० ॥ ऋजुर्द्वादशयोजन्याः, केचित्सर्वार्थसिद्धितः । लोकान्त-

समासवृत्तौ तु रुक्मं-श्वेतं हेम, तन्मयोऽयमुक्त इति ज्ञेयं। विशिष्टैरष्टभिः कूटैः, सोऽतितुङ्गैरलङ्कृतः। दिग-ङ्गनानामष्टानां क्रीडापर्वतकैरिव ॥ ३७ ॥ आद्यं पूर्वार्णवासन्नं, सिद्धायतनसंज्ञितम् । रुक्मिदेवाधिष्ठितं च, रुक्मिसंज्ञं द्वितीयकम् ॥३८॥ रम्यकाधीश्वरस्थानं, तृतीयं रम्यकाभिधम्। तुर्यं नरकान्तादेव्या, नरकान्ताभिधं च तत् ॥३९॥ तथा महापुण्डरीकह्रदेशायाः शुभास्पदम्। बुद्धिकूटं बुद्धिदेव्याः, पञ्चमं परिकीर्त्तितम् ॥ ४० ॥ रूप्य-कूलानदीदेव्याः, षष्ठं कूटं तदाख्यया। सप्तमं हैरण्यवतं, हैरण्यवतदैवतम् ॥४१॥ मणिकांचनदेवाख्यं, मणिकाञ्च-नमष्टमम्। आद्ये जिनालयोऽन्येषु, प्रासादाः स्वामिनाकिनाम् ॥४२॥ मानं स्वरूपं कूटानां, चैत्यनिर्जरसद्मनाम्। हिमवद्गिरिवत्सर्वं, तथैवास्य गिरेरपि ॥४३॥ ह्रदो महापुण्डरीको, महापद्मह्रदोपमः। विभाति सलिलैः स्वच्छै-र्निर्जयन्मानसं सरः ॥ ४४ ॥ अस्मिंश्च मूलकमलं, योजनद्वयसंमितम्। तदर्धार्धप्रमाणानि, शेषाब्जवलयानि षट् ॥४५॥ स्थापना॥ अत्राधिष्ठायिका बुद्धैर्बोधिता बुद्धिदेवता। भवनादिसमृद्ध्या सा, श्रीदेवतानुकारिणी ॥४६॥ ह्रदादस्मादापगे द्वे, दक्षिणोदग्मुखे क्रमात्। विनिर्गते श्मश्रुलेखे, इवोत्तरौष्ठमध्यतः ॥ ४७ ॥ दाक्षिणात्यतो-रणेन, निःसृत्य दक्षिणामुखी। नरकान्ता स्वके कुण्डे, गत्वा स्नात्वेव निर्गता ॥ ४८ ॥ रम्यकोदीच्यभागस्य, द्वैधीकारभयादिव। अर्वाक् स्थिता योजनेन, माल्यवद्धरणीधरात् ॥ ४९ ॥ ततो वलित्वा भिन्दाना, पूर्वार्द्धं रम्यकस्य सा। पूर्वाम्भोधौ याति नदीषट्पञ्चाशत्सहस्रयुक् ॥ ५० ॥ उत्तराहतोरणेन, विनिर्गत्योत्तरामुखी। रूप्यकूला स्वप्रपातकुण्डे निपत्य निर्गता ॥ ५१ ॥ दक्षिणार्द्धं च हैरण्यवतस्य कुर्वती द्विधा। क्रोशद्वयेनासं-

रम्यकं रु-
क्मी च

२०

२५
॥२१९॥
२८

प्रासा, विकटापातिनं गिरिम् ॥ ५२ ॥ ततो निवृत्त्य हैरण्यवतापरार्द्धभेदिनी । अष्टाविंशत्या सहस्रैः, सरिद्भिराश्रिता पथि ॥ ५३ ॥ तादृक्क्षेत्रविभेदोत्थपातकानुशयादिव । पपात पश्चिमाम्भोधौ, तद्दुष्कृतजिघांसया ॥ ५४ ॥ इति रुक्मिपर्वतः ॥ स्थापना ॥

क्षेत्रं च हैरण्यवतमुदीच्यां रुक्मिणो गिरेः । दक्षिणस्यां शिखरिणोर्द्वयोर्लीनमिवान्तरे ॥ ५५ ॥ रूप्यं हिरण्यशब्देन, सुवर्णमपि चोच्यते । ततो हिरण्यवन्तौ द्वौ, तन्मयत्वाद्धराधरौ ॥ ५६ ॥ रुक्मी च शिखरी चापि, तद्धिरण्यवतोरिदम् । हैरण्यवतमित्याहुः, क्षेत्रमेतन्महाधियः ॥ ५७ ॥ प्रयच्छति हिरण्यं वा, युग्मिनामासनादिषु । यत्सन्ति तत्र बहवः, शिलापट्टा हिरण्यजाः ॥ ५८ ॥ प्रभूतं तन्नित्ययोगि, वाऽस्यास्तीति हिरण्यवत् । तदेव हैरण्यवतमित्याहुर्मुनिसत्तमाः ॥ ५९ ॥ हैरण्यवतनामा वा, देवः पल्योपमस्थितिः । ऐश्वर्यं कलयत्यत्र, तद्योगात्प्रथितं तथा ॥ ६० ॥ क्षेत्रानुभावो मानं च, नृतिरश्चामपि स्थितिः । निखिलं हैमवतवद्विज्ञेयमिह धीधनैः ॥ ६१ ॥ क्षेत्रस्यास्य मध्यभागे, चतुरंशविभाजकः । वैताढ्यो विकटापाती, रात्निकः पल्यसंस्थितः ॥ ६२ ॥ पद्मोत्पलशतपत्रादीनि सन्त्यत्र संततम् । विकटापातिवर्णानि, विकटापात्ययं ततः ॥ ६३ ॥ आस्ते देवोऽरुणाख्योऽत्र, स्वामी पल्योपमस्थितिः । जम्बूद्वीपेऽन्यत्र नगर्युदीच्यामस्य मेरुतः ॥ ६४ ॥ शेषमस्य स्वरूपं तु, गन्धापातिनगेन्द्रवत् । एवं चत्वारोऽपि वृत्तवैताढ्या रात्निकाः समाः ॥ ६५ ॥ एवं च क्षेत्रविचारसूत्रवृत्त्यभिप्रायेण हैमवते शब्दापाती हैरण्यवते विकटापाती

हरिवर्षे गन्धापाती रम्यके माल्यवानिति वृत्तवैताढ्यानां व्यवस्था, जम्बूद्वीपप्रज्ञप्त्यभिप्रायेण तु हैमवते शब्दापाती हरिवर्षे विकटापाती रम्यके गंधापाती हैरण्यवते माल्यवानिति व्यवस्थेत्यत्र तत्त्वं सर्वविद्वेद्यम् । इति हैरण्यवतक्षेत्रं ॥ स्थापना ॥

उदीच्यां हैरण्यवतादपागैरवतादपि । षष्ठो वर्षधरः ख्यातः, शिखरी नाम पर्वतः ॥ ६६ ॥ ज्ञेयः शिखरिशब्देन, वृक्षस्तदाकृतीनि च । भूयांसि रत्नकूटानि, सन्त्यत्रेति शिखर्यसौ ॥ ६७ ॥ सन्त्येकादश कूटानि, वक्ष्यमाणानि यानि तु । तेभ्योऽमून्यतिरिक्तानि, कूटानीति विभाव्यताम् ॥ ६८ ॥ अन्यथा सर्वशैलानां, यथोक्तकूटयोगतः । शिखरित्वव्यपदेशः, संभवन् केन वार्यते ? ॥ ६९ ॥ स चैकादशभिः कूटैः, परितोऽलङ्कृतो गिरिः । प्रतिमाभिरिव श्राद्धधर्मः शर्मददर्शनः ॥ ७० ॥ आद्यं सिद्धायतनाख्यं, पूर्ववारिधिसन्निधौ । द्वितीयं शिखरिस्वर्गिकूटं शिखरिसंज्ञकम् ॥ ७१ ॥ तृतीयं हैरण्यवतकूटं तत्स्वामिदैवतम् । तुर्यं सुवर्णकूलाख्यं, तन्नदीदेवतास्पदम् ॥ ७२ ॥ दिक्कुमार्याः सुरादेव्याः, पञ्चमं च तदाख्यया । षष्ठं रक्तावर्त्तनाख्यं, लक्ष्मीकूटं च सप्तमम् ॥ ७३ ॥ रक्तवत्यावर्त्तनाख्यं, प्रज्ञप्तं कूटमष्टमम् । इलादेव्या दिक्कुमार्या, नाम्ना च नवमं मतम् ॥७४॥ दशमं चैरावताख्यमैरावतसुराश्रितम् । स्यात्तिगिञ्छिह्रदेशायास्तिगिञ्छिकूटमन्तिमम् ॥७५॥ इदं जम्बूद्वीपप्रज्ञप्तिसूत्राभिप्रायेण, क्षेत्रसमासेषु तत्र पञ्चमं श्रीदेवीकूटं, नवमं गन्धापातीकूटमिति दृश्यते । आद्ये चैत्यं शेषकूटदशके च सुधाभुजाम् । तत्तत्कूटसमाख्यानां, स्युः प्रासादावतंसकाः ॥ ७६ ॥ पुण्डरीकह्रदश्चात्र, पद्मह्रदसहो-

दरः। अस्मिंश्च मूलकमलमेकयोजनसंमितम् ॥ ७७ ॥ तदर्द्धार्द्धप्रमाणानि, शेषाब्जवलयानि षट् । लक्ष्मीदेवी वसत्यत्र, स्थित्या श्रीदेवतेव सा ॥ ७८ ॥ हिमवद्गिरिवत्सर्वं, मानमत्रापि चिन्त्यताम् । ज्याबाहाधनुरादीनां, केवलं दिग्विपर्ययः ॥ ७९ ॥ नद्यस्तिस्रो ह्रदादस्मान्निर्गतास्त्रिभिरध्वभिः । नदी सुवर्णकूलाख्या, रक्ता रक्तवतीति च ॥ ८० ॥ दक्षिणेनाध्वना तत्र, निर्गत्य दक्षिणामुखी । सुवर्णकूला पतति, कुण्डे स्वसमनामनि ॥ ८१ ॥ ततो निर्गत्य हैरण्यवतोत्तरार्द्धभेदिनी । योजनार्द्धेन दूरस्था, विकटापातिभूधरात् ॥ ८२ ॥ प्राक् परावर्त्त्य हैरण्यवतपूर्वार्द्धमादितः । सूत्रधारस्येव रज्जुर्द्वेधा विदधती क्रमात् ॥ ८३ ॥ अष्टाविंशत्या सहस्रैर्नदीभिः परिपूरिता । गृहिणीव स्वामिगेहे, विशति प्राच्यवारिधौ ॥ ८४ ॥ अस्मादेव ह्रदात्प्राच्यतोरणेन विनिर्गता । रक्तानदी पूर्वदिशि, प्रवृत्ता पर्वतोपरि ॥ ८५ ॥ योजनानां पञ्चशतीमतिक्रम्य ततः परम् । रक्तावर्त्तनकूटस्याधस्तादुत्तरतो भवेत् ॥ ८६ ॥ त्रयोविंशां पञ्चशतीं, योजनानां कलात्रयम् । सार्द्धं गत्वाऽधिकमुदक्शिखरिक्ष्माधरोपरि ॥ ८७ ॥ वज्रजिह्विकयोत्तीर्य, कुण्डे रक्ताप्रपातके । शतयोजनप्रपाता, भुजङ्गीवाविशद्बिले ॥ ८८ ॥ उदीच्यतोरणेनास्माद्विनिर्गत्योत्तरामुखी । नदीसप्तसहस्राढ्या, वैताढ्यगिरिसीमया ॥ ८९ ॥ दर्याः खण्डप्रपातायाः, प्राच्यां वैताढ्यभूधरम् । भित्त्वोदीच्यैः सप्तनदीसहस्रैराश्रिताऽध्वनि ॥ ९० ॥ सहस्रैः सरितामेवं, चतुर्दशभिराश्रिता । विभिद्य जगतीं पूर्वार्णवेऽसौ विशति द्रुतम् ॥ ९१ ॥ पश्चिमेन तोरणेन, ह्रदादस्माद्विनिर्गता । रक्तावती पश्चिमायां, प्रवृत्ता पर्वतोपरि ॥ ९२ ॥ अतिक्रम्य पञ्चशतीं, निजावर्तनकूटतः । पर्वतो-

पर्युत्तरस्यां, व्यूढा तत्र व्यतीत्य च ॥ ९३ ॥ त्रयोविंशां पञ्चशतीं, साग्रं सार्द्धकलात्रयम्। वज्रमय्या जिह्विकया, योजनैकशतोन्नतात् ॥ ९४ ॥ निपत्य पर्वताद्रक्तावतीप्रपातकुण्डके । रोषावेशान्मानिनीव, दत्तझम्पा महावटे ॥ ९५ ॥ उदीच्येनाध्वना तस्मादुदग्मुखी विनिर्गता । आवैताढ्यान्तिकं सप्तनदीसहस्रसेविता ॥ ९६ ॥ कन्दरायास्तमिस्रायाः, पश्चिमायां धराधरम्। द्रुतं विभिद्य वैताढ्यमुत्तरार्द्धं समागता ॥ ९७ ॥ उदीच्यैः सप्तभिः सिन्धुसहस्रैः सह गच्छति । पश्चिमाब्धाविति नदीचतुर्दशसहस्रयुक् ॥ ९८ ॥ इति शिखरिपर्वतः ॥ स्थापना ॥

२०

उत्तरस्यां शिखरिण, उदीच्यलवणार्णवात् । दक्षिणस्यामैरवतक्षेत्रं भाति मनोहरम् ॥ ९९ ॥ ऐरावतः सुरो ह्यस्य, स्वामी पल्योपमस्थितिः। वसत्यत्र ततः ख्यातमिदमैरावताख्यया ॥ १०० ॥ भरतस्य प्रतिबिम्बमिवेदं संमुखेऽम्बुधौ । तत्प्रमाणं तेन तुल्यं, सदा तदनुवर्त्तते ॥ १ ॥ भानुना भासिते तस्मिंस्तेनेदमपि भासितम्। इन्दुना शोभिते तत्रादोऽपि स्यात्तेन शोभितम् ॥ २ ॥ तद्यदा पञ्चिररकैर्भिन्नां भिन्नां दशां श्रयेत्। तथेदमपि सन्मित्रमिव मित्रानुवृत्तिकृत् ॥ ३ ॥ जिने तत्र जिनोऽत्रापि, चक्रयत्र तत्र चक्रिणि। वासुदेवादिषु सत्सु, तत्रात्रापि भवन्ति ते ॥ ४ ॥ इदं दशाश्चर्ययुतं, स्यात्तत्राश्चर्यशालिनि । हसतीव निजं मित्रं, भरतं तुल्यचेष्टया ॥ ५ ॥ मध्येस्थितेन द्वेधेदं, वैताढ्यगिरिणा कृतम्। दाक्षिणात्यैरावतार्द्धमुदीच्यैरावतार्द्धकम् ॥ ६ ॥ यदुदीच्यार्णवासन्नमुत्तरार्द्धं तदुच्यते। शिखरिक्ष्माधरासन्नं, दक्षिणार्द्धमुदीरितम् ॥ ७ ॥ क्षेत्रा-

२५

॥ २२१ ॥

२८

शापेक्षया ह्येषा, दक्षिणोदग्व्यवस्थितिः । सूर्याशापेक्षया त्वस्य, याम्यार्द्धं वार्द्धिसन्निधौ ॥ ८ ॥ उदीच्यार्द्धं नगासन्नं, व्यवहारस्त्वयं पुनः । क्षेत्राशापेक्षया सर्वो, न तापदिगपेक्षया ॥ ९ ॥ उदीच्यार्द्धमस्य याम्यभरतार्द्धेन सन्निभम् । तद्वज्जीवेषुचापानि, बाहाऽत्रापि न संभवेत् ॥ १० ॥ इतः प्रभृति याम्यार्द्धादिषु सर्वं विवर्द्धते । आविदेहार्द्धमिष्वासजीवाबाहाशरादिकम् ॥ ११ ॥ वैताढ्यस्याप्यत्र तत, उत्तरस्यां किलाल्पकः । आयामो दक्षिणस्यां च, वर्द्धमानः क्रमान्महान् ॥ १२ ॥ याम्यविद्याधरश्रेण्यां, विद्याधरपुराण्यतः । षष्टिर्भवन्त्युदीच्यायां, श्रेण्यां पञ्चाशदेव च ॥ १३ ॥ शेषं सर्वमाभियोग्यश्रेणिवेदीवनादिकम् । ज्ञेयं भरतवैताढ्योपममुक्तानुसारतः ॥ १४ ॥ कूटान्येकादशात्रापि, तन्नामानि तथा क्रमात् । किंतु नाम्नि विशेषोऽस्ति, द्वितीयस्याष्टमस्य च ॥ १५ ॥ दक्षिणैरवतार्द्धाख्यं, द्वैतीयीकं भवेदिह । उत्तरैरावतार्द्धाख्यं, भवेच्च कूटमष्टमम् ॥ १६ ॥ रक्तारक्तवतीश्रोतस्विनीभ्यां तस्थुषाऽन्तरे । वैताढ्येन च षट्खण्डमिदमैरावतं कृतम् ॥ १७ ॥ तत्र च—उत्तरार्द्धमध्यखण्डे, उदीच्यलवणोदधेः । दक्षिणस्यामुदीच्यां च, वैताढ्याभिधभूधरात् ॥ १८ ॥ चतुर्दशाधिकशतं, योजनानां कलास्तथा । एकादशातिक्रम्याब्धिवैताढ्याभ्यामिहान्तरे ॥ १९ ॥ नगरी स्यादयोध्याख्या, नवयोजनविस्तृता । द्वादशयोजनायामाऽलङ्कृतोत्तमपूरुषैः ॥ २० ॥ शेषाः पञ्चापि खण्डाः स्युरनार्या धर्मवर्जिताः । अत्रापि चार्यदेशानामध्यर्द्धा पञ्चविंशतिः ॥ २१ ॥ एतेष्वेव हि देशेषु, जिनचक्र्यर्द्धचक्रिणाम् । स्यादुत्तमनृणां जन्म, प्रायो धर्मव्यवस्थितिः ॥ २२ ॥

एवं च जम्बूद्वीपेऽस्मिन्, सप्तक्षेत्री विराजते। मध्ये महाविदेहाख्यमपागुदक् त्रयं त्रयम् ॥ २३ ॥ भरतैरावते तत्र, तुल्यरूपे निरूपिते। समस्वरूपे हैरण्यवतहैमवते अपि ॥ २४ ॥ रम्यकाख्यहरिवर्षे, उभे तुलाधृते इव। पूर्वापरविदेहानामप्येवं तुल्यता मता ॥ २५ ॥ देवोत्तरकुरूणामप्येवं तुल्यत्वमाहितम्। विना भरतैरवतविदेहानपराः पुनः ॥ २६ ॥ अकर्मभूमयः षट् स्युः, कृष्यादिकर्मवर्जिताः। तिस्रो भरतैरवतविदेहाः कर्मभूमयः ॥ २७ ॥ तथा चात्र वर्षधरपर्वताः षट् प्रकीर्त्तिताः। विदेहेभ्यो दक्षिणस्यामुदीच्यां च त्रयं त्रयम् ॥ २८ ॥ हिमवच्छिखरी चैकादशकूटौ मिथःसमौ। रुक्मिमहाहिमवतावष्टकूटौ तथैव च ॥ २९ ॥ नीलवन्निषधौ तुल्यौ, नवकूटौ परस्परम्। मेरुर्निरुपमः सोऽपि, नवकूटोपशोभितः ॥ ३० ॥ भरतैरावतक्षेत्रद्वात्रिंशद्विजयोद्भवाः। वैताढ्याः स्युश्चतुस्त्रिंशत्प्रत्येकमेकभावतः ॥ ३१ ॥ सर्वेऽप्येते रूप्यवर्णा, नवकूटोपशोभिताः। दशोत्तरशतद्रङ्गाभियोग्यालिश्रयान्विताः ॥ ३२ ॥ चत्वारो वृत्तवैताढ्याः, समरूपाः परस्परम्। हरिवर्षहैमवतहैरण्यवतरम्यके ॥ ३३ ॥ देवोत्तरकुरुस्थेषु, ह्रदेषु दशसु ध्रुवम्। प्राक् प्रत्यक् च दश दश, काञ्चनाचलभावतः ॥ ३४ ॥ द्वे शते काञ्चननगाः, परस्परानुकारिणः। स्थिता भोक्तुं चतसृभिः, पङ्क्तिभिर्बाधवा इव ॥ ३५ ॥ गजदन्तौ सौमनसगन्धमादनसंज्ञितौ। रूप्यपीतरत्नमयौ, सप्तकूटोपशोभितौ ॥ ३६ ॥ विद्युत्प्रभमाल्यवन्तौ, वैडूर्यतपनीयजौ। नवकूटाञ्चितौ तुल्या, इत्याकृत्या नगा अमी ॥ ३७ ॥ चतुःकूटाः षोडशापि, वक्षस्काराद्रयः समाः। विचित्रचित्रयमकाः, समरूपाः परस्परम् ॥ ३८ ॥ द्विशत्येकोनसप्तत्याधि-



२०

२५



२८

मित्यतः। सर्ववैताढ्यकूटानि, षडुत्तरं शतत्रयम् ॥ ३९॥ प्रतिवैताढ्यमेतेषु, कूटत्रयं तु मध्यमम्। सौवर्णं शेष-कूटाश्च, रात्निका इति तद्विदः ॥ ४० ॥ सक्रोशषड्योजनोच्चाश्चैत्यप्रासादशोभिताः। सर्वेऽपि भरतस्थायिवैताढ्यकूटसोदराः ॥ ४१ ॥ कूटाः सप्त सौमनसगन्धमादनशैलयोः। रुक्मिमहाहिमवतोरष्टावष्टौ पृथक् पृथक् ॥ ४२ ॥ विद्युत्प्रभमाल्यवतोर्नीलवन्निषधागयोः। मेरोश्च नन्दनवने, कूटा नव नवोदिताः ॥ ४३ ॥ हिमवच्छिखरिकूटा, एकादश पृथक् पृथक्। षोडशानां चतुःषष्टिर्वक्षस्कारमहीभृताम् ॥ ४४ ॥ हरिस्सहहरिकूटबलकूटोज्झिता इमे। शतं सर्वेऽष्टपंचाशं, हिमवत्कूटसन्निभाः ॥४५॥ योजनानां पञ्च शतान्युच्चा रात्रा मिथः समाः। साहस्राः स्वर्णजास्तुल्या, हरिस्सहादयस्त्रयः ॥ ४६ ॥ एवं च गिरिकूटानां, त्रिविधानां प्रमाणतः। सर्वसंख्या सप्तषष्ट्या, समन्विता चतुःशती ॥ ४७ ॥ द्वात्रिंशति विजयेषु, भरतैरवताख्ययोः। चतुस्त्रिंशद्धि वृषभकूटास्तुल्याः परस्परम् ॥ ४८ ॥ भद्रशालाभिधवने, जम्बूशाल्मलिवृक्षयोः। अष्टाष्टेत्यष्टपञ्चाशद्भूमिकूटा मिथः समाः ॥ ४९ ॥ एतेषां वक्तुमुचिते, पर्वतत्वेऽपि वस्तुतः। कूटत्वव्यवहारोऽयं, पूर्वाचार्यानुरोधतः ॥ ५० ॥ महाह्रदाश्च षट् पद्मपुण्डरीकौ समाविह। महापद्ममहापुंडरीकावपि मिथः समौ ॥ ५१ ॥ तिगिञ्छिकेसरिणौ च, तुल्यौ द्विघ्नौ यथोत्तरम्। दश देवोत्तरकुरुह्रदाः पद्मह्रदोपमाः ॥ ५२ ॥ एवं ह्रदाः षोडशैते, षण्महाह्रददेवताः। श्रीह्रीधृतिकीर्त्तिबुद्धिलक्ष्म्यः परस्परं समाः ॥५३॥ चतुर्दश महानद्यो, गङ्गाद्याः सपरिच्छदाः। जम्बूद्वीपशुभक्षेत्रे, कुल्यातुल्या विभान्ति याः ॥५४॥ गङ्गासिन्धू रोहितांशा, रोहिता च तथापरा। हरिकान्ता-

हरिनदी, शीतोदा चेति नामतः ॥ ५५ ॥ मेरोर्दक्षिणतः सप्त, ख्याता एता महापगाः । मेरोरुत्तरतोऽप्येवं, शोभन्ते सप्त सिन्धवः ॥ ५६ ॥ शीता च नारीकान्ता च, नरकान्ता तथा परा । रूप्यकूला स्वर्णकूला, रक्ता रक्तवतीति च ॥५७॥ हिमवत्पर्वतस्थायिपद्मह्रदाद्विनिर्गताः । गङ्गासिन्धुरोहितांशानाम्न्यस्तिस्रो महापगाः ॥ ५८ ॥ महाहिमवदद्रिस्थमहापद्मह्रदात्पुनः । रोहिता हरिकान्तेति, निर्गते द्वे महापगे ॥५९॥ निषधाचलमौलिस्थतिगिञ्छिह्रदमध्यतः । समुद्भूते हरिनदी, शीतोदेति महापगे ॥ ६० ॥ नीलवत्पर्वतगतकेसरिह्रदतः किल । शीता च नारीकान्ता च, निर्गते द्वे महापगे ॥ ६१ ॥ तथा महापुण्डरीकह्रदाद्रुक्मिनगाश्रितात् । नरकान्ता रूप्यकूलेत्युद्गते निम्नगे उभे ॥ ६२ ॥ शिखरिक्ष्माधरस्थायिपुण्डरीकह्रदोत्थिताः । रक्तारक्तवतीस्वर्णकूलाभिधा महापगाः ॥ ६३ ॥ एवं च—तिस्रो नद्यो हिमवतस्तिस्रः शिखरिणो गिरेः । शेषवर्षधरेभ्यश्च, महानद्योर्द्वयं द्वयम् ॥ ६४ ॥ वर्षाण्याश्रित्य सरितः, प्रतिवर्ष द्वयं द्वयम् । द्वे विदेहेष्वपाच्यां षट्, षडुदीच्यां ततो यथा ॥ ६५ ॥ गङ्गासिन्धू च भरते, रोहितारोहितांशिके । हैमवते हरिवर्षे, हरिकान्ताहरी उभे ॥ ६६ ॥ शीताशीतोदे विदेहक्षेत्रे तथा च रम्यके । नारीकान्तानरकान्ते, हैरण्यवतगे उभे ॥ ६७ ॥ रूप्यकूलास्वर्णकूले, तथा चैरवतस्थिते । नद्यौ रक्तारक्तवत्यावेवमेताश्चतुर्दश ॥ ६८ ॥ गङ्गासिन्धुरक्तवतीरक्तानां सरितामिह । चतुर्दश सहस्राणि, परिवारः प्रकीर्त्तितः ॥ ६९ ॥ रूप्यकूलास्वर्णकूलारोहितारोहितांशिकाः । अष्टाविंशत्या सहस्रैः, श्रोतस्विनीभिराश्रिताः ॥७०॥ नारीकान्ता नरकान्ता, हरिकान्ता हरिस्तथा । षट्पञ्चाशच्चैवलिनीसहस्रैः

जम्बूद्वीपे नद्यः

२०

२५



२८

परिवारिताः ॥ ७१ ॥ शीताशीतोदयोर्नद्योः, प्रत्येकं च परिच्छदः। पञ्च लक्षाः सहस्राणि, द्वात्रिंशत्परिकीर्तितः ॥ ७२ ॥ श्लोकक्रमेण सरितामिह श्लोकचतुष्टये । द्विगुणं जिह्विकामानविस्तारोद्विद्धतादिकम् ॥ ७३ ॥ एकश्लोकोदितानां तु, सर्वं तुल्यं परस्परम्। गङ्गासिन्धुरक्तवतीरक्तानां तुल्यता यथा ॥ ७४ ॥ दश लक्षाश्चतुःषष्टिः, सहस्राणि विदेहगाः। नद्योऽपाच्यां लक्षमेकं, षण्णवतिसहस्रयुक् ॥७५॥ उदीच्यामपि तावन्त्य, एवं च सर्वसंख्यया। षट्पञ्चाशत्सहस्राढ्या, नदीलक्षाश्चतुर्दश ॥ ७६ ॥ जम्बूद्वीपोऽभितो रुद्धः, स्वविरुद्धेन वार्द्धिना। स्वमोक्षायेव दत्तेऽस्मै, कनीः शैवलिनीरिमाः ॥ ७७ ॥ स्थापना। चतुःषष्टिविजयगा, महानद्यश्चतुर्दश। अन्तर्नद्यो द्वादशातिरिच्यन्ते नवतिस्त्वियम् ॥ ७८ ॥ तथाहुः श्रीरत्नशेखरसूरयः स्वक्षेत्रसमासे—"अडसयरि महाणइओ बारस अंतरणईओं सेसाओ। परिअरणईओं चउदस लक्खा छप्पण्णसहसा य ॥ १ ॥" श्रीमलयगिरयस्तु प्रवेशे च सर्वसंख्यया आत्मना सह चतुर्दशभिर्नदीसहस्रैः समन्विता भवन्तीति क्षेत्रसमासवृत्तौ कच्छविजयगतसिन्धुनदीं वर्णयन्तो महानदीनां न पृथग्गणनेति सूचयांचक्रुः, तथापि द्वादशान्तरनद्योऽतिरिच्यन्त एवेत्यत्र तत्त्वं बहुश्रुतगम्यमिति ज्ञेयं। तथापि पूर्वाचार्यानुरोधात् संख्या तथोदिता। नात्र पर्यनुयोगार्हा, वयं प्राच्यपथानुगाः ॥ ७९ ॥ केचित्तु 'गाहावइमहानई पवूढा समाणी सुकच्छमहाकच्छविजए दुहा विभयमाणी अट्ठावीसाए सलिलासहस्सेहिं समग्गा दाहिणेणं सीयं महानइं समप्पेइ' इत्यादिजम्बूद्वीपप्रज्ञप्तिवचनात्, तथा "नद्यो विजयच्छेदिन्यो रोहितावत्कुण्डाः स्वनामसमदेवीवासा अष्टाविंशतिनदीसहस्रा-

नुगाः प्रत्येकं सर्वसर्वसमाः पञ्चविंशशतविस्तृता अर्द्धतृतीययोजनावगाहा गाहावती पङ्कवती” इत्याद्युमास्वातिवाचकवचनाच्च द्वादशानामन्तर्नदीनामपि प्रत्येकमष्टाविंशतिसहस्ररूपं परिवारं मन्यमानाः षट्त्रिंशत्सहस्राधिकनदीलक्षत्रयेणान्तर्नदीपरिवारेण सह द्विनवतिसहस्राधिकानि सप्तदश नदीलक्षाणि मन्यन्ते, उक्तं च—“सुत्ते चउदस लक्खा छप्पन्नसहस्स जंबुदीवंमि। हुंति उ सतरस लक्खा बाणवइ सहस्स मेलविया॥ १॥” अन्ये तु यद्यन्तर्नदीष्वनेकानि परिवारनदीसहस्राणि प्रविशेयुस्तदा कथं तासां क्रमेण परतः परतो गच्छन्तीनां विस्तारविशेषो गंगानदीनामिव न संपद्येत?, यस्तु परिवारः सिद्धान्तेऽभिदधे स तु यथाष्टाशीतिर्ग्रहाश्चन्द्रस्यैव परिवारतया प्रसिद्धा अपि सूर्यस्यापि स एव परिवारः, न पुनः पृथक् प्रतीयते, उक्तं च समवायाङ्गवृत्तौ—“अष्टाशीतिर्महाग्रहा, एते यद्यपि चन्द्रस्यैव परिवारोऽन्यत्र श्रूयते, तथापि सूर्यस्यापीन्द्रत्वादेत एव परिवारतयाऽवसेया” इति, तथा गङ्गादिसंबन्धीन्येवाष्टाविंशतिनदीसहस्राणि अन्तर्नदीनामपि परिवार इति। एवं चान्तर्नदीनां पृथक्परिवारमनभ्युपगच्छन्तो यथावस्थितामेव नदीसंख्यां मन्यन्ते इत्यादिकं जम्बूद्वीपसंग्रहणीवृत्तौ, तथा चाहुः श्रीहरिभद्रसूरयः—“सीया सीओयाविय बत्तीससहस्सपंचलक्खेहिं। सव्वे चउदस लक्खा छप्पन्न सहस्स मेलविया॥ १॥” दिक्पटोऽप्येवमाह—“जंबूदीवि निराहिवसंखा सवनइ चउदह य लक्खा। छप्पन्नं च सहस्सा नवई नईओ कहंति जिणा॥२॥” कुण्डोद्वेधस्तथा द्वीपोच्छ्रायस्तद्भवनस्य च। परिमाणं समग्रासु, नदीषु सदृशं भवेत्॥ ८०॥ शीता च हरिसलिला, गङ्गासिन्धू च रोहिता। स्वर्णकूला नर-

२०

२५

॥ २२४॥

२८

कान्ता, नद्योऽसूर्दक्षिणामुखाः ॥ ८१ ॥ उदग्याता रक्तवती, रक्ता च रूप्यकूलिका । नारीकान्ता रोहितांशा, शीतोदा हरिकान्तिका ॥ ८२ ॥ सिन्धुं विना याः सरितो, दक्षिणां दिशमागताः । ताः पूर्वाब्धिं गामिन्यः, सिन्धुस्तु पश्चिमाब्धिगा ॥ ८३ ॥ उदग्याताश्च या नद्यो, विना रक्तामहानदीम् । ताः पश्चिमाब्धिगामिन्यो, रक्ता पूर्वाब्धिगामिनी ॥ ८४ ॥ स्वकीयहृदविस्तारेऽशीतिभक्ते यदाप्यते । दक्षिणाभिमुखीनां सा, नदीनां मुखविस्तृतिः ॥ ८५ ॥ उत्तराभिमुखीनां तु, स्वकीयहृदविस्तृतौ । चत्वारिंशद्विभक्तायां, यल्लब्धं तन्मिता मताः ॥ ८६ ॥ व्यवस्थेयं दक्षिणस्यां, सरितां मन्दराचलात् । उदग्याम्योत्तरदिशाभिमुखीनां विपर्ययात् ॥ ८७ ॥ सर्वासां मुखविस्तारे, दशघ्ने प्रान्तविस्तृतिः । व्यासपञ्चाशत्तमांशः, सर्वत्रोद्वेध आहितः ॥ ८८ ॥ मुखपर्यन्तविस्तारविश्लेषे गतयोजनैः । गुणिते पञ्चचत्वारिंशत्सहस्रविभाजिते ॥ ८९ ॥ लब्धं यत्तदुभयतो, व्यासवृद्धिरभीप्सिते । योजनादौ गते सर्वास्वपि तस्यार्द्धमेकतः ॥९०॥ चतुःषष्टिर्विजयेषु, ससवर्ष्यां चतुर्दश । द्वादशान्तर्नदीनां च, कुण्डानां नवतिस्त्वियम् ॥ ९१ ॥ द्विघ्नद्विघ्नप्रमाणानि, कुण्डानि जिह्निकादिवत् । तुल्यान्यन्तर्निम्नगानां मिथो विजयगानि च ॥ ९२ ॥ प्रागुक्ताः पर्वताः कूटाः, कुण्डानि च महापगाः । सर्वे वृता वेदिकया, वनाढ्योभयपार्श्वया ॥ ९३ ॥ वेदिकावनखण्डानां, सर्वत्राप्यविशेषितम् । स्वरूपं जगतीस्थायिवेदिकावनखण्डवत् ॥ ९४ ॥

५ १० १३

---

१ भरतादिषु गङ्गादिवत् महाविदेहेषु शीताशीतोदाभावात् सप्तवर्ष्यां इति, चतुष्षष्टिः विजयेषु तु गङ्गाद्याः ।

ऐरावते च भरते, विजयेष्वखिलेषु च । प्रत्येकं त्रित्रिसद्भावात्तीर्थानां द्व्युत्तरं शतम् ॥ ९५ ॥ श्रेण्यश्चतस्रः प्रत्येकं, वैताढ्येषु गुहाद्वयम् । श्रेण्यः शतं स्युः षट्त्रिंशमष्टषष्टिश्च कन्दराः ॥ ९६ ॥ दशोत्तरं पुरशतं, प्रतिवैताढ्यपर्वतम् । सप्तत्रिंशच्छतान्येवं, चत्वारिंशानि तान्यपि ॥ ९७ ॥ द्वात्रिंशच्च विदेहस्था, भरतैरवते इति । विजयाः स्युश्चतुस्त्रिंशच्चक्रिजेतव्यभूमयः ॥ ९८ ॥ चतुस्त्रिंशद्राजधान्यो, द्वौ कुरुस्थौ महाद्रुमौ । अस्यान्तिकेऽन्तरद्वीपाः, षट्पञ्चाशच्च वार्द्धिगाः ॥ ९९ ॥ एवं च संग्रहद्वारा, यदुक्तमप्यनूदितम् । सुखावबोधायतानां, तदस्माकं न दोषकृत् ॥ २०० ॥ जिनैश्चक्रिभिः सीरिभिः शार्ङ्गिभिश्च, चतुर्भिश्चतुर्भिर्जघन्येन युक्तः । सनाथस्तथोत्कर्षतस्तीर्थनाथैश्चतुस्त्रिंशताऽयं भवेद् द्वीपराजः ॥ १ ॥ ( भुजङ्गप्रयातं ) चक्रवर्त्तिबलदेवकेशवैस्त्रिंशता परिचितः प्रकर्षतः । भारतैरवतयोर्द्वयं तथा, ते परे खलु महाविदेहगाः ॥ २ ॥ (रथोद्धता) जम्बूद्वीपे स्युर्निधीनां शतानि, षड्युक्तानि त्रीणि सत्तामपेक्ष्य । षट्त्रिंशत्ते चक्रिभोग्या जघन्यादुत्कर्षेण द्वे शते सप्ततिश्च ॥३॥ (शालिनी) चक्री गङ्गाद्यापगानां मुखस्थानेतानात्ताशेषषट्खण्डराज्यः । व्यावृत्तः सन्नष्टमस्य प्रभावात्साधिष्ठातॄनात्मसान्निर्मिमीते ॥४॥ ( शालिनी ) पञ्चाक्षरत्नत्रिशती दशाधिकोत्कर्षेण भोग्याऽत्र च चक्रवर्त्तिनाम् । जघन्यतोऽष्टाभ्यधिकैव विंशतिरेकाक्षरत्नेष्वपि भाव्यतामिदम् ॥५॥ ( इन्द्रवंशा ) द्वौ चन्द्रौ द्वौ दिनेन्द्राविह परिलसतो दीपकौ सद्मनीव, षट्सप्तत्या समेतं ग्रहशतमभितः कान्तिमाविष्करोति । षट्पञ्चाशच्च ऋक्षाण्यनिलपथपृथून्निन्द्रचन्द्रोदयान्तर्मुक्ताश्रेण्याः श्रयन्ति श्रियमतिविततश्रीभरैर्विश्रुतानि ॥ ६ ॥



१५

२०

२५



२७

एकं लक्षं सहस्राः सततमिह चतुस्त्रिंशदुद्योतहृद्या, न्यूनाः पञ्चाशतोच्चैर्दधति रुचिरतां तारकाकोटिकोट्यः (१३३९५०)। प्रोद्यत्प्रस्वेदबिन्द्वावलय इव निशि व्योमलक्ष्मीमृगाक्ष्याः, रत्यध्यासं विधातुं प्रियतमविधुना गाढमालिङ्गितायाः ॥ ७ ॥ ( स्रग्धरे ) कोटाकोटिपदेन केचन बुधाः कोटिं वदन्त्यत्र यत्, क्षेत्रस्तोकतयाऽवकाशघटना नैषां भवेदन्यथा। अन्ये कोटय एव तारकततेरौत्सेधिकैरङ्गुलैः, कोटाकोटिदशां भजन्ति घटिता इत्यूचिरे सूरयः ॥ ८ ॥ ( शार्दूल० ) तथा च संग्रहणीवृत्तौ–इह द्वे मते, तत्रैके कोटीनामेव कोटीकोटीति संज्ञान्तरं—नामान्तरं मन्यन्ते, क्षेत्रस्य स्तोकत्वेन, तथा पूर्वाचार्यप्रसिद्धेः, अन्ये त्वाहुः—'नगपुढवीमाणाइं, मिणसु पमाणंगुलेणं तु' इति वचनात्ताराविमानानां स्वरूपेण कोटय एव सत्यो यदौत्सेधाङ्गुलेन सर्वतो मीयन्ते तदा कोटीकोटयो जायन्ते, तथोक्तं विशेषणवत्यां—कोडाकोडी सन्नंतरं तु मन्नंति केइ थोवतया। अन्ने उस्सेहंगुलमाणं काऊण ताराणं ॥१॥" जयति जगति जम्बूद्वीपभूमीधवोऽयं, सततमितरवार्द्धिद्वीपसामन्तसेव्यः। सुरगिरिरयमुच्चैरंशुको नीलचूलः, श्रयति कनकदण्डो यस्य राजध्वजत्वम् ॥ ९ ॥ (मालिनी) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्, राजश्रीतनयोऽतनिष्ट विनयःश्रीतेजपालात्मजः । काव्यं यत् किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे सर्गः पूर्त्तिमितो युतोऽद्भुतगुणैरेकोनविंशः सुखम् ॥ २१० ॥

॥ इति लोकप्रकाशे एकोनविंशः सर्गः समाप्तः ॥

## ॥ अथ विंशः सर्गः प्रारभ्यते ॥



प्रणम्य परमज्ञानप्रभाप्रस्तावकं प्रभुम् । द्वीपेऽस्मिन्नथ सूर्येन्दुचाररीतिर्विभाव्यते ॥ १ ॥ सर्वेषां कालमानानामादिरादित्य एव हि । ततोऽस्य वक्तुमुचिता, पूर्वं चारनिरूपणा ॥ २ ॥ तथाहुः पंचमांगे–"से केणट्ठेणं भंते ! एवं वुच्चइ–सूरे आइच्चे सूरे० ? गो० सूराइयाणं समयाइ वा आवलियाइ वा जाव ओसप्पिणीति वा अवसप्पणीति वा" ततोऽत्र बहुवाच्यापि, प्रथमं सैव तन्यते । पञ्चानुयोगद्वाराणि, तस्यामाहुर्जिनेश्वराः ॥ ३ ॥ मण्डलानामिह क्षेत्रप्ररूपणा ततः परम् । संख्याप्ररूपणा तेषां, तदाबाधाप्ररूपणा ॥ ४ ॥ ततः परं मण्डलानामन्तरस्य प्ररूपणा । चारप्ररूपणा चैषां, भाव्यन्तेऽनुक्रमादिमाः ॥ ५ ॥ इह प्रकरणे यत्र, काप्यंशा अविशेषतः । कथ्यन्ते तत्रैकषष्टिच्छिन्नांस्तान् परिचिन्तयेत् ॥ ६ ॥ अभ्यन्तरादिभिर्बाह्यपर्यन्तैः सूर्यमण्डलैः । आकाशं स्पृश्यते यत्तन्मण्डलक्षेत्रमुच्यते ॥ ७ ॥ योजनानां पञ्चशती, दशोत्तरा तथा लवाः । अष्टचत्वारिंशदस्य, विष्कम्भश्चक्रवालतः ॥ ८ ॥ तथाहि–अष्टचत्वारिंशदंशा, विष्कम्भः प्रतिमण्डलम् । मण्डलानां च चतुरशीत्याढ्यं शतमीरितम् ॥९॥ अष्टचत्वारिंशता सा, गुण्यते मण्डलावली । द्वात्रिंशानि शतान्यष्टाशीतिर्भागा भवन्ति ते ॥ १० ॥ विभज्यन्ते चैकषष्ट्या, योजनानयनाय ते । पूर्वोदितानामंशानामेकषष्ट्यात्मकत्वतः ॥ ११ ॥ चतुश्चत्वारिंशमेवं, योजनानां शतं भवेत् । अष्टचत्वारिंश-

दंशाः, शेषमत्रावशिष्यते ॥ १२ ॥ मण्डलानामन्तराणि, स्युस्त्र्यशीत्यधिकं शतम् । स्युः सर्वत्राप्यन्तराणि, रूपोनान्यङ्गुलीष्विव ॥ १३ ॥ योजनद्वयमानं स्यादेकैकं मण्डलान्तरम् । शतं त्र्यशीत्याभ्यधिकं, द्विकेन गुण्यते ततः ॥ १४ ॥ शतानि त्रीणि षट्षष्ट्याभ्यधिकानि भवन्त्यतः । प्राच्यमत्र चतुश्चत्वारिंशं प्रक्षिप्यते शतम् ॥ १५ ॥ योजनानां पञ्चशती, दशोत्तरा तथा लवाः । अष्टचत्वारिंशदेषा, मण्डलक्षेत्रविस्तृतिः ॥ १६ ॥ ५
इति सूर्यमण्डलक्षेत्रम् ॥

समाक्रम्य योजनानामशीतिसंयुतं शतम् । पञ्चषष्टिर्मण्डलानि, जम्बूद्वीपे विवस्वतः ॥ १७ ॥ विशेषश्चायमत्र–पञ्चषष्ट्या मण्डलैः स्यादेकोनाशीतियुक् शतम् । योजनानामेकषष्टिभागैर्नवभिराञ्चितम् ॥ १८ ॥ ततः षट्षष्टितमस्य, मण्डलस्य लवैः सह । स्याद् द्विपञ्चाशताऽशीतियुक्योजनशतं ह्यदः ॥ १९ ॥ तथा–साष्टाचत्वारिंशद्भागां योजनशतत्रयीं त्रिंशाम् । व्याप्याब्धौ मण्डलशतमर्कस्यैकोनविंशं स्यात् ॥ २० ॥ ( आर्या ) एवं च मण्डलशतं, रवेश्चतुरशीतिमत् । पूर्वोक्तं मण्डलक्षेत्रं, समाक्रम्य व्यवस्थितम् ॥ २१ ॥ अत्र जम्बूद्वीप- १० वर्त्तिनां पञ्चषष्टेर्मण्डलानां विषयव्यवस्थायां संग्रहणीवृत्त्याद्युक्तोऽयं वृद्धसंप्रदायः–यथैकतो मेरुगिरेस्त्रिषष्टिर्निषधोपरि । हरिवर्षजीवाकोट्यां, विज्ञेयं मण्डलद्वयम् ॥ २२ ॥ मेरोरपरतोऽप्यूर्द्ध्वं, त्रिषष्टिर्नीलवद्गिरेः । रम्यकजीवाकोट्यां च, मण्डले द्वे विवस्वतः ॥ २३ ॥ इयं भरतैरवतापेक्षया मण्डलस्थितिः । अग्निवायुस्थयोर्मेरोर्ज्ञेया निषधनीलयोः ॥ २४ ॥ प्राग्विदेहापेक्षया तु, मेरोरैशानकोणगे । स्युस्त्रिषष्टिर्नीलवति, मण्डलानीति १५

तद्विद्ः ॥ २५ ॥ एवं प्रत्यग्विदेहानामपेक्षया सुमेरुतः । नैर्ऋतस्थायिनिषधे, विज्ञेया मण्डलावली ॥ २६ ॥ किंच–विदिग्गताभ्यां श्रेणीभ्यां, मण्डलाल्यौ स्थिते इमे । औदयिकक्षेत्रपरावर्त्तोद्यनयोर्द्वयोः ॥२७॥ क्रान्तिहान्याऽयने याम्येऽर्वागर्वागगतौ रवी । दृश्येते कान्तिवृद्ध्या च, दूरतोऽप्युत्तरायणे ॥ २८ ॥ एवं हरिवर्षरम्यकजीवाकोट्योरपि भावना ॥ तथाहुर्जम्बूद्वीपप्रज्ञप्तिसूत्रे "जंबूद्दीवे णं भंते ! दीवे सूरिया उदीणपाईणमुग्गच्छ पाईणदाहिणमागच्छंति १ ( पूर्वविदेहापेक्षयेदं ) पाईणदाहिणमुग्गच्छ दाहिणपडीणमागच्छंति २ ( भरतापेक्षयेदं ) दाहिणपडीणमुग्गच्छ पडीणउदीणमागच्छंति ३ ( पश्चिमविदेहापेक्षयेदं ) पडीणउदीणमुग्गच्छ उदीणपाईणमागच्छंति ४ ( ऐरवतापेक्षयेदं ) या मण्डलानां विषयव्यवस्थेयमुदीरिता । भारतादिमध्यभागापेक्षया सा विभाव्यताम् ॥ २९ ॥ अन्यत्र तु स्वस्वभानूदयक्षेत्रे यथोदिता । मण्डलानां व्यवस्था सा, व्यस्तया वक्तुं न शक्यते ॥ ३० ॥ एवं च–येषामदृश्यो दृश्यत्वं, दृश्यो वा यात्यदृश्यताम् । यत्र तत्रैवोदयास्तौ, तेषां भानुमतो नृणाम् ॥ ३१ ॥ नन्वेवं सति सूर्यस्योदयास्तमयने खलु । स्यातामनियते बाढं, स्तां यदुक्तं पुरातनैः ॥३२॥ "जह जह समए समए पुरओ संचरइ भक्खरो गयणे । तह तह इओवि नियमा जायइ रयणीइ भावत्थो ॥ १ ॥ एवं च सइ नराणं उदयत्थमणाइं होंतऽनिययाइं । सइ देसकालभेए कस्सइ किंचि ववदिस्सए नियमा ॥ ३३ ॥ सइ चेव अ निद्दिट्ठो रुद्दमुहुत्तो कमेण सव्वेसिं । केसिंचीदाणिंपिय विसयपमाणो रवी जेसिं ॥ ३४ ॥" भगवतीसूत्रशत ५ प्रथमोद्देशकवृत्तौ ॥ इति सूर्यमण्डलसंख्या, प्रसङ्गात्तद्विषयव्यवस्था च ॥

२०

२५



२८

वाक्याऽथ मण्डलाबाधा, त्रिविधा सा निरूपिता । ओघतो मण्डलक्षेत्राबाधाऽधिकृत्य मन्दरम् ॥ ३५ ॥ मेरुमेवाधिकृत्यान्या चाबाधा प्रतिमण्डलम् । मण्डले मण्डलेऽबाधा, तृतीया त्वर्कयोर्मिथः ॥ ३६ ॥ सहस्राणि चतुश्चत्वारिंशदष्टौ शतानि च । विंशानि मेरुतो दूरे, मण्डलक्षेत्रमोघतः ॥३७॥ तथाहि जम्बूद्वीपान्तः, सर्वाभ्यन्तरमण्डलम् । साशीतियोजनशतं, स्थितं वगाह्य सर्वतः ॥ ३८ ॥ ततश्च द्वीपविष्कम्भाल्लक्षरूपाद्वियोज्यते । साशीतियोजनशतं, प्रत्येकं पार्श्वयोर्द्वयोः ॥ ३९ ॥ सहस्रा नवनवतिश्चत्वारिंशा च षट्शती । ईदृग्रूपः स्थितो राशिरस्मादप्यपनीयते ॥ ४० ॥ सहस्राणि दश व्यासो, मेरोस्ततोऽवशिष्यते । नवाशीतिः सहस्राणि, चत्वारिंशा च षट्शती ॥ ४१ ॥ एतावन्मण्डलक्षेत्रे, मेरुव्यासो न यद्यपि । तथापि भूतलगतो, व्यवहारादिहोच्यते ॥ ४२ ॥ तथाहुः श्रीमलयगिरिपादा बृहत्क्षेत्रसमासवृत्तौ–"यद्यपि च नाम मण्डलक्षेत्रे मेरोर्विष्कम्भो दशयोजनसहस्रात्मको न लभ्यते, किंतु न्यूनः, तथापि धरणितले दशयोजनसहस्रप्रमाणः प्राप्यते इति तत्रापि स तावान् व्यवहारतो विवक्ष्यते" अस्मिन्नाशावर्द्धिते च, संपद्यते यथोदितम् । ओघतो मण्डलक्षेत्रान्तरं मेरुव्यपेक्षया ॥ ४३ ॥ इति मेरुं प्रतीत्य मण्डलक्षेत्राबाधा ॥ एतदेवान्तरं मेरोः, सर्वान्तर्मण्डलस्य च । अतः परं यदपरं, नास्ति मण्डलमान्तरम् ॥ ४४ ॥ सर्वान्तरानन्तरे तु, द्वितीयमण्डले ततः । साष्टाचत्वारिंशदंशं, वर्द्धते योजनद्वयम् ॥ ४५ ॥ इत्थं प्राग्मण्डलादग्र्यमण्डले योजनद्वयम् । साष्टाचत्वारिंशदंशमबाधायां विवर्द्धते ॥ ४६ ॥ एवं यावत् सर्वबाह्यमण्डलं मेरुतः स्थितम् । सहस्रैः पञ्चचत्वारिंशता त्रिंशैस्त्रिभिः शतैः

॥ ४७ ॥ इति मेरुं प्रतीत्य प्रतिमण्डलमबाधा ॥ यदाऽर्कौ चरतः प्राप्य, सर्वाभ्यन्तरमण्डलम् । तदा सूर्यस्य सूर्यस्य, स्यात्परस्परमन्तरम् ॥ ४८ ॥ सहस्रा नवनवतिश्चत्वारिंशा च षट्शती । द्वीपव्यासादुभयतो मण्डलक्षेत्र ( १८० ) कर्षणात् ॥ ४९ ॥ सर्वान्तरानन्तरं तौ, द्वितीयं मण्डलं यदा । उपसंक्रम्य चरतस्तदा मिथोऽन्तरं तयोः ॥ ५० ॥ सहस्रा नवनवतिर्योजनानां च षट्शती । पञ्चचत्वारिंशदाढ्या, पञ्चत्रिंशत्तथा लवाः ॥ ५१ ॥ तथाह्येकोऽप्यर्क इह, द्वितीयमण्डले व्रजन् । साष्टाचत्वारिंशदंशे, द्वे योजने व्यतिक्रमेत् ॥ ५२ ॥ एवं द्वितीयोऽपि ततो, वर्द्धन्ते प्रतिमण्डलम् । योजनानि पञ्च पञ्चत्रिंशद्भागा मिथोऽन्तरे ॥ ५३ ॥ एवं यावत् सर्वबाह्यमण्डले चरतस्तदा । तयोर्मिथोऽन्तरं लक्षं, सषष्टीनि शतानि षट् ॥ ५४ ॥ अन्तर्विशन्तौ तौ सर्वबाह्यमण्डलतः पुनः । अर्वाचीने सर्वबाह्याद्वर्त्तेते मण्डले यदा ॥ ५५ ॥ तदाऽर्कयोरन्तरं स्याल्लक्षमेकं शतानि षट् । चतुष्पञ्चाशानि लवाः, षड्विंशतिः पुरोदिताः ॥ ५६ ॥ एवमन्तः प्रविशतः, प्रतिमण्डलमन्तरम् । पञ्चभिर्योजनैः पञ्चत्रिंशताऽंशैश्च हीयते ॥५७॥ एवं पूर्वोदितमेव, सर्वाभ्यन्तरमण्डले । मिथोऽन्तरं द्वयोर्भान्वोः, पुनस्तद्वशिष्यते ( ९९६४० ) ॥ ५८ ॥ इति मण्डले २ सूर्ययोः परस्परमबाधा ॥ द्वे द्वे च योजने सूर्यमण्डलानां मिथोऽन्तरम् । कथमेतदिति श्रोतुं, श्रद्धा चेच्छ्रूयतां तदा ॥ ५९ ॥ सूर्यमण्डलविष्कम्भे, स्फुरच्चतुरशीतिना । शतेन गुणिते त्यक्ते, मण्डलक्षेत्रविस्तृतेः ॥ ६० ॥ शेषा स्थिता योजनानां, सषट्षष्टिः शतत्रयी । सत्र्यशीतिशतेनास्यां, भक्तायामेतदन्तरम् ॥ ६१ ॥ इति मण्डलान्तरप्ररूपणा ॥

मण्डलान्तरं

२०

२५

॥२२८॥

२८

कर्त्तव्या मण्डलचारप्ररूपणा च संप्रति। ससानुयोगद्वाराणि, तत्राहुस्तत्त्ववेदिनः ॥ ६२ ॥ प्रत्यब्दं मण्डलाचार-
संख्याप्ररूपणा रवेः १। वर्षान्तः प्रत्यहं रात्रिदिनमानप्ररूपणा २ ॥ ६३ ॥ मण्डले मण्डले क्षेत्रविभागेनाप्यह-
र्निशोः। प्ररूपणा ३ मण्डलानां, परिक्षेपप्ररूपणम् ४ ॥ ६४ ॥ प्रतिमण्डल मुहूर्त्तगतिमानप्ररूपणा ५। मण्डले
मण्डले दृष्टिपथप्राप्तिप्ररूपणा ६ ॥ ६५ ॥ प्ररूपणा सप्तमी च, ख्याताऽर्द्धमण्डलस्थितेः ७। अनुयोगद्वारमथ,
प्रथमं परितन्यते ॥ ६६ ॥

चरतोऽर्कौ यदा सर्वान्तरानन्तरमण्डले। सूर्यसंवत्सरस्याहोरात्रोऽयं प्रथमस्तदा ॥ ६७ ॥ त्र्यशीतियुक्त-
शततमे, द्वैतीयीकात्तु मण्डलात्। परिपाट्या सर्वबाह्यमण्डले तौ यदागतौ ॥६८॥ संपूर्णाः सूर्यवर्षस्य, षण्मासाः
प्रथमे तदा। एतदेव च वर्षेऽस्मिन्, दक्षिणायनमुच्यते ॥ ६९ ॥ युग्मम्। सर्वबाह्याऽर्वाक्तनेऽथ, मण्डलेऽर्कौ
यदा पुनः। तदोत्तरायणस्याहोरात्रोऽयं प्रथमो भवेत् ॥ ७० ॥ त्र्यशीतियुक्तशततमे, बाह्यार्वाचीनमण्डलात्।
यदा क्रमाद्रवी प्राप्तौ, सर्वाभ्यन्तरमण्डले ॥ ७१ ॥ पूर्णा द्वितीयाः षण्मासाः, पूर्णं तथोत्तरायणम्। पूर्णं वर्षं
सषट्षष्ट्यहोरात्रत्रिशतात्मकम् ॥ ७२ ॥ युग्मम्। एवं च–सर्वान्तरसर्वबाह्यमण्डलयोः किलैकशः। प्रत्यब्दं
सूर्यचारः स्यात्सर्वेष्वन्येषु च द्विशः ॥७३॥ तथा चागमः–“जआ णं सूरिए सव्वब्भंतराओ मण्डलाओ सव्वबाहिरं
मंडलं उवसंकमित्ता चारं चरइ सव्वबाहिराओ य मंडलाओ सव्वब्भंतरमंडलं उवसंकमित्ता चारं चरइ एस णं
अद्धा केवइएणं राइंदियग्गेणं आहियत्ति वएज्जा?, तिन्नि छावट्ठे राइंदियसए राइंदियग्गेणं आहियत्ति वएज्जा,

ता एयाए णं अद्धाए सूरिए कइ मण्डलाइं चरइ?, ता चुलसीयं मंडलसयं चरइ, बासीयं मंडलसयं दुक्खुत्तो चरइ, तंजहा-निक्खममाणे चेव पविसमाणे चेव, दुवे य खलु मंडलाइं सइं चरइ, तंजहा-सव्वब्भंतरं चेव सव्वबाहिरं चेव मंडलं" ॥ इति मण्डलचारसंख्याप्ररूपणा १ ॥

आक्रमेते यदा भानू, सर्वाभ्यन्तरमण्डले। अष्टादशमुहूर्तात्मा, सर्वोत्कृष्टो दिनस्तदा ॥७४॥ रात्रिः सर्वजघन्या तु, स्यात् द्वादशमुहूर्तिका। अथ क्रमाद्रात्रिवृद्धिर्भावनीया दिनक्षतिः ॥७५॥ यदा तस्माद्विनिर्यान्तौ, सर्वाभ्यन्तरमण्डलात्। आरभमाणौ नव्याब्दमहोरात्रेऽस्य चादिमे ॥७६॥ संक्रम्य चरतः सर्वाभ्यन्तरानन्तरस्थितम्। द्वितीयं मण्डलं सूर्यौ,द्वीपमन्दिरदीपकौ॥७७॥ द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां दिवसस्तदा। हीयते वासतेयी च, ताभ्यामेव विवर्द्धते ॥७८॥ अहोरात्रे द्वितीयेऽस्य, तृतीयमण्डले यदा। संक्रान्तौ तरणी सर्वान्तरानन्तरमण्डलात् ॥७९॥ मुहूर्त्तैकषष्टिभागैश्चतुर्भिर्दिवसस्तदा। हीयते वर्द्धते रात्रिर्भागैस्तावद्भिरेव च॥८०॥ एवं मुहूर्त्तैकषष्टिभागौ द्वौ प्रतिमण्डलम्। हापयन्तौ दिनक्षेत्रे, वर्द्धयन्तौ निशादिशि ॥ ८१ ॥ अर्कौ यदा सर्वबाह्यमण्डले समुपस्थितौ। अहोरात्रेऽस्य वर्षस्य, त्र्यशीतियुक्तशतोन्मिते ॥८२॥ तदा ताभ्यां मुहूर्त्तैकषष्ट्यंशानां शतत्रयम्। सषट्षष्टि दिनात्कृष्टं, रजन्यां चाभिवर्धितम् ॥८३॥ तावद्भिश्च मुहूर्त्तैकषष्टिभागैर्यथोदितैः। विभाजितैरेकषष्ट्या, मुहूर्त्तानि भवन्ति षट् ॥८४॥ अहोरात्रेऽत्र तद्रात्रिरष्टादशमुहूर्त्तिका। उत्कृष्टाऽहश्चापकृष्टं, स्याद् द्वादशमुहूर्त्तकम् ॥८५॥ याम्यायनस्य पूर्णस्याहोरात्रोऽयं किलान्तिमः। त्र्यशीतियुगहो-

२० २५ ॥२२९॥ २८

रात्रशतेनेदं हि पूर्यते ॥८६॥ लोके तु" रसद्विनाड्योऽर्कपला मृगे स्युः, । सचापकुम्भेऽष्टकृतैः पलैस्ताः । अलौ च मीनेऽष्टयमाः सशाक्ा, मेषे तुलायामपि त्रिंशदेव ॥८७॥ कन्यावृषे भूशिखिनोऽङ्गवेदाः, सार्काख्रिरामा मिथुने च सिंहे । कर्के त्रिरामा वसुवेदयुक्ता, एषा मितिः संक्रमवासराणाम् ॥ ८८ ॥

| म | ध | कु | वृ | मी | मे | तु | क | वृष | मि | सिं | क |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २६ | २६ | २६ | २८ | २८ | ३० | ३० | ३१ | ३१ | ३२ | ३२ | ३२ |
| १२ | ४८ | ४८ | १४ | १४ |  |  | ४६ | ४६ | १२ | १२ | ४८ |

ततश्च–एकाऽर्कपक्षद्विशराख्रिदंताख्रिदंतपक्षद्विशराः कुसूर्याः । मृगादिषट्केऽहनि वृद्धिरेवं, कर्कादिषट्केऽपचितिः पलाढ्या ॥ ८९ ॥ " प्रविशन्तौ सर्वबाह्यमण्डलात्तरणी यदा । संक्रम्य चरतः सर्वबाह्यावर्चीनमण्डले ॥९०॥ तदा द्वाभ्यां मुहूर्त्तैकषष्ट्यंशाभ्यां विवर्द्धते। दिवसः क्षीयते रात्रिस्ताभ्यामेव यथोत्तरम् ॥९१॥ क्रमादेवं यदा प्राप्तौ, सर्वाभ्यन्तरमण्डले।त्र्यशीतियुक्तशततमे, बाह्यावर्चीनमण्डलात् ॥९२॥ तदोत्कृष्टं दिनमानमष्टादशमुहूर्त्तकम्। रात्रिः सर्वजघन्या तु, स्याद् द्वादशमुहूर्त्तिका ॥ ९३ ॥ एतदेवोदगयनस्यान्त्यं दिनमुदीरितम्। पूर्णे चास्मिन्नहोरात्रे, संपूर्णः सूर्यवत्सरः ॥९४॥ अत्युत्कृष्टं चापकृष्टं, प्रत्यब्दमेकमेव हि। दिनं रात्रिस्तथैवैका, सर्वोत्कर्षापकर्षभाक् ॥ ९५ ॥ रात्रिर्याम्यायनान्तेऽतिगुर्वी लघुतमं दिनम् । दिनः सौम्यायनान्तेऽतिगुरुर्निशा लघीयसी ॥ ९६ ॥ तथा च राद्धान्तः–"इह खलु तस्सेवं आइच्चसंवच्छरस्स सइं अट्ठारसमुहुत्ते दिवसे भवइ, सइं अट्ठारसमुहुत्ता राई भवइ, सइं दुवालसमुहुत्तो दिवसो भवइ, सयं दुवालसमुहुत्ता राई भवइ" जम्बूद्वीपे यदा मेरोर्दक्षिणोत्तरयोर्दिनम्। चकितेव तदा रात्रिः, स्यात्पूर्वापरयोर्दिशोः ॥९७॥ सर्वो-

रात्रिदि-
नमानं

स्कृष्टं दिनमानं, दक्षिणोत्तरयोर्यदा। रात्रिः सर्वजघन्या स्यात्पूर्वपश्चिमयोस्तदा ॥९८॥ सर्वोत्कृष्टं दिनमानं, पूर्वपश्चिमयोर्यदा । रात्रिः सर्वजघन्या स्याद्दक्षिणोत्तरयोस्तदा ॥९९॥ किंच क्षेत्रेषु सर्वेषु, समं मानमहर्निशोः । किं त्वेतयोरवस्थाने, यथोक्तः स्याद्विपर्ययः ॥१००॥ क्षेत्रे काले च सर्वस्मिन्नहोरात्रो भवेद्ध्रुवम् । त्रिंशन्मुहूर्त्तप्रमाणो, न तु न्यूनाधिकः क्वचित् ॥ १०१ ॥ लोके तु–"भवेत्पैत्रं त्वहोरात्रं, मासेनाब्देन दैवतम् । दैवे युगसहस्रे द्वे, ब्राह्मं कल्पौ तु तौ नृणाम् ॥१॥ एवमहोरात्रे विशेषं वदन्ति, अत एव दक्षिणायनं देवानां रात्रिरुत्तरायणं तेषां दिनमिति शुभकार्यं तत्र विहितमिति मन्यन्ते" ननु चाष्टादशमुहूर्त्तात्माऽहर्भरते यदि । स्यात्तदा च विदेहेषु, रात्रिः सर्वलघीयसी ॥ २ ॥ तर्हि रात्रेर्द्वादशानां, मुहूर्त्तानां व्यतिक्रमे । स्यात् क्षेत्रे तत्र कः काल, इति चेदुच्यते शृणु ॥ ३ ॥ द्युरात्रिमानविश्लेषे, शेषादर्धं भवेद् द्वयोः । सामान्यं क्षेत्रयो रात्रिदिनपूर्वापराशयोः ॥४॥ तद्यथा-क्षणेभ्योऽष्टादशभ्यो द्वादशापकर्षणे स्थिताः । षट् तदर्द्धं त्रयं साधारणं ज्येष्ठदिनोषयोः ॥ ५ ॥ एवं च अष्टादशमुहूर्तात्मा, यदोत्कृष्टो दिनस्तदा । पश्चात्त्रिक्षणशेषेऽह्नि, भवेद्भानूदयोऽग्रतः ॥ ६ ॥ तथाहि–मुहूर्त्तत्रयशेषेऽह्नि, भरतैरवताख्ययोः । भवेदभ्युदयो भानोः, पूर्वापरविदेहयोः ॥ ७ ॥ दिने त्रिक्षणशेषे च, पूर्वापरविदेहयोः । स्याद्भारतैरवतयोस्तरणेरुदयः खलु ॥८॥ एवं च–स्याद्भारतैरवतयोरह्नोऽन्त्यं यत् क्षणत्रयम् । ज्येष्ठेऽहनि तदेवाद्यं, पूर्वापरविदेहयोः ॥ ९ ॥ दिने गुरौ यदेवाद्यं, पूर्वापरविदेहयोः । तद्भारतैरवतयोरह्नोऽन्त्यं स्यात् क्षणत्रयम् ॥ १० ॥ तथा–अष्टादशमुहूर्त्ता स्याद्यदोत्कृष्टा निशा तदा । तन्मुहूर्त्तत्रयेऽतीते, भवेदर्कोदयः पुरः

२०
२५
॥ २३० ॥
२८

॥ ११ ॥ तथाहि—पूर्वापरविदेहेषु, भानोरस्तात्रिभिः क्षणैः। स्याद् भारतैरवतयोस्तरणेरुदयः खलु ॥१२॥ भार-
तैरवतयोश्च, भानोरस्तादनन्तरम् । त्रिभिः क्षणैः स्यात्प्रत्यूषं पूर्वापरविदेहयोः॥ १३॥ क्षणशब्दश्चात्र प्रकरणे
मुहूर्त्तवाचीति ध्येयं॥ तथा च—भवेद्विदेहयोराद्यं, यन्मुहूर्त्तत्रयं निशः । स्याद्भारतैरवतयोस्तदेवान्त्यं क्षणत्रयम्
॥ १४ ॥ स्याद्भारतैरवतयोर्यन्निशोऽन्त्यं क्षणत्रयम् । भवेद्विदेहयो रात्रेस्तदेवान्त्यं क्षणत्रयम्॥ १५॥ इह च प्रा-
ग्विदेहादिक्षेत्राह्वानोपलक्षिताः । पूर्वादिक्षेत्रदिग्मध्यभागा ज्ञेया विवेकिभिः ॥ १६ ॥ तेष्विदं कालनैयत्यं,
ज्ञेयमन्यत्र तु स्फुटम् । भाव्यमस्यानुसारेणार्कोदयास्तविभावनात् ॥ १७ ॥ एवंच—अपाच्युदीच्योः प्रत्यूषान्मु-
हूर्त्तत्रितये गते । लघोर्निशायाः प्रारम्भः, स्यात्पूर्वापरयोर्दिशोः ॥ १८ ॥ अपराह्णात्रिमुहूर्त्यां, शेषायां चान-
योर्दिशोः । प्रत्यक् प्राक् च निशान्तः स्यादेव सर्वत्र भाव्यताम् ॥ १९ ॥ इदं गुरुदिने गुर्व्यां, रात्रौ त्वस्याः
क्षणत्रयम् । गते शेषे च कल्पाहःप्रान्तावुक्तदिशोः क्रमात् ॥ २० ॥ निशां चाह्नां मध्यमानामप्येवं स्तो
यथोचितम् । विश्लेषशेषार्द्धशेषे, याते चादिपरिक्षयौ ॥ २१ ॥ इति कृता वर्षमध्ये दिनरात्रिप्रमाणप्ररूपणा २॥
मण्डलस्याभ्यन्तरस्य, दशात्र परिधेर्लवाः । कल्प्यास्तत्रोद्योतयेत्तांस्त्रीनेकोऽर्कौ दिने गुरौ ॥ २२ ॥ त्रींश्च
तत्संमुखानन्यः, षट्स्वंशेषु दिनं ततः । मध्ये तयोर्लवौ द्वौ द्वौ, रजनीति लवा दश ॥ २३ ॥ जघन्येऽहनि च
द्वौ द्वौ, भागौ दीपयतो रवी । दिनं चतुर्षु भागेषु, निशा षट्सु लवेष्वतः ॥ २४ ॥ प्रकाशक्षेत्रतश्चैवं, दशांशौ
दक्षिणायने । हीयेते क्रमतस्तौ च, वर्धेते उत्तरायणे ॥ २५ ॥ अत्रोपपत्तिः—द्वाभ्यां किलाहोरात्राभ्यामेके-

नार्केण मण्डलम् । पूर्यतेऽहोरात्रयोश्च, मुहूर्त्ताः षष्टिराहिताः ॥ २६ ॥ षष्टेश्च दशमो भागः, षट् ते च त्रिगुणीकृताः । दशांशत्रयरूपाः स्युः, षष्टेरष्टादश क्षणाः ॥ २७ ॥ तदेभिरष्टादशभिर्मुहूर्त्तैः परिरेरपि । उत्कृष्टदिवसे युक्तं, दशांशत्रयदीपनम् ॥ २८ ॥ दशांशद्वयरूपाश्च, षष्टेर्द्वादश निश्चिताः । तत्तैर्द्वादशभिर्युक्तं, दशांशद्वयदीपनम् ॥ २९ ॥ तथाहुः–"इह छच्चिय दसभाए जंबुद्दीवस्स दुन्नि दिवसयरा । तावंति दित्तलेसा अब्भिन्तरमण्डले संता ॥ ३० ॥ चत्तारि य दसभाए जंबुद्दीवस्स दुन्नि दिवसयरा । तावंति मंदलेसा बाहिरए मंडले संता ॥ ३१ ॥ स्थापना ॥ एवं प्रकाशक्षेत्रस्य, दशांशकल्पना बुधैः । आपुष्करार्द्धं कर्त्तव्या, रवीनामथ तत्र च ॥ ३२ ॥ द्विशत्येकोनपञ्चाशाश्चतुस्त्रिंशत्सहस्रकाः । द्विचत्वारिंशच्च लक्षाः, कोट्येका परिधिर्भवेत् ॥ ३३ ॥ दशांशत्रितयं लक्षा, द्विचत्वारिंशदस्य च । सप्तत्रिंशाश्चतुस्त्रिंशत्सहस्राः परमे दिने ॥ ३४ ॥ तापक्षेत्रं तिर्यगेतत्, पुष्करार्द्धे विवस्वताम् । ततस्तदर्द्धं पश्यन्ति, तत्रत्याः सूर्यमुद्गतम् ॥३५॥ तथोक्तं–"लक्खेहिं एगवीसाइ साइरेगेहिं पुक्खरद्धंमि । उदए पिच्छंति नरा सूरं उक्कोसए दिवसे ॥३६॥". सर्वान्तर्मण्डलगतसूर्ययोरातपाकृतिः । ऊर्द्ध्वास्यनालिकापुष्पसंस्थानसंस्थिता मता ॥ ३७ ॥ मेरुदिश्यर्द्धवलयाकारा वारिनिधेर्दिशि । शकटोद्धीमूलभागानुकारेयं प्रकीर्तिता ॥३८॥ मेरोर्दिशि संकुचिता, विस्तृता चाम्बुधेर्निशि । प्रत्येकमस्या आयामो, दक्षिणोत्तरयोर्दिशोः ॥ ३९ ॥ स्थापना ॥ मेरोरन्ताद्योजनानां, सहस्राण्यष्टसप्ततिः । शतत्रयं त्रयस्त्रिंशं, तृतीययोजनांशयुक् ॥ ४० ॥ सहस्राः पञ्चचत्वारिंशद्योजनानि तत्र च । जंबूद्वीपे शेष–( ३३३३३ऽ३)

मण्डलमाने नदिनरा- त्रिभागाः ३

१५

२०

२५

॥२३१॥

२८

मब्धौ, द्वयोर्योगे यथोदितम् ॥ ४१ ॥ मेरुणा यन्मते सूर्यप्रकाशः प्रतिहन्यते। तेषां मते मानमिदं, तापक्षेत्रायतेर्ध्रुवम् ॥ ४२ ॥ येषां मते मेरुणाऽर्कप्रकाशो नाभिहन्यते। किंतु मेरुगुहादीनामप्यन्तः प्रथते महः ॥४३॥ तेषां मते मन्दरार्द्धादारभ्य लवणादधेः। षड्भागं यावदायामस्तापक्षेत्रस्य निश्चितः ॥ ४४ ॥ तदा च-योजनानां सहस्राणि, पञ्च राशौ पुरातने। क्षिप्यन्ते मन्दरार्द्धस्य, ततो मानमिदं भवेत् ॥ ४५ ॥ योजनानां सहस्राणि, त्र्यशीतिस्त्रिशती तथा। त्रयस्त्रिंशत्समधिका, तृतीयोऽंशश्च योजनः ॥ ४६ ॥ सुपर्वपर्वतादेवं, पूर्वपश्चिमयोरपि। तापक्षेत्रस्य प्रत्येकमायामो ज्ञायतामियान् ॥ ४७ ॥ सर्वेषु मण्डलेष्वेष, चरतोर्भानुमालिनोः। अवस्थितः सदा तापक्षेत्रायामः प्रकीर्तितः ॥ ४८ ॥ विष्कम्भस्तु मेरुपार्श्वे, तस्यार्द्धवलयाकृतेः। स्यान्मेरुपरिधेर्भागे, दशमे त्रिगुणीकृते ॥ ४९ ॥ तथा च-सहस्रा नव षडशीत्यधिका च चतुःशती। योजनानां दशच्छिन्नाः, योजनस्य लवा नव ॥ ५० ॥ विष्कम्भोऽम्भोधिपार्श्वे तु, तापक्षेत्रस्य निश्चितः। अन्तर्मण्डलपरिधिर्दशांशे त्रिगुणीकृते ॥ ५१ ॥ स चायं-योजनानां सहस्राणि, चतुर्नवतिरेव च। षड्विंशाः पंचशत्यंशाः, षष्टिजा ह्यब्धि ( ४२ ) संमिताः ॥ ५२ ॥ नन्वेवमब्धेः षड्भागं, यावद्व्याप्तिमुपेयुषः। तापक्षेत्रस्य विष्कम्भः, संभवेन्नाधिकः कथम् ? ॥५३॥ तथाहि-पूर्वोक्ततापक्षेत्रस्य, प्रान्तेऽब्धौ परिधिस्तु यः। तद्दशांशत्रयमितो, विष्कम्भः संभवेन्न किम् ? ॥ ५४ ॥ अत्रोच्यते-संभवत्येव किंत्वत्र, करणेनैष संवदन्। चतुर्नवतिसहस्रादिक एव मतो बुधैः ॥५५॥ व्यक्तिस्तु करणस्यास्य, मुहूर्त्तगतिचिन्तया। कार्या दृग्गोचरस्येव, साम्यात् दृक्पथतापयोः ॥ ५६ ॥

५

१०

१५

तथाहुः–अत्रोदयास्तान्तरं प्रकाशक्षेत्रं तापक्षेत्रमित्येकार्थाः। विष्कम्भस्त्वेष तापस्य, द्विविधोऽप्यनवस्थितः। याम्येऽयने हीयमानः, सौम्ये वृद्धिमवाप्नुयात् ॥ ५७ ॥ मुहूर्तैकषष्टिभागद्वयगम्यं तु यद्भवेत्। क्षेत्रं तावन्मिता वृद्धिर्हानिश्च प्रतिमण्डलम् ॥ ५८ ॥ तथा च मण्डलैः सार्द्धत्रिंशतैकैकभानुमान्। क्षेत्रं गम्यं मुहूर्त्तेन, वर्द्धयेद्वा क्षयं नयेत् ॥ ५९ ॥ मण्डलानां त्र्यशीतिशतेनैवमनुक्रमात्। वर्द्धितं क्षपितं ताभ्यां, सौम्ययाम्यायनान्तयोः ॥ ६० ॥ मुहूर्त्तैः षड्भिराक्रम्य, क्षेत्रं स्यादेष एव च। बाह्याभ्यन्तरमण्डलाभ्यां, दशांशो वृद्धिहानिभाक् ॥६१॥ युग्मम् ॥ प्रकाशपृष्ठं लग्नस्यान्धस्येव तमसोऽप्यथ। आकृतिश्चिन्त्यते भान्वोः, सर्वान्तमण्डलस्थयोः ॥ ६२ ॥ अस्याप्याकृतिरूर्ध्वास्यनालिकापुष्पसंस्थिता। तापक्षेत्रवदायाममानं चास्याप्यवस्थितम् ॥६३॥ अस्तं गते दिनपतौ, मेरोरपि गुहादिषु। ध्वान्तोपलब्धेरायामस्तमसोऽपि प्रकाशवत् ॥ ६४ ॥ विष्कम्भो मेरुसंलग्ने, स्यादेवं ध्वान्तचोलके। मन्दराद्रिपरिक्षेपदशांशद्विगुणीकृते ॥६५॥ षड् योजनसहस्राणि, चतुर्विंशं शतत्रयम्। दशभागीकृतस्यैकयोजनस्य लवाश्च षट् ॥ ६६ ॥ लवणाम्भोधिदिशि तु, विष्कम्भस्तमसो भवेत्। अन्तमण्डलपरिधेर्दशांशे द्विगुणीकृते ॥ ६७ ॥ स चायं–योजनानां सहस्रास्त्रिषष्टिः ससदशाधिकाः। अष्टाचत्वारिंशदंशाः, षष्टिजास्तत्र मण्डले ॥ ६८ ॥ इति कर्कसंक्रान्तौ आतपक्षेत्रतमःक्षेत्रयोः स्वरूपं ॥ सर्वबाह्यमण्डलं तु, प्राप्तयोरुष्णरोचिषोः। तापान्धकारयोः प्राग्वत्संस्थानादिनिरूपणम् ॥६९॥ किन्त्वब्धिदिशि विष्कम्भे, विशेषोऽस्ति भवेत्स च। बाह्यमण्डलपरिधेर्दशांशे द्विगुणीकृते ॥ ७० ॥ स्युस्त्रिषष्टिः सहस्राणि, सत्रिषष्टिश्च

षट्शती । तद्दशांशे त्रिगुणिते, ध्वान्तव्यासोऽप्यसौ तदा ॥ ७१ ॥ सहस्राः पञ्चनवतिश्चत्वार्येव शतानि च । चतुर्नवतियुक्तानि, त्रिंशदंशाश्च षष्टिजाः ॥ ७२ ॥ बाह्यान्तर्मण्डलस्थार्कतापक्षेत्रानुसारतः । वृद्धिहानिव्यतीहारः, प्रकाशतमसोर्भवेत् ॥ ७३ ॥ सामीप्याद्दीप्ततेजस्त्वात्सर्वान्तर्मण्डलेऽर्कयोः । दिनातपक्षेत्रवृद्धिर्घर्मस्तीव्रस्तमोऽल्पता ॥ ७४ ॥ मन्दतेजस्तया दूरतया च बाह्यमण्डले । निशातमःक्षेत्रवृद्धिस्तापक्षेत्राल्पता दिने ॥ ७५ ॥ यत्तु–जम्बूद्वीपप्रज्ञप्तिसूत्रे सर्वान्तर्मण्डलस्थे रवौ समुद्रदिशि तापक्षेत्रविष्कम्भः चतुर्नवतिर्योजनसहस्राणि अष्टौ शतानि अष्टषष्ट्यधिकानि चतुरश्च दशभागान् योजनस्योक्तः, तथा ध्वान्तविष्कम्भश्च त्रिषष्टिर्योजनसहस्राणि द्वे च पञ्चचत्वारिंशदधिके योजनशते षट् च दशभागा योजनस्य, अयमेव च सर्वबाह्यमण्डलस्थे रवौ तापक्षेत्रध्वान्तक्षेत्रयोर्विपर्ययेण विष्कम्भ उक्तः, स तु जम्बूद्वीपपरिधेरेव दशांशद्वयत्रयकल्पनयेति व्यामोहो न विधेयः, यत्तु तत्र सर्वान्तर्मण्डले उभयतः समुदितं द्वीपसंबन्धि षष्ट्यधिकं योजनशतत्रयं न्यूनतया न विवक्षितं यच्च सर्वबाह्यमण्डले उभयतः समुदितानि समुद्रसंबन्धीनि षष्ट्यधिकानि षट् योजनशतान्यधिकतया न विवक्षितानि तत्राविवक्षैव बीजमित्यादिकमर्थत उपाध्यायश्रीशान्तिचन्द्रोपज्ञजम्बूद्वीपप्रज्ञप्तिवृत्तेरवसेयं । तापक्षेत्रस्य च व्यासो, यावान् स्याद्यत्र मण्डले । करप्रसारस्तस्यार्द्धं, पूर्वतोऽपरतोऽपि च ॥ ७६ ॥ मेरोर्दिशि तु मेर्वर्द्धं, यावत्तेजः प्रसर्पति । पाथोधिदिशि पाथोधेः, षड्भागं यावदर्कयोः ॥ ७७ ॥ करप्रसार ऊर्द्ध्वं तु, योजनानां शतं मतः । यत्तापयत एतावदूर्द्ध्वं निजविमानतः ॥ ७८ ॥ शतेष्वष्टासु सूर्याभ्यामध-

५

१०

१४

स्तात्समभूतलम् । सहस्रं च योजनानामधोग्रामास्ततोऽप्यधः ॥ ७९ ॥ तांश्च यावत्तापयतः, प्रसरन्ति करास्ततः । विवस्वतोर्योजनानामष्टादश शतान्यधः ॥ ८० ॥ सप्तचत्वारिंशदथ, सहस्राणि शतद्वयम् । त्रिषष्टिश्च योजनानां, षष्ट्यंशा एकविंशतिः ॥ ८१ ॥ करप्रसार एतावान्, सर्वान्तर्मण्डलेऽर्कयोः । पूर्वतोऽपरतश्चाथ, दक्षिणोत्तरयोर्ध्रुवे ॥ ८२ ॥ सहस्राणि पञ्चचत्वारिंशत्स्वर्गिगिरेर्दिशि । साशीतियोजनशतोनान्यथाब्धेर्दिशि ध्रुवे ॥८३॥ त्रयस्त्रिंशत्सहस्राणि, त्रयस्त्रिंशं शतत्रयम् । योजनत्र्यंशयुग् वार्द्धौ, द्वीपेऽशीतियुतं शतम् ॥ ८४ ॥ सर्वबाह्यमण्डले तु, चरतोरुष्णरोचिषोः । करप्रसार एतावान्, स्यात्पूर्वापरयोर्दिशोः ॥ ८५ ॥ एकत्रिंशत्सहस्राणि, शतान्यष्टौ तथोपरि । एकत्रिंशद्योजनानि, त्रिंशदंशाश्च षष्टिजाः ॥ ८६ ॥ मेरोर्दिशि योजनानां, वार्द्धौ त्रिंशं शतत्रयम् । द्वीपे च पञ्चचत्वारिंशत्सहस्रास्ततः परम् ॥ ८७ ॥ त्रयस्त्रिंशत्सहस्राणि, सत्र्यंशं योजनत्रयम् । करप्रसारो भान्वोः स्याल्लवणाब्धौ शिखादिशि ॥ ८८ ॥ ऊर्द्ध्वं तु योजनशतं, तुल्यं सर्वत्र पूर्ववत् । अष्टादश योजनानां, शतान्यधस्तथैव च ॥ ८९ ॥ इति क्षेत्रविभागेन दिनरात्रिमानप्ररूपणा, तत्प्रसङ्गादातपतमःसंस्थानादिप्ररूपणा च ३ ॥

कृता क्षेत्रविभागेन, दिनरात्रिप्ररूपणा । परिक्षेपमिति ब्रूमः, साम्प्रतं प्रतिमण्डलम् ॥ ९० ॥ वगाह्योभयतो द्वीपे, सर्वान्तर्मण्डलं स्थितम् । साशीतियोजनशतं, द्विघ्नं कार्यमिदं ततः ॥ ९१ ॥ सषष्टियोजनशतत्रयं जातमिदं पुनः । द्वीपव्यासाल्लक्षरूपाद्विशोध्यते ततः स्थितम् ॥ ९२ ॥ विष्कम्भायामतो नूनं, सर्वाभ्यन्तरमण्ड-

मण्डलक्षेत्राणां परिधिः ४

२०

२५



२८

लम् । सहस्रा नवनवतिश्चत्वारिंशा च षट्शती ॥ ९३ ॥ परिधिस्तु यथाऽऽम्नायमस्य लक्षत्रयं युतम् । सहस्रैः
पञ्चदशभिर्नवाशीतिश्च साधिका ॥९४॥ सषष्टियोजनशतत्रयं यत्प्रागपाकृतम् । तस्य वा परिधिः कार्यः, पृथ-
गीदृग्विधस्तु सः ॥ ९५ ॥ एकादश शतान्यष्टत्रिंशान्येनं विशोधयेत् । जंबूद्वीपस्य परिधेः, स्यादप्येवं यथो-
दितः ॥ ९६ ॥ अथैकतः स्थितं सर्वान्तरानन्तरमण्डलम् । अष्टचत्वारिंशदंशान्, सर्वान्तमण्डलात्मकान्
॥९७॥ द्वे योजने च त्यक्त्वार्वाक्,परतोऽप्येवमेव तत् । एवं पञ्चत्रिंशदंशां, भवेद्योजनपञ्चकम् ॥ ९८ ॥ ततोऽर्क-
युग्मान्तरवद्वर्धन्ते प्रतिमण्डलम् । योजनानि पञ्चपञ्चत्रिंशदंशाश्च विस्तृतौ ॥ ९९ ॥ ततस्तेषां परिक्षेपा, ज्ञेया
व्यासानुसारतः । सपञ्चत्रिंशदंशस्य, योजनपञ्चकस्य वा ॥ २०० ॥ परिक्षेपः पृथक्कार्य, ईदृग्रूपः स जायते ।
साधिकाष्टात्रिंशदंशयुक् ससदशयोजनी ॥ १ ॥ अष्टादश योजनानि, परं तु व्यवहारतः । संपूर्णानि विव-
क्ष्यन्ते, ततोऽष्टादशयोजनीम् ॥ २ ॥ प्राच्यप्राच्यमण्डलस्य, परिक्षेपे नियोजयेत् । ततोऽग्र्याग्र्यमण्डलस्य,
परिक्षेपमितिर्भवेत् ॥ ३ ॥ एवं वृद्धिः परिक्षेपे, यावच्चरममण्डलम् । ततो यथा वृद्धिहानिरासर्वान्तरमण्डलम्
॥ ४ ॥ एवं च परिधिः सर्वान्तरानन्तरमण्डले । लक्षत्रयं पञ्चदश, सहस्राः ससयुक् शतम् ॥ ५ ॥ तार्त्तीयी-
के मण्डले च, सर्वाभ्यन्तरमण्डलात् । लक्षास्तिस्रः पञ्चदश, सहस्राः ससयुक् शतम् ॥ ६ ॥ लक्षास्तिस्रोऽष्टा-
दशैव, सहस्रास्त्रिशती तथा । युक्तोनैः पञ्चदशभिः, सर्वान्त्यपरिधिर्भवेत् ॥ ७ ॥ तथाहुः श्रीमलयगिरिपादाः
क्षेत्रविचारबृहद्वृत्तौ “एवं मण्डले मण्डले आयामविष्कम्भयोः पञ्च पञ्च योजनानि पञ्चत्रिंशदेकषष्टिभागाधि-

कानि परिरयेऽष्टादश २ योजनानि परिवर्द्धयता तावद्वक्तव्यं यावत्सर्वबाह्यमण्डलं एकं योजनशतसहस्रं षट् शतानि षष्ट्यधिकानि आयामविष्कम्भाभ्यां त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि किञ्चिदूनानि परिरय" इति। अत्र च यद्यपि प्रतिपरिक्षेपं अष्टादश २ वृद्धौ त्र्यशीत्यधिकशतस्याष्टादशभिर्गुणने चतुर्नवत्यधिकानि द्वात्रिंशच्छतानि भवन्ति, एतेषां च सैकोननवतिपञ्चदशसहस्राधिकलक्षत्रयरूपप्रथममण्डलपरिक्षेपेण सह योगे सर्वबाह्यमण्डलपरिरयस्तिस्रो लक्षा अष्टादश सहस्रास्त्रिशती त्र्यशीत्युत्तरा भवन्ति, परं तु प्रागुक्तानि सप्तदश योजनानि साधिकयोजनसत्काष्टात्रिंशदेकषष्टिभागाधिकानि प्रतिपरिरयं वृद्धिरिति विभाव्यैव न्यूनपञ्चदशाधिकशतत्रययुक्ताष्टादशसहस्राधिकलक्षत्रयरूपः सर्वबाह्यमण्डलपरिधिरुक्त इति संभाव्यते, यद्यप्यत्रापि उपरितनं शतत्रयं चतुर्दशोत्तरमेव भवति तथापि उपरितनानां अष्टात्रिंशतो भागानां साधिकत्वात् न्यूनानि पञ्चदशैव विवक्षितानीति सम्यग्विभावनीयं गणितज्ञैः ४। एवं कृता मण्डलानां, परिक्षेपप्ररूपणा। गतिं प्रतिमुहूर्त्तं च, ब्रूमहे प्रतिमण्डलम् ॥ ८ ॥ एकैकं मण्डलं लोकमार्त्तण्डेन समाप्यते। द्वाभ्यां किलाहोरात्राभ्यां, मुहूर्त्ताः षष्टिरेतयोः ॥ ९ ॥ ततः षष्ट्या विभज्यन्ते, परिक्षेपाः स्वकस्वकाः। एवं सर्वमण्डलानां, मुहूर्त्तगतिराप्यते ॥२१०॥ एवं च-संक्रम्य चरतः सूर्यौ, सर्वान्तर्मण्डले यदा। तदा प्रत्येकमेकैकमुहूर्त्तेऽसौ गतिस्तयोः ॥ ११ ॥ नूनं पञ्च सहस्राणि, योजनानां शतद्वयम्। एकपञ्चाशमेकोनत्रिंशदंशाश्च षष्टिजाः ॥ १२ ॥ द्वितीयादिमण्डलेष्वप्येवं परिरयैः स्वकैः। मुहूर्त्तगतिरानेया, षष्ट्या

मण्डलक्षेत्राणां परिधिः ४

२०

२५

॥ २३४ ॥

२८

भक्तैर्विवस्वतोः ॥ १३ ॥ यद्वा प्रतिपरिक्षेपं, योक्ताऽष्टादशयोजनी । वृद्धिः षष्ट्या विभक्तुं तामूर्ध्वाधस्तद्द्वयं न्यसेत् (१८॥६०) ॥१४॥ राशिः षष्टेर्न दत्तेऽशं, तत्राष्टादशलक्षणः। ततोऽष्टादश षष्टिघ्नाः, स्युः सहस्रमशीति- ( १०८० ) युक्ं ॥ १५ ॥ तेषां षष्ट्या हृते भागे, लब्धा अष्टादश स्फुटम्। एतावन्तः षष्टिभागाः, किञ्चिदूनास्तु निश्चयात् ॥ १६ ॥ प्राच्यमण्डलमुहूर्त्तगतौ क्षिप्यन्त इत्यतः । यथोक्तं तत्परीमाणं, भवेदेवं यथोत्तरम् ॥१७॥ एतद्याम्यायने सौम्यायने तु प्रतिमण्डलम् । अष्टादशांशाः क्षीयंते, मुहूर्त्तीयगतौ रवेः ॥ १८ ॥ एवं च-सर्व- बाह्ये योजनानां, पंचोत्तरं शतत्रयम् । सहस्राणि पंच पंचदशभागाश्च षष्टिजाः ॥ १९ ॥ सर्वान्तिमार्वाचीने तु, त्रिशती चतुरुत्तरा । सहस्राणि पञ्च सप्तपञ्चाशत् षष्टिजा लवाः ॥ २० ॥ मुहूर्त्तगतिरित्येवं, विवस्वतोर्निरू- पिता । अथ प्रपञ्च्यते दृष्टिपथप्राप्तिप्ररूपणा ॥ २१ ॥ मुहूर्त्तगतिरर्कस्य, या विवक्षितमण्डले । यच्च तस्मिन्दिन- मानं, द्वयमेतत्पृथग् न्यसेत् ॥ २२ ॥ मुहूर्त्तगतिरेषाऽथ, दिनमानेन गुण्यते । एकार्कस्य तदैकाहःप्रकाश्यं क्षेत्रमाप्यते ॥ २३ ॥ यावच्चैकाहःप्रकाश्यं, क्षेत्रमेकत्र मण्डले । तदर्द्धेन मनुष्याणां, भवेद् दृग्गोचरो रविः ॥ २४ ॥ अयं भावः-यावत् क्षेत्रं दिनार्द्धेन, भानुर्भावयितुं क्षमः । दृश्यते तावतः क्षेत्रान्मण्डलेष्वखि- लेष्वपि ॥ २५ ॥ यथा पञ्च सहस्राणि, योजनानां शतद्वयम् । एकपंचाशमेकोनत्रिंशदंशाश्च षष्टिजाः ॥ २६ ॥ मुहूर्त्तगतिरेषा या, प्रोक्ताऽभ्यन्तरमण्डले । गुण्यते सा दिनार्द्धेन, मुहूर्त्तनवकात्मना ॥२७॥ सप्तचत्वारिंशदेवं, सहस्राणि शतद्वयम् । त्रिषष्टिश्च योजनानां, षष्ट्यंशा एकविंशतिः ॥ २८ ॥ उद्गच्छन्नियतः क्षेत्राद्भानुरस्त-

५

१०

१४

मयन्नपि । इहत्यैर्दृश्यते लोकैः, सर्वाभ्यन्तरमण्डले ॥ २९ ॥ ततश्चैतद्विगुणितमुदयास्तान्तरं भवेत् । प्रकाश्य-
क्षेत्रमप्येतावदेवोभयतोऽन्वितम् ॥ ३० ॥ तथाहुः–"रविणो उदयत्थंतर चउणवइ सहस्स पणसय छवीसा ।
बायाल सट्ठिभागा कक्कडसंकंतिदियहंमि ॥ ३१ ॥" एवंच–सहस्रैः सप्तचत्वारिंशता द्वितीयमण्डले । सैको-
नाशीतिना दृश्यो, योजनानां शतेन च ॥ ३२॥ सप्तपंचाशता षष्टिभागैरेकस्य तस्य च । अंशैरेकोनविंशत्या,
विभक्तस्यैकषष्टिधा ( ४७१७९ $-\frac{५७}{६०}|\frac{१९}{६१}$ ) ॥ ३३ ॥ एवं च–त्र्यशीतियोजनान्यंशास्त्रयोविंशतिरेव च । षष्टिभक्तयो-
जनस्यैकस्य षष्टिलवस्य च ( ८३ $-\frac{२३}{६०}|\frac{४२}{६१}$ ) ॥३४॥ एकषष्टिविभक्तस्य, द्विचत्वारिंशदंशकाः । हानिरत्रेयमायात्स्या-
त्, पुरो हानौ ध्रुवोऽप्ययम् ॥३५॥ किंच–सर्वान्तमण्डलात्तार्त्तीयीकं यत्किल मण्डलम् । तदेवाद्यं प्रकल्प्याग्रे,
येषु येषु विभाव्यते ॥३६॥ दृग्मार्गस्तरणेस्तत्र, तत्रैकद्व्यादिसंख्यया। हत्वा षट्त्रिंशतं भागं, भागांस्तान् योज-
येद्ध्रुवे ॥ ३७ ॥ युग्मं ॥ ततश्च–पूर्वमण्डलदृग्मार्गप्राप्तिस्तेन विवर्जिता । खरांशोर्दृक्पथप्राप्तिमानं स्यादिष्ट-
मण्डले ॥३८॥ यथाऽन्तर्मण्डलात्तार्त्तीयीके तरणिमण्डले । षट्त्रिंशदेकेन गुण्या, स्थितो राशिस्तथैव सः ॥३९॥
ततः षट्त्रिंशदेवैते, त्र्यशीत्युपरिवर्त्तिषु । योजिता भागभागेषु, जातास्ते चाष्टसप्ततिः ॥ ४० ॥ एकषष्ट्या
लवैश्चैकः, षष्टिभागो भवेत् स च । योज्यते षष्टिभागेषु, शेषाः सप्तदश स्थिताः ॥४१॥ एवं च–त्र्यशीतियो-
जनान्यंशाः, षष्टिजाता जिनैर्मिताः । सप्तदशैकषष्ट्यंशाः, शोध्यराशिर्भवत्यसौ ॥ ४२ ॥ अनेन राशिना
हीने, द्वितीयमण्डलाश्रिते । दृग्गोचरे तृतीये स्यान्मण्डले दृक्पथो रवेः ॥ ४३ ॥ एवं च–सहस्रैः सप्तचत्वारिं-

सूर्यस्य दृष्टिपथप्राप्तिः

२०

२५

॥२३५॥

२८

शता षण्णवतिं श्रितैः । योजनानां षष्टिभागैस्त्रयस्त्रिंशन्मितैस्तथा ॥४४॥ एकस्य षष्टिभागस्य, विभक्तस्यैक-षष्टिधा । भागद्वयेन चोष्णांशुर्दृश्यस्तृतीयमण्डले ॥४५॥ ( ४७०९६–३३/६०|२/६१ ) एवमुक्तप्रकारेण, बहिर्निष्क्रमतो रवेः । दृक्पथप्राप्तिविषयात्, हीयते प्रतिमण्डलम् ॥४६॥ त्र्यशीतिः साधिका कापि, चतुरशीतिरेव च । साधिका सा कापि पञ्चाशीतिः साप्यधिका कचित् ॥४७॥ योजनानां हानिरेवं, भाव्या गणितपण्डितैः । पूर्वोक्तगणिताम्नायात्, यावत्सर्वान्त्यमण्डलम् ॥४८॥ तत्र चैकत्रिंशतैव, सहस्रैरष्टभिः शतैः । एकत्रिंशैस्त्रिंशता च, षष्ट्यंशैर्दृश्यते रविः ॥४९॥ ( ३१८३१–३०/६० ) यद्यपि अन्तस्तृतीयमण्डलापेक्षया द्व्यशीत्यधिकशततमेऽस्मिन् मण्डले पूर्वोक्तकरणप्रक्रियया शोध्यराशिः पंचाशीतिर्योजनानि एकादश षष्टिभागा एकस्य षष्टिभागस्य सत्काः षडेकषष्टिभागाः (८५|११/६०|६/६१) एवंरूपो जायते, तथापि पूर्वोक्ताः षट्त्रिंशद्भागभागाः कलान्यूना अपि व्यवहारतः पूर्णा विवक्षिताः, तस्मिंश्च कलान्यूनत्वे अन्त्यमण्डले एकत्र पिण्डिते सति अष्टषष्टिरेकषष्टिभागाः त्रुट्यंति, तदपसारणे पंचाशीतिर्योजनानि नव षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः षष्टिरेकषष्टिभागा जायन्ते ( ८५|९/६०|६०/६१ ) अयं च शोध्यराशिः सर्वबाह्यार्वाचीनमण्डलगतदृक्पथप्राप्तिपरिमाणाद्यदि शोध्यते तदा यथोक्तं सर्वान्त्यमण्डले दृक्पथप्राप्तिपरिमाणं भवतीति ध्येयं, पूर्वोक्तध्रुवकाद्युपपत्तिस्त्वत्रोपाध्यायश्रीशान्तिचन्द्रोपज्ञजम्बूद्वीपप्रज्ञप्तिसूत्रवृत्तेरवसेया, ग्रन्थगौरवभयान्नात्रोच्यत इति शेषः ॥ यद्वा–पञ्चयोजनसहस्राः, पञ्चोत्तरं शतत्रयम् । षष्टिभागाः पञ्चदश, मुहूर्त्तगतिरत्र हि ॥ ५० ॥ षण्मुहूर्त्तात्मना चैषा, दिव-

॥२३६॥

सूर्यस्य दृष्टिपथप्राप्तिः

साद्धेन गुण्यते । ततोऽप्येतद्दृक्पथासिमानं सर्वान्त्यमण्डले ॥ ५१ ॥ सर्वबाह्यावर्त्तने तु, चतुरशीतिवर्जितैः । द्वात्रिंशता योजनानां, सहस्रैर्दृश्यते रविः ॥ ५२ ॥ अंशैश्चैकोनचत्वारिंशता षष्टिसमुद्भवैः । एकस्य षष्टिभागस्य, षष्ट्याऽंशैश्चैकषष्टिजैः ( ३१९१६ $\frac{३९}{६०}$ | $\frac{६०}{६१}$ ) ॥ ५३ ॥ पञ्चाशीतिर्योजनानि, नव भागाश्च षष्टिजाः । षष्ट्यंशस्यैकस्य भागाः, षष्टिस्तथैकषष्टिजाः ( ८५ | $\frac{९}{६०}$ | $\frac{६०}{६१}$ ) ॥ ५४ ॥ सर्वान्त्यमण्डलादर्वाचीनद्वितीयमण्डले । एषा वृद्धिस्ततो वृद्धौ, पुरतो ध्रुवकोऽप्यसौ ॥ ५५ ॥ सर्वबाह्यात् तृतीयादिमण्डलेष्वथ दृक्पथम् । ज्ञातुं गुणितया पञ्चाशीत्यैकद्व्यादिसंख्यया ॥ ५६ ॥ ध्रुवाङ्के न्यूनितेऽसौ स्यात्, क्षेप्यराशिरनेन च । प्राच्यमण्डलदृग्मार्गो, युक्तः स्यादिष्टमण्डले ॥ ५७ ॥ तथाहि–तृतीये मण्डले बाह्यात्, पड्विंशदेकताडिता । ध्रुवकात्तद्वस्यैव, विशोध्यते ततः स्थितम् ॥ ५८ ॥ पंचाशीतिर्योजनानि, षष्टिजाश्च लवा नव । षष्ट्यंशस्यैकस्य लवाश्चतुर्विंशतिरेव च ॥ ५९ ॥ द्वितीयमण्डलस्याक्षिगोचारगेन संयुते । तृतीयमण्डले दृष्टिपथमानं भवेदिदम् ॥ ६० ॥ योजनानां सहस्राः स्युर्द्वात्रिंशत् सैकयोजनाः । भागा एकोनपञ्चाशद्, योजनस्य च षष्टिजाः ॥ ६१ ॥ एकषष्टिविभक्तस्यैकस्य षष्टिलवस्य च । त्रयोविंशतिरेवांशा, एवं सर्वत्र भावना ॥ ६२ ॥ एवमन्तः प्रविशतः, सूर्यस्य बाह्यमण्डलात् । पूर्वोक्तरीत्या दृग्मार्गप्रमाणे वर्द्धते रवेः ॥ ६३ ॥ पञ्चाशीतिः सातिरेका, संपूर्णा सैव कुत्रचित् । साधिका चतुरशीतिः, क्वापि सा केवला क्वचित् ॥ ६४ ॥ त्र्यशीतिः साधिका क्वापि, योजनानां यथायथम् । सर्वान्तर्मण्डलं यावद्भाव्यं तच्च प्रदर्शितम् ॥६५॥

२०

२५

॥ २३६ ॥

२८

यद्यपि बाह्यतृतीयमण्डलादूद्व्यशीत्यधिकशततमे सर्वाभ्यन्तरमण्डले यथोक्तकरणेन त्र्यशीतिर्योजनानि द्वाविंशतिः षष्टिभागा योजनस्य एकस्य षष्टिभागस्य सत्काः पञ्चत्रिंशदेकषष्टिभागाः ॥६६॥ ($८३-\frac{२२}{६०}|\frac{३५}{६१}$) एवंरूपः क्षेप्यराशिर्भवति तथापि येऽत्र ध्रुवकात् षड्विंशद्यथोक्तरूपाः शोधितास्ते कलया न्यूना अपि पूर्णा एव विवक्षितास्ततः किञ्चिदधिकं निर्गतं, तच्चाधिक्यं सर्वाभ्यन्तरे मण्डले एकत्र पिण्डितं सत् अष्टषष्टिरेकषष्टिभागा भवन्ति, ततस्ते भूयः क्षेप्यराशौ क्षिप्यन्ते, ततो जातः क्षेप्यराशिः यो० ८३ षष्टिभा० २३ एकस्य षष्टिभागस्य एकषष्टिभा० ४२,अस्मिंश्च राशौ सर्वाभ्यन्तरानन्तरद्वितीयमण्डलगतदृक्पथपरिमाणे योजिते सति यथोक्तं सर्वाभ्यन्तरमण्डले दृक्पथपरिमाणं भवतीति ज्ञेयं। कथं चैवं योजनानां,सहस्रैर्दूरगावपि। आसन्नाविव दृश्येते, तरणी उदयास्तयोः ? ॥ ६७ ॥ मध्याह्ने तु योजनानामष्टशत्यां स्थितावपि। दूरस्थाविव दृश्येते,कथमुष्णत्विषौ ननु ? ॥६८॥ अत्रोच्यते—दूरत्वेन प्रतीघातात्स्वबिम्बमहसां रवी। आसन्नौ सुखदृश्यत्वात्, ज्ञायेते उदयास्तयोः ॥६९॥ मध्याह्ने चासन्नतया, प्रसर्पत्तीव्ररश्मिभिः। ज्ञायेते दुर्निरीक्ष्यत्वादासन्नावपि दूरगौ ॥७०॥ तथा चागमः—"लेस्सापडिघाएणं उग्गमणमुहुत्तंसि दूरे अ मूले अ दीसंति इति, लेसाहितावेणं मज्झंतिअमुहुत्तंसि मूले अ दूरे अ दीसंति,लेसापडिघाएणं अत्थमणमुहुत्तंसि दूरे अ मूले अ दीसंति"अत्र दूरे चेति द्रष्टृस्थानापेक्षया विप्रकृष्टे, मूले चेति द्रष्टृप्रतीत्यपेक्षया आसन्ने इति भग० श० ८ उ० ८। दूरत्वादेव भूलग्नाविव तावुदयास्तयोः। नैकट्यादेव दृश्येते, मध्याह्ने खाग्रगाविव ॥ ७१ ॥ उच्चत्वं तु सर्वदापि, समानमेव सूर्ययोः। योजनानां ह्यष्टशत्या, नार्वाग्

न परतश्च तौ ॥७२॥ एवं दृष्टिपथप्राप्तिप्ररूपणा प्रपंचिता। अथ प्ररूपणां भान्वोः, कुर्मोऽर्द्धमण्डलस्थितेः ॥७३॥६॥
एकं मण्डलमेकेनाहोरात्रेण समाप्यते । द्वाभ्यामभिमुखस्थाभ्यां, रविभ्यां प्रतिवादिवत् ॥ ७४ ॥ मेरोर्दक्षिणपूर्वस्यां, यदा प्रथममेव हि। एकः सूर्यः प्रविशति, सर्वाभ्यन्तरमण्डलम् ॥ ७५ ॥ पश्चिमोत्तरदिग्भागे, तदैवान्योऽपि भास्करः। समकालं स्पर्द्धयेव, सर्वान्तर्मण्डले विशेत् ॥ ७६ ॥ इत्थं ताभ्यां प्रविशद्भ्यां, व्याप्तं यत्प्रथमक्षणे । क्षेत्रं व्यपेक्षया तस्य, कल्प्यमान्तरमण्डलम् ॥ ७७ ॥ प्रथमात्तु क्षणादूर्द्धं, विवस्वन्तौ शनैः शनैः। क्रमादपसरन्तौ च, सर्वाभ्यन्तरमण्डलात् ॥ ७८ ॥ अनन्तरबहिर्भाविमण्डलाभिमुखं किल। सर्पन्तौ चरतश्चारं, ततश्च प्रथमक्षणे ॥ ७९ ॥ स्पृष्टं क्षेत्रं यदेताभ्यां, तदपेक्ष्य प्रकल्पितम्। ज्ञेयं मण्डलतुल्यत्वान्मण्डलं न तु तात्त्विकम् ॥ ८० ॥ तथाहुः—"रविदुगभमणवसाओ निप्फज्जइ मंडलं इहं एगं। तं पुण मंडलसरिसंति मंडलं वुच्चइ तहाहि ॥ ८१ ॥ गिरिनिसढनीलवंतेसु उग्गयाणं रवीण कक्कंमि। पढमाउ चेव समया ओसरणेणं जओ भमणं ॥८२॥ तो नो निच्छयरूवं निप्फज्जइ मंडलं दिणयराणं। चंदाणवि एवं चिय निच्छयओ मंडलाभावो ॥८३॥" मेरोर्दक्षिणपूर्वस्यामेकोऽभ्यन्तरमण्डले। संक्रम्य याम्यदिग्भागं, यदा मेरोः प्रकाशयेत् ॥ ८४ ॥ तदाऽपरोत्तरदिशि, प्राप्तोऽभ्यन्तरमण्डलम्। अन्यो मेरोरुदग्भागं, प्रकाशयति भानुमान् ॥८५॥ युग्मम्। दक्षिणोत्तरयोर्मेरोः, सर्वोत्कृष्टं दिनं तदा। रात्रिः सर्वजघन्यैषोऽहोरात्रो वत्सरेऽन्तिमः ॥ ८६ ॥ अहोरात्रे नवाब्दस्य, चरतः प्रथमे यदि । द्वितीयस्मिन्मण्डलेऽर्कौ, निष्क्रम्यान्तरम-

सूर्ययोरर्धमण्डलस्थितिः

२०

२५



२८

ण्डलात् ॥ ८७ ॥ दाक्षिणात्यस्तदा सूर्यः, सर्वान्तर्मण्डलाश्रितात् । विनिर्गत्य दक्षिणार्द्धाद्वायव्यां सुरभूभृतः ॥ ८८ ॥ द्वितीयस्य मण्डलस्योत्तरार्द्धमाश्रितश्चरन् । मेरोरुत्तरदिग्भागं, प्रकाशयति दीपवत् ॥ ८९ ॥ उत्तराहः- पतंगस्तु, सर्वान्तर्मण्डलाश्रितात् । उत्तरार्द्धाद्विनिर्गत्य मेरोर्दक्षिणपूर्वतः ॥ ९० ॥ द्वितीयस्य मण्डलस्य, दक्षिणार्द्धमुपाश्रितः । मेरोर्दक्षिणदिग्भागं, प्रकाशयति लीलया ॥ ९१ ॥ क्षेत्रमाभ्यां च यत्स्पृष्टं, तस्याहः प्रथमक्षणे । द्वितीयं मण्डलं बुद्ध्या, कल्प्यते तदपेक्षया ॥९२॥ एवं च—एकैकस्मिन्नहोरात्रे, एकैकमर्द्धमण्डलम् । संक्रम्य संचरन्तौ तावन्योऽन्यव्यतिहारतः ॥ ९३ ॥ प्रत्येकं द्वौ मुहूर्त्तैकषष्टिभागौ दिने दिने । क्षपयन्तौ सर्व- बाह्यमण्डलावधिगच्छतः ॥ ९४ ॥ तस्मिन् पुनः सर्वबाह्यार्वाचीनमण्डलस्थितात् । दक्षिणार्द्धाद्विनिर्गत्य, सर्वान्त्यमण्डलाश्रितम् ॥ ९५ ॥ उत्तरार्द्धं स विशति, यः प्रकाशितवान्पुरा। रविर्मेरोर्याम्यभागं, सर्वाभ्यन्त- रमण्डले ॥९६॥ यस्तु तत्रोत्तरभागमदिदीपद्रविः पुरा । स सर्वबाह्यार्वाचीनमण्डलस्योत्तरार्द्धतः ॥९७॥ निर्गत्य दीपयेद्याम्यमर्द्धं सर्वान्त्यमण्डले । आद्यं संवत्सरस्यार्द्धमेवमाभ्यां समाप्यते ॥ ९८ ॥ ततस्तौ द्वावपि रवी, सौम्यायनादिमक्षणे । अनन्तरं सर्वबाह्याद्वितीयं मण्डलं श्रितौ ॥ ९९ ॥ उत्तरार्द्धं योऽदिदीपत्सर्वान्त्यमण्ड- लाश्रितम् । दीपयेत्सोऽत्र याम्यार्द्धमुत्तरार्द्धं ततः परम् ॥ ३०० ॥ एवं पुनर्मण्डलार्द्धमेकैकं व्यतिहारतः । एकै- कस्मिन्नहोरात्रे, आक्रामन्तौ दिवाकरौ ॥ १ ॥ प्रत्येकं द्वौ मुहूर्त्तैकषष्टिभागौ दिने दिने । वर्द्धयन्तौ क्रमात्प्राप्तौ, सर्वाभ्यन्तरमण्डले ॥ २ ॥ मण्डलेऽस्मिन्नहोरात्रे, गताब्दस्यांतिमे रवी । यथाऽदिदीपतामर्द्धे, पुनर्दीपयतस्तथा

॥३॥ इत्यर्द्धमण्डलस्थितिः ७। सूर्यवक्तव्यता चैवं, यथाम्नायं प्रपंचिता। एवं प्रपञ्चयामोऽथ, चन्द्रचारप्ररूपणाम् ॥ ४ ॥ आदौ क्षेत्रं मण्डलानां १, तद्बाधा २ तदन्तरम् ३। तच्चारश्च ४ वृद्धिहानिप्रतिभासप्ररूपणा ५ ॥ ५ ॥ अत्रानुयोगद्वाराणि, पञ्चाहुस्तत्त्ववेदिनः। तत्रादौ मण्डलक्षेत्रपरिमाणं प्रतन्यते ॥ ६ ॥ मण्डलानि पञ्चदश, चन्द्रस्य सर्वसंख्यया। षट्पंचाशद्योजनैकषष्टिभागपृथून्यतः ॥ ७ ॥ गुणिताः पञ्चदशभिः, षट्पञ्चाशद्भवन्ति ते। अष्टौ शतानि चत्वारिंशान्येकषष्टिजा लवाः ॥ ८॥ एकषष्ट्या विभज्यन्ते, योजनानयनाय ते। त्रयोदश योजनानि, लब्धान्येतत्तु शिष्यते ॥ ९ ॥ सप्तचत्वारिंशदंशा, योजनस्यैकषष्टिजाः। मण्डलानां पुनरेषा-मन्तराणि चतुर्दश ॥ १० ॥ पञ्चत्रिंशद्योजनानि, त्रिंशत्तथैकषष्टिजाः। लवा एकस्यैकषष्ट्यंशस्य क्षुण्णस्य सप्तधा ॥ ११ ॥ भागाश्चत्वार एकैकमेतावदन्तरं भवेत्। शीतद्युतेर्मण्डलेषु, तत्रोपपत्तिरुच्यते ॥ १२ ॥ चन्द्रमण्डलविष्कम्भे, प्राग्वत्पञ्चदशाहते। शोधिते मण्डलक्षेत्राद्योजनानां चतुःशती ॥१३॥ शेषा सप्तनवत्याढ्या, स्येकोऽंशश्चैकषष्टिजः। विभज्यन्ते ते च चतुर्दशभिर्मण्डलान्तरैः ॥ १४ ॥ पञ्चत्रिंशद्योजनानि, लब्धान्युद्धरिते हते। एकषष्ट्यैकषष्ट्यंशेनैकेन च समन्विते ॥ १५ ॥ अष्टाविंशा चतुःशत्येतस्याश्च भजने सति। चतुर्दशभिराप्यन्ते, त्रिंशदंशाः पुरोदिताः ॥ १६ ॥ शेषा अष्टौ स्थिता भाज्या, भाजकाश्च चतुर्दश। भागाप्राप्त्याऽपवर्त्यन्ते, ततो द्वाभ्यामुभावपि ॥ १७ ॥ भागभागास्ततो लब्धाश्चत्वारः सप्तिका इति। एतच्चतुर्दशगुणं, कर्त्तव्यं प्रथमं त्विह ॥ १८ ॥ पञ्चत्रिंशद्योजनानि, चतुर्दशगुणानि वै। शतान्यभूवंश्चत्वारि, नवत्याढ्यानि येऽपि च



२०

२५



२८

॥ १९ ॥ त्रिंशदेकषष्टिभागाश्चतुर्दशगुणीकृताः । जाताः शतानि चत्वारि, विंशत्याढ्यानि तेऽप्यथ ॥ २० ॥ एकषष्ट्या विभज्यन्ते, योजनप्राप्तये ततः । लब्धा षड्योजनी शेषाश्चतुष्पञ्चाशदंशकाः ॥ २१ ॥ सप्तभक्तस्यैकषष्टिभागस्य या चतुर्लवी । चतुर्दशगुणा साऽपि, षट्पञ्चाशद्भवन्त्यमी ॥ २२ ॥ अष्टावेकषष्टिभागा, जायन्ते सप्तभाजिताः । द्वाषष्टिरेते स्युः प्राच्यचतुःपञ्चाशता युताः ॥२३॥ एकषष्ट्यैषां च भागे, प्राप्तं सैकांशयोजनम् । योज्यतेंऽशश्चांशराशौ, योजनं योजनेषु च ॥ २४ ॥ एवं च-योजनानां पञ्चशती, दशोत्तरैकषष्टिजाः । अष्टचत्वारिंशदंशा,मण्डलक्षेत्रसंमितिः ॥२५॥ कृतैवं मण्डलक्षेत्रपरिमाणप्ररूपणा । संख्याप्ररूपणा त्वेषामाहुः पञ्चदशात्मिकाम् ॥ २६ ॥ तत्र पञ्च मण्डलानि, जम्बूद्वीपे जिना जगुः । शेषाणि तु दशाम्भोधौ, मण्डलान्यमृतद्युतेः ॥ २७ ॥ अबाधा तु त्रिधा प्राग्वत्, तत्राद्या मेर्वपेक्षया । ओघतो मण्डलक्षेत्राबाधाऽन्या प्रतिमण्डलं ॥ २८॥ तृतीया तु मिथोऽबाधा,शशिनोः प्रतिमण्डलम् । तत्रौघतोऽर्कवन्मेरोर्मण्डलक्षेत्रमीरितम्॥२९॥चतुश्चत्वारिंशतैव, सहस्रैरष्टभिः शतैः । विंशत्याढ्यैर्योजनानामियतैवाद्यमण्डलम् ॥ ३० ॥ षट्त्रिंशद्योजनान्येकषष्ट्यंशाः पञ्चविंशतिः । एकस्यैकषष्टिजस्य, चत्वारः सप्तजा लवाः ॥३१॥ वर्द्धन्तेऽन्तरमेतावत्प्रतिमण्डलमादिमात् । सर्वान्त्यमण्डलं यावत्ततो द्वितीयमण्डलम् ॥३२॥ सत्सहस्रैश्चतुश्चत्वारिंशताऽथाष्टभिः शतैः । षट्पञ्चाशैरेकषष्टिभागैस्तत्त्वमितैस्तथा ॥३३॥ एकस्यैकषष्टिजस्य, चतुर्भिः सप्तजैर्लवैः । स्यान्मन्दरादन्तरितमेकतो परतोऽपि च ॥ ३४ ॥ सर्वबाह्यमण्डलं तु, स्थितं दूरे सुमेरुतः । सहस्रैः पंचचत्वारिंशता त्रिंशैस्त्रिभिः शतैः ॥ ३५ ॥ योजनानां योज-

५ १० १४

नैकषष्टिभागाष्टकोज्झितैः । अथो मिथोऽन्तरं वक्ष्ये, शशिनोः प्रतिमण्डलम् ॥ ३६ ॥ इंद्वोर्मिथोऽर्कवत्सर्वान्तरङ्गमण्डलेऽन्तरम् । सहस्रा नवनवतिश्चत्वारिंशा च षट्शती ॥ ३७ ॥ इतश्च–द्वासप्ततिर्योजनानामेकपञ्चाशदंशकाः । एकषष्टिभवाः सप्तभक्तस्यास्य लवोऽपि च ॥ ३८ ॥ एतावदन्तरे ग्लावौ, वर्द्धेते प्रतिमण्डलम् । बहिर्निष्क्रमतोरन्तर्विशतोः परिहीयते ॥ ३९ ॥ एतच्च यत्पुरा प्रोक्तं, प्रतिमण्डलमेकतः । अन्तरं तद्द्विगुणितं, भवेत्पार्श्वद्वयोद्भवम् ॥ ४० ॥ एवं च–सहस्रा नवनवतिर्योजनानां शतानि च । द्वादशोपेतानि सप्तविभागाश्चैकषष्टिजाः ॥ ४१ ॥ एकपञ्चाशदेकोऽशं, एकषष्टिलवस्य च । सप्तभागीकृतस्यैतद्द्वितीयमण्डलेऽन्तरम् ॥ ४२ ॥ सर्वान्तिमेऽन्तरं लक्षं, सषष्टीनि शतानि षट् । योजनानामेकषष्टिभागैः षोडशभिर्विना ॥४३॥ अष्टांशोरूप्यासमिह, मण्डलं भानुमण्डलात् । अष्टाष्टावर्कक्षेत्रभागा, आभ्यां रुद्धास्ततोऽधिकाः ॥ ४४ ॥ ततः षोडशभिर्भागैर्न्यूनं परममन्तरम् । सर्वान्त्यमण्डले ग्लावोरर्कयोः परमान्तरात् ॥ ४५ ॥ एवं कृता चंद्रमसोर्मिथोऽबाधाप्ररूपणा । साम्प्रतं मण्डलाचारप्ररूपणा प्रपञ्च्यते ॥४६॥ परिक्षेपा मण्डलानां १, मुहूर्त्तगतिरत्र च २ । मण्डलार्द्धमण्डलयोः, कालसंख्याप्ररूपणा ३ ॥ ४७ ॥ साधारणासाधारणमण्डलानां प्ररूपणा ४ । एवं चत्वार्यनुयोगद्वाराण्यत्र जिना जगुः ॥ ४८ ॥ विष्कम्भायामतस्तत्र, सर्वाभ्यन्तरमण्डलम् । सहस्रा नवनवतिश्चत्वारिंशा च षट्शती ॥ ४९ ॥ तिस्रो लक्षाः पञ्चदश, सहस्रा योजनान्यथ । नवाशीतिः परिक्षेपोऽधिकोऽभ्यन्तरमण्डले ॥ ५० ॥ भावना तूभयोरपि सूर्याभ्यंतरमण्डलवत् । द्वितीयमण्डलव्यासं विभाव्योक्तानुसारतः ।

चन्द्रस्य मण्डलसंख्या मण्डलाबाधा च

२०

२५

॥ २३९ ॥

२८

भावनीयः परिक्षेपः, स चायमुपपद्यते ॥ ५१ ॥ तिस्रो लक्षाः पञ्चदश, सहस्राणि शतत्रयम् । योजनान्येकोनविंशं, साधिकं किञ्चनाथवा ॥ ५२ ॥ पूर्वमण्डलविष्कम्भात्परमण्डलविस्तृतौ । द्वासप्ततिर्योजनानि, वृद्धिः प्राक्प्रत्यपादि या ॥ ५३ ॥ तस्याः पृथक्परिक्षेपः, कर्त्तव्यः कोविदेन्दुना । द्वे शते त्रिंशदधिके, योजनानां भवेदसौ ॥ ५४ ॥ पूर्वपूर्वपरिक्षेपे, यद्ययं क्षिप्यते तदा । परापरपरिक्षेपा, भावनीया यथोत्तरम् ॥ ५५ ॥ इयमिन्दुमण्डलानां, परिक्षेपप्ररूपणा । मुहूर्त्तगतिमाख्यामि, संप्रति प्रतिमण्डलम् ॥ ५६ ॥ उपसंक्रान्तयोरिन्द्वोः, सर्वाभ्यन्तरमण्डले । पञ्च पञ्च सहस्राणि, योजनानां त्रिसप्ततिः ॥ ५७ ॥ सहस्रैस्त्रयोदशभिः, सतत्त्वैः सप्तभिः शतैः । छिन्नस्य योजनस्यांशशताश्च सप्तसप्ततिः ॥ ५८ ॥ चतुश्चत्वारिंशदाढ्या ५०७३ $\frac{७७४४}{१३७२५}$, मुहूर्त्तगतिरेषिका । जिज्ञास्यतेऽस्याश्चेद्बीजं, श्रूयतां तर्हि भावना ॥ ५९ ॥ इहैकैकोऽप्यमृतांशुरेकैकमर्द्धमण्डलम् । एकेनाहोरात्रेणैकमुहूर्त्ताधिक्यशालिना ॥ ६० ॥ शताभ्यामेकविंशाभ्यां, द्वाभ्यां छिन्नस्य निश्चितम् । मुहूर्त्तस्यैकादशभिः, सार्द्धैर्भागैः प्रपूरयेत् ॥ ६१ ॥ युग्मं । एवं शशी द्वितीयोऽपि, द्वितीयमर्द्धमण्डलम् । कालेनैतावतैव द्राग्, भ्रमणेन प्रपूरयेत् ॥६२॥ संपूर्णस्य मण्डलस्य, पूर्त्तिकालो यदेष्यते । अहोरात्रद्वयं द्वाभ्यां, मुहूर्त्ताभ्यां युतं तदा ॥ ६३ ॥ एकविंशत्यधिकाभ्यां, शताभ्यां चूर्णितस्य च । त्रयोविंशतिरंशानां, मुहूर्त्तस्य विनिर्दिशेत् ॥ ६४ ॥ दि० २-२-$\frac{२३}{२२१}$ । मण्डले पूर्त्तिकाले च, प्रत्ययः केन चेदिति । त्रैराशिकेन तदपि, श्रूयतां यदि कौतुकम् ॥ ६५ ॥ भानुर्लघुविमानत्वाच्छीघ्रगामितयाऽपि च । षष्ट्या मुहूर्त्तैरेकैकं, मण्डलं परिपूरयेत्

॥ ६६ ॥ तद्वैपरीत्याद् द्वाषष्ट्या, साग्रया तैर्विधुस्तु तत्। साष्टषष्टिः ससदशशती तानि युगे ततः ॥६७॥ एक-
चन्द्रापेक्षयाऽर्द्धमण्डलानि भवन्ति हि। तावन्त्येव च पूर्णानि, द्वयोरिन्द्वोरपेक्षया ॥ ६८ ॥ ततश्च—साष्टषष्टिस-
सदशशतमानार्द्धमण्डलैः। युगान्तर्भाविभी रात्रिन्दिवानां यदि लभ्यते ॥ ६९ ॥ अष्टादशशती त्रिंशा, तदा
ननु किमाप्यते। द्वाभ्यामर्द्धमण्डलाभ्यामिति राशित्रयं लिखेत् ॥ ७० ॥ १७६८।१८३०-२ ॥ अन्त्येन राशिना
राशौ, मध्यमे गुणिते सति। जातः शतानि षट्त्रिंशत्सपष्टीन्येप भज्यते ॥ ७१ ॥ साष्टपष्टिससदशशतात्म-
काद्यराशिना। अहोरात्रद्वयं लब्धं, चतुर्विंशं शतं स्थितम् ॥ ७२ ॥ अहोरात्रस्य च त्रिंशन्मुहूर्त्ता इति ताडि-
तम्। त्रिशताऽभूद्विंशतियुक्, ससत्रिंशच्छतात्मकम् ॥७३॥ अस्मिन्साष्टपष्टिससदशशत्या हृते द्वयम्। लब्धं
मुहूर्त्तयोः शेषं, शतं चतुरशीतियुक् ॥ ७४॥१८४ ॥ भागाप्राप्याऽपवर्त्यंते, अष्टभिर्भाज्यभाजकौ। त्रयोविंश-
तिरेकोऽन्यश्चैकविंशं शतद्वयम् ॥ १७६८। ७५ ॥ एषा मुहूर्त्तद्वाषष्टिः, सवर्णनाय गुण्यते। एकविंशाभ्यां
शताभ्यां, ये चोपरितना लवाः ॥७६ ॥ त्रयोविंशतिरुक्ताः प्राक्, ते क्षिप्यन्ते भवेत्ततः। त्रयोदश सहस्राणि
(१३७२५), सतत्त्वा ससशत्यपि ॥७७॥ सर्वान्तर्मण्डलस्थस्य, परिधिर्यः पुरोदितः। एकविंशत्यधिकाभ्यां, शता-
भ्यां सोऽपि गुण्यते ॥ ७८ ॥ जाताः षट् कोटयः षण्णवतिर्लक्षाः स्वरूपतः। चतुस्त्रिंशत्सहस्राणि, षट्शत्येको-
नससतिः ॥ ७९ ॥ सहस्रैस्त्रयोदशभिः, सतत्त्वैः ससभिः शतैः। एषां भागे हृते लब्धा, मुहूर्त्तगतिरैन्दवी
॥ ८० ॥ योजनानां सहस्राणि, पञ्चोपरि त्रिससतिः। चतुश्चत्वारिंशान्यंशशतानि ससससतिः ॥८१॥ मुहूर्त्त-

चन्द्रस्य मण्डलपरिक्षेपो मुहूर्त्तगतिश्च

२०

२५
॥ २४० ॥

२८

ारित्येवं, भाव्येन्द्वोः प्रतिमण्डलम् । विभाज्योक्तभाजकेन, प्राग्वत्परिरयं निजम् ॥ ८२ ॥ मुहूर्त्तीयगतौ
।, वर्द्धन्ते प्रतिमण्डलम् । त्रियोजनी पञ्चपञ्चांशाश्च षण्णवतिः शताः ॥ ८३ ॥ भागा एकयोजनस्य, विभ-
य सहस्त्रकैः । त्रयोदशमितैः ससशत्या च पंचविंशया ॥ ८४ ॥ अत्रोपपत्तिः—योजनद्विशती त्रिंशा, या
ः प्रतिमण्डलम् । उक्ता परिरये गुण्या, सा द्विशत्येकविंशया ॥ ८५ ॥ भक्तत्रयोदशसहस्त्रादिना राशि-
च सा । दत्ते त्रियोजनीं शेषानंशानपि यथोदितान् ॥ ८६ ॥ सर्वान्तर्मण्डले चन्द्रौ, जनानां दृष्टिगोचरौ ।
त्रैः ससचत्वारिंशता त्रिषष्टियुक्तया ॥ ८७ ॥ द्विशत्या च योजनानां, एकस्य योजनस्य च । षष्ट्यंशैरेक-
त्या, तत्रोपपत्तिरुच्यते ॥ ८८ ॥ अन्तर्मण्डलपरिधेर्दशांशे त्रिगुणीकृते । इन्दोः प्रकाशक्षेत्रं स्यात्, ताप-
मिवार्कयोः ॥ ८९ ॥ अर्द्धं प्रकाशक्षेत्रस्य, पूर्वतोऽपरतोऽपि च । इन्द्वोरपि दृष्टिपथप्राप्तिर्विवस्वतोरिव
० ॥ तथा च जम्बूद्वीपप्रज्ञप्तिसूत्रं—"तया णं इहगयस्स मणूसस्स सीयालीसाए जोअणसहस्सेहिं दोहि
वट्ठेहिं जोअणसएहिं एगवीसाए सट्ठिभाएहिं जोअणस्स चंदे चक्खुफासं हव्वमागच्छइ" एतद्वृत्तौ च—"यत्तु
भागीकृतयोजनसत्कैकविंशतिभागाधिकत्वं तत्तु संप्रदायगम्यं, अन्यथा चन्द्राधिकारे साधिकद्वाषष्टि-
र्तप्रमाणमण्डलपूर्त्तिकालस्य छेदराशित्वेन भणनात् सूर्याधिकारसत्कषष्टिमुहूर्त्तप्रमाणमण्डलपूर्त्तिकालस्य
ाशित्वेनानुपपद्यमानत्वात् इति दृश्यते, तदत्र तत्त्वं बहुश्रुतगम्यं" । पञ्च योजनसहस्राः, पंचविंशतियुक्
ः । योजनस्य तथैकस्य, पञ्चविंशतिसंयुतैः ॥ ९१ ॥ त्रयोदशभिः सहस्रैर्भक्तस्य ससभिः शतैः । भागा

१०

१४

नवत्यधिकानि, शतान्येकोनसप्ततिः ॥ ९२ ॥ मुहूर्त्तगतिरेषेन्द्वोः, सर्वपर्यन्तमण्डले । अथात्रैव दृष्टिपथप्राप्ति-
विविच्यतेऽनयोः ॥ ९३ ॥ एकत्रिंशता योजनसहस्रैरष्टभिः शतैः । एकत्रिंशैः सर्वबाह्ये, दृश्येते मण्डले विधू
॥ ९४ ॥ "अत्र सूर्याधिकारोक्तं तीसाए सट्ठिभाएहिं इत्यधिकं मन्तव्यं" इति जम्बूद्वीपप्रज्ञप्तिवृत्तौ । अत्र
सर्वाभ्यन्तरसर्वबाह्यचन्द्रमण्डलयोर्दृष्टिपथप्राप्तिता दर्शिता, शेषमंडलेषु सा चंद्रप्रज्ञप्तिवृहत्क्षेत्रसमासज-
म्बूद्वीपप्रज्ञप्तिसूत्रवृत्त्यादिषु ग्रन्थेषु पूर्वैः क्वापि दर्शिता नोपलभ्यते ततोऽत्रापि न दर्शितेति ज्ञेयं,
प्रतिमण्डलमित्येवं, मुहूर्त्तगतिरीरिता । मण्डलार्द्धमण्डलयोः, कालमानमथ ब्रुवे ॥ ९५ ॥ नवशत्या विभक्तस्य,
चत्वत्पञ्चदशाढ्यया । विभागैर्मण्डलार्द्धस्य, किलैकत्रिंशतोनितम् ॥९६॥ अर्द्धमण्डलमेकेनाहोरात्रेण समाप्यते ।
एकैकेन शशाङ्केन, यत्र कुत्रापि मण्डले ॥९७॥ द्विचत्वारिंशदधिकैः, शतैश्चतुर्भिरेव च । अहोरात्रस्य भक्तस्य,
लवैकत्रिंशताऽधिकौ ॥ ९८ ॥ अहोरात्रौ पूर्त्तिकाल, एकस्मिन् मण्डले विधोः । रविस्तु पूरयेत्पूर्णाहोरात्रद्वित-
येन तत् ॥ ९९ ॥ मण्डलार्द्धमण्डलयोरुक्तैवं कालसंमितिः । साधारणासाधारणमंडलानि ब्रवीम्यथ ॥ ४०० ॥
प्रथमं च तृतीयं च, षष्ठं सप्तममष्टमम् । दशमैकादशे पञ्चदशमित्यष्टमण्डली ॥ १ ॥ नक्षत्रैरविरहिता,
सदाऽपि तु हिमद्युतेः । मंडलेष्वेषु नक्षत्राण्यपि चारं चरन्ति यत् ॥ २ ॥ द्वितीयं च चतुर्थं च, पञ्चमं नवमं
तथा । त्रीणि च द्वादशादीनि, किलैषा सप्तमण्डली ॥ ३ ॥ ऋक्षैः सदा विरहिता, मण्डलेष्वेषु नो भवेत् ।
कदापि चारऋक्षाणामूषरेषु गवामिव ॥ ४ ॥ प्रथमं तृतीयमेकादशं पञ्चदशं तथा । रविचन्द्रोडुसामान्या,

चन्द्रस्य दृ-
क्पथप्राप्तिः
मण्डलार्धम-
ण्डलकालः

२०

२५
॥२४१॥

२८

लानां चतुष्टयी ॥ ५ ॥ एतेषु मण्डलेष्विन्दुर्नक्षत्राणि तथा रविः । चारं चरन्ति सर्वेऽपि, राजमार्गे
इव ॥ ६ ॥ षष्ठादीनि पञ्च सूर्यचारहीनानि सर्वथा । शेषाणि मण्डलानीन्दोः, किञ्चिद्भानुः स्पृशेदपि
॥ स्थापना ॥ साधारणासाधारणमण्डलान्येवमूचिरे । सम्प्रतीन्दोर्वृद्धिहानिप्रतिभासः प्ररूप्यते ॥ ८ ॥
स्थितस्वभावं हि, स्वरूपेणेन्दुमण्डलम् । सदापि हानिर्वृद्धिर्वा, येक्ष्यते सा न तात्त्विकी ॥ ९ ॥ केवलं या
पक्षे, वृद्धिर्हानिस्तथा परे । राहुविमानावरणयोगात् सा प्रतिभासते ॥ १० ॥ तथाहि–ध्रुवराहुः पर्वराहुरेवं
द्वेधा भवेत् । ध्रुवराहोस्तत्र कृष्णतमं विमानमीरितम् ॥ ११ ॥ तच्च चन्द्रविमानस्य, प्रतिष्ठितमधस्तले ।
ङ्गुलमप्राप्तं, चारं चरति सर्वदा ॥१२॥ तेनापावृत्त्य चावृत्य, चरत्यधः शनैः शनैः । वृद्धिहानिप्रतिभासः,
कुरीतीन्दुमण्डले ॥१३॥ तथोक्तं—"चंदस्स नेव हाणी नवि वुड्ढी वा अवट्ठिओ चंदो । सुक्किलभावस्स पुणो
इ वुड्ढी य हाणी य ॥१४॥ किण्हं राहुविमाणं निच्चं चंदेण होइ अविरहियं। चउरंगुलमप्पत्तं हिट्ठा चंदस्स तं
॥१५॥ तेणं वड्ढइ चंदो परिहाणी वावि होइ चंदस्स" तत्र प्रकल्प्य द्वाषष्टिं, भागान् शशाङ्कमण्डले । ह्रियते
शभिर्लभ्यतेऽशचतुष्टयम् ॥ १६ ॥ एतावदाव्रियते तत्, प्रत्यहं भरणीभुवा । अहोभिः पञ्चदशभिरेवमाव्रि-
खिलम् ॥ १७ ॥ द्वौ भागौ तिष्ठतः शेषौ, सदैवानावृतौ च तौ । एषा कला षोडशीति, प्रसिद्धिमगमद्
॥ १८ ॥ कल्प्यंतेऽशाः पंचदश, विमाने राहवेऽथ सः । जयत्येकैकांशवृद्ध्या, नीतिज्ञोऽरिमिवोडुपम्
॥ तच्चैवं–स्वीयपञ्चदशांशेन, कृष्णप्रतिपदि ध्रुवम् । मुक्त्वांशौ द्वावनावार्यौ, शेषषष्टेः सितत्विषः ॥ २०॥

५

१०

१४

चतुर्भागात्मकं पञ्चदशं भागं विधुंतुदः । आवृणोति द्वितीयायां, निजभागद्वयेन च ॥ २१ ॥ अष्टभागात्मकौ पञ्चदशांशौ द्वौ रुणद्धि सः । षष्ठिं भागानित्यमायां, खैः पञ्चदशभिर्लवैः ॥२२॥ त्रिभिर्विशेषकं ॥ ततः शुक्लप्रतिपदि, चतुर्भागात्मकं लवम् । एकं पञ्चदशं व्यक्तीकरोत्यपसरन् शनैः ॥ २३ ॥ द्वितीयायां द्वौ विभागौ, पूर्णिमायामिति क्रमात् । द्वाषष्ट्यंशात्मकः सर्वः, स्फुटीभवति चन्द्रमाः ॥ २४ ॥ इन्दोश्चतुर्लवात्मांशो, यावत्कालेन राहुणा । विधीयते मुच्यते च, तावत्कालमिता तिथिः ॥ २५ ॥ इन्दोः पिधीयमानाः स्युः, कृष्णाः प्रतिपदादिकाः । तिथयो मुच्यमानाः स्युः, शुक्लाः प्रतिपदादिकाः ॥ २६ ॥ तथाहुः—"कालेण जेण हायइ सोलसभागो उ सा तिही होइ । तह चेव य वुड्ढीए एवं तिहिणो समुप्पत्ती ॥ २७ ॥" एकोनत्रिंशता पूर्णैर्मुहूर्त्तैश्च द्विषष्टिजैः । द्वात्रिंशता मुहूर्त्तांशैरेकैको रजनीपतेः ॥ २८ ॥ चतुर्द्वी षष्ट्यंशरूपो, राहुणाऽऽच्छाद्यते लवः । मुच्यते च तदेतावन्मानाः स्युस्तिथयोऽखिलाः ॥ २९ ॥ एवंच—द्वाषष्टिभक्ताहोरात्रस्यैकषष्ट्या लवैर्मिता । तिथिरेवं वक्ष्यते यद्, तद्युक्तमुपपद्यते ॥ ३० ॥ तिथिमानेऽस्मिंश्च हते, त्रिंशता स्याद्यथोदितैः । मासश्चान्द्र एवमपि, त्रिंशत्तिथिमितः खलु ॥ ३१ ॥ ननु राहुविमानेन, योजनार्द्धमितेन वै । षट्पञ्चाशद्योजनैकषष्टिभागमितं खलु ॥ ३२ ॥ कथमाच्छादितुं शक्यं, गरीयः शशिमण्डलम् ? । लघीयसा गरीयो हि, दुरावारमिति स्फुटम् ॥ ३३ ॥ एवमुत्तरयन्त्यत्र, केचित्प्राक्तनपण्डिताः । लघीयसोऽप्यस्य कान्तिजालैरत्यंतमेचकैः ॥३४॥ आच्छाद्यते महदपि, शशिबिम्बं प्रसृत्वरैः । दावानलोच्छलद्धूमस्तोमैरिव नभोऽङ्गणम् ॥ ३५ ॥ अन्ये त्व-

साधारणेतरमण्डलानि वृद्धिर्हानिश्च

२०

२५

॥ २४२ ॥

२८

धुर्वीरा, योजनार्द्धं यदुच्यते । मानं ग्रहविमानस्य, तदेतत्प्रायिकं ततः ॥ ३६ ॥ योजनायाममविष्कम्भं,
त्र्यंशांशमेदुरम् । स्वर्भानुमण्डलं तेन, विधुराव्रियते सुखम् ॥ ३७ ॥ तथा चाहुः—"आयामो विक्खंभो
णमेगं तु तिगुणिओ परिही । अड्ढाइज्ज धणुसया राहुस्स विमाणबाहल्लम् ॥ ३८ ॥" संग्रहण्यादर्शे प्रक्षे-
यं दृश्यते, भगवतीवृत्तावप्येतस्याश्चालनाया एवं प्रत्यवस्थानं—"यदिदं ग्रहविमानमर्द्धयोजनप्रमाणमिति
यिकं, ततश्च राहोर्ग्रहस्योक्ताधिकप्रमाणमपि विमानं संभाव्यते, अन्ये पुनराहुः—लघीयसोऽपि राहुविमा-
महता तमिस्ररश्मिजालेन तदाव्रियते" इति भगवतीसूत्रवृत्तौ १२ शते पञ्चमोद्देशके, तत्त्वं तु केव-
विदन्ति । कदाचिद् ग्रहण इव, विमानमुपलभ्यते। वृत्ताकृति ध्रुवराहोः, कदाचिन्न तथा च किम् ? ॥३९॥
येषु तमसाऽभिभूतः स्याद्कृशं शशी । तेषूपलभ्यते वृत्तं, विमानमस्य येषु च ॥ ४० ॥ शशी विशुद्धकां-
त्तमसा नाभिभूयते । वृत्तं विमानं नैतस्य, दिनेषु तेषु दृश्यते ॥ ४१ ॥ तथोक्तं—"वट्टच्छेओ कइवइ
-ध्रुवराहुणो विमाणस्स । दीसइ परं न दीसइ जह गहणे पव्वराहुस्स ॥ ४२ ॥" "आचार्य आह—अच्चत्थं
तमसाऽभिभूयते जं ससी विसुज्झंतो । तेण न वट्टच्छेओ गहणे उ तमो तमोबहुलो ॥ ४३ ॥" भगवती-
॥ यदा तु लेश्यामावृण्वन्, पर्वराहुर्व्रजत्यधः । पुष्पदन्तमण्डलयोर्यथोक्तकालमानतः ॥ ४४ ॥ तदा भव-
गो, यथार्हं चन्द्रसूर्ययोः । जनैर्ग्रहणमित्यस्य, प्रसिद्धिः परिभाव्यते ॥ ४५ ॥ जघन्यतस्तत्र षण्णां,
न्ते शशिग्रहः । उत्कर्षतो द्विचत्वारिंशतो मासामतिक्रमे ॥ ४६ ॥ मासैर्जघन्यतः षड्भिर्जायते तरणि-

ग्रहः । संवत्सरैरष्टचत्वारिंशतोत्कर्षतः पुनः ॥ ४७ ॥ यदा स्वर्भानुरागच्छन्, गच्छन्वा पुष्पदन्तयोः । लेश्यामावृणुयात्तर्हि, वदन्ति मनुजा भुवि ॥ ४८ ॥ चन्द्रो रविर्वा तमसा, गृहीत इति यद्यथ । लेश्यामावृत्त्य पार्श्वेन, गच्छत्यर्कशशाङ्कयोः ॥ ४९ ॥ तदा वदन्ति मनुजा, रविणा शशिनाऽथवा । राहोः कुक्षिर्भिन्न इति, यदा पुनर्विधुन्तुदः ॥ ५० ॥ अर्केन्दुलेश्यामावृत्त्यापसर्प्पति तदा भुवि । वदन्ति मनुजा वान्तौ, राहुणा शशिभास्करौ ॥ ५१ ॥ यदा तु गच्छन् वाऽऽगच्छन्, राहुश्चन्द्रस्य वा रवेः । लेश्यामावृत्त्य मध्येन, गच्छ-त्याहुर्जनास्तदा ॥ ५२ ॥ राहुणा रविरिन्दुर्वा, विभिन्न इति चेत्पुनः । सर्वात्मना चन्द्रसूर्यलेश्यामावृत्त्य-तिष्ठति ॥ ५३ ॥ वावदन्तीह मनुजाः, परमार्थाविदस्तदा । राहुणा क्षुधितेनेव, ग्रस्तश्चन्द्रोऽथवा रविः ॥ ५४ ॥ शृङ्गाटकश्च जटिलः, क्षेत्रकः खरकस्तथा । दुर्द्धरः सगरो मत्स्यः, कृष्णसर्प्पश्च कच्छपः ॥ ५५ ॥ इत्यस्य नव नामानि, विमानास्त्वस्य पञ्चधा । कृष्णनीलरक्तपीतशुक्लवर्णमनोरमाः ॥५६॥ भगवतीसूत्रशत १२ षष्ठोद्देशके । संपूर्णसर्वावयवो विशिष्टालङ्कारमाल्याम्बररम्यरूपः । महर्द्धिको राजति राहुरेष, लोकप्रसिद्धो न तु मौलिमात्रम् ॥ ५७ ॥ ( उपजातिः ) किञ्च–विधोरेकैकमयनमहोरात्रांस्त्रयोदश । चतुश्चत्वारिंशदहोरात्रांशाः सप्तषष्टिजाः ॥ ५८ ॥ द्वाभ्यां चन्द्रायणाभ्यां स्याद्मासः सप्तविंशतिः । अहोरात्राः सप्तषष्टिभागास्तत्रैकविंशतिः ॥ ५९ ॥ अत्रोपपत्तिस्त्वेवं–सर्वोडूनां चन्द्रभोगो, वक्ष्यमाणः समुच्चितः । मुहूर्त्तानां शतान्यष्टैकोनविंशान्यथो लवाः ॥ ६० ॥ स्युः सप्तविंशतिः सप्तषष्टिजास्त्रिंशता हृतः । मुहूर्त्ताङ्के ततो लब्धाऽहोरात्रसप्तविं-

राहुस्वरूपं चन्द्रस्य अयनानि च

२०

२५

॥२४३॥

२८

शतिः ॥ ६१ ॥ मुहूर्त्ता नव शिष्यन्ते, भागाश्च सप्तविंशतिः । मुहूर्त्ताः सप्तषष्टिघ्नाः, कार्याः कर्त्तुं सवर्णनम् ॥ ६२ ॥ षट्शती त्र्युत्तरा स्यात्सा, सप्तविंशतिभागयुक् । बभूव षट्शती त्रिंशा, भागेऽस्यास्त्रिंशतः पुनः ॥ ६३ ॥ सप्तषष्टिभवा भागा, लभ्यन्ते एकविंशतिः । यथोक्तोऽयं भमासोऽस्यार्द्धार्द्धं याम्योत्तरायणे ॥ ६४ ॥ चन्द्रोत्तरायणारम्भो, युगादिसमये भवेत् । प्रागुत्तरायणः पश्चाद्याम्यायनमिति क्रमः ॥६५॥ प्रवृत्तिः स्याद्यतो ज्योतिश्चक्रचारैकमूलयोः । सूर्ययाम्यायनशीतांशूत्तरायणयोः किल ॥६६॥ युगादावेव युगपत्तत्रार्कदक्षिणायनम् । पुष्यसप्तषष्टिजांशत्रयोविंशत्यतिक्रमे ॥ ६७ ॥ युगादावभिजिद्योगप्रथमक्षण एव तु । चन्द्रोत्तरायणारम्भस्ततो युक्तं पुरोदितम् ॥ ६८ ॥ तथोक्तं जम्बूद्वीपप्रज्ञप्तिवृत्तौ–"सकलज्योतिश्चारमूलस्य सूर्यदक्षिणायनस्य चन्द्रोत्तरायणस्य च युगपत्प्रवृत्तिर्युगादावेव, सोऽपि चन्द्रायणस्याभिजिद्योगप्रथमसमय एव, सूरायणस्य तु पुष्यस्य त्रयोविंशतौ सप्तषष्टिभागेषु व्यतीतेषु, तेन सिद्धं युगस्यादित्व"मिति । पुष्यस्य सप्तषष्ट्युत्थविंशत्यंशाधिके ततः । मुहूर्त्तदशके भुक्ते, मुहूर्त्तैकोनविंशतौ ॥ ६९ ॥ भोग्यायां सप्तचत्वारिंशदंशायां समाप्यते । विधुनोदीच्यमयनं, याम्यमारभ्यतेऽपि च ॥ ७० ॥ एवं च सर्वनक्षत्रभोगार्द्धानुभवात्मके । सामर्थ्याद्वसीयेते, याम्योत्तरायणे विधोः ॥ ७१ ॥ नन्वाद्यान्त्यमण्डलाभिमुखप्रसर्पणात्मके । याम्योत्तरायणे स्यातां, भानोरिव विधोरपि ॥ ७२ ॥ किञ्च–लोकप्रसिद्धेर्मकरे, कर्कराशिस्थितस्ततः । उदीच्यं याम्यमयनं, विधुरारभते क्रमात् ॥७३॥ युगे युगे चतुस्त्रिंशं, शतं चन्द्रायणानि वै । त्रिंशान्यष्टादश शतान्येभिश्च युगवासराः ॥७४॥

५

१०

१४

युगातीतपर्वसंख्या, कार्या पञ्चदशाहता । क्षिप्यंते तत्र तिथयः, पर्वोपरिगतास्ततः ॥ ७५ ॥ राशेरस्माद्विवर्ज्यन्तेऽवमरात्रास्ततः परम् । ऋक्षमासार्द्धेन भागे, यत् लब्धं तद्विचार्यते ॥ ७६ ॥ लब्धे समेऽङ्के विज्ञेयमतीतं दक्षिणायनम् । विषमेऽङ्के पुनर्लब्धे, व्यतीतमुत्तरायणम् ॥ ७७ ॥ शेषांस्तूद्धरितानंशान्, सप्तषष्ठ्या हरेद्बुधः । लब्धाङ्कप्रमिता वर्त्तमानायनदिना गताः ॥ ७८ ॥ तत्राप्युद्धरिता येऽङ्कास्ते विज्ञेया विशारदैः । दिनस्य सप्तषष्ट्यंशा, दृश्यंतेऽत्र निदर्शनम् ॥ ७९ ॥ यथा युगादेरारभ्य, नवमासव्यतिक्रमे । पञ्चम्यां केनचित्पृष्टं, किं चन्द्रायणमस्ति भोः ? ॥ ८० ॥ कुर्यात्पञ्चदशघ्नानि, पर्वाण्यष्टादशात्र च । क्षिपेद्गतान्पञ्च तिथीन्, त्यक्त्वाऽवमचतुष्टयम् ॥ ८१ ॥ एकसप्तत्या समेतं, संजातं शतयोर्द्वयम् । भाजकोऽस्य भमासार्द्धं, पूर्णरूपात्मकं न तत् ॥ ८२ ॥ किंतु सप्तषष्टिभागैः, कियद्भिरधिकं ततः । एष राशिः सप्तषष्ट्या, भागसाम्याय गुण्यते ॥८३॥ अष्टादश सहस्राणि, सप्तपञ्चाशताऽधिकम् । शतं ( १८१५७ ) जातमितश्चोडुमासार्द्धदिवसा अपि ॥ ८४ ॥ सप्तषष्ट्या हताः शेषैर्वेदवेद लवैर्युताः । जाताः पञ्चदशाढ्यानि, शतानि नव तैः पुनः ॥ ८५ ॥ हृते भाज्याङ्केऽयनानि, लब्धान्येकोनविंशतिः । शेषा भागसप्तशती, द्विसप्तत्यधिका स्थिता ॥ ८६ ॥ अस्या भागे सप्तषष्ट्या, लब्धा रुद्रमिता दिनाः । शेषाः पंचत्रिंशदंशास्तिष्ठंति सप्तषष्टिजाः ॥८७॥ चन्द्रायणान्यतीतानीत्येवमेकोनविंशतिः । अनन्तरमतीतं यत्तच्चन्द्रस्योत्तरायणम् ॥ ८८ ॥ वर्त्तमानस्य च याम्यायनस्य वासरा गताः । एकादश लवाः पंचत्रिंशच्च सप्तषष्टिजाः ॥ ८९ ॥ अत्र पूर्णा भविष्यन्ति, समासे पञ्चमे तिथौ । एवंमन्य-

चन्द्रस्यायनानि

२०

२५



२८

त्रापि भाव्यं, करणं गणकोत्तमैः ॥९०॥ इन्दुस्तत्परिवारश्च, रूपकान्त्यादिभिर्भृशम् । सश्रीक इति विख्यातः, शशी प्राकृतभाषया ॥ ९१ ॥ मृगश्चिह्नं विमानेऽस्य, पीठिकायां प्रतिष्ठितम् । मृगाङ्कितविमानत्वान्मृगाङ्क इति वोच्यते ॥ ९२ ॥ तथा च पंचमाङ्गे—"से केणट्ठेणं भंते ! एवं वुचइ—चंदे ससी चंदे ससी ?, गो० ! चंदस्स णं जोतिसिंदस्स जोतिसरण्णो मियंके विमाणे कंता देवा कंताओ देवीओ"इत्यादि ॥ १२ श० ५ उ० । इति चन्द्रस्वरूपनिरूपणं ॥

एवं संक्षेपतश्चन्द्रनिरूपणं यथा कृतम् । तथैव वर्णयामोऽथ, नक्षत्राणां निरूपणम् ॥ ९३ ॥ आदौ संख्या मण्डलानां १ तेषां क्षेत्रप्ररूपणा २ । एकऋक्षविमानानां, तथाऽन्तरं परस्परम् ३ ॥ ९४ ॥ सुमेरोर्मण्डलाबाधा ४, विष्कम्भादि च मण्डले ५ । मुहूर्त्तगति ६ रावेशः, शशाङ्कमण्डलैः सह ७ ॥ ९५ ॥ दिग्योगो ८ देवता ९ स्तारासंख्यो १० डूनां तथाऽऽकृतिः ११ । सूर्येन्दुयोगाद्धामानं १२ कुलाद्याख्यानिरूपणम् १३ ॥ ९६ ॥ अमावास्यापूर्णिमानां, नक्षत्रयोगकीर्त्तनम् १४ । प्रतिमासमहोरात्रसमापकानि तानि च १५ ॥ ९७ ॥ एभिश्च पञ्चदशभिर्द्वारैः पूर्गोपुरैरिव । गम्योडुपरिपाटीति, तामेव प्रथमं ब्रुवे ॥ ९८ ॥ अभिजिच्छ्रवणं चैव, धनिष्ठा शततारिका । पूर्वाभद्रपदा सैवोत्तरादिकाऽथ रेवती ॥ ९९ ॥ अश्विनी भरणी चैव, कृत्तिका रोहिणी तथा । मृगशीर्षं तथा चाऽऽर्द्रा, पुनर्वसू ततः परम् ॥५००॥ पुष्योऽश्लेषा मघाः पूर्वा, फल्गुन्युत्तरफाल्गुनी । हस्तश्चित्रा तथा स्वातिर्विशाखा चानुराधिका ॥ १ ॥ ज्येष्ठा मूलं तथा पूर्वाषाढा सैवोत्तरापि च । जिनप्रवचनोपज्ञं, नक्ष-

त्राणामयं क्रमः ॥ २ ॥ अश्विन्याः कृत्तिकाया वा, प्रसिद्धं लौकिकक्रमम् । उल्लङ्घ्यात्र प्रवचने, यदेतत्क्रमदर्शनम् ॥ ३ ॥ तत्र हेतुः प्रथमतः, संयोगः शशिना समम् । युगस्यादावभिजितः, शेषाणां तु ततः क्रमात् ॥ ४ ॥ कृत्तिकादिक्रमस्तु लोके सप्तशलाकचक्रादिष्वेव स्थानेषु उपयोगी श्रूयते ॥ आरभ्य नन्वभिजितो, नक्षत्रानुक्रमो यदि । शेषोडूनामिव कथं, व्यवहार्यत्वमस्य न ? ॥ ५ ॥ अत्रोच्यतेऽस्य शशिना, योगो यदल्पकालिकः । ऋक्षांतरानुप्रविष्टतयाऽस्य तद्विवक्षणम् ॥ ६ ॥ यदुक्तं समवायांगे सप्तविंशे समवाये-'जंबुद्दीवे २ अभीइवज्जेहिं सत्तावीसाहिं णक्खत्तेहिं संववहारे वट्टइ' एतद्वृत्तिर्यथा-"जम्बूद्वीपे, न धातकीषण्डादौ, अभिजिद्वर्जैः सप्तविंशत्या नक्षत्रैर्व्यवहारः प्रवर्त्तते, अभिजिन्नक्षत्रस्योत्तराषाढाचतुर्थपादानुप्रवेशनादिति, लोके तु-उत्तराषाढमन्त्याङ्घ्रिचतस्रश्च श्रुतेर्घटीः । वदन्त्यभिजितो भोगं, वेधलत्ताद्यवेक्षणे ॥ ७ ॥ अष्टावेव मण्डलानि, स्युरष्टाविंशतेरपि । उडूनां तत्र चारस्तु, नियते स्वस्वमण्डले ॥ ८ ॥ इति मंडलसंख्या ॥ साशीतियोजनशते, द्वीपस्यान्तरवर्त्तिनि । उक्तं मुक्तिवधूकान्तैर्नक्षत्रमण्डलद्वयम् ॥ ९ ॥ त्रिंशे च योजनशतत्रये लवणवारिधेः । षड् नक्षत्रमण्डलानि, दृष्टानि विष्टपेक्षिभिः ॥ १० ॥ नक्षत्रमण्डलं चक्रवालविष्कम्भतो भवेत् । गव्यूतमेकं प्रत्येकं, गव्यूतार्द्धं च मेदुरम् ॥ ११ ॥ एवं नक्षत्रजातीयमंडलक्षेत्रसंमितिः । दशोत्तरा पंचशती, योजनानां निरूपिता ॥ १२ ॥ नत्वेकैकस्य ऋक्षस्य, मण्डलक्षेत्रसंभवः । रवेरिवायनाभावात्सदा-चारात्स्वमण्डले ॥ १३ ॥ इति मण्डलक्षेत्रं ।

नक्षत्राणां मण्डलानि तेषां क्षेत्रं च

२०

२५

॥ २४५ ॥

२८

यत्र यत्र यानि यानि, वक्ष्यन्ते भानि मण्डले । स्यात्तदीयविमानानां, द्वे योजने मिथोऽन्तरम् ॥ १४ ॥ मिथोऽन्तरमुडूनां चेदिदमेव भवेत्तदा । मण्डलक्षेत्रमन्यत्स्याद्दृशून्यं तच्च नेष्यते ॥१५॥ यत्तु-"दो जोअणाइं णक्खत्तमंडलस्स णक्खत्तमंडलस्स य आवाहाए अंतरे पण्णत्ते" इत्येतत् जम्बूद्वीपप्रज्ञप्तिसूत्रं तत् अष्टास्वपि मण्डलेषु यत्र २ मण्डले यावन्ति नक्षत्राणां विमानानि तेषामन्तरबोधकं, यच्च अभिजिन्नक्षत्रविमानस्य श्रवणनक्षत्रविमानस्य च परस्परमन्तरं द्वे योजने इतिउ० श्रीशान्तिचन्द्रगणिभिः स्वकृतवृत्तौ व्याख्यायि तदभिप्रायं सम्यग् न विद्मः, यदपि उ० श्रीधर्मसागरगणिभिः स्वकृतवृत्तौ एतत्सूत्रव्याख्याने द्वे योजने नक्षत्रस्य २ चाबाधया अन्तरं प्रज्ञप्तमित्येव लिखितमस्ति तदप्यभिप्रायशून्यमेवच ॥ चतुश्चत्वारिंशतैव, सहस्रैरष्टभिः शतैः । विंशैश्च योजनैर्मेरोः, सर्वान्तरं भमण्डलम् ॥ १६ ॥ सहस्रैः पञ्चचत्वारिंशता विंशैस्त्रिभिः शतैः । योजनैर्मेरुतः सर्वबाह्यं नक्षत्रमण्डलम् ॥ १७ ॥ इति सुमेरोरबाधा ।

विष्कम्भायामपरिधिप्रमुखं मानमेतयोः । रवेः सर्वान्तरसर्वबाह्यमण्डलयोरिव ॥ १८ ॥ इति मण्डलविष्कंभादि ॥ सहस्राणि पञ्च शतद्वयं च पञ्चषष्टियुक् । योजनानि योजनस्य, भक्तस्यैकस्य निश्चितम् ॥ १९ ॥ एकविंशत्या सहस्रैः, षष्ट्याढ्यैर्नवभिः शतैः । विभागाश्च समधिकाः, पूर्वोक्तयोजनोपरि ॥ २० ॥ अष्टादश सहस्राणि, शतद्वयं त्रिषष्टियुक् । सर्वान्तर्मण्डलोडूनां, मुहूर्त्तगतिरेषिका ॥ २१ ॥ उपपत्तिश्चात्र-नक्षत्रं सर्वमप्यत्र, पूरयेत् स्वस्वमण्डलम् । मुहूर्त्तैरेकोनषष्ट्या, मुहूर्त्तस्य तथा लवैः ॥२२॥ सप्तसप्तषष्टित्रिंशद्विभक्तस्य त्रिभिः शतैः ।

ससोत्तरैः प्रत्ययश्च, त्रैराशिकात्तदुच्यते ॥ २३ ॥ नक्षत्रार्द्धमण्डलानां, संपूर्णयुगवर्त्तिनाम् । पञ्चत्रिंशत्समधिकैर्यद्यष्टादशभिः शतैः ॥ २४ ॥ अष्टादशशती त्रिंशाहोरात्राणामवाप्यते । द्वाभ्यामर्द्धमण्डलाभ्यां, किमाप्यते तदा वद ॥२५॥ १८३५ । १८३० । २ । अत्रान्त्यराशिना राशौ, मध्यमे गुणिते सति । त्रिसहस्री षट्शती च, जाता षष्ठ्यधिका किल ॥ २६ ॥ पञ्चत्रिंशत्समधिकेनाष्टादशशतात्मना । आद्येन राशिना भागे, रात्रिन्दिवमवाप्यते ॥ २७ ॥ अष्टादशशती शेषा, पञ्चविंशतियुक् स्थिता । मुहूर्त्तानयनायैषा, त्रिंशता गुणिताऽभवत् ॥ २८ ॥ चतुःपञ्चाशत्सहस्राः, सार्द्धा ससशतीति च । एषां भागेऽष्टादशभिः, पञ्चत्रिंशद्युतैः शतैः ॥ २९ ॥ लब्धा मुहूर्त्ता एकोनत्रिंशत्ततोऽपवर्त्तनम् । छेद्यच्छेदकयो राश्योः, पञ्चभिस्तौ ततः स्थितौ ॥ ३० ॥ ससाढ्या त्रिशती भाज्यो, भाजकः ससषष्टियुक् । त्रिशती येऽत्र लब्धाश्चैकोनत्रिंशन्मुहूर्त्तकाः ॥ ३१ ॥ त्रिंशन्मुहूर्त्तरूपेऽहोरात्रे पूर्वागतेऽन्विताः । ते मुहूर्त्ताः स्युरेकोनषष्टी राशिरसौ पुनः ॥ ३२ ॥ गुण्यते भागसाम्याय, ससषष्टिसमन्वितैः । त्रिभिः शतैः क्षिप्यतेऽस्मिन्, ससाढ्यांशशतत्रयी ॥ ३३ ॥ सषष्टिर्नवशत्येवं, सहस्राश्चैकविंशतिः । अयं च राशिः परिधेर्भाजकः प्रतिमण्डलम् ॥ ३४ ॥ तिस्रो लक्षाः पञ्चदश, सहस्राणि तथोपरि । नवाशीतिः परिक्षेपः, सर्वाभ्यन्तरमण्डले ॥ ३५ ॥ राशिर्योजनरूपोऽयं, भागात्मकेन राशिना । कथं विभाज्योऽसदृशस्वरूपत्वादसौ ततः ॥ ३६ ॥ तेनैवाहंति गुणनं, गुणितो येन भाजकः । ततस्त्रिभिः शतैः ससषष्ट्याढ्यैरेष गुण्यते ॥ ३७ ॥ जाता एकादश कोट्यः, षट्पञ्चाशच्च लक्षकाः । ससत्रिंशत्सहस्राणि, षट्-

अन्तरमवाधा विष्कम्भादि मुहूर्त्तगतिश्च

२०

२५

॥ २४६ ॥

२८

शती च त्रिषष्टियुक् ॥३८॥ सहस्रैरेकविंशत्या, षष्ट्याढ्यैर्नवभिः शतैः। भागेऽस्य राशेः प्रागुक्ता, मुहूर्त्तगति-राप्यते ॥ ३९ ॥ तथा—योजनानां त्रिपञ्चाशच्छती सैकोनविंशतिः । सहस्रैरेकविंशत्या, षष्ट्याढ्यैर्नवभिः शतैः ॥ ४० ॥ भक्तस्य योजनस्यांशाः, सहस्राः षोडशोपरि। सपञ्चषष्टिस्त्रिशती, गतिः सर्वान्त्यमण्डले ॥४१॥ तथाहि—लक्षत्रयं योजनानामष्टादशसहस्रयुक्। शतत्रयं पञ्चदश, परिक्षेपोऽन्त्यमण्डले ॥ ४२ ॥ अयं त्रिभिः ससषष्टिसहितैस्ताडितः शतैः। कोट्य एकादश लक्षा, अष्टषष्टिः किलाधिकाः ॥ ४३ ॥ सहस्रैरेकविंशत्या, शतैः षड्भिः सपञ्चभिः। राशेरस्यैकविंशत्या, सहस्रैर्नवभिः शतैः ॥ ४४ ॥ हृते षष्ट्यधिकैर्भागे, मुहूर्त्तगति-राप्यते। नक्षत्राणां किल सर्वबाह्यमण्डलचारिणाम् ॥ ४५ ॥ इति मुहूर्त्तगतिः ॥

षट्सु शेषमण्डलेषु, मुहूर्त्तगतिसंविदे । सुखेन तत्तत्परिधिज्ञानाय क्रियतेऽधुना ॥ ४६ ॥ भमण्डलानां सर्वेषां, मण्डलेष्वमृतद्युतेः । समवतारस्तत्राद्यमाद्ये शशाङ्कमण्डले ॥ ४७ ॥ भमण्डलं द्वितीयं च, तृतीये चन्द्रमण्डले। षष्ठे तृतीयं विज्ञेयं, लवणोदधिभाविनि ॥ ४८ ॥ चतुर्थं ससमे ज्ञेयं, तथा पञ्चममष्टमे । विज्ञेयं दशमे षष्ठमेकादशे च ससमम् ॥ ४९ ॥ अष्टमं च पञ्चदशे, शेषाणि तु सदोडुभिः। सस चन्द्रमण्डलानि, रहितानि विनिर्दिशेत् ॥ ५० ॥ एषां चन्द्रमण्डलानां, परिक्षेपानुसारतः । पूर्वोक्तविधिना भानां, मुहूर्त्तग-तिराप्यते ॥ ५१ ॥ इति चन्द्रमण्डलावेशः ॥

अभिजिच्छ्रवणश्चैव, धनिष्ठा शततारिका । पूर्वोत्तराभद्रपदा, रेवती पुनरश्विनी ॥ ५२ ॥ भरणी फाल्गुनी

पूर्वा, फाल्गुन्येव तथोत्तरा । स्वातिश्च द्वादशैतानि, सर्वाभ्यन्तरमण्डले ॥ ५३ ॥ चरन्ति तन्मण्डलार्द्धं, यथोक्तकालमानतः । पूरयन्ति तदन्यार्द्धं, तथा तान्यपराण्यपि ॥ ५४ ॥ पुनर्वसू मघाश्चेति, द्वयं द्वितीयमण्डले । तृतीये कृत्तिकास्तुर्ये, चित्रा तथा च रोहिणी ॥ ५५ ॥ विशाखा पञ्चमे षष्ठेऽनुराधा सप्तमे पुनः । ज्येष्ठाऽष्टमे त्वष्ट भानि, सदा चरन्ति तद्यथा ॥५६॥ आर्द्रा मृगशिरः पुष्योऽश्लेषा मूलं करोऽपि च । पूर्वाषाढोत्तराषाढे, इत्यष्टान्तिममण्डले ॥५७॥ पूर्वोत्तराषाढयोस्तु, चतुस्तारकयोरिह । द्वे द्वे स्तस्तारके मध्ये, बहिश्चाष्टममण्डलात् ॥५८॥ अष्टानां द्वादशानां च, बाह्याभ्यन्तरचारिणाम् । सर्वेभ्योऽपि बहिर्मूलं, सर्वेभ्योऽप्यन्तरेऽभिजित् ॥ ५९ ॥ तथाहुः–"अह भरणि साइ उवरि बहि मूलोऽभिन्तरे अभिई" यानि द्वादश ऋक्षाणि, सर्वाभ्यन्तरमण्डले । तानि चन्द्रस्योत्तरस्यां, संयुज्यन्तेऽमुना समम् ॥ ६० ॥ एभिर्यदोडुभिः सार्द्धं, योगस्तदा स्वभावतः । शेषेष्वेव मण्डलेषु, भवेचारो हिमद्युतेः ॥ ६१ ॥ सर्वान्तर्मण्डलस्थानामेषामुत्तरवर्त्तिता । विधोर्दक्षिणवर्त्तिता ॥ ६२ ॥ मध्यमीयमण्डलेषु, यान्युक्तान्यष्ट तेषु च । चन्द्राद्युक्ता तदेभ्यश्च, शशिना समम् ॥ ६३ ॥ उत्तराहो दाक्षिणात्यो, योगः प्रमर्दनामकः । विना ज्येष्ठां त्रिधा योगः, सप्तानां स्वतः ॥ ६४ ॥ प्रमर्दो भविमानानि, भित्त्वेन्दोर्गच्छतो भवेत् । आद्यो बहिश्चरे चन्द्रे, द्वितीयोऽन्तश्चरे ॥ ६५ ॥ उडून्याद्यानि षड् भेषु, बाह्यमण्डलवर्त्तिषु । योगः प्रमर्द एव स्याज्ज्येष्ठायाः शशिना समम् पूर्वोत्तराषाढयोस्तु, बाह्यताराव्यपेक्षया । इन्दोर्दक्षिणदिक्स्थानि, संयुज्यन्तेऽमुना समम् ॥ ६६ ॥ याम्यायां शशिनो योगः, प्रज्ञप्तः परमर्षिभिः ॥ ६७ ॥ द्वयोर्द्वयो-



२०

२५



२८

स्तारयोस्तु, चन्द्रे मध्येन गच्छति । भवेत्प्रमर्दयोगोऽपि, ततो योगोऽनयोर्द्विधा ॥ ६८ ॥ उदीच्यां दिशि योगस्तु, संभवेन्नानयोर्भयोः । यदाभ्यां परतश्चारः, कदापीन्दोर्न वर्त्तते ॥ ६९ ॥ विभिन्नमण्डलस्थानां, पृथङ्मण्डलवर्त्तिनाम् । नक्षत्राणां चन्द्रमसा, यथा योगस्तथोच्यते ॥ ७० ॥ स्वस्वकालप्रमाणेनाष्टाविंशत्या किलोडुभिः । निजगत्या व्याप्यमानं, क्षेत्रं यावद्विभाव्यते ॥ ७१ ॥ तावन्मानमेकमर्द्धमण्डलं कल्प्यते धिया । द्वितीयोडुकदम्बेन, द्वितीयमर्द्धमण्डलम् ॥ ७२ ॥ अष्टानवतिशताढ्यं लक्षं संपूर्णमण्डलेषु स्युः । सर्वेष्वंशा एष च विज्ञेयो मण्डलच्छेदः ॥ ७३ ॥ ( आर्या ) ननुच–मण्डलेषु येषु यानि, चरन्त्युडूनि तेष्विदम् । चन्द्रादियोगयोग्यानां, भांशानां कल्पनोचिता ॥ ७४ ॥ सर्वेष्वपि मण्डलेषु, सर्वोडुभागकल्पना । इयर्त्ति कथमौचित्यमिति चेच्छ्रूयतामिह ॥ ७५ ॥ भानां चन्द्रादिभिर्योगो, नैवास्ति नियते दिने । न वा नियतवेलायां, दिनेऽपि नियते न सः ॥ ७६ ॥ तेन तत्तन्मण्डलेषु, यथोदितलवात्मसु । तत्तन्नक्षत्रसंबन्धी, सीमाविष्कम्भ आहितः ॥ ७७ ॥ प्राप्तौ सत्यां मृगाङ्कादेर्योगः स्यादुडुभिः सह । एवमर्कस्यापि योगो, भिन्नमण्डलवर्त्तिनः ॥ ७८ ॥ स्थापना ॥ एवं भसीमाविष्कम्भादिषु प्राप्तप्रयोजनः । प्रागुक्तो मण्डलच्छेद, इदानीमुपपाद्यते ॥ ७९ ॥ त्रिविधानीह ऋक्षाणि, समक्षेत्राणि कानिचित् । कियन्ति चार्द्धक्षेत्राणि, सार्द्धक्षेत्राणि कानिचित् ॥ ८० ॥ क्षेत्रमुष्णत्विषा यावदहोरात्रेण गम्यते । तावत्क्षेत्रं यानि भानि, चरन्ति शशिना समम् ॥ ८१ ॥ समक्षेत्राणि तानि स्युरर्द्धक्षेत्राणि तानि च । अर्द्धं यथोक्तक्षेत्रस्य, यान्ति यानीन्दुना सह ॥ ८२ ॥ यथोक्तं क्षेत्रमध्यर्द्धं, प्रयान्ति

यानि चेन्दुना । स्युस्तानि सार्द्धक्षेत्राणि, वक्ष्यन्तेऽग्रेऽभिधानतः ॥ ८३ ॥ तत्र पञ्चदशाद्यानि, षट्कं षट्कं परद्वयम् । अहोरात्रः सप्तषष्टिभागीकृतोऽत्र कल्प्यते ॥ ८४ ॥ ततः समक्षेत्रभानि, प्रत्येकं सप्तषष्टिधा । कल्प्यानीति पञ्चदश, सप्तषष्टिगुणीकृताः ॥ ८५ ॥ जातं सहस्रं पञ्चाढ्यमर्द्धक्षेत्रेषु भेषु च । सार्द्धास्त्रयस्त्रिंशदंशाः प्रत्येकं कल्पनोचिताः ॥ ८६ ॥ ततश्च-षड्घ्नाः सार्द्धास्त्रयस्त्रिंशज्जातं सैकं शतद्वयम् । सार्द्धक्षेत्रेषु प्रत्येकं, भागाश्चार्द्धांशयुक् शतम् ॥ ८७ ॥ सार्द्धक्षेत्राणि षडिति, त एते षड्गुणीकृताः । सत्रीणि षट् शतान्येकविंशतिश्चाभिजिल्लवाः ॥ ८८ ॥ अष्टादश शतान्येवं, त्रिंशानि सर्वसंख्यया । एतावदंशप्रमितं, स्यादेकमर्द्धमण्डलम् ॥ ८९ ॥ तावदेवापरमिति, द्वाभ्यामिदं निहन्यते । षष्ट्याधिकानि षट्त्रिंशच्छतानीत्यभवन्निह ॥ ९० ॥ त्रिंशान्मुहूर्त्ता एकस्मिन्नहोरात्र इति स्फुटम् । सषष्टिषट्त्रिंशदंशशतेषु कल्पनोचिता ॥ ९१ ॥ त्रिंशद्विभागाः प्रत्येकं, गुण्यन्ते त्रिंशतेति ते । जातं लक्षमेकमष्टानवत्या सहितं शतैः ॥ ९२ ॥ एतस्मान्मण्डलच्छेदमानादेव प्रतीयते । शशाङ्कभास्करोडूनां, गत्याधिक्यं यथोत्तरम् ॥ ९३ ॥ तथाहि-एकैकेन मुहूर्त्तेन, शशी गच्छति लीलया । प्रक्रान्तमण्डलपरिक्षेपांशानां यदा तदा ॥ ९४ ॥ अष्टषष्ठ्या समधिकैरधिकं सप्तभिः शतैः । सहस्रमेकमर्कस्तु, मुहूर्त्तेनोपसर्पति ॥ ९५ ॥ त्रिंशान्यष्टादश शतान्युडूनि संचरन्ति च । पञ्चत्रिंशत्समधिकान्यष्टादश शतानि वै ॥ ९६ ॥ उक्तेन्दुभास्करोडूनां, गतिः प्राग् योजनात्मिका । इयं त्वंशात्मिका चिन्त्यं, पौनरुक्त्यं ततोऽत्र न ॥ ९७ ॥ विशेषस्त्वनयोर्गत्योः, कश्चिन्नास्ति स्वरूपतः । प्रत्ययः

समक्षेत्रत्वादि

२०

२५

॥ २४८ ॥

२८

कोऽत्र यद्येवं, तत्रोपायो निशम्यताम् ॥ ९८ ॥ खखमण्डलपरिधिर्मण्डलच्छेदराशिना । विभज्यते यल्लब्धं
तत्, सुधिया ताड्यते किल ॥९९॥ उक्तेन्दुकोंऽङ्कभागात्ममुहूर्त्तगतिराशिभिः । मुहूर्त्तगतिरेषां स्यात्पूर्वोक्ता योज-
नात्मिका ॥ ६०० ॥ त्रैराशिकेन यद्विवा, प्रत्ययोऽस्या विधीयताम् । किं तत्त्रैराशिकमिति, यदीच्छा तन्निश-
म्यताम् ॥ १ ॥ स्यान्मण्डलापूर्त्तिकालो, विधोः प्राग्वत्सवर्णितः । पंचविंशाः शताः सप्त, सहस्राश्च त्र-
योदश ॥ २ ॥ अस्योपपत्तिर्योजनात्मकमुहूर्त्तगत्यवसरे दर्शिताऽस्ति, ततश्च—पञ्चविंशसप्तशतत्रयोदशसह-
स्रकैः । मुहूर्त्तांशैर्लक्षमष्टानवतिश्च शता यदि ॥ ३ ॥ मण्डलांशा अवाप्यन्ते, ब्रूताऽऽप्यन्ते तदा कति । एकेना-
न्तर्मुहूर्त्तेन, राशित्रयमिदं लिखेत् ( १३७२५।१०९८००।१ ) ॥ ४ ॥ आद्यो राशिर्मुहूर्तांशरूपोऽन्त्यस्तु मुहूर्त्तकः ।
सावर्ण्यार्थमेकविंशद्विशत्याऽन्त्यो निहन्यते ॥५॥ एकविंशा द्विशती स्यान्मध्यराशिरथैतया । हतः कोटिद्वयं लक्षा-
द्विचत्वारिंशदेव च ॥६॥ पञ्चषष्टिः सहस्राणि, शतान्यष्ट भवन्त्यथ । पञ्चविंशसप्तशतत्रयोदशसहस्रकैः ॥७॥
एषां भागे हृते लब्धा, मुहूर्त्तगतिरैन्दवी । भागात्मिका यथोक्ता च, सा रवेरपि भाव्यते ॥ ८ ॥ पूर्वोक्तो
मण्डलच्छेदराशिः षष्ट्या मुहूर्त्तकैः । यद्याप्यते मुहूर्त्तेन, तदेकेन किमाप्यते ॥ ९ ॥ ( १०९८००।६०।१ )
गुणितोऽन्त्येनैककेन, मध्यराशिस्तथा स्थितः । अष्टादशशतीं त्रिंशां, यच्छत्याद्येन भाजितः ॥ १० ॥ भम-
ण्डलपूर्त्तिकालमानं भवेत् सवर्णितम् । षष्टियुक्ता नवशती, सहस्राश्चैकविंशतिः ॥ ११ ॥ उपपत्तिरस्य योज-
नात्मकगत्यवसरे दर्शिताऽस्ति ॥ ततश्च—एतावद्भिर्मुहूर्त्तांशैर्मण्डलच्छेदसंचयः । प्रागुक्तश्चेल्लभ्यते तन्मुहूर्त्तेन

किमाप्यते ॥ ( २११।६०।१०९८००।१ ) ॥ १२ ॥ सावर्ण्यायाद्यान्तिमयोर्गुण्यतेऽन्तिम एककः । ससप्तषष्ट्या त्रिशत्या, तादृग्रूपः स जायते ॥ १३ ॥ हतोऽनेन मध्यराशिश्चतस्रः कोट्यो भवेत् । द्वे लक्षे षण्णवतिश्च, सहस्राः षट् शतानि च ॥ १४ ॥ तस्याद्यराशिना भागे, लब्धा भानां लवात्मिका । अष्टादशशती पञ्चत्रिंशा मुहूर्त्तजा गतिः ॥ १५ ॥ इति दिग्योगस्तत्प्रसङ्गात्सीमाविष्कम्भादिनिरूपणं च ॥

नक्षत्राणां देवता

ब्रह्मा १ विष्णु २ र्वसु ३ श्चैव, वरुणा ४ जा ५ भिवृद्धयः । ६ पूषा ७ ऽश्वश्च ८ यमो ९ ऽग्निश्च १०, प्रजापति ११ स्ततः परम् ॥ १६ ॥ सोमो १२ रुद्रो १३ ऽदितिश्चैव, १४ बृहस्पति १५ स्तथापरः । सर्प्पो १६ ऽपरः पितृनामा १७, भगोऽ १८ र्यमाभिधोऽपि च १९ ॥ १७ ॥ सूर २० स्त्वष्टा २१ तथा वायु २२ रिन्द्राग्नी एकनायकौ २३ । मित्रे २४ न्द्र २५ नैर्ऋता २६ आपो २७, विश्वे देवास्त्रयोदश २८ ॥१८॥ अभिवृद्धेरहिर्बुध्न्यः, इत्याख्याऽन्यत्र गीयते । सोमश्चन्द्रो रविः सूर, ईदृशाख्याः परे सुराः ॥ १९ ॥ बृहस्पतिरपि प्रसिद्धो ग्रह एव । अमी अभिजिदादीनामुडूनामधिपाः स्मृताः । येषु तुष्टेषु नक्षत्रतुष्टी रुष्टेषु तद्रुषः ॥ २० ॥ देवानामप्युडूनां स्युर्यदधीशाः सुराः परे । तत्पूर्वोपार्जिततपस्तारतम्यानुभावतः ॥ २१ ॥ स्वामिसेवकभावः स्याद्यत्सुरेष्वपि नृष्विव । यथासुकृतमैश्वर्यतेजःशक्तिसुखादि च ॥ २२ ॥ विख्यातौ चन्द्रसूर्यौ यौ, सर्वज्योतिष्कनायकौ । तयोरप्यपरः स्वामी, परेषां तर्हि का कथा ? ॥ २३ ॥ तथा च पञ्चमाङ्गे—"सक्कस्स देविंदस्स देवरण्णो सोमस्स महारण्णो इमे देवा आणाउववायवयणनिद्देसे चिट्ठंति, तंजहा—सोमकाइयाति वा सोमदेवकाइया वा विज्जु-

२०
२५
॥२४९॥
२८

कुमारा विज्जुकुमारीओ अग्गिकुमारा अग्गिकुमारीओ वाउकुमारा वाउकुमारीओ चंदा सूरा गहा णक्खत्ता तारारूवा"इत्यादि ॥ इति देवता ॥

तिस्रस्तिस्रः पञ्च शतं, द्वे द्वे द्वात्रिंशदेव च । तिस्रस्तिस्रः षट् च पञ्च, तिस्र एका च पञ्च च ॥ २४ ॥ तिस्रः पञ्च सप्त च द्वे, द्वे पञ्चैकैकिका द्वयोः । पञ्च चतस्रस्तिस्रश्च, तत एकादश स्मृताः ॥ २५ ॥ चतस्रश्च चतस्रश्च, तारासंख्याऽभिजित्क्रमात् । ज्ञेयान्युडुविमानानि, ताराशब्दादुधैरिह ॥ २६ ॥ न पुनः पञ्चमज्योतिर्भेदगाः किल तारकाः । विजातीयः समुदायी, विजातीयोच्चयान्न हि ॥ २७ ॥ प्रथीयांसि विमानानि, नक्षत्राणां लघूनि च । तारकाणां ततोऽप्यैक्यं, युक्तिं सासहि नानयोः ॥ २८ ॥ किंच कोटाकोटिरूपा, तारासंख्याऽतिरिच्यते ॥ अष्टाविंशतिरूपा च, ऋक्षसंख्या विलीयते ॥ २९ ॥ तद्वित्र्यादिविमानेशः, स्याद्देवोऽभिजिदादिकः । गृहद्वया-द्यधिपतिर्यथा कश्चिन्महर्द्धिकः ॥ ३० ॥ एवं च न काप्यनुपपत्तिः । तारासंख्याप्रयोजनं च—वारुण्यां दशमी त्याज्या, द्वितीया पौष्णभे तथा । शेषोडुष्वशुभा स्वस्वतारासंख्यासमा तिथिः ॥ ३१ ॥ इति तारासंख्या ॥ गोशीर्षपुद्गलानां या, दीर्घा श्रेणिस्तदाकृति । गोशीर्षावलिसंस्थानमभिजित् कथितं ततः ॥ ३२ ॥ कासाराभं श्रवणभं, पक्षिपंजरसंस्थिता । धनिष्ठा शततारा च, पुष्पोपचारसंस्थिता ॥ ३३ ॥ पूर्वोत्तराभद्रपदे, अर्द्धार्द्ध-वापिकोपमे । एतदर्द्धद्वययोगे, पूर्णा वाप्याकृतिर्भवेत् ॥ ३४ ॥ पौष्णं च नौसमाकारमश्वस्कन्धाभमश्विनम् । भरणी भगसंस्थाना, क्षुरधारेव कृत्तिकाः ॥३५॥ शकटोद्धिसमा ब्राह्मी, मार्गं मृगशिरःसमम् । आर्द्रा रुधिरबि-

५ १० १४

न्द्राभा, पुनर्वसू तुलोपमौ ॥ ३६ ॥ वर्द्धमानकसंस्थानः, पुष्योऽश्लेषाकृतिः पुनः । पताकाया इव मघाः, प्राकाराकारचारवः ॥३७॥ पूर्वोत्तरे च फाल्गुन्यावर्द्धपल्यङ्कसंस्थिते । अत्राप्येतद्वययोगे, पूर्णा पल्यङ्कसंस्थितिः ॥ ३८ ॥ हस्तो हस्ताकृतिश्चित्रा, संस्थानतो भवेद्यथा । मुखमण्डनरैपुष्पं, स्वातिः कीलकसंस्थिता ॥ ३९ ॥ विशाखा पशुदामाभा, राधैकावलिसंस्थिता । गजदन्ताकृतिर्ज्येष्ठा, मूलं वृश्चिकपुच्छवत् ॥ ४० ॥ गजविक्रमसंस्थानाः, पूर्वाषाढाः प्रकीर्त्तिताः । आषाढाश्चोत्तराः सिंहोपवेशनसमा मताः ॥ ४१ ॥ लोके तु रत्नमालायां— तुरगमुखसदृक्षं योनिरूपं क्षुराभं, शकटसममथैणस्योत्तमाङ्गेन तुल्यम् । मणिगृहशरचक्रं नाभिशालोपमं भं, शयनसदृशमन्यचात्र पर्यङ्करूपम् ॥ ४२ ॥ ( मालिनी ) हस्ताकारनिभं च मौक्तिकनिभं चान्यत्प्रवालोपमं, धिष्ण्यं तोरणवत् स्थितं मणिनिभं सत्कुण्डलाभं परम् । कुद्ध्यत्केसरिविक्रमेण सदृशं शय्यासमानं परं, चान्यद्दन्तिविलासवत् स्थितमतः शृङ्गाटकव्यक्ति च ॥ ४३ ॥ ( शार्दूल० ) त्रिविक्रमाभं च मृदङ्गरूपं, वृत्तं ततोऽन्यद्यमलद्वयाभम् । पर्यङ्करूपं मुरजानुकारमित्येवमश्वादिभचक्ररूपम् ॥ ४४ ॥ ( उपजातिः ) इत्याकृतिः ॥ ससषष्टिलवैः सप्तविंशत्याभ्यधिकान्यथ । योगो नव मुहूर्त्तानि, शशिनाऽभिजितो मतः ॥ ४५ ॥ ज्येष्ठाश्लेषाभरण्यार्द्रा, स्वातिश्च शततारिका । मुहूर्त्तानि पञ्चदश, योग एषां सुधांशुना ॥ ४६ ॥ उत्तरात्रितयं ब्राह्मी, विशाखा च पुनर्वसू । पञ्चचत्वारिंशदेषां, मुहूर्त्तान् योग इन्दुना ॥ ४७ ॥ पञ्चदशानां शेषाणामुडूनां शशिना सह । योगस्त्रिंशन्मुहूर्त्तानीत्येवमाहुर्जिनेश्वराः ॥ ४८ ॥ प्रयोजनं त्वेषां—मृते साधौ पञ्चदशमुहूर्त्ते नैव पुत्रकः ।

२०

२५
॥२५०॥

२८.

एकत्रिंशन्मुहूर्तैस्तु, क्षेप्यः शेषैस्तु भैरुभौ ॥ ४९ ॥ एतान्यर्द्धसार्द्धसमक्षेत्राण्याहुर्यथाक्रमम् । अथैषां रविणा योगो, यावत्कालं तदुच्यते ॥ ५० ॥ मुहूर्त्तैरेकविंशत्याढ्यानि रात्रिन्दिवानि षट् । अर्द्धक्षेत्राणामुडूनां, योगो विवस्वता सह ॥ ५१ ॥ सार्द्धक्षेत्राणां तु भानां, योगो विवस्वता सह । त्रिभिर्मुहूर्त्तैर्युक्तानि, रात्रिन्दिवानि विंशतिः ॥ ५२ ॥ समक्षेत्राणामुडूनामहोरात्रांस्त्रयोदश । मुहूर्त्तैश्च द्वादशभिरधिकान् रविसंगतिः ॥ ५३ ॥ रात्रिन्दिवानि चत्वारि, षण्मुहूर्त्ताधिकानि च । नक्षत्रमभिजिच्चारं, चरत्युष्णरुचा सह ॥ ५४ ॥ अत्रायमाम्नायः—सप्तषष्ट्युद्भवानंशानहोरात्रस्य यावतः । यन्नक्षत्रं चरत्यत्र, रजनीपतिना सह ॥ ५५ ॥ तन्नक्षत्रं तावतोऽहोरात्रस्य पञ्चमान् लवान् । भानुना चरतीत्यत्र, दृष्टांतोऽप्युच्यते यथा ॥ ५६ ॥ सप्तषष्टिलवानेकविंशतिं शशिना सह । चरत्यभिजिदर्केण, तावतः पञ्चमान् लवान् ॥५७॥ अहोरात्रस्येति शेषः । अथैकविंशतिः पञ्चभक्ता दिनचतुष्टयीम् । दद्यादेकोंऽशकः शेषस्त्रिंशता स निहन्यते ॥ ५८ ॥ जाता त्रिंशदथैतस्याः, पञ्चभिर्भजने सति । षण्मुहूर्त्ताः करं प्राप्ता, एवं सर्वत्र भावना ॥५९॥ तथाहुः—"जं रिक्खं जावइए वच्चइ चंदेण भाग सत्तट्ठी । तं पणभागे राइंदियस्स सूरेण तावइए ॥ ६० ॥" सप्तषष्टिस्तदर्द्धं च, ( ३३ ॥ ) चतुस्त्रिंशं तथा शतम् ( १३४ ) । समा १ र्द्ध २ सार्द्ध ३ क्षेत्रेषु, सप्तषष्टिलवाः क्रमात् ॥ ६१ ॥ इति सूर्येन्दुयोगाद्धामानं । ऋक्षेषु येषु मासानां, प्रायः परिसमाप्तयः । तानि माससमाख्यानि, स्युर्ऋक्षाणि कुलाख्यया ॥ ६२ ॥ प्रायोग्रहणतश्चात्र, कदाप्युपकुलोडुभिः । समाप्तिर्जायते मासां, भैः कुलोपकुलैरपि ॥ ६३ ॥ कुलोडुभ्योऽधस्तनानि, भव-

५ १० १५

न्त्युपकुलान्यथ । स्युः कुलोपकुलाख्यानि, तेभ्योऽप्यधस्तनानि च ॥ ६४ ॥ तानि चैवमाहुः—कुलभान्यश्विनी पुष्यो, मघा मूलोत्तरात्रयम् । द्विदैवतं मृगश्चित्रा, कृत्तिका वासवानि च ॥ ६५ ॥ उपकुल्यानि भरणी, ब्राह्मं पूर्वात्रयं करः । ऐन्द्रमादित्यमश्लेषा, वायव्यं पौष्णवैष्णवे ॥ ६६ ॥ कुलोपकुलभान्यार्द्राऽभिजिन्मैत्राणि वारुणमिति ॥ कुलादिप्रयोजनं त्विदं—पूर्वेषु जाता दातारः, संग्रामे स्थायिनां जयः । अन्येषु त्वन्यसेवार्त्ता, यायिनां च सदा जयः ॥ ६७ ॥ इति कुलाद्याख्यानिरूपणं ॥ धनिष्ठाऽथोत्तराभद्रपदाश्विनी च कृत्तिकाः । मार्गः पुष्यश्चैव मघा, उत्तराफाल्गुनीति च ॥ ६८ ॥ चित्रा विशाखा मूलं चोत्तराषाढा यथाक्रमम् । श्रावणादिमासराकाः, प्रायः समापयन्ति यत् ॥ ६९ ॥ तत एव पूर्णिमानां, द्वादशानामपि क्रमात् । एषामुडूनां नाम्ना स्युर्नामधेयानि तद्यथा ॥ ७० ॥ श्राविष्ठी च प्रौष्ठपदी, तथैवाश्वयुजीत्यपि । कार्त्तिकी मार्गशीर्षी च, पौषी माघी च फाल्गुनी ॥७१॥ चैत्री च वैशाखी ज्यैष्ठी, मौलीत्याख्या तथापरा । आषाढीत्यन्विता एताः, सदा रूढाश्च कर्हिचित् ॥७२॥ श्रविष्ठा स्याद्धनिष्ठेति, तयेन्दुयुक्तयान्विता । श्राविष्ठी पौर्णमासी स्यादेवमन्या अपि स्फुटम् ॥ ७३ ॥ यदा चोपकुलाख्यानि, समापयन्ति पूर्णिमाः । पाश्चात्यानि तदैतेभ्यः, श्रवणादीन्यनुक्रमात् ॥ ७४ ॥ राकास्त्विमाः समाप्यन्ते, कुलोपकुलभैर्यदा । तदोपकुलपाश्चात्यैरभिजित्प्रमुखैरिह ॥ ७५ ॥ यद्यप्यभिजिता क्वापि, राकापूर्त्तिर्न दृश्यते । श्रुतियोगात्तथाप्येतद्राकापूरकमुच्यते ॥ ७६ ॥ यस्मिन् ऋक्षे पूर्णिमा स्यात्ततः पञ्चदशेऽथवा । चतुर्दशेऽमावास्या स्याद्, गणने प्रातिलोम्यतः ॥ ७७ ॥ तद्यथा—माघे राका मघो-

२०

२५
॥ २५१ ॥

२८

पेताऽमावस्या च सवासवा । सवासवायां राकायां, श्रावणेऽमा मघान्विता ॥ ७८ ॥ एवमन्यत्रापि भाव्यं,
इत्यमावास्यापूर्णिमायोगकीर्त्तनं ॥ यदा यदा यैर्नक्षत्रैरस्तं यातैः समाप्यते । अहोरात्रस्तानि वक्ष्ये, नामग्राहं
यथाक्रमम् ॥ ७९ ॥ तदा समाप्यते ऋक्षै, रात्रिरप्येभिरेव यत् । उच्यते रात्रिनक्षत्राण्यप्यमून्येव तद्बुधैः
॥ ८० ॥ समापयति तत्राद्यानहोरात्रांश्चतुर्दश । नभोमास्युत्तराषाढा, ससैतान्यभिजित्तदा ॥ ८१ ॥ ततः
श्रवणमप्यष्टावेकोना त्रिंशदित्यमूः । धनिष्ठा श्रावणस्यान्त्यमहोरात्रं ततो नयेत् ॥ ८२ ॥ नयेद्धनिष्ठाऽहोरा-
त्रान्, भाद्रस्याद्यांश्चतुर्दश । ततः शतभिषक् सप्त, पूर्वाभद्रपदाष्ट च ॥ ८३ ॥ सौत्तरान्त्यमहोरात्रं, सैवेषस्य
चतुर्दश । ततः पौष्णं पञ्चदश, चरममेकमश्विनी ॥ ८४ ॥ अश्विन्येव कार्त्तिकस्य, नयत्याद्यांश्चतुर्दश । अहो-
रात्रान् पञ्चदश, भरण्येकं च कृत्तिकाः ॥ ८५ ॥ समापयन्ति ता एव, सहस्याद्यांश्चतुर्दश । ब्राह्मी पञ्चदशा-
न्त्यं च, मृगशीर्षं समापयेत् ॥ ८६ ॥ पौषस्यापि तदेवाद्यानहोरात्रान् समापयेत् । चतुर्दश तथाऽऽर्द्राऽष्टौ,
ततः सप्त पुनर्वसू ॥ ८७ ॥ पुष्योऽस्यान्त्यमहोरात्रं, माघेऽप्याद्यांश्चतुर्दश । समापयेत् पञ्चदशाश्लेषा तथा-
न्तिमं मघाः ॥ ८८ ॥ पूरयन्ति फाल्गुनस्य, मघा आद्यांश्चतुर्दश । ततः पञ्चदश पूर्वाफाल्गुनी सोत्तराऽन्तिमम्
॥ ८९ ॥ उत्तराफाल्गुनी चैत्रे, नयत्याद्यांश्चतुर्दश । ततो हस्तः पञ्चदश, चित्राहोरात्रमन्तिमम् ॥ ९० ॥ अहो-
रात्रांस्ततश्चित्रा, नयेच्चतुर्दशादिमान् । वैशाखस्य पञ्चदश, स्वातिरन्त्यं विशाखिका ॥ ९१ ॥ समापयत्यथ
ज्येष्ठे, विशाखाद्यांश्चतुर्दश । सप्तानुराधा ज्येष्ठाष्टौ, मूलः पर्यन्तवर्त्तिनम् ॥ ९२ ॥ मूलः समापयत्याद्यानाषा-

५

१०

१४

ढस्य चतुर्दश । पूर्वाषाढा पञ्चदशोत्तराषाढान्त्यवर्त्तिनम् ॥ ९३ ॥ संग्रहश्चात्र—"सत्तट्ठ अभिइसवणे तह सयभिसए य पुव्वभद्दवए । अद्दा पुणवसूए राहा जेट्ठा य अणुक्कमसो ॥९४॥ पन्नरस दिणे सेसा रत्तिविरामं कुणंति णक्खत्ता । उत्तरसाढा आसाढ चरिमदिवसा गणिज्जंति ॥९५॥" प्रयोजनं त्वेषां—यथा नभश्चतुर्भागमारूढेऽर्के प्रतीयते । प्रथमा पौरुषी मध्यमह्नश्च व्योममध्यगे ॥ ९६ ॥ चतुर्भागावशेषं च, नभःप्राप्तेऽन्त्यपौरुषी । ज्ञायन्ते रजनीयामा, अप्येभिरुडुभिस्तथा ॥ ९७ ॥ तथाहुरुत्तराध्ययने—"जं णेइ जया रत्तिं णक्खत्तं तंमि णहचउब्भागे । संपत्ते विरमेज्जा सज्झाय पओसकालंमि ॥ ९८ ॥ तम्मेव य नक्खत्ते गयणचउब्भागसावसेसंमि । वेरत्तियंपि कालं पडिलेहित्ता मुणी कुणइ ॥ ९९ ॥ ग्रन्थान्तरे च—दहतेरहसोलहमे वीसइमे सूरियाओ नक्खत्ता । मत्थयगयंमि णेयं रयणीजामाण परिमाणं ॥७००॥" शीतकाले च दिनाधिकमानायां रात्रौ सूर्यभात् एकादशचतुर्दशसप्तदशैकाविंशतितमैर्नक्षत्रैर्नभोमध्यंप्राप्तैर्यथाक्रमं प्रथमादिप्रहरान्तः स्यादिति संप्रदायः । लोके च—"रविरिक्खाओ गणियं सिररिक्खं जाव सत्तपरिहीणं । सेसं दुगुणं किचातीया राई फुडा हवई ॥ १ ॥" इत्यादि बहुधा ॥ इत्यहोरात्रसमापकनक्षत्रकीर्त्तनं । समाप्तं चेदं नक्षत्रप्रकरणं ॥

२०

विकालकोऽङ्गारकश्च, लोहिताङ्कः शनैश्चरः । आधुनिकः प्राधुनिकः, कणः कणक एव च ॥ २ ॥ नवमः कणकणकस्तथा कणवितानकः । कणसंतानकश्चैव, सोमः सहित एव च ॥ ३ ॥ अश्वसेनस्तथा कार्योपगः कर्बुरकोऽपि च । तथाऽजकरको दुन्दुभकः शङ्खाभिधः परः ॥४॥ शङ्खनाभस्तथा शङ्खवर्णाभः कंस एव च । कंसना-

२५

॥ २५२ ॥

२८

भस्तथा कंसवर्णाभो नील एव च ॥ ५ ॥ नीलावभासो रूपी च, रूपावभासभस्मकौ । भस्मराशि–तिल-
तिलपुष्पवर्णदकाभिधाः ॥ ६ ॥ दकवर्णस्तथा कायोऽवन्ध्य इन्द्राग्निरेव च । धूमकेतुर्हरिः पिङ्गलको बुधस्त-
थैव च ॥ ७ ॥ शुक्रो बृहस्पती राहुगस्तिर्माणवकाभिधः । कामस्पर्शश्च धुरकः, प्रमुखो विकटोऽपि च ॥ ८ ॥
विसन्धिकल्पः प्रकल्पः, स्युर्जटालारुणाग्नयः । षट्पञ्चाशत्तमः कालो, महाकालस्ततः परः ॥ ९ ॥ स्वस्तिकः
सौवस्तिकश्च, वर्द्धमानः प्रलम्बकः । नित्यालोको नित्योद्योतः, स्वयंप्रभावभासकौ ॥ १० ॥ श्रेयस्करस्तथा
क्षेमङ्कर आभङ्करोऽपि च । प्रभङ्करोऽरजाश्चैव, विरजा नाम कीर्त्तितः ॥ ११ ॥ अशोको वीतशोकश्च, विम-
लाख्यो वितसकः । विवस्त्रश्च विशालश्च, शालः सुव्रत एव च ॥ १२ ॥ अनिवृत्तिश्चैकजटी, द्विजटी करिकः
करः । राजाऽर्गलः पुष्पकेतुर्भावकेतुरिति ग्रहाः ॥ १३ ॥ ग्रहास्तु सर्वे वक्रातिचारादिगतिभावतः । गता-
वनियतास्तेन, नैतेषां प्राक्तनैः कृता ॥ १४ ॥ गतिप्ररूपणा नापि, मण्डलानां प्ररूपणा । लोकात्तु केषां-
चित्किञ्चिद्गत्यादि श्रूयतेऽपि हि ॥ १५ ॥ मेरोः प्रदक्षिणावर्त्तं, भ्रमन्त्येतेऽपि मण्डलैः । सदाऽनवस्थितैरेव,
दिवाकरशशाङ्कवत् ॥१६॥ अवस्थायिमण्डलत्वाचन्द्राद्ययोगचिन्तनात् । नापि चक्रे तारकाणां, मण्डलादिनि-
रूपणं ॥ १७ ॥ तथोक्तं जीवाभिगमसूत्रे "णक्खत्ततारगाणं, अवट्ठिया मण्डला मुणेयव्वा । तेऽविय पयाहि-
णावत्तमेव मेरुं अणुपरिंति" ॥१८॥ एवं रवीन्दुग्रहऋक्षताराचारस्वरूपं किमपि न्यगादि । शेषं विशेषं तु यथो-
पयोगं, ज्योतिष्कचक्रावसरेऽभिधास्ये ॥१९॥ (इन्द्रवज्रा) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राज-

श्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः। काव्यं यत् किलतत्र निश्चितजगत्तत्त्वप्रदीपोपमे सर्गो निर्गलितार्थसार्थसुभगो विंशः समासः सुखम् ॥ २० ॥ इति विंशतितमः सर्गः ॥

॥ अभिजिदादीनां तारासंख्या आकारः रात्रिसंख्या मासक्रमश्च ॥

| | | संख्या | | | | |
|---|---|---|---|---|---|---|
| १ | अभिजित् | ३ | गोशीर्षावली | ७ | श्रावण | १४ ७ |
| २ | श्रवण | ३ | कासार | ८ | | ८ |
| ३ | धनिष्ठा | ५ | पक्षिपंजर | १५ | भाद्रवा | १४$^{१}$ |
| ४ | शतभिषक् | १०० | पुष्पोपचार | ७ | | ७ |
| ५ | पूर्वाभाद्रपदा | २ | अर्द्धवापी | ८ | २ | ८ |
| ६ | उत्तराभाद्रपदा | २ | अर्द्धवापी | १५ | आसो | १४$^{१}$ |
| ७ | रेवती | ३२ | नौकासंस्थान | १५ | | १५ |
| ८ | अश्विनी | ३ | अश्वस्कंध | १५ | कार्त्तिक | १४$^{१}$ |
| ९ | भरणी | ३ | भगसंस्थान | १५ | | १५ |
| १० | कृत्तिका | ६ | क्षुरधारा | १५ | मागसीर | १४$^{१}$ |
| ११ | रोहिणी | ५ | शकटोद्धी | १५ | | १५ |
| १२ | मृगशीर्ष | ३ | मृगशीर | १५ | पोसी | १४$^{१}$ |
| १३ | आर्द्रा | १ | रुधिरविन्दु | ८ | | ८ |
| १४ | पुनर्वसु | ५ | तुला | ७ | | ७ |
| १५ | पुष्य | ३ | वर्द्धमानक | १५ | माहा | १४$^{१}$ |
| १६ | अश्लेषा | ५ | पताका | १५ | | १५ |
| १७ | मघा | ७ | प्राकार | १५ | फागुण. | १४$^{१}$ |
| १८ | पूर्वाफा० | २ | अर्द्धपल्यंक | १५ | | १५ |
| १९ | उ० फा० | २ | अर्द्धपल्यक | १५ | चैत्र | १४$^{१}$ |
| २० | हस्त | ५ | हस्ततल | १५ | | १५ |
| २१ | चित्रा | १ | मुखमंडन० स्वर्ण. | १५ | वै० | १४$^{१}$ |
| २२ | स्वाति | १ | कीलक | १५ | | १५ |
| २३ | विशाखा | ५ | पशुदाम | १५ | ज्येष्ठ | १४$^{१}$ |
| २४ | अनुराधा | ४ | एकावली | ८ | | ८ |
| २५ | ज्येष्ठा | ३ | गजदंत | ७ | | ७ |
| २६ | मूल० | ११ | वृश्चिकपुच्छ | १५ | आषाढ | १४$^{१}$ |
| २७ | पूर्वाषाढा | ४ | गजविक्रम | १५ | | १५ |
| २८ | उत्तराषाढा | ४ | सिंहनीषदिन | १५ | | १ |

## ॥ अथैकविंशतितमः सर्गः प्रारभ्यते ॥

अथास्य जम्बूद्वीपस्य, परिक्षेपकमम्बुधिम् । कीर्त्तयामि कीर्त्तिगुरुप्रसादप्रथितोद्यमः ॥ १ ॥ तस्थुषो भोगि-
न इवावेष्ट्यैनं द्वीपशेवधिम् । क्षारोदकत्वादस्याब्धेर्लवणोद इति प्रथा ॥ २ ॥ चक्रवालतया चैष, विस्तीर्णो
लक्षयोर्द्वयम् । योजनानां परिक्षेपपरिमाणमथोच्यते ॥ ३ ॥ एकाशीतिसहस्राढ्या, लक्षाः पञ्चदशाथ च ।
शतमेकोनचत्वारिंशताऽऽढ्यं किञ्चिदूनया ॥४॥ एषोऽस्य बाह्यपरिधिर्धातकीखण्डसन्निधौ । जम्बूद्वीपस्य परि- ५
धिर्यः स एवान्तरः पुनः ॥ ५ ॥ पूर्वपूर्वद्वीपवार्द्धिपरिक्षेपा हि येऽन्तिमाः । त एवाग्र्याग्र्यपाथोधिद्वीपेष्व-
भ्यन्तरा मताः ॥ ६ ॥ अभ्यन्तरबाह्यपरिक्षेपयोगेऽर्द्धिते सति । परिक्षेपा मध्यमाः स्युर्विनाऽऽद्यं द्वीपवा-
र्द्धिषु ॥ ७ ॥ लक्षा नवाष्टचत्वारिंशत्सहस्राणि षट्शती । त्र्यशीतिश्च मध्यमोऽयं, परिधिर्लवणोदधौ ॥ ८ ॥
प्रवेशमार्गरूपो यस्तटाकादिजलाश्रये । भूप्रदेशः क्रमान्नीचः,सोऽत्र गोतीर्थमुच्यते ॥ ९ ॥ गोतीर्थं तच्च लव-
णाम्बुधावुभयतोऽपि हि । प्रत्येकं पञ्चनवतिं, सहस्रान् यावदाहितम् ॥ १० ॥ जम्बूद्वीपवेदिकान्तेऽङ्गुलासंख्यां- १०
शसंमितम् । गोतीर्थं धातकीखण्डवेदिकान्तेऽपि तादृशम् ॥ ११ ॥ ततश्च—अब्धावुभयतो यावद्गम्यतेंऽशा-
ङ्गुलादिकम् । भक्ते तस्मिन् पञ्चनवत्याऽऽप्तं यत्तन्मितोण्डता ॥१२॥ यथा पञ्चनवत्यांऽशैरतिक्रान्तैः पयोनिधौ ।
भुवोऽंशो हीयते पञ्चनवत्याऽङ्गुलमङ्गुलैः ॥ १३ ॥ योजनैश्च पञ्चनवत्यैकं योजनमप्यथ । शतैः पञ्चनवत्या च, १३

योजनानां शतं ह्रसेत् ॥ १४ ॥ एवं च पञ्चनवतिसहस्रान्ते समक्षितेः । निम्नतोभयतोऽप्यत्र, जाता सहस्रयोजना ॥ १५ ॥ तथाहुः—"जत्थिच्छसि उव्वेहं ओगाहित्ताण लवणसलिलस्स । पंचाणउइविभत्ते जं लद्धं सो उ उव्वेहो ॥ १६ ॥" ततश्च—द्वयोर्गोतीर्थयोर्मध्ये, सहस्रयोजनोन्मितः । स्यादुद्वेधः सहस्राणि, दश यावत्समोऽभितः ॥ १७ ॥ जम्बूद्वीपवेदिकान्तेऽङ्गुलासङ्ख्यांशसंमितम् । सलिलं धातकीखण्डवेदिकान्तेऽपि तादृशम् ॥१८॥ ततः पञ्चनवत्यांशैर्वर्द्धन्ते षोडशांशकाः । अङ्गुलैः पञ्चनवत्या, वर्द्धते षोडशाङ्गुली ॥ १९ ॥ अत्रायमाम्नायः—धातकीखण्डतो जम्बूद्वीपतो वा पयोनिधौ । जिज्ञास्यते जलोच्छ्रायो, यावत्स्वंशाङ्गुलादिषु ॥ २० ॥ पञ्चोनशतभक्तेषु, सत्सु तेषु यदाप्यते । तत् षोडशगुणं यावत्तावांस्तत्र जलोच्छ्रयः ॥ २१ ॥ यथाऽत्र पञ्चनवतेर्योजनानामतिक्रमे । विभज्यन्ते योजनानि, पञ्चोनेन शतेन वै ॥ २२ ॥ एकं योजनमाप्तं यत्तत्षोडशभिराहतम् । योजनानि षोडशैवं, ज्ञातस्तत्र जलोच्छ्रयः ॥ २३ ॥ तथाहुः क्षमाश्रमणमिश्राः—"जत्थिच्छसि उस्सेहं ओगाहित्ताण लवणसलिलस्स । पंचाणउइविभत्ते सोलसगणिए गणियमाहु ॥ २४ ॥" एतच्च धातकीखण्डजम्बूद्वीपान्त्यभूमितः । दत्त्वा दवरिकां मध्ये, शिखोपरितलस्य वै ॥ २५ ॥ अपान्तराले च किमप्याकाशं यत् जलोज्झितम् । तत् सर्वं कर्णगत्यैतत्संबन्धीति जलैर्भृतम् ॥ २६ ॥ विवक्षित्वा मानमुक्तं, जलोच्छ्रयस्य निश्चितम् । मेरोरेकादशभागपरिहाणिरिवागमे ॥ २७ ॥ तथाहुः श्रीमलयगिरिपादाः—"इह षोडशसहस्रप्रमाणायाः शिखायाः शिरसि उभयोश्च वेदिकान्तयोर्मूले दवरिकायां दत्तायां यदपान्तराले किमपि जलरहित-

लवणावृताहः

२०

२५

॥ २५४ ॥

२७

माकाशं तदपि कर्णगत्या तदाभाव्यमिति सजलं विवक्षित्वा विवक्षितमुच्यमानमुच्चत्वपरिमाणमवसेयं, यथा मन्दरपर्वतस्यैकादशभागपरिहाणि"रिति । वस्तुतः पुनरुभयोर्द्वीपयोर्वेदिकान्ततः । प्रदेशवृद्ध्योभयतो, वर्द्धतेऽम्बु क्रमात्तथा ॥ २८ ॥ यथाऽस्मिन् पञ्चनवतिसहस्रान्ते भवेज्जलम् । योजनानां सप्त शतान्युच्छ्रितं समभूतलात् ॥ २९ ॥ योजनानां सहस्रं चोद्वेधोऽत्र समभूतलात् । एवं सप्तदश शतान्युद्वेधोऽत्र पयोनिधेः ॥३०॥ ततः परे मध्यभागे, सहस्रदशकातते । जलोच्छ्रयो योजनानां, स्यात्सहस्राणि षोडश ॥ ३१ ॥ सहस्रमत्राप्युद्वेध, उच्छ्रयोद्वेधतस्ततः । योजनानां सप्तदश, सहस्राण्युदकोच्चयः ॥ ३२ ॥ एवं जघन्योच्छ्रयोऽस्याङ्गुलासङ्ख्यांशसंमितः । उत्कर्षतो योजनानां, सहस्राणि च षोडश ॥ ३३ ॥ मध्यमस्तूच्छ्रयो वाच्यो, यथोक्ताम्नायतोऽम्बुधेः । तत्र तत्र विनिश्चित्य, जलोच्छ्रयमनेकधा ॥ ३४ ॥

अथास्य लवणाम्भोधेर्गणितं प्रतरात्मकम् । घनात्मकं च निर्णेतुं, यथाऽऽगममुपक्रमे ॥ ३५ ॥ लवणाम्बुधिविस्तारात्सहस्राणि दश स्फुटम् । शोधयित्वा शेषमर्द्धीकृतं दशसहस्रयुक् ॥ ३६ ॥ जातं पञ्चसहस्राढ्यं, लक्षमेकमिदं पुनः । अस्मिन् प्रकरणे कोटिरित्येवं परिभाषितम् ॥ ३७ ॥ अथैवंरूपया कोट्या, गणयेल्लवणाम्बुधेः । मध्यमं परिधेर्मानं, स्यादेवं प्रतरात्मकम् ॥ ३८ ॥ तच्चेदं—सहस्रा नव कोटीनां, तथा नव शतान्यपि । एकषष्टिः कोटयश्च, लक्षाः सप्तदशोपरि ॥ ३९ ॥ सहस्राणि पञ्चदश, योजनानामिदं जिनैः । प्रतरं लवणे प्रोक्तं, सर्वक्षेत्रे फलात्मकम् ॥ ४० ॥ मध्यभागे सप्तदश, सहस्राणि यदीरितम् । जलमानं तदनेन,

प्रतरेणाहतं घनम् ॥ ४१ ॥ कोट्यः षोडश कोटीनां, लक्षास्त्रिनवतिस्तथा । एकोनचत्वारिंशच्च, सहस्राणि ततः परम् ॥ ४२ ॥ सपञ्चदशकोटीनि, नव कोटीशतान्यथ । परिपूर्णा योजनानां, लक्षाः पञ्चाशदेव च ॥४३॥ एतावद् घनगणितं, कथितं लवणार्णवे । विलसत्केवलालोकविलोकितजगत्रयैः ॥ ४४ ॥ नन्वेतावद् घनमिह, कथमुत्पद्यते ? यतः । न सर्वत्र सप्तदश, सहस्राणि जलोच्छ्रयः ॥ ४५ ॥ किंतु मध्यभाग एव, सहस्रदशकावधि । अत्रोच्यते सत्यमेतत्तत्त्वमाकर्ण्यतां परम् ॥ ४६ ॥ युग्मम् ॥ अध्धेः शिखाया उपरि, द्वयोश्च वेदिकान्तयोः । दत्तायां दवरिकायामृज्व्यामेकान्ततः किल ॥ ४७ ॥ अन्तराले यदाकाशं, स्थितमम्बुधिवर्जितम् । तत्सर्वमेतदाभाव्यमित्यम्बुधितयाऽखिलम् ॥ ४८ ॥ विवक्षित्वा मानमेतन्निरूपितं घनात्मकम् । एतद्विवक्षाहेतुस्तु, गम्यः केवलशालिनाम् ॥ ४९ ॥ तथाहुर्दुष्षमाध्वान्तनिर्मग्नागमदीपकाः । विशेषणवतीग्रन्थे, जिनभद्रगणीश्वराः ॥ ५० ॥ "एयं उभयवेइयंताओ सोलससहस्सुस्सेहस्स कन्नगईए जं लवणसमुद्दाभवं जलसुन्नंपि खित्तं तस्स गणियं, जहा मंदरस्स पव्वयस्स एकारसभागहाणी कण्णगइए आगासस्सवि तदाभवंतिकाऊण भणिया तहा लवणसमुद्दस्सवि"

मुखैश्चतुर्मुख इव, द्वारैश्चतुर्भिरेष च । जगत्याऽऽलिङ्गितो भाति, स्थितैर्दिक्षु चतसृषु ॥ ५१ ॥ पूर्वस्यां विजयद्वारं, शीतोदायाः किलोपरि । धातकीखण्डपूर्वार्द्धाद्विशंत्या लवणाम्बुधौ ॥ ५२ ॥ द्वाराणि वैजयन्तादीन्यप्येवं दक्षिणादिषु । सन्त्यस्य दिक्षु तिसृषु, जम्बूद्वीप इव क्रमात् ॥ ५३ ॥ विजयाद्याश्च चत्वारो, द्वारा-

धिष्ठायकाः सुराः । ज्ञेयाः प्रागुक्तविजयसदृक्षाः सकलात्मना ॥ ५४ ॥ एतेषां राजधान्योऽपि, स्मृताः सर्वात्मना समाः । राजधान्या विजयया, प्राक्प्रपञ्चितरूपया ॥ ५५ ॥ एताः किंतु स्वस्वदिशि, क्षारोदकभयादिव । असङ्ख्यद्वीपपाथोधीनतीत्य परतः स्थिताः ॥ ५६ ॥ नाम्नैव लवणाम्भोधौ, रुचिरेक्षुरसोदके । योजनानां सहस्राणि, वगाह्य द्वादश स्थिताः ॥ ५७ ॥ सहस्राः पञ्चनवतिस्तिस्रो लक्षाः शतद्वयम् । अशीतियुक् योजनानां, क्रोशो द्वारामिहान्तरम् ॥ ५८ ॥ द्वाराणां परिमाणं च, निःशेषरचनाश्चितम् । जम्बूद्वीपद्वारगतमनुसंधीयतामिह ॥ ५९ ॥

अथास्मिन्नम्बुधौ वेला, वर्द्धते हीयते च यत् । तत्रादिकारणीभूतान्, पातालकलशान् ब्रुवे ॥ ६० ॥ सहस्रान् पञ्चनवतिं, वगाह्य लवणाम्बुधौ । योजनानां स एकैको, मेरोर्दिक्षु चतसृषु ॥ ६१ ॥ एवं च—पातालकुम्भाश्चत्वारो, महालिञ्जरसंस्थिताः । वैरं स्मृत्वाऽब्धिना ग्रस्ता, अगस्त्यस्येव पूर्वजाः ॥ ६२ ॥ वडवामुखनामा प्रागपाक्केयूपसंज्ञितः । प्रतीच्यां यूपनामायमुदीच्यामीश्वराभिधः ॥ ६३ ॥ दाक्षिणात्यकलशस्य बृहत्क्षेत्रसमासवृत्तौ केयूप इति नाम, प्रवचनसारोद्धारवृत्तौ केयूर इति, समवायांगवृत्तौ स्थानांगवृत्तौ च केतुक इति॥ कालो महाकालनामा, वेलम्बश्च प्रभञ्जनः । क्रमादधीश्वरा एषां, पल्यायुषो महर्द्धिकाः ॥ ६४ ॥ समन्ततो वज्रमयात्मनामेषां निरूपिताः । बाहल्यतष्ठिक्करिकाः, सहस्रयोजनोन्मिताः ॥ ६५ ॥ योजनानां सहस्राणि,

१ केऊए इति देश्यशब्देन त्रयाणामप्यवगमनस्य नासंभवः ।

दश मूले मुखेऽपि च । विस्तीर्णा मध्यभागे च, लक्षयोजनसंमिताः ॥ ६६ ॥ एकप्रादेशिकया श्रेण्या मूलाद्विवर्द्धमानाः स्युः । मध्यावधि वक्त्रावधि ततस्तथा हीयमानाश्च ॥ ६७ ॥ ( आर्या ) इति प्रवचनसारोद्धारवृत्तौ, परमेतत्तदोपपद्यते यद्येषां मध्यदेशे दश योजनसहस्राणि यावत् लक्षयोजनविष्कम्भता स्याद्, यतः प्रदेशवृद्ध्या ऊर्द्ध्वं पंचचत्वारिंशद्योजनसहस्रातिक्रम एव उभयतो मूलविष्कम्भाधिकायां पञ्चचत्वारिंशत्सहस्ररूपायां विष्कम्भवृद्धौ सत्यां यथोक्तलक्षयोजनरूपो विष्कम्भः संपद्यते, एवं हानिरपि, सा त्वेषां मध्ये दश योजनसहस्राणि यावल्लक्षयोजनविष्कम्भता क्वाप्युक्ता न दृश्यते, तदत्र तत्त्वं बहुश्रुता विदन्ति । योजनानां लक्षमेकमवगाढा भुवोऽन्तरे । रत्नप्रभामूलभागं, द्रष्टुमुत्कण्ठिता इव ॥ ६८ ॥ लक्षद्वयं योजनानां, सहस्राः सप्तविंशतिः । ससत्याढ्यं शतमेकं, त्रयः क्रोशास्तथोपरि ॥ ६९ ॥ एतत्पातालकलशमुखानामन्तरं मिथः । एतन्मूलविभागानामप्येतावदिहान्तरम् ॥ ७० ॥ उपपत्तिश्चात्र—एषां चतुर्णां वदनविस्तारपरिवर्जिते । पयोधिमध्यपरिधौ, चतुर्भक्ते मुखान्तरम् ॥ ७१ ॥ तथाऽब्धिमध्यपरिधेरेतेषां मध्यविस्तृतौ । शोधितायां चतुर्भक्ते, शेषे स्याज्जठरान्तरम् ॥ ७२ ॥ योजनानां लक्षमेकं, सप्तत्रिंशत्सहस्रयुक् । ससत्याढ्यं शतं क्रोशात्रयस्तदिदमीरितम् ॥ ७३ ॥ कल्प्यन्तेऽंशास्त्रयोऽमीषां, स चैकैकः प्रमाणतः । त्रयस्त्रिंशत्सहस्राणि, त्रयस्त्रिंशं शतत्रयम् ॥ ७४ ॥ योजनानां योजनस्य, तृतीयांशेन संयुतम् । अधस्तने तृतीयांशे, तत्र वायुर्विजृ-

१ प्रदेशोऽत्र विवक्षितो भागः, एकस्मिन् प्रदेशे जलावगाहाभावात्, तद्वृद्धौ च समप्रमाणाविरोधात्, प्रत्यंशमेव वृद्धिरत्रेत्यर्थैकमेतत् ।

(margin: १५, २०, ॥२५६॥ २५, २६)

म्भते ॥ ७५ ॥ मध्यमे च तृतीयांशे, वायुर्वारि च तिष्ठतः । तृतीये च तृतीयांशे, वर्त्तते केवलं जलम् ॥७६॥
अन्येऽपि लघुपातालकलशा लवणाम्बुधौ । सन्ति तेषामन्तरेषु, क्षुद्रालिञ्जरसंस्थिताः ॥ ७७ ॥ तथोक्तं जीवा-
भिगमवृत्तौ—"तेषां पातालकलशानामन्तरेषु तत्र तत्र देशे या(तावत्)वत् क्षुद्रालञ्जरसंस्थानाः क्षुल्लाः पातालक-
लशाः प्रज्ञप्ता" इति, अत्रायं संप्रदायः—जम्बूद्वीपवेदिकान्तादतीत्य लवणाम्बुधौ । सहस्रान् पञ्चनवतिं,
तत्रायं परिधिः किल ॥ ७८ ॥ सल्लक्षद्वयनवतिसहस्रविस्तृतेर्भवेत् । नव लक्षाः ससदश, सहस्राणि च षट्- 5
शती ॥ ७९ ॥ अयं भावः—पञ्चनवतिः सहस्राः समुद्रसंबन्धिन एकपार्श्वे, तावन्त एव द्वितीयपार्श्वे, मध्ये
चैकं लक्षं जम्बूद्वीपसंबन्धि, एवं द्विलक्षनवतिसहस्रविष्कम्भक्षेत्रस्य परिधिर्नव लक्षाः ससदश सहस्राः षट्-
शतीत्येवंरूपो भवतीति ॥ चत्वारिंशत्सहस्रात्मा, शोध्यते मुखविस्तृतिः । महापातालकुम्भानामस्माद्राशे-
स्ततः स्थितम् ॥ ८० ॥ अष्टौ लक्षाः षष्ट्यधिकाः, सहस्राः सप्तसप्ततिः । भागे चतुर्भिरेतेषां, लब्धं तत्रान्तरं
भवेत् ॥ ८१ ॥ लक्षद्वयं सहस्राणामेकोनविंशतिस्तथा । सपञ्चषष्टिद्विशती, कुम्भानां महतां पृथक् ॥ ८२ ॥ 10
चतुर्ष्वप्यन्तरेष्वेषु, पङ्क्तयो नव नव स्थिताः । लघुपातालकुम्भानामाद्यपङ्क्तौ च ते स्मृताः ॥ ८३ ॥ प्रत्येकं
द्वे शते पञ्चदशोत्तरे किलान्तरम् । पूर्वोक्तं गुरुकुम्भानामेवमेभिश्च पूर्यते ॥ ८४ ॥ एकैकस्योदरव्यासः, सह-
स्रयोजनात्मकः । ततः शतद्वयं पञ्चदशसहस्रताडितम् ॥ ८५ ॥ सहस्रैः पञ्चदशभिर्युक्तं लक्षद्वयं भवेत् ।
लघुकुम्भैरियद्रुद्धमेकैकस्यान्तरस्य वै ॥ ८६ ॥ शेषं सहस्राश्चत्वारो, द्विशती पञ्चषष्टियुक् । रुद्धं कथंचित्त- 14

त्मौढकुम्भान्तरमिथोऽन्तरैः ॥ ८७ ॥ परिधेर्वर्द्धमानत्वात्पङ्क्तौ पङ्क्तौ यथोत्तरम् । एकैककलशस्यापि, वृद्धिर्वाच्या वचस्विभिः ॥ ८८ ॥ ततः पङ्क्तौ द्वितीयस्यां, द्वे शते षोडशोत्तरे । पङ्क्तौ नवम्यामेवं स्युस्त्रयोविंशंशतद्वयम् ॥ ८९ ॥ एकसप्तत्युपेतानि, शतान्येकोनविंशतिः । एकैकस्मिन्नन्तरे स्युर्लघवः सर्वसङ्ख्यया ॥ ९० ॥ चतुर्णामन्तराणां च, मिलिताः सर्वसङ्ख्यया । स्फुरच्चतुरशीतीनि, स्युः शतान्यष्टसप्ततिः ॥ ९१ ॥ अयं च संप्रदायो 'वीरं जयसेहरे' त्यादिक्षेत्रसमासवृत्त्यभिप्रायेण, बृहत्क्षेत्रसमासवृत्तौ जीवाभिगमवृत्त्यादौ त्वयं न दृश्यते। लघुपातालकलशा, अमी सर्वेऽप्यधिष्ठिताः । सदा महर्द्धिकैर्देवैः, पल्योपमार्द्धजीविभिः ॥ ९२ ॥ अयं क्षेत्रसमासवृत्त्याद्यभिप्रायः, जीवाभिगमसूत्रवृत्तौ च अर्द्धपल्योपमस्थितिकाभिर्देवताभिः परिगृहीता इत्युक्तं। शतयोजनविस्तीर्णा, एते मूले मुखेऽपि च । मध्ये सहस्रं विस्तीर्णाः, सहस्रं क्ष्मोदरे स्थिताः ॥ ९३ ॥ दशयोजनबाहल्यवज्रकुड्यमनोरमाः । वायुवायूदकाम्भोभिः, पूर्णत्र्यंशत्रयाः क्रमात् ॥ ९४ ॥ सयोजनतृतीयांशं, त्रयस्त्रिंशं शतत्रयम् । तृतीयो भाग एकैक, एषां निष्टङ्कितो बुधैः ॥ ९५ ॥ लघवोऽपि महान्तोऽपि, यावन्मग्ना भुवोन्तरे । उच्चुङ्गास्तावदेव स्युर्भूमीतलसमाननाः ॥ ९६ ॥ एषां पातालकुम्भानां, लघीयसां महीयसाम् । मध्यमेऽधस्तने चैवं, त्र्यंशे जगत्स्वभावतः ॥ ९७ ॥ समकालं महावाताः, संमूर्च्छन्ति सहस्रशः । क्षुभितैस्तैश्चोपरिस्थं, बहिर्निस्सार्यते जलम् ॥ ९८ ॥ तेन निस्सार्यमाणेन, जलेन क्षुभितोऽम्बुधिः । वेलया

पातालकलशाः

२०

२५

२७

१ देवताशब्दस्य स्वार्थप्रत्ययान्तत्वेन देवदेव्युभयसाधारणत्वात् ।

व्याकुलात्मा स्यादुद्गमन्निव वातकी ॥९९॥ जगत्स्वाभाव्यत एव, शान्तेषु तेषु वायुषु । पुनः पातालकुम्भानां, जलं स्वस्थानमाश्रयेत् ॥ १०० ॥ जलेषु तेषु स्वस्थानं, प्राप्तेषु सुस्थितोदकः । स्वास्थ्यमापद्यतेऽम्भोधिर्वातकीव कृतौषधः ॥ १ ॥ मूर्च्छन्ति द्विरहोरात्रे, वाताः स्वस्थीभवन्ति च । ततो द्विः प्रत्यहोरात्रं, वर्द्धते हीयतेऽम्बुधिः ॥ २ ॥ तथाह जीवाभिगमः—"लवणे णं भंते ! समुद्दे तीसाए मुहुत्ताणं कइखुत्तो अइरेगं वड्ढइ वा हायइ वा ?, गो० ! दुक्खुत्तो अइरेगं वड्ढइ वा हायइ वा" राकादर्शादितिथिषु, चातिरेकेण तेऽनिलाः । क्षोभं प्रयान्ति मूर्च्छन्ति, तथा जगत्स्वभावतः ॥ ३ ॥ ततश्च पूर्णिमाऽमादितिथिष्वतितमामयम् । वेलया वर्द्धते वार्द्धिर्दशम्यादिषु नो तथा ॥ ४ ॥ लोकप्रथानुसारेण त्वेवमवोचं—"यथा यथेन्दोर्निजनन्दनस्य, कालक्रमप्राप्तकलाकलस्य । आश्लिष्यतेऽब्धिर्मृदुभिः कराग्रैस्तथा तथोद्वेलमुपैति वृद्धिम् ॥ ५ ॥ दर्शे त्वपश्यन्नतिदर्शनीयं, निजाङ्गजं शीतकरं पयोधिः । विवृद्धवेलावलयच्छलेन, दुःखाग्नितप्तो भुवि लोलुठीति ॥ ६ ॥" योजनानामुभयतो, विमुच्य लवणाम्बुधौ । सहस्रान् पञ्चनवतिं, मध्यदेशे शिखैधते ॥ ७ ॥ योजनानां सहस्राणि, दशेयं पृथुलाऽभितः । चकास्ति वलयाकारा, जलभित्तिरिव स्थिरा ॥ ८ ॥ सहस्राणि, षोडशोच्चा, समभूमिसमोदकात् । योजनानां सहस्रं च, तत्रोद्वेधेन वारिधिः ॥ ९ ॥ शिखामिषाद्दधद्योगपट्टं योगीव वारिधिः । ध्यायतीव परब्रह्म, जन्मजाड्योपशान्तये ॥ १० ॥ सुभगंकरणीं यद्वा, हारिहारलतामिमाम् । श्यामोऽपि सुभगत्वेच्छुर्दधौ वार्द्धिः शिखोपधेः ॥ ११ ॥ जम्बूद्वीपोपाश्रयस्थान्, मुनीनुत निनंसिषुः । कृतोत्तरासङ्गसङ्गः,

शिखावलयकैतवात् ॥ १२ ॥ पूर्णकुक्षि भृशं रत्नैरुन्मदिष्णुतयाऽथवा । पट्टबद्धोदर इव, विद्याद्दसकुवादिवत् ॥ १३ ॥ भाति भूयोऽब्धिभूपालवृतो दैवतसेवितः । शिखामिषात्समुकुटो, दधद्वा वार्द्धिचक्रिताम् ॥ १४ ॥ त्रिभिर्विशेषकं ॥ पातालकुम्भसंमूर्च्छद्वायुविक्षोभयोगतः । उपर्यस्याः शिखायाश्च, देशोनमर्द्धयोजनम् ॥१५॥ द्वौ वारौ प्रत्यहोरात्रमुदकं वर्द्धतेतराम् । तत्प्रशान्तौ शाम्यति च, भवेद्वेलेयमूर्द्धगा ॥ १६ ॥ तां च वेलामुच्छलन्तीं, दर्वाद्यग्रकराः सुराः । शमयन्ति सदा नागकुमारा जगतः स्थितेः ॥ १७ ॥ तत्र जम्बूद्वीपदिशि, शिखावेलां प्रसृत्वरीम् । द्विचत्वारिंशत्सहस्रा, धरन्ति नागनाकिनः ॥ १८ ॥ धातकीखण्डदिशि च, प्रसर्पन्तीमिमां किल । निवारयन्ति नागानां, सहस्राणि द्विसप्ततिः ॥ १९ ॥ देशोनं योजनार्द्धं यद्वर्द्धतेऽम्बु शिखोपरि । षष्टिर्नागसहस्राणि, सततं वारयन्ति तत् ॥ २० ॥ लक्षमेकं सहस्राणि, चतुःसप्ततिरेव च । वेलन्धरा नागदेवा, भवन्ति सर्वसंख्यया ॥ २१ ॥ एषामुपक्रमेणैव, निरुद्धा नावतिष्ठते । वेलेयं चपलाऽतीव, महेलेव रसाकुला ॥ २२ ॥ किंतु द्वीपस्थसंघार्हद्देवचक्र्यादियुग्मिनाम् । पुण्याज्जगत्स्वभावाच्च, मर्यादां न जहाति सा ॥ २३ ॥ इदं जीवाभिगमसूत्रवृत्त्यभिप्रायेण, पञ्चमाङ्गे तद्वृत्तौ च-'जया णं दीविच्चया ईसिं णो णं तया सामुद्दया ईसिं, जया णं सामुद्दया ईसिं णो णं तया दीविच्चया ईसिं ?, गो०! तेसिं णं वायाणं अन्नमन्नविवच्चासेणं लवणसमुद्दे वेलं नातिक्कमइ,' "अन्योऽन्यव्यत्यासेन" यदेके ईषत् पुरोवातादिविशेषणा वान्ति तदेतरे न तथा-

२० २५ ॥२५८॥ २७

विधा वान्तीत्यर्थः। 'वेलं नाइक्कमइ'त्ति तथाविधवायुद्रव्यसामर्थ्याद्वेलायास्तथास्वभावत्वाच्चे"त्युक्तं; अत्र ईसिं पुरोवातादीनि विशेषणानि त्वेवं-'ईसिं पुरोवाय'त्ति मनाक् सस्नेहवाताः 'पच्छा वाय'त्ति पथ्या वनस्पत्यादिहिता वायवः 'मंदा वाय'त्ति मन्दाः-शनैः शनैः संचारिणः, अमहावाता इत्यर्थः 'महावाय'त्ति उद्दण्डा वाताः, अनल्पा इत्यर्थः। वेलन्धराणामेतेषां, भवन्त्यावासपर्वताः। अस्मिन्नेवाम्बुधौ पूर्वादिषु दिक्षु चतसृषु ॥ २४ ॥ तथाहि-जम्बूद्वीपवेदिकान्तात्पूर्वस्यां दिशि वारिधौ। गोस्तूपः पर्वतो भाति, वेलन्धरसुराश्रयः ॥ २५ ॥ नानाजलाशयोद्भूतैः, शतपत्रादिभिर्यतः। गोस्तूपाकृतिभी रम्यो, गोस्तूपोऽयं गिरिस्ततः ॥ २६ ॥ जलं यद्भासयत्यष्टयोजनीं परितोऽंशुभिः। ततो नाम्नोदकभासोऽपाच्यां वेलन्धराचलः ॥ २७ ॥ पश्चिमायां शङ्खनामा, नगः सोऽप्यन्विताभिधः। शङ्खाभैः शतपत्राद्यैर्जलाश्रयोद्भवैर्लसन् ॥ २८ ॥ उत्तरस्यां दिशि वेलन्धरावासधराधरः। दकसीमाभिधः शीताशीतोदोदकसीमकृत् ॥ २९ ॥ शीताशीतोदयोर्नद्योः, स्रोतांसीह धराधरे। प्रतिघातं प्राप्नुवन्ति, दकसीमाभिधस्ततः ॥ ३० ॥ एवं च शीताशीतोदे, पूर्वपश्चिमयोर्दिशोः। प्रविश्य वारिधौ याते, उदीच्यामिति निश्चयः ॥ ३१ ॥ गोस्तूपे गोस्तूपसुरो, दकभासगिरौ शिवः।

१ वातानां तथा वाते जगत्स्वभाववत् द्वीपस्थसङ्घादिकारणतायां का हानिः, तत्कृतश्च वेलोपगमाभावः, प्रतिकूलवातेन वेगेन वेलाया आगमः स्यात्, शनैरागमस्तु द्वीपस्थसङ्घादिभावकृत एव, तत्त्वतः सकलेष्टप्राप्त्यनिष्टसमागमाभावस्यादृष्टकृतता। २ पूर्वतो महाप्रवाहागमे वा [illegible]जलौघागाविषु स्यादेव प्रवृत्तिः, तथा च दकसीमाभिधानस्य सार्थकता,।

५ १० ११

वेलन्धरावासाः

शङ्खे शङ्खो दकसीमपर्वते च मनःशिलः ॥ ३२ ॥ सामानिकसहस्राणां, चतुर्णां च चतसृणाम् । पट्टाभिषिक्त-
देवीनां, तिसृणामपि पर्षदाम् ॥ ३३ ॥ सैन्यानां सैन्यनाथानां, सप्तानामप्यधीश्वराः । आत्मरक्षिसहस्रैश्च,
सेव्याः षोडशभिः सदा ॥ ३४ ॥ स्वस्वावासपर्वतानामाधिपत्यममी सदा । पालयन्ति पूर्वजन्मार्जितपुण्या-
नुसारतः ॥ ३५ ॥ त्रिभिर्विशेषकं । आज्ञाप्रतीच्छका एषां, सन्त्येतदनुयायिनः । अनुवेलन्धरास्तेषां, विदि-
क्ष्वावासपर्वताः ॥ ३६ ॥ कर्कोटकाद्रिरैशान्यां, विद्युत्प्रभोऽग्निकोणके । कैलाशो वायवीयायां, नैर्ऋत्यामरुण-
प्रभः ॥ ३७ ॥ कर्कोटकः कर्दमकः, कैलाशश्चारुणप्रभः । एषां चतुर्णामद्रीणामीशा गोस्तूपसश्रियः ॥ ३८ ॥
यथास्वमेषामष्टानां, रम्या दिक्षु विदिक्षु च । राजधान्यः स्वस्वनाम्ना, परस्मिन् लवणार्णवे ॥ ३९ ॥ असङ्ख्ये-
यान् द्वीपवार्द्धीनतीत्य परतः स्थिते । योजनानां सहस्राणि, वगाह्य द्वादश स्थिताः ॥ ४० ॥ जम्बूद्वीपवेदि-
कान्तादष्टापि स्वस्वदिक्ष्वमी । द्विचत्वारिंशत्सहस्रयोजनातिक्रमेऽद्रयः ॥ ४१ ॥ सुवर्णाङ्करत्नरूप्यस्फटिकैर्ध-
टिताः क्रमात् । दिश्याश्चत्वारोऽपि शैलाः, सर्वे विदिक्षु रत्नजाः ॥ ४२ ॥ अष्टाप्यमी योजनानां, सहस्रं सप्त-
भिः शतैः । एकविंशैः समधिकमुच्चुङ्गत्वेन वर्णिताः ॥ ४३ ॥ चतुःशतीं योजनानां, त्रिंशां क्रोशाधिकाममी ।
वसुधान्तर्गताः पद्मवेदिकावनमण्डिताः ॥ ४४ ॥ मूले सहस्रं द्वाविंशं, सर्वेऽपि विस्तृता अमी । त्रयोविंशानि
मध्ये च, शतानि सप्त विस्तृताः ॥ ४५ ॥ योजनानां चतुर्विंशां, चतुःशतीमुपर्यमी । विस्तृताः सर्वतो व्यास-
ज्ञानोपायोऽथ तन्यते ॥ ४६ ॥ योजनादिषु यावत्सूत्तीर्णेषु शिखराग्रतः । वेलन्धरपर्वतानां, विष्कम्भो ज्ञातु-

१५

२०

२५

॥२५९॥

मिष्यते ॥४७॥ अतिक्रान्तयोजनादिरूपं तं राशिमञ्जसा । अष्टानवत्याऽभ्यधिकैर्गुणयेः पञ्चभिः शतैः ॥४८॥ जातं
चैतेषां गिरीणामुच्छ्रयेण विभाजय । यल्लब्धं तच्चतुर्विंशचतुःशतयुतं कुरु ॥ ४९ ॥ कृते चैवं तत्र तत्र, विष्क-
म्भोऽभीप्सितास्पदे । वेलन्धराद्रिषु ज्ञेयो, दृष्टान्तः श्रूयतामिह ॥ ५० ॥ सषष्टीनि शतान्यष्ट, द्वौ क्रोशौ च
शिरोऽग्रतः । अतीत्य व्यासजिज्ञासा, चेदिदं गुणयेत्तदा ॥ ५१ ॥ अष्टानवत्याढ्यपञ्चशत्यैवं पञ्च लक्षकाः ।
सहस्राः द्विः सप्त पञ्चशती सैकोनसप्ततिः ॥ ५२ ॥ जातास्ते च हृताः सप्तदशशत्यैकाविंशया । शतद्वयीं नव- 5
नवत्यधिकां ध्रुवमार्पयत् ॥ ५३ ॥ ततश्च सा चतुर्विंशैः, शतैश्चतुर्भिरन्विता । त्रयोविंशा सप्तशती, जातेयं
तत्र विस्तृतिः ॥ ५४ ॥ मध्यव्यासोऽयमेवैषां, सर्वत्रैवं विभाव्यताम् । स्यादुपायान्तरमेतन्मध्यविष्कम्भनि-
श्चये ॥ ५५ ॥ मूले मध्ये च विष्कम्भौ, यौ तद्योगेऽर्द्धिते सति । सर्वत्र मध्यविष्कम्भो, लभ्योऽत्र भाव्यतां
स्वयम् ॥ ५६ ॥ एषां वेलन्धराद्रीणां, मूलांशे परिधिं जिनाः । जगुः शतानि द्वात्रिंशत्, सह द्वात्रिंशतोनया
॥ ५७ ॥ मध्ये सषडशीतीनि, द्वाविंशतिः शतानि च । किञ्चित्सप्ततिरेकाणि, परिक्षेपो निरूपितः ॥ ५८ ॥ 10
उपरि स्यात्परिक्षेपः, शतान्येषां त्रयोदश । किञ्चिदूनैकचत्वारिंशता युक्तानि भूभृताम् ॥ ५९ ॥ द्विसप्ततिः
सहस्राणि, शतमेकं चतुर्दशम् । योजनानामष्टभक्तयोजनस्य लवास्त्रयः ॥ ६० ॥ अष्टानामेतदेतेषां, मूल-
भागे मिथोऽन्तरम् । वेलन्धरसुराद्रीणां, प्रत्ययश्चात्र दर्श्यते ॥ ६१ ॥ मध्यभागे यदेतेषामन्तरं ज्ञातुमिष्यते ।
एकादशा पञ्चशत्येतदर्धगा तदन्विता ॥ ६२ ॥ द्विचत्वारिंशत्सहस्रैर्वार्द्धिगैरेकतो यथा । क्रियते परतोऽप्ये- 14

वमित्येतद् द्विगुणीकुरु ॥ ६३ ॥ पञ्चाशीतिः सहस्राणि, द्वाविंशान्यभवन्निह । मध्यस्थजम्बूद्वीपस्य, लक्षमेकं तु
मील्यते ॥ ६४ ॥ एतेषां परिधिः पञ्च, लक्षा योजनसङ्ख्यया । पञ्चाशीतिः सहस्राणि, तथैकनवतिः परा ॥ ६५ ॥
अष्टानामप्यथाद्रीणां, व्यासोऽस्मादपनीयते । षट्सप्तत्याढ्यशतयुक्सहस्राष्टक ( ८१७६ ) संमितः ॥ ६६ ॥
अपनीतेऽस्मिंश्च पूर्वराशिरीदृग्विधः स्थितः । पञ्च लक्षाः सहस्राणि, षट्सप्ततिस्तथोपरि ॥ ६७ ॥ नव पञ्चद-
शाढ्यानि, शतान्येषामथाष्टभिः । भागे हृते लभ्यते यत्तदद्रीणां मिथोऽन्तरम् ॥ ६८ ॥ एषां समीपेऽम्बुवृ-
द्धिर्जम्बूद्वीपदिशि स्फुटम् । समभूतलतुल्याम्भोऽपेक्षयोर्द्ध्वं पयोनिधौ ॥ ६९ ॥ नवोत्तरं योजनानां, शतत्रयं
तथोपरि । पञ्चचत्वारिंशदंशाः, पञ्चोनशतभाजिताः ॥ ७० ॥ निश्चयः पुनरेतस्य, त्रैराशिकात्प्रतीयते ।
व्युत्पित्सूनां प्रमोदाय, तदप्यातत्य दर्श्यते ॥ ७१ ॥ यदि पञ्चसहस्रोनलक्षेण वर्द्धते जलम् । योजनानां सप्त-
शती, तदा तद्वर्द्धते कियत् ॥ ७२ ॥ द्विचत्वारिंशत्सहस्रैरिति राशित्रयं लिखेत् । (९५०००–७००–४२०००)
आद्यन्तयोस्तत्र राश्योः, कार्यं शून्यापवर्त्तनम् ॥ ७३ ॥ एतयोर्हि द्वयो राश्योः, साजात्यादपवर्त्तनम् । घटते
लाघवार्थं च, क्रियते गणकैरिदम् ॥ ७४ ॥ मध्यराशिः सप्तशती, द्विचत्वारिंशदात्मना । अन्त्येन राशिना
गुण्यस्तथा चैवंविधो भवेत् ॥ ७५ ॥ नूनं सहस्राण्येकोनत्रिंशत्पूर्णा चतुःशती । ततः पञ्चनवत्याऽयं, भाज्यः
प्रथमराशिना ॥ ७६ ॥ भागे हृते च यल्लब्धं, पानीयं तावदुच्छ्रितम् । जम्बूद्वीपदिश्यमीषां, समीपे तत्पुरो-
दितम् ॥ ७७ ॥ जम्बूद्वीपस्य दिश्येषां, गिरीणामन्तिके पुनः । गोतीर्थेन धरोद्वेधः, स्यात्समोर्व्यपेक्षया

वेलन्धरा-
द्रयः

२०

२५

॥ २६० ॥

२८

॥ ७८ ॥ द्विचत्वारिंशदधिका, योजनानां चतुःशती । दश पञ्चनवत्यंशास्त्रैराशिकात्तु निश्चयः ॥ ७९ ॥ ननु
पञ्चसहस्रोनलक्षान्ते यदि लभ्यते । भुवोऽवगाहः सहस्रस्तदाऽसौ लभ्यते कियान् ॥ ८० ॥ द्विचत्वारिंशत्सह-
स्रपर्यन्त इति लिख्यते । राशित्रयं कार्यमाद्यान्त्ययोः शून्यापवर्त्तनम् ॥ ८१ ॥ (९५–१०००–४२) मध्यराशिः
सहस्रात्मा, द्विचत्वारिंशदात्मना । हतोऽन्त्येन द्विचत्वारिंशत्सहस्राणि जज्ञिरे ॥ ८२ ॥ आद्येन पञ्चनवति-
लक्षणेनाथ राशिना । भागे हृते लभ्यतेऽयमवगाहो यथोदितः ॥ ८३ ॥ योऽयं भूमेरवगाहो, यश्च प्रोक्तो
जलोच्छ्रयः । एतद् द्वयं पर्वतानामुच्छ्रयादपनीयते ॥ ८४ ॥ अपनीतेऽवशिष्टं यत्तावन्मात्रो जलोपरि । जम्बू-
द्वीपदिश्यमीषां, गिरीणामयमुच्छ्रयः ॥ ८५ ॥ योजनानां नवशती, सैकोनसप्ततिस्तथा । चत्वारिंशद्योजनस्य,
पञ्चोनशतजा लवाः ॥ ८६ ॥ अत्र चासर्गसंपूर्त्तिं, यत्र काप्यविशेषतः । वक्ष्यंतेऽंशा अमी सर्वे, पञ्चोनशत-
भाजिताः ॥ ८७ ॥ शिखराग्रादथैतावदुत्तीर्य यदि चिन्त्यते । अत्र प्रदेशे विष्कम्भो, ज्ञेयोऽमीषामयं तदा
॥ ८८ ॥ षष्ट्याढ्यानि योजनानां, शतानि सप्त चोपरि । अशीतिर्योजनस्यांशाः, पञ्चोनशतसंभवाः ॥ ८९ ॥
तिर्यक्क्षेत्रेणेयता च, जलवृद्धिरवाप्यते । किञ्चिदूनाष्टपञ्चाशदंशाढ्या पञ्चयोजनी ॥ ९० ॥ जम्बूद्वीपदिशि
प्रोक्तात्, पर्वतानां समुच्छ्रयात् । स्यादस्यामपनीतायां, शिखादिशि नगोच्छ्रयः ॥ ९१ ॥ स चायं–योजनानां
नवशती, त्रिषष्ट्याऽभ्यधिका किल । सप्तसप्ततिरंशाश्च, तथाऽत्र स्याज्जलोच्छ्रयः ॥ ९२ ॥ योजनानां पञ्चद-

५

१०

१३

शाः, शतास्त्रयोऽष्ट चांशकाः । चतुःशती च पञ्चाशा, दशांशाश्च धरोण्डता ॥ ९३ ॥ एवं वेलन्धरावासपर्व-
तानां यथामति । स्वरूपं दर्शितं किञ्चिज्जीवाभिगमवर्णितम् ॥ ९४ ॥

सुमेरुतः पश्चिमायां, जम्बूद्वीपान्त्यभूमितः । सहस्रान् द्वादशातीत्य, लवणाम्भोनिधाविह ॥ ९५ ॥ योज-
नानां सहस्राणि, द्वादशायतविस्तृतः । शोभते गौतमद्वीपः, स्थानं सुस्थितनाकिनः ॥ ९६ ॥ सप्तत्रिंशत्सह-
स्राणि, योजनानां शतानि च । नवाष्टचत्वारिंशानि, द्वीपेऽस्मिन् परिधिर्भवेत् ॥ ९७ ॥ द्वे गव्यूते जलादूर्ध्व-
मुच्छ्रितोऽब्धिशिखादिशि । अन्तेऽस्यासिन्नम्बुवृद्धिस्त्रैराशिकात्प्रतीयते ॥ ९८ ॥ तथाहि—सहस्रेषु द्वादशसु,
द्वीपोऽयं तावदाततः । चतुर्विंशतिरित्येवं, सहस्रा वारिधेर्गताः ॥ ९९ ॥ ततश्च—सहस्रपञ्चनवतिपर्यन्ते यदि
लभ्यते । जलवृद्धिर्योजनानां, शतानि सप्त निश्चिता ॥ २०० ॥ चतुर्विंशत्या सहस्रैः, कियतीयं तदाप्यते ।
( ९५०००–७००–२४००० ) राशित्रयेऽन्त्याद्ययोश्च, कार्यं शून्यापवर्त्तनम् ( ९५–७००–२४ ) ॥१॥ मध्यराशिः
सप्तशती, गुणितोऽन्त्येन राशिना । चतुर्विंशतिरूपेण, सहस्राः षोडशाभवन् ॥ २ ॥ ततश्च पञ्चनवतिरूपेणा-
न्त्येन राशिना । विभज्यते ततो लब्धं, षट्सप्तत्यधिकं शतम् ॥३॥ अशीतिः पञ्चनवतिभागाश्चैतावती किल ।
गौतमद्वीपपर्यन्ते, जलवृद्धिः शिखादिशि ॥ ४ ॥ जम्बूद्वीपदिश्यमुष्य, राशेरर्द्धं जलोच्छ्रयः । युक्तश्चैष सह-
स्राणां, द्वादशानामतिक्रमे ॥ ५ ॥ ततः पूर्वोक्तस्य राशेरर्द्धं यदिदमास्थितम् । अष्टाशीतिर्योजनानि, चत्वा-
रिंशत्तथा लवाः ॥ ६ ॥ इयान् जम्बूद्वीपदिशि, द्वीपस्यास्योच्छ्रयो जलात् । शिखादिगुदितद्वीपोच्छ्रयः


१५
२०
२५

२७

क्रोशद्वयाधिकः ॥ ७ ॥ त्रिंशत्पञ्चनवत्यंशाः, षड्विंशा शतयोजनी । भूनिम्नताऽस्मिन् पर्यन्ते, द्विगुणा च शिखादिशि ॥ ८ ॥ एवं च—मूलादुच्चो द्वीपदिशि, चतुर्दशं शतद्वयम् । क्रोशद्वयाधिकं पञ्चनवत्यंशाश्च सप्ततिः ॥ ९ ॥ चतुःशती योजनानामेकोनत्रिंशताऽधिका । पञ्चचत्वारिंशदंशा, द्वौ क्रोशौ च शिखादिशि ॥ १० ॥ वनाढ्यया पद्मवेद्या, द्वीपोऽयं शोभतेऽभितः । नीलरत्नालियुग्मुक्तामण्डलेनेव कुण्डलम् ॥ ११ ॥

द्वीपस्य मध्यभागेऽस्य, रत्नस्तम्भशताञ्चितम् । भौमेयमस्ति भवनं, क्रीडावासाभिधं शुभम् ॥ १२ ॥ द्वाषष्टिं योजनान्येतद् , द्वौ क्रोशौ च समुच्छ्रितम् । योजनान्येकत्रिंशतं, क्रोशाधिकानि विस्तृतम् ॥ १३ ॥ एतस्यावसथस्यान्तर्भूमिभागे मनोरमे । मध्यदेशे महत्येका, शोभते मणिपीठिका ॥ १४ ॥ योजनायामविष्कम्भा, योजनार्द्धं च मेदुरा । उपर्यस्याः शयनीयं, भोग्यं सुस्थितनाकिनः ॥ १५ ॥ सुस्थितः सुस्थिताभिख्यो, लवणोदधिनायकः । चतुःसामानिकसुरसहस्राराधितक्रमः ॥ १६ ॥ परिवारयुजां चारुचां चतसृणां सदा । पट्टाभिषिक्तदेवीनां, तिसृणामपि पर्षदाम् ॥ १७ ॥ सप्तानां सैन्यसेनान्यामात्मरक्षकनाकिनाम् । षोडशानां सहस्राणामन्येषामपि भूयसाम् ॥ १८ ॥ सुस्थिताख्यराजधानीवास्तव्यानां सुधाभुजाम् । भुङ्क्ते स्वाम्यं तत्र भूरिसुराराधितशासनः ॥ १९ ॥ चतुर्भिः कलापकं ॥ रत्नद्वीपादिपतयो, लवणाम्भोधिवासिनः । देव्यो देवाश्च ते सर्वेऽप्यस्यैव वशवर्त्तिनः ॥ २० ॥ राजधानी सुस्थितस्य, लवणाधिपतेः किल । प्रतीच्यां गौतमद्वीपादसङ्ख्यद्वीपवारिधीन् ॥ २१ ॥ अतीत्य तिर्यगन्यस्मिंल्लवणाम्भोनिधौ भवेत् । योजनानां सहस्रैर्द्वा-

दशभिर्विजयोपमा ॥ २२ ॥ जम्बूद्वीपवेदिकान्तात्, प्रतीच्यामेव मेरुतः । योजनानां सहस्राणि, द्वादशातीत्य वारिधौ ॥ २३ ॥ स्युश्चत्वारो रविद्वीपा, द्वौ जम्बूद्वीपचारिणोः । भान्वोर्द्वौ चार्वाक् शिखाया, लवणाम्बुधिचारिणोः ॥२४॥ मेरोः प्राच्यां दिशि जम्बूद्वीपस्य वेदिकान्ततः । स्युर्योजनसहस्राणां, द्वादशानामनन्तरम् ॥२५॥ चत्वारोऽत्र शशिद्वीपा, द्वौ जम्बूद्वीपचारिणोः । इन्द्वोर्द्वौ चार्वाक् शिखाया, लवणोदधिचारिणोः ॥ २६ ॥ तथैव धातकीखण्डवेदिकान्तादतिक्रमे । स्युर्योजनसहस्राणां, द्वादशानामिहाम्बुधौ ॥ २७ ॥ जम्बूद्वीपस्थायिमेरोः, प्रतीच्यां दिशि निश्चितम् । अष्टौ दिनकरद्वीपा, दीपा इव महारुचः ॥ २८ ॥ युग्मम् ॥ बहिःशिखायाश्चरतोर्द्वौ द्वीपावर्कयोर्द्वयोः । षट् षण्णां धातकीखण्डार्वाचीनार्द्धप्रकाशिनाम् ॥ २९ ॥ तथैव धातकीखण्डवेदिकान्तादनन्तरम् । योजनानां सहस्रेषु, गतेषु द्वादशस्विह ॥ ३० ॥ प्राच्यां जम्बूद्वीपमेरोः, सन्त्यष्टौ लवणोदधौ । शशिद्वीपास्तत्र च द्वौ, शिखायाश्चरतोर्बहिः ॥ ३१ ॥ षडन्ये धातकीखण्डार्वाक्तनार्द्धप्रचारिणाम् । षण्णां हिमरुचामेवमेते सर्वेऽपि संख्यया ॥ ३२ ॥ स्युश्चतुर्विंशतिश्चन्द्रसूर्यद्वीपाः समेऽप्यमी । गौतमद्वीपसदृशा, मानतश्च स्वरूपतः ॥ ३३ ॥ जलोच्छ्रयावगाहादि, सर्वं ततोऽविशेषितम् । गौतमद्वीपवद्वाच्यं, सर्वेषामपि सर्वथा ॥ ३४ ॥ किंतु तत्रास्ति भौमेयमेषु प्रासादशेखरः । वाच्यः प्रत्येकमेकैको, भौमेयसममानकः ॥ ३५ ॥ प्रतिप्रासादमेकैकं, सिंहासनमनुत्तरम् । तेषु चन्द्राश्च सूर्याश्च, प्रभुत्वमुपभुञ्जते ॥ ३६ ॥ सुस्थितामरवत्सेव्याः, सामानिकादिभिः सुरैः । वर्षलक्षसहस्राढ्यपल्योपमायुषः क्रमात् ॥ ३७ ॥ एतेषां राजधा-

भौमेयं रविशशिद्वीपाश्च

२०

२५



२८

न्योऽपि, स्वस्वदिक्षु मनोरमाः । स्युः सुस्थितपुरीतुल्याः, परस्मिंल्लवणार्णवे ॥ ३८ ॥ ये तु सन्त्यन्तरद्वीपाः, षट्पञ्चाशदिहाम्बुधौ । निरूपितास्ते हिमवद्गिरिप्रकरणे मया ॥ ३९ ॥

एवमेकाशीतिरस्मिन्, द्वीपा लवणवारिधौ । वेलन्धराचलाश्चाष्टौ, दृष्टा दृष्टागमाब्धिभिः ॥ ४० ॥ महापातालकलशाश्चत्वारो लघवश्च ते । सहस्राः सप्तचतुरशीतिश्चाष्टौ शतानि च ॥ ४१ ॥ रत्नद्वीपादयो येऽन्ये, श्रूयन्तेऽम्भोनिधाविह । द्वीपास्ते प्रतिपत्तव्याः, प्राप्तरूपैर्यथागमम् ॥ ४२॥ सुधांशवोऽस्मिंश्चत्वारश्चत्वारोऽर्काश्च तोयधौ । संचरन्ति समश्रेण्या, जम्बूद्वीपेन्दुभानुभिः ॥ ४३ ॥ यदा जम्बूद्वीपगतश्चारं चरति भानुमान् । एको मेरोर्दक्षिणस्यां, तदाऽस्मिन्नम्बुधावपि ॥ ४४ ॥ तेन जम्बूद्वीपगेन, समश्रेण्या व्यवस्थितौ । दक्षिणस्यामेव मेरोर्द्वौ चारं चरतो रवी ॥ ४५ ॥ एकस्तत्रार्वाक् शिखायाः, समश्रेण्या सहामुना । शिखायाः परतोऽन्योऽब्धावुक्षेव युगयन्त्रितः ॥ ४६ ॥ एवमुत्तरतो मेरोर्यो जम्बूद्वीपगो रविः । द्वौ पुनस्तत्समश्रेण्या, चरतोऽर्काविहाम्बुधौ ॥ ४७॥ तदा च चरतोर्जम्बूद्वीपे पीयूषरोचिषोः । मेरोः प्राच्यां प्रतीच्यां च, समश्रेण्याऽम्बुधावपि ॥ ४८ ॥ द्वौ द्वौ शशाङ्कौ चरतः, पूर्वपश्चिमयोर्दिशोः । अर्वाक् शिखाया एकैक, एकैकः परतोऽपि च ॥ ४९ ॥ एवं रवीन्दवो येऽग्रे, सन्ति मर्त्योत्तरावधि । जम्बूद्वीपपुष्पदन्तसमश्रेण्या चरन्ति ते ॥ ५० ॥ यथोत्तरं यद्धिकाधिकक्षेत्राक्रमेऽपि ते । पर्याप्नुवन्ति सह तद्गत्याधिक्यं यथोत्तरम् ॥ ५१ ॥ दृश्यते भ्रमतां श्रेण्या, मेढीमनु गवामिह । अर्वाचीनापेक्षयाऽन्यगत्याधिक्यं यथोत्तरम् ॥ ५२ ॥ एवं सर्वेऽनुवर्त्तन्ते, जम्बूद्वीपेन्दुभास्कराः ।

५

१०

१५

मण्डलान्तरसंचारायनाहर्वृद्धिहानिभिः ॥ ५३ ॥ ततो जम्बूद्वीप इव, मर्त्योत्तराचलावधि । यदाऽहर्मेरुतोऽपाच्यां, तदैवोत्तरतोऽप्यहः ॥ ५४ ॥ सहैवैवं निशा मेरोः, पूर्वपश्चिमयोर्दिशोः । एवं जम्बूद्वीपरीतिः, सर्वत्राप्यनुवर्त्तते ॥ ५५॥ उक्तं च सूर्यप्रज्ञप्तौ—'जया णं लवणसमुद्दे दाहिणद्धे दिवसे भवति तया णं उत्तरद्धेवि दिवसे भवति, तया णं लवणसमुद्दे पुरिमपच्चत्थिमे राई भवइ, एवं जहा जंबुद्दीवे दीवे तहेव" एवं धातकीखण्डकालोदपुष्कराद्धसूत्राण्यपि ज्ञेयानि । नन्वत्र षोडशसहस्रोच्चया शिखयाऽम्बुधौ । ज्योतिष्काणां संचरतां, व्याघातो न गतेः कथम्?॥५६॥ ब्रूमोऽत्र ये ज्योतिषिकविमाना लवणाम्बुधौ । ते भिन्दन्तः संचरन्ति, जलस्फटिकजा जलम् ॥५७॥ तदेतेषां जलकृतो, व्याघातो न गतेर्भवेत् । जलस्फटिकरत्नं हि, स्वभावाज्जलभेदकृत् ॥५८॥ ऊर्द्धलेश्यास्तथैते, विमाना लवणोदधौ । ततः शिखायामप्येषां, प्रकाशः प्रथतेऽभितः ॥ ५९ ॥ सामान्यस्फटिकोत्थानि, शेषेषु द्वीपवार्द्धिषु । ज्योतिष्काणां विमानानि, नीचैःसर्पन्महांसि च ॥ ६० ॥ तथाह विशेषणवती—"सोलससाहस्सियाए सिहाए कहं जोइसियविघातो न भवति ?, तत्थ भन्नइ, जेणं सूरपण्णत्तीए भणियं—"जोइसियविमाणाइं सव्वाइं हवंति फालियमयाइं । दगफालियामया पुण लवणे जे जोइसविमाणा ॥ १ ॥" जं सव्वदीवसमुद्देसु फालियामयाइं लवणसमुद्दे चेव केवलं दगफालियामयाइं तत्थेदमेव कारणं—मा उदएण विघाओ भवउत्ति, जं सूरपण्णत्तीए चेव भणियं—लवणंतो (णे जे) जोइसिया उद्धलेसा भवंति णायव्वा ।



२८

२५

॥ २६३ ॥

२७

१–२ यद्यप्यत्र सामान्येन सूर्यप्रज्ञप्तिनाम्ना गाथाद्वयमेतत् संमतितया दर्शितं परमेतत् सूर्यप्रज्ञप्तिनिर्युक्तिगतं ज्ञेयं, यतः 'अद्धकविट्ठेति'गाथावृत्तौ श्रीदेवभद्रा यत् सूर्यप्रज्ञप्तिनिर्युक्तिः—'जोइसियविमाणाई'त्याद्युदितवन्तः ।

तेणं परं जोइसिया अहलेसागा ( मु ) णेयव्वा ॥ १ ॥ तंपि उद्गमालावभासणत्थमेव, लोगठिई एसत्ति" एवं चत्वारोऽत्र सूर्याश्चत्वारश्च सुधांशवः । नक्षत्राणां शतमेकं, प्रज्ञप्तं द्वादशोत्तरम् ॥ ६१ ॥ द्विपञ्चाशत्स-मधिकं, ग्रहाणां च शतत्रयम् । प्रमाणमथ ताराणां, यथाऽऽम्नायं निरूप्यते ॥ ६२ ॥ द्वे लक्षे सप्तषष्टिश्च, सह-स्राणि शतानि च । नवैव कोटाकोटीनां, प्रोक्तानि तत्त्ववेदिभिः ॥ ६३ ॥ अत्रायमाम्नायः—यत्र द्वीपे समुद्रे वा, प्रमाणं ज्ञातुमिष्यते । ग्रहनक्षत्रताराणां, तत्रत्यचन्द्रसङ्ख्यया ॥ ६४ ॥ एकस्य शशिनो गुण्यो, वक्ष्यमाणः परिच्छदः । एवं ग्रहोडुताराणां, मानं सर्वत्र लभ्यते ॥ ६५ ॥ एकशशिपरिवारश्चायम्—अष्टाशीतिर्ग्रहा ऋक्षा-ण्यष्टाविंशतिरेव च । शराश्वाङ्करसरसा ( ६६९७५ ) स्ताराणां कोटिकोटयः ॥ ६६ ॥

लवणाब्धौ च कालोदे, स्वयम्भूरमणेऽपि च । भूयस्यो मत्स्यमकरकूर्माद्या मत्स्यजातयः ॥ ६७ ॥ तत्रास्मिँ-ल्लवणाम्भोधावुत्सेधाङ्गुलमानतः । योजनानां पञ्च शतान्युत्कृष्टमत्स्यभूघनम् ॥ ६८ ॥ शतानि सप्त कालोदे, सहस्रमंतिमेऽम्बुधौ । गुर्वङ्गमानं मत्स्यानामल्पमत्स्याः परेऽब्धयः ॥ ६९ ॥ स्युर्योनिप्रभवा जातिप्रधानाः कुल-कोटयः । लवणे सप्त मत्स्यानां, नव कालोदवारिधौ ॥ ७० ॥ अर्द्धत्रयोदश तथा, मत्स्यानां कुलकोटयः । स्वयम्भूरमणाम्भोधौ, प्रज्ञप्ताः परमेष्ठिभिः ॥ ७१ ॥ तथा च जीवाभिगमे—'लवणे णं भंते ! समुद्दे कइ मच्छ-जातिकुलकोडिजोणीपमुहसयसहस्सा पण्णत्ता ?, गो० ! लवणे सत्त, कालोए नव, सयंभूरमणे अद्धतेरस सत्ति' जम्बूद्वीपे प्रविशन्ति, मत्स्या लवणतोयधेः । नवयोजनप्रमाणा, जगतीविवराध्वना ॥ ७२ ॥ एवं च—

मत्स्यानां मानजातयः समुद्रवर्णनोपसंहारश्च

क्वचिदयमुदधिः सुधांशुचन्द्रातपघनसारसमुज्ज्वलश्चकास्ति । गतशिखशिरसः शिखाभिरामो, रहसि हसन्निव वारिधीनशेषान् ॥ ७३ ॥ क्वचिदुदयदमन्दभानुतेजो, घुसृणरसप्रसरारुणान्तरालः । प्रकटमिव वहन्नदीषु रागं, हृदि रसतः पतितासु वल्लभासु ॥ ७४ ॥ युग्मम् ॥ क्वचिदनणुगुणैर्विभाति मुक्तामणिभिरुडुप्रतिबिम्बितैरिवान्तः । अविरतगतिखिन्नभानुमुक्तैः, क्वचन करप्रकरैरिव प्रवालैः ॥ ७५ ॥ क्वचन जलगजैर्नियुद्धसज्जैरसकृदुदस्तकरोद्धुरैः करालः । जगदुपकृतिकारिनीरपानोपनतघनेषु धृतप्रतीभशङ्कैः ॥ ७६ ॥ स्थलचरसमसर्वजातिसत्त्वाकृतिमदनेकझषौघपूर्णमध्यः । प्रलयतरलितं जगद्दधानो, हरिरिव कुक्षिनिकेतने कृपार्द्रः ॥ ७७ ॥ (प्रमुदितवदना प्रभाश्च) क्वचिदिह कमलायाः कौतुकादारमंत्या, जलचरनरकन्यालीषु हल्लीसकेन । अयमुपनयतीवापत्यरागैकगृध्नः, पवनजवनवेलागर्जिवाद्यं विनोदात् ॥ ७८ ॥ तरलतरतरङ्गोत्तुङ्गरङ्गत्तुरङ्गः, प्रसरदतुलवेलामत्तमातङ्गसैन्यः । अतिविपुलमनोज्ञद्वीपदुर्गैरुदग्रः, कलयति नृपलक्ष्मीं वाहिनीनां विवोढा ॥ ७९ ॥ (मालिन्यौ) स्वच्छोन्मूर्च्छदतुच्छमत्स्यपटलीपुच्छोच्छलच्छीकरच्छेदोत्सेकितबुद्बुदार्बुदमिषोद्भिन्नभ्रमाम्भःकणः । हेलोत्प्लाविततुङ्गपर्वतशतोत्सर्पत्तरङ्गोद्धतो, वीरंमन्य इवैष चिक्रमिषया दिग्भूभृतां धावति ॥ ८० ॥ कुद्दालखण्डलवज्रमण्डलगलज्ज्वालाकरालानलत्रस्तानेकगिरीन्द्रकोटिशरणं कल्पद्रुमाणां वनम् । तत्तद्वस्तुवदान्यतातरलितैरभ्यर्थितो निर्जरैर्यो रत्नाकर इत्यनेककविभिर्नानाविकल्पैः स्तुतः ॥ ८१ ॥ (शार्दूलविक्रीडिते) निर्व्रीडक्रीडदम्भश्चरनरतरुणीक्लृप्तदीपोपचारैर्नूनं रत्नैरयत्नोज्ज्वलघनघृणिभिः क्वापि दीप्रांतरालः ।

२०

२५


२८

क्वापि प्रासप्रकर्षः पृथुमकरकराकृष्टपाठीनपीठभ्रस्यन्नक्रप्रमोदोल्लुलनचलजलोत्तिसक्तडिंडीरपिंडैः ॥ ८२ ॥ ( स्रग्धरा ) दशभिरादिकुलकं ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, संपूर्त्ति सुखमेकविंशतितमः सर्गो मनोज्ञोऽगमत् ॥ ८३ ॥ ग्रन्थाग्रं ३३७ ॥

॥ इति श्रीलोकप्रकाशे एकविंशतितमः सर्गः समाप्तः ॥

## ॥ अथ द्वाविंशतितमः सर्गः प्रारभ्यते ॥

अथास्माल्लवणाम्भोधेरनन्तरमुपस्थितः । वर्ण्यते धातकीखण्डद्वीपो गुरुप्रसादतः ॥ १ ॥ वृक्षेण धातकीनाम्ना, यदसौ शोभितः सदा । वक्ष्यमाणस्वरूपेण, ततोऽयं प्रथितस्तथा ॥ २ ॥ चतुर्योजनलक्षात्मा, चक्रवालतयाऽस्य च । विस्तारो वर्णितः पूर्णज्ञानालोकितविष्टपैः ॥ ३ ॥ परिक्षेपः पुनरस्य, कुक्षिस्थद्वीपवारिधेः । त्रयोदशलक्षरूपः, क्षेत्रलब्धोऽयमीरितः ॥ ४ ॥ लक्षाः किलैकचत्वारिंशत्सहस्राण्यथो दश । योजनानां नवशती, किञ्चिदूनैकषष्टियुक् ॥ ५ ॥ अयं कालोदपार्श्वेऽस्य, परिधिश्चरमो भवेत् । आद्यस्तु लवणाम्भोधेरन्ते यः कथितः पुरा ॥ ६ ॥ मध्यमः परिधिर्लक्षाण्यष्टाविंशतिरेव च । षट्चत्वारिंशत्सहस्राः, पञ्चाशद्योजनाधिकाः ॥ ७ ॥ जम्बूद्वीपवदेषोऽपि, द्वारैश्चतुर्भिरञ्चितः । तेषां नामप्रमाणादि, सर्वं तद्वद्वेदिह ॥ ८ ॥ किंत्वे-

धातकीखण्डे क्षेत्रव्यवस्था

नद्वारपालानां, विजयादिसुधाभुजाम् । परस्मिन् धातकीखण्डे, राजधान्यो निरूपिताः ॥ ९ ॥ दश लक्षा योजनानां, सहस्राः ससविंशतिः । पञ्चत्रिंशा ससशती, मिथो द्वारामिहान्तरम् ॥ १० ॥ दक्षिणस्यामुदीच्यां च, द्वीपस्यैतस्य मध्यगौ । इषुकारौ नगवरौ, जगदाते जगद्धितैः ॥ ११ ॥ योजनानां पञ्च शतान्युच्चौ सहस्रविस्तृतौ । चत्वारि योजनानां च, लक्षाण्यायामतः पुनः ॥ १२ ॥ अत एव स्पृष्टवन्तौ, कालोदलवणोदधी । आभ्यां संगन्तुमन्योऽन्यं, भुजाविव प्रसारितौ ॥ १३ ॥ कूटैश्चतुर्भिः प्रत्येकं, शोभितौ रत्नभासुरैः । चैत्यमेकैकं च तत्र, कूटे कालोदपार्श्वगे ॥ १४ ॥ चतुर्भिः कुलकं ॥ आभ्यां द्वाभ्यामिषुकारपर्वताभ्यामयं द्विधा । द्वीपो निर्दिश्यते पूर्वपश्चिमार्द्धविभेदतः ॥ १५ ॥ यत्र जम्बूद्वीपमेरोः, प्राच्यां पूर्वार्द्धमस्य तत् । तस्य प्रतीच्यामर्द्धं यत्तत्पश्चिमार्द्धमुच्यते ॥ १६ ॥ द्वयोरप्यर्द्धयोर्मध्ये, एकैको मन्दराचलः । तयोरपेक्षया क्षेत्रव्यवस्थाऽत्रापि पूर्ववत् ॥ १७ ॥ तथाहि—अपाच्यामिषुकारो य, इहत्यमेर्वपेक्षया । पूर्वतस्तस्य भरतक्षेत्रं प्रथमतो भवेत् ॥ १८॥ ततो हैमवतक्षेत्रं, हरिवर्षं ततः परम् । ततो महाविदेहाख्यं, रम्यकाख्यं ततः परम् ॥ १९॥ ततश्च हैरण्यवतमैरावतं ततस्ततः । औत्तराह इषुकार, एषा पूर्वार्द्धसंस्थितिः ॥२०॥ पश्चिमायामपि तस्माद्दाक्षिणात्येषुकारतः । प्रथमं भरतक्षेत्रं, ततो हैमवताभिधम् ॥ २१ ॥ एवं यावदौत्तराह, इषुकारधराधरः । पूर्वार्द्धवत्क्षेत्ररीतिरेवं पश्चिमतोऽपि हि ॥ २२ ॥ द्वयोरप्यर्द्धयोरेषां, क्षेत्राणां सीमकारिणः । षट् षट् वर्षधराः प्राग्वत्, सर्वेऽपि द्वादशोदिताः ॥ २३ ॥

जम्बूद्वीपवर्षधराद्रिभ्यो द्विगुणविस्तृताः । तुङ्गत्वेन तु तैस्तुल्याः, सर्वे वर्षधराद्रयः ॥ २४ ॥ आयामतश्च-तुर्लक्षयोजनप्रमिता अमी । पर्यन्तस्पृष्टकालोदलवणोदधिवारयः ॥ २५ तथाह्यत्र हिमवतोर्गिर्योः शिखरिणोरपि । विष्कम्भोऽयं जिनैरुक्तः, पूर्वापरार्द्धभाविनोः ॥ २६ ॥ योजनानां शतान्येकविंशतिः पञ्च चोपरि । कलाः पञ्चैवाथ महाहिमवतोश्च रुक्मिणोः ॥ २७ ॥ अष्टावेव सहस्राणि, योजनानां चतुःशती । एकविंशत्य-भ्यधिका, तथैवैककलाधिका ॥ २८ ॥ त्रयस्त्रिंशत्सहस्राणि, योजनानां शतानि षट् । स्फुरच्चतुरशीतीनि, कलाश्चतस्र एव च ॥ २९ ॥ विष्कम्भोऽयं निषधयोर्गिर्योर्नीलवतोरपि । द्वादशानामप्यमीषां, व्याससंकलना त्वियम् ॥ ३० ॥ लक्षमेकं योजनानां, षट्सप्ततिसहस्रयुक् । शतान्यष्टौ द्विचत्वारिंशता समधिकानि च ॥३१॥ द्वे योजनसहस्रे च, विष्कम्भ इषुकारयोः । तस्मिंश्च योजितेऽत्राद्रिरुद्धं क्षेत्रमिदं भवेत् ॥ ३२ ॥ एकं लक्षं योजनानां, सहस्राण्यष्टसप्ततिः । द्विचत्वारिंशदधिकान्यष्टौ शतानि चोपरि ॥ ३३ ॥

अथैतल्लवणाम्भोधिपरिधेरपनीयते । द्वादशाभ्यां शताभ्यां च, तेन न्यूनः स भज्यते ॥ ३४ ॥ लब्धानि योजनसहस्राणि षट् षट् शतानि च । चतुर्दशाढ्यानि भागाश्चैकोनत्रिंशकं शतम् ॥ ३५ ॥ द्वादशाढ्यशतद्व-न्द्वक्षुण्णैकयोजनोद्भवाः । तत्रेयत्पृथवस्तेऽंशा, द्विशती द्वादशाभवन् ॥ ३६ ॥ अथ चैतादृशैरंशैर्यथास्वमुपक-ल्पितैः । चतुर्दशानां क्षेत्राणां, लभ्यते मुखविस्तृतिः ॥ ३७ ॥ भागकल्पना चैवं—एकैकोऽंशो भरतयो २-स्तथैरवतयोरपि २ । चत्वारो हैमवतयो ८ हैरण्यवतयोरपि ८ ॥३८॥ हरिवर्षाख्ययोरेवं १६, तथा रम्यकयोरपि

५

१०

१४

१६। पूर्वापरार्द्धं गतयोरंशाः षोडश षोडश ॥ ३९ ॥ चतुष्षष्टिश्चतुष्षष्टिर्विदेहक्षेत्रयोर्द्वयोः। द्विशती द्वादश चैवं, भागाः स्युः सर्वसंख्यया ॥ ४० ॥ भरतैरवतेभ्यो वा, चतुर्घ्नी मुखविस्तृतिः । विज्ञेया हैमवतयोः, हैरण्यवतयोरपि ॥ ४१ ॥ षोडशघ्ना हरिवर्षरम्यकद्वयविस्तृतिः । तथा चतुष्षष्टिगुणा, विदेहक्षेत्रयोर्द्वयोः ॥ ४२ ॥ एवं च धातकीखण्डे, मध्यमात्परिधेरपि । पूर्वोदितादुक्तशैलरुद्धक्षेत्रविनाकृतात् ॥ ४३ ॥ द्वादशाढ्यशतद्वन्द्वविभक्तादुपकल्पितैः । मुखविस्तृतिवद्भागैर्लभ्यैषां मध्यविस्तृतिः ॥ ४४ ॥ तथाऽत्र कालोदासन्नात्पर्यन्तपरिधेरपि । नगरुद्धक्षेत्रहीनाद्, द्वादशद्विशताहृतात् ॥ ४५ ॥ मुखविस्तृतिवद्भागैर्यथास्वमुपकल्पितैः । चतुर्दशानां क्षेत्राणां, लभ्या पर्यन्तविस्तृतिः ॥ ४६ ॥ एवं च वक्ष्यमाणायां, क्षेत्रविविधविस्तृतौ । मा भूत्संमोह इत्येष, आम्नायः प्राक् प्रपञ्चितः ॥ ४७ ॥ किंच-कृत्वाऽद्रिरुद्धं क्षेत्रं तत्सहस्रद्वितयोज्झितम् । कर्त्तव्याश्चतुरशीतिस्तस्याप्यंशा दिशाऽनया ॥ ४८ ॥ एकैकोऽंशो हिमवतोस्तथा शिखरिणोरपि । अंशाश्चत्वारश्च महाहिमवतोश्च रुक्मिणोः ॥ ४९ ॥ षोडशांशा निषधयोर्नीलवन्नगयोरपि। एवं चतुरशीत्याऽंशैर्वर्षभूधरविस्तृतिः॥ ५० ॥ अत एव च वक्ष्यन्ते, भागाश्चतुरशीतिजाः । वर्षाद्रिमानेऽस्मिन् पुष्करार्द्धेऽपि योजनोपरि ॥ ५१ ॥ क्षेत्राण्येतानि दधति, चक्रारकान्तराकृतिम् । क्षाराब्धिदिशि संकीर्णान्यन्यतो विस्तृतानि यत् ॥ ५२ ॥ जम्बूद्वीपक्षारवार्द्धिमध्यनाभिमनोहरे । वर्षाचलेषुकाराद्रिचतुर्दशारकाश्रिते ॥ ५३ ॥ अस्मिन् महाद्वीपचक्रे, कालोदापःप्रधिस्थिरे । अरकान्तरवद्भाति, क्षेत्राणीति चतुर्दश ॥ ५४ ॥ क्षेत्राणामिह पर्यन्त, एषां कालोदसन्निधौ ।

२० २५ ॥ २६६ ॥ २८

मुखं च लवणाम्भोधिसमीपे परिभाषितम् ॥ ५५ ॥ ज्ञेयाः क्षेत्रप्रकरणे, सामान्येनोदिता लवाः । द्वादशद्विश-
तक्षुण्णयोजनोत्था बुधैरिह ॥ ५६ ॥ तत्रेह याम्येषुकारहिमवत्पर्वतान्तरे । पूर्वार्द्धे प्रथमं भाति, क्षेत्रं भरत-
नामकम् ॥ ५७ ॥ चतुर्दशानि षट्षष्टिशतानि विस्तृतं मुखे । एकस्य योजनस्यांशाश्चैकोनत्रिंशकं शतम्
॥ ५८ ॥ योजनानां सहस्राणि, मध्ये द्वादश विस्तृतम् । सैकाशीतिं पञ्चशतीं, तथा षट्त्रिंशतं लवान् ॥ ५९॥
अष्टादश सहस्राणि, योजनानां शतानि च । पञ्चैव सप्तचत्वारिंशद्योजनाधिकान्यथ ॥ ६० ॥ पञ्चपञ्चाशदधि-
कमंशानां नियतं शतम् । एतावद्भरतक्षेत्रं, पर्यन्ते विस्तृतं मतम् ॥ ६१ ॥ त्रैराशिकादिना भाव्यो, विस्तारो-
ऽन्यत्र तु स्वयम् । तादृक्क्षेत्राकृत्यभावान्नात्र ज्याधनुरादिकम् ॥ ६२ ॥ मध्यभागेऽस्य वैताढ्य, उच्चत्वपृथुता-
दिभिः । जम्बूद्वीपस्थभरतवैताढ्य इव सर्वथा ॥ ६३ ॥ आयामतः किन्तु चतुर्लक्षयोजनसंमितः । युक्तश्चो-
भयतः पञ्चपञ्चाशता महापुरैः ॥ ६४ ॥ उत्तरार्द्धमध्यखण्डे, हिमवद्गिरिसन्निधौ । जम्बूद्वीपर्षभकूटतुल्योऽत्र
वृषभाचलः ॥ ६५ ॥ शेषा सर्वापि व्यवस्था, षट्खण्डभवनादिका । जम्बूद्वीपभरतवद्, ज्ञेयाऽत्राप्यविशेषिता
॥ ६६ ॥ तथाऽत्र भरतादीनां, तैर्जम्बूद्वीपगैः सह । द्रव्यक्षेत्रकालभावपर्यायाः स्युः समाः क्रमात् ॥ ६७ ॥
परोऽस्माद् हिमवानद्रिः, पञ्चाढ्यानेकविंशतिम् । शतांस्ततो लवान् द्वाविंशतिं चतुरशीतिजान् ॥ ६८ ॥ ननु
जम्बूद्वीपहैमवतो माने द्विगुणिते सति यथोक्ता योजनोपरि एकोनविंशतिजाः पञ्च भागा भवन्ति, अत्र च
चतुरशीतिजा द्वाविंशतिरुक्तास्ततः कथमस्य ततो द्वैगुण्यं न व्याहन्यते ?, अत्रोच्यते—एषां भागानां द्वैवि-

ध्येऽपि विशेषः कोऽपि नास्ति, यतो यावदेकोनविंशतिजैः पञ्चभिर्भागैर्भवति तावदेव चतुरशीतिजैर्द्वाविंशत्यापि भवति, उभयत्रापि किञ्चिदधिकयोजनचतुर्थभागस्यैव जायमानत्वादिति, एवमग्रेऽपि भाव्यं । पद्मह्रदाभिधानोऽस्य, मस्तकेऽस्ति महाह्रदः । योजनानां द्वे सहस्रे, दीर्घः सहस्रविस्तृतः ॥ ६९ ॥ दशयोजनरूपोऽस्योद्वेधोऽब्जवलयादि च । जम्बूद्वीपपद्मह्रद, इवेहापि विभाव्यताम् ॥ ७० ॥ एवं येऽन्ये वर्षधराचलेषु कुरुषु ह्रदाः । तथा नदीनां कुण्डानि, द्वीपाः कुण्डगताश्च ये ॥ ७१ ॥ अविशेषेण ते सर्वेऽप्युद्वेधोच्छ्रयमानतः । जम्बूद्वीपस्थायितत्तद्द्वीपकुण्डह्रदैः समाः ॥ ७२ ॥ ततस्तदुद्विद्धतादि, तथाऽब्जवलयादि च । अनुच्यमानमप्यत्र, स्वयं ज्ञेयं यथाऽऽस्पदम् ॥ ७३ ॥ विष्कम्भायामतस्त्वेते, सर्वेऽपि द्विगुणास्ततः । व्यासोद्वेधाभ्यां च नद्यो, व्यासैर्वनमुखान्यपि ॥७४॥ तथाहुः–"वासहरकुरुसु दहा नईण कुण्डाइं तेसु जे दीवा । उव्वेहुस्सेहतुल्ला विक्खंभायामओ दुगुणा ॥ ७५ ॥ सव्वाओवि नईओ विक्खंभोव्वेहदुगुणमाणाओ । सीयासीओयाणं वणाणि दुगुणाणि विक्खंभे ॥ ७६ ॥" एवं च–गङ्गासिन्धुरक्तवतीरक्तेत्याख्यास्पृशामिह । षट्त्रिंशशतसङ्ख्यानां, नदीनां ह्रदनिर्गमे ॥ ७७ ॥ अर्द्धार्द्धानि योजनानि, विष्कम्भो द्वादश स्मृतः । पर्यन्ते च पञ्चविंशं, योजनानां शतं भवेत् ॥ ७८ ॥ आसां तावन्ति कुण्डानि, विस्तृतान्यायतानि च । विंशं हि योजनशतं, द्वीपाः षोडशयोजनाः ॥७९॥ स्वर्णकूला रूप्यकूला, रोहिता रोहितांशिका । इत्यष्टादौ विस्तृताः स्युः, पञ्चविंशतियोजनीम् ॥ ८० ॥ अन्ते च सार्द्धां द्विशतीं, सर्वत्रैतावदेव च । चतुर्विंशतिरप्यन्तर्नद्यः स्युरिह विस्तृताः ॥ ८१ ॥ चत्वा-

धातकी०
वर्षधरमानादि

२०

२५
॥२६७॥

२८

रिंशा द्विशत्यासां, कुण्डेष्वायतिविस्तृती । द्वात्रिंशद्योजनान्यासां, द्वीपा आयतविस्तृताः ॥ ८२ ॥ नारीकान्ता
नरकान्ता, हरिकान्ताभिधा नदी । हरिसलिलेत्यष्टानां, सरितां मूलविस्तृतिः ॥ ८३ ॥ पञ्चाशद्योजनान्यासां,
पर्यन्तविस्तृतिः पुनः । योजनानां पञ्च शतान्युक्तानि तत्त्ववेदिभिः ॥ ८४ ॥ आसां कुण्डायतिव्यासावशी-
तियुक् चतुःशती । चतुष्षष्टिर्योजनानि, द्वीपाश्चायतविस्तृताः ॥ ८५ ॥ शीताशीतोदाभिधानां, निम्नगानां
चतसृणाम् । आद्यान्तयोः क्रमाद्व्यासः, शतं सहस्रमेव च ॥ ८६ ॥ सषष्टिर्नवशत्यासां, कुण्डेष्वायतिवि-
स्तृती । अष्टाविंशं शतं चासां, द्वीपा आयतविस्तृताः ॥ ८७ ॥ षट्त्रिंशं शतमष्टौ च, पुनरष्टौ चतुष्टयम् ।
चतुर्विधानामित्यासामाद्यन्तोद्विद्धता क्रमात् ॥ ८८ ॥ गव्यूतं योजने सार्द्धे, द्वौ क्रोशौ पञ्चयोजनी । योजनं
दश चैतानि, योजने द्वे च विंशतिः ॥ ८९ ॥ अन्तर्नदीनां सर्वासामपि प्रारभ्य मूलतः । पर्यन्तं यावदुद्वेध-
स्तुल्यः स्यात्पञ्चयोजनी ॥ ९० ॥ स्वकीयमूलविस्तृत्या, जिह्विकाविस्तृतिः समा । मूलोद्वेधसमश्चासां, सर्वासां
जिह्विकोच्छ्रयः ॥ ९१ ॥ उक्तशेषं तु स्वरूपं, सकलं वेदिकादिकम् । एतास्वप्यनुसंधेयं, जम्बूद्वीपनदीगतम्
॥ ९२ ॥ पूर्वाभिमुख्याः पूर्वार्द्धे, कालोदे यान्ति निम्नगाः । क्षारोदमपरोन्मुख्योऽपरार्द्धे तु विपर्ययः ॥ ९३ ॥
आसामित्युक्तो विशेषः, प्रसङ्गाल्लाघवाय च । तत्र तत्र नाममात्रं, स्थानाशौन्याय वक्ष्यते ॥ ९४ ॥ अथ
प्रकृतं–अथैतस्मात्पद्महृदान्नद्यस्तिस्रो विनिर्गताः । गङ्गासिन्धुरोहितांशाः, पूर्वापरोत्तराध्वभिः ॥ ९५ ॥ तत्र
गङ्गा च सिन्धुश्च, पूर्वपश्चिमयोर्दिशोः । निर्गत्य स्वदिशोर्गत्वा, यथार्हं पर्वतोपरि ॥ ९६ ॥ स्वस्वावर्त्तनकूटाभ्यां,

५ १० १४

निवर्त्य दक्षिणामुखे । कुण्डे निपत्य विशतः, कालक्षारोदधी क्रमात् ॥ ९७ ॥ रोहितांशा तूत्तरस्यां, योजनानि नगोपरि । द्विपञ्चाशां पञ्चशतीं, त्रिपञ्चाशल्लवाधिकाम् ॥ ९८ ॥ अतिक्रम्य निजे कुण्डे, निपत्य योजनान्तरा । शब्दापातिगिरेः प्रत्यक्, प्रवृत्ता लवणेऽविशत् ॥ ९९ ॥ अथास्माद्धिमवच्छैलादुत्तरस्यां व्यवस्थितम् । क्षेत्रं हैमवताभिख्यमाकृत्या भरतोपमम् ॥ १०० ॥ षड्विंशतिं सहस्राणि, योजनानां चतुःशतीम् । अष्टपञ्चाशां लवान् द्वानवतिं विस्तृतं मुखे ॥ १ ॥ पञ्चाशतं सहस्राणि, चतुर्विंशं शतत्रयम् । चतुश्चत्वारिंशमंशशतं मध्ये च विस्तृतम् ॥ २ ॥ योजनानां सहस्राणि, चतुःसप्ततिमन्ततः । नवत्याढ्यं शतं षण्णवत्याढ्यं च शतं लवान् ॥ ३ ॥ मध्येऽस्य शब्दापातीति, वृत्तवैताढ्यपर्वतः । सहस्रयोजनोत्तुङ्गः, सहस्रं विस्तृतायतः ॥ ४ ॥ अयं जम्बूद्वीपशब्दापातिना सर्वथा समः । तद्वत्सप्तान्येऽपि वृत्तवैताढ्या इह तत्समाः ॥ ५ ॥ अद्रिरस्यान्ते च महाहिमवान् योजनानि सः । एकविंशानि चतुरशीतिशतान्यथांशकान् ॥ ६ ॥ पूर्वोक्तमानांश्चतुरो, विस्तीर्णस्तस्य चोपरि । पद्मैः परिष्कृतो भाति, महापद्माभिधो ह्रदः ॥ ७ ॥ योजनानां सहस्राणि, चत्वार्येवायमायतः । विष्कम्भतो योजनानां, सहस्रद्वितयं भवेत् ॥ ८ ॥ दक्षिणस्यामुदीच्यां च, नद्यौ द्वे निर्गते ततः । रोहिता हरिकान्ता च, पर्वतोपर्युभे अपि ॥ ९ ॥ योजनानां शतान् द्वात्रिंशतं गत्वा दशोत्तरान् । चतुश्चत्वारिंशतं च, भागान् जिह्विकया गिरेः ॥ १० ॥ पततः स्वस्वकुण्डेऽथ, कालोदं याति रोहिता । द्विधा कृत्वा हैमवतं, वैताढ्यायोजनान्तरा ॥ ११ ॥ हरिकान्ता च वैताढ्यायोजनद्वितयान्तरा ।

२०

२५

॥२६८॥

२८

हरिवर्षं विभजंती, प्रयाति लवणोदधौ ॥ १२ ॥ अथोदीच्यां क्षेत्रमस्माद्धरिवर्षं विराजते । सश्रीकमध्यं यद्गन्धापातिवैताढ्यभूभृता ॥ १३ ॥ त्रयस्त्रिंशाष्टपञ्चाशच्छताढ्यां लक्षयोजनीम् । षट्पञ्चाशमंशशतं, विस्तीर्णमिदमानने ॥ १४ ॥ द्वे लक्षे द्वादशशतीं, मध्येऽष्टानवतिं तथा । योजनानामंशशतं, द्विपञ्चाशं च विस्तृतम् ॥ १५ ॥ योजनानां षण्णवत्या, सहस्त्रैः समन्वितम् । लक्षद्वयं सप्तशतीं, त्रिषष्ट्याऽभ्यधिकां तथा ॥ १६ ॥ अष्टचत्वारिंशमंशशतं पर्यन्तविस्तृतम् । शेषाऽस्य जम्बूद्वीपस्थहरिवर्षसमा स्थितिः ॥ १७ ॥ क्षेत्रस्यास्य च पर्यन्ते, निषधो नाम भूधरः । त्रयस्त्रिंशत्सहस्त्राणि, योजनानां शतानि षट् ॥ १८ ॥ स्याद्विस्तीर्णः स चतुरशीतीन्यंशाश्च षोडश । तिगिञ्छिनामा वर्वर्त्ति, महाह्रदोऽस्य चोपरि ॥ १९ ॥ सहस्राणि योजनानामष्टावायामतः स च । विष्कम्भतस्तु चत्वारि, सहस्राणि भवेदसौ ॥ २० ॥ दक्षिणस्यामुदीच्यां च, ह्रदादस्मान्निरीयतुः । वाहिन्यौ हरिसलिलाशीतोदे ते नगोपरि ॥ २१ ॥ योजनानां सहस्राणि, चतुर्दश शतानि च । अष्टौ द्विचत्वारिंशानि, परिक्रम्याष्ट चांशकान् ॥ २२ ॥ स्वस्वजिह्विकया स्वस्वकुण्डे निपततस्ततः । हरिः स्ववृत्तवैताढ्याद्योजनद्वितयान्तरा ॥ २३ ॥ हरिवर्षाभिधं वर्षं, द्विधा विदधती सती । कालोदाब्धौ निपतति, रमेवाच्युतवक्षसि ॥ २४ ॥ चतुर्भिः कलापकम् । शीतोदा च देवकुरुभद्रसालविभेदिनी । चतुर्भिर्योजनैर्मेरोर्दूरस्था पश्चिमोन्मुखी ॥ २५ ॥ प्रत्यग्विदेहविजयसीमाकरणकोविदा । गोत्रवृद्धेव मध्यस्था, यात्यन्ते लवणोदधिम् ॥ २६ ॥ शीताप्येवं नीलवतो, निर्गता केसरिह्रदात् । कुण्डोत्थितोत्तरकुरुभद्रसालप्रभेदिनी ॥ २७ ॥

चतुर्भिर्गोजनैर्मेरोर्दूरस्था पूर्वतोमुखी । प्राग्विदेहान् विभजंती, याति कालोदवारिधौ ॥ २८ ॥ वाच्योदीच्यां रम्यकान्ता, तथैरवतादिका । क्षेत्रत्रयी शिखर्याद्या, नीलान्ता च नगत्रयी ॥ २९ ॥ यथेयं हरिवर्षान्ता, त्रिवर्षी भरतादिका । उक्ता हिमवदाद्या च, निषधान्ता नगत्रयी ॥ ३० ॥ तद्वत्रिधा क्षेत्रमानमादिमध्यान्तगोचरम् । तावदायामविस्तारा, ह्रदा वर्षधरोपरि ॥ ३१ ॥ तावदेवातिक्रमणं, नदीनां पर्वतोपरि । सैवाकृतिर्नाममात्रे, विशेषः सोऽभिधीयते ॥ ३२ ॥ ऐरावतमुदीच्येषुकारात्स्वस्वगिरेर्दिशि । शिखरी पर्वतोऽन्तेऽस्य, पुण्डरीकह्रदाश्रितः ॥ ३३ ॥ अस्माद्रक्ता रक्तवती, स्वर्णकूला विनिर्ययुः । रक्तैरवतमध्येन, याति कालोदवारिधिम् ॥ ३४ ॥ लवणाब्धौ प्रविशति, तथैव रक्तवत्यथ । स्वर्णकूला तु कालोदं, हैरण्यवतमध्यगा ॥ ३५ ॥ परं शिखरिणः क्षेत्रं, हैरण्यवतनामकम् । विकटापातिना वृत्तवैताढ्येन सुशोभितम् ॥ ३६ ॥ ततो रुक्मी नाम महापुण्डरीकह्रदाश्रितः । गिरिस्ततो रूप्यकूलानरकान्ते विनिर्गते ॥ ३७ ॥ हैरण्यवतमध्येन, क्षारोदं रूप्यकूलिका । कालोदं नरकान्ता च, याति रम्यकमध्यतः ॥ ३८ ॥ ततः परं रुक्मिगिरेः, क्षेत्रं राजति रम्यकम् । मध्ये माल्यवता वृत्तवैताढ्येन विभूषितम् ॥ ३९ ॥ ततोऽपि परतो भाति, नीलवान्नाम पर्वतः । महाह्रदः केसरीति, तस्योपरि विराजते ॥ ४० ॥ शीता च नारीकान्ता च, ततो नद्यौ निरीयतुः । नारीकान्ता रम्यकान्तर्यूदेति लवणोदधिम् ॥४१॥ शीता नदी तु पूर्वोक्तरीत्या कालोदवारिधौ । व्रजति प्राग्विदेहस्थविजयव्रजसीमकृत् ॥ ४२ ॥ योजनं द्वे च विकटापातिमाल्यवतोर्भवेत् । चत्वारि मेरोः स्वक्षेत्रनदीभ्यामन्तरं क्रमात्

२० २५ ॥ २६९ ॥ २८

॥ ४४ ॥ त्रयो-
॥ ४३ ॥ अथास्ति मध्ये नगयोर्नीलवन्निषधाख्ययोः । क्षेत्रं महाविदेहाख्यं, मन्दरालङ्कृतान्तरम्
विंशत्या सहस्रैर्योजनानां त्रिभिः शतैः । चतुस्त्रिंशैः समधिका, लक्षाश्चतस्र एव च ॥ ४५ ॥ द्वादशद्विशत-
क्षुण्णयोजनस्य लवाः पुनः । द्वे शते विस्तीर्णमेतल्लवणाम्भोधिसन्निधौ ॥ ४६ ॥ ततं लक्षाणि मध्येऽष्टावेकप-
ञ्चाशतं शतान् । चतुर्नवत्याढ्यानंशशतं चतुरशीतियुक् ॥ ४७ ॥ अन्ते चैकादश लक्षाः, ससाशीतिं सहस्र-
कान् । चतुष्पञ्चाशान् लवानां, साष्टषष्टिशतं ततम् ॥ ४८ ॥ जातं चतुर्धैतदपि, जम्बूद्वीपविदेहवत् । देवकु-
रूत्तरकुरुपूर्वापरविदेहकैः ॥ ४९ ॥ स्युर्देवकुरवोऽपाच्यामुदीच्यां कुरवः पराः । मेरोः प्राच्यां प्राग्विदेहाः,
प्रतीच्यामपरे पुनः ॥ ५० ॥ शीताशीतोदानदीभ्यां, विदेहास्ते द्विधाकृताः । प्राग्वदेव चतुर्ष्वंशेष्वष्टाष्ट
विजया इह ॥ ५१ ॥ तथैवोदक्कुरुप्राच्यसीमकृन्माल्यवद्गिरेः । आगन्धमादनं सृष्ट्या, क्रमस्तैरेव नामभिः ॥५२॥
चतुर्ष्वंशेष्वन्तरेषु, वक्षस्कारास्तथैव च । चत्वारश्चत्वार एव, तिस्रस्तिस्रोऽन्तरापगाः ॥ ५३ ॥ विजयेष्वेषु
वैताढ्या, नदीकुण्डर्षभाद्रयः । षट् खण्डा राजधान्यश्च, तन्नामानस्तथा स्थिताः ॥ ५४ ॥ तथैव चत्वारोऽ-
प्यंशाः, पर्यन्ते वनराजिताः । केवलं परिमाणानां, विशेषः सोऽभिधीयते ॥ ५५ ॥ वक्षस्कारवनमुखान्तर्न-
दीमेरुकाननैः । विष्कम्भतः संकलितैः, स्याद्राशिर्विजयान् विना ॥ ५६ ॥ लक्षद्वयं षट्चत्वारिंशत्सहस्राः
शतत्रयम् । षट्चत्वारिंशतोपेतं, योजनानामनेन च ॥ ५७ ॥ चतुर्लक्षात्मके द्वीपविष्कम्भे राशिनोज्झिते ।
हृते षोडशभिर्मानं, लभ्यं विजयविस्तृतेः ॥ ५८ ॥ योजनानां सहस्राणि, नव त्र्याढ्या च षट्शती । षट् षोड-

शांशाः प्रत्येकं, ज्ञेया विजयविस्तृतिः ॥ ५९ ॥ एवमिष्टान्यविष्कम्भवर्जितद्वीपविस्तृतेः । स्वस्वसङ्ख्याविभक्ताया, लभ्यतेऽभीष्टविस्तृतिः ॥ ६० ॥ तत्र च–विनाऽद्रीन् विजयादीनां, व्याससङ्कलना त्वियम् । तिस्रो लक्षा द्विनवतिः, सहस्रा योजनात्मकाः ॥ ६१ ॥ अनेन वर्जिते द्वीपविष्कम्भे विहृतेऽष्टभिः । वक्षस्काराद्रिविष्कम्भो, लभ्यः सहस्रयोजनः ॥ ६२ ॥ अन्तर्नदीर्विना शेषव्याससङ्कलना भवेत् । लक्षास्तिस्रोऽष्टनवतिः, सहस्राः पञ्चशत्यपि ॥ ६३ ॥ अनेन वर्जिते द्वीपविष्कम्भे षड्भिराहृते । सार्द्धं द्वे योजनशते, व्यासोऽन्तःसरितामयम् ॥ ६४ ॥ विदेहानां यत्र यावान्, स्याद्व्यासोऽन्तमुखादिषु । तस्मिन् सहस्रोरुशीताशीतोदान्यतरोज्झिते ॥ ६५ ॥ शेषेऽर्द्धिते तत्र तत्र, तावान् भाव्यो विवेकिभिः । विजयान्तर्नदीवक्षस्कारायामः स्वयंधिया ॥ ६६ ॥ द्वयोरप्यर्द्धयोरस्मिन्, द्वीपे वनमुखानि च । वक्षस्कारक्षितिभृतो, विजयाश्चान्तरापगाः ॥ ६७ ॥ लवणोददिशि ह्रस्वाः, क्षेत्रसांकीर्ण्यतः स्मृताः । दीर्घाः कालोदककुभि, क्षेत्रबाहुल्यतः क्रमात् ॥ ६८ ॥ अष्टानां वनमुखानां, कले द्वे विस्तृतिर्लघुः । गुरुश्चतुश्चत्वारिंशाष्टपंचाशच्छती भवेत् ॥ ६९ ॥ तत्र द्वयोर्द्वयोः पूर्वापरार्द्धं वर्त्तिनोस्तयोः । क्षाराब्ध्यासन्नयोः शीताशीतोदासीम्नि सा लघुः ॥ ७० ॥ गुरुस्तु नीलनिषधान्तयोरेतच्च युक्तिमत् । अमीषां वलयाकारं, क्षाराब्धिं स्पृशतां बहिः ॥ ७१ ॥ अपरेषां तु कालोदवलयाभ्यन्तरस्पृशाम् । लघ्वी निषधनीलान्ते, गुर्वी सा सरिदन्तिके ॥ ७२ ॥ तथोक्तं वीरंजयक्षेत्रसमासवृत्तौ–"तथा वनमुखानां विस्तारो द्विगुण उक्तः, परं लवणोदधिदिशि वनमुखपृथुत्वं विपरीतं संभाव्यते, यथा नद्यन्ते कलाद्वयं,



२०

२५
॥२७०॥

२८

गिर्यन्ते चतुश्चत्वारिंशदधिकान्यष्टपञ्चाशच्छतानि पृथुत्व"मिति संप्रदाय इति । बृहत्क्षेत्रसमासवृत्तौ तु एषां जघन्यं मानं नीलवन्निषधान्ते, शीताशीतोदोपान्ते चोत्कृष्टमुक्तं, न च कश्चिद्विशेषोऽभिहितः । अथ देवोत्तरकुरुक्षेत्रसीमाविधायिनः । गजदन्ताकृतीन् शैलान्, चतुरश्चतुरो ब्रुवे ॥ ७३ ॥ तत्र देवकुरूणां यः, प्रत्यग् विद्युत्प्रभो गिरिः । तथोत्तरकुरूणां च, प्रत्यग् यो गन्धमादनः ॥ ७४ ॥ द्वावप्यायामत इमौ, षट्पञ्चाशत्सहस्रकाः । लक्षास्तिस्रो योजनानां, सप्तविंशं शतद्वयम् ॥ ७५ ॥ युग्मम् । अथ देवकुरूणां प्राग्गिरिः सौमनसोऽस्ति यः । तथोत्तरकुरूणां प्राक्, पर्वतो माल्यवांश्च यः ॥ ७६ ॥ एतावायामतः पञ्च, लक्षा एकोनसप्ततिः । सहस्राणि योजनानां, द्विशत्येकोनषष्टियुक् ॥ ७७ ॥ युग्मम् । इदं प्रमाणं पूर्वार्द्धे, भावनीयं विचक्षणैः । परार्द्धे क्षेत्रविस्तारव्यत्यासेन विपर्ययः ॥ ७८ ॥ पूर्वार्द्धे हि भवेत्क्षेत्रं, प्राच्यां विस्तीर्णमन्यतः । संकीर्णमपरार्द्धे तु, प्रत्यक् पृथ्वन्यतोऽन्यथा ॥ ७९ ॥ ततः पूर्वार्द्धे यदुक्तं, मानं प्राचीनशैलयोः । सौमनसमाल्यवतोस्तत्प्रतीचीनयोरिह ॥ ८० ॥ ज्ञेयं विद्युत्प्रभगन्धमादनाद्रयोः परार्द्धके । यत्प्रतीचीनयोस्तत्र, मानं तत्प्राच्ययोरिह ॥ ८१ ॥ एते चत्वारोऽपि शैलाः, स्वस्ववर्षधरान्तिके । सहस्रयोजनव्यासास्तनवो मेरुसन्निधौ ॥ ८२ ॥ शेषवर्णविभागादि, कूटवक्तव्यतादि च । जम्बूद्वीपगजदन्तगिरिवच्चिन्त्यतामिह ॥ ८३ ॥ अथ स्वस्वप्रतीचीनप्राचीनगजदन्तयोः । आयाममानयोर्योगे, धनुर्मानं कुरुद्वये ॥ ८४ ॥ नव लक्षा योजनानां, सहस्राः

१ कालोदध्यासन्नभागापेक्षया एतदभिधाने न क्षतिः, लवणदिशि न विवक्षाऽस्येति ।

पञ्चविंशतिः । तथा शतानि चत्वारि, षडशीत्यधिकानि च ॥ ८५ ॥ भद्रसालायतिर्द्विघ्ना, मेरुविष्कम्भसंयुता । गजदन्तद्वयव्यासहीना ज्या कुरुषु स्फुटा ॥ ८६ ॥ त्रयोविंशत्या सहस्रैरधिकं लक्षयोर्द्वयम् । योजनानामष्टपञ्चाशताधिकं तथा शतम् ॥ ८७ ॥ विदेहमध्यविष्कम्भे, मेरुविष्कम्भवर्जिते । अर्द्धीकृते च प्रत्येकं, लभ्यते कुरुविस्तृतिः ॥ ८८ ॥ सा चेयं–त्रिलक्षीसप्तनवतिः, सहस्राण्यष्टशत्यपि । सप्तसप्तनवतिर्योजनानां द्विनवतिर्लवाः ॥ ८९ ॥ अथापाच्यामुदीच्यां च, नीलवन्निषधाद्रितः । प्रत्येकं यमकाद्री स्तो, जम्बूद्वीपकुरुष्विव ॥ ९० ॥ जम्बूद्वीपयमकवत्स्वरूपमेतयोरपि । सहस्रयोजनोच्चत्वविस्तारायामशालिनोः ॥ ९१ ॥ क्रमात्ततो ह्रदाः पञ्च, तन्नामानस्तथा स्थिताः । तटद्वये दश दश, काञ्चनाचलचारवः ॥ ९२ ॥ ह्रदाः पञ्चाप्यमी तादृग्नामभिः सेविताः सुरैः । तद्वत्पद्माश्रितास्तेभ्यो, द्विगुणायतविस्तृताः ॥ ९३ ॥ तटद्वये दश दश, ये चात्र काञ्चनाद्रयः । सश्रीकास्तेऽपि मानेन, तैर्जम्बूद्वीपगैः समाः ॥ ९४ ॥ किंतु संबद्धमूलास्तेऽमी तु व्यवहिता मिथः । योजनानां शतेनैकादशेन नवमांशिना ॥ ९५ ॥ तच्चैवं—एषां दशानां पृथुत्वे, सहस्रं मिलिते भवेत् । तत्सहस्रद्वयादेकह्रदायामाद्वियोज्यते ॥ ९६ ॥ शेषं स्थितं सहस्रं यन्नवभिस्तद्विभज्यते । अन्तरैः काञ्चनाद्रीणामेवं यथोक्तमन्तरम् ॥ ९७ ॥ जम्बूद्वीपे तु ह्रदानां, सहस्रायामभावतः । न किञ्चित्काञ्चनाद्रीणां, व्यवधानं परस्परम् ॥ ९८ ॥ यमकाद्रिह्रदायामवर्जितात्सप्तभिर्हृतात् । लभ्यन्ते कुरुविष्कम्भात्सप्तान्तराणि तानि च ॥ ९९ ॥ यमकाद्योर्नीलवतस्ताभ्यामाद्यह्रदस्य च । क्रमाच्चतुर्णां ह्रदानां, क्षेत्रान्तस्यान्तिमह्रदात् ॥ २०० ॥



२०

२५



२७

सहस्राः पञ्चपञ्चाशद्योजनानां शतद्वयम् । एकसप्तत्याऽधिकं तद्ववेदेकैकमन्तरम् ॥ १ ॥ आसूत्तरासु कुरुषु, नीलवद्गिरिसन्निधौ । राजते धातकीवृक्षो, जम्बूवृक्ष इवापरः ॥ २ ॥ माने स्वरूपे त्वनयोर्विशेषोऽस्ति न कश्चन । किंतु तस्यानादृतवद्स्य देवः सुदर्शनः ॥ ३ ॥ उदीचीनासु कुरुषु, पश्चार्द्धेऽप्येवमीदृशः । स्यान्महाधातकी वृक्षः, प्रियदर्शनदैवतः ॥ ४ ॥ उत्तरासां कुरूणां यत्स्वरूपमिह वर्णितम् । तदेव देवकुरुषु, विज्ञेयमर्द्धयोर्द्वयोः ॥ ५ ॥ किंत्वासु नीलवत्स्थाने, वक्तव्यो निषधाचलः । गिरी चित्रविचित्राख्यौ, वाच्यौ च यमकास्पदे ॥ ६ ॥ पूर्वापरार्द्धयोर्देवकुरुषु स्तो यथाऽऽस्पदम् । प्राग्वच्छाल्मलिनौ वेणुदेवाभिधसुराश्रयौ ॥ ७ ॥ तथोक्तं स्थानाङ्गद्वितीयस्थानकवृत्तौ—'दो देवकुरुमहादुम'त्ति द्वौ कूटशाल्मलिवृक्षावित्यर्थः, द्वौ तद्वासिदेवौ वेणुदेवावित्यर्थः । शेषं तु ह्रदनामादि, यदत्र नोपदर्शितम् । तज्जम्बूद्वीपवद् ज्ञेयं, विशेषो ह्यत्र दर्श्यते ॥ ८ ॥ मध्येऽत्र मेरुश्चतुरशीतिं तुङ्गः सहस्रकान् । योजनानां सहस्रं चावगाढो वसुधांतरे ॥ ९ ॥ शतानि पञ्चनवतिं, मूले भूमिगते पृथुः । चतुर्नवतिमेव क्ष्मातले शतानि विस्तृतः ॥ २१० ॥ यत्रोत्तीर्य योजनादौ, व्यासोऽस्य ज्ञातुमिष्यते । तस्मिन् दशहृते लब्धे, सहस्राढ्ये च तत्र सः ॥ ११ ॥ तथाहि—शिरोऽग्राच्चतुरशीतेः, सहस्राणामतिक्रमे । व्यासे जिज्ञासित एतान्, सहस्रान् दशभिर्भजेत् ॥ १२ ॥ लब्धान्येवं च चतुरशीतिः शतानि तान्यथ । सहस्राढ्यानि पूर्वोक्तो, विष्कम्भोऽस्य भुवस्तले ॥ १३ ॥ मूलाद्यदोर्द्ध्वगमने, विष्कम्भो ज्ञातुमिष्यते । तदा यावद्यातमूर्द्ध्वं, तत्संख्यां दशभिर्भजेत् ॥ १४ ॥ लब्धे च मूलविष्कम्भाच्छोधिते यत्तु तिष्ठति । तत्र तावत्प्र-

माणोऽस्य, विष्कम्भो लभ्यते गिरेः ॥ १५ ॥ यथोर्द्धं चतुरशीतौ, सहस्रेषु भुवस्तलात्। गतेषु चतुरशीतिं,
सहस्रान् दशभिर्भजेत् ॥ १६ ॥ लब्धानि चतुरशीतिः, शतानि तानि शोधयेत् । भूतलव्यासतः शेषा,
साहस्री मूर्ध्नि विस्तृतिः ॥ १७ ॥ आम्नायोऽयं कर्णगत्या, मेरुनिम्नोन्नतत्वयोः। ज्ञेयोऽविवक्षणात्माग्वन्मेख-
लायुग्मजातयोः ॥ १८ ॥ श्रियं श्रयत्ययमपि, चतुर्भिश्चारुकाननैः । दन्तैरैरावत इव, दैत्यारिरिव बाहुभिः
॥ १९ ॥ तत्र भूमौ भद्रसालवनं तरुलताघनम् । तरणित्रासितं ध्वान्तमिवैतत्पादमाश्रितम् ॥ २० ॥ प्राच्यां
प्रतीच्यां प्रत्येकं, तद्दीर्घं लक्षयोजनीम् । सहस्रान् सप्तसैकोनाशीतीन्यष्ट शतानि च ॥ २१ ॥ प्राच्येऽथवा
प्रतीचीने, दैर्घ्येऽष्टाशीतिभाजिते । यल्लब्धं सोऽस्य विष्कम्भो, दक्षिणोत्तरयोः स च ॥ २२ ॥ योजनानां
पञ्चविंशाः, शता द्वादश कीर्त्तिताः । एकोनसप्ततिश्चांशा, अष्टाशीतिसमुद्भवाः ॥ २३ ॥ अष्टाशीत्या गुणि-
तायामेतस्यां पुनराप्यते । प्राच्यां प्रतीच्यां चायामो, यः प्रागस्य निरूपितः ॥ २४ ॥ एवं प्रमाणविस्तारायाम-
मेतद् वनं पुनः । गजदन्तमन्दराद्रिनदीभिरष्टधा कृतम् ॥ २५ ॥ तच्च जम्बूद्वीपभद्रसालवद्भाव्यतां बुधैः।
तथैवैतद्वक्ष्यमाणवनकूटादिकस्थितिः ॥ २६ ॥ अथोत्क्रम्य योजनानां, शतानि पञ्च भूतलात् । कट्यां नन्दन-
वन्मेरो, राजते नन्दनं वनम् ॥ २७ ॥ तच्च चक्रवालतया, शतानि पञ्च विस्तृतम् । अनल्पकल्पफलदलताम-
ण्डपमण्डितम् ॥ २८ ॥ बहिर्विष्कम्भोऽत्र मेरोरुक्ताम्नायेन लभ्यते । योजनानां सहस्राणि, नव द्व्यर्द्धं शत-
त्रयम् ॥ २९ ॥ तथाहि—उत्क्रान्तायाः पञ्चशत्या, दशभिर्भजने सति । लब्धपञ्चाशतोऽधःस्थव्यासात्त्यागे

उत्तरकुर्वादिस्वरूपं

२०

२५

॥ २७२ ।

२८

भवेद्‌यम् ॥ ३० ॥ बहिर्व्यासात्पञ्चशत्यास्त्यागे चोभयतः पृथक् । अन्तर्व्यासोऽष्टौ सहस्राणि त्रिशत्या सार्द्ध-
याऽधिकाः ॥ ३१ ॥ सहस्राणि पञ्चपञ्चाशतं पञ्चशतीं तथा । अतिक्रम्य योजनानामूर्द्ध्वं नन्दनकाननात् ॥३२॥
अत्रान्तरे सौमनसं, स्यात्पञ्चशतविस्तृतम् । चक्रवालतया मेरोर्ग्रैवेयकमिवामलम् ॥ ३३ ॥ बहिर्विष्कम्भोऽत्र
गिरेर्गुरुभिर्गदितो मम । योजनानां सहस्राणि, त्रीण्येवाष्टौ शतानि च ॥ ३४ ॥ तथाहि—षट्पञ्चाशत्सह-
स्राणि, यान्यतीतानि भूतलात् । एषां दशमभागः स्यात्षट्पञ्चाशच्छतात्मकः ॥ ३५ ॥ असौ भूतलविष्क-
म्भात्पूर्वोक्तादपनीयते । तस्थुर्यथोदितान्येवमष्टात्रिंशच्छतानि वै ॥ ३६ ॥ सहस्रापगमे चास्मात्स्यादन्तर्गिरि-
विस्तृतिः । द्वे सहस्रे योजनानां, शतैरष्टभिरन्विते ॥ ३७ ॥ अथैतस्माद्वनादूर्द्ध्वमुत्क्रान्तैर्मेरुमूर्द्धनि । अष्टाविं-
शत्या सहस्रैर्योजनैः पण्डकं वनम् ॥ ३८॥ चक्रवालतया तच्च, विस्तीर्णं वर्णितं जिनैः । चतुर्नवत्याऽभ्यधिकां,
योजनानां चतुःशतीम् ॥ ३९ ॥ तच्चैवं—मेरुमस्तकविष्कम्भात्सहस्रयोजनोन्मितात् । मध्यस्थचूलिकाव्यासो,
द्वादशयोजनात्मकः ॥ ४० ॥ शोध्यते तच्छेषमर्द्धीकृतं पण्डकविस्तृतिः । शेषा शिलादिस्थितिर्या, सा जम्बू-
द्वीपमेरुवत् ॥ ४१ ॥ तथैवास्य मरकतमयी शिरसि चूलिका । नानारत्ननिर्मितेन, शोभिता जिनसद्मना॥४२॥
एवं यदन्यदप्यत्र, कूटचैत्यादि नोदितम् । जम्बूद्वीपमेरुवत्तद्वक्तव्यं सुधिया धिया ॥ ४३ ॥ एवं यथाऽस्य
द्वीपस्य, पूर्वार्द्धमिह वर्णितम् । पश्चिमार्द्धमपि तथा, विज्ञेयमविशेषितम् ॥ ४४ ॥ गजदन्तप्रमाणादौ, विशेषो
यस्तु कश्चन । स तु तत्तत्प्रकरणे, नामग्राहं निरूपितः ॥ ४५ ॥ किंच—विजये पुष्कलावत्यां, वप्राख्ये विजये

५ १० १४

तथा । वत्से च नलिनावत्यां, विहरन्त्यधुना जिनाः ॥ ४६ ॥ प्राचीनेऽर्द्धे सुजातोऽर्हन्, स्वयंप्रभर्षभाननौ ।
श्रीमाननन्तवीर्यश्च, पश्चिमार्द्धे तु तेष्वमी ॥ ४७ ॥ सूरप्रभो जिनः श्रीमान्, विशालो जगदीश्वरः । जग-
त्पूज्यो वज्रधरश्चन्द्राननः प्रभुः क्रमात् ॥ ४८ ॥ एवं चात्र—श्रियं दधाते द्वौ मेरू, द्वीपस्यास्य कराविव । उद-
स्तौ पृथुतादर्पान्नभसो निजिघृक्षया ॥ ४९ ॥ यद्वोदण्डकरौ बद्धकच्छौ च नन्दनच्छलात् । स्पर्द्धया संमुखिनौ
द्वौ, महामल्लाविवोत्थितौ ॥ ५० ॥ स्थापयत्येकधाऽऽत्मानं, मेर्वेकाङ्गुलिसंज्ञया । जम्बूद्वीपेऽयमेताभ्यां, द्विधा तं
स्थापयन्निव ॥ ५१ ॥ अनलंभूष्णुनोत्थातुं, द्वीपेनानेन वार्द्धकात् । धृतौ दण्डाविवोदण्डौ, मेरू द्वाविह राजतः
॥ ५२ ॥ वर्षाद्रयो द्वादशाष्टषष्टिर्वैताढ्यभूधराः । दीर्घा अष्टौ च वृत्तास्ते, काञ्चनाद्रिचतुःशती ॥ ५३ ॥ वक्ष-
स्काराद्रयो द्वात्रिंशदष्टौ गजदन्तकाः । द्वौ चित्रौ द्वौ विचित्रौ च, चत्वारो यमकाचलाः ॥ ५४ ॥ इषुकारद्वयं
चैवं, सर्वाग्रेणात्र भूभृताम् । चत्वारिंशा पञ्चशती, चत्वारश्च महाद्रुमाः ॥ ५५ ॥ चतुर्दशात्र वर्षाणि, चतस्रः
कुरवोऽपि च । षट् कर्मभूमयोऽकर्मभूमयो द्वादश स्मृताः ॥ ५६॥ दीर्घवैताढ्येषु कूटाः, प्राग्वन्नव नवोदिताः ।
सक्रोशषड्योजनोच्चा, द्वादशा षट्शतीति ते ॥ ५७ ॥ रुक्मिमहाहिमवन्तः, कूटैरष्टभिरष्टभिः । सप्तभिश्च
सौमनसौ, तथा च गन्धमादनौ ॥ ५८ ॥ मेर्वार्द्धे नन्दनवने, निषधौ नीलवद्गिरी । विद्युत्प्रभौ माल्यवन्तौ,
नवकूटाः समेऽप्यमी ॥ ५९ ॥ हिमवन्तौ शिखरिणौ, तैरेकादशभिर्युतौ । वक्षस्कारगिरीणां च, प्रत्येकं तच्चतु-
ष्टयम् ॥ ६० ॥ त्रयः शताः स्युर्द्वाविंशाः, कूटान्येतानि तत्र च । षोडश त्रिशती प्रोक्तहिमवद्गिरिकूटवत्

मेरुतद्वन-विहरज्जिनादिस्वरूपम्

२०

२५

॥२७३॥

२८

॥ ६१ ॥ हरिकूटौ द्वयोर्विद्युत्प्रभयोर्यौ हरिस्सहौ । माल्यवतोर्बलकूटौ, मेरुनन्दनयोश्च यौ ॥ ६२ ॥ एते षडपि साहस्राख्याधानामिति मानतः । चतुस्त्रिंशाद्रिकूटानामेवं नवशती भवेत् ॥ ६३ ॥ सहेषुकारकूटैर्द्वाचत्वारिंशा शता नव । तत्रेषुकारकूटानां, मानं तु नोपलभ्यते ॥ ६४ ॥ चतुःषष्टौ विजयेषु, भरतैरवतेषु च । स्युरष्टषष्टि- र्वृषभकूटा एकैकभावतः ॥ ६५ ॥ धातक्यादिषु चतुष्के, द्वयोश्च भद्रसालयोः । अष्टाष्टेति च सर्वाग्रे, भूकूटाः षोडशं शतम् ॥ ६६ ॥ एतेषां वक्तुमुचिते, पर्वतत्वेऽपि वस्तुतः । कूटत्वव्यवहारस्तु, पूर्वाचार्यानुरोधतः ॥६७॥ महाह्रदा द्वादशैव, विंशतिश्च कुरुह्रदाः । श्रीह्रीधृतिकीर्त्तिबुद्धिलक्ष्मीनां च द्वयं द्वयम् ॥ ६८ ॥ सहस्रा द्वाद- शैकोनत्रिंशल्लक्षाश्च कीर्त्तिताः । तरङ्गिणीनामेतस्मिन्, द्वीपे मतान्तरे पुनः ॥ ६९ ॥ पञ्चत्रिंशल्लक्षाणि चतु- रशीतिः सहस्रकाश्चैव । इह संभवन्ति सरितां तत्त्वं तु विदन्ति तत्त्वज्ञाः ॥ ७० ॥ ( आर्या ) विदेहयुग्मे प्रत्येकं, स्युः कुण्डान्यष्टसप्ततिः । द्वे द्वे च शेषवर्षेषु, शतमेवमशीतियुक् ॥ ७१ ॥ एतेऽद्रयो ह्रदाः कूटाः, कुण्डान्येतान्यथापगाः । स्युर्वेदिकावनोपेतास्तत्स्वरूपं तु पूर्ववत् ॥ ७२ ॥ एषां याम्योदीच्यवर्षसरिच्छैलादिव- र्त्तिनाम् । विजयस्वर्गिवत्प्रौढसमृद्धीनां सुधाभुजाम् ॥ ७३ ॥ दक्षिणस्यामुदीच्यां च, जम्बूद्वीपस्थमेरुतः । अन्यस्मिन् धातकीखण्डे, राजधान्यो जिनैः स्मृताः ॥ ७४ ॥ श्रेण्यश्चतस्रः प्रत्येकं, वैताढ्येष्विति मीलिताः । श्रेण्यो भवन्ति द्वीपेऽस्मिन्, द्विशती सद्विसप्ततिः ॥ ७५ ॥ दशोत्तरं पुरशतं, प्रतिवैताढ्यमित्यतः । तेषां सहस्राः सप्त स्युः, साशीतिश्च चतुःशती ॥ ७६ ॥ जघन्यतोऽष्टेह जिना भवेयुरुत्कर्षतस्ते पुनरष्टषष्टिः । जघ-

न्यतः केशवचक्रिरामा, अष्टावथोत्कृष्टपदे तु षष्टिः ॥ ७७ ॥ ( उपजातिः )। सद्वादशा स्युर्निधयोऽत्र षट्शती, प्रक ( प्रोत्क ) र्षतस्तान्युपभोगभाञ्जि तु। द्वाविंशतिः पञ्च शतानि च ध्रुवं, द्वासप्ततिस्तानि जघन्यतस्तथा ॥ ७८ ॥ ( इन्द्रवंशा ) विंशानि चत्वारि शतानि पञ्चैकाक्षाणि रत्नानि पृथग् भवेयुः। उत्कर्षतस्तानि जघन्यतश्च, पञ्चाशदाढ्या ननु षड्भिरेव ॥ ७९ ॥ ( इन्द्रवज्रा ) द्वादशोष्णमहसः सुधांशवो, द्वादश ग्रहसहस्रमन्वितम्। षड्युतार्द्धशतकेन (१०५६) भानि षट्त्रिंशता समधिकं शतत्रयम् ॥ ८० ॥ ( रथोद्धता ) त्रिभिः सहस्रैरधिकानि लक्षाण्यष्टौ तथा सप्त शतानि चात्र। स्युः कोटिकोट्यः किल तारकाणां, तमोऽङ्कुरोन्मूलनकारकाणाम् ॥ ८१ ॥ ( उपजातिः ) द्वीपोऽयमेवं गदितस्वरूपः, कालोदनाम्नोदधिना परीतः। विभाति दीप्रधिनेव चक्रमिवेभसेनावलयेन भूपः ॥ ८२ ॥ ( उप० ) कालो महाकाल इतीह देवौ, प्राच्यप्रतीच्यार्द्धधृताधिकारौ। तद्दैवतः श्यामतमोदकश्च, तदेष कालोद इति प्रसिद्धः ॥ ८३ ॥ ( उप० ) लक्षाण्यष्टौ विस्तृतो योजनानामुद्विद्धोऽयं योजनानां सहस्रम्। आदावन्ते मध्यदेशे समानोद्वेधः सर्वत्रापि पूर्णह्रदाभः ॥ ८४ ॥ ( शालिनी ) न चूला न वेला न च क्षोभितास्मिन्, न पातालकुम्भादिका वा व्यवस्था। सदम्भोदमुक्तोदकस्वादुनीरः, प्रसन्नश्च साधोर्मनोवद्गभीरः ॥ ८५ ॥ ( भुजंगप्रयातं ) लक्षाण्यथैकनवतिः परिधिः सहस्राः, स्यात् सप्ततिः षडिह पञ्चयुताः शताश्च। द्वारैश्चतुर्भिरयमप्यभितो विभाति, पूर्वादिदिक्षु विजयादिभिरुक्तरूपैः॥८६॥ ( वसन्ततिलका ) लक्षा द्वाविंशतिश्च द्विनवतिरुपरि स्युः सहस्राणि नूनं, षट्चत्वारिंशदाढ्या जिनपतिग-

कूटश्रेणिनगरनिधिरत्नसूर्यादिसंख्या

२०

२५

॥२७४॥

२८

दिता षट्शती योजनानाम् । पादोनं योजनं चान्तरमिह निखिलद्वार्षु तुल्यप्रमाणं, (३२९२६४६ क्रो ३) कालोदे द्वारपानां विजयवदुदिता राजधान्योऽपरस्मिन् ॥ ८७ ॥ ( स्रग्धरा ) प्राक्प्रतीच्योर्दिशोर्द्वादश द्वादश, द्वादशेभ्यः सहस्रेभ्य एवान्तरे । सन्ति कालोदधौ धातकीखण्डतोऽत्रान्तरींपा अमुष्यामृतोष्णत्विषाम् ॥ ८८ ॥ ( मौक्तिकदाम ) पुष्करद्वीपतोऽप्येवमत्राम्बुधौ, तावता प्राक्प्रतीच्योः सुधोष्णत्विषाम् । नेत्रवेदैर्मिता (४२) नेत्रवेदैर्मिता (४२), एतदृग्धिस्पृशामन्तरीपाः स्थिताः ॥ ८९ ॥ ( मौक्ति० ) अन्तरीपा अमी गौतमद्वीपवद्भावनीयाः स्वरूपप्रमाणादिभिः । वेदिकाकाननालङ्कृताः सर्वतः, क्रोशयुग्मोच्छ्रिता वारिधेर्वारितः ॥९०॥ (मौक्ति०) अथाम्भोधावस्मिन्नमृतरुचयस्तिग्मकिरणा, द्विचत्वारिंशत्स्युर्ग्रहगृहसहस्रत्रयमथ । शतैः षड्भिर्युक्तं षडधिकनवत्या समधिकैः, सहस्रं षट्सप्तत्यधिकशतयुक् चात्र भगणः ॥ ९१ ॥ ( शिखरिणी ) पंचाशदूना नियतं सहस्रास्त्रयोदशेभाक्षि (२८) मिताश्च लक्षाः । स्युस्तारकाणामिह कोटिकोट्यः (२८१२ ९५० को १४), कालोदधौ तीर्थकरोपदिष्टाः ॥ ९२ ॥ (उपजातिः) विश्वाश्चर्यदकीर्त्तिकीर्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, द्वाविंशो मधुरः समाप्तिमगमत्सर्गो निसर्गोज्ज्वलः ॥ ९३ ॥

॥ इति श्रीलोकप्रकाशे धातकीवर्णको द्वाविंशतितमः सर्गः समाप्तः ॥ ग्रन्थाग्रं ३१४ ॥

५

१०

१२

## ॥ अथ त्रयोविंशतितमः सर्गः प्रारभ्यते ॥



वक्ष्येऽथ पुष्करवरद्वीपं कैकयदेशवत् । विशेषितार्द्धमावेष्ट्य, स्थितं कालोदवारिधिम् ॥ १ ॥ वक्ष्यमाणस्वरूपैर्यच्छोभितश्चारुपुष्करैः । ततोऽयं पुष्करवर, इति प्रसिद्धिमीयिवान् ॥ २ ॥ चक्रवालतयैतस्य, विस्तारो वर्णितः श्रुते । योजनानां षोडशैव, लक्षा न्यक्षार्थवेदिभिः ॥ ३ ॥ द्वीपस्यास्य मध्यदेशे, शैलोऽस्ति मानुषोत्तरः । अन्विताख्यो नरक्षेत्रसीमाकारितयोत्तरः ॥ ४ ॥ उभयोः पार्श्वयोश्चारुवेदिकावनमण्डितः । योजनानामेकविंशान्, शतान् सप्तदशोच्छ्रितः ॥ ५ ॥ चतुःशतीं योजनानां, त्रिंशां क्रोशाधिकां भुवि । मग्नो मूले सहस्रं च, द्वाविंशं किल विस्तृतः ॥ ६ ॥ त्रयोविंशानि मध्येऽयं, शतानि सप्त विस्तृतः । चतुर्विंशानि चत्वारि, शतान्युपरिविस्तृतः ॥ ७ ॥ यथेष्टस्थानविष्कम्भज्ञानोपायस्तु साम्प्रतः । भाव्यो वेलन्धरावासगोस्तूपादिगिरिष्विव ॥ ८ ॥ अग्रेतनं पादयुग्मं, यथोत्तम्भ्य निषीदति । पुताभ्यां केसरी पादद्वयं संकोच्य पश्चिमम् ॥ ९ ॥ ततः शिरःप्रदेशे स, विभाति भृशमुन्नतः । तथा पाश्चात्यभागे च, निम्नो निम्नतरः क्रमात् ॥ १० ॥ तद्वदेष गिरिः सिंहोपवेशनाकृतिस्ततः । यद्वा यवार्द्धसंस्थानसंस्थितोऽयं तथैव हि ॥ ११ ॥ समभित्तिः सर्वतुङ्गो, जम्बूद्वीपस्य दिश्ययम् । प्रदेशहान्या पश्चात्तु, निम्नो निम्नतरः क्रमात् ॥ १२ ॥ अत्रायं संप्रदायः—द्वे सहस्रे चतुश्चत्वारिंशे मूले सुविस्तृतम् । शतान्यष्टाष्टचत्वारिंशानि मूर्ध्नि च विस्तृतम् ॥ १३ ॥ एकविंशान् शतान्

सप्तदशोच्चं वलयाकृतिम् । प्रकल्प्याद्रिं ततोऽस्याभ्यन्तरार्द्धेऽपहृते सति ॥ १४ ॥ विस्तारमधिकृत्याथ, शेषस्ति-
ष्ठति यादृशः । तादृशोऽयं संप्रदायात्, प्रज्ञप्तो मानुषोत्तरः ॥ १५ ॥ वसन्त्यस्योर्द्ध्वं सुपर्णकुमारा निर्जरा बहिः ।
मध्ये मनुष्याश्चेत्येष, त्रिधा गिरिरलङ्कृतः ॥ १६ ॥ तथोक्तं जीवाभिगमसूत्रे—"माणुसुत्तरस्स णं पव्वयस्स
अंतो मणुआ उप्पिं सुवण्णा बाहिं देवा" इति । जाम्बूनदमयश्चित्रमणिरत्नविनिर्मितैः । लतागृहैर्दीर्घिकाभि-
र्मण्डपैश्चैष मण्डितः ॥ १७ ॥ कूटैः षोडशभिश्चैष, समन्ताद्भात्यलङ्कृतः । नानारत्नमयै रम्यैः, प्राकारोऽट्टाल-
कैरिव ॥ १८ ॥ त्रयं त्रयं स्यात्कूटानां, पङ्क्त्या दिशां चतुष्टये । द्वादशाप्येकैकदेवाधिष्ठितानि भवन्त्यथ ॥१९॥
उक्तं च स्थानाङ्गवृत्तौ—"पुव्वेण तिन्नि कूडा दाहिणओ तिन्नि तिन्नि अवरेण । उत्तरओ तिन्नि भवे चउद्दिसिं
माणुसनगस्स ॥ २० ॥" त्ति । विदिक्षु चत्वारि तत्राग्नेय्यां रत्नाभिधं भवेत् । निवासभूतं तद्वेणुदेवस्य गरुडे-
शितुः ॥ २१ ॥ रत्नोच्चयाख्यं नैर्ऋत्यां, वेलम्बस्यानिलेशितुः । नाम्ना विलम्बसुखदमित्यप्येतन्निरूपितम् ॥ २२ ॥
पूर्वोत्तरस्यां च कूटं, सर्वरत्नाभिधं भवेत् । तत्सुपर्णकुमारेन्द्रवेणुदालेः किलास्पदम् ॥ २३ ॥ तथाऽपरोत्तरस्यां
स्यात्तद्रत्नसंचयाभिधम् । प्रभञ्जनपराख्यं च, प्रभञ्जनसुरेशितुः ॥ २४ ॥ अत्र यद्यपि रत्नादीनि चत्वारि कूटानि
स्थानाङ्गसूत्रे चतुर्दिशमुक्तानि, तथाहि—"माणुसुत्तरस्स णं पव्वयस्स चउद्दिसिं चत्तारि कूडा पं० तं०—रयणे
रयणुच्चये सव्वरयणे रयणसंचए" इति, तथाप्येतत्सूत्रं श्रीअभयदेवसूरिभिरेवं व्याख्यातं—तथाहि—"इह च
दिग्ग्रहणेऽपि विदिक्ष्विति द्रष्टव्यं, तथा एवं चैतद्व्याख्यायते द्वीपसागरप्रज्ञप्तिसंग्रहण्यनुसारेणे"त्यादि । चतु-

दिशमिहैकैकः, कूटे भाति जिनालयः । दिशां चतसृणां रत्नकिरीट इव भासुरः ॥ २५ ॥ तथोक्तं चिरं जयक्षेत्रसमाससूत्रे—"चउसुवि उसुयारेसुं इक्किक्कं नरनगंमि चत्तारि । कूडोवरि जिणभवणा कुलगिरिजिणभवणपरिमाणा ॥ २६ ॥" इति । साक्षान्न यद्यपि प्रोक्तः, सिद्धान्तेऽत्र जिनालयः । तथाप्यागमवाग्लिङ्गादनुमानात्प्रतीयते ॥ २७ ॥ यतो विद्याचारणर्षितिर्यग्गतिनिदर्शने । विश्रामोऽत्र गिरौ प्रोक्तश्चैत्यवन्दनपूर्वकः ॥ २८ ॥ तथाह पञ्चमाङ्गे—"विज्जाचारणस्स णं भंते ! तिरियं केवतिए गतिविसए पन्नत्ते ?, गो० ! से णं इओ एगेणं उप्पाएणं माणुसुत्तरे पव्वए समोसरणं करेइ, माणु० २ त्ता तहिं चेइयाइं वंदति" । एतच्चास्मिन् विना चैत्यं, कथमौचित्यमश्नाति ?। ततोऽत्र जिनचैत्यानि, युक्तमूचुर्महर्षयः ॥ २९ ॥ एवं शाश्वतचैत्यानां, मान्यत्वं यो न मन्यते । सोऽप्यनेनैव वाक्येनोत्थातुं नेष्टे पराहतः ॥ ३० ॥ यश्चात्र चैत्यशब्दार्थं, विपर्यस्यति वातकी। तस्याप्येतच्चारणर्षिनमस्यावाक्यमौषधम् ॥ ३१ ॥ नहीदृशास्तपःशक्तिलब्धैतादृशलब्धयः । विना जिनादीन् वन्दन्ते, सम्यक्त्वभ्रंशभीलुकाः ॥ ३२ ॥ अथ प्रकृतं—अनेन पुष्करवरद्वीपो द्वेधा व्यधीयत । भित्त्येव गृहमस्यार्द्धद्वयं निर्दिश्यते ततः ॥ ३३ ॥ अभ्यन्तरं पुष्करार्द्धं, बाह्यं तदर्द्धमेव च । अर्वाचीनमान्तरार्द्धं, बाह्यमर्द्धं ततः परम् ॥ ३४ ॥ मानुषोत्तरशैलस्तु, बाह्यार्द्धक्षेत्ररोधकः । इत्यान्तरार्द्धं पूर्णाष्टलक्षयोजनसंमितम् ॥ ३५ ॥ तथाहुर्ज्ञानचन्दनमलयगिरयो मलयगिरयः—"अयं च मानुषोत्तरपर्वतो बाह्यपुष्करवरार्द्धभूमौ प्रतिपत्तव्य" इति बृहत्क्षेत्रसमासवृत्तौ । कोटिरेका द्विचत्वारिंशल्लक्षाणि सहस्रकाः । चतुस्त्रिंशच्छतान्यष्टौ, त्रयोविंशानि

चोपरि ॥ ३६ ॥ एतावद्योजनमितो, मानुषोत्तरभूभृतः । स्यान्मध्ये परिधिर्मौलौ, त्वस्यायं परिधिर्भवेत् ॥३७॥ कोटिरेकाऽथ लक्षाणि, द्विचत्वारिंशदेव च । द्वात्रिंशच्च सहस्राणि, द्वात्रिंशच्च शता नव ॥ ३८ ॥ पृथगुक्तौ परिक्षेपौ, यो मध्येऽस्य तथोपरि । बहिर्भागापेक्षया तौ, पार्श्वेऽस्याभ्यन्तरे पुनः ॥ ३९ ॥ समानभित्तिकतया, मूले मध्ये तथोपरि । तुल्य एव परिक्षेपः, सर्वत्राप्यवसीयताम् ॥ ४० ॥ एका कोटिर्द्विचत्वारिंशल्लक्षाणि सहस्रकाः । षट्त्रिंशच्च शताः सप्त, त्रयोदशसमन्विताः ॥ ४१ ॥ इति बृहत्क्षेत्रसमासवृत्त्यभिप्रायेण, जीवाभिगमसूत्रे 'सत्त चोद्दसुत्तरे जोअणसए' इत्युक्तं । एतावन्ति योजनानि, दृष्टानि जिननायकैः । मानुषोत्तरशैलस्य, बाह्यस्य परिधेर्मितौ ॥ ४२ ॥ द्विचत्वारिंशता लक्षैरेककोटिसमन्विता । त्रिंशत्सहस्राश्चैकोनपञ्चाशा द्विशती तथा ॥ ४३ ॥ मानुषोत्तरशैलस्यैतावान् परिधिरान्तरः । एष एवाभ्यन्तरस्य, पुष्करार्द्धस्य चान्तिमः ॥ ४४ ॥ नृक्षेत्रस्यापि परिधिरेष एवावसानिकः । अथास्य पुष्करार्द्धस्य, मध्यमः परिधिस्त्वयम् ॥ ४५ ॥ एका कोटी योजनानां, लक्षाः सप्तदशोपरि । सप्तविंशत्यन्वितानि, चत्वार्येव शतानि च ॥ ४६ ॥ कालोदस्यान्त्यपरिधिर्यः पूर्वमिह दर्शितः । स एव पुष्करार्द्धस्य, भवेत्परिधिरान्तरः ॥ ४७ ॥ द्विधेदमिषुकाराभ्यां, धातकीखण्डवत्कृतम् । अभ्यन्तरे पुष्करार्द्धं, तस्थिवद्भ्यामपागुदक् ॥ ४८ ॥ धातकीखण्डेषुकारसधर्माणाविमावपि । चतुष्कूटावन्त्यकूटस्थितोत्तुङ्गजिनालयौ ॥ ४९ ॥ एकेनान्तेन कालोदं, परेण मानुषोत्तरम् । स्पृष्टवन्तौ योज-

१ किंचिदधिकस्य योजनभागस्य व्यवहारेण योजनतया विवक्षणाद् चतुर्दशोत्तरसप्तशती अत्राख्याता स्यात् ॥

नानां, लक्षाण्यष्टायताविति ॥ ५० ॥ एवमभ्यंतरं पुष्करार्द्धं निर्दिश्यते द्विधा । पूर्वार्द्धं पश्चिमार्द्धं च, प्रत्येकं मेरुणाऽङ्कितम् ॥ ५१ ॥ पूर्वापरार्द्धयोरत्र, कालोदवेदिकान्ततः । पुरतः पुनरर्वाक् च, मानुषोत्तरपर्वतात् ॥ ५२ ॥ सहस्रान्नवनवतिं, प्रत्येकं लक्षकत्रयम् । योजनानामतीत्यास्ति, कुण्डमेकैकमद्भुतम् ॥ ५३ ॥ अधस्ते विस्तृते स्तोकमुपर्युपर्यनुक्रमात् । विस्तीर्णे विस्तीर्णतरे, जायमाने शरावत् ॥ ५४ ॥ भुवस्तले द्वे सहस्रे, विस्तीर्णे योजनान्यथ । उद्विद्धे दश शुद्धाम्भोवीचीनिचयचारुणी ॥ ५५ ॥ द्वयोरप्यर्द्धयोरत्रैकैकमन्दरनिश्रया । षट् षट् वर्षधराः सप्त सप्त क्षेत्राणि पूर्ववत् ॥ ५६ ॥ धातकीखण्डस्यवर्षधरद्विगुणविस्तृताः । भवन्त्यत्र वर्षधरा, उच्चत्वेन तु तैः समाः ॥ ५७ ॥ एवमत्रेषुकाराभ्यां, सह वर्षमहीभृताम् । विष्कम्भसंकलनया, नगरुद्धं भवेदियत् ॥ ५८ ॥ तिस्रो लक्षा योजनानां, पञ्चपञ्चाशदेव च । सहस्राणि चतुरशीत्यधिकानि शतानि षट् ॥ ५९ ॥ आद्यमध्यान्त्यपरिधौ, प्राग्वदेतेन वर्जिते । द्वादश द्विशतक्षुण्णे, कल्प्यन्ते प्राग्वदंशकाः ॥ ६० ॥ वर्षवर्षधरभागकल्पना त्वत्र धातकीखण्डवद् ज्ञेया । द्वादशद्विशतोत्थास्ते, येऽत्रांशा योजनोपरि । क्षेत्राणामग्धिदिश्यादिरन्तश्च नगिरेर्दिशि ॥ ६१ ॥ तत्र याम्येषुकारस्योभयतोऽप्यर्द्धयोर्द्वयोः । एकैकमस्ति भरतं, स्वस्वस्वर्णगिरेर्दिशि ॥ ६२ ॥ सहस्राण्येकचत्वारिंशाच्छतान् पञ्च विस्तृतम् । सैकोनाशीतीन् मुखेंऽशशतं च सत्रिसप्ततिः ॥ ६३ ॥ त्रिपञ्चाशत्सहस्राणि, द्वादशा पञ्चशत्यपि । शतं नवनवत्याढ्यमंशाश्च मध्यविस्तृतिः ॥ ६४ ॥ पञ्चषष्टिं सहस्राणि, योजनानां चतुःशतीम् । षट्चत्वारिंशां लवांश्च, त्रयोदशान्तविस्तृतः ॥ ६५ ॥ मध्यभागेऽस्य वैताढ्यो,

मानुषोत्तरः
इषुकारौ
कुण्डे भरते

२०

२५



२७

लक्षाण्यष्टौ स चायतः । धातकीखण्डवैताढ्यवच्छेषं त्विह भाव्यताम् ॥ ६६ ॥ अन्येऽपि दीर्घवैताढ्याः, स्युः ससषष्टिरीदृशाः । भरतैरवतक्षेत्रविदेहविजयोद्भवाः ॥ ६७ ॥ उत्तरार्द्धमध्यखण्डे, गाङ्गसैन्धवकुण्डयोः । मध्ये वृषभकूटोऽस्ति, जम्बूद्वीपर्षभाद्रिवत् ॥ ६८ ॥ पर्यन्तेऽस्य ततः शैलो, हिमवान्नाम वर्त्तते । आयामतोऽष्टौ लक्षाणि, विष्कम्भतो भवेदियान् ॥ ६९ ॥ योजनानां द्विचत्वारिंशच्छता दशसंयुताः । चतुश्चत्वारिंशदंशा-श्चतुरशीतिनिर्मिताः ॥ ७० ॥ तस्योपरि पद्महृदः, प्राग्वत्पद्मालिमण्डितः । सहस्रांश्चतुरो दीर्घः, सहस्रद्वय-विस्तृतः ॥ ७१ ॥ गङ्गासिन्धुरोहितांशास्ततो नद्यो विनिर्ययुः । प्राच्यां प्रतीच्यामुदीच्यां, क्रमात्तत्रादिमे उभे ॥ ७२ ॥ हृदोद्गमे योजनानि, विस्तीर्णे पञ्चविंशतिम् । उद्विद्धे च योजनार्द्धं, समुद्रसंगमे पुनः ॥ ७३ ॥ विस्तीर्णे द्वे शते सार्द्धे, उद्विद्धे पञ्चयोजनीम् । तत्र सिन्धुः प्राच्यपुष्करार्द्धात्कालोदमङ्गति ॥ ७४ ॥ गङ्गा तु प्राप्य पूर्वस्यां, मानुषोत्तरभूधरम् । सुमतिर्दुष्टसंसर्गादिव तत्र विलीयते ॥ ७५ ॥ पश्चिमार्द्धात्पुनर्गङ्गा, याति कालोदवारिधौ । सिन्धुर्नरोत्तरनगपादमूले विलीयते ॥ ७६ ॥ एवं नरोत्तरनगाभिमुखाः सरितोऽखिलाः । विलीयन्त इह ततः, परं तासामभावतः ॥ ७७ ॥ गङ्गासिन्धुप्रपाताख्ये, कुण्डे विष्कम्भतो मते । चत्वारिंश-त्समधिकं, योजनानां शतद्वयम् ॥ ७८ ॥ तदन्तर्वर्त्तिनौ द्वीपौ, प्रज्ञप्तौ विस्तृतायतौ । द्वात्रिंशद्योजनीं मूलप्र-वाह इव जिह्विके ॥ ७९ ॥ गङ्गासिन्धुरक्तवतीरक्तास्वेतन्निरूपणम् । षट्त्रिंशशतसङ्ख्यासु, सर्वमप्यविशेषितम् ॥ ८० ॥ रोहितांशा योजनानि, पञ्चाशन्नदनिर्गमे । विस्तीर्णैकयोजनं चोद्विद्धोदीच्यां नगोपरि ॥ ८१ ॥ एका-

दश योजनानां, शतान् पञ्चसमन्वितान् । अंशान् द्वाविंशतिं गत्वा, कुण्डं प्राप्याथ पूर्ववत् ॥ ८२ ॥ क्षेत्रं
हैमवतं द्वेधा, स्वप्रवाहेण कुर्वती । कालोदं याति पूर्वार्द्धे, परार्द्धे मानुषोत्तरम् ॥ ८३ ॥ त्रिभिर्विशेषकम् ।
अस्याः कुण्डं योजनानामशीत्याढ्या चतुःशती । विष्कम्भायामतो मूलप्रवाहश्च जिह्निका ॥ ८४ ॥ अस्याः
कुण्डान्तर्गतश्च, द्वीपो भवति यः स तु । चतुःषष्टियोजनानि, विष्कम्भायामतो मतः ॥ ८५ ॥ रूप्यकूले
स्वर्णकूले, रोहिते रोहितांशिके । अष्टाप्येतास्तुल्यरूपाः, स्वरूपपरिवारतः ॥ ८६ ॥ अथोत्तरं हिमवतः, क्षेत्रं
हैमवतं स्थितम् । वृत्तवैताढ्येन शब्दापातिनाऽलङ्कृतान्तरम् ॥ ८७ ॥ मुखे लक्षं योजनानां, षट्षष्टिं च सहस्र-
कान् । एकोनविंशां त्रिशतीं, षट्पञ्चाशल्लवांस्ततम् ॥ ८८ ॥ लक्षद्वयं योजनानां, सहस्राणि चतुर्दश । एकप-
ञ्चाशानि ततं, मध्येऽंशान् षष्टियुक् शतम् ॥ ८९ ॥ अन्ते शतान् सचतुरशीतीन् सप्त सहस्रकान् । एकषष्टिं
द्विलक्षीं च, द्वापञ्चाशल्लवांस्ततम् ॥ ९० ॥ जम्बूद्वीपस्यापि वृत्तवैताढ्यैः सदृशा यथा । धातकीखण्डस्थवृत्तवै-
ताढ्याः सर्वथा तथा ॥ ९१ ॥ अत्रापि वृत्ता वैताढ्याः, पूर्वोक्तैः सदृशाः समे । शब्दापातिप्रभृतयः, प्रत्ये-
तव्या मनस्विभिः ॥ ९२ ॥ द्वाभ्यां चतुर्भिरष्टाभिर्योजनैरन्तरं क्रमात् । स्वापगाभ्यां शब्दगन्धापातिमेरुमही-
भृताम् ॥ ९३ ॥ विकटापातिनोर्माल्यवतोस्तथान्तरं क्रमात् । स्वस्वक्षेत्रापगाभ्यां द्वे, योजने तच्चतुष्टयम् ॥९४॥
अस्योत्तरस्यां च महाहिमवान् वर्त्तते गिरिः । लक्षाणष्टायतो मौलौ, महापद्मह्रदाङ्कितः ॥ ९५ ॥ योजनानां
सहस्राणि, षोडशाष्टौ शतानि च । द्विचत्वारिंशदाढ्यानि, कलाश्चाष्टैव विस्तृतः ॥ ९६ ॥ महापद्मह्रदस्त्वष्टौ,

वैताढ्यादि
महापद्मांतं

२०

२५

॥ २७८ ॥

२८

सहस्राण्यायतो भवेत् । योजनानां सहस्राणि, चत्वारि चैष विस्तृतः ॥ ९७ ॥ दक्षिणस्यामुदीच्यां च, नद्यौ द्वे निर्गते इतः । रोहिता हरिकान्ता च, ते उभे पर्वतोपरि ॥ ९८ ॥ चतुःषष्टिं शतान्येकविंशान्यंशचतुष्टयम् । अतीत्य स्वस्वकुण्डान्तर्निपत्य निर्गते ततः ॥ ९९ ॥ पूर्वार्द्धाद् हैमवतगा, नराद्रिं याति रोहिता । अपरार्द्धात्तु सा याति, कालोदनामवारिधिम् ॥ १०० ॥ हरिकान्ता पुनर्याति, कालोदं हरिवर्षगा । पूर्वार्द्धादपरार्द्धात्तु, याति सा मानुषोत्तरम् ॥ १ ॥ नद्योर्हरिसलिलयोर्हरिकान्ताख्ययोरपि । तयोर्नारीकान्तयोश्च, तथैव नरकान्तयोः ॥ २ ॥ इत्यष्टानामापगानां, विष्कम्भो ह्रदनिर्गमे । भवेच्छतं योजनानामुण्डत्वं योजनद्वयम् ॥ ३ ॥ पर्यन्ते च योजनानां सहस्रमिह विस्तृतिः । उण्डत्वं च योजनानां, विंशतिः परिकीर्त्तितम् ॥ ४ ॥ विष्कम्भायामतः कुण्डान्येतासां जगदुर्जिनाः । षष्ट्याढ्यानि योजनानां, शतानीह नव श्रुते ॥ ५ ॥ अष्टाविंशं शतं द्वीपाश्चैतासां विस्तृतायताः । जिह्विका विस्तृतोद्विद्धाश्चासां मूलप्रवाहवत् ॥ ६ ॥ शैलात्ततः परं क्षेत्रं, हरिवर्षं विराजते । तद्गन्धापातिवैताढ्येनाश्रितं विस्तृतं मुखे ॥ ७ ॥ लक्षाणि षड् योजनानां, पञ्चषष्टिं सहस्रकान् । द्वे शते सप्तसप्तत्याऽधिके द्वादश चांशकान् ॥ ८ ॥ युग्मम् ॥ अष्टौ लक्षाः सहस्राणि, षट्पञ्चाशच्छतद्वयम् । सप्तोत्तरं योजनानां, मध्येऽशांश्चतुरस्ततम् ॥ ९ ॥ सहस्रैः सप्तचत्वारिंशताढ्या दशलक्षिकाः । षट्त्रिंशं च योजनानां, शतमंशशतद्वयम् ॥ १० ॥ अष्टाढ्यं विस्तीर्णमन्ते, स्वरूपमपरं पुनः । जम्बूद्वीपहरिवर्षवदिहापि विभाव्यताम् ॥ ११ ॥ इतः परश्च निषधः, पर्वतः सर्वतः स्फुरन् । ह्रदेनालङ्कृतो मूर्ध्नि, सद्बेन तिगि-

ञ्छिना ॥ १२ ॥ सप्तषष्टिं सहस्राणि, साष्टषष्टि शतत्रयम् । योजनानां लवान् द्वात्रिंशतं स्यादेष विस्तृतः ॥ १३ ॥ तिगिञ्छिस्तु योजनानां, सहस्राण्यष्ट विस्तृतः । सहस्राणि षोडशैष, भवेदायामतः पुनः ॥ १४ ॥ एतसाद्धरिसलिला, शीतोदेति निरीयतुः । दक्षिणस्यामुदीच्यां च, पर्वतोपर्यमू उभे ॥ १५ ॥ एकोनत्रिंशतं गत्वा, सहस्रान् षट् शतानि च । योजनानां सचतुरशीतीन् षोडश चांशकान् ॥ १६ ॥ पततः स्वस्वकुण्डान्तर्हरिवर्षान्तराध्वना । पूर्वार्द्धाद्धरिसलिला, प्राप्नोति मानुषोत्तरम् ॥ १७ ॥ पश्चिमार्द्धगता सा तु, कालोदमुपसर्पति । सर्वासां दिग्विनिमय, एवं पूर्वापरार्द्धयोः ॥ १८ ॥ पूर्वार्द्धशीतोदा प्रत्यग्विदेहार्द्धविभेदिनी । कालोदमन्यार्द्धस्था तु, प्राप्नोति मानुषोत्तरम् ॥ १९ ॥ एताश्चतस्रो विस्तीर्णा, द्वे शते ह्रदनिर्गमे । चत्वार्युण्डा योजनानि, प्रान्ते दशगुणास्ततः ॥ २० ॥ विस्तीर्णान्यायतान्यासां, कुण्डानि च चतसृणाम् । सविंशानि योजनानां, शतान्येकोनविंशतिम् ॥ २१ ॥ एतत्कुण्डान्तर्गताश्च, द्वीपाः प्रोक्ता महर्षिभिः । षट्पञ्चाशे योजनानां, द्वे शते विस्तृतायताः ॥ २२ ॥ सर्वे कुण्डगता द्वीपाः, क्रोशद्वयोच्छ्रिता इति । तैर्जम्बूद्वीपगैस्तुल्या, उच्छ्रयेण नगा इव ॥ २३ ॥ यथेदमर्द्धं व्याख्यातं, याम्यं पूर्वापरार्द्धयोः । तथा ज्ञेयमुदीच्यार्द्धमपि मानस्वरूपतः ॥ २४ ॥ किन्तूदीच्येषुकारार्द्धे, परतः पार्श्वयोर्द्वयोः । स्यादेकैकमैरवतक्षेत्रं भरतसन्निभम् ॥ २५ ॥ पुण्डरीकह्रदोपेतस्तत्र शिखरी गिरिः । तस्माद्रक्ता रक्तवती, स्वर्णकूला विनिर्ययुः ॥ २६ ॥ तत्रादिमे द्वे सरितौ, क्षेत्रमैरवतं गते । जगाम हैरण्यवतं, स्वर्णकूला तु वाहिनी ॥ २७ ॥ ततश्च हैरण्यवतं, विकटापातिनाऽङ्कितम् । ततो महा-



२०

२५



२८

पुंडरीकह्रदवान् रुक्मिपर्वतः ॥ २८ ॥ एतद्भवा रूप्यकूला, हैरण्यवतगामिनी । रम्यकान्तर्नरकान्ता, प्रयात्येत-
त्समुद्भवा ॥ २९ ॥ ततोऽर्वाग् रम्यकक्षेत्रं, माल्यवद्वृत्तभूधरम् । केसरिह्रदवन्नीलवन्नामा पर्वतस्ततः ॥ ३० ॥
प्रवर्त्तते विदेहान्तः, शीतैतन्नगसंम्भवा । नारीकान्ता रम्यकान्तः, प्रसर्पत्येतदुद्गता ॥ ३१ ॥ एषु क्षेत्रेषु पूर्वा-
र्द्धान्नद्यो याः पूर्वसंमुखाः । ता मानुषोत्तरं यान्ति, कालोदं पश्चिमामुखाः ॥ ३२ ॥ पश्चिमार्द्धात्तु कालोदं,
प्रयान्ति पूर्वसंमुखाः । पश्चिमाभिमुखास्तास्तु, प्रयान्ति मानुषोत्तरम् ॥ ३३ ॥ मध्ये क्षेत्रं विदेहाख्यं, नील-
वन्निषधागयोः । एकैकं मेरुणोपेतं, भाति पूर्वापरार्द्धयोः ॥ ३४ ॥ अष्टाचत्वारिंशदंशान्, लक्षाः षड्विंशतिं
मुखे । योजनान्येकषष्टिं सहस्रान् साष्टशतं ततम् ॥ ३५ ॥ २६६११०८ ऽ ४८ । तथा लक्षाश्चतुस्त्रिंशद्योज-
नानां समन्विताः । चतुर्विंशत्या सहस्रैरष्टाविंशं शताष्टकम् ॥ ३६ ॥ षोडशांशाश्च विस्तीर्णं, मध्ये तस्य च
विस्तृतिः । लक्षाण्यथैकचत्वारिंशदष्टाशीतिरेव च ॥ ३७ ॥ सहस्राणि सप्तचत्वारिंशा पञ्चशती तथा । योज-
नानामंशशतं, षण्णवत्या समन्वितम् ॥ ३८ ॥ सहस्राणि योजनानामेकोनविंशतिस्तथा । सचतुर्नवतिः सप्त-
शती क्रोशस्तथोपरि ॥ ३९ ॥ विष्कम्भः प्रतिविजयं, प्रत्येकमर्द्धयोर्द्वयोः । योजनानां द्वे सहस्रे, वक्षस्काराद्रि-
विस्तृतिः ॥ ४० ॥ प्रत्येकमन्तर्नद्यश्च, शतानि पञ्च विस्तृताः । स्वरूपं सर्वमत्रान्यद्धातकीखण्डवद्भवेत् ॥ ४१ ॥
अष्टानां वनमुखानां, विस्तृतिः स्याल्लघीयसी । एकोनविंशतिभवाश्चत्वारो योजनांशकाः ॥ ४२ ॥ एकादश
सहस्राणि, योजनानां शतानि षट् । साष्टाशीतीनि चैतेषां, विस्तृतिः स्याद्गरीयसी ॥ ४३ ॥ उपवर्षधरं गुर्वी,

५

१०

१४

लघ्वी च सरिदन्तिके। तेषां चतुर्णां कालोदबहिर्भागस्पृशां भवेत् ॥ ४४ ॥ चतुर्णां तु नरनगासन्नानां विस्तृतिर्गुरुः। शीताशीतोदान्तिकेऽन्या, नीलवन्निषधान्तिके ॥ ४५ ॥ पूर्वापरं भद्रसालवनायामः समन्वितः। मेरुविष्कम्भेण सह, गर्भभागात्मको भवेत् ॥ ४६ ॥ चत्वारिंशत्सहस्राणि, लक्षाश्चतस्र एव च। योजनानां नवशती, निर्दिष्टा षोडशोत्तरा ॥ ४७ ॥ षोडशानां विजयानां, व्याससंकलना त्वियम्। तिस्रो लक्षा योजनानां, सहस्राणि च षोडश ॥ ४८ ॥ सप्तशत्यष्टोत्तराऽथ, वक्षस्कारमहीभृताम्। अष्टानां तत्संकलना, स्युः सहस्राणि षोडश ॥ ४९ ॥ षण्णामन्तर्नदीनां तु, व्याससङ्कलना भवेत्। सहस्राणि त्रीणि वनमुखयोरुभयोस्त्वियम् ॥ ५० ॥ षट्सप्ततिस्पृक् त्रिशती, सहस्राब्धपक्षि (२३) संमिताः। द्वीपव्यासोऽष्ट लक्षाणि, सर्वसंकलने भवेत् ॥ ५१ ॥ अत्रापीष्टान्यविष्कम्भवर्जितद्वीपविस्तृतेः। स्वस्वसङ्ख्याविभक्ताया, लभ्यतेऽभीष्टविस्तृतिः ॥ ५२ ॥ भावना धातकीखण्डवत्। महाविदेहविष्कम्भे, यथेष्टस्थानगोचरे। शीताशीतोदान्यतरव्यासहीनेऽर्द्धिते सति ॥ ५३ ॥ विजयांतर्नदीवक्षस्कारान्तिमवनायतिः। ज्ञायते सा तत्र तत्र, स्थाने भाव्या स्वयं बुधैः ॥ ५४ ॥ अथ देवकुरूणां यः, प्राच्यां सौमनसो गिरिः। तथोत्तरकुरूणां यः, पूर्वस्यां माल्यवानिमौ ॥ ५५ ॥ त्रिचत्वारिंशत्सहस्रान्, लक्षा विंशतिमायतौ। एकोनविंशां द्विशतीं, योजनानामुभावपि ॥ ५६ ॥ देवोत्तरकुरुभ्यश्च, प्रतीच्यां यौ व्यवस्थितौ। विद्युत्प्रभगिरिर्गन्धमादनश्चायतावुभौ ॥ ५७ ॥ योजनानां षोडशैव, लक्षाः षड्विंशतिं तथा। सहस्राणि शतमेकं, संपूर्णं षोडशोत्तरम् ॥५८॥ इदं मानं पुष्करार्द्धप्राचीनार्ध-

रम्यकादि गजदन्तान्तं

२०

२५



२८

व्यपेक्षया । पश्चिमार्द्धे विपर्यासो, धातकीखण्डवत् स तु ॥ ५९ ॥ अष्टाप्येते गजदन्ता, नीलवन्निषधान्तिके । सहस्रद्वयविस्तीर्णाः, सूक्ष्माश्च मन्दरान्तिके ॥६०॥ विदेहमध्यविष्कम्भान्मेरुव्यासे विशोधिते । शेषेऽर्द्धिते च विष्कम्भः, प्रत्येतव्यः कुरुद्वये ॥६१॥ लक्षाः सप्तदश सप्त, सहस्राणि शतानि च। चतुर्दशानि सप्तैव, योजनानां लवाष्टकम् ॥ ६२॥ मेरुयुक्तभद्रसालायामात्प्रागुपदर्शितात् । गजदन्तद्वयहीनाच्छेषं जीवा कुरुद्वये ॥ ६३ ॥ लक्षाश्चतस्रः षट्त्रिंशत्, सहस्राणि शतानि च। नवैव षोडशाढ्यानि, योजनानीति तन्मितिः ॥६४॥ आयाममानयोः प्राच्यप्रतीच्यगजदन्तयोः। योगे भवेद्धनुःपृष्ठं, कुरुद्वय इदं तु तत् ॥ ६५ ॥ लक्षाः षट्त्रिंशदेकोनसप्ततिश्च सहस्रकाः । शतत्रयं योजनानां, पञ्चत्रिंशत्समन्वितम् ॥ ६६ ॥ धातकीखण्डवदिहाप्यग्रतो नीलवद्गिरेः । यमकावुदक्कुरुषु, सहस्रं विस्तृतायतौ ॥ ६७॥ ततः परं ह्रदाः पञ्च, स्युर्दक्षिणोत्तरायताः । सहस्रांश्चतुरो दीर्घा, द्वे सहस्रे च विस्तृताः ॥ ६८ ॥ नीलवतो यमकयोस्ताभ्यामाद्यह्रदस्य च । मिथो ह्रदानां क्षेत्रान्तसीम्नश्च पञ्चमह्रदात् ॥ ६९ ॥ सप्ताप्येतान्यन्तराणि, तुल्यान्यैकैकं पुनः । लक्षद्वयं योजनानां, चत्वारिंशत्सहस्रकाः ॥ ७० ॥ शतानि नव चैकोनषष्टीनि योजनस्य च । सप्तक्षुण्णस्यैकभागस्तत्रोपपत्तिरुच्यते ॥७१॥ दैर्घ्यं ह्रदानां पञ्चानां, यत्सहस्राणि विंशतिः। सहस्रयमकव्यासयुक्तं तत्कुरुविस्तृतेः॥७२॥ विशोध्यतेऽथ यच्छेषं, तत्सप्तभिर्विभज्यते । सप्तानां व्यवधानानामेवं मानं यथोदितम् ॥ ७३ ॥ उदक्कुरुषु पूर्वार्द्धे, पद्मनामा महातरुः । पश्चिमार्द्धे महापद्मस्तौ जम्बूवृक्षसोदरौ ॥७४॥ पद्मनाम्नो भूमिरुहः, पद्मनामा सुरः पतिः । महापद्मस्य तु स्वामी, पुण्डरीकः

सुरोत्तमः ॥ ७५ ॥ स्युर्देवकुरवोऽप्येवं, किंत्वत्र निषधात्परौ । विचित्रचित्रावचलौ, ततः पञ्च ह्रदाः क्रमात् ॥ ७६ ॥ पूर्वार्द्धे चापरार्द्धे च, स्यातां शाल्मलिनाविह । जम्बूवृक्षसधर्माणावेतावपि स्वरूपतः ॥ ७७ ॥ पुष्करार्द्धेऽथ यौ मेरू, स्यातां पूर्वापरार्द्धयोः । धातकीखण्डस्थमेरुसमानौ तौ तु सर्वथा ॥ ७८ ॥ किंत्वेतयोर्भद्रसालवनयोरायतिर्भवेत् । लक्षद्वयं पंचदश, सहस्राणि शतानि तु ॥ ७९ ॥ अष्टपञ्चाशानि सप्त, पूर्वपश्चिमयोर्दिशोः । प्रत्येकं दक्षिणोदीच्यः, स्याद्व्यासस्त्वयमेतयोः ॥ ८० ॥ द्विसहस्त्रैकपञ्चाशा, योजनानां चतुःशती । अष्टाशीत्या योजनस्य, भक्तस्यांशाश्च सप्ततिः ॥ ८१ ॥ उपपत्तिस्त्वत्र प्राग्वत् । शेषा त्वत्र नन्दनादिवनवक्तव्यताऽखिला । धातकीखण्डमेरुभ्यां, पुनरुक्तेति नोच्यते ॥ ८२ ॥ जाम्बूद्वीपो महामेरुश्चतुर्भिर्मेरुभिः श्रियम् । धत्ते तीर्थंकर इव, चतुर्भिः परमेष्ठिभिः ॥ ८३ ॥ प्रागुक्ताख्येषु पूर्वार्द्धे, विजयेष्वधुना जिनाः । चन्द्रबाहुर्भुजङ्गश्चेश्वरो नेमिप्रभोऽपि च ॥ ८४ ॥ पश्चिमार्द्धे तु तेष्वेव, वीरसेनो जिनेश्वरः । महाभद्रदेवयशोऽजितवीर्या इति क्रमात् ॥ ८५ ॥ द्वीपार्धेऽस्मिन्नगादीनां, संग्रहः सर्वसंख्यया । धातकीखण्डवद् ज्ञेयोऽविशेषान्नोदितः पृथक् ॥ ८६ ॥ द्विसप्ततिः शशभृतस्तावन्त एव भास्कराः । षट् सहस्राणि षट्त्रिंशा, त्रिशत्यत्र महाग्रहाः ॥ ८७ ॥ नक्षत्राणां सहस्रे द्वे, प्रज्ञप्ते षोडशोत्तरे । प्रमाणमथ ताराणां, पुष्करार्द्धे निरूप्यते ॥ ८८ ॥ अष्टचत्वारिंशदिह, लक्षा द्वाविंशतिस्तथा । सहस्राणि द्वे शते च, स्युस्ताराः कोटिकोटयः ॥ ८९ ॥ एवं च-लक्षाण्यष्टौ पुष्करार्द्धे, तावान्कालोदवारिधिः । चत्वारि धातकीखण्डो, द्वे लक्षे लवणोदधिः ॥ ९० ॥

कुर्वादिमूर्यादिमानं च

२०

२५

॥ २८१ ॥

२८

एवं द्वाविंशतिर्लक्षाण्येकतः परतोऽपि च । मध्ये जम्बूद्वीप एकं, लक्षमायतविस्तृतः ॥ ९१ ॥ पञ्चचत्वारिंशदेवं, लक्षाण्यायतविस्तृतम् । नरक्षेत्रं परिक्षेपो, ज्ञेयोऽस्य पुष्कराद्धंवत् ॥ ९२ ॥ एतावतो नरक्षेत्रात्, परतो न भवेन्नृणाम् । गर्भाधानं जन्ममृत्यू, संमूर्छिमनरोद्भवः ॥ ९३ ॥ आसन्नप्रसवां कश्चित्स्त्रियं नयति चेत्सुरः । नरक्षेत्रात्परं नासौ, प्रसूते तत्र कर्हिचित् ॥ ९४ ॥ यदि कण्ठगतप्राणो, मनुष्यक्षेत्रतः परम् । मनुष्यो नीयते नासौ, म्रियते तत्र कर्हिचित् ॥ ९५ ॥ अथावश्यंभाविजन्मक्षीणायुष्कौ च तौ यदि । तदा सुरस्य तन्नेतुर्भवेद्वाऽन्यस्य कस्यचित् ॥ ९६ ॥ मनस्तथैव येनैनामासन्नप्रसवां स्त्रियम् । तं वा कण्ठगतप्राणं, नरक्षेत्रे पुनर्नयेत् ॥ ९७ ॥ युग्मम् । एवं नातः परमहर्निशादिसमयस्थितिः । न बादराग्निर्न नदी, न विद्युद्गर्जिनीरदाः ॥ ९८ ॥ नार्हदाद्या न निधयो, नायने नैव चाकराः । नेन्दुवृद्धिक्षयौ नोपरागोऽर्केन्द्वोर्न वा गतिः ॥ ९९ ॥ तथाहुः—"अरिहंतसमयबायरअग्गी विज्जू बलाहगा थणिआ । आगरनइनिहिउवराग निग्गमे वुड्ढिअयणं च ॥ २०० ॥" एतत्सर्वमर्थतो जीवाभिगमसूत्रे चतुर्थप्रतिपत्तौ । क्षेत्रेषु पञ्चचत्वारिंशतीह भरतादिषु । अन्तर्द्वीपेषु षट्पञ्चाशत्येव संभवेन्नृणाम् ॥१॥ बाहुल्याज्जन्म मृत्युश्च, वार्द्धिवर्षधरादिषु । शेषेषु तु नृणां जन्म, प्रायेण नोपपद्यते ॥ २ ॥ युग्मम् । मृत्युस्तु संहरणतो, विद्यालब्धिबलेन वा । गतानां तत्र तत्रायुःक्षयात्संभवति क्वचित् ॥ ३ ॥ अथैतस्मिन्नरक्षेत्रे, वर्षक्षेत्रादिसंग्रहः । क्रियते सुखबोधाय, तदर्थोऽयं ह्युपक्रमः ॥ ४ ॥ अध्यर्द्धौ द्वाविह द्वीपौ, द्वावेव च पयोनिधी । भरतान्यैरवतानि, विदेहाः पञ्च पञ्च च ॥ ५ ॥ एवं पञ्चदश कर्मभूमयोऽत्र

५

१०

१४

प्रकीर्त्तिताः। देवोत्तराख्याः कुरवो, हैरण्यवतरम्यके ॥ ६ ॥ हैमवतं हरिवर्षं, पञ्च पञ्च पृथक् पृथक् । सर्वा-
ण्यपि त्रिंशदेवं, भवंत्यकर्मभूमयः ॥ ७ ॥ अन्तर्द्वीपाश्च षट्पञ्चाशदेवं युग्मिभूमयः । षडशीतिर्नरस्थानान्ये-
वमेकोत्तरं शतम् ॥ ८ ॥ तथाऽत्र मेरवः पञ्च, विंशतिर्गजदन्तकाः । वक्षस्काराद्रयोऽशीतिः, सहस्रं काञ्चना-
चलाः ॥ ९ ॥ विचित्राः पञ्च चित्राश्च, पञ्चाथ यमकाचलाः । दश त्रिंशद्वर्षधरा, इषुकारचतुष्टयम् ॥ १० ॥
विंशतिर्वृत्तवैताढ्याः, शतं दीर्घाः ससप्ततिः । एकोनपञ्चाशान्यद्रिशतान्येवं त्रयोदश ॥ ११ ॥ अष्टौ द्राढाः
पार्वताः स्युः, कूटास्त्विह चतुर्विधाः । वैताढ्यशेषाद्रिसहस्रांकभूकूटभेदतः ॥ १२ ॥ तत्र च-सार्द्धं सहस्रं वैता-
ढ्यकूटानां त्रिशताऽधिकम् । शेषाद्रिकूटानामष्टशती षडधिका भवेत् ॥ १३ ॥ सहस्राङ्काः पञ्चदशेत्येवं
कूटानि भूभृताम् । सर्वाग्रेणैकपञ्चाशो, द्वे सहस्रे शतत्रयम् ॥ १४ ॥ भद्रसालवने मेरोर्यानि दिक्षु विदिक्षु च ।
तानि दिग्गजकूटानि, चत्वारिंशद्भवेदिह ॥ १५ ॥ द्रूणां दशानामष्टाष्ट, यानि दिक्षु विदिक्षु च । कूटानि
तान्यशीतिः स्युर्नृक्षेत्रे सर्वसंख्यया ॥ १६ ॥ शतं वृषभकूटानां, ससत्याऽधिकमाहितम् । भवन्त्येवं भूमिकूटा,
नवत्याढ्यं शतद्वयम् ॥ १७ ॥ महावृक्षा दश तत्र, पञ्च शाल्मलिसंज्ञकाः । शेषा जम्बूधातकी च, पद्म-
श्चान्यौ महापरौ ॥ १८ ॥ महाह्रदास्त्रिंशदिह, पञ्चाशच्च कुरुह्रदाः । भवत्यशीतिरित्येवं, ह्रदानां सर्व-
संख्यया ॥ १९ ॥ भरतादिक्षेत्रमहानदीकुण्डानि ससतिः । विदेहविजयस्थानि, तानि विंशं शतत्रयम् ॥२०॥
षष्टिरन्तर्नदीनां स्युरित्येवं सर्वसंख्यया । चतुःशतीह कुण्डानां, पञ्चाशदधिका भवेत् ॥ २१ ॥ भरतादि-

नृक्षेत्रीयाः
पदार्थाः

२०

२५



२८

क्षेत्रगता, महानद्योऽत्र सप्ततिः । विदेहविजयस्थानां, तासां विंशं शतत्रयम् ॥ २२ ॥ अन्तर्नद्यः षष्टिरिति, परिच्छदजुषामिह । पञ्चाशा मुख्यसरितां, सर्वाग्रेण चतुःशती ॥ २३ ॥ सा चैवं–गंगासिन्धुरक्तवतीरक्ताः प्रत्येकमीरिताः । पञ्चाशीतिस्तथा शीताशीतोदारूप्यकूलिकाः ॥ २४ ॥ स्वर्णकूला नरकान्ता, नारीकान्ता च रोहिता । रोहितांशा हरिकान्ता, हर्यादिसलिलापि च ॥ २५ ॥ द्वादशान्तरनद्यश्च, पञ्च पञ्चाखिला इमाः । परिच्छदापगास्त्वासां, ज्ञेयाः पूर्वोक्तया दिशा ॥ २६ ॥ एवं द्विसप्ततिर्लक्षा, अशीतिश्च सहस्रकाः । भवंति मनुजक्षेत्रे, नद्योऽन्यस्मिन् मते पुनः ॥ २७ ॥ एकोननवतिर्लक्षाः, सहस्राः षष्टिरेव च । एतच्चान्तरापगानां, पृथक्तत्त्वविवक्षया ॥ २८ ॥ इदं च नदीसर्वाग्रं जम्बूद्वीपगतमहानदीतुल्यपरिवाराणां धातकीखण्डपुष्करार्द्धगतमहानदीनां संभावनयोक्तं, धातकीखण्डपुष्करार्द्धयोर्महानदीनां परिवारे जम्बूद्वीपवर्त्तिमहानदीपरिवारापेक्षया द्वैगुण्यादिविशेषस्तु बृहत्क्षेत्रविचारादिषु क्वापि न दृष्ट इति नोक्त इति ज्ञेयं । उत्कर्षतो जिना अत्र, स्युः सप्तत्यधिकं शतम् । ते द्वितीयार्हतः काले, विहरन्तोऽभवन्निह ॥ २९ ॥ केवलज्ञानिनामेवमुत्कर्षान्नव कोटयः । नव कोटिसहस्राणि, तथोत्कर्षेण साधवः ॥ ३० ॥ जघन्यतो विंशतिः स्युर्भगवन्तोऽधुनापि ते । विदेहेष्वेव चत्वारश्चत्वारो विहरन्ति हि ॥ ३१ ॥ ते चामी–सीमंधरं १ स्तौमि युगंधरं २ च, बाहुं ३ सुबाहुं ४ च सुजातदेवम् ५ । स्वयंप्रभं ६ श्रीवृषभाननाख्य ७ मनन्तवीर्यं ८ च विशालनाथम् ९ ॥ ३२ ॥ (उप.) । सूरप्रभं १० वज्रधरं ११ च चंद्राननं १२ नमामि प्रभुभद्रबाहुम् १३ ।

भुजङ्ग १४ नेमिप्रभ १५ तीर्थनाथावथेश्वरं १६ श्रीजिनवीरसेनम् १७ ॥ ३३ ॥ (उप.) स्तवीमि च महाभद्रं १८, श्रीदेवयशसं १९ तथा । अर्हन्तमजितवीर्यं २०, वन्दे विंशतिमर्हताम् ॥ ३४ ॥ पञ्चस्वपि विदेहेषु, पूर्वापरार्द्धयोः किल । एकैकस्य विहरतः, संभवाज्जगदीशितुः ॥ ३५ ॥ दशैव विहरन्तः स्युर्जघन्येन जिनेश्वराः । इत्यूचुः सूरयः केचित्, तत्त्वं वेत्ति त्रिकालवित् ॥ ३६ ॥ तथोक्तं प्रवचनसारोद्धारसूत्रे—'सत्तरिसयमुक्कोसं जहन्न वीसा य दस य विहरंति' इति, उक्ताज्जघन्यादूनास्तु, विहरन्तो भवन्ति न । ततोऽन्येऽपि यथास्थानं, स्युर्गार्हस्थ्याद्यवस्थया ॥ ३७ ॥ कोटिद्वयं केवलिनो, द्वे च कोटिसहस्रके । साधवः स्युर्जघन्येन, न्यूना इतो भवन्ति न ॥ ३८ ॥ यद्येकः केवली तेभ्यः, सिद्ध्येत्साधुर्दिवं व्रजेत् । तदाऽवश्यं भवेदन्यः, केवली प्रव्रजेत्परः ॥३९॥ चक्रिशार्ङ्गिशीरिणां च, शतं पञ्चाशताधिकम् । उत्कर्षतो जघन्येन, ते भवन्तीह विंशतिः ॥ ४० ॥ तथोक्तं प्रवचनसारोद्धारे—"उक्कोसेणं चक्की सयं दिवड्ढं च कम्मभूमिसुं । वीसं जहन्नभावे केसवसंखावि एमेव ॥ ४१ ॥" जम्बूद्वीपप्रज्ञप्त्या अप्ययमेवाभिप्रायः; श्रीसमवायांगे तु—"धायईसंडे णं दीवे अडसट्ठिं चक्किविजया य अडसट्ठिं रायहाणीओ, तत्थ णं उक्कोसपए अडसट्ठिं अरहंता समुप्पज्जिंसु वा ३, एवं चक्कवट्टी समुप्पज्जिंसु वा ३, एवं बलदेवा वासुदेवा समु०, पुक्खरदीवड्ढेणं अडसट्ठिं विजया, एवं अरिहंता

१ अनार्षमिदं, यत एवं सति प्रभूतानां जिनानामेकस्मिन् क्षेत्रे संभवापत्तिः, कपिलहरिवृत्तेक्षकाणां विरुद्धश्चार्हदादिद्वयस्याप्येकक्षेत्रे सद्भावः न चैवं तीर्थसत्तापि तेषां स्यात् निर्वाणात् परतः, हीरप्रश्ने एतद्वक्तृतायाः कटुकमतिनिश्रिततया भणनाच, विहरच्छब्देन सद्भाव एव ।

नरक्षेत्रे नद्यादिमानं

२०

२५
२६

समु० जाव वासुदेवा," इत्युक्तमिति ज्ञेयं। स्यान्निधीनां पञ्चदशशती त्रिंशाऽत्र सत्तया । जघन्यतश्चक्रिभोग्यं, तेषां शतमशीतियुक् ॥ ४२ ॥ उत्कर्षतश्चक्रिभोग्यनिधीनां पुनरेकदा । पञ्चशताधिकानीह, स्युः शतानि त्रयोदश ॥ ४३ ॥ उत्कर्षतोऽत्र रत्नानां, स्युः शतान्येकविंशतिः । जघन्यतः पुनस्तेषां, द्विशत्यशीतिसंयुता ॥ ४४ ॥ पञ्चाक्षैकाक्षरत्नानां, चत्वारिंशं शतं भवेत् । जघन्येनोत्कर्षतश्च, सपञ्चाशं सहस्रकम् ॥ ४५ ॥ शतं ससत्या समेतं, चक्रिजेतव्यभूमयः । भरताद्या दशक्षेत्री, विजयाः षष्टियुक् शतम् ॥ ४६ ॥ आभियोगिकविद्याभृच्छ्रेणीनां सर्वसंख्यया । साशीतीनि षट् शतानि, विद्याभृतां पुराणि च ॥ ४७ ॥ अष्टादश सहस्राणि, शतानि सप्त चोपरि । अयोध्यादिराजधान्यः, शतं सप्ततिसंयुतम् ॥ ४८ ॥ द्वे पङ्क्ती इह चन्द्राणां, द्वे च पङ्क्ती विवस्वताम् । एकैकान्तरिता एवं, चतस्र इह पङ्क्तयः ॥ ४९ ॥ प्रतिपङ्क्ति च षट्षष्टिसंख्याकाः शशिभास्कराः । सूचीश्रेण्या स्थिता जम्बूद्वीपेन्दुरविभिः समम् ॥ ५० ॥ एवं पङ्क्तयश्चतस्रोऽपि, पर्यटन्ति दिवानिशम् । मृगयन्त्य इवाशेषवञ्चकं कालतस्करम् ॥ ५१ ॥ द्वात्रिंशं शतमित्येवं, नरक्षेत्रे हिमांशवः । द्वात्रिंशं शतमर्काश्च, शोभन्तेऽदभ्रतेजसः ॥ ५२ ॥ नक्षत्राणां पङ्क्तयश्च, षट्पञ्चाशद्भवेदिह । प्रतिपङ्क्ति च षट्षष्टिः, षट्षष्टिः स्युरुडून्यपि ॥ ५३ ॥ जम्बूद्वीपस्थतत्तद्भैः, पङ्क्त्या चरन्त्यमून्यपि । जम्बूद्वीपग्रहैः पङ्क्त्या, चरन्त्येवं ग्रहा अपि ॥ ५४ ॥ ग्रहाणां पङ्क्तयश्चात्र, षट्सप्तत्यधिकं शतम् । प्रतिपङ्क्ति च षट्षष्टिः, षट्-

१ भिन्नकालापेक्षयैतत्, प्राक्तनं त्वेककालापेक्षमिति न विरुद्धता, मूलागम एव विदेहेषु चक्रिकालासंभविवासुदेवचतुष्कोक्तेः ।

षष्टिः स्युर्ग्रहा अपि ॥ ५५ ॥ एवं च–भानां शतानि षट्त्रिंशत्, पण्णवत्यधिकान्यथ । एकादश ग्रहसहस्राः शताः षोडशाश्च षट् ॥ ५६ ॥ स्युस्ताराः कोटिकोट्योऽष्टाशीत्या लक्षैर्मिताः । सहस्रैरपि चत्वारिं-शता शतैश्च सप्तभिः ॥ ५७ ॥

अथात्र यानि चैत्यानि, शाश्वतान्यथ तेषु याः । अर्हतां प्रतिमा वन्दे, ताः संख्याय श्रुतोदिताः ॥ ५८ ॥ शतास्त्रयोदशैकोनपञ्चाशा ये पुरोदिताः । गिरीणां तेषु ये पञ्च, मेरवः प्राग्निरूपिताः ॥ ५९ ॥ मेरौ मेरौ कान-नेषु, चतुर्षु दिक्चतुष्टये । चैत्यमेकैकमेकं च, मूर्ध्नि सप्तदशेति च ॥ ६० ॥ प्रतिमाः प्रतिचैत्यं च, विंशं शतमिहो-दिताः । त्रिद्वारेषु हि चैत्येषु, भवन्तीयत्य एव ताः ॥ ६१ ॥ प्रतिद्वारं शाश्वतेषु, यच्चैत्येष्वखिलेष्वपि । स्युः षट् षट् स्थानानि तथा, ह्येकः स्यान्मुखमण्डपः ॥ ६२ ॥ ततो रङ्गमण्डपः स्यात्पीठं मणिमयं ततः । स्तूपस्तदुपरि चतुःप्रतिमालङ्कृतोऽभितः ॥ ६३ ॥ ततोऽशोकतरोः पीठं, पीठं केतोस्ततः परम् । ततोऽप्यग्रे भवेद्वापी, स्वर्वा-पीवामलोदका ॥ ६४ ॥ एवं त्रयाणां द्वाराणां, प्रतिमा द्वादशाभवन् । अष्टोत्तरं शतं गर्भगृहे विंशं शतं ततः ॥ ६५ ॥ चतुर्द्वाराणां च तेषामर्चा द्वारेषु षोडश । गर्भालये साष्टशतं, चतुर्विंशं शतं ततः ॥ ६६ ॥ नन्दीश्वरे द्विपञ्चाशत्कुण्डले रुचकेऽपि च । चत्वारि चत्वारि षष्टिरित्येवं सर्वसंख्यया ॥ ६७ ॥ चतुर्द्वाराणि चैत्यानि, शेषाणि तु जगत्त्रये । त्रिद्वाराण्येव चैत्यानि, विज्ञेयान्यखिलान्यपि ॥ ६८ ॥ युग्मम् । ज्योतिष्कभवनाधी-शव्यन्तरावसथेषु च । सभाभिस्सहैषु स्यात्साशीति प्रतिमाशतम् ॥ ६९ ॥ तच्चैवं–उपपाताभिषेकाख्ये,

नरक्षेत्रे नि-ध्यादिमानं शाश्वतचै-त्यप्रतिमा-मानं

२०

२५



२७

अलङ्कारसभा पि च । व्यवसायसुधर्माख्ये, भान्ति पञ्चाप्यमूः सभाः ॥७०॥ द्वारैस्त्रिभिस्त्रिभिर्द्वारे, द्वारेऽर्चाभि-
श्चतसृभिः । भाति स्तूपः प्रतिसभं, द्वादश द्वादशेति ताः ॥ ७१ ॥ षष्टिः पञ्चानां सभानामिति प्रतिसुरालयम् ।
प्राग्वद्विंशं शतं चैत्ये, इत्यशीतियुतं शतम् ॥७२॥ एवमाद्वादशस्वर्गं, साशीतिप्रतिमाशतम् । ग्रैवेयकादिषु शतं,
विंशं चानुत्तरावधि ॥ ७३ ॥ अथ प्रकृतं–पञ्चानामिति मेरूणां, पञ्चाशीतिर्जिनालयाः । जिनार्चानां सहस्राणि,
दशोपरि शतद्वयम् ॥ ७४ ॥ शेषेषु सर्वगिरिषु, स्यादेकैको जिनालयः । सहस्रं ते चतुश्चत्वारिंशैस्त्रिभिः शतै-
र्युतम् ॥ ७५ ॥ सहस्रैरेकषष्ट्याढ्यं, लक्षमेकं शतद्वयम् । अशीत्याभ्यधिकं चात्र, जिनार्चाः प्रणिदध्महे ॥ ७६ ॥
यानि दिग्गजकूटानि, चत्वारिंशदिहोचिरे । तेष्वेकैकं चैत्यमष्टचत्वारिंशच्छतानि च ॥७७॥ अर्चास्तत्र नमस्कुर्मो,
भवेच्चैत्यमथैककम् । दशस्वपि कुरुष्वर्चाशतानि द्वादशात्र च ॥ ७८ ॥ जम्बूप्रभृतयो येऽत्र, महावृक्षा दशोदिताः ।
शतं सप्तदशं तेषु, प्रत्येकं स्युर्जिनालयाः ॥ ७९ ॥ एकस्तत्र मुख्यवृक्षे, शतमष्टाधिकं पुनः । अष्टाधिके वृक्षशते,
तत्परिक्षेपवर्त्तिनि ॥ ८० ॥ तद्दिग्विदिग्वर्त्तिकूटेष्वेकैक इति मीलिताः । एकादशशती ससत्याख्या वृक्ष-
जिनालयाः ॥ ८१ ॥ लक्षमेकं सहस्राणि, चत्वारिंशदथोपरि । चतुःशतीं जिनार्चानां, वृक्षेषु दशसु स्तुमे
॥ ८२ ॥ चतुःशतीह कुण्डानां, या पञ्चाशा निरूपिता । तत्र प्रासाद एकैकः, प्रतिमास्तत्र चार्हताम् ॥ ८३ ॥
चतुष्पञ्चाशत्सहस्रमिता नमस्करोम्यहम् । प्राक्तनैस्त्वत्र कुण्डानां, साशीतिस्त्रिशतीरिता ॥ ८४ ॥ गङ्गाम-
हानदीचैत्यसप्ततिश्च मया पुनः । महानदीष्वपि कुण्डेष्वेवं प्रासादसंभवः ॥ ८५ ॥ इत्थं संभाव्य पञ्चाशा,

चतुःशती यदीरिता । कुण्डचैत्यानां तदत्र, नदीचैत्यविवक्षया ॥ ८६ ॥ यदि चान्यत्र कुण्डेभ्यो, नदीषु चैत्यसंभवः । तदा वृद्धोक्तिरेवास्तु, प्रमाणं नाग्रहो मम ॥ ८७ ॥ अशीतिर्हृदचैत्यानि, प्रत्येकमेकयोगतः । अर्चा नव सहस्राणि, तेषु वन्दे शतानि षट् ॥ ८८ ॥ एवं मनुष्यक्षेत्रेऽस्मिंश्चैत्यानां सर्वसंख्यया । शतानि सैकोनाशीतीन्येकात्रिंशद्भवन्ति हि ॥ ८९ ॥ लक्षास्तिस्रो जिनार्चानां, तथैकाशीतिमेषु च । सहस्राणि नमस्यामि, साशीतिं च चतुःशतीम् ॥९०॥ नरक्षेत्रात्तु परतश्चत्वारि मानुषोत्तरे । नन्दीश्वरेऽष्टपष्टिश्च, रुचके कुण्डलेऽपि च ॥९१॥ चत्वारि चत्वारि चैत्यान्यशीतिरेवमत्र च । सहस्राणि नवार्चानां, चत्वारिंशाष्टशत्यपि ॥ ९२ ॥ एवं च तिर्यग्लोकेऽस्मिंश्चैत्यानां सर्वसंख्यया । सहस्राणि त्रीणि शतद्वयी चैकोनषष्टियुक् ॥ ९३ ॥ सहस्राण्येकनवतिं, लक्षास्तिस्रः शतत्रयम् । विंशमत्र जिनार्चानां, तिर्यग्लोके नमाम्यहम् ॥ ९४ ॥ ज्योतिष्काणां व्यन्तराणामसंख्येयेष्वसंख्यशः । विमानेषु नगरेषु, चैत्यान्यर्चाश्च संस्तुवे ॥ ९५ ॥ अधोलोकेऽपि भवनाधीशानां सप्त कोटयः । लक्षा द्विसप्ततिश्चोक्ता, भवनानां पुराऽत्र याः ॥ ९६ ॥ प्रत्येकं चैत्यमेकैकं, तत्रेति सप्त कोटयः । लक्षा द्विसप्ततिश्चाधोलोके चैत्यानि संख्यया ॥ ९७ ॥ त्रयोदश कोटिशतान्येकोननवतिं तथा । कोटीः षष्टिं च लक्षाणि, तत्रार्चानां स्मराम्यहम् ॥ ९८ ॥ ऊर्ध्वलोकेऽपि सौधर्मात्प्रभृत्यनुत्तरावधि । विमानसंख्या चतुरशीतिर्लक्षाणि वक्ष्यते ॥ ९९ ॥ सहस्राः सप्तनवतिस्त्रयोविंशतिरेव च । तावन्त्येवात्र चैत्यानि, प्रत्येकमेकयोगतः ॥ ३०० ॥ एकं कोटिशतं पूर्णं, द्विपञ्चाशच्च कोटयः । लक्षैश्चतुर्नवत्याढ्यः सहस्रैरपि संयुताः ॥ १ ॥

नरक्षेत्रे नन्दीश्वरादिषु च चैत्यमूर्तिमानं

२०

२५



२८

चतुश्चत्वारिंशतैव, षष्ठ्याढ्यैः सप्तभिः शतैः । अर्चयामो जिनार्चानामूर्द्ध्वलोके सुरार्चिताः ॥ २ ॥ लक्षाणि सप्तपञ्चाशदित्येवमष्ट कोटयः । त्रैलोक्ये नित्यचैत्यानां, सद्व्यशीति शतद्वयम् ॥ ३ ॥ कोटीशतानीह पञ्चदशोपरि च कोटयः । द्विचत्वारिंशदेवाष्टपञ्चाशल्लक्षसंयुताः ॥ ४ ॥ सहस्राणि च षट्त्रिंशत्साशीतीनि जगत्रये । नौमि नित्यजिनार्चानां, करवै सफलं जनुः ॥ ५ ॥ उत्सेधाङ्गुलनिष्पन्नसप्तहस्तमिताः खलु । शाश्वत्यः प्रतिमा जैन्य, ऊर्द्ध्वाधोलोकयोर्मताः ॥ ६ ॥ तिर्यग्लोके तु निखिलास्ताः पञ्चभिर्धनुःशतैः । मिता निरूपितास्तत्त्वपरिच्छेदपयोधिभिः ॥ ७ ॥ तथाहुः–"उस्सेहमंगुलेणं अहउड्ढमसेसंसत्तरयणीओ । तिरिलोए पणधणुसय सासयपडिमा पणिवयामि ॥ ८ ॥" राजप्रश्नीयोपाङ्गवृत्तौ सूर्याभविमाने तु–'जिणुस्सेहपमाणमेत्ताओ संपलियंकनिसन्नाओ' अस्य व्याख्याने जिनोत्सेधप्रमाणमात्राः, जिनोत्सेध उत्कर्षतः पञ्च धनुःशतानि, जघन्यतः सप्त हस्ताः, इह तु पञ्च धनुःशतानि संभाव्यंते इत्युक्तमिति ज्ञेयं । वैमानिकविमानेषु, द्वीपे नन्दीश्वरेऽपि च । कुण्डले रुचकद्वीपे, प्रासादा ये स्युरर्हताम् ॥ ९ ॥ योजनानां शतं दीर्घाः, पञ्चाशतं च विस्तृताः । उत्तुङ्गाः कथिताः प्राज्ञैर्योजनानां द्विसप्ततिम् ॥ १० ॥ देवकुरूत्तरकुरुसुमेरुकाननेषु च । वक्षस्कारभूधरेषु, गजदन्ताचलेष्वपि ॥ ११ ॥ इषुकाराद्रिषु वर्षधरेषु मानुषोत्तरे । असुराणां निवासेषु, ये

१ शिष्यते–विशिष्यते इति शेषा–उत्कृष्टा न तथा अशेषा इति व्याख्याने न विरोधः, तिर्यग्लोके तु एक एव पक्षः पञ्चधनुःशतात्मकः ।

५

१०

१२

प्रागुक्ता जिनालयाः ॥ १२ ॥ पञ्चाशतं योजनानि, दीर्घास्तदर्द्धविस्तृताः । षट्त्रिंशतं योजनानि, ते चोत्तुङ्गाः प्रकीर्त्तिताः ॥ १३ ॥ नागादीनां निकायानां, नवानां भवनेषु ये । जिनालया योजनानां, दीर्घास्ते पञ्चविंशतिम् ॥ १४ ॥ तानि द्वादश सार्द्धानि, पृथवोऽष्टादशोच्छ्रिताः । त्रिधाप्येतदर्द्धमाना, व्यन्तराणां जिनालयाः ॥ १५ ॥ ज्योतिष्कगतचैत्यानां, न मानमुपलभ्यते । प्रायः क्वाप्यागमे तस्मादस्माभिरपि नोदितम् ॥ १६ ॥ येऽथ मेरुचूलिकासु, तथैव यमकाद्रिषु । काञ्चनाद्रिदीर्घवृत्तवैताढ्येषु ह्रदेषु च ॥ १७ ॥ तथा दिग्गजकूटेषु, जम्ब्वादिषु द्रुमेषु च । प्रागुक्तेषु च कुण्डेषु, निरूपिता जिनालयाः ॥१८॥ क्रोशार्द्धपृथुलाः क्रोशदीर्घाश्चापशतानि च । चत्वारिंशानि ते सर्वे, चतुर्दश समुच्छ्रिताः ॥ १९ ॥ चैत्यानि यानि रचितानि जिनेश्वराणामन्यान्यपीह भरतप्रमुखैर्जगत्याम् । तेष्वार्हतीः प्रतिकृतीः प्रणमामि भक्त्या, त्रैकालिकीस्त्रिकरणामलतां विधाय ॥ २० ॥ ( वसन्ततिलका ) विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रातिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, सर्गोऽन्यक्षिमितः समासिमगमत्पीयूषसारोपमः ॥ २१ ॥

॥ इति श्रीलोकप्रकाशे मानुषोत्तरनगनरक्षेत्रनिरूपणो नाम
त्रयोविंशतितमः सर्गः समासः ॥ ग्रन्थाग्रं ३४८ ॥

त्रैलोक्ये चैत्येषु विष्कंभादि मूर्तिप्रमाणं च

२०

२३

## ॥ अथ चतुर्विंशतितमः सर्गः प्रारभ्यते ॥

परस्मिन् पुष्करार्द्धेऽथ, मानुषोत्तरशैलतः । परतः स्थिरचन्द्रार्कव्यवस्था प्रतिपाद्यते ॥ १ ॥ द्वीपार्णवेषु सर्वेषु, मानुषोत्तरतः परम् । ज्योतिष्काः पञ्चधापि स्युः, स्थिराश्चन्द्रार्यमादयः ॥ २ ॥ स्थिरत्वादेव नक्षत्र-योगोऽप्येषामवस्थितः । चन्द्राः सदाऽभिजिद्युक्ताः, सूर्याः पुष्यसमन्विताः ॥ ३ ॥ तथोक्तं जीवाभिगमसूत्रे—"बहियाउ माणुसनगस्स चंदासूराणऽवट्ठिया जोगा । चंदा अभीइजुत्ता सूरा पुण होंति पुस्सेहिं ॥ ४ ॥" गिरिकूटावस्थितानामेतेषामन्तरं द्विधा । तद्रवीन्द्वोरेकमन्यदिन्द्वोस्तथाऽर्कयोर्मिथः ॥ ५ ॥ योजनानां सहस्राणि, पञ्चाशत्तत्र चादिमम् । द्वितीयं तु योजनानां, लक्षं साधिकमन्तरम् ॥ ६ ॥ इदमर्थतो जीवाभिगम-सूत्रचन्द्रप्रज्ञप्तिसूत्रादिषु । साधिकत्वं तु पूर्वोक्तं, चन्द्रार्कान्तरमीलने । तन्मध्यवर्त्तिसूर्येंदुबिम्बविष्कम्भयोगतः ॥७॥ तथोक्तं—'ससिससि रविरवि साहिय जोअणलक्खेण अंतरं होइ' इति । शशिनाऽन्तरितो भानु-र्भानुनाऽन्तरितः शशी । राकानिशान्तवच्चित्रान्तरास्ते चन्द्रिकातपैः ॥ ८ ॥ तत एव चित्रलेश्याः, शैत्यो-ष्ण्यादन्तरान्तरा । वाग्मिनो वाक्यसंदर्भा, इवानुनयकाङ्क्षिणः ॥ ९ ॥ चन्द्रास्तत्र सुखलेश्या, नात्यन्तं शीतलत्विषः । मनुष्यलोके शीतर्त्तुभाविपीयूषभानुवत् ॥ १० ॥ भानवोऽपि मन्दलेश्या, न त्वतीवोष्ण-

५

१०

१२

॥ १६ ॥ सूर्येन्दुभिर्मीलिताः स्युर्यावन्तः शशिभास्कराः । अनन्तरानन्तरे स्युर्द्वीपे तावन्त एव ते ॥ १७ ॥ चतुश्चत्वारिंशमेवं, शतं स्युः पुष्करेऽखिले । द्वयोस्तदर्द्धयोस्तस्माद्, द्विसप्ततिर्द्विसप्ततिः ॥ १८ ॥ एवं शेषेष्वपि द्वीपवार्द्धिष्विन्दुविवस्वताम् । अनेनैव करणेन, कार्यः संख्याविनिश्चयः ॥ १९ ॥ यतो मूलसंग्रहण्यां, तथा क्षेत्रसमासके । सर्वद्वीपोदधिगतार्केन्दुसंख्याभिधायकम् ॥ २० ॥ करणं ह्येतदेवोक्तं, जिनभद्रगणीश्वरैः । न चोक्तमपरं किंचित्करुणावरुणालयैः ॥ २१ ॥ तथा च मूलसंग्रहणीटीकायां हरिभद्रसूरिः—"एवंऽणंतराणंतरे खित्ते पुक्खरदीवे चोयालं चंदसयं हवइ, एवं शेषेष्वप्यमुनोपायेन चन्द्रादिसंख्या विज्ञेयेति." युक्ता चेयं व्याख्या, चन्द्रप्रज्ञप्तौ सूर्यप्रज्ञप्तौ जीवाभिगमे च सकलपुष्करवरद्वीपमाश्रित्येत्थमेव चन्द्रादिसंख्याभिधानात्, तथाहि तद्ग्रंथः—"पुक्खरवरदीवे णं भंते ! दीवे केवइया चंदा पभासिंसु वा पभासंति वा पभासिस्संति वा ?, गो० ! चोयालं चंदसयं पभासिंसु वा पभासंति वा पभासिस्संति वा, चोयालं सूरियाण सयं तविंसु वा तवंति वा तविस्संति वा." इत्यादि. तथा तस्मिन्नेवार्थे सूर्यप्रज्ञप्तौ संग्रहणीगाथाः—"चोयालं चंदसयं चोयालं चेव सूरियाण सयं । पुक्खरवरंमि दीवे चरंति एए पगासंता ॥ २२ ॥ चत्तारि सहस्साइं बत्तीसं चेव होंति नक्खत्ता । छच्च सया बावत्तर महागहा बारस सहस्सा ॥२३॥ छन्नउइ सयसहस्सा चोयालीसं भवे सहस्साइं । चत्तारिं च सयाइं तारागणकोडिकोडीणं ॥ २४॥" ज्योतिष्करण्डकेऽप्याहुः—"धायइसंडप्पभिई उद्दिट्ठा तिगुणिया भवे चंदा । आइल्लचंदसहिया ते हुंति अणंतरं परओ ॥ २५ ॥ आइच्चाणंपि भवे एमेव विही अणेण

५

१०

१४

कायवा। दीवेसु समुद्देसु अ एमेव परंपरा जाण ॥२६॥" अनन्तरं नरक्षेत्रात्सूर्यचंद्राः कथं स्थिताः ?। तदागमेषु
गदितं, सांप्रतं नोपलभ्यते ॥ २७ ॥ केवलं चन्द्रसूर्याणां, यत्प्राक्कथितमन्तरम् । तदेव सांप्रतं चन्द्रप्रज्ञप्त्या-
दिषु दृश्यते ॥ २८ ॥ तथोक्तं चन्द्रप्रज्ञप्तिसूत्रे जीवाभिगमसूत्रे च—"चंदाओ सूरस्स य सूरा चंदस्स
अंतरं होइ । पन्नास सहस्साइं जोअणाणं अणूणाइं ॥ २९ ॥ सूरस्स य सूरस्स य ससिणो ससिणो य अंतरं
दिट्ठं। बहियाउ माणुसनगस्स जोयणाणं सयसहस्सं ॥ ३० ॥ सूरंतरिया चंदा चंदंतरिया य दिणयरा दित्ता ।
चित्तंतरलेसागा सुहलेसा मंदलेसा य ॥ ३१ ॥" ततश्च—एषां संभाव्यते चन्द्रप्रज्ञप्त्याद्यनुसारतः । सूची-
श्रेण्या स्थितिर्नैव, श्रेण्या परिरयाख्यया ॥ ३२ ॥ तथोक्तं जीवाभिगमवृत्तौ सूर्यसूर्यान्तरसूत्रव्याख्याने—
"एतच्चैवमन्तरपरिमाणं सूचीश्रेण्या प्रतिपत्तव्यं, न वलयाकारश्रेण्ये"ति, संग्रहणीलघुवृत्तेरप्ययमेवाभिप्रायः,
यथागमं भावनीयमन्यथा वा बहुश्रुतैः । श्रेयसेऽभिनिवेशोऽर्थे, न ह्यागमाविनिश्चिते ॥ २५ ॥ (स्थापना) चन्द्रा-
र्कपङ्क्तिविषये, नरक्षेत्राद्बहिः किल । मतान्तराणि दृश्यन्ते, भूयांसि तत्र कानिचित् ॥ २६ ॥ अनुग्रहार्थं
शिष्याणां, दर्श्यन्ते प्रथमं त्विदम् । दिगंबराणां तत्कर्मप्रकृत्यादिषु दर्शनात् ॥ २७ ॥ युग्मं ॥ लक्षार्द्धातिक्रमे
मर्त्योत्तरशैलादनन्तरम् । वृत्तक्षेत्रस्य विष्कम्भः, संपद्यते इयानिह ॥ २८ ॥ षट्चत्वारिंशता लक्षैर्मितोऽस्य
परिधिः पुनः । कोट्येका पञ्चचत्वारिंशता लक्षैः समन्विता ॥ २९ ॥ षट्चत्वारिंशत्सहस्राः, शतैश्चतुर्भि-
रन्विताः । ससससत्यभ्यधिका, योजनानामुदीरिताः ॥ ३० ॥ प्रतियोजनलक्षं चैकैकसूर्येन्दुभावतः । प्रत्येकमा-

चन्द्रसूर्याणां संख्या संस्थानं च

२०

२५ ॥२८८॥

२८

द्यल्पां पञ्चचत्वारिंशं शतं तयोः ॥ ३१ ॥ पूर्वोक्तपरिधौ कोटेर्लक्षेभ्यश्चाधिकस्य तु । विभक्तस्य नवत्याढ्यद्वि-
शत्या शशिभास्करैः ॥ ३२ ॥ लब्धे क्षिप्ते चन्द्रसूर्यान्तरेषु स्यात्तदन्तरम् । लक्षार्द्धं किञ्चिदधिकषष्टियुक्तशता-
धिकम् ॥ ३३ ॥ लक्षान्तरे द्वितीयैवं, पङ्क्तिर्लोकान्तसीमया । योजनलक्षान्तरालाः, स्युः सर्वा अपि पङ्क्तयः
॥३४॥ तथा—यावल्लक्षप्रमाणो यो, द्वीपो वाऽप्यथवाऽम्बुधिः । स्युस्तावत्यः परिरयश्रेण्यस्तत्रेन्दुभास्वताम् ॥ ३५ ॥
वृद्धिः पङ्क्तौ द्वितीयस्यामाद्यपङ्क्तेरनन्तरम् । षण्णां प्रत्येकमर्काणामिन्दूनां च निरूपिता ॥ ३६ ॥ तृतीयस्यां तु
ससानां, वृद्धिः षण्णां ततो द्वयोः । पुनः पङ्क्तौ तृतीयस्यां, ससानां वृद्धिरेव हि ॥ ३७ ॥ तथाहि—पङ्क्त्योर्द्वयो-
र्योजनानां, लक्षमन्तरमेकतः । परतोऽप्यन्तरं तावत्ततो लक्षद्वयाधिके ॥ ३८ ॥ विष्कम्भे पूर्वविष्कम्भात्, प्रति-
पंक्ति विवर्द्धते । लक्षद्वयं योजनानां, तस्यायं परिधिर्भवेत् ॥ ३९ ॥ लक्षाणि षड् योजनानां, द्वात्रिंशच्च सह-
स्रकाः । पञ्चपञ्चाशदाढ्यानि, चत्वार्येव शतानि च ॥ ४० ॥ पूर्वपूर्वपङ्क्तिगतपरिधिष्वस्य योजनात् । अग्र्या-
ग्र्यपङ्क्तिपरिधिः, सर्वत्र क्षेप एष वै ॥ ४१ ॥ अथैतस्यादिमपङ्क्तिपरिधौ क्षेपतः किल । द्वितीयपङ्क्तिसंबंधी,
परिधिः स भवेदियान् ॥ ४२ ॥ एकपञ्चाशता लक्षैरेका कोटी समन्विता । अष्टसप्तत्या सहस्रैर्द्वात्रिंशैर्नवभिः
शतैः ॥ ४३ ॥ षडेव लक्षाः पूर्वस्मात्परिधेरधिकास्ततः । षण्णां वृद्धिः प्रतिलक्षमेकैकार्केन्दुवृद्धितः ॥ ४४ ॥ एवं
पङ्क्तौ द्वितीयस्यां, संमिता लक्षसंख्यया । प्रत्येकमेकपञ्चाशं, शतमिन्दुदिवाकराः ॥ ४५ ॥ द्वितीयपङ्क्तिप-
रिधौ, ततः क्षेपाङ्कयोगतः । तृतीयपङ्क्तिपरिधिरेतावानिह जायते ॥ ४६ ॥ एका कोट्यष्टपञ्चाशल्लक्षाण्येकाद-

शापि च । सहस्राणि त्रिशती च, ससाशीतिसमन्विताः ॥ ४७ ॥ पूर्वस्मात्परिधेः सप्त, लक्षा जाता इहाधिकाः । वृद्धिस्ततस्तृतीयस्यां, ससानामिन्दुभास्वताम् ॥ ४८ ॥ तुर्यपञ्चम्योस्तु पङ्क्त्योः, षण्णां षण्णां ततः परम् । वृद्धिः षष्ठ्यां तु ससानां, षण्णां षण्णां ततो द्वयोः ॥ ४९ ॥ लोकान्तं यावदाधिक्यमेवमिन्दुविवस्वताम् । वाच्यमेवं पुष्करोत्तरार्द्धेऽष्टास्वपि पङ्क्तिषु ॥ ५० ॥ ससात्रिंशदधिकानि, शतान्येव त्रयोदश । प्रत्येकमिन्दुसूर्याणां, भवन्ति सर्वसंख्यया ॥५१॥ एतदर्थसंग्राहिकाश्च पूर्वाचार्यकृता एव इमा गाथाः—"माणुसनगाओ परओ लक्खद्धे होइ खेत्तविक्खंभो । छायालीसं लक्खा परिही तस्सेगकोडी उ ॥ ५२ ॥ छायालीसं च जोअणसहस्सा । चउरो सयाइं तह सत्तहत्तरी जोअणाणं तु ॥ ५३ ॥ पणयालीसं लक्खा तरठिय ससीण सूराणं । पंतीए पढमाए पणयालसयं तु पत्तेयं ॥ ५४ ॥ तप्परओ पंतीओ जोअणलक्खंतराओ सव्वाओ । जो जइलक्ख दिवोदहि तत्थ तावइय पंतीओ ॥ ५५ ॥ वुद्दी दुइयगपंतीओं छण्ह तइयाए होइ सत्तण्हं । तप्परओ दुदु पंती छगवुड्ढी तइय सगवुड्ढी ॥ ५६ ॥ मतान्तरं करणविभावनायामिदं स्मृतम् । लक्षार्द्धातिक्रमे पङ्क्तिराद्यमर्त्योत्तराचलात् ॥ ५७ ॥ द्विससतिः शशभृतां, द्विससतिश्च भास्वताम् । चतुश्चत्वारिंशमाद्यपङ्क्तावेवं शतं भवेत् ॥ ५८ ॥ यावद्योजनलक्षाणि, द्वीपः पाथोनिधिश्च यः । पङ्क्तयस्तत्र तावत्यो, मतेऽत्रापि समं ह्यदः ॥ ५९ ॥ भान्विन्द्वोः समुदितयोस्ततः शेषासु पङ्क्तिषु । चतुष्कस्य चतुष्कस्य, वृद्धिर्लोकान्तसीमया ॥ ६० ॥ एवं च पङ्क्तावष्टम्यां, द्वीपार्द्धेऽत्रेन्दुभास्वताम् । संजातं समुदितानां, द्विससत्यधिकं शतम्

नृलोकाद्बहिः सूर्यचन्द्रस्थितिः

२०

२५



२८

॥ ६१ ॥ एवं च पुष्करार्द्धेऽस्मिन्, समुदितेन्दुभास्वताम् । शतानि द्वादश चतुःषष्टिश्च सर्वसंख्यया ॥ ६२ ॥ तत्तत्पङ्क्तिस्थपरिधौ, खखभान्विन्दुभाजिते । लब्धमन्तरमर्केन्द्वोर्द्विघ्नमिन्द्वोस्तथाऽर्कयोः ॥ ६३ ॥ यथाऽऽद्यपङ्क्ति-संबन्धिपूर्वोक्तपरिधौ किल । चतुश्चत्वारिंशशताऽर्केन्दुभक्ते भवेदिदम् ॥ ६४ ॥ लक्षमेकं सहस्रं च, स्फुटं सप्त-दशोत्तरम् । चतुश्चत्वारिंशशतभक्तस्य योजनस्य च ॥ ६५ ॥ एकोनत्रिंशदंशाश्चा–( १०१०१७ २३/१४४ ) केन्द्वोरेतन्मिथोऽन्तरम् । अस्मिंश्च द्विगुणेऽन्योऽन्यं, भान्वोरिन्द्वोश्च तद्भवेत् ( २०२०३४ ३२/७२ ) ॥ ६६ ॥ द्वैगु-ण्यायात्र भागानां, द्वाभ्यां खल्वपवर्त्यते । छेदकात् छेदके तष्टे, ह्यंशराशिर्भवेन्महान् ॥ ६७ ॥ मतेऽस्मिंश्च प्रतिद्वीपं, वार्द्धीन्दुतिग्मरोचिषाम् । संख्याभिधायि करणं, न प्रोक्तं विस्तृतेर्भिया ॥ ६८ ॥ तदर्थिभिस्तु करण-विभावना विभाव्यताम् । पूर्वसंग्रहणीटीका, कृता वा मलयर्षिभिः ॥ ६९ ॥ एतन्मतसंग्राहिके च गाथे इमे—"चोयालसयं पढमिल्लुयाएँ पंतीइ चंदसूराणं । तेण परं पंतीओ चउउत्तरियाएँ वुड्ढीए ॥ ७० ॥ बावत्तरि चंदाणं बावत्तरि सूरियाण पंतीओ। पढमाए अंतरं पुण चंदा चंदस्स लक्खदुगं ॥७१॥" अत्र 'लक्खदुगं'ति लक्षद्विकं विंशत्या शतैश्चतुस्त्रिंशैर्योजनस्य द्विसप्ततितमैरेकोनत्रिंशद्भागैरधिकं बोद्धव्यं। श्रेणिः परिरयाख्यैव, मतयोरेत-योर्द्वयोः । न तु सूचीश्रेणिरत्र, वेत्ति तत्त्वं तु केवली ॥ ७२ ॥ योगशास्त्रचतुर्थप्रकाशवृत्तावप्युक्तं–"मानुषो-त्तरात्परतः पञ्चाशता योजनसहस्रैः परस्परमन्तरिताश्चन्द्रान्तरिताः सूर्याः सूर्यान्तरिताश्चन्द्रा मनुष्यक्षेत्री-यचन्द्रसूर्यप्रमाणाद् यथोत्तरं क्षेत्रपरिधेर्वृद्ध्या संख्येया वर्द्धमानाः शुभलेश्या ग्रहनक्षत्रतारापरिवारा घंटाकारा

असङ्ख्येया आस्वयंभूरमणाल्लक्षयोजनान्तरिताभिः पंक्तिभिस्तिष्ठन्ती"ति, तथा परिशिष्टपर्वण्यपि श्रीहेमचन्द्रसूरिभिः परिरयश्रेणिरेवोपमिता, तथाहि राजगृहवप्रवर्णने—"तत्र राजतसौवर्णः, प्राकारः कपिशीर्षकैः। भाति चन्द्रांशुमद्भिस्वैर्मर्त्योत्तर इवाचलः ॥ १ ॥" इति श्रीपरिरयश्रेणिः ॥ स्थापना

परतः पुष्करद्वीपात्पुष्करोदः पयोनिधिः। समन्ततो द्वीपमेनमवगूह्य प्रतिष्ठितः ॥ ६६ ॥ अतिपथ्यमतिस्वच्छं, जात्यं लघु मनोरमम्। स्फुटस्फटिकरत्नाभमस्य वारि सुधोपमम् ॥ ६७ ॥ सदा सपरिवाराभ्यां, भासुराभ्यां महौजसा। श्रीधरश्रीप्रभाभिख्यदेवताभ्यामहर्निशम् ॥ ६८ ॥ इन्द्वर्काभ्यां पुष्करवद्विभात्यस्योदकं यतः। पुष्करोदस्तत एष, भुवि ख्यातः पयोनिधिः ॥ ६९ ॥ अस्य योजनलक्षाणि, द्वात्रिंशच्चक्रवालतः। विस्तारः परिधिस्त्वस्य, भाव्यो व्यासानुसारतः ॥ ७० ॥ परतः पुष्कराम्भोधेर्द्वीपोऽस्ति वारुणीवरः। सद्वारुणीव वाप्यादौ, जलमस्येत्यसौ तथा ॥ ७१ ॥ देवौ द्वावत्र वरुणवरुणप्रभसंज्ञितौ। तत्स्वामिकत्वाद्वरुणवरोऽप्येष निगद्यते ॥ ७२ ॥ चतुःषष्टिर्योजनानां, लक्षाणि चैष विस्तृतः। चक्रवालतया ज्ञेयः, परिधिस्त्वस्य पूर्ववत् ॥ ७३ ॥ वारुणीवरोदनामा, द्वीपादस्मात्परोऽम्बुधिः। मदकारिवरास्वादोदकप्राग्भारभासुरः ॥ ७४ ॥ सुजातपरमद्रव्यसम्मिश्रमदिरारसात्। अतिस्वादूदकयोगात्, ख्यातोऽयं तादृशाभिधः ॥ ७५ ॥ वारुणिवारुणकान्तस्वामिकयोगतोऽथवा। स्याद्वारुणवरोदाख्यो, वरुणोदोऽप्ययं भवेत् ॥ ७६ ॥ एका योजनकोट्यष्टाविंशत्या लक्षकैः सह। चक्रवालतयैतस्य, विस्तारो निश्चितो बुधैः ॥ ७७ ॥ अथ क्षीरवरो द्वीपः, परतोऽस्मा-

परिरयश्रेणिः पुष्करोदादयः

२०

२५



२८

त्पयोनिधेः । क्षीरोपमं जलं वाप्यादिषु यस्येत्यसौ तथा ७८ ॥ पुण्डरीकपुष्पदन्तौ, यद्वा क्षीरोज्ज्वलौ सुरौ । अत्रेति तत्स्वामिकत्वात्, ख्यातः क्षीरवराभिधः ॥ ७९ ॥ विष्कम्भोऽस्य योजनानां, द्वे कोट्यौ चक्रवालतः । षट्पञ्चाशल्लक्षयुक्ते, परिधिश्चिन्त्यतां स्वयम् ॥ ८० ॥ ततः क्षीरवरद्वीपात्परं क्षीरोदवारिधिः । कर्पूरपूरडिण्डीरपिण्डडम्बरपाण्डुरः ॥ ८१ ॥ त्रिभागावर्त्तितचतुर्भागसच्छर्करान्वितम् । स्वादनीयं दीपनीयं, मदनीयं वपुष्मताम् ॥ ८२ ॥ बृंहणीयं च सर्वाङ्गेन्द्रियाह्लादकरं परम् । वर्णगन्धरसस्पर्शसंपन्नमतिपेशलम् ॥ ८३ ॥ ईदृग् यच्चक्रिगोक्षीरं, तस्मादपि मनोहरम् । अस्य स्वादूदकमिति, क्षीरोदः प्रथितोऽम्बुधिः ॥ ८४ ॥ तथा च जीवाभिगमसूत्रे—"खंडमच्छंडिओववेए रण्णो चाउरंतचक्कवट्टिस्से"त्यादि । क्षीरोज्ज्वलाङ्गविमलविमलप्रभदेवयोः । संबन्धि सलिलं ह्यस्येत्यपि क्षीरोदवारिधिः ॥ ८५ ॥ जिनजन्मादिषु कृतार्थोदकत्वादिवोल्लसन् । समीरलहरीसंगरङ्गत्कल्लोलकैतवात् ॥ ८६ ॥ गुरुश्रीकीर्त्तिविजययशोभिस्तुलितो बुधैः । इत्युद्भूताद्भुतानन्दाद्, द्विगुणश्वैत्यवानिव ॥ ८७ ॥ जिनस्नात्रार्थकलशैरलङ्कृततटद्वयः । गुरुः शुश्रूषुभिः शिष्यैरिव स्वच्छामृतार्थिभिः ॥ ८८ ॥ दिव्यकुम्भेष्वाहरत्सु, प्रणम्य शिरसोदकम् । लोलत्कल्लोलनिनदैरनुज्ञां वितरन्निव ॥ ८९ ॥ समन्ततस्तटोद्भिन्नचलद्बुद्बुददन्तुरः । ताटङ्क इव मेदिन्याः, स्फुरन्मौक्तिकपङ्क्तिकः ॥ ९० ॥ लोलकल्लोलसंघट्टोच्छलच्छीकरकैतवात् । सिद्धान्नभोगतान् मुक्ताकणैरवकिरन्निव ॥ ९१ ॥ धृतो निर्णिज्य विधिनातपाय स्थिरभास्वताम् । शोभतेऽसौ मध्यलोकनिचोलक इवोज्ज्वलः ॥ ९२ ॥ सप्तभिः कुलकं ॥ अस्य द्वादशलक्षाढ्या, विष्कम्भः पञ्च कोटयः ।

योजनानां परिधिस्तु, स्वयं भाव्या मनीषिभिः ॥ ९३ ॥ परतोऽस्मात्पयोराशेर्द्वीपो घृतवराभिधः । घृततुल्यं जलं वाप्यादिषु यस्येत्यसौ तथा ॥ ९४ ॥ घृतवर्णौ च कनककनकप्रभनामकौ । स्वामिनाविह तद्योगात्, ख्यातो घृतवराभिधः ॥ ९५ ॥ चतुर्विंशतिलक्षाढ्या, दश योजनकोटयः । व्यासोऽस्य परिधिर्ज्ञेयः, स्वयं व्यासानुसारतः ॥ ९६ ॥ एवमग्रेऽपि । द्वीपादस्मात्परो वार्द्धिर्घृतोदाख्यो विराजते । हैयङ्गवीनसुरभिस्वादुनीरमनोरमः ॥ ९७ ॥ अयं कान्तसुकान्ताभ्यां, स्वामिभ्यां परिपालितः । वाणिजाभ्यां घृतकुतूरिव साधारणी द्वयोः ॥ ९८ ॥ विष्कम्भोऽस्य योजनानां, विंशतिः किल कोटयः । अष्टचत्वारिंशताऽऽढ्या, लक्षैर्दक्षैर्निरूपिताः ॥ ९९ ॥ द्वीपः क्षोदवराभिख्यः, परोऽस्मात्तोयराशितः । निर्जरौ स्वामिनावस्य, स्तः सुप्रभमहाप्रभौ ॥ १०० ॥ क्षोदो नाम क्षोदरसः, स इक्षुरस उच्यते । तद्रूपमुदकं वाप्यादिषु यस्येत्यसौ तथा ॥ १ ॥ चत्वारिंशत्कोटयोऽस्य, विष्कम्भः कथितो जिनैः । षण्णवत्याऽन्विता लक्षैः, सुरलक्षनिषेवितैः ॥ २ ॥ ततः परं तु क्षोदोदाभिधानः खलु वारिधिः । वर्ततेऽत्यंतमधुरधुरन्धरपयोधरः ॥ ३ ॥ त्वगेलाकेसरैस्तुल्यं, त्रिसुगन्धि त्रिजातकम् । मरिचैश्च समायुक्तं, चतुर्जातकमुच्यते ॥ ४ ॥ ततश्च—चतुर्जातकसम्मिश्रात्रिभागावर्त्तितादपि । अतिस्वादुवारिरिक्षुरसादप्येष तोयधिः ॥ ५ ॥ एवं च लवणाम्भोधिः, कालोदः पुष्करोदधिः । स्वयंभूर्वारुणीवार्द्धिर्घृतक्षीरपयोनिधी ॥ ६ ॥ एतान् विहाय ससाम्बीन्, सर्वेऽप्यन्ये पयोधयः । तादृगिक्षुरसोत्कृष्टस्वादूदकमनोरमाः ॥ ७ ॥ एकाशीतिः कोटयोऽथ, लक्षा द्विनवतिस्तथा । पयोधेरस्य वलय-

विष्कम्भः परिकीर्त्तितः ॥ ८ ॥ अथ नन्दीश्वरो द्वीपः, क्षोदोदाम्भोनिधेः परः । प्ररूपितो विष्टपेष्टैरष्टमः कष्टमर्दिभिः ॥ ९ ॥ मधुरेक्षुरसस्वादूदकेषु दीर्घिकादिषु । जलाश्रयेषु फुल्लाब्जमकरन्दसुगन्धिषु ॥ १० ॥ स्फुरत्पुष्पफलोद्दामाभिरामद्रुमशालिषु । अत्रोत्पातपर्वतेषु, सर्वरत्नमयेषु च ॥ ११ ॥ आसते शेरते स्वैरं, क्रीडन्ति व्यन्तरामराः । व्यन्तरीभिः सह प्राच्यपुण्यानां भुञ्जते फलम् ॥ १२ ॥ इहत्यमाधिपत्यं द्वौ, कैलासहरिवाहनौ । धत्तः समृद्धौ देवौ द्योः, सूर्याचन्द्रमसाविव ॥ १३ ॥ एवं नन्द्या समृद्ध्याऽसावीश्वरः स्फातिमानिति । नन्दीश्वर इति ख्यातो, द्वीपोऽयं सार्थकाभिधः ॥ १४ ॥ त्रिषष्ट्या कोटिभिर्युक्तमेकं कोटिशतं किल । लक्षैश्चतुरशीत्याढ्यमेतद्वलयविस्तृतिः ॥ १५ ॥ द्वीपस्यास्य बहुमध्ये, शोभन्ते दिक्चतुष्टये । जात्याञ्जनरत्नमयाश्चत्वारोऽञ्जनपर्वताः ॥ १६ ॥ पूर्वस्यां देवरमणो, नित्योद्योतस्वयंप्रभौ । क्रमादपाक्प्रतीच्यां चोदीच्यां च रमणीयकः ॥ १७ ॥ वर्णशोभां वर्णयामः, किमेतेषां स्फुरद्रुचाम्? । नाम्नैव ये स्वमौज्ज्वल्यं, प्रथयन्ति यथास्थितम् ॥ १८ ॥ स्फुरद्धवलसब्रह्मचारितेजोभिरास्तृतैः । तेऽमुं द्वीपं सृजन्तीव, कस्तूरीद्रवमण्डितम् ॥ १९ ॥ स्वच्छगोपुच्छसंस्थानस्थिता रजोमलोज्झिताः । अभ्रङ्कषोत्तुङ्गशृङ्गा, मृष्टाः श्लक्ष्णाः प्रभास्वराः ॥ २० ॥ सहस्रांश्चतुरशीतिं, भूतलात्ते समुच्छ्रिताः । सहस्रं च योजनानामवगाढा भुवोऽन्तरे ॥ २१ ॥ योजनानां सहस्राणि, पृथवो भूतले दश । योजनानां सहस्रं च, विस्तीर्णास्ते शिरस्तले ॥ २२ ॥ मतान्तरे शतान्येते, चतुर्णवतिमानताः । स्युर्भूतले योजनानां, सहस्रं मूर्ध्नि विस्तृताः ॥ २३ ॥ चतुर्भिः कलापकं ॥ तथोक्तं स्थानाङ्गवृत्तौ–इहाञ्जनका

५

१०

१४

मूले दश योजनसहस्राणि विष्कम्भेणेत्युक्तं, द्वीपसागरप्रज्ञप्तिसंग्रहण्यां तूक्तं—"नव चेव सहस्साइं चत्तारि य होंति जोअणसयाइं । अंजणगपव्वयाणं धरणियले होइ विक्खंभो ॥ ६ ॥" इति, तदिदं मतान्तरमित्यवसेयं, एवमन्यत्रापि, मतान्तरबीजानि तु केवलिगम्यानीति । यस्मिन्मते सहस्राणि, भूतले दश विस्तृताः । वृद्धिक्षयौ मते तस्मिन्, योजनं योजनं प्रति ॥ २३ ॥ अष्टाविंशांशत्रितयमुपर्यारोहणे क्षयः । तावत्येवोपरितलाद्वृद्धिः स्यादवरोहणे ॥ २४ ॥ भावना त्वेवं—महीतलगतव्यासात्, सहस्रदशकात्मकात् । सहस्राण्यपचीयन्ते, नवोपरितलावधि ॥ २५ ॥ ततो नव सहस्राणि, भाज्यानि नाप्यते परम् । सहस्रैश्चतुरशीत्या, भागो भाज्यस्य लाघवात् ॥ २६ ॥ ततश्च—भाज्यभाजकयो राश्योः ९००० × ८४००० कृते शून्यापवर्त्तने । भाज्यो नवात्मा चतुरशीत्यात्मा स्याच्च भाजकः ९×८४ ॥ २७ ॥ उभावप्यपवर्त्येते, ततोऽशच्छेदकौ त्रिभिः । योजनांशत्रयं लब्धमष्टाविंशतिजं ततः ॥ २८ ॥ यद्वा—अष्टाविंशतिगुणितो भाज्यो राशिर्लवात्मको भवति । द्वे लक्षे द्वापञ्चाशता सहस्रैर्युते तेऽशाः ॥ २९ ॥ तेषां सहस्रैश्चतुरशीत्या भागे हृते सति । लब्धं विभागत्रितयमष्टाविंशतिसंभवम् ॥ ३० ॥ चतुःशताधिकनवसहस्रयोजनात्मकात् । मतान्तरे स्थुडव्यासात्सहस्रोरुशिरोऽवधि ॥ ३१ ॥ मध्ये शतानि चतुरशीतिः क्षीयन्त इत्यतः । भज्यन्ते तानि चतुरशीत्या किल सहस्रकैः ॥ ३२ ॥ भागाप्राप्त्या च चतुरशीत्या शतैस्तयोर्द्वयोः । कृतेऽपवर्त्तने लभ्यो, योजनांशो दशोद्भवः ॥ ३३ ॥ यद्वा प्राग्वद्भाज्यराशिर्दशघ्नः स्याल्लवात्मकः । सहस्राश्चतुरशीतिस्तेषां भागे च

नन्दीश्वरः अञ्जनगिरयः

२०

२५



२८

लभ्यते ॥ ३४ ॥ दशमो योजनस्यांशो, भाज्यभाजकसाम्यतः । क्षयवृद्धौ मानमेतत्, स्यादारोहवरोहयोः ॥ ३५ ॥
एकत्रिंशत्सहस्राणि, योजनानां शतानि षट् । त्रयोविंशानि परिधिर्भवत्येषां महीतले ॥ ३६ ॥ योज-
नानां सहस्राणि, त्रीणि द्वाषष्टियुक् शतम् । साधिकं मूर्ध्नि परिधिः, प्रज्ञप्तः परमर्षिभिः ॥ ३७ ॥
अथैषामञ्जनाद्रीणां, प्रत्येकं च चतुर्दिशि । गते लक्षे योजनानां, लक्षमायतविस्तृताः ॥ ३८ ॥ पुष्करिण्यश्चतस्रः
स्युरुद्विद्धा दशयोजनीम् । निर्मत्स्यस्वच्छसलिलोल्लसत्कल्लोलवेल्लिताः ॥ ४० ॥ जीवाभिगमसूत्रवृत्तौ प्रवचन-
सारोद्धारवृत्तौ च एता दशयोजनोद्विद्धा उक्ताः, नन्दीश्वरस्तोत्रे नन्दीश्वरकल्पे च सहस्रयोजनोद्विद्धा
उक्ताः, स्थानाङ्गसूत्रेऽपि—'ताओ णं णंदाओ पुक्खरणीओ एगं जोअणसयसहस्सं आयामेणं पन्नासं जोअण-
सहस्साइं विक्खंभेणं दस जोअणसयाइं उव्वेहेणं' इत्युक्तमिति ज्ञेयं । चतुर्दिशं त्रिसोपानप्रतिरूपकबन्धुराः ।
चतुर्दिशं च प्रत्येकं, रम्यास्तेः रत्नतोरणैः ॥ ४१ ॥ दलच्छतदलश्रेणिगलन्मरन्दलेपतः । अन्योऽन्यमितरभ्रान्ति-
भ्रमद्भृङ्गतदङ्गनाः ॥ ४२ ॥ अनरालैर्मरालाद्यैर्मृणालैर्ललितान्तराः । आमुक्तव्यक्तशृङ्गारहारैरिव मनोहराः ॥ ४३ ॥
सोपानावतरत्स्वःस्त्रीनूपुरध्वनिबोधितैः । मरालैर्मधुरध्वानैर्मुदोपवीणिता इव ॥ ४४ ॥ क्रीडद्दिव्याङ्गनोत्तुङ्ग-
वक्षोजास्फालनोर्जितैः । आत्तरङ्गैः सत्तरङ्गैरिवाङ्गीकृतताण्डवाः ॥ ४५ ॥ अर्हदर्चार्चनोद्युक्तस्नातस्वःस्त्रीस्तन-
च्युतैः । कस्तूरीचन्द्रघुसृणैः, शोभन्ते चित्रिता इव ॥ ४६ ॥ षड्भिः कुलकं ॥ नन्दिषेणा तथाऽमोघा, गोस्तूपा

१ आयामविष्कम्भावपेक्ष्य पुष्करिणीनां दशशतोद्वेधयोग्यतेति अध्याहार्यो दशशब्दात् शतशब्दः, ततो न विरोधः केषामपि ।

च सुदर्शना । स्युर्वाप्यो देवरमणात्पूर्वादिदिक्चतुष्टये ॥ ४७ ॥ नन्दोत्तरा तथा नन्दा, सुनन्दा नन्दिवर्द्धना । पुष्करिण्यश्चतस्रः स्युर्नित्योद्योताश्चतुर्दिशम् ॥४८॥ भद्रा विशाला कुमुदा, चतुर्थी पुण्डरीकिणी । स्वयंप्रभगिरेः पूर्वादिषु दिक्ष्विति वापिकाः ॥ ४९ ॥ विजया वैजयन्ती च, जयन्ती चापराजिता । वाप्यः प्राच्यादिषु दिक्षु, रमणीयाञ्जनागिरेः ॥ ५० ॥ अयं नन्दीश्वरस्तवनन्दीश्वरकल्पाभिप्रायेण षोडशानामपि पुष्करिणीनां नामक्रमः, स्थानाङ्गजीवाभिगमाभिप्रायेण त्वेवं—नन्दोत्तरा तथा नंदा, चानन्दा नन्दिवर्द्धना । चतुर्दिशं पुष्करिण्यः, पौरस्त्यस्याञ्जनागिरेः ॥ ५१ ॥ भद्रा विशाला कुमुदा, चतुर्थी पुण्डरीकिणी । चतुर्दिशं पुष्करिण्यो, दाक्षिणात्याञ्जनागिरेः ॥ ५२ ॥ नन्दिषेणा तथाऽमोघा, गोस्तूपा च सुदर्शना । चतुर्दिशं पुष्करिण्यः, प्रतीचीनाञ्जनागिरेः ॥ ५३ ॥ उदीच्ये तूभयोरपि मतयोस्तुल्यमेव ॥ एकैकस्याः पुष्करिण्या, व्यतीत्य दिक्चतुष्टये । योजनानां पञ्च शतान्येकैकमस्ति काननम् ॥ ५४ ॥ अस्त्यशोकवनं प्राच्यां, सप्तपर्णवनं ततः । याम्यां प्रत्यक् चम्पकानामथाम्राणामुदग् वनम् ॥ ५५ ॥ योजनानां लक्षमेकमायतान्यखिलान्यपि । शतानि पञ्च पृथुलान्यद्भुतान्यद्भुतश्रिया ॥५६॥ सच्छायैः सुमनोरम्यैर्महास्कन्धैः समुन्नतैः । विभान्ति तरुभिस्तानि, कुलानीव नरोत्तमैः ॥ ५७ ॥ सौरभ्याकृष्टमधुपा, लीलानर्त्तितपल्लवाः । उद्बुद्धकुसुमास्तेषु, लताः पण्याङ्गना इव ॥ ५८ ॥ तेषां कुञ्जेषु निश्छिद्रपरिच्छदाद्रिभित्तिषु । न विशन्तीशगेहेषु, चौरा इव करा रवेः ॥ ५९ ॥ षोडशानामप्यमूषां, वापिकानां किलोदरे । स्यादेकैको दधिमुखः, स्फारस्फटिकरत्नजः ॥ ६० ॥ मुखं शिखरमेतेषां, यतो दधिवदुज्ज्व-

पुष्करिण्यः
दधिमुखाश्च

२०

२५



२७

लम् । ततो ह्येते दधिमुखा, रौप्यशृङ्गमनोरमाः ॥ ६१ ॥ धान्यपल्यसमाकाराः, सर्वतः सदृशा इमे । उपर्यधो योजनानां, सहस्राणि दशातताः ॥ ६२ ॥ चतुःषष्टिं सहस्राणि, कीर्त्तितास्ते समुच्छ्रिताः । सहस्रं च योजनानामुद्विद्धा वसुधान्तरे ॥ ६३ ॥ तथोक्तं जीवाभिगमे—"दस जोअणसहस्साइं विक्खंभेणं" श्रीसमवायाङ्गे तु—"सव्वेवि णं दधिमुहपव्वया पल्लगसंठाणसंठिया सव्वत्थ समा विक्खंभुस्सेहेणं चउसट्ठिं जोअणसहस्साइं पण्णत्ता[1]" इत्युक्तमिति ज्ञेयं ॥ पुष्करिण्यः समस्तास्तास्तेनैकैकेन भूभृता । विभान्ति प्रौढमहिला, इव क्रोडीकृतार्भकाः ॥ ६४ ॥ चतुर्णामञ्जनाद्रीणां, घनाघनघनत्विषाम् । षोडशानां दधिमुखगिरीणामुपरि स्फुरत् ॥ ६५ ॥ जिनायतनमेकैकमेवं स्युः सर्वसङ्ख्यया । तृतीयाङ्गादिसिद्धान्तेषूक्तान्येतानि विंशतिः ॥ ६६ ॥ जीवाभिगमवृत्त्यादिग्रन्थेषु च निरूपितौ । वापीचतुष्कान्तरेषु, द्वौ द्वौ रतिकराचलौ ॥ ६७ ॥ षोडशानां वापिकानां, षोडशस्वन्तरेष्वमी । द्वात्रिंशद् द्विद्विभावेन, पद्मरागनिभाः समे ॥ ६८ ॥ इति प्रवचनसारोद्धारसूत्रवृत्त्यभिप्रायेण एते पद्मरागमयाः, स्थानाङ्गवृत्त्यभिप्रायेण तु सौवर्णा[2] इति । उपर्येकैकमेतेषां, सर्वेषामपि भूभृताम् । चैत्यं नित्यार्हतां चारु, चलाचलध्वजाञ्चलम् ॥ ६९ ॥ चत्वारो दधिमुखस्था, एकैकाञ्जनभूभृतः । अष्टानां च रतिकराद्रीणामष्टौ जिनालयाः ॥ ७० ॥ इत्येवमेकैकदिशि, त्रयोदश त्रयोदश । एवं संकलिताश्चैते, द्विपञ्चा-

१ सर्वत्र समा विष्कम्भेन उत्सेधेन चतुष्षष्टिः सहस्राणि इत्येवं व्याख्याने न विरोधः, अविभक्तिकनिर्देशो विष्कम्भशब्दस्यात्र, न चात्र 'विक्खंभुस्सेहेहिं'ति बहुवचनमस्ति येनागतिकता स्यात् । २ सुष्ठुवर्णमया इत्यर्थकत्वेन विरोधः, यद्वा पद्मरागो रक्तः सुवर्णं च रक्तमपि स्यात् ।

५

१०

१२

शाज्जिनालयाः ॥ ७१ ॥ स्थानाङ्गवृत्तावप्युक्तं—"सोलस दहिमुहसेला कुंदामलसंखचंदसंकासा । कणयनिभा बत्तीसं रइकर गिरिवाहिरा तेसिं ॥ ७२ ॥ अंजणगाइगिरीणं नाणामणिपज्जलंतसिहरेसु । बावन्नं जिणणिलया मणिरयणसहस्सकूडवरा ॥ ७३ ॥" प्रासादास्ते योजनानां, भवन्ति शतमायताः । पञ्चाशतं ततास्तुङ्गा, योजनानि द्विसप्ततिम् ॥ ७४ ॥ हावभावाद्यभिनयविलासोल्लासिपुत्रिकाः । दिदृक्षानिश्चलैर्दिव्याङ्गनावृन्दैरिवाश्रिताः ॥ ७५ ॥ चित्रोत्कीर्णैर्हयगजसुरदानवमानवैः । अद्भुतालोकनरसस्थितत्रिभुवना इव ॥ ७६ ॥ अष्टभिर्मङ्गलैः स्पष्टं, विशिष्टा अपि देहिनाम् । सेवाजुषां वितन्वाना, कोटिशो मङ्गलावलीः ॥ ७७ ॥ प्रीत्योन्नतपद्मासैर्नृत्यद्भिरिव केतुभिः । त्वरितं प्रोल्लसद्भक्तीनाह्वयन्त इवाङ्गिनः ॥ ७८ ॥ स्थिताः सिंहनिषदनाकाराः स्फारामलत्विषः । भव्याघघोरमातङ्गघटामिव जिघांसवः ॥ ७९ ॥ षड्भिः कुलकं ॥ तथाहुः—"अंजनगपव्वयाणं सिहरतलेसु हवंति पत्तेयं । अरिहंतायणाइं सीहणिसायाइं तुंगाइं ॥ ८० ॥" द्वारैश्चतुर्भिः प्रत्येकं, ते विभान्ति सुकान्तिभिः । चतुर्गतित्रस्तलोकत्राणदुर्गा इवोद्भटाः ॥ ८१ ॥ प्राच्यां देवाभिधं द्वारं, तद्भवेद्देवदैवतम् । असुराख्यं दक्षिणस्यां, द्वारं चासुरदैवतम् ॥ ८२ ॥ पश्चिमायां च नागाख्यं, तन्नागामररक्षितम् । उत्तरस्यां सुवर्णाख्यं, सुवर्णसुररक्षितम् ॥ ८३ ॥ योजनानि षोडशैतदेकैकं द्वारमुच्छ्रितम् । योजनान्यष्टविस्तीर्णं, प्रवेशे तावदेव च ॥ ८४ ॥ प्रतिद्वारमथैकैकः, पुरतो मुखमण्डपः । चैत्यस्य यो मुखे द्वारे, पट्टशालासमो मतः ॥ ८५ ॥ तस्यापि पुरतः प्रेक्षामण्डपः श्रीभिरद्भुतः । प्रेक्षा प्रेक्षणकं तस्मै, गृहरूपः स मण्डपः ॥ ८६ ॥ योज-

रतिकराः जिनालयाः द्वारादि च

१५

२०



२५

२६

कानां तु, लक्षाणां सप्तविंशतिः । सहस्राण्यष्टनवतिर्द्व्यशीतिः सप्तशत्यपि ॥ ८७ ॥ लक्षाण्यष्टाविंशतिर्या, सर्वसंख्या पुरोदिता । एषां योगेन सा प्राज्ञैर्भावनीया बहुश्रुतैः ॥ ८८ ॥ तत्रापि—सौधर्मेन्द्रविमानेभ्य, ईशानस्य सुरेशितुः । विमाना उच्छ्रिताः किंचित्प्रमाणतो गुणैरपि ॥८९॥ यत्तु पञ्चशतोच्चत्वं, प्रासादानां द्वयोरपि । स्थूलन्यायात्तदुदितं, ततस्तन्न विरुध्यते ॥ ९० ॥ वस्तुतः सौधर्मगतप्रासादेभ्यः समुन्नताः । ईशानदेवलोकस्य, प्रासादाः सुंदरा अपि ॥ ९१ ॥ यथा करतले कश्चिन्निम्नः कश्चित्तथोन्नतः । देशस्तथा विमानानामेतयोर्निम्नतोन्नती ॥ ९२ ॥ तथाऽऽहुः—"सक्कस्स णं भंते ! देविंदस्स देवरण्णो विमाणेहिंतो ईसाणस्स देविंदस्स देवरण्णो विमाणा ईसिं उच्चयरा ईसिं उन्नययरा" इत्यादि भगवतीशतक ३।१ उ० सू० । इदमेव मनसि विचिंत्य तत्त्वार्थभाष्यकारैरुक्तं—"सौधर्मस्य कल्पस्योपरि ऐशानः कल्पः, ऐशानस्योपरि सनत्कुमारः, सनत्कुमारस्योपरि माहेन्द्र इत्येवमासर्वार्थसिद्धा"दिति । वृत्ताः स्युर्वलयाकारास्त्र्यस्राः शृङ्गाटकोपमाः । भवन्त्यक्षाटकाकाराश्चतुरस्रा विमानकाः ॥ ९३ ॥ ये तु पुष्पावकीर्णाख्या, विमानका भवन्ति ते । नन्द्यावर्त्तानुकृतयः, केचिदन्येऽसिसंस्थिताः ॥ ९४ ॥ अपरे स्वस्तिकाकाराः, श्रीवत्साकृतयः परे । पद्माकाराः केचिदेवं, नानाकाराः स्थिता इति ॥९५॥ प्राकारेण परिक्षिप्ता, वृत्ताः पङ्क्तिविमानकाः । द्वारेणैकेन महता, मण्डिताः पिण्डितश्रिया ॥ ९६ ॥ त्र्यस्रानां तु विमानानां, यस्यां वृत्तविमानकाः । तस्यां दिशि वेदिका स्यात्प्राकारः शेषदिक्षु च ॥ ९७ ॥ मुण्ड-

५

१०

१३

प्राकाररूपैव, वेदिका तु भवेदिह । द्वाराणि च त्रिकोणेषु, त्रीण्येवेति जिनैर्मतम् ॥ ९८ ॥ चतुर्दिशं वेदिकाभिश्चतुरस्रास्तु चारवः । स्फारैर्द्वारैश्चतुर्भिश्च, चतुर्दिशमलङ्कृताः ॥ ९९ ॥

स्वरूपं किंचन ब्रूमः, सौधर्मेशाननाकयोः । विमानानामथो जीवाभिगमादिश्रुतोदितम् ॥ १०० ॥ विमानानामत्र पृथ्वी, घनोदधिप्रतिष्ठिता । स्त्यानीभूतोदकरूपः, ख्यात एव घनोदधिः ॥ १०१ ॥ जगत्स्वभावादेवासौ, स्पन्दते न हि कर्हिचित् । विमाना अपि तत्रस्था, न जीर्यन्ति कदाचन ॥ १०२ ॥ घनोदधिः स चाकाश, एवाधारविवर्जितः । निरालम्बः स्थितश्चित्रं, स्वभावाज्ज्योतिषादिवत् ॥ १०३ ॥ महानगरकल्पानि, विमानानि भवन्त्यथ । प्राकाराश्च तदुपरि, वनखण्डपरिष्कृताः ॥ १०४ ॥ प्राकारास्ते योजनानां, समुत्तुङ्गाः शतत्रयम् । शतं तदर्द्धं तत्पादं, मूलमध्योर्ध्वविस्तृताः ॥ १०५ ॥ चतुर्द्वारसहस्राढ्या, द्वारमेकैकमुच्छ्रितम् । योजनानां पञ्चशतीं, सार्द्धं द्वे च शते ततम् ॥ १०६ ॥ चक्र १ मृग २ गरुड ३ र्क्ष ४ च्छत्र ५ लसत्पिच्छ ६ शकुनि ७ सिंह ८ वृषाः ९ । अपि च चतुर्दन्तगजाः १० आलेख्यैरेभिरतिरम्याः ॥ १०७ ॥ प्रत्येकं शतमष्टाधिकमेते केतवो विराजन्ते । साशीतिसहस्रं ते, सर्वेऽप्यत्र प्रतिद्वारम् ॥ १०८ ॥ (आर्ये) शेषं द्वारवर्णनं च, श्रीसूर्याभविमानवत् । राजप्रश्नीयतो ज्ञेयं, नात्रोक्तं विस्तृतेर्भयात् ॥ १०९ ॥ विस्तृतानि योजनार्द्धमायतान्येकयोजनम् । प्राकारकपिशीर्षाणि, नानामणिमयानि च ॥ ११० ॥ प्रासादास्तेषु देवानां, सन्ति रत्नविनिर्मिताः । तत्रैतयोस्ताविषयोर्विमानानां वसुन्धरा ॥ १११ ॥ योजनानां शताः सप्तविंशतिः पिण्डतो भवेत् । प्रासादाश्च तदुपरि, प्रोक्ताः पञ्चशतोन्नताः

पुष्पावकीर्णाः सौधर्मेशानविमानस्वरूपं

२०

२५



२७

॥ १२ ॥ इदमुच्चत्वमानं तु, मूलप्रासादगोचरम् । प्रासादपरिपाट्यस्तु, तदर्द्धार्द्धमिता मताः ॥ १३ ॥ एवं च
पृथ्वीपिण्डेन, सह द्वात्रिंशदेव हि । शतानि तुङ्गत्वमिह, प्रासादशिखरावधि ॥ १४ ॥ एवं सर्वत्र भूपीठप्रासादौ-
न्नत्ययोजनात् । द्वात्रिंशद्योजनशता, विमानोच्चत्वमूह्यताम् ॥ १५ ॥ भूपीठस्य च बाहल्यं, प्रासादानां च
तुङ्गता । पृथक् पृथक् यथास्थानं, सर्वस्वर्गेषु वक्ष्यते ॥ १६ ॥ विष्कम्भायामतस्त्वत्र, विमानाः कथिता द्विधा ।
संख्येयैर्योजनैः केचिदसंख्येयैर्मिताः परे ॥ १७ ॥ व्यासायामपरिक्षेपाः, संख्येयैर्योजनैर्मिताः । आद्यानाम-
परेषां तेऽसंख्येयैर्योजनैर्मिताः ॥१८॥ स्वर्गयोरेनयोस्तत्र, प्रथमप्रतरेऽस्ति यत् । उडुनामैन्द्रकं व्यासायामतस्तत्प्रकी-
र्त्तितम् ॥१९॥ योजनानां पञ्चचत्वारिंशल्लक्षाणि सर्वतः । परिधिस्त्वस्य मनुजक्षेत्रस्येव विभाव्यताम् ॥२०॥ एवं च—
सिद्धक्षेत्रमुडुनामैन्द्रकं नृक्षेत्रमेव च । सीमन्तो नरकावासश्चत्वारः सदृशा इमे ॥२१॥ व्यासायामपरिक्षेपैरुपर्युपरि
संस्थिताः । दृष्टाः केवलिभिर्ज्ञानदृष्टिदृष्टत्रिविष्टपैः ॥२२॥ अन्येषां तु विमानानां, केषांचिन्नाकयोरिह । व्यासायाम-
परिक्षेपमानमेवं निरूपितम् ॥ २३ ॥ जम्बूद्वीपं प्रोक्तरूपं, यथा गत्यैकविंशतिम् । वारान् प्रदक्षिणीकुर्यात्सुरश्च-
प्पुटिकात्रयात् ॥ २४ ॥ षण्मासान् यावदुत्कर्षात्, तया गत्या प्रसर्पति । कानिचित्स विमानानि, व्यतिव्रजति वा न
वा ॥ २५ ॥ अथापरप्रकारेण, विमानमानमुच्यते । सौधर्मादिषु नाकेषु, यथोक्तं पूर्वसूरिभिः ॥ २६ ॥ कर्क-
संक्रान्तिघस्रे यदुदयास्तान्तरं रवेः । योजनानां सहस्राणि, चतुर्नवतिरीरितम् ॥ २७ ॥ षड्विंशा च पञ्चशती
(९४५२६ क, ४२।६०), एकस्य योजनस्य च । षष्टिभागा द्विचत्वारिंशदस्मिंस्त्रिगुणीकृते ॥ २८ ॥ लक्षद्वयं योज-

नानां, त्र्यशीतिश्च सहस्रकाः । साशीतयः शताः पञ्च, षष्ट्यंशाः षट् सुरक्रमः (२८३५८० क ६।६०) ॥ २९ ॥ सूर्योदयास्तान्तरेऽथ, प्रागुक्ते पञ्चभिर्हते । पूर्वोदितात्क्रमात्प्रौढः, क्रमो दिव्यो भवेत्परः ॥३०॥ स चायं—चतुर्लक्षी योजनानां, द्विसप्ततिः सहस्रकाः । षट्शती च त्रयस्त्रिंशा, षष्ट्यंशास्त्रिंशदेव च ॥ ३१ ॥ ( ४७२६३३ क. ३०।६०) उदयास्तान्तरे भानोः, सप्तभिर्गुणिते भवेत् । दिव्यः क्रमस्तृतीयोऽयं, प्रौढः पूर्वोदितक्रमात् ॥ ३२ ॥ षट् लक्षाण्येकषष्टिश्च, सहस्राणि शतानि षट् । षडशीतिर्योजनानां, चतुःपञ्चाशदंशकाः ॥ ३३ ॥ ( ६६१६८६ क. ५४।६०) अर्कोदयास्तान्तरेऽथ, नवभिर्गुणिते सति । एष दिव्यः क्रमस्तुर्यः, स्यान्महान् प्राक्तनक्रमात् ॥३४॥ अष्टोर्द्धान्यष्ट लक्षाणि, योजनानां शतानि च । ससैव चत्वारिंशानि, कलाश्चाष्टादशोपरि (८५०७४०क. १८।६०) ॥ ३५ ॥ चण्डा चपला जवना, वेगा चेति यथोत्तरम् । चतस्रो दिव्यगतयः, शीघ्रशीघ्रतराः स्मृताः ॥ ३६ ॥ केचिद्वेगाभिधानां तु, तुरीयां मन्वते गतिम् । नाम्ना जवनतरिकामभिन्नां च स्वरूपतः ॥ ३७ ॥ कस्याप्यथ विमानस्य, पारं प्राप्तुमुपस्थिताः । शास्त्रस्येव प्रासरूपाश्चत्वारो युगपत्सुराः ॥ ३८ ॥ एकस्तस्य विमानस्य, मिनोति तत्र विस्तृतिम् । आद्यक्रमेणाद्यगत्या, षण्मासान् यावदश्रमम् ॥ ३९ ॥ द्वितीयः पुनरायामं, तस्य मातुमुपस्थितः । क्रमैर्द्वितीयजातीयैर्गत्याऽपि चपलाख्यया ॥ ४० ॥ तृतीयो मध्यपरिधिं, मिमीते मतिमान् सुरः । क्रमैस्तृतीयजातीयैर्गच्छन् गत्या तृतीयया ॥ ४१ ॥ तुर्यस्तु बाह्यपरिधिं, मिमीपुरन्तिमैः क्रमैः । विमानमभितो भ्राम्यामीति गत्या तुरीयया ॥ ४२ ॥ मिन्वन्त एवं षण्मासान्, येषां पारं न ते गताः । सौधर्मादिषु

२० २५ २८

सन्त्येवंविधाः केचिद्विमानकाः ॥ ४३ ॥ अथ प्रकारान्तरेण, परिमाणं निरूप्यते । सौधर्मादिविमानानामनुत्त-
राश्रयावधि ॥ ४४ ॥ क्रमैः प्रथमजातीयैराद्यस्वर्गचतुष्टये । विष्कंभं चण्डया गत्याऽऽयामं चपलया पुनः ॥४५॥
जवनयाऽन्तः परिधिं, बाह्यं गत्या च वेगया । मिनुयान्निर्जरः कश्चिद्विमानमतिकौतुकी ॥ ४६ ॥ अच्युतान्तेषु
चाष्टासु, व्यासादीन्मिनुयात्क्रमात् । क्रमैर्द्वितीयजातीयैराद्यादिगतिभिर्युतैः ॥ ४७ ॥ ग्रैवेयकेषु नवसु,
विष्कम्भादीन्मिनोति सः । क्रमैस्तृतीयजातीयैश्चतुर्गतियुतैः क्रमात् ॥ ४८ ॥ विजयादिविमानेषु, चतुर्ष्वपि
मिनोत्यसौ । विष्कम्भादिक्रमैस्तुर्यैश्चतुर्गतिसमन्वितैः ॥ ४९ ॥ विमानमेकमप्येष, मासैः षड्भिरपि स्फुटम् ।
पूर्णं न गाहते सन्ति, विमानानीदृशान्यपि ॥ ५० ॥ जीवाभिगमसूत्रे तु, भेदांश्चण्डादिकान् गतेः । व्यासादि
चाविवक्षित्वा, विमानमानमीरितम् ॥ ५१ ॥ तथाहि—स्वस्तिकं १ स्वस्तिकावर्त्तं २, स्वस्तिकप्रभमित्यपि ३ ।
तुर्यं स्वस्तिककान्ताख्यं ४, परं स्वस्तिकवर्णकम् ५ ॥ ५२ ॥ षष्ठं स्वस्तिकलेश्याख्यं ६, सप्तमं स्वस्तिकध्वजम् ७ ।
अष्टमं स्वस्तिकसितं ८, स्वस्तिककूटमित्यथ ९ ॥ ५३ ॥ ततः स्वस्तिकशिष्टाख्यं १०, विमानं दशमं भवेत् ।
एकादशं स्वस्तिकोत्तरावतंसकमीरितं ११ ॥५४॥ षड्भिर्मासैः क्रमैराद्यैर्मिन्वानो नावगाहते । एषां मध्ये विमा-
नानां, किंचित्किंचित्तु गाहते ॥५५॥ अर्चि १ स्तथाऽर्चिरावर्त्तं २ मर्चिःप्रभ ३ मथापरम् । अर्चिःकान्त ४ मर्चि-
र्वर्णं ५ मर्चिर्लेश्यं ६ तथापरम् ॥ ५६ ॥ अर्चिर्ध्वज ७ मर्चिःसित ८ मर्चिःकूटं ९ ततः परम् । अर्चिःशिष्ट १०-
मर्चिरुत्तरावतंसकमन्तिमम् ११ ॥ ५७ ॥ किंचिद्विमानेष्वेतेषु, मिन्वन्नैवावगाहते । क्रमैर्द्वितीयैः षण्मास्या,

५
१०
१४

किंचित्पुनर्विगाहते ॥ ५८ ॥ कामं कामावर्त्तमेव, कामप्रभमथापरम् । कामकान्तं कामवर्णं, कामलेश्यं ततः परम् ॥ ५९ ॥ कामध्वजं कामसीतं, कामकूटं भवेत्परम् । कामशिष्टं तथा कामोत्तरावतंसकाभिधम् ॥ ६० ॥ किंचिदेषां विमानानां, मध्ये भिन्वन् विगाहते । क्रमैस्तृतीयैः षण्मास्या, किंचित्तु नावगाहते ॥ ६१ ॥ विजयं वैजयन्तं च, जयन्तमपराजितम् । विमानं किंचिदप्येषु, भिन्वन्नैवावगाहते ॥ ६२ ॥ षड्भिर्मासैः क्रमैस्तुर्यैः, सचातुर्यैः स निर्जरः । मानमेवं विमानानामुक्तं वैमानिकार्चितैः ॥ ६३ ॥ युग्मं ॥ तथा च तद्ग्रंथः—"अत्थि णं भंते ! विमाणाइं सोत्थियाइं जाव सोत्थोत्तरवडिंसयाइं ?, हंता अत्थि, ते णं भंते ! विमाणा केमहालया प० ?, गो० ! जावइयं च णं सूरिए उदेइ जावइअं च णं सूरिए अत्थमेइ एवइयाइं तिन्नि उवासंतराइं अत्थेगइयस्स देवस्स एगे विक्कमे सिया, से णं देवे ताए उक्किट्ठाए तुरियाए जाव दिव्वाए देवगतीए विईवयमाणे २ जाव एगाहं वा दुयाहं वा उक्कोसेणं छम्मासे वीईवएज्जा, अत्थेगइयं विमाणं विइवइज्जा, अत्थेगइयं विमाणं नो विईवइज्जा," इत्यादि । कस्मिन्नमी देवलोके, विमानाः स्वस्तिकादयः । विजयादीन् विना सम्यगेतन्न ज्ञायतेऽधुना ॥ ६४ ॥ ननु चण्डादिगतिभिः, षण्मास्या तादृशैः क्रमैः । न केषांचिद्विमानानां, पारं यान्ति सुरा यदि ॥ ६५ ॥ तद् द्रुतं जिनजन्मादिकल्याणकोत्सवार्थिनः । तस्मिन्नेव क्षणे तत्तत्स्थानमायान्त्यमी कथम् ? ॥ ६६ ॥ ( युग्मम् ) अत्रोच्यते—गतिक्रमाविमावुक्तौ, पल्योपमादिपल्यवत् । विमानमानज्ञानाय, कल्पितौ न

स्वस्तिकादिविमानमानं

२०

२५

॥ ३१४ ॥

२७

---

१ केषांचित् समवायाङ्गोक्तस्थित्यनुसारेण स्यात् निर्णयः, परं न यथावदित्येवमुल्लेखः ।

तु वास्तवौ ॥ ६७ ॥ वास्तवी तु गतिर्दिव्या, दिव्यः क्रमश्च वास्तवः । अत्यन्तसत्वरतरौ, तथा भवस्वभावतः ॥ ६८ ॥ ततश्च जिनजन्मादिप्रमोदप्रचयोत्सुकाः । सुरा अचिन्त्यसामर्थ्यादत्यन्तं शीघ्रगामिनः ॥ ६९ ॥ अच्युतादिककल्पेभ्योऽभ्युपेत्य प्रौढभक्तयः । स्वं स्वं कृतार्थयन्त्यर्हत्कल्याणकोत्सवादिभिः ॥ ७० ॥ ईदृशानि विमानानि, महान्त्याद्यद्वितीययोः । स्वर्गयोः पञ्चवर्णानि, विराजन्ते प्रभाभरैः ॥ ७१ ॥ जात्याञ्जनमयानीव, स्युर्मेचकानि कानिचित् । इन्द्रनीलरत्नमयानीव नीलानि कानिचित् ॥ ७२ ॥ पद्मरागमयानीव, रक्तवर्णानि कान्यपि । स्वर्णपीतरत्नमयानीव पीतानि कानिचित् ॥ ७३ ॥ कानिचिच्छुक्लवर्णानि, कृतानि स्फटिकैरिव । सर्वाणि नित्योद्योतानि, भासुराणि प्रभाभरैः ॥ ७४ ॥ यथा निरभ्रनभसि, मध्याह्नेऽनावृतस्थले । इह प्रकाशः स्यात्तेषु, ततः स्फुटतरः सदा ॥ ७५ ॥ तमःकणेन न कदाप्येषु स्थातुं प्रभूयते । संशयेनेव चेतस्सु[२], केवलज्ञानशालिनाम् ॥ ७६ ॥ अहोरात्रव्यवस्थापि, न भवेत्तेषु कर्हिचित् । दुरवस्थेव गेहेषु, जाग्रत्पुण्यौघशालिनाम् ॥ ॥ ७७ ॥ व्यवहारस्त्वहोरात्रादिकोऽत्रत्यव्यपेक्षया । तत एव च तत्रत्या, गतं कालं विदन्ति न[३] ॥ ७८ ॥

चन्दनागुरुचन्द्रैणमदकश्मीरजन्मनाम् । यूथिकाचम्पकादीनां, पुष्पाणां च समन्ततः ॥ ७९ ॥ यथा विकी-

---

१ गत्यनुमानेन विमानमानज्ञापनायैतत्, वास्तव्यदेवगतेस्तु मानस्य विमानमानवत् ज्ञेयतैव, न तु निश्चितता. २ चेतो ज्ञानमत्र, तेन केवलिनां नोसंज्ञिनोअसंज्ञित्वेऽपि न विरोधः । ३ नारकाणामपि सूर्यादेरुदयाद्यभावः, नृलोकबहिःस्थानां तिरश्चामपि, परं तेषां न गतस्य कालस्याज्ञानं, ततः सुखप्राचुर्यमेव गतकालस्याज्ञाततायाः कारणमुचितं, व्यन्तराणामपि 'तहिं देवा वंतरिये'त्यादिना तथोक्तेः ।

घ्रायमाणानां, सौरभ्यमिव जृम्भते । घ्राणाघ्राणकरं पीयमानमुत्फुल्लनासिकैः ॥ ८० ॥ ततोऽपीष्टतरस्तेषां, विमानानां स्वभावतः । स्वाभाविकः परिमलः, पुष्णाति परमां मुदम् ॥ ८१ ॥ त्रिभिर्विशेषकं ॥ रूतचूरनवनीतशिरीषकुसुमादितः । तेषामतिमृदुः स्पर्शः, स्वाभाविकः सनातनः ॥ ८२ ॥

चतुर्दिशं विमानेभ्यस्तेभ्यः पञ्चशतोत्तराः । चत्वारो वनखण्डाः स्युर्नानावृक्षालिमण्डिताः ॥ ८३ ॥ प्राच्यामशोकविपिनं, याम्यां ससच्छदाभिधम् । प्रतीच्यां चम्पकवनमुदगाम्रवणं तथा ॥ ८४ ॥ प्रत्येकं वनखण्डास्ते, प्राकारेण विभूषिताः । पञ्चवर्णमणितृणवरेण्यसमभूमयः ॥८५॥ सरस्यो वापिकाश्चैषु, पुष्करिण्यश्च दीर्घिकाः । रूप्यकूलास्तपनीयतलाः सौवर्णवालुकाः ॥ ८६ ॥ जात्यासवघृतक्षीरक्षोदस्वादूदकाञ्चिताः । क्रीडद्भ्सरसां वक्त्रैः, पुनरुक्तीकृताम्बुजाः ॥८७॥ चतुर्दिशं त्रिसोपानप्रतिरूपकराजिताः । विभान्ति तोरणैश्छत्रातिच्छत्रैश्च ध्वजैरपि ॥ ८८ ॥ त्रिभिर्विशेषकं ॥ तासु तासु पुष्करिण्यादिषु भान्ति पदे पदे । क्रीडार्हा मण्डपाः शैला, विविधान्दोलका अपि ॥ ८९ ॥ वैमानिका यत्र देवा, देव्यश्च सुखमासते । प्रायः सदा भवधारणीयाङ्गेनारमन्ति च ॥ ९० ॥ तत्र क्रीडामण्डपादौ, हंसासनादिकान्यथ । आसनानि भान्ति तेषां, भेदा द्वादश ते त्वमी ॥ ९१ ॥ हंसे १ कोंचे २ गरुडे ३ ओणय ४ पणए य ५ दीह ६ भद्दे य ७ । पक्खी ८ मयरे ९ पउमे १० सीह ११ दिसासोत्थि १२ वारसमे ॥ ९२ ॥ वनखण्डेषु तेष्वेवं, राजन्ते जातिमण्डपाः । यूथिकामल्लि-

१ वनखण्डादिषु भवधारणीयेन देवानां स्थितिरित्येवंविधस्पष्टोल्लेखाभावात् विरुद्धलेखस्यापि चाभावात् प्राय इत्युक्तिः ।

जिनजन्मादिष्वागमनं विमानानां वर्णादि वनखण्डादि
१५
२०
॥३१५॥
२४

कानागवल्लीद्राक्षादिमण्डपाः ॥ ९३ ॥ आस्थानप्रेक्षणस्नानालङ्कारादिगृहाण्यपि । शोभन्ते मोहनगृहाः, सुरतार्थं सुधाभुजाम् ॥ ९४ ॥ शिलापट्टा विभान्त्येषु, मण्डपेषु गृहेषु च । हंसक्रौञ्चादिसंस्थाना, नानारत्नविनिर्मिताः ॥ ९५ ॥ तेषु वैमानिका देवा, देव्यश्च सुखमासते । तिष्ठन्ति शेरते स्वैरं, विलसन्ति हसन्ति च ॥ ९६ ॥ सुकृतानां प्राक्कृतानां, भूयसां भुञ्जते फलम् । शमयन्त इव प्राच्यतपःसंयमजं श्रमम् ॥ ९७ ॥

मध्येवनमथैकैकः, प्रासादस्तत्र तिष्ठति । वनाधिकारी प्रत्येकं, सुरो वनसमाभिधः ॥ ९८ ॥ एवमेषां विमानानां, बहिर्भागो निरूपितः । अन्तर्भागो विमानानां, यथाऽऽम्नायमथोच्यते ॥ ९९ ॥ मध्यदेशे विमानानामुपकार्या विराजते । एषा च राजप्रासादावतंसकस्य पीठिका ॥ २०० ॥ उक्तं च—"गृहस्थानां स्मृता राज्ञामुपकार्योपकारिके"ति, परितस्तां पद्मवरवेदिका स्याद्वनाश्रिता । गवाक्षजालाकृतिना, रत्नजालेन राजिता ॥ १ ॥ तथासौ किङ्किणीजालैर्मणिमुक्तादिजालकैः । घण्टाजालैः स्वर्णजालैः, परिक्षिप्ताऽब्जजालकैः ॥ २ ॥ चतुर्दिशं त्रिसोपानप्रतिरूपकमञ्जुला । ध्वजतोरणसच्छत्रातिच्छत्राढ्यानि तान्यपि ॥ ३ ॥ मध्येऽस्या उपकार्याया, विमानस्वामिनो महान् । योजनानां शतान् पञ्चोत्तुङ्गः प्रासादशेखरः ॥ ४ ॥ मूलप्रासादात्समन्तात्, स्युः प्रासादावतंसकाः । चत्वारो द्वे शते सार्द्धे, योजनानां समुच्छ्रिताः ॥ ५ ॥ तेषां चतुर्णां प्रत्येकं, चत्वारो ये चतुर्दिशम् । प्रासादास्ते योजनानां, शतं सपादमुच्छ्रिताः ॥ ६ ॥ प्रत्येकमेषां चत्वारः, प्रासादा ये चतुर्दिशम् । द्वाषष्टिं ते योजनानामद्धयर्द्धां स्युः समुच्छ्रिताः ॥ ७ ॥ एषामपि परीवारप्रासादास्ते चतुर्दिशम् ।

५

१०

१४

योजनानां स्युः सपादामेकत्रिंशतमुच्छ्रिताः ॥ ८ ॥ तेषामपि परीवारप्रासादाः स्युः समुच्छ्रिताः । योजनानि पञ्चदश, सार्द्धं क्रोशद्वयं तथा ॥ ९ ॥ सर्वेऽप्यमी स्युः प्रासादा, निजोच्चत्वार्द्धविस्तृताः । एवं च पञ्च प्रासादपरिपाट्यः प्रकीर्त्तिताः ॥ १० ॥ एकैकस्यां च दिश्येकचत्वारिंशं शतत्रयम् । त्रयोदश शताः पञ्चषष्ट्याढ्याः सर्वसंख्यया ॥ ११ ॥ राजप्रश्नीयटीकाया, अभिप्रायोऽयमीरितः । तत्सूत्रे तु तिस्र एव, परिपाट्यः प्ररूपिताः ॥ १२ ॥ पञ्चाशीतिरमी सूत्रमते तु सर्वसंख्यया । सूत्रवृत्त्योर्विसंवादे, निदानं वेद तत्त्ववित् ॥ १३ ॥ पञ्चमाङ्गे द्वितीयस्य, शतस्योद्देशकेऽष्टमे । वृत्तौ चतस्रः प्रासादपरिपाट्यः प्ररूपिताः ॥ १४ ॥ एवं चात्र मतत्रयं । विचारसप्ततौ च महेन्द्रसूरिभिरेवमुक्तं—"ओआरिअलयणंमी, पहुणो पणसीइ हुंति पासाया । तिसय इगचत्त कत्थइ कत्थइ पणसट्ठी तेरसयं ॥ १५ ॥ पणसीई इगवीसा पणसी पुण एगचत्त तिसईए । तेरससय पणसट्ठी तिसई इगचत्त पइक्कुहं ॥ १६ ॥" "विमानेषु प्रथमं प्राकारस्तस्य सर्वमध्ये उपरिकालयनं पीठिकेत्यर्थः, तस्यां सर्वमध्ये प्रभोः पञ्चाशीतिः प्रासादाः, कुत्रापि विमानस्योपरिकालयने एकचत्वारिंशदधिकानि त्रीणि शतानि प्रासादाः, कुत्रापि पञ्चषष्ट्यधिकानि त्रयोदश शतानि प्रासादाः, एवं भेदत्रयमेवेति" विचारसप्ततिकावचूरौ । एवं च—अन्यस्वर्गेष्वपि मूलप्रासादोन्नत्यपेक्षया । अर्द्धार्द्धमानः प्रासादपरिवारो विभाव्य-

१ आदर्शानां वैचित्र्यात् भेदे नासंभवः, एवं भवने प्रासादपङ्क्तिविषयोऽपि भेदस्तत एव सुसंभवः, अनुयोगनवमांगायोपांगादिवृत्त्यवलोककानां नात्र चित्रं । यद्वा विचारसप्ततौ कत्थइ कत्थईत्युल्लेखात् विविधेषु विमानेषु त्रिविधा प्रासादपरिपाटी ।

उपकार्याप्रासादपरिपाट्यः

२०

२५

२६

ताम् ॥ १७ ॥ अमी समग्राः प्रासादा, वैडूर्यस्तम्भशोभिताः । उत्तुङ्गतोरणा रत्नपीठिकाबन्धबन्धुराः ॥ १८ ॥
विमानस्वामिसंभोग्यरत्नसिंहासनाश्रिताः । यथार्हं तत्परीवारसुरभद्रासनैरपि ॥ १९ ॥ एवं सामानिकादीना-
मपि संपत्तिशालिनाम् । रम्या भवन्ति प्रासादा, स्वर्णरत्नविनिर्मिताः ॥ २० ॥ पौरस्थानीयदेवानामन्येषाम-
प्यनेकशः । स्वस्वपुण्यानुसारेण, प्रासादाः सन्ति शोभनाः ॥ २१ ॥ तत एव विमानास्ते, शृङ्गाटकैरलङ्कृताः ।
त्रिकैश्चतुष्कैरपि च, चत्वरैश्च चतुष्पथैः ॥ २२ ॥ चतुर्मुखैरपि महापथैः समन्ततोऽश्रिताः । प्राकाराट्टालकवर-
चरिकाद्वारतोरणैः ॥ २३ ॥ पूर्वोक्तमूलप्रासादादथैशान्यां भवेदिह । सभा सुधर्मा तिसृषु, दिक्षु द्वारैस्त्रिभि-
र्युता ॥ २४ ॥ प्राच्यां याम्यामुदीच्यां च, भान्ति द्वाराणि तान्यपि । अष्टभिर्मङ्गलैश्छत्रैर्विराजन्ते ध्वजा-
दिभिः ॥ २५ ॥ प्रतिद्वारमथैकैको, विभाति मुखमण्डपः । त्रिभिर्द्वारैर्युतः सोऽपि, सभावद्रम्यभूतलः ॥ २६ ॥
प्रतिद्वारमथ मुखमण्डपानां पुरः स्फुरन् । प्रेक्षागृहमण्डपः स्यात्त्रिद्वारः सोऽपि पूर्ववत् ॥ २७ ॥ प्रेक्षागृहमण्ड-
पानां, मध्ये वज्राक्षपाटकः । सिंहासनान्विता तत्र, प्रत्येकं मणिपीठिका ॥ २८ ॥ प्रतिद्वारं तथा प्रेक्षागृहमण्ड-
पतः पुरः । मध्ये चैत्यस्तूपयुक्ताश्चतस्रो मणिपीठिकाः ॥ २९ ॥ प्रतिद्वारमथैतेभ्यः, स्तूपेभ्यः स्युश्चतुर्दिशम् ।
एकैका पीठिका स्तूपाभिमुखप्रतिमाश्रिता ॥ ३० ॥ तेषां च चैत्यस्तूपानां, पुरतो मणिपीठिका । प्रतिद्वारं
चैत्यवृक्षस्तत्र नानाद्रुमान्वितः ॥ ३१ ॥ चैत्यवृक्षेभ्यश्च तेभ्यः, पुरतो मणिपीठिका । प्रतिद्वारं भवेत्तत्र, महे-
न्द्रध्वज उच्छ्रितः ॥ ३२ ॥ पञ्चवर्णह्रस्वकेतुसहस्रालङ्कृतः स च । छत्रातिच्छत्रकलितस्तुङ्गो गगनमुल्लिखन्

॥ ३३ ॥ तस्यां सौधर्म्यां सभायां, स्युर्मनोगुलिकाभिधाः । सहस्राण्यष्टचत्वारिंशद्रत्नमयपीठिकाः ॥ ३४ ॥ प्राक्प्रतीच्योः सहस्राणि, तत्र षोडश षोडश । अष्टाष्ट च सहस्राणि, दक्षिणोत्तरयोर्दिशोः ॥ ३५ ॥ स्वर्णरूप्यमयास्तासु, फलका नागदन्तकैः । माल्यदामाञ्चितैर्युक्ताः, स्युर्गोमानसिका अपि ॥ ३६ ॥ तथैव तावन्त्य एव, शय्यारूपास्त्विमा इह । फलका नागदन्ताढ्या, घट्यो धूपस्य तेषु च ॥ ३७ ॥ तस्याः सौधर्म्याः सभाया, मध्ये च मणिपीठिका । उपर्यस्या माणवकश्चैत्यस्तम्भो भवेन्महान् ॥ ३८ ॥ तुङ्गः षष्टिं योजनानि, विस्तृतश्चैकयोजनम् । एकं योजनमुद्विद्धः, शुद्धरत्नप्रभोद्भटः ॥ ३९ ॥ उपर्यधो योजनानि, द्वादश द्वादश ध्रुवम् । वर्जयित्वा मध्यदेशे, रैरूप्यफलकाञ्चितः ॥ ४० ॥ फलकास्ते वज्रमयनागदन्तैरलङ्कृताः । तेषु सिक्यकविन्यस्ता, वज्रजाताः समुद्गकाः ॥ ४१ ॥ एतेषु चार्हत्सक्थीनि, निक्षिपन्त्यसकृत्सुराः । प्राच्यानि च विलीयन्ते कालस्य परिपाकतः ॥ ४२ ॥ विमानस्वामिनामेतान्यन्येषामपि नाकिनाम् । दैवतं मङ्गलं चैत्यमिव पूज्यानि भक्तितः ॥ ४३ ॥ एतत्प्रक्षालनजलाभिषेकेण क्षणादपि । क्लेशावेशादिका दोषा, विलीयन्ते सुधाभुजाम् ॥ ॥ ४४ ॥ एषामाशातनाभीताः, सभायामिह निर्जराः । न सेवन्ते निधुवनक्रीडां व्रीडां गता इव ॥ ४५ ॥ चैत्यस्तम्भादितः प्राच्यां, स्याद्रत्नपीठिकाऽत्र च । विमानस्वामिनः सिंहासनं परिच्छदान्वितम् ॥ ४६ ॥ तस्यैव चैत्यस्तम्भस्य, प्रतीच्यां मणिपीठिका । विमानस्वामिनो योग्यं, शयनीयं भवेदिह ॥ ४७ ॥ चैत्यस्तम्भपीठिकाऽत्र, षोडशाऽऽयतविस्तृता । अष्टोच्चा योजनान्यर्द्धमानास्तिस्रोऽपरास्ततः ॥४८॥ शयनीयादथैशान्यां, महती

विमानानां द्वारादि मनोगुलिकादि

२०

२५



२८

मणिपीठिका। क्षुल्लो महेन्द्रध्वजोऽस्यां, चैत्यस्तम्भोक्तमानभृत् ॥ ४९ ॥ ध्वजादेतस्मात्प्रतीच्यां, विमानस्वा-
मिनो भवेत्। चोपालाख्यः प्रहरणकोशः शस्त्रशताश्चितः ॥ ५० ॥ मानमस्या वक्ष्यमाणसभाऽर्हद्वेश्मनामपि।
तद्द्वारमण्डपस्तूपवृक्षादीनां च तीर्थपैः ॥ ५१ ॥ नन्दीश्वरद्वीपगतचैत्यवत् सकलं स्मृतम्। पीठिकादौ विशेषस्तु,
प्रोक्तोऽत्राग्रेऽपि वक्ष्यते ॥ ५२ ॥ एवं सभा सुधर्माख्या, लेशतो वर्णिता मया। वैमानिकविमानेषु, सिद्धान्तो-
क्तानुसारतः ॥ ५३ ॥ तस्याः सौधर्म्याः सभाया, अथैशान्यां भवेदिह। अर्हदायतनं नित्यमत्यन्तविततद्युति।
॥ ५४ ॥ भवेत्सर्वं सुधर्मावदिह द्वारत्रयादिकम्। विज्ञेयं तत्स्वरूपं च, पूर्वोक्तमनुवर्त्तते ॥ ५५ ॥ यावदभ्य-
न्तरे भागे, स्युर्मनोगुलिकाः शुभाः। तथैव गोमानसिकास्ततश्चैतद्विशिष्यते ॥ ५६ ॥ तस्य सिद्धायतनस्य,
मध्यतो मणिपीठिका। उपर्यस्या भवत्येको, देवच्छन्दक उद्भटः ॥ ५७ ॥ अष्टोत्तरशतं तत्र, प्रतिमाः शाश्व-
तार्हताम्। वैमानिका देवदेव्यो, भक्तितः पूजयन्ति याः ॥ ५८ ॥ घण्टाकलशभृङ्गारदर्पणाः सुप्रतिष्ठकाः।
स्थाल्यो मनोगुलिकाश्च, चित्ररत्नकरण्डकाः ॥ ५९ ॥ पात्र्यो वातकरकाश्च, गजाश्वनरकण्ठकाः। महोरगकिंपु-
रुषवृषकिन्नरकण्ठकाः ॥ ६० ॥ पुष्पमाल्यचूर्णगंधवस्त्राभरणपूरिताः। चङ्गेर्यः सिद्धार्थलोमहस्तकैरपि
ता भृताः ॥ ६१ ॥ पुष्पादीनां पटलानि, च्छत्रचामरकेतवः। तैलकोष्ठशतपत्रतगरैलासमुद्गकाः ॥ ६२ ॥ हंसपा-
दहरितालमनःशिलाञ्जनैर्भृताः। समुद्गकाश्च घण्टाद्यास्तत्राष्टाढ्यं शतं समे ॥ ६३ ॥ अष्टोत्तरशतं धूपकडुच्छ-
काश्च रत्नजाः। भवन्ति सिद्धायतने, श्रीजिनप्रतिमाग्रतः ॥ ६४ ॥ अथैतस्माज्जिनगृहादैशान्यां महती भवेत्।

५

१०

१४

उपपातसभा साऽपि, सुधर्मेव स्वरूपतः ॥ ६५ ॥ चत्वारि योजनान्यत्रोच्छ्रिताऽष्टौ च ततायता । पीठिकाऽस्यां विमानेशोपपातशयनीयकम् ॥ ६६ ॥ अथैशान्यामुपपातसभायाः स्यान्महाह्रदः । शतं दीर्घस्तदर्द्धोरुर्दशोण्डो योजनानि सः ॥ ६७ ॥ ह्रदादस्मादथैशान्यामभिषेकसभा भवेत् । त्रिद्वारा स्यात् सापि सर्वात्मना तुल्या सुधर्मया ॥ ६८ ॥ विभाति मध्यदेशेऽस्या, महती मणिपीठिका । विमानेशाभिषेकार्हं, तत्र सिंहासनं स्फुरत् ॥ ॥ ६९ ॥ सन्ति तत्परिवारार्हभूरिभद्रासनान्यपि । विमानेशाभिषेकार्थस्तत्र सर्वोऽप्युपस्करः ॥ ७० ॥ अमुष्या अप्यथैशान्यां, सुधर्मासदृशी भवेत् । अलङ्कारसभा मध्यदेशेऽस्या मणिपीठिका ॥ ७१ ॥ तस्यां च सपरीवारं, रत्नसिंहासनं भवेत् । विमानस्वामिनः सर्वोऽलङ्कारोपस्करोऽपि च ॥ ७२ ॥ अलङ्कारसभाया अप्यैशान्यां शोभना भवेत् । व्यवसायसभा सर्वात्मना तुल्या सुधर्मया ॥ ७३ ॥ तस्यां रत्नपीठिकायां, रत्नसिंहासनं भवेत् । सत्पुस्तकं चाङ्करत्नमयपत्रैरलङ्कृतम् ॥ ७४ ॥ रिष्ठरत्नमये तस्य, पृष्ठके शिष्टकान्तिनी । रूप्योत्पन्नदवरकप्रोता च पत्रसंततिः ॥ ७५ ॥ ग्रन्थिर्दवरकस्यादौ, नानामणिमयो भवेत् । न निर्गच्छन्ति पत्राणि, दृढं रुद्धानि येन वै ॥ ७६ ॥ मषीभाजनमेतस्य, वर्यवैडूर्यरत्नजम् । तथा मषीभाजनस्य, शृङ्खला तपनीयजा ॥ ॥ ७७ ॥ मषीपात्राच्छादनं च, वरिष्ठरिष्ठरत्नजम् । लेखनी स्याद्वज्रमयी, मषी रिष्ठमयी भवेत् ॥ ७८ ॥ रिष्ठरत्नमया वर्णाः, सुवाचाः पीनवर्त्तुलाः । धार्मिको व्यवसायश्च, लिखितस्तत्र तिष्ठति ॥ ७९ ॥ व्यवसायसभायाश्चैशान्यामत्यन्तशोभना । नन्दा पुष्करिणी फुल्लाम्भोजकिञ्जल्कपिञ्जरा ॥ ८० ॥ उपपातसभावत् स्यात्,



२०

२५



२८

सभासूक्तासु पीठिकाः । पूर्वोक्तहृदवन्नन्दापुष्करिण्यपि मानतः ॥ ८१ ॥ अस्या नन्दापुष्करिण्या, ऐशान्या-
मतिनिर्मलम् । बलिपीठं रत्नमयं, दीप्यते दीप्ततेजसा ॥ ८२ ॥ वैमानिकविमानानि, किंचिदेवं स्वरूपतः ।
वर्णितानि विशेषं तु, शेषं जानन्ति तीर्थपाः ॥ ८३ ॥

एतेषु स्वर्विमानेषु, योपपातसभोदिता । तत्रोपपातशय्या या, देवदूष्यसमावृता ॥ ८४ ॥ सूरिश्रीहीरविज-
यश्रीकीर्त्तिविजयादिवत् । शुद्धं धर्मं समाराध्य, साधितार्थाः समाधिना ॥ ८५ ॥ साधवः श्रावकास्तस्यां, विमा- 5
नेन्द्रतया क्षणात् । उत्पद्यन्तेऽङ्गुलासंख्यभागमात्रावगाहनाः ॥ ८६ ॥ युग्मं ॥ ततश्चान्तर्मुहूर्त्तेन, पञ्चपर्याप्तिः-
शालिनः । द्वात्रिंशद्वर्षतरुणा, इव भोगप्रभूष्णवः ॥ ८७ ॥ समन्ततो जय जय नन्द नन्देतिवादिभिः । देवाङ्ग-
नानां निकरैः, सस्नेहमवलोकिताः ॥ ८८ ॥ स्वाम्युत्पत्तिप्रमुदितैः, सुरैः सामानिकादिभिः । अष्टाङ्गस्पृष्टभूपी-
ठैर्नम्यन्ते भक्तिपूर्वकम् ॥ ८९ ॥ त्रिभिर्विशेषकं ॥ पञ्च पर्याप्तयस्तेषामुक्तास्तीर्थंकरैरिति । यद्भाषाचित्तपर्याप्त्योः,
समाप्तौ स्तोकमन्तरम् ॥ ९० ॥ तदुक्तं राजप्रश्नीयवृत्तौ—"इदं भाषामनःपर्याप्त्योः समाप्तिकालान्तरस्य प्रायः 10
शेषपर्याप्तिसमाप्तिकालान्तरापेक्षया स्तोकत्वादेकत्वेन विवक्षणमिति [1] पंचविहाए पज्जत्तीए पज्जत्तिभावं गच्छ-
इ'त्युक्तं । एषामुत्पन्नमात्राणां, देहा वस्त्रविवर्जिताः । स्वाभाविकस्फाररूपा, अलङ्कारोज्झिता अपि ॥९१॥ ततोऽने-
नैव देहेनाभिषेककरणादनु । वक्ष्यमाणप्रकारेणालङ्कारान् दधति ध्रुवम् ॥९२॥ विरच्यन्ते पुनर्ये तु, सुरैरुत्तरवै- 13

---

१ वैक्रिये इन्द्रियादिपर्याप्तीनां समाप्त्यन्तरस्य समयत्वाच्चिन्त्यमेतत्, अत एवाभयदेवैः हेतुविशेषो न निरदेशि । अनभिसन्धितभाषाऽभावेनैक्यं ।

क्रियाः । ते स्युः समसमुत्पन्नवस्त्रालङ्कारभासुराः ॥९३॥ तथोक्तं जीवाभिगमसूत्रे—"सोहम्मीसाणदेवा केरिसया विभूसाए प० ?, गो० ! दुविहा पण्णत्ता, तं०—वेउव्वियसरीरा य अवेउव्वियसरीरा य, तत्थ णं जे ते वेउव्विय-सरीरा ते हारविराइयवच्छा जाव दस दिसाओ उज्जोएमाणा" इत्यादि. 'तत्थ णं जे ते अवेउव्वियसरीरा ते णं आभरणवसणरहिया पगतित्था विभूसाए पण्णत्ता" तत शय्यानिविष्टानां, तेषां चेतस्ययं भवेत् । अभिप्रायः स्फुटः सुप्तोत्थितानामिव धीमताम् ॥ ९४ ॥ कर्त्तव्यं प्राक्किमस्माभिः, किं कर्त्तव्यं ततः परम् । किं वा हितं सुखं श्रेयः, पारम्पर्यशुभासिकृत् ?॥ ९५॥ ततः स्वस्वामिनामेवमभिप्रायं मनोगतम् । ज्ञात्वा सामानिका देवा, वदन्ति विनयानताः ॥ ९६ ॥ जिनानां प्रतिमाः स्वामिन्निह सन्ति जिनालये । अष्टोत्तरशतं चैत्यस्तम्भेऽस्थीनि तथाऽर्हताम् ॥ ९७ ॥ पूज्यानि तास्तानि चात्र, युष्माकं चान्यनाकिनाम् । प्राक् च पश्चाच कार्यं च, एतन्निःश्रेयसावहम् ॥ ९८ ॥ इह लोके परलोके, हितावाप्तिर्भविष्यति । युष्माकमर्हत्प्रतिमापूजनस्तवनादिभिः ॥ ९९ ॥ वाक्यानि तेषामाकर्ण्येत्युत्थाय शयनीयतः । निर्यान्ति पूर्वद्वारेणोपपातमन्दिरात्ततः ॥३००॥ ह्रदं पूर्वोक्तमागत्य, तत्र कृत्वा प्रदक्षिणाम् । प्रविशन्ति च पौरस्त्यतत्रिसोपानकाध्वना ॥ १ ॥ तत्राचान्ताः शुचीभूताः, सद्यो-निर्मितमज्जनाः । ह्रदान्निर्गत्याभिषेकसभामागत्य लीलया ॥ २ ॥ प्रदक्षिणीकृत्य पूर्वद्वारा विशन्ति तामपि । तत्र सिंहासने पूर्वाभिमुखास्ते किलासते ॥ ३ ॥ ततः सामानिकास्तेषामाभियोगिकनिर्जरान् । आकार्याज्ञापयन्त्येवं, सावधाना भवन्तु भोः ॥ ४ ॥ अस्य नः स्वामिनो योग्यां, गत्वाऽनर्घ्यां महीयसीम् । इन्द्राभिषेकसामग्रीमिहानयत

देवानां पर्याप्तिता कार्यं च

२०

२५



२७

सत्वरम् ॥ ५ ॥ ततस्तेऽपि प्रमुदिताः, प्रतिपद्य तथा वचः । ऐशान्यामेत्य कुर्वन्ति, समुद्घातं च वैक्रियम् ॥६॥
द्विस्तं कृत्वा च सौवर्णान्, रौप्यान् रत्नविनिर्मितान् । सुवर्णरूप्यजान् स्वर्णरत्नजान् रूप्यरत्नजान् ॥७॥ स्वर्णरू-
प्यरत्नमयांस्तथा मृत्स्नामयानपि । सहस्रमष्टाभ्यधिकं, प्रत्येकं कलशानमून् ॥ ८ ॥ भृङ्गारादर्शकस्थालपात्रिकासु-
प्रतिष्ठकान् । करण्डकान् रत्नमयान्, चङ्गेरीर्लोमहस्तकान् ॥ ९ ॥ छत्राणि चामराण्येवं, तैलादीनां समुद्गकान् ।
सहस्रमष्टभिर्युक्तं, तथा धूपकडुच्छकान् ॥ १० ॥ एतत्सर्वं विकुर्व्याथ, सहजान् विकृतांश्च तान् । गृहीत्वा 5
कलशादींस्ते, निर्गत्य स्वविमानतः ॥ ११ ॥ गत्वा च पुष्करक्षीरांबुध्योः पद्महृदादिषु । गङ्गादिकास्वापगासु, तीर्थेषु
मागधादिषु ॥ १२ ॥ तत्रत्यानि पयोमृत्स्नापुष्पमाल्याम्बुजान्यथ । सहस्रशतपत्राणि, सिद्धार्थान् सकलौषधीः
॥ १३ ॥ भद्रशालसौमनसादिभ्योऽपि निखिलर्त्तुजान् । फलप्रसूनसिद्धार्थान्, गोशीर्षचन्दनानि च ॥ १४ ॥
समादायाथ संभूय, ते सर्वेऽप्याभियोगिकाः । विमानस्वामिनामग्रे, ढौकन्ते नतिपूर्वकम् ॥ १५ ॥ सामानिकादयः
सर्वे, ततो विमानवासिनः । देवा देव्यश्च कलशैः, स्वाभाविकैर्विकुर्वितैः ॥ १६ ॥ अभिषिञ्चन्ति तानिन्द्राभि- 10
षेकेण गरीयसा । पुष्पैः सर्वर्त्तुकैः सर्वौषधीभिरर्चयन्ति च ॥ १७ ॥ युग्मम् ॥ तेषामिन्द्राभिषेकेऽथ, वर्त्तमाने मुदा
तदा । सुराः सुगन्धाम्बुवृष्ट्या, केचित्प्रशान्तरेणुकम् ॥ १८ ॥ केचित्संमृष्टोपलिप्तशुच्यध्वापणवीथिकम् ।
मञ्चातिमञ्चभृत्केचित्, केऽपि नानोच्छ्रितध्वजम् ॥१९॥ आबद्धतोरणं लम्बिपुष्पदामोच्चयं परे । द्वार्न्यस्तचन्दनघटं,
दत्तकुङ्कुमहस्तकम् ॥ २० ॥ केचित्पञ्चवर्णपुष्पोपचारचारुभूतलम् । दग्धकृष्णागुरुधूपधूमैरन्यैः सुगन्धितम् ॥ २१ ॥ 14

तत्तद्विमानं कुर्वन्ति, परे नृत्यन्ति निर्जराः । हसन्ति केचिद्गायन्ति, तूर्याणि वादयन्ति च ॥ २२ ॥ केचिद्वर्षन्ति रजतस्वर्णरत्नवराम्बरैः । वज्रैः पुष्पैर्माल्यगन्धैर्वासैश्चाभरणैः परे ॥ २३ ॥ केचिद्गर्जन्ति हेषन्ते, भूमिमास्फोटयन्ति च । सिंहनादं विदधते, विद्युद्वृष्ट्यादि कुर्वते ॥२४॥ हक्कारैरथ बूत्कारैर्वल्गनोच्छलनादिभिः । स्वाम्युत्पत्तिप्रमुदिताश्चेष्टन्ते बहुधा सुराः ॥२५॥ अष्टभिः कुलकं ॥ अभिषिच्योत्सवैरेवं, सुराः स्तुवन्ति तानिति । चिरं जीव चिरं नंद, चिरं पालय नः प्रभो ॥२६॥ विपक्षपक्षमजितं, जय दिव्येन तेजसा । जितानां सुहृदां मध्ये, तिष्ठ कष्टविवर्जितः ॥ २७ ॥ सुरेन्द्र इव देवानां, ताराणामिव चन्द्रमाः । नराणां चक्रवर्त्तीव, गरुत्मानिव पक्षिणाम् ॥ २८ ॥ विमानस्यास्य देवानां, देवीनामपि भूरिशः । पल्योपमसागरोपमानि पालय वैभवम् ॥ २९ ॥ इत्येवमभिषिक्तास्तेऽभिषेकभवनात्ततः । निर्गत्य पूर्वद्वारेण, यान्त्यलङ्कारमन्दिरम् ॥ ३० ॥ प्रदक्षिणीकृत्य पूर्वद्वारेण प्रविशन्ति तत् । सिंहासने निषीदन्ति, तत्र ते पूर्वदिग्मुखाः ॥ ३१ ॥ ततः सामानिका देवा, वस्त्रभूषासमुद्गकान् । शाश्वतान् ढौकयन्त्युद्यद्रत्नरश्मिकृताद्भुतान् ॥३२॥ ततस्ते प्रथमं चारुवस्त्ररूक्षितविग्रहाः । सुवर्णखचितं देवदूष्यं परिदधत्यथ ॥३३॥ हारमेकावलिं रत्नावलीं मुक्तावलीमपि । केयूरकटकस्फाराङ्गदकुण्डलमुद्रिकाः ॥ ३४ ॥ ततोऽलङ्कृतसर्वाङ्गा, मौलिभ्राजिष्णुमौलयः । चारुचन्दनकृताङ्गरागास्तिलकशालिनः ॥ ३५ ॥ स्रक्केशवस्त्राभरणैरलङ्कारैश्चतुर्विधैः । संपूर्णप्रतिकर्माण, उत्तिष्ठंत्यासनात्ततः ॥ ३६ ॥ अलङ्कारगृहात्पूर्वद्वारा निर्गत्य पूर्ववत् । व्यवसायसभां प्राग्द्वारेण प्रविशन्त्यमी ॥ ३७ ॥ तत्र सिंहासने स्थित्वा, सामानिकोपढौकितम् । पुस्तकं वाचयित्वाऽस्मात्, स्थितिं

जानन्ति धार्मिकीम् ॥ ३८ ॥ सिंहासनादथोत्थाय, व्यवसायनिकेतनात् । निर्गत्य प्रागदिशा नन्दापुष्करिण्यां विशन्ति च ॥ ३९ ॥ तत्राचान्ताः शुचीभूता, धौतहस्तक्रमाः क्रमात् । रौप्यं भृङ्गारमम्भोभिः, प्रपूर्य दधतः करे ॥ ४० ॥ नानापद्मान्युपादाय, पुष्करिण्या निरीय च । सिद्धायतनमायान्ति, सिद्धायतनवोदयाः ॥ ४१ ॥ ततस्तानुगच्छन्ति, देवाः सामानिकादयः । देवपूजार्हपुष्पादिवस्तुसंपूर्णपाणयः ॥ ४२ ॥ अथाप्सरोगीतमिश्रातोद्यनादभृताम्बराः । महासमृद्ध्या सिद्धानां, सदने प्रविशन्ति ते ॥ ४३ ॥ देवच्छन्दकमागत्य, श्रीजिनार्चावलोकने । प्रणमय्य शिरः सुष्ठु, नमन्त्यञ्जलिपूर्वकम् ॥ ४४ ॥ ततो लोमहस्तकेन, प्रमार्ज्य श्रीमदर्हताम् । अर्चाः सुगन्धिभिर्नीरैः, स्नपयन्ति यथाविधि ॥ ४५ ॥ तत्र यद्यपि कुन्थ्वादिजन्तवो न तथाप्यसौ । प्रमार्जनादियतनापूर्विकैवार्हतक्रिया ॥ ४६ ॥ यद्वा पूर्वभवेऽभ्यस्तं, सप्रमार्जनमर्चनम् । जिनार्चानां ततोऽभ्यासादत्राप्येवं सृजन्त्यमी ॥ ४७ ॥ गोशीर्षचन्दनेनाथ, प्रत्यङ्गं पूजयन्ति ताः । प्रत्येकमासां परिधापयन्ति वस्त्रयोर्युगम् ॥ ४८ ॥ पुष्पमाल्यैर्गन्धचूर्णैर्वस्त्रैराभरणैरपि । पूजयित्वा लम्बयन्ति, पुष्पदामान्यनेकशः ॥ ४९ ॥ ततः करतलक्षिप्तैः, पञ्चवर्णैर्मणीचकैः । चित्रोपचाररुचिरं, रचयन्ति भुवस्तलम् ॥ ५० ॥ पुरतोऽथ जिनार्चानामच्छै रजततण्डुलैः । लिखित्वा मङ्गलान्यष्टौ, पूजयन्ति जगद्गुरून् ॥ ५१ ॥ ततश्चान्द्रप्रभं वज्रवैडूर्यदण्डमण्डितम् । करे कृत्वा मणिस्व-

---

१ बहुशस्तत्र प्रमार्जनं, विलम्ब्य चान्तरान्तरा, ततो नायं सम्यग्घेतुः सर्वेषां प्राग्भवे जिनमूर्तिपूजासंभवाभावाच, कल्पः स पूजाया इत्येव यथार्थं, २ तत्र कच्छादिवस्त्रचिह्नाभावात् युक्तमिदं, अधुना तु प्रतिमानामेव तथाविधानात् न वस्त्रपरिधापनम् ।

र्णचित्रं धूपकडुच्छकम् ॥५२॥ दह्यमानकुन्दुरुष्ककृष्णागुरुतुरुष्ककैः । धूपं दत्त्वा जिनेन्द्राणां, प्रक्रमन्ते स्तुति-
क्रियाम् ॥ ५३ ॥ धूपं दत्त्वा जिनेन्द्राणामित्युक्तं यदिहागमे । साक्षाज्जिनप्रतिमयोस्तदभेदविवक्षया ॥ ५४ ॥
सत्यप्येवं न मन्यन्ते, येऽर्चामर्च्यां जगत्पतेः । तान् धावतो मुद्रिताक्षानानयामः कथं पथम् ? ॥ ५५ ॥ नमस्ते
समस्तप्रशस्तर्द्धिधाम्ने, क्षमाश्लेषिनम्रेन्द्रकोटीरदाम्ने । भवापारपाथोधिपारप्रदाय, प्रदायाङ्गिनां संपदां निर्मदाय
॥ ५६ ॥ भुजङ्गप्र० । इत्याद्यष्टोत्तरशतं, श्लोकानस्तोकधीधनाः । कुर्वन्त्यदोपान् प्रौढार्थकलितान् ललितान् पदैः
॥५७॥ नमस्कारैः सुधासारसारैः स्तुत्वा जिनानिति । शक्रस्तवादिकां चैत्यवन्दनां रचयन्त्यमी ॥५८॥ वन्दित्वाऽथ
नमस्कृत्य, ततः पुनरपि प्रभून् । चैत्यस्यास्य मध्यदेशं, प्रमृज्याभ्युक्ष्य चाम्बुभिः ॥ ५९ ॥ धृताकल्पं कल्पयन्त-
श्चारुचन्दनहस्तकैः । पुष्पपुञ्जोपचारेण, धूपैश्चाभ्यर्चयन्त्यमी ॥ ६० ॥ चैत्यस्याथ दाक्षिणात्यं, द्वारमेत्यात्र संस्थिताः ।
द्वारशाखापुत्रिकाश्च, व्यालरूपाणि पूर्ववत् ॥ ६१ ॥ प्रमार्जनाभ्युक्षणाभ्यां, पुष्पमाल्यविभूषणैः । स्रग्दामभि-
श्चार्चयन्ति, धूपधूमान् किरन्ति च ॥ ६२ ॥ ततश्च दक्षिणद्वारस्योपत्ये मुखमण्डपम् । प्राग्वत्तस्य मध्यदेशे,
कुर्वन्ति हस्तकादिकम् ॥ ६३ ॥ ततश्चास्य मण्डपस्य, पूर्वद्वारेऽपि पूर्ववत् । द्वारशाखाद्यर्चयन्ति, स्तम्भांश्च दक्षि-
णोत्तरान् ॥ ६४ ॥ शेषद्वारद्वयेऽप्येवं, ततः प्रेक्षणमण्डपे । मध्यं द्वारत्रयं सिंहासनं समणिपीठिकम् ॥ ६५ ॥
निर्गत्य दक्षिणद्वारा, ततः प्रेक्षणमण्डपात् । दाक्षिणात्यं महाचैत्यस्तूपमभ्यर्चयन्ति ते ॥ ६६ ॥ तस्माच्चतुर्दिशं
यास्तु, प्रतिमाः श्रीमदर्हताम् । तासामालोके प्रणामं, कुर्वन्ति पश्चिमादितः ॥ ६७ ॥ ताः पूर्ववत्प्रपूज्याष्टौ,

पुस्तकवाचनं जिनार्चा च

१५

२०

॥३२१॥
२५
२६

॥ ६८ ॥ दाक्षिणात्यचैत्यवृक्षमहेन्द्रध्वजपूजनम् ।
मङ्गलानि प्रकल्प्य च। साष्टोत्तरशतश्लोकां, कुर्वंति चैत्यवन्दनाम् ॥ ६८ ॥ दाक्षिणात्यचैत्यवृक्षमहेन्द्रध्वजपूजनम् । व्यालरूपाण्य-
कृत्वा नन्दापुष्करिणीं, दाक्षिणात्यां व्रजन्ति ते ॥ ६९ ॥ तत्तोरणत्रिसोपानप्रतिरूपकपुत्रिकाः । कुर्वन्ति प्राग्व-
र्चयन्ति, पुष्पधूपादिकैरथ ॥ ७० ॥ चैत्यं प्रदक्षिणीकृत्योत्तराहद्वारसंस्थिताम् । नन्दापुष्करिणीमेत्य, मुखमण्डपम्
दर्चनम् ॥ ७१ ॥ उदीच्यान् केतुचैत्यद्रुस्तूपांस्तत्प्रतिमाः क्रमात् । उदक्प्रेक्षामण्डपं चार्चयन्ति याम्यवत् ॥ ७३ ॥
॥ ७२ ॥ ततो द्वारमौत्तराहं, प्राच्यं द्वारं ततः क्रमात् । प्राच्यान्मुखमण्डपादीन्, प्रपूजयन्ति ॥ ७४ ॥ आलोके तीर्थकृ-
ततः सभां सुधर्मां ते, प्रविश्य पूर्वया दिशा । यत्र माणवकश्चैत्यस्तम्भस्तत्राभ्युपेत्य च ॥ ७५ ॥ ततो लोमहस्तकेन, प्रमृज्यो-
त्सक्थनां, प्रणता लोमहस्तकैः । प्रमार्जितादाददते, तानि वज्रसमुद्गकात् ॥ ७६ ॥ समुद्गकं यथास्थानमवलम्ब्यार्चयन्ति च ।
दकधारया । प्रक्षाल्याभ्यर्च्य पुष्पाद्यैर्निक्षिपन्ति समुद्गके ॥ ७६ ॥ कृत्वा सिंहासनस्यार्चां, मणिपीठिकया सह । क्षुल्लकेन्द्रध्व-
पुष्पमाल्यगन्धवस्त्रैश्चैत्यस्तम्भं ततोऽत्र च ॥ ७७ ॥ कोशं प्रहरणस्याथ, समेत्य संप्रमृज्य च । खड्गादीनि प्रहरणान्यभ्य-
जस्यार्चां, कुर्वते ते सुमादिभिः ॥ ७८ ॥ सुधर्मामध्यदेशेऽथ, प्रकल्प्य हस्तकादिकम् । देवशय्यां पूजयन्ति, मणिपीठिकया सह
र्चयन्ति पूर्ववत् ॥ ७९ ॥ ततश्चैते सुधर्मातो, निर्यान्तो याम्यया दिशा । सिद्धायतनवद् द्वारत्रयमर्चन्ति पूर्ववत् ॥ ८१ ॥ एवं
॥ ८० ॥ ततश्चैते सुधर्मातो, निर्यान्तो याम्यया दिशा । सिद्धायतनवद् द्वारत्रयमर्चन्ति पूर्ववत् ॥ ८२ ॥ व्यवसायस-
ह्रदं सभाश्चान्याः, स्वस्वोपस्करसंयुताः । व्यवसायसभां चान्ते, पूजयित्वा सपुस्तकाम् ॥ ८३ ॥ स्वीयस्वीयविमानानां,
भावर्त्तिप्राच्यपुष्करिणीतटात् । कुर्वते बलिपीठे ते, गत्वा बलिविसर्जनम् ॥ ८३ ॥

५

१०

१४

शृङ्गाटकत्रिकादिषु । उद्यानादौ चार्चनिकां, कारयन्त्याभियोगिकैः ॥ ८४ ॥ अथैवं कृतकृत्यास्ते, ऐशानकोणसंस्थिताम् । नन्दापुष्करिणीमेत्य, तस्याः कृत्वा प्रदक्षिणाम् ॥ ८५ ॥ प्रक्षाल्य हस्तपादादि, विलसन्ति यथारुचि । सभां सुधर्मामेत्य प्राग्मुखाः सिंहासने स्थिताः ॥ ८६ ॥ एवमत्रामुत्र लोके, हितावहं जिनार्चनम् । इति तत्रालोकमात्रात्प्रणमन्ति पुनः पुनः ॥ ८७ ॥ न नमन्ति न वा तानि स्तुवन्ति च मनागपि । लोकस्थित्या धर्मबुद्ध्या, कृतयोरन्तरं महत् ॥ ८८ ॥ स्तुवन्ति नव्यैः काव्यैश्च, तथा शक्रस्तवादिभिः । शेषाणि तु स्थितिकृते, पूजयन्ति सुमादिभिः ॥ ८९ ॥ सत्यप्येवं स्थितिमेव, ये वदन्ति जिनार्चनम् । कथं ते लुप्तनयना, बोध्या रैतात्रयोर्भिदाम् ॥ ९० ॥ राजप्रश्नीयसूत्रे यत्सूर्याभस्य सुपर्वणः । विमानवर्णनं तस्योत्पत्तिरीतिश्च दर्शिता ॥ ९१ ॥ मया तदनुसारेण, वैमानिकसुपर्वणाम् । विमानवर्णनोत्पत्ती, सामान्यतो निरूपिते ॥ ९२ ॥ विशेषमुक्तशेषं तु, जानन्त्यशेषवेदिनः । गीतार्था निहतानर्था, यद्वा तद्वाक्यपारगाः ॥ ९३ ॥ देव्यो देवाः परेऽप्येवं, तत्तद्विमानवासिनः । जायन्ते स्वस्वशय्यायां, स्वस्वपुण्यानुसारतः ॥ ९४ ॥

येयमुक्ता विमानानां, स्थितिस्तत्स्वामिनामपि । अच्युतस्वर्गपर्यन्तं, सा सर्वाऽप्यनुवर्त्तते ॥ ९५ ॥ परतस्त्वहमिन्द्राणां, न स्वामिसेवकादिका । स्थितिः काचित्सुमनसां, कल्पातीता हि ते यतः ॥ ९६ ॥ ते प्राग्जन्मोपात्तशस्तनामकर्मानुभावतः । न्यक्षसल्लक्षणोपेतसर्वाङ्गोपाङ्गशोभिताः ॥ ९७ ॥ जात्यस्वर्णवर्णदेहा, आद्यसंस्थानसंस्थिताः । अत्यन्तसुन्दराकाराः, सारपुद्गलयोनयः॥ ॥ ९८ ॥ असृग्मांसवसामेदःपुरीषमूत्रचर्मभिः ।

सक्थामर्चा बलिविसर्जनं च

२०

२५



२८

अन्त्रास्थिश्मश्रुनखररोमोद्गमैश्च वर्जिताः ॥९९॥ कुन्देन्दुश्वेतदशनाः, प्रवालजित्वराधराः । घनाञ्जनश्यामकेशपाशपेशलमौलयः ॥१००॥ तथोक्तमौपपातिके—"पंडुरससिसकलविमलनिम्मलसंखगोखीरफेणदगरयमुणालियाधवलदंतसेढी, तथा—अंजणघणकसिणणिद्धरमणीयणिद्धकेसा" इत्यादि, संग्रहण्यां तु 'केसट्ठिमंसुनहरोमरहिया' इत्युक्तमिति ज्ञेयं। अत्यन्तस्वच्छवपुषः, सुगन्धिमुखमारुताः । अप्रस्वेदा रजोलेपोज्झिताः जात्यसुवर्णवत् ॥४००॥ सर्वोत्कृष्टवर्णगन्धरसस्पर्शादिशोभनाः । सौभाग्यादिगुणग्रामाभिरामोद्दामविग्रहाः ॥ १ ॥ मृगकासररूपादिचिह्नश्रीभरभूषितम् । नूतनरत्नमुकुटं, दधते मूर्ध्नि बन्धुरम् ॥ २॥ तथा च प्रज्ञापनासूत्रे—"ते णं मिग १ महिस २ वराह ३ सीह ४ छगल ५ दद्दुर ६ हय ७ गयवइ ८ भुयग ९ खग्ग १० उसभंक ११ विडिम १२ पायडियचिंधमउडा" इति, अत्र ते इति सौधर्मादयोऽच्युतान्ताः क्रमेण देवाः, खङ्गो—गण्डकनामा आटव्यश्चतुष्पदविशेषः, यदाह शाश्वतः—'खङ्गो गण्डकशृंगासिबुद्धभेदेषु गण्डके" इति, विडिमस्तु मृगविशेषो लक्ष्यते, तथा च देशीशास्त्रं—'विडिमो सिसुमयगंडेसु' औपपातिके त्वेवं चिह्नविभागो दृश्यते—सोहम्म १ ईसाण २ सणंकुमार ३ माहिंद ४ बंभ ५ लंतग ६ महासुक्क ७ सहस्सार ८ आणयपाणय ९ आरणअच्चुय १० वई पालय १ पुप्फय २ सोमणस ३ सिरिवच्छ ४ नंदियावत्त ५ कामगम ६ पीइगम ७ मणोरम ८ विमल ९ सव्वओभद्द १०नामधिज्जेहिं विमाणेहिं ओइन्ना वंदगा जिणंदं मिग १ महिस २ वराह ३ छगल ४ दद्दुर ५ हय ६ गयवई ७ भुयग-

१ औपपातिके आगतसुराणामुत्तरवैक्रियवर्णनं संग्रहण्यां तु स्वाभाविकस्थितेरिति न भिन्नता ।

५ १० १३

८ खग्ग ९ उसभं १० कविडिमपायडियचिंधमउडा” इति, अत्र मृगादयोऽङ्का—लाञ्छनानि विटपेषु—विस्तारेषु येषां मुकुटानां तानि तथा, तानि प्रकटितचिह्नानि रत्नादिदीप्त्या प्रकाशितमृगादिलाञ्छनानि मुकुटानि येषां ते तथा इति, तत्त्वं तु सर्वविदो विदन्ति ॥ विवक्षवस्त्वमी अर्द्धमागध्या रम्यवर्णया। भाषन्ते चतुरस्वान्तचमत्कारकिरा गिरा ॥४॥ तथाहुः—'गो० ! देवाणं अद्धमागहाए भासाए भासंति' भगवतीपञ्चमशतकचतुर्थोद्देशके। लोके तु 'संस्कृतं स्वर्गिणां भाषेत्यादि[3]। प्रत्येकमङ्गोपाङ्गेषु, रत्नाभरणभासुराः। अस्पृष्टकासश्वासादिविविधव्याधिवेदनाः ॥ ५ ॥ पुण्यनैपुण्यलावण्याः, सदावस्थायियौवनाः । अभङ्गकामरागार्द्रा, दिव्याङ्गनाकटाक्षिताः ॥ ६ ॥ दिव्याङ्गरागसुरभीकृतसर्वाङ्गशोभनाः । कामकेलिकलाभ्यासविलासहासवेदिनः ॥ ७ ॥ स्वभावतो निर्निमेषविशेषललितेक्षणाः । अम्लानपुष्पदामानः, स्वैरं गगनगामिनः ॥ ८ ॥ मनश्चिन्तितमात्रेण, सर्वाभीष्टार्थसाधकाः । वचनातिगसामर्थ्यान्निग्रहानुग्रहक्षमाः ॥ ९ ॥ प्रयोजनविशेषेण, प्राप्ता अपि भुवस्तलम् । तिष्ठन्ति

चिह्नानि भाषा च

१५

२०

२२

॥ ३२३ ॥

---

१ आद्ये पक्षे चिह्नानि द्वादश अन्त्ये दशेति भेदः, परं आद्ये 'उसभंक' इत्यत्रैवांकशब्ददर्शनात् विडिमस्याङ्कार्थताऽयोग्या, न च द्वादश वैमानिकानामिन्द्रा इति 'सिंह' शब्दोऽपपाठः २ अर्धमागधी भाषा अष्टादशदेश्यभाषामिश्रेति आबालगोपाङ्गनं बोद्धुं शक्या सर्वविषयवासिनां च पूर्वसंगतिकानां सुबोधा, मन्नदेशभाषापि शिलादिपूल्लिखिता दृश्यते, भाष्यकृद्भिरपि नानादेशीया भाषास्तथाविधा एव दर्शिताः, ३ कस्यांचिद् भाषायां संस्कारकरणात् संस्कृतत्वं, तेन नेयं मूलभाषा भवितुमर्हति, प्राकृता तु स्वाभाविकी, प्रकृतिः संस्कृतं, तत्र भवं प्राकृतमिति तु संस्कृतभवतयाऽभिप्रेतायाः लक्षणाख्यानं, व्याकरणसूत्रापेक्षया वैतत्, यत आख्यायते तत्र 'शेषं संस्कृतवदिति ।

ते व्यवहिताश्चतुर्भिरङ्गुलैर्भुवः ॥ १० ॥ वायूत्तरेशानदिक्षु, सेव्याः सामानिकैः सुरैः । अग्नियाम्यानैर्ऋतीषु, पर्षद्भिस्तिसृभिर्युताः ॥ ११ ॥ पुरोऽग्रमहिषीभिश्च, पृष्ठतोऽनीकनायकैः । सेव्याः समन्ताद्विविधायुधाढ्यैश्चात्मरक्षकैः ॥ १२ ॥ सुखरैर्दिव्यगन्धर्वैर्गीतासु पदपङ्क्तिषु । दत्तोपयोगाः सत्तालमूर्छनाग्रामचारुषु ॥ १३ ॥ अप्सरोभिः प्रयुक्तेषु, नाट्येषु दत्तचक्षुषः । अज्ञातानेहसः सौख्यैः, समयं गमयन्त्यमी ॥ १४ ॥ एकादशभिः कुलकं । कामलीलाभिलाषे तु, विसृज्य देवपर्षदम् । सुधर्मायाः सभायाश्च, निर्गत्यान्तःपुरैः सह ॥ १५ ॥ गत्वोक्तरूपप्रासादोद्यानादिष्वास्पदेषु ते । मनोऽनुकूलाः सर्वाङ्गसुभगा दिव्यकामिनीः ॥ १६ ॥ रम्यालङ्कारनेपथ्या, रूपयौवनशालिनीः । कटाक्षविशिखैर्नर्मोक्तिभिर्द्विगुणितस्पृहाः ॥ १७ ॥ भर्तृचित्तानुसारेणानेकरूपाणि कुर्वतीः । प्रतिरूपैः स्वयमपि, प्रेमतो बहुभिः कृतैः ॥ १८ ॥ हठात्प्रत्यङ्गमालिङ्ग्य, वक्त्रमुन्नम्य चुम्बनैः । ससीत्कारं सुधाधारमधुराधरखण्डनैः ॥ १९ ॥ निःशङ्कमङ्कमारोप्य, निर्दयं स्तनमर्दनैः । मज्जन्तो मैथुनरसे, मनुष्यमिथुनादिवत् ॥ २० ॥ इत्थं सर्वाङ्गीणकायक्लेशोत्थां स्पर्शनिर्वृतिम् । आसादयन्तस्तृप्यन्ति, क्लिष्टपुंवेदवेदनाः ॥ २१ ॥ सप्तभिः कुलकं ॥ रतामृतास्वादलोलाः, कदाचिन्मदनोन्मदाः । मुग्धावत्कम्पनैर्भीतिरुतैर्दूरापसर्पणैः ॥ २२ ॥ कदाचिच्चारुमध्यावल्लज्जाललितचेष्टितैः । कदाचित्प्रौढमहिला, इव वैयात्यवल्गितैः ॥ २३ ॥ कदाचिद्रोषतोषार्द्रैः, परुषैः पुरुषायितैः । प्रत्याश्लेषप्रतिवचःप्रतिचुम्बनवल्गनैः ॥ २४ ॥ पारापतादिशब्दैश्च, द्विगुणामुन्मुदिष्णुताम् । जनयन्त्यश्चिरं भर्तुर्देव्योऽपि सुरतोत्सवैः ॥ २५ ॥ शुक्रस्य वैक्रियस्याङ्गे, संचाराद-

५

१०

१४

खिले सुखम् । आसादयन्त्यसतृप्यन्ति, क्लिष्टस्त्रीवेदवेदनाः ॥ २६ ॥ पञ्चभिः कुलकं ॥ ते शुक्रपुद्गला भुज्यमानदिव्यमृगीदृशाम् । चक्षुःश्रोत्रघ्राणजिह्वात्वगिन्द्रियतयाऽसकृत् ॥ २७ ॥ द्रुतं परिणमन्त्येते, रूपलावण्यवैभवम् । परभागं प्रापयन्ति, सौभाग्यं यौवनं तथा ॥ २८ ॥ तथा च प्रज्ञापना—"अत्थि णं भंते ! तेसिं देवाणं सुक्कपुग्गला ?, हंता, ते णं भंते ! तासिं अच्छराणं कीसत्ताए भुज्जो भुज्जो परिणमंति ? गो० ! सोइंदियत्ताए जाव फासिंदियत्ताए इट्ठत्ताए कंतत्ताए मणुन्नत्ताए मणामत्ताए सुभत्ताए सोहग्गरूवजोव्वणगुणलावणत्ताए एयासिं भुज्जो भुज्जो परिणमंति" एवं केचित्सुरास्तीव्रमदनोन्मत्तचेतसः । स्वनायिकोपभोगेनातृप्ताः कृतापराशयाः ॥ २९ ॥ वर्यचातुर्यसौन्दर्यपुण्याः पण्याङ्गना इव । निजानुरक्ता अपरिगृहीता भुञ्जते सुरीः ॥ ३० ॥ तथा ह्युन्मत्तता द्वेधा, देवानामपि वर्णिता । एका यक्षावेशभवा, मोहनीयोदयात् परा ॥३१॥ अल्पर्द्धिकं तत्र देवं, रुष्टो देवो महर्द्धिकः । दुष्टपुद्गलनिक्षेपात्, कुर्यात् परवशं क्षणात् ॥३२॥ ततश्च ग्रहिलात्माऽसौ, यथा तथा विचेष्टते । द्वितीया द्विविधा तत्र, मिथ्यात्वात्प्रथमा भवेत् ॥ ३३ ॥ अतत्त्वं मन्यते तत्त्वं, तत्त्वं चातत्त्वमेतया । चारित्रमोहनीयोत्था, परा तयाऽपि चेष्टते ॥ ३४ ॥ भूताविष्ट इवोत्कृष्टमन्मथादिव्यथार्दितः । यक्षावेशोत्था सुमोचा, दुर्मोचा मोहनीयजा ॥ ३५ ॥ तथाहुः—"असुरकुमाराणं भंते ! कइविहे उम्माए प० ?, गो० दुविहे प०, एवं जहेव णेरतियाणं, णवरं देवे वा से महिड्ढियतराए असुभे पुग्गले पक्खिवेज्जा, से णं तेसिं असुभाणं पुग्गलाणं पक्खिवणत्ताए जक्खाएसं उम्मायं पाउणिज्जा, मोहणिज्जस्स वा, सेसं तं चेव,

२० २५ ॥ ३२४ ॥ २८

वाणमंतरजोतिसवेमाणियाणं जहा असुरकुमाराणं," भगवतीसूत्रे । पश्यतैवं शक्तियुक्ता, विवेकिनोऽपि
नाकिनः । हन्तानेन विडम्ब्यन्ते, सत्यं सर्वङ्कषः स्मरः ॥ ३६ ॥ योऽखर्वयत्सर्वगर्वसर्वस्वमौर्वदुर्वहः । किमपूर्व-
मखर्वोऽयं, निर्वपुर्यत्सुपर्वजित् ॥ ३७ ॥ भवनव्यन्तरज्योतिष्काद्यकल्पद्वयावधि । विडम्बनैवं कामस्य, ज्ञेया
नातः परं तथा ॥ ३८ ॥ अथो यथोक्तकालेन, यदाहारार्थिनः सुराः । तदा संकल्पमात्रेणोपस्थिताः सारपुद्गलाः
॥ ३९ ॥ सर्वगात्रेन्द्रियाह्लादप्रदाः परिणमन्ति हि । सर्वाङ्गमाहारतया, शुभकर्मानुभावतः ॥ ४० ॥ प्राप्नुवन्तः
परां तृप्तिमाहारेणामुना सुराः । विन्दते परमानन्दं, स्वादीयोभोजनादिव ॥ ४१ ॥ अत एवाभिधीयन्ते, ते
मनोभक्षिणः सुराः । प्रज्ञापनादिसूत्रेषु, पूर्वर्षिसंप्रदायतः ॥ ४२ ॥ तथाहुः—"मणोभक्खिणो ते देवगणा
पण्णत्ता समणाउसो !" । आहार्यपुद्गलांस्तांश्च, विशुद्धावधिलोचनाः । अनुत्तरसुरा एव, पश्यन्ति न पुनः परे
॥ ४३ ॥ सहस्राणि दशाब्दानां, येषामायुर्जघन्यतः । भवनेशव्यन्तरास्तेऽहोरात्रसमतिक्रमे ॥ ४४ ॥ इच्छन्ति
पुनराहारं, तथा स्तोकैश्च सप्तभिः । उच्छ्वसन्ति शेषकाले, नोच्छ्वासो न मनोऽशनम् ॥ ४५ ॥ दशभ्योऽब्द-
सहस्रेभ्यो, वर्द्धमानैः क्षणादिभिः । किंचिदूनसागरान्तं, यावद्येषां स्थितिर्भवेत् ॥ ४६ ॥ तेषां दिनपृथक्त्वैः
स्याद्वृद्धिभाग् भोजनान्तरम् । मुहूर्त्तानां पृथक्त्वैश्च, श्वासोच्छ्वासान्तरं क्रमात् ॥ ४७ ॥ पृथक्त्वं तु द्विप्रभृति-
नवपर्यन्तमुच्यते । पूर्णाम्भोधिस्थितीनां तु, ततः सागरसंख्यया ॥ ४८ ॥ आहारोऽब्दसहस्रैः स्यात्पक्षैरुच्छ्वास
एव च । एवं च स्वर्गयोराद्यद्वितीययोः सुधाभुजः ॥ ४९ ॥ जघन्यजीविनो घस्रपृथक्त्वेनैव भुञ्जते । मुहूर्त्तानां

पृथक्त्वेन, श्वासोच्छ्वासं च कुर्वते ॥ ५० ॥ द्वाभ्यां वर्षसहस्राभ्यामश्नन्त्युत्कृष्टजीविनः । मासेन चोच्छ्वसन्त्येवं, भाव्या मध्यमजीविनः ॥ ५१ ॥ एवमेते कृताहाराः, पुनरप्यप्सरोजनैः । उपक्रान्ते नाटकादौ, प्रवर्त्तयन्ति मानसम् ॥ ५२ ॥ कदाचिच्च जलक्रीडां, कदाचिन्मज्जनक्रियाम् । कदाचिच्च सुहृद्गोष्ठीसुखान्यनुभवन्त्यमी ॥ ५३ ॥ कदाचिद्यान्ति सुहृदां, वेश्मसु प्रेमनिर्भराः । तेऽपि तानुपसर्पन्ति, कृत्वाऽभ्युत्थानमादरात् ॥ ५४ ॥ आसनं ददते हस्ते, धृत्वोपवेशयन्ति च । योजिताञ्जलयः सत्कारयन्त्यम्बरभूषणैः ॥ ५५ ॥ एवमागच्छतां प्रत्युद्गमनं पर्युपासनम् । स्थितानां गच्छतां चानुगमनं रचयन्त्यमी ॥ ५६ ॥ तथोक्तं—"अत्थि णं भंते ! असुरकुमाराणं सक्कारेति वा जाव पडिसंसाहणया ?, जाव वेमाणियाणं" ततो विनीतैस्तैर्मित्रदेवैः सह कदाचन । तेषामेव विमानेषु, क्रीडन्तः सुखमासते ॥ ५७ ॥ एकैकस्मिन्नाट्यकामक्रीडागोष्ठ्यादिशर्मणि । यात्यविज्ञात एवाशु, कालो भूयान्निमेषवत् ॥ ५८ ॥ तथाह त्रुटितगाथा—"दो वाससहस्साइं उड्ढं अमराण होइ विसयसुहं । पणसयपणसयहीणं जोइसवणभवणवासीणं ॥ ५९ ॥" एवं तत्तन्निधुवनसंगीतप्रेक्षणादिभिः । सदाप्यसंपूर्णकार्या, न तेऽत्रागन्तुमीशते ॥ ६० ॥ किंच—तत्तद्विमानाभरणदेवाङ्गनादिवस्तुषु । संक्रान्तनव्यप्रेमाणो, नैतेऽत्रागन्तुमीशते ॥ ६१ ॥ कदाचिदुत्सहन्ते चेत्पूर्वजन्मोपकारिणः । मातापितृस्निग्धबन्धुगुरुशिष्यप्रियाऽङ्गजान् ॥ ६२ ॥ द्रष्टुं दर्शयितुं स्वीयदिव्यसंपत्तिवैभवम् । तदागत्यार्गलायन्तेऽनर्गलाः स्वर्गयोषितः ॥ ६३ ॥ किमेतदाद्यकवले, मक्षिकापतनोपमम् । आरब्धं क्षणमप्येकं, त्वां विना प्राणिमः कथम् ? ॥ ६४ ॥

देवानां उच्छ्वासाहारौ अनागमनं च

२०

२५



२८

अद्यापि तादृशः स्नेहस्तासु पूर्वप्रियासु चेत् । तदाऽस्मान् कृत्रिमप्रेम्णा, कदर्थयसि नाथ किम् ? ॥ ६५ ॥ अथ यास्यथ तत्राद्यमिदमादिममङ्गलं । दृष्ट्वा यथेच्छं गच्छन्तु, किं रुध्याः करिणः करैः ? ॥ ६६ ॥ इत्यादिप्रेमसंदर्भगर्भितैस्तद्वचोगुणैः । नियन्त्रितास्तदाक्षिण्यात्, तत्रैते ददते मनः ॥ ६७ ॥ तत्ताण्डवसमास्या तु, पूर्वसंबन्धिनां नृणाम् । भवा भवन्ति भूयांसः, प्रायः स्वल्पायुषामिह ॥ ६८ ॥ किंच प्राग्भवबन्धूनां, तादृक्पुण्याद्यभावतः । नागन्तुमीशते तेऽत्राषाढाचार्याद्यशिष्यवत् ॥ ६९ ॥ तथोक्तं स्थानाङ्गे—"तिहिं ठाणेहिं अहुणोववन्ने देवे देवलोगेसु इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तए, णो चेव णं संचाएति हव्वमागच्छित्तए, अहुणोववन्ने देवे देवलोए दिव्वेसु कामभोएसु मुच्छिए गिद्धे गढिए अज्झोववण्णे, से णं माणुस्सए कामभोए नो आढाति नो परि० नो अट्ठं बंधइ नो नियाणं पक० नो ठितिपगप्पं क० १ अहुणोववन्ने देवे देवलोएसु दिव्वेसु कामभोएसु मुच्छिए गिद्धे गढिए अज्झोववन्ने० तस्स णं माणुस्सए पेम्मे वोच्छिन्ने भवइ, दिव्वे पेम्मे संकंते भवइ २ अहुणोववन्ने देवे देवलोएसु दिव्वेसु कामभोगेसु मुच्छिए जाव अज्झो० तस्स णं एवं भवइ इयणिंह गच्छं, मुहुत्ता गच्छं, तेणं कालेणं अप्पाउया मणुया कालधम्मुणा संजुत्ता भवंति ३" इत्यादि । तथाऽस्य नरलोकस्य, दुर्गन्धोऽपि प्रसर्पति । नानामृतकविण्मूत्राद्यशुचिप्रभवो महान् ॥ ७० ॥ तत्राप्यजितदेवादिकालेऽतिप्रचुरा नराः । तथा भवन्ति तिर्यञ्चः, क्षेत्रेषु निखिलेष्वपि ॥ ७१ ॥ तदा मूत्रपुरीषादिबाहुल्यात्पूतिपुद्गलाः । ऊर्ध्वं यान्तो वासयन्ति, पुद्गलानपरापरान् ॥७२॥ योजनानां शतान्येवं, पञ्च यावत्परैः परैः । दूष्यन्ते पुद्गला जीवा, इवोत्सूत्रप्ररूपकैः ॥७३॥ यदा तु नर-

तिर्यञ्चो, नरक्षेत्रे स्युरल्पकाः । तदा पूतिपुद्गलानामल्पत्वादूर्ध्वगामिनाम् ॥ ७४ ॥ चतुःशतीं योजनानां, यावत्तैरपरापरैः । व्रजद्भिरूर्ध्वं भाव्यन्ते, प्रोक्तयुक्त्यैव पुद्गलाः ॥ ७५ ॥ एवं परं योजनेभ्यो, नवभ्यो गन्धपुद्गलाः । कथं स्युर्घ्राणविषया, नैषा शङ्काऽपि संभवेत् ॥ ७६ ॥ उक्तं च—"चत्तारि पंच जोअणसयाइं गंधो य मणुअलोअस्स । उड्ढं वच्चइ जेणं नहु देवा तेण आवंति ॥ १ ॥" उपदेशमालाकर्णिकायां तु—"ऊर्ध्वंगत्या शतान्यष्टौ, सहस्रमपि कर्हिचित् । मर्त्यानां याति दुर्गन्धस्तेनेहायान्ति नामराः ॥ १[1] ॥" इत्युक्तमिति ज्ञेयं तथा च-मलमूत्रश्लेष्मपूर्णे, मक्षिकाकोटिसंकटे । समन्ततोऽतिचपलकृमिकीटशतावटे ॥ ७७ ॥ पुरीषसदने स्थित्वा, मित्रकल्पेन केनचित् । एहि मित्र! क्षणं तिष्ठ, किञ्चिद्वच्मीत्यनेकशः ॥ ७८ ॥ आह्वयेत जनः कश्चित्, सद्यःस्नातः कृताशनः । कृतचन्दनकर्पूरकस्तूर्यादिविलेपनः ॥ ७९ ॥ जानन्नपि स तत्रेष्टं, यथा गन्तुं न शक्नुयात् । तद्दुर्गन्धपराभूतिसंकोचितविकूणिकः ॥ ८० ॥ तथा भूयः स्मरन्तोऽपि, नृक्षेत्रे पूर्वबान्धवान् । दुर्गन्धाभिभवादत्र, न तेऽभ्यागन्तुमीशते ॥ ८१ ॥ पञ्चभिः कुलकं ॥ सत्यप्येवमतिप्रौढपुण्यप्राग्भारशालिनाम् । श्रीमतामर्हतां तेषु, कल्याणकेषु पञ्चसु ॥ ८२ ॥ मारुताश्वत्थपर्णेभकर्णकम्प्रनिजासनाः । स्वश्रद्धातिशयात्केचिद्देवेन्द्रशासनात्परे ॥ ८३ ॥ मित्रानुवर्त्तनात्केचित्पत्नीप्रेरणया परे । स्थितिहेतोः परे देवदेवीसंपातकौतुकात् ॥ ८४ ॥ क्षणादेवातिदुर्गन्धमपि लोकं नृणामिमम् । अर्हत्पुण्यगुणाकृष्टा, इवायान्त्युत्सुकाः स्वयम् ॥ ८५ ॥

१ अधोलौकिकमध्यग्रामापेक्षया तथाविधोपद्रवप्रचुरकालापेक्षया वाऽपवाद... नैतत् स्यात् ।

देवानाम
नागमनहे-
तवः नरलो-
कगन्धश्च

२०

२५
॥ ३२६ ॥
२७

त्रिभिर्विशेषकं ॥ महात्मनां महर्षीणां, यद्वोत्कृष्टतपस्विनाम् । माहात्म्यमुद्भावयितुमिहायान्ति सुधाभुजः ॥ ८६ ॥ अश्रद्दधाना यद्वा, साधुश्राद्धादिसद्गुणान् । सम्यग्दृग्वर्णितांस्तेऽत्रायान्ति तांस्तान् परीक्षितुम् ॥ ८७ ॥ यद्वा तादृक्पुण्यशालिशालिभद्रादिवद्भृशम् । पुत्रादीनां प्रेमधाम्नां, स्नेहोद्रेकैर्वशीकृताः ॥ ८८ ॥ गोभद्रादिवदागत्य, नित्यं नवनवैरिह । दिव्यभोगसंविभागैः, स्नेहं सफलयन्ति ते ॥ ८९ ॥ यद्वा प्रागुक्तवचनस्मरणाद्विस्मृतादराः । स्वान् बोधयितुमायान्त्याषाढाचार्यान्त्यशिष्यवत् ॥ ९० ॥ एवं पूर्वभवस्नेहकार्मणेन वशीकृताः । नरकेष्वपि गच्छन्ति, केचिद्वैमानिकामराः ॥ ९१ ॥ तथाहि द्वारकादङ्गभङ्गे जराङ्गजेषुणा । मृत्वाऽन्तिमो वासुदेवस्तृतीयं नरकं गतः ॥ ९२ ॥ रामोऽथ मोहात् षण्मासान्, व्यूढभ्रातृकलेवरः । शिलातलाम्भोजवापादिभिर्देवेन बोधितः ॥ ९३ ॥ भ्रातुर्देहस्य संस्कारं, कृत्वा संवेगमागतः । प्रव्रज्य नेमिप्रहितचारणश्रमणान्तिके ॥ ९४ ॥ पारणाय व्रजन् क्वापि, स्वरूपव्यग्रया स्त्रिया । दृष्ट्वा घटभ्रमात्कूपे, क्षिप्यमाणं निजाङ्गजम् ॥ ९५ ॥ वन एव मया स्थेयमित्यभिग्रहवान्मुनिः । तुङ्गिकाद्रौ तपः कुर्वन्, वन्यसत्त्वान्प्रबोधयन् ॥ ९६ ॥ दत्ताहारो रथकृता, हरिणेनानुमोदितः । तरुशाखाहतस्ताभ्यां, सह ब्रह्मसुरोऽभवत् ॥ ९७ ॥ पञ्चभिः कुलकं ॥ बलदेवसुरः सोऽथ, प्रयुक्तावधिलोचनः । भ्रातरं नरके दृष्ट्वोत्सुकस्तत्र द्रुतं गतः ॥ ९८ ॥ तमुद्दिधीर्षुर्नरकादवोचत् केशवः सुरम् । भ्रातरेवं भृशं पीड्ये, सूतपातं पतत्तनुः ॥ ९९ ॥ मया कृतानि कर्माणि, भोक्तव्यानि मयैव हि । वचः किमन्यथा तत्स्याद्यन्नेमिस्वामिनोदितम् ॥ ५०० ॥

गच्छ बन्धो ! ततस्तुभ्यं, भद्रं स्तात्कर्हिचित्स्मरेः । प्रथयेर्महिमानं नो, दुर्यशो यन्निवर्त्तते ॥ १ ॥ ततः स बान्धवप्रेम्णा, विमाने श्रीधरं हरिम् । पीताम्बरं चक्रपाणिं, विकृत्य हलभृद्युतम् ॥ २ ॥ द्वारिकेयमनेनैव, कृताऽनेनैव संहृता । कर्त्तुं हर्त्तुं हरिरेव, क्षमोऽसौ जगदीश्वरः ॥ ३ ॥ तस्माद्भुक्तिं च मुक्तिं च, प्रेप्सुभिः सेव्यतामयम् । आगत्य भरतक्षेत्रे, सर्वत्रेत्युदघोषयत् ॥ ४ ॥ एवं सर्वत्र विस्तार्य, महिमानं महीतले । यथास्थानं सुरोऽयासीभ्रातृदुःखेन दुःखितः ॥ ५ ॥ इत्थमेव च सीताया, जीवोऽच्युतसुरेश्वरः । गत्वाऽऽशु देवप्रेम्णा, चतुर्थीं नरकावनीम् ॥ ६ ॥ युद्ध्यमानौ मिथः पूर्ववैराल्लक्ष्मणरावणौ । युद्धाद्व्यवर्त्तयद्धर्मवचनैः प्रतिबोधयन् ॥ ७ ॥ पञ्चमाङ्गेऽपि सप्तम्या, अधस्तादेवकर्तृकम् । ऊचेऽब्दवर्षणादीनि, तत्राप्येषां गतिः स्मृता ॥ ८ ॥ तथाहुः—“अत्थि णं भंते ! इमीसे रयणप्पहाए अहे उराला बलाहया संसेयंति संमुच्छंति वासं वासंति, ? हंता अत्थि, तिन्निवि पकरेंति देवोऽवि असुरोऽवि नागोऽवि, एवं दोच्चाए पुढवीए भाणियव्वं, एवं तच्चाए पुढवीए भा०, नवरं देवोऽवि प०, असुरोवि प०, नो नागो, एवं चउत्थीएवि, नवरं देवो एक्को प०, नो असु० नो नाओ, एवं हेट्ठिल्लासु सव्वासु देवो एक्को प०, नो नाओत्ति, नागकुमारस्य तृतीयपृथिव्या अधोगमनं नास्तीत्यत एवानुमीयते ‘नो असुरो नो नाओ’त्ति इहाप्यत एव वचनाच्चतुर्थ्यादीनामधोऽसुरकुमारनागकुमारयोर्गमनं नास्तीत्यनुमीयते” भगवतीसूत्रवृत्तौ षष्ठशतकसप्तमोद्देशके, तत्त्वार्थवृत्तौ तु “येषां द्वे सागरोपमे जघन्या स्थितिस्ते किल देवाः सप्तमधरां प्रयान्ति, ते च सनत्कुमारकल्पात्प्रभृति लभ्यन्ते, शक्तिमात्रं चैतद्वर्ण्यते, न पुनः कदाचिदप्यगमन्, तिर्यगसंख्येयानि योजन-

देवानां नरके गतिः

२०

२५

॥३२७॥

२८

कोटीनां कोटिसहस्राणि, 'ततः पर'मित्यादि, सागरोपमद्वयादधो जघन्या स्थितिर्येषां न्यूना न्यूनतमा चेति, ते चैकैकहीनां भुवमनुप्राप्नुवन्ति यावत्तृतीया पृथिवी, तां च तृतीयां पूर्वसंगतिकाद्यर्थं गता गमिष्यन्ति, परतस्तु सत्यामपि शक्तौ न गतपूर्वा नापि गमिष्यन्ति औदासीन्यात्-माध्यस्थ्याद्, उपर्युपरि न गतिरतयो देवा जिनाभिवन्दनादीन् मुक्त्वे"ति, पञ्चसंग्रहे तु—"सहसारंतिअदेवा नारयनेहेण जंति तइयभुवं। निज्जंति अच्चुअं जा अच्चुअदेवेण इयरसुरा ॥ १ ॥ एतट्टीकायामपि श्रीमलयगिरिविरचितायां—आनतादयो देवाः पुनरल्पस्नेहादिभावात् स्नेहादिप्रयोजनेनापि नरकं न गच्छंतीति सहस्रारांतग्रहण"मिति। एवं मित्रादिसाहाय्यादिनोर्ध्वं यावदच्युतम्। यान्त्यायान्ति च कल्पस्थाः, परतस्तु न जातुचित् ॥ ९ ॥ केचित्स्वल्पर्द्धिका देवा, यावच्चत्वारि पञ्च वा। देवावासानतिक्रम्य, स्वशक्त्या परतस्ततः ॥१०॥ गन्तुं न शक्नुवन्त्यन्यसाहाय्यात् शक्नुवन्त्यपि। महर्द्धिकानां मध्येऽपि, नैवामी गन्तुमीशते ॥ ११ ॥ अल्पर्द्धिकानां मध्ये तु, सुखं यान्ति महर्द्धिकाः। समर्द्धिकानां मध्ये चेद्वियासन्ति समर्द्धिकाः ॥ १२ ॥ तदा विमोह्य महिकाद्यन्धकारविकुर्वणात्। अपश्यत इमान् देवानतिक्रामन्ति नान्यथा ॥ १३ ॥ तथोक्तं—"आतिड्ढीएणं भंते! देवे जाव चत्तारि पंच देवावासंतराइं विइक्कंते, तेण परं परिड्ढीएणं," इत्यादि, भगवतीदशमशतकतृतीयोद्देशके।

सौधर्मेशानयोर्देवलोकयोरथ नाकिनः। उत्कृष्टस्थितयः शक्रशक्रसामानिकादयः ॥१४॥ रत्नप्रभायाः सर्वाधोभागं यावदधो दिशि। स्वयोग्यं मूर्त्तिमद्द्रव्यं, पश्यन्त्यवधिचक्षुषा ॥ १५ ॥ तिर्यग्दिशि त्वसंख्येयान्, पश्यन्ति

द्वीपवारिधीन् । ऊर्ध्वं स्वस्वविमानानां, चूलिकाग्रध्वजावधि ॥ १६ ॥ अनुत्तरान्ताः सर्वेऽप्यसंख्येयान् द्वीपवारिधीन् । तिर्यक् प्रपश्यन्त्यधिकाधिकान् किंतु यथोत्तरम् ॥ १७ ॥ वैमानिकानां यदधोऽवधिर्भूम्ना विजृम्भते । भवनेशव्यन्तराणामूर्ध्वं भूम्ना प्रसर्पति ॥ १८ ॥ ज्योतिषां नारकाणां तु, तिर्यग् भृशं प्रसर्पति । नृतिरश्चामनियतदिको नानाविधोऽवधिः ॥ १९ ॥ स्वयंभूरमणाम्भोधौ, यथा मत्स्या जगद्गतैः । भवन्ति सर्वैराकारैर्नृतिर्यगवधिस्तथा ॥ २० ॥ मत्स्यास्तु वलयाकारा, न भवेयुरयं पुनः । संभवेद्वलयाकारोऽप्यसौ नानाकृतिस्ततः ॥ २१ ॥ तथोक्तं संग्रहणीवृत्तौ–"नाणागारो तिरिए मणुए मच्छा सयंभूरमणेव । तत्थ वलयं निसिद्धं तस्स पुण तयंपि होज्जाहि ॥ २२ ॥" वैमानिकानां सर्वेषां, जघन्योऽवधिगोचरः । अङ्गुलासंख्येयभागमानो ज्ञेयो मनस्विभिः ॥ २३ ॥ ननु सर्वजघन्योऽसौ, नृतिर्यक्ष्वेव संभवेत् । सर्वोत्कृष्टो नरेष्वेव, राद्धान्तोऽयं व्यवस्थितः ॥ २४ ॥ तथोक्तं—"उक्कोसो मणुएसुं मणुस्सतेरिच्छिएसु अ जहन्नो"त्ति, कथं वैमानिकानां तत्, प्रोक्तः सर्वजघन्यकः । अङ्गुलासंख्येयभागमात्रोऽथात्र निरूप्यते ॥ २५ ॥ केषांचिदिह देवानां, उत्पत्तौ तादृशोऽवधिः । भवेत्प्राग्भवसंबन्धी, स जघन्योऽत्र दर्शितः ॥ २६ ॥ आगमे तु नैष पारभविकत्वाद्विवक्षितः । तथा च भगवानाह, क्षमाश्रमणपुंगवः ॥२७॥ "वेमाणियाणमंगुलभागमसंखं जहन्नओ होइ । उववाए परभविओ, तब्भवजो होइ तो पच्छा ॥२८॥" मृदङ्गाकृतिरित्येवं, वैमानिकावधिर्भवेत् । ऊर्ध्वायतो मृदङ्गो हि, विस्तीर्णोऽधः कृशो मुखे ॥२९॥

स्थितिमानमथ द्वैधं, जघन्योत्कृष्टभेदतः । सौधर्मेशानदेवानां, प्रतिप्रतरमुच्यते ॥३०॥ एकस्य सागरस्यांशाः,

द्वितीयप्रतरे भागाश्चत्वारस्तादृशाः
प्रकल्प्यन्ते त्रयोदश । प्रथमप्रतरे भागौ, तादृशौ द्वौ परा स्थितिः ॥ ३१ ॥ द्वितीयप्रतरे भागाश्चत्वारस्तादृशाः । एकं
स्थितिः । तृतीये षट् चतुर्थेऽष्टौ, पञ्चमे च लवा दश ॥ ३२ ॥ षष्ठे द्वादश भागास्ते, सप्तमे सागरोपमम् । अष्टमे प्रतरे ज्ञेयं,
त्रयोदशैनैकभागेनाभ्यधिका स्थितिः ॥ ३३ ॥ त्रिभिस्त्रयोदशैर्भागैरधिकं सागरोपमम् । अष्टमे प्रतरे ज्ञेयं, नवभिर्द्वादशे प्रतरे पुनः
नवमे पञ्चभिश्च तैः ॥ ३४ ॥ दशमे सप्तभिर्भागैरधिकं सागरोपमम् । एकादशे च नवभिर्द्वादशे प्रतरे पुनः
॥ ३५ ॥ एकादशभिरंशैस्तैः, साधिकं सागरोपमम् । त्रयोदशे च प्रतरे, पूर्णे द्वे सागरोपमे ॥ ३६ ॥ त्रयोद-
शस्वपि तथा, प्रतरेषु जघन्यतः । स्थितिः पल्योपममेकं, नास्माद्धीना भवेदिह ॥ ३७ ॥ कल्पेषु शेषेष्वप्येवं, या
या यत्र जघन्यतः । एकरूपैव सा सर्वप्रतरेषु भवस्थितिः ॥ ३८ ॥ नत्वाद्यप्रतरोत्कृष्टा, प्रतरे ह्युत्तरोत्तरे । जघ-
न्यतः स्थितिश्चिन्त्या, नरकप्रस्तटादिवत् ॥ ३९॥ एवमीशानेऽपि भाव्या, स्थितिः सौधर्मवद्बुधैः । वाच्या किन्त्व-
धिका किञ्चिज्जघन्या परमापि च ॥ ४० ॥ अधिकत्वं तु सामान्यान्निरूपितमपि श्रुते । पल्योपमस्यासंख्येयभागे-
नाहुर्महर्षयः ॥ ४१ ॥ संग्रहणीवृत्त्यभिप्रायोऽसौ ॥
सप्तहस्तमितं देहमिह स्वाभाविकं भवेत् । अङ्गुलासंख्येयभागमानमेतज्जघन्यतः ॥ ४२ ॥ कृत्रिमं वैक्रियं
तत्तु, लक्षयोजनसंमितम् । इदमङ्गुलसंख्येयभागमात्रं जघन्यतः ॥४३॥ जघन्यं द्वैधमप्येतत्प्रारम्भसमये भवेत् ।
कृत्रिमं वैक्रियं त्वेतत्तुल्यमेवाच्युतावधि ॥ ४४ ॥ ग्रैवेयकानुत्तरेषु, विमानेषु तु नाकिनाम् । तादृक्प्रयोजना-
भावान्नास्त्येवोत्तरवैक्रियम् ॥ ४५ ॥

लेश्याऽत्र तेजोलेश्यैव, भवेद्भवस्वभावतः । द्रव्यतो भावतस्त्वेषां, विवर्त्तन्ते षडप्यमूः ॥ ४६ ॥ गर्भजा नरतिर्यञ्च, एवोत्पद्यन्त एतयोः । स्वर्गयोर्नापरेऽल्पा, देवा गच्छन्ति पञ्चसु ॥ ४७ ॥ गर्भजेषु नृतिर्यक्षु २, संख्यातायुष्कशालिषु । पर्याप्तबादरक्षोणी३पाथो४वनस्पतिष्वपि५ ॥ ४८ ॥ द्वेधा भवन्ति देव्योऽत्र, काश्चित्कुलाङ्गना इव । सभर्तृकास्तदन्यास्तु, स्वतन्त्रा गणिका इव ॥ ४९ ॥ आद्ये परिगृहीतानां, स्थितिरुत्कर्षतो भवेत् । पल्योपमानि सप्तैव, पल्योपमं जघन्यतः ॥ ५० ॥ तासामीशाननाके तु, नवपल्योपमात्मिका । गरीयसी लघु पल्योपमं समधिकं स्थितिः ॥ ५१ ॥ साधारणीनां सौधर्मे, विमानाः सुरयोषिताम् । षड् लक्षाणि द्वितीये तु, लक्षाश्चतस्र एव ते ॥ ५२ ॥ साधारणसुरस्त्रीणां, सौधर्मे स्याद्गुरुः स्थितिः । पल्योपमानि पञ्चाशत्, पल्योपमं जघन्यतः ॥ ५३ ॥ आसामीशाने तु पञ्चपञ्चाशत्परमा स्थितिः । पल्योपमानि हीना तु, पल्यं किंचन साधिकम् ॥ ५४ ॥ यासां सौधर्मेऽथ साधारणदिव्यमृगीदृशाम् । स्थितिः पल्योपममेकं, ताः स्तोकद्युतिवैभवाः ॥ ५५ ॥ सौधर्मनाकिनामेव, तादृक्पण्याङ्गनादिवत् । भोग्या नतूपरितनस्वर्गिणां प्रायशः खलु ॥ ५६ ॥ यासां त्वेकादिसमयाधिकपल्योपमादिका । स्थितिः क्रमाद्वर्द्धमाना, दशपल्योपमावधि ॥ ५७ ॥ सनत्कुमारदेवानां, भोग्यास्ता नोर्ध्ववर्त्तिनाम् । दशभ्यश्च परं पल्योपमेभ्यः समयादिभिः ॥ ५८ ॥ स्थितिः समधिका यावत्पल्योपमानि विंशतिः । यासां ता ब्रह्मदेवानां, भोग्या नोपरिवर्त्तिनाम् ॥ ५९ ॥ समयाद्यधिका पल्योपमेभ्यो विंशतेः परम् । यासां स्थितिः स्याद्देवीनां, त्रिंशत्पल्योपमावधिः ॥ ६० ॥ शुक्रदेवोपभोग्यास्तास्त्रिंशत्पल्योपमोपरि । समया-

अवधेः तनोर्मानं लेश्या अपरिगृहीताश्च

२०

२५

॥ ३२९ ॥

२८

द्यधिका चत्वारिंशत्पल्योपमावधिः ॥ ६१ ॥ यासां स्थितिस्ता भोग्याः स्युरानतस्वर्गवासिनाम् ।
श्चत्वारिंशतश्च समयादिभिः ॥ ६२ ॥ वर्द्धमाना क्रमात्पञ्चाशत्पल्यावधिका स्थितिः । यासां ताः परिभोग्याः
स्युरारणस्वर्गवर्त्तिनाम् ॥ ६३ ॥ ईशानेऽप्येवमधिकपल्योपमस्थितिस्पृशः । देव्यस्तद्वासिनामेव, देवानां यान्ति
भोग्यताम् ॥ ६४ ॥ ततः समधिकात्पल्योपमाच्च समयादिभिः । वर्द्धमाना स्थितिः पञ्चदशपल्योपमावधिः
॥ ६५ ॥ यासां माहेन्द्रदेवानां, भोग्यास्ताः सुरयोषितः । पल्योपमेभ्योऽथ पञ्चदशभ्यः समनन्तरम् ॥ ६६ ॥
समयाद्यधिका पल्योपमानि पञ्चविंशतिम् । यावद्यासां स्थितिर्भोग्यास्ता लान्तकसुधाभुजाम् ॥ ६७ ॥
पल्योपमेभ्योऽथ पञ्चविंशतिः समनन्तरम् । समयाद्यधिका पञ्चत्रिंशत्पल्योपमावधिः ॥ ६८ ॥ यासां
स्थितिः सहस्रारदेवभोग्या भवन्ति ताः । ततः परं पञ्चचत्वारिंशत्पल्योपमावधिः ॥ ६९ ॥ स्थितिर्यासां तास्तु
भोग्याः, प्राणतस्वर्गसद्मनाम् । ततोऽग्रे पञ्चपञ्चाशत्पल्योपमावधिः स्थितिः ॥ ७० ॥ यासां ता अच्यु-
तस्वर्गदेवानां यान्ति भोग्यताम् । नाधस्तनानां निःस्वानां, समृद्धा गणिका इव ॥ ७१ ॥ विमानसं-
ख्यानियमो, विशेषश्च स्थितेरपि । प्रतिप्रतरमासां नो, जानीमोऽसंप्रदायतः ॥ ७२ ॥ किंतु संभाव्यत एवम-
धिकाधिकजीविताः । ऊर्ध्वोर्ध्वप्रतरे यावच्चरमे परमायुषः ॥ ७३ ॥ आहारोच्छ्वाससमयदेहमानादिकं किल ।
अशेषमुक्तं शेषं च, भाव्यमासां सुपर्ववत् ॥ ७४ ॥ तथा—भवनव्यन्तरज्योतिष्कादिदेवव्यपेक्षया । वैमा-
निकानां सौख्यानि, बहून्युग्रशुभोदयात् ॥ ७५ ॥ तच्चैवं-चतुर्विधानां देवानां, स्युः पुण्यकर्मपुद्गलाः । उत्कृ-

ष्टोत्कृष्टतरकोत्कृष्टतमानुभागकाः ॥ ७६ ॥ आयुःकर्मसहचरा, अनन्तानन्तका अथ । तन्मध्याद्यावता कर्म-
विभागान् व्यंतरामराः ॥ ७७ ॥ अनन्तानपि तुच्छानुभागानब्दशतेन वै । जरयन्ति मितस्नेहभोज्यवत्
क्षुधिता जनाः ॥ ७८ ॥ कर्मांशांस्तावत एव, जरयन्त्यसुरान् विना । नव नागाद्यो वर्षशताभ्यां स्निग्धभो-
ज्यवत् ॥ ७९ ॥ असुरास्तावतः कर्मांणून् वत्सरशतैस्त्रिभिः । वत्सराणां चतुःशत्या, ग्रहनक्षत्रतारकाः ॥८०॥
पञ्चभिश्च वर्षशतैर्निशाकरदिवाकराः । एकेनाब्दसहस्रेण, सौधर्मेशाननाकिनः ॥८१॥ द्वाभ्यां वर्षसहस्राभ्यां,
तृतीयतुर्यनाकगाः । त्रिभिः सहस्रैर्वर्षाणां, ब्रह्मलान्तकवासिनः ॥ ८२॥ चतुःसहस्र्याऽब्दैः शुक्रसहस्रारभवाः
सुराः । वर्षपञ्चसहस्र्या चानतादिस्वश्चतुष्कगाः ॥ ८३ ॥ अधोग्रैवेयका वर्षलक्षेण मध्यमास्तु ते । द्वाभ्यां
वत्सरलक्षाभ्यां, लक्षैस्त्रिभिस्तदूर्ध्वगाः ॥ ८४ ॥ चतुर्भिश्च वर्षलक्षैर्विजयादिविमानगाः । पञ्चभिर्वर्षलक्षैश्च,
सर्वार्थसिद्धनाकिनः ॥ ८५ ॥ तुल्यप्रदेशा अप्येवं, क्रमोत्कृष्टानुभागतः । कर्मांशाः स्युश्चिरक्षेप्याः, स्निग्धच-
र्व्यादिभोज्यवत् ॥ ८६ ॥ तथा च सूत्रं—"अत्थि णं भंते ! देवाणं अणंते कम्मंसे जे जहण्णेणं एक्केण वा
दोहिं तिहिं वा उक्कोसेणं पंचहिं वाससएहिं खवयंति, ? हंता अत्थि' इत्यादि भगवतीअष्टादशशतकसप्तमो-
देशके ॥ ततोऽमीषां शुभोत्कृष्टानुभागकर्मयोगतः । चिरस्थायीनि सौख्यानि, पुष्टान्यच्छिद्रुराणि च ॥ ८७ ॥
एवं स्वस्वस्थित्यवधिं, देवा देव्यो यथाकृतम् । प्रायः सुखं कदाचित्तु, दुःखमप्युपभुञ्जते ॥ ८८ ॥ उक्तं च—
"भवणवइवाणमंतरजोइसियवेमाणिया एगंतसायं वेदणं वेदिंति, आहच्च असायं" भगवतीसूत्रे षष्ठशतक-

आयुःकर्म-
स्निग्धता

२०

२५

॥ ३३० ॥

२८

दशमोद्देशके ॥ तत्त्वार्थचतुर्थाध्यायटीकायामप्युक्तं—"यदा नाम केनचिन्निमित्तेनाशुभवेदना देवानां प्रादुरस्ति तदाऽन्तर्मुहूर्त्तमेव स्यात्, ततः परं नानुबध्नाति. सद्वेदनापि संततं षाण्मासिकी भवति, ततः परं विच्छिद्यतेऽन्तर्मुहूर्त्तं, ततः पुनरनुवर्त्तते" इति। तथा हि तुल्यस्थितिषु, निर्जरेषु परस्परम् । प्रागुत्पन्नाः सुराः पश्चादुत्पन्नेभ्योऽल्पतेजसः ॥ ८९ ॥ पश्चादुत्पन्नाश्च पूर्वोत्पन्नेभ्योऽधिकतेजसः । इत्थं कथंचित्स्यात्तेषां, जरा कान्त्यादिहानितः ॥ ९० ॥ ततस्तेजस्विनो वीक्ष्य, नवोत्पन्नान् परान् सुरान्। वृद्धा यून इवोद्वीक्ष्य, ते खिद्यन्तेऽपि केचन ॥ ९१ ॥ युद्धादिषु मिथस्तेषां, प्रतिपक्ष्यादिनिर्मिता । शस्त्रादिघातजा जातु, देहपीडाऽपि संभवेत् ॥९२॥ तथा प्रियादीष्टवस्तुविनाशविप्रयोगजः । शोको मनःखेदरूपो, मरुतामपि संभवेत् ॥ ९३ ॥ यदाहुः—"जे णं जीवा सारीरं वेदणं वेदेंति तेसि णं जीवाणं जरा, जे णं जीवा माणसं वेदणं वेदेंति तेसि णं जीवाणं सोगे, से तेणट्ठेणं जाव सोगेऽवि, एवं जाव वेमाणियाणं," भगवतीषोडशशतकद्वितीयोद्देशके। तथा प्राक् प्रौढपुण्यासां, केऽपि दृष्ट्वा परश्रियम् । मत्सरेणाभिभूयन्ते, निष्पुण्याः सुखलिप्सवः ॥ ९४ ॥ उक्तं च—"ईसाविसाय०"। किंच माल्यम्लानिकल्पवृक्षप्रकम्पनादिभिः । चिह्नैर्जानन्ति तेऽमीभिः, षण्मासान्तर्गतां मृतिम् ॥ ९५ ॥ तथाहि—"माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः । दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टेर्भ्रंशो वेपथुश्चारतिश्च ॥ ९६ ॥" स्थानाङ्गसूत्रेऽप्युक्तं—"तिहिं ठाणेहिं देवे चतिस्सामित्ति जाणइ, विमाणाइं णिप्पभाइं पासित्ता १ कप्परुक्खगं मिलायमाणं पासित्ता २ अप्पणो तेयलेस्सं परिहायमाणिं जाणित्ता ३" इत्यादि ॥

तां समृद्धिं विमानाद्यामासन्नं च्यवनं ततः। गर्भोत्पत्त्यादिदुःखं च, तत्राहारादिवैशसम् ॥ ९७॥ चित्ते चिन्तयतां तेषां, यद्दुःखमुपजायते। तज्जानन्ति जिना एव, तन्मनो वा परे तु न ॥ ९८॥ उक्तं च—"तं सुरविमाणविभवं, चिंतिय चवणं च देवलोयाओ। अइबलियं चिय जं नवि फुट्टइ सयसक्करं हिययं ॥९९॥" तथा—विपाकोदयरूपा च, चक्षुर्निमीलनादिभिः। व्यक्तैश्चिह्नैर्भवेद्व्यक्ता, तेषां निद्रा न यद्यपि ॥ ६००॥ प्रदेशोदयतस्त्वेषां, स्यात्तथाप्यन्यथा कथम्। दर्शनावरणीयस्य, सतोऽप्यनुदयो भवेत् ? ॥ १ ॥ क्षयश्चोपशमश्चास्य, देवानां क्वापि नोदितः। श्रुतेऽप्येषां कर्मबन्धहेतुत्वेनेयमीरिता ॥ २ ॥ तथाहुः—"जीवे णं भंते ! निद्दायमाणे वा पयलायमाणे वा कति कम्मपगडीओ बंधइ ?, गो० ! सत्तविहबंधए वा, अट्ठविहबन्धए वा, एवं जाव वेमाणिए, एवं जीवे णं भंते ! हसमाणे वा उस्सुयायमाणे वा कति क० बं० ?, गो० ! सत्तविहबं० वा, अट्ठविहबं० वा, एवं जाव वेमाणिए" भगवतीसूत्रे पञ्चमशतकचतुर्थोद्देशके, इह च पृथिव्यादीनां हासः प्राग्भविकतत्परिणामादवसेय" इत्येतद्वृत्तौ। एवं स्वभावतो निद्रासद्भावेऽपि सुधाभुजाम्। येयं तन्द्रा मृतेश्चिह्नं, सा तु भिन्नैव भाव्यते ॥ ३ ॥ किंच—षड्जीवकायारम्भेषु, रता मिथ्यात्वमोहिताः। यागादिभिर्जीवहिंसोपहारैर्मुदिताशयाः ॥ ४ ॥ शरीरासनशय्यादिभाण्डोपकरणेष्वपि। विमानदेवदेवीषु, हर्म्यक्रीडावनादिषु ॥ ५ ॥ पूर्वप्रेम्णा स्वीकृतेषु, नृतिर्यक्ष्वपि मूर्च्छिताः। सचित्ताचित्तमिश्रेषु, मग्नाः परिग्रहेष्विति ॥ ६ ॥ तथाहुः—"असुरकुमारा पुढविकायं समारभंति जाव तसकायं समारभंति, सरीरा परिग्गहिया भवंति, कम्मा प० भ०, भवणा प० भ०, देवा देवीओ मणूसीओ

देवानां सातजराच्युतिदुःखनिद्रारंभाः

२०

२५



२८

तिरिक्खजोणिआ तिरिक्खजोणिणीओ प० भ०, आसणसयणभंडमत्तोवगरणा परि० भ०, सचित्ताचित्तमी-
सयाइं दवाइं प० भ०, वाणमंतरा जोतिसेवमाणिया जहा भवणवासी तहा णेयवा"। एवं मिथ्यादृशो यान्ति,
सारम्भाः सपरिग्रहाः। च्युत्वोपार्जितपाप्मान, एकेन्द्रियादिदुर्गतिम् ॥ ७ ॥ सम्यग्दृशः पुनस्तत्त्वत्रितये कृत-
निश्चयाः। जिनादिसेवया यद्वा, पूर्वाधीतश्रुतस्मृतेः ॥ ८ ॥ विचारयन्तस्तत्त्वानि, सिद्धान्तोक्तानि चेतसा।
शुद्धोपदेशैः सम्यक्त्वं, प्रापयन्तः परानपि ॥ ९ ॥ उत्सवेषु महोत्साहा, अर्हत्कल्याणकादिषु। जिनोपदेशान्
शृण्वन्तः, सेवमाना जिनेश्वरान् ॥ १० ॥ महर्षीणां नृणां सम्यग्दृशामथ तपस्विनाम्। हितकामाः कृच्छ्रमग्न-
संघसाहाय्यकारिणः ॥ ११ ॥ दृष्ट्वार्षिं भावितात्मानं, कुर्वन्तो वन्दनादिकम्। तन्मध्येन न गच्छन्ति, स्तब्धमि-
थ्यात्विदेववत् ॥ १२ ॥ तथाहुः—"तत्थ जे अमायिसम्मदिट्ठिउववण्णए देवे से णं अणगारं भावियप्पाणं
पासति, पासित्ता णं वंदति णमंसति जाव पज्जुवासति, से णं अणगारस्स भावियप्पणो मज्झंमज्झेणं णो विती-
वएज्जा" भगवतीसूत्रे श. १४ उ. ३। एवमर्जितपुण्यास्ते, महर्द्धिभरशालिषु। प्रत्यायान्ति कुलेषूकेऽवासन्नभव-
सिद्धिकाः ॥ १३ ॥ षड्भिः कुलकं ॥ तत्रापि सुभगाः सर्वोत्कृष्टरूपा जनप्रियाः। भोगान् भुक्त्वाऽऽत्तचारित्राः,
क्रमाद्यान्ति परां गतिम् ॥१४॥ नन्वेवमुदिताः सूत्रे, अधर्मे संस्थिताः सुराः। कथं तदेप भावार्थो, न तेन विघ-
टिष्यते ?॥ १५ ॥ तथाहि—"जीवा णं भंते ! किं धम्मे ठिया अधम्मे ठिया धम्माधम्मे ठिया ?, गो० ! जीवा धम्मे-
वि ठिया, अधम्मे०, धम्माधम्मे०, णेरइया णं पुच्छा, गो०, ! णेरइया नो धम्मे०, नो धम्माधम्मे०, अधम्मे ठिया,

५

१०

१४

मणु० जहा जीवा, वाणमंतर० जोइ० वेमा० जहा णेरइया," भगवतीसूत्रे सप्तदशशतकद्वितीयोद्देशके १७-२। अत्रोच्यते-एषामुक्तमिदं देशसर्वविरत्यभावतः। तथैवात्रोद्देशकादौ, सूत्रेऽपि प्रकटीकृतम् ॥ १६ ॥ "से णूणं संजयविरयपडिहयपचक्खायपावकम्मे धम्मे ठिए अस्संजय० अधम्मे ठिए संजयासंजए धम्माधम्मे ठिए." सर्वथा संवराभावापेक्षं नत्वेतदीरितम्। संवरद्वाररूपस्य, सम्यक्त्वस्यैषु संभवात् ॥ १७ ॥ सम्यक्त्व मपि मिथ्यात्वनिरोधात्संवरः स्फुटः। संवरेष्वत एवेदं, श्रुते पञ्चसु पठ्यते ॥ १८ ॥ तथाहुः स्थानाङ्गे समवायाङ्गे भगवत्यां च-पंच संवरदारा प०, तं०-सम्मत्तं विरती अपमादो अकसाइत्तं अजोगित्तं" एको द्वित्रादिसंख्येया, असंख्या अपि कर्हिचित्। उत्पद्यन्ते च्यवन्तेऽमी, एकस्मिन् समये सह ॥ १९ ॥ उत्पत्तेश्च्यवनस्यापि, विरहो यदि भाव्यते। सौधर्मैशानयोर्देवलोकयोरमृताशिनाम् ॥ २० ॥ स चतुर्विंशतिं यावन्मुहूर्त्तान् परमो भवेत्। जघन्यतस्तु समयं, यावदुक्तो जिनेश्वरैः ॥ २१ ॥

इन्द्रयोरथ सौधर्मैशानस्वर्गाधिकारिणोः। स्वरूपमुच्यते किंचिन्मत्वा गुरूपदेशतः ॥ २२ ॥ तत्रादिमे देवलोके, प्रतरे च त्रयोदशे। मेरोर्दक्षिणतः पञ्च, स्युर्विमानावतंसकाः ॥ २३ ॥ प्रथमं दिशि पूर्वस्यां, तत्राशोकावतंसकं। दक्षिणस्यां सप्तपर्णावतंसकमिति स्मृतम् ॥ २४ ॥ पश्चिमायां चम्पकावतंसकाख्यं निरूपितम्। उत्तरस्यां तथा चूतावतंसकमुदीरितम् ॥ २५ ॥ तेषां चतुर्णां मध्येऽथ, स्यात्सौधर्मावतंसकम्। महाविमानं यत्राऽऽस्ते, स्वयं शक्रः सुरेश्वरः ॥ २६ ॥ एतद्योजनलक्षाणि, सार्द्धानि द्वादशायतम्। विस्तीर्णं च परिक्षेपो,

सम्यग्दृष्ट्यादेर्धर्माधर्मौ

२०

२५

॥ ३३२ ॥

२८

योजनानां भवेदिह ॥ २७ ॥ लक्षाण्येकोनचत्वारिंशद् द्विपञ्चाशदेव च । सहस्राण्यष्टशत्यष्टाचत्वारिंशत्सम-
न्विता ॥ २८ ॥ समन्ततोऽस्य प्राकारो, वनखण्डाश्चतुर्दिशम् । प्रासादशेखरो मध्ये, प्रासादपङ्क्तिवेष्टितः
॥ २९ ॥ प्रासादात्तत ऐशान्यामुपपातादिकाः सभाः । एवं प्रागुक्तमास्थेयं, सर्वं विमानवर्णनम् ॥ ३० ॥
अत्रोपपातसदने, शय्यायां सुकृताश्रिताः । उत्पद्यन्ते शक्रतया, क्रमोऽत्र प्राक् प्रपञ्चितः ॥ ३१ ॥ यथा हि
साम्प्रतीनोऽसौ, सौधर्मनाकनायकः । प्रागासीत्कार्त्तिकः श्रेष्ठी, पृथिवीभूषणे पुरे ॥ ३२ ॥ तेन श्राद्धप्रति- ५
मानां, शतं तत्रानुशीलितम् । ततः शतक्रतुरिति, लोके प्रसिद्धिमीयिवान् ॥ ३३ ॥ स चैकदा गैरिकेन,
मासोपवासभोजिना । दृढार्हतत्वरुष्टेन, नुन्नस्य क्ष्मापतेर्गिरा ॥ ३४ ॥ गैरिकं भोजयामास, पारणायां नृपा-
लये । ततः स दुष्टो धृष्टोऽसीत्यंगुल्या नासिकां स्पृशन् ॥ ३५ ॥ जहास श्रेष्ठिनं सोऽपि, गृहे गत्वा विर-
क्तधीः । जग्राहाष्टसहस्रेण, वणिक्पुत्रैः समं व्रतम् ॥३६॥ अधीतद्वादशाङ्गीको, द्वादशाब्दानि संयमम् । पाल-
यित्वाऽनशनेन, मृत्वा देवेश्वरोऽभवत् ॥३७॥ चतुर्भिः कलापकं । गैरिकस्तापसः सोऽपि, कृत्वा बालतपो मृतः । १०
अभूदैरावणसुरः, सौधर्मेन्द्रस्य वाहनम् ॥३८॥ अयं तावत्कल्पवृत्त्याद्यभिप्रायः, भगवतीसूत्राभिप्रायस्त्वयं—

हस्तिनागपुरे श्रेष्ठी, कार्त्तिकोऽभून्महर्द्धिकः । सहस्राम्रवणे तत्रागतोऽर्हन्मुनिसुव्रतः ॥ ३९ ॥ कार्त्तिका-
द्यास्तत्र पौरा, जिनं वन्दितुमैयरुः । प्रबुद्धः कार्त्तिकः श्रुत्वा, जिनोपदेशमञ्जसा ॥ ४० ॥ गृहे गत्वा ज्ञाति-
मित्रस्वजनान् भोजनादिभिः । संतोष्य ज्येष्ठतनये, कुटुम्बभारमक्षिपत् ॥ ४१ ॥ स्वस्वज्येष्ठसुते न्यस्त- १४

गृहभारैः समन्ततः । अष्टाधिकसहस्रेणानुगतो नैगमोत्तमैः ॥ ४२ ॥ सहस्रपुरुषोद्वाह्यामारुह्य शिबिकां महैः । मुनिसुव्रतपादान्ते, स प्रव्रज्यामुपाददे ॥४३॥ अधीत्य द्वादशाङ्गानि, द्वादशाब्दानि संयमम् । धृत्वा मासमुपोष्यान्ते, सौधर्मनायकोऽभवत् ॥ ४४ ॥ तथा च सूत्रं–'इहेव जंबुद्दीवे भारहे वासे हत्थिणाउरे नामं नयरे होत्था' इत्यादि" भगवतीसूत्रे श०१८ उ० २। एवमुत्पन्नः स शक्रः, प्राग्वत्कृत्वा जिनार्चनम् । सुखमास्ते सुधर्मायां, पूर्वामुखो महासने ॥४५॥ तिस्रोऽस्य पर्षदस्तत्राभ्यन्तरा समिताभिधा । तस्यां देवसहस्राणि, द्वादशेति जिना जगुः ॥ ४६ ॥ देवीशतानि ससास्यां, मध्या चंडाभिधा सभा । चतुर्दश सहस्राणि, देवानामिह पर्षदि ॥४७॥ षट् शतानि च देवीनां, बाह्या जाताभिधा सभा । स्युः षोडश सहस्राणि, पर्षदीह सुधाभुजाम् ॥ ४८ ॥ शतानि पञ्च देवीनां, यथाक्रममथोच्यते । आयुःप्रमाणमेतासां, तिसृणामपि पर्षदाम् ॥ ४९ ॥ अन्तःपर्षदि देवानां, पञ्चपल्योपमात्मिका । स्थितिस्तथात्र देवीनां, पल्योपमत्रयं भवेत् ॥ ५० ॥ पल्योपमानि चत्वारि, मध्यपर्षदि नाकिनाम् । स्थितिर्देवीनां तु पल्योपमद्वयं भवेदिह ॥ ५१ ॥ बाह्यपर्षदि देवानां, पल्योपमत्रयं स्थितिः । एकं पल्योपमं चात्र, देवीनां कथिता स्थितिः ॥ ५२ ॥ अस्यैवं सामानिकानां, त्रायस्त्रिंशकनाकिनाम् । लोकपालानां तथाग्रमहिषीणामपि ध्रुवम् ॥ ५३ ॥ भवन्ति पर्षदस्तिस्रः, समिताद्या यथाक्रमम् । अच्युतान्तेन्द्रसामानिकादीनामेवमेव ताः ॥ ५४ ॥ इति स्थानाङ्गसूत्रे ॥ सहस्राण्यस्य चतुरशीतिः सामानिकाः सुराः । ते चेन्द्रत्वं विना शेषैः, कान्त्यायुर्वैभवादिभिः ॥ ५५ ॥ समानाः सुरनाथेन, सामानिकास्ततः

विमानस्य साम्प्रतीनेन्द्रस्य च वर्णनं

२०

२५



२८

श्रुताः । अमात्यपितृगुर्वादिवत्सन्मान्या बिडौजसः ॥ ५६ ॥ स्वामित्वेन प्रतिपन्ना, एतेऽपि सुरनायकम् । भवन्ति
वत्सलाः सर्वकार्येषु बान्धवा इव ॥ ५७ ॥ त्रायस्त्रिंशास्त्रयस्त्रिंशद्देवाः स्युर्मन्त्रिसन्निभाः । सदा राज्यभारचिन्ता-
कर्त्तारः शक्रसंमताः ॥ ५८ ॥ पुरोहिता इव हिताः, शान्तिकपौष्टिकादिकम् । कुर्वन्तोऽवसरे शक्रं, प्रीणयन्ति
महाधियः ॥ ५९ ॥ दोगुन्दकापराह्वाना, महासौख्याश्रिता अमी । निदर्शनतयोच्यन्ते, श्रुतेऽतिसुखशालिनाम्
॥ ६० ॥ तथोक्तं मृगापुत्रीयाध्ययने—"नंदणे सो उ पासाए, कीलए सह इत्थिए । देवो दोगुंदगो चेव, निच्चं
मुइयमाणसो ॥ ६१ ॥—त्रायस्त्रिंशा देवा भोगपरायणा दोगुंदका इति भण्यन्ते" इत्युत्तराध्ययनावचूर्णौ ।
साम्प्रतीनास्त्वमी जम्बूद्वीपेऽस्मिन्नेव भारते । पालकसन्निवेशस्थास्त्रयस्त्रिंशन्महर्द्धिकाः ॥ ६२ ॥ अभूवन्
गृहपतयः, सहायास्ते परस्परम् । उग्राचारक्रियासाराः, संसारभयभीरवः ॥ ६३ ॥ प्रपाल्याब्दानि भूयांसि,
श्रावकाचारमुत्तमम् । आलोचितप्रतिक्रान्तातिचाराश्चतुराशयाः ॥ ६४ ॥ मासमेकमनशनं, कृत्वा मृत्वा
समाधिना । त्रायस्त्रिंशाः समभवन्मान्या वृन्दारकेशितुः ॥ ६५ ॥ न चैवमेतेभ्य एव, त्रायस्त्रिंशा इति प्रथा ।
नामधेयं नित्यमेतद्व्युच्छित्तिनयाश्रयात् ॥ ६६ ॥ शतानि मन्त्रिणः पञ्च, संत्यन्येऽपीन्द्रसंमताः । येषाम-
क्षिसहस्रेण, सहस्राक्षः स गीयते ॥ ६७ ॥ तथोक्तं कल्पसूत्रवृत्तौ—"सहस्सक्खे'त्ति मन्त्रिपञ्चशत्या लोचनानि
इन्द्रसंबन्धीन्येवेति सहस्राक्षः" । तथा सहस्राणि चतुरशीतिरात्मरक्षकाः । अमी चात्मानमिन्द्रस्य, रक्षन्ती-
त्यात्मरक्षकाः ॥ ६८ ॥ एते त्वपायाभावेऽपि, प्रीत्युत्पत्त्यै सुरेशितुः । तथास्थितेश्च निचितकवचाः परितः

५
१०
१४

स्थिताः ॥ ६९ ॥ धनुरादिप्रहरणग्रहणव्यग्रपाणयः । तूणीरखड्गफलककुन्तादिभिरलङ्कृताः ॥ ७० ॥ एकाग्रचेतसः स्वामिवदनन्यस्तदृष्टयः । श्रेणीभूताः शक्रसेवां, कुर्वते किङ्करा इव ॥ ७१ ॥ तथा सप्तास्य सैन्यानि, तत्र तादृक्प्रयोजनात् । नृत्यज्जात्योत्तुङ्गचङ्गतुरङ्गाकारधारिणाम् ॥ ७२ ॥ शूराणां युद्धसन्नद्धशस्त्रावरणशालिनाम् । निर्जराणां निकुरम्बं, हयसैन्यमिति स्मृतम् ॥ ७३ ॥ एवं गजानां कटकं, रथानामपि भास्वताम् । विविधायुधपूर्णानामश्वरूपमरुद्भुजाम् ॥ ७४ ॥ तथा वृषभदेवानां, सैन्यमुच्छृङ्गिणां युधे । उद्भटानां पदातीनां, सैन्यमुग्रभुजोष्मणाम् ॥ ७५ ॥ एतानि पञ्च सैन्यानि, गतदैन्यानि वज्रिणम् । सेवन्ते युद्धसज्जानि, नियोगेच्छूनि सन्निधौ ॥ ७६ ॥ शुद्धाङ्गनृत्यवैदग्ध्यशालिनां गुणमालिनाम् । नटानां देवदेवीनां, षष्ठं सैन्यं भजत्यमुम् ॥ ७७ ॥ स्वरमाधुर्यवर्याणां, सैन्यमातोद्यधारिणाम् । गन्धर्वदेवदेवीनां, सप्तमं सेवते हरिम् ॥ ७८ ॥ एतत्सैन्यद्वयं चातिचतुरं गीतताण्डवे । अविश्रमं प्रयुञ्जानमुपभोगाय वज्रिणः ॥ ७९ ॥ सप्तानामप्यथैतेषां, सैन्यानां सप्त नायकाः । सदा सन्निहिताः शक्रं, विनयात् पर्युपासते ॥ ८० ॥ ते चैवं नामतो वायु १ रैरावणश्च २ माठरः ३ । स्याद्दमर्द्धि ४ र्हरिनैगमेषी ५ श्वेतश्च ६ तुम्बरुः ७ ॥ ८१ ॥ सप्तापि सेनापतयः, स्युरेतैरेव नामभिः । तृतीयस्य पञ्चमस्य, सप्तमस्य सुरेशितुः ॥ ८२ ॥ अङ्गीकृत्य द्वादशेन्द्रानानतारणयोरपि । एतन्नामान एवामी, स्थानाङ्गे कथिता जिनैः ॥ ८३ ॥ पादात्येशस्तत्र हरिनैगमेषीति विश्रुतः । शक्रदूतोऽतिचतुरो, नियुक्तः सर्वकर्मसु ॥ ८४ ॥ योऽसौ कार्यविशेषेण, देवराजानुशासनात् । कृत्वा मङ्क्षु त्वचश्छेदं, रोमरन्ध्रैर्नखांकुरैः

॥ ८५ ॥ संहर्त्तुमीष्टे स्त्रीगर्भं, न च तासां मनागपि । पीडा भवेन्न गर्भस्याप्यसुखं किंचिदुद्भवेत् ॥ ८६ ॥
तत्र गर्भाशयाद्गर्भाशये योनौ च योनितः । योनेर्गर्भाशये गर्भाशयाद्योनाविति क्रमात् ॥ ८७ ॥ आकर्षणामो-
चनाभ्यां, चतुर्भङ्ग्यत्र संभवेत् । तृतीयेनैव भङ्गेन, गर्भं हरति नापरैः ॥ ८८ ॥ इदं चार्थतः पञ्चमाङ्गे ॥ पत्ति-
सैन्यपतेरस्य, कच्छाः सप्त प्रकीर्त्तिताः । कच्छाशब्देन च स्वाज्ञावशवर्त्तिसुरव्रजः ॥ ८९ ॥ ईशानाद्यच्युता-
न्तानामेवं सर्वबिडौजसाम् । पत्तिसैन्यपतेः कच्छाः, सप्त सप्त भवन्ति हि ॥ ९० ॥ देवास्तत्राद्यकच्छायां,
स्वेन्द्रसामानिकैः समाः । द्वितीयाद्याः षडन्याश्च, द्विघ्ना द्विघ्ना यथोत्तरम् ॥ ९१ ॥ यथा सौधर्मेन्द्रहरिनैगमे-
षिचमूपतेः । स्यादाद्यकच्छा चतुरशीतिदेवसहस्रिका ॥ ९२ ॥ तथा यानविमानाधिकारी पालकनिर्जरः ।
सदा शक्रनियोगेच्छुरास्ते विरचिताञ्जलिः ॥ ९३ ॥ यदेन्द्रो जिनजन्माद्युत्सवेषु गन्तुमिच्छति । तदा वादयते
घण्टां, सुघोषां नैगमेषिणा ॥ ९४ ॥ वादितायाममुष्यां च, घण्टाः सर्वविमानगाः । शब्दायन्ते समं यन्त्रप्र-
योगप्रेरिता इव ॥ ९५ ॥ ततः पालकदेवेन, रचिते पालकाभिधे । समासीनो महायानविमाने सपरिच्छदः
॥ ९६ ॥ औत्तराहेण निर्याणमार्गेणावतरत्यधः । एत्य नन्दीश्वरद्वीप, आग्नेयकोणसंस्थिते ॥ ९७ ॥ शैले रति-
कराभिख्ये, विमानं संक्षिपेत्ततः । कृतकार्यः स्वर्गमेति, विहिताष्टाहिकोत्सवः ॥ ९८ ॥ तथोक्तं—"तत्र
दक्षिणो निर्याणमार्ग उक्तः, इह तु उत्तरो वाच्यः, तथा तत्र नन्दीश्वरद्वीपे उत्तरपूर्वो रतिकरपर्वत ईशानेन्द्र-
स्यावतारायोक्तः, इह तु दक्षिणपूर्वोऽसौ वाच्य" इति भगवतीसूत्रवृत्तौ शतक १६ द्वितीयोद्देशके, तत्रेति

५

१०

१४

ईशानेन्द्राधिकारे, इहेति सौधर्मेन्द्राधिकारे ॥ स्वर्गेषु विषमेष्वेषा, स्थितिः स्याद्दशमेऽपि च । घण्टापत्तीशाना-
मादिः, समेष्वीशाननाकवत् ॥ ९९ ॥ तथा देवा महामेघाः, सन्त्यस्य वशवर्त्तिनः । येषां स्वामितया शक्रो,
मघवानिति गीयते ॥ ७०० ॥ तथोचुः–'मघवं'ति मघा–महामेघा वशे सन्त्यस्य मघवान्,'' कल्पसूत्रवृत्तौ,
तथा हि मेघा द्विविधा, एके वर्षर्त्तुभाविनः । स्वाभाविकास्तदपरे, स्युर्दैवतानुभावजाः ॥ १ ॥ तत्र शक्रो यदा
वृष्टिं, कर्त्तुमिच्छेन्निजेच्छया । आज्ञापयति गीर्वाणांस्तदाऽभ्यन्तरपार्षदान् ॥ २ ॥ ते मध्यपार्षदांस्तेऽपि, बाह्यांस्ते
बाह्यबाह्यकान् । तेऽप्याभियोगिकांस्तेऽपि, ब्रुवते वृष्टिकायिकान् ॥ ३ ॥ ततस्ते कुर्वते वृष्टिं, हृष्टाः शक्रानु-
शिष्टितः । एवमन्येऽपि कुर्वन्ति, सुराश्चतुर्विधा अपि ॥ ४ ॥ जन्मदीक्षाज्ञानमुक्तिमहेषु श्रीमदर्हताम् ।
भक्त्युद्रेकादतिशयोद्भावनाय प्रमोदतः ॥५॥ तथोक्तम्—'जाहे णं भंते ! सक्के देविंदे देवराए वुट्ठिकायं काउकामे
भवइ से कहमिदाणिं पकरेइ ?' इत्यादि भगवतीसूत्रे १४—२ छित्त्वा भित्त्वा कुट्टयित्वा, चूर्णयित्वाऽथवा
स्वयम् । कमण्डल्वां शिरः पुंसः, कस्याप्येष यदि क्षिपेत् ॥ ६ ॥ तथापि किञ्चिदप्यस्य, बाधा न स्यात्तथा-
विधा । भगवत्यां शक्रशक्तिरुक्ता चतुर्दशे शते ॥ ७ ॥ सदा सन्निहितस्तस्यैरावणो वाहनं सुरः । व्यक्तो
नानाशक्तियुक्तो, भक्त्युद्युक्तः सुरेशितुः ॥ ८ ॥ दशार्णनृपबोधाय, यियासोरिव वज्रिणः । आज्ञां प्राप्या-
नेकरूपसमृद्धिं कर्त्तुमीश्वरः ॥ ९ ॥ यदा यदा स चेन्द्रस्य, कचिज्जिगमिषा भवेत् । तदा तदा हस्तिरूपं,
कृत्वेशमुपतिष्ठते ॥ १० ॥ दधात्यसौ करे वज्रममोघशक्तिशालि यत् । निरीक्ष्यैव विपक्षाणां, क्षणात्क्षुभ्यति

हरिनैगमेष्यादि-शक्तिः

२०

२५
॥ ३३५ ॥

२८

तुल्यैव शक्तिस्तिर्यक् तु, संख्येया द्वीपवार्द्धयः ॥३७॥ शक्तेर्विषय एवायं, न त्वेवं कोऽपि कर्हिचित् । चक्रे विकु-
र्वणां नो वा, करोति न करिष्यति ॥ ३८ ॥ शक्रस्याग्रमहिष्यस्तु, भवन्त्यष्टौ गुणोत्तमाः । रूपलावण्यशा-
लिन्यः, प्रोक्तास्ता नामतस्त्विमाः ॥ ३९ ॥ पद्मा १ शिवा २ शच्य ३ थाञ्जू ४ रमलाख्या ५ तथाऽप्सराः ६ ।
ततो नवमिका ७ रोहिण्यभिधा ८ स्यादिहाष्टमी ॥ ४० ॥ साम्प्रतीनानामासां पूर्वभवस्त्वेवं–द्वे श्रावस्ती-
निवासिन्यौ, हस्तिनागपुरालये । द्वे द्वे काम्पिल्यपुरगे, द्वे साकेतपुरालये ॥ ४१ ॥ एताः पद्माख्यपितृका,
विजयाभिधमातृकाः । वृहत्कुमार्योऽष्टाप्यात्तप्रव्रज्याः पार्श्वसन्निधौ ॥ ४२ ॥ पुष्पचूलार्यिकाशिष्याः, पक्षं
संलिख्य सुव्रताः । मृत्वोत्पन्ना विमानेषु, पद्मावतंसकादिषु ॥ ४३ ॥ जाताः शक्रमहिष्योऽष्टौ, सप्तपल्योपमा-
युषः । सिंहासनेषु क्रीडन्ति, पद्माख्यादिषु सोत्सवम् ॥ ४४ ॥ एकैकस्यास्तथैतस्याः, परिवारे सुराङ्गनाः ।
स्वतुल्यरूपालङ्काराः, सहस्राण्येव षोडश ॥ ४५ ॥ षोडशैताः सहस्राणि, विकुर्वन्ति नवा अपि । एवं च
सपरीवाराः, पत्न्यो भवन्ति वज्रिणः ॥ ४६ ॥ अष्टाविंशत्या सहस्रैरधिकं लक्षमेव ताः । भुङ्क्ते तावन्ति
रूपाणि, कृत्वेन्द्रोऽप्येकहेलया ॥ ४७ ॥ तथाहुः–'सक्कस्स णं भंते ! देविंदस्स पुच्छा, अज्जो ! अट्ठ अग्गमहि-
सीओ प०' इत्यादि भगवतीसूत्रे १०–५ । यदा शक्रः सहैताभिः, कामक्रीडां चिकीर्षति । चारु चक्राकारमेकं,
तदा स्थानं विकुर्वयेत् ॥ ४८ ॥ पञ्चवर्णतृणमणिरमणीयमहीतलम् । व्यासायामपरिक्षेपैर्जम्बूद्वीपोपमं च तत्
॥ ४९ ॥ मध्यदेशेऽस्य रचयत्येकं प्रासादशेखरम् । योजनानां पञ्च शतान्युच्चं तदर्द्धविस्तृतम् ॥ ५० ॥ तस्य

५ १० १४

देवानाम् ऊर्ध्वगमादि वैक्रियशक्तिः

सार्द्धं, भयप्रलग्नैरतः ॥ २७ ॥ तदा वैमानिका देवाः, काष्ठपर्णतृणादिकम् । शर्कराकणमप्येकमामृशन्ति करेण यत् ॥ २८ ॥ अचिन्त्यपुण्यात्तत्तेषां, प्राप्य प्रहरणात्मताम् । सुभूमचक्रिणः स्थालमिव प्रहरति द्विषः ॥ २९ ॥ तद्वैतेषां प्रहरणेऽप्यसत्स्वपि न हि क्षतिः । असुराणां तु नैतादृक्, शक्तिः पुण्यापकर्षतः ॥ ३० ॥ निर्माप्यैते ततोऽस्त्राणि, वैक्रियाणि च बिभ्रति । ससायाः सुभटंमन्यास्तथाविधनरादिवत् ॥ ३१ ॥ तथाहुः—'देवासुराणं भंते ! संगामे किं णं तेसिं देवाणं पहरणत्ताए परिणमति ?, गो० ! जं णं देवा तणं वा कट्ठं वे' त्यादि भगवतीसूत्रे १८-७।

विकुर्वणाशक्तिरपि, वर्त्ततेऽस्य गरीयसी । जम्बूद्वीपद्वयं पूर्णं, यदसौ स्वविकुर्वितैः ॥ ३२ ॥ वैमानिकैर्देवदेवीवृन्दैः सांकीर्णयतोऽभितः । ईष्टे पूरयितुं तिर्यगसंख्यान् द्वीपवारिधीन् ॥ ३३ ॥ तथाहुः—"सक्के णं देविंदे देवराया जाव केवलकप्पं च णं पभू विउवित्तए ?, एवं जहेव चमरस्स, नवरं दो केवलकप्पे जंबुद्दीवे दीवे, अवसेसं तं चेव" भगवतीसूत्रे, अयं भावः—जम्बूद्वीपावधिक्षेत्रं, यावच्छक्रविमानतः । तावद् द्विगुणितं भर्त्तुमीष्टे रूपैर्विकुर्वितैः ॥ ३४ ॥ तथा च देवेन्द्रस्तवे चमरेन्द्रमाश्रित्य—"जाव य जंबुद्दीवो जाव य चमरस्स चमर चंचाओ । असुरेहिं असुरकन्नाहिं अत्थि विसओ भरेउं जे ॥१॥" न पञ्चमाङ्गवृत्तौ तु, सूत्रमेतत्स्फुटीकृतम् । तिर्यक्क्षेत्रस्यात्र पृथगुक्तत्वाज्ज्ञायते त्विति ॥ ३५ ॥ तदत्र तत्त्वं बहुश्रुता विदन्ति । सामानिकानामेतस्य, त्रायस्त्रिंशकनाकिनाम् । कर्तुं वैक्रियरूपाणि, शक्तिरेवं प्ररूपिता ॥ ३६ ॥ लोकपालाग्रपत्नीनामपि वैक्रियगोचरा ।

२०

२५



२८

मानसम् ॥११॥ प्रयुक्तं द्विषतो हन्तुमिन्द्रेण कुपितेन यत् । ज्वालास्फुलिङ्गानभितो, विकिरद्भीषणाकृति ॥१२॥
कुर्वद् दृष्टिप्रतीघातमुत्फुल्लकिंशुकोपमम् । निहन्त्येवानुगम्यैनं, गतं दूरेऽपि साध्वसात् ॥ १३ ॥ यथाऽनेनैव
शक्रेण, तन्मुक्तं चमरोपरि । ततो नंष्ट्वा गतस्यास्य, श्रीमद्वीरपदान्तरे ॥ १४ ॥ पृष्ठे पतद्गृहीतं च, जिनावज्ञा-
भियाऽमुना । चतुर्भिरङ्गुलैर्वीरपादाद्व्यवहितं रयात् ॥ १५ ॥ नन्वध्वन्येव वज्रेण, कथमेष न ताडितः ? । वज्र-
श्चमरेन्द्रोऽपि, नाग्राहि वज्रिणा कथम् ? ॥ १६ ॥ नरादिभिस्त्वधः क्षिप्तं, वस्त्वादातुं न शक्यते । सुरैः किं
शक्यते येन, वज्रमग्राहि वज्रिणा ? ॥ १७ ॥ अत्रोच्यते—अधोनिपतने शीघ्रगतयोऽसुरनाकिनः । ऊर्ध्व-
मुत्पतने मन्दगतयश्च स्वभावतः ॥ १८ ॥ वैमानिकाः पुनरधःपतने मन्दगामिनः । ऊर्ध्वमुत्पतने शीघ्रगतयश्च
स्वभावतः ॥ १९ ॥ वज्रमप्यूर्ध्वगमने, शीघ्रं मन्दमधोगमे । असुरेन्द्राद्वज्रिणस्तु, मन्दगामि द्विधाप्यदः ॥२०॥
यावत्क्षेत्रं शक्र एकसमयेनोर्ध्वमुत्पतेत् । वज्रं द्वाभ्यां तावदेव, चमरः समयैस्त्रिभिः ॥ २१ ॥ अधः पुनर्या-
वदेकसमयेनासुरेश्वरः । तावद् द्वाभ्यां हरिर्वज्रं, त्रिभिर्निपतति क्षणैः ॥ २२ ॥ निग्रहीतुं ततो मार्गे, नाश-
क्यतासुरप्रभुः । वज्रेणाधो निपतता, स्वतस्त्रिगुणशीघ्रगः ॥ २३ ॥ नाग्राहि शक्रेणाप्येष, स्वतो द्विगुणवे-
गवान् । वज्रं स्वतो मन्दगति, धृतं पृष्ठानुधाविना ॥ २४ ॥ सुराः सुखेन गृह्णीरन्नधः क्षिप्तं हि पुद्गलम् ।
यदसौ सत्वरः पूर्वं, पश्चान्मन्दगतिर्भवेत् ॥ २५ ॥ पूर्वं पश्चादपि सुरो, महर्द्धिकस्तु सत्वरः । नरादयस्तु
तदनु, नाधः पतितुमीशते ॥ २६ ॥ एवं च—अन्येषामपि देवानां, यदा विमानवासिनाम् । युद्धं स्यादसुरैः

५

१०

१४

प्रासादस्य नानामणिरत्नमयी मही । ऊर्ध्वभागोऽप्यस्य पद्मलताद्विभक्तिशोभितः ॥ ५१ ॥ तस्य प्रासादस्य मध्ये, रत्नर्येन्मणिपीठिकाम् । योजनान्यष्ट विस्तीर्णायतां चत्वारि मेदुराम् ॥ ५२ ॥ तस्या मणीपीठिकाया, उपर्येकां मनोहराम् । विकुर्वयेद्दिव्यशय्यां, कोमलास्तरणास्तृताम् ॥ ५३ ॥ रत्नश्रेणिनिर्मितोरूप्रतिपादकृतोन्नतिम् । गाथामिथोगतसुवर्णचतुष्पादां सुखावहाम् ॥५४॥ युग्मं ॥ ततः सपरिवाराभिः, प्राणप्रियाभिरष्टभिः । गन्धर्वनाट्यानीकाभ्यां, चानुयातः सुरेश्वरः ॥ ५५ ॥ तत्रोपेत्यानेकरूपो, गाढमालिङ्ग्य ताः प्रियाः । दिव्यान् पञ्चविधान् कामभोगान् भुङ्क्ते यथासुखम् ॥ ५६ ॥ तथाच सूत्रं-'जाहे णं भंते! सक्के देविंदे देवराया दिव्वाइं भोगभोगाइं भुंजिउकामे भवइ से कहमिदाणिं पकरेइ ?, गो०! ताहे चेव णं से सक्के दे० एगं महं नेमिपडिरूवगं विउव्वती'त्यादि' भगवतीसूत्रे १४-६ ॥ चत्वारोऽस्य लोकपालाश्चतुर्दिगधिकारिणः। तेषामपि विमानादिस्वरूपं किञ्चिदुच्यते ॥ ५७ ॥ विमानं तत्र शक्रस्य, यत्सौधर्मावतंसकम् । तस्मात् प्राच्यामसंख्येययोजनानामतिक्रमे ॥ ५८ ॥ तत्र सोममहाराजविमानमतिनिर्मलम् । संध्याप्रभाख्यं देवेन्द्रविमानाभं समन्ततः ॥ ५९ ॥ तत्रोपपातशय्यायामुपपातसभान्तरे । उत्पद्यते सोमराजः, शेषं सर्वं तु पूर्ववत् ॥ ६० ॥ अधोभागे विमानस्य, सोमराजस्य राजते । जम्बूद्वीपसमा तिर्यग्लोके सोमाभिधा पुरी ॥ ६१ ॥ प्रासादपरिपाट्योऽत्र, चतस्रः शेषमुक्तवत् । वैमानिकविमानार्द्धमानमत्रोषतादिकम् ॥ ६२ ॥ शेषाणां लोकपालानामप्येवं स्वस्वसंज्ञया । तिर्यग्लोके राजधान्यः, स्वविमानतले मताः ॥ ६३ ॥ सुधर्मायाः सभास्त्वत्र, न सन्तीति जिना जगुः । नैषां

२०

२५

॥३३७॥

२८

विमानोत्पन्नानामिहैताभिः प्रयोजनम् ॥ ६४ ॥ रोहिणी मदना चित्रा, सोमा चेत्यभिधानतः । चतस्रोऽग्र-
महिष्योऽस्य, स्युः सहस्रपरिच्छदाः ॥ ६५ ॥ देवीसहस्रं प्रत्येकं, विकुर्वितुमपि क्षमाः । पत्नीसहस्राश्चत्वार-
स्तदेवं सोमभूभृतः ॥ ६६ ॥ त्यक्त्वा सुधर्मामन्यत्राऽर्हत्सक्थ्याशातनाभयात् । सहैताभिः पञ्चविधान्, काम-
भोगान् भुनक्त्यसौ ॥ ६७ ॥ शेषाणां लोकपालानामप्येतैरेव नामभिः । चतस्रोऽग्रमहिष्यः स्युरियत्परि-
च्छदान्विताः ॥ ६८ ॥ सामानिकादयो येऽस्य, ये चैषामपि सेवकाः । तथा विद्युत्कुमाराग्निकुमाराख्याः
सयोषितः ॥ ६९ ॥ मरुत्कुमाराः सूर्येन्दुग्रहनक्षत्रतारकाः । सोमाज्ञावर्त्तिनः सर्वे, ये चान्येऽपि तथाविधाः
॥ ७० ॥ ग्रहाणां दण्डमुसलशृङ्गाटकादिसंस्थितिः । गर्जितं ग्रहसंचारो, गन्धर्वनगराणि खे ॥ ७१ ॥ उल्का-
पाताभ्रवृक्षा दिग्दाहा रजांसि धूम्रिकाः । सुरेन्द्रधनुरर्केन्दूपरागपरिवेषकाः ॥ ७२ ॥ प्राचीनादिमहावाता,
ग्रामादिदहनादिकाः । जम्बूद्वीपदक्षिणार्द्धे, ये चोत्पातास्तथाविधाः ॥ ७३ ॥ जनप्राणधनादीनां, क्षयास्ते
सोमभूभृताम् । तत्सेविनां वा देवानां, नाविज्ञाता न चाश्रुताः ॥ ७४ ॥ विकालकोऽङ्गारकश्च, लोहिताक्षः
शनैश्चरः । चन्द्रसूर्यशुक्रबुधबृहस्पतिविधुन्तुदाः ॥७५ ॥ भवन्त्यपत्यस्थानीयाः, सोमस्यैते दशापि हि । विका-
लकादयः सर्वे, ग्रहा एव पुरोदिताः ॥ ७६ ॥ पल्योपमतृतीयांशयुक्तपल्योपमस्थितिः । सोमराजः सुखं भुङ्क्ते,
दिव्यनाट्यादिलालितः ॥ ७७ ॥ दक्षिणस्यां च सौधर्मावतंसकविमानतः । विमानं वरशिष्टाख्यमस्ति पूर्वोक्त-
मानयुक् ॥ ७८ ॥ यमस्तत्र महाराजो, राजते राजतेजसा । धर्मराज इति ख्यातो, निग्रहानुग्रहक्षमः ॥ ७९ ॥

सामानिकादयो येऽस्य, तेषामपि च सेवकाः । ये प्रेतव्यन्तरा ये च, तेषामप्यनुजीविनः ॥ ८० ॥ तथाऽसुर-
कुमाराश्च, सर्वे नरकपालकाः । कान्दर्पिकाद्यास्ते सर्वे, यमाज्ञावशवर्त्तिनः ॥ ८१ ॥ जम्बूद्वीपदक्षिणार्द्धे,
डमराः कलहाश्च ये । अत्यन्तोद्दामसंग्रामा, महापुरुषमृत्यवः ॥ ८२ ॥ देशद्रङ्गग्रामकुलरोगाः शीर्षादिवेदनाः ।
यक्षभूतोपद्रवाश्च, ज्वरा एकाहिकादयः ॥ ८३ ॥ कासश्वासाजीर्णपाण्डुशूलार्शःप्रमुखा रुजः । देशग्रामवंश-
मारिगोत्रप्राणिधनक्षयाः ॥ ८४ ॥ इत्यादयो महोत्पाता, येऽनार्याः कष्टकारिणः । यमस्य तत्सेविनां वा,
नाविज्ञाता भवन्ति ते ॥ ८५ ॥ अम्बादयो ये पूर्वोक्ताः, परमाधार्मिकाः सुराः । भवन्त्यपत्यस्थानीया, यमरा-
जस्य ते प्रियाः ॥ ८६ ॥ अत एव मृतः प्राणी, यमदूतैर्यमान्तिकम् । नीयते क्रमसमित्यादि, लोकैस्त-
त्त्वानपेक्षिभिः ॥ ८७ ॥ तथाहुः—"महिषो वाहनं तस्य, दक्षिणा दिग् रविः पिता । दण्डः प्रहरणं तस्य,
धूमोर्णा तस्य वल्लभा ॥ ८८ ॥ पुरी पुनः संयमिनी, प्रतीहारस्तु वैध्यतः । दासौ चण्डमहाचण्डौ, चित्रगुप्तस्तु
लेखकः ॥ ८९ ॥ इत्यादि । तृतीयभागाभ्यधिकपल्योपमस्थितिर्यमः । महाराजः सुखं भुङ्क्ते, दिव्यस्त्रीवर्गसंगतः
॥ ९० ॥ प्रतीच्यामथ सौधर्मावतंसकविमानतः । स्वयंज्वलाभिधं स्फूर्जद्विमानमुक्तमानवत् ॥ ९१ ॥ वरुण-
स्तत्र तरुणप्रतापार्को विराजते । सामानिकादयो येऽस्य, येऽप्येषामनुजीविनः ॥ ९२ ॥ स्तनितोदधिनागाख्याः,
कुमारास्तत्स्त्रियोऽपि च । अन्येऽपि तादृशाः सर्वे, वरुणाज्ञानुसारिणः ॥ ९३ ॥ जम्बूद्वीपदक्षिणार्द्धे, सन्मन्दा-
ल्पातिवृष्टयः । तटाकादिजलभरा, जलोद्भेदा जलोद्वहाः ॥ ९४ ॥ देशग्रामादिवाहाश्च, जलोद्भूता जलक्षयाः ।

शक्रलोकपालाः

२०

२५



२८

नाज्ञाता वरुणस्यैते, सर्वै तत्सेविनामपि ॥ ९५ ॥ अयं पाथःपतिरिति, विख्यातः स्थूलदर्शिनाम् । पश्चिमाशा-
पतिः पाशपाणिर्जलधिमन्दिरः ॥ ९६ ॥ कर्कोटकः कर्दमकोऽञ्जनश्च शङ्खपालकः । पुण्ड्रः पलाशमोदश्च, जयो
दधिमुखस्तथा ॥९७॥ अयंपुलः काकरिकः, सर्वेऽप्येते सुधाभुजः । वरुणस्याधीश्वरस्य, भवन्त्यपत्यवत्प्रियाः॥९८॥
अनुवेलन्धरं नागावासः कर्कोटकाचलः । ऐशान्यां लवणाब्धौ तत्स्वामी कर्कोटकः सुरः ॥९९॥ विद्युत्प्रभाद्रिराग्नेय्यां,
तस्य कर्दमकः पतिः । अञ्जनस्तु लोकपालो, वेलंबस्य सुरेशितुः ॥८००॥ धरणेन्द्रलोकपालस्तुर्योऽत्र शङ्खपालकः
पुंड्राद्यास्तु सुराः शेषा, न प्रतीता विशेषतः ॥ १ ॥ देशोनपल्यद्वितयस्थितिरेष मनोरमान् । वरुणाख्यो महा-
राजो, भुङ्क्ते भोगाननेकधा ॥ २ ॥ उदीच्यामथ सौधर्मावतंसकादतिक्रमे । असंख्येययोजनानां, विमानं वल्गु-
नामकम् ॥ ३ ॥ देवस्तत्र वैश्रमणो, विभाति सपरिच्छदः । यः सौधर्मसुरेन्द्रस्य, कोशाध्यक्ष इति श्रुतः ॥ ४ ॥
अस्य सामानिकाद्या ये, तेषां भृत्याश्च ये सुराः । सुपर्णद्वीपदिग्नागकुमारा व्यन्तरा अपि ॥ ५ ॥ सर्वेऽप्येते
सदेवीका, ये चान्येऽपि तथाविधाः । भवन्ति ते वैश्रमणानुशासनवशीकृताः ॥ ६ ॥ सीसकायस्त्रपुताम्रै-
रत्नरजताकराः । वज्राकरा वसुधाराः, स्वर्णरत्नादिवृष्टयः ॥ ७ ॥ पत्रपुष्पबीजफलमाल्यचूर्णादिवृष्टयः । वस्त्रा-
भरणसद्गन्धभाजनक्षीरवृष्टयः ॥ ८ ॥ तथा सुकालदुष्कालौ, वस्त्वल्पार्घमहार्घता । सुभिक्षदुर्भिक्षगुडघृत-
धान्यादिसंग्रहाः ॥ ९ ॥ क्रयाश्च विक्रयाश्चैव, चिरलरत्नसंचयाः । प्रहीणस्वामिकादीनि, निधानानि च भूतले ॥
॥ १० ॥ नेत्याद्यविदितं जम्बूद्वीपयाम्यार्द्धगोचरम् । धनदस्य विभोर्यद्वा, नाकिनां तन्निषेविणाम् ॥ ११ ॥ पूर्ण-

५ १० १४

माणिशालिभद्राः, सुमनोभद्र इत्यपि । चक्ररक्षः पुण्यरक्षः, शर्वाणश्च ततः परम् ॥ १२ ॥ सर्वयशाः सर्वकामः, समृद्धोऽमोघ इत्यपि । असङ्गश्चापत्यसमा, एते वैश्रमणेशितुः ॥ १३ ॥ असौ कृत्वोत्तुङ्गगेहां, स्वर्णप्राकारशोभिताम् । प्रददावादिदेवाय, विनीतां स्वःपतेर्गिरा ॥ १४ ॥ कृष्णाय द्वारिकामेवं, कृत्वा शक्राज्ञया ददौ । जिनजन्मादिषु स्वर्णं, रत्नौघैश्चाभिवर्षति ॥ १५ ॥ समृद्धश्च वदान्यश्च, लोकेऽनेनोपमीयते । सिद्धान्तेऽपि दानशूरतया गणधरैः स्मृतः ॥ १६ ॥ तथाहुः—"खमासूरा अरिहंता, तवसूरा अणगारा । दाणसूरा वेसमणा, जुद्धसूरा वासुदेवा ॥" एष वैश्रमणः पूर्णपल्योपमद्वयस्थितिः । सुखान्यनुभवत्युग्रपुण्यप्राग्भारभासुरः ॥ १७ ॥ तथोक्तं—"सोमजमाणं सतिभाग पलिय वरुणस्स दुन्नि देसूणा । वेसमणे दो पलिआ एस ठिई लोगपालाणं ॥ १८ ॥" चतुर्णामप्यमीषां येऽपत्यप्रायाः सुधाभुजः । ते पल्यजीविनः सर्वे, विना शशिदिवाकरौ ॥ १९ ॥ एवं सामानिकैस्त्रायस्त्रिंशपार्षदमन्त्रिभिः । पत्नीभिर्लोकपालैश्च, सैन्यैः सेनाधिपैः सुरैः ॥ २० ॥ अन्यैरपि घनैर्देवीदेवैः सौधर्मवासिभिः । सेवितो दक्षिणार्द्धस्य, लोकस्य परमेश्वरः ॥ २१ ॥ यथास्थानं परिहितमौलिमालाद्यलङ्कृतिः । शरत्काल इव स्वच्छाम्बरोऽर्केन्द्रुच्छकुण्डलः ॥ २२ ॥ पूर्णसागरयुग्मायुरास्ते स्वैरं सुखाम्बुधौ । मग्नो भग्नश्रमः स्वःस्त्रीनाट्यनादप्रमोदितः ॥ २३ ॥ आश्चर्यमीदृगैश्वर्यव्यासक्तोऽप्यन्तरान्तरा । जम्बूद्वीपमवधिना, निरीक्षते महामनाः ॥ २४ ॥ संघे चतुर्विधे तादृग्गुणवन्तं प्रशंसति । सुराणां पर्षदि चमत्कारचञ्चलकुण्डलः ॥ २५ ॥ दर्शं दर्शं जिनांश्चायमुत्सृष्टासनपादुकः । पञ्चाङ्गस्पृष्टभूपीठः, स्तौति

शक्रलोकपालाः

२०

२५

॥३३९॥

२८

शक्रस्तवादिभिः ॥ २६ ॥ छाद्मस्थ्ये वर्द्धमानं यः, प्रौढभक्तिर्व्यजिज्ञपत् । द्वादशाब्दीं तव स्वामिन् !, वैयावृत्त्यं
करोम्यहम् ॥ २७ ॥ प्रत्युक्तश्च भगवता, नेदमिन्द्र! भवेत् क्वचित् । यदर्हन्निन्द्रसाहाय्यात्, कोऽपि कैवल्यमा-
प्नुयात् ॥ २८ ॥ यो दशार्णेशबोधाय, ऋद्धिं विकृत्य तादृशीम् । नत्वाऽर्हन्तं नृपमपि, क्षमयामास संयतम् ॥
॥ २९ ॥ ब्राह्मणीभूय यः कल्किनृपं हत्वा तदङ्गजम् । दत्तं राज्येऽभिषिच्यार्हच्छासनं भासयिष्यति ॥ ३० ॥
जिनोपसर्गे यः सङ्गमकामरकृते स्वयम् । निषिद्ध्य नाटकाद्युग्रं, षण्मासान् शोकमन्वभूत् ॥ ३१ ॥ भ्रष्टप्रतिज्ञं
तं निर्वासयामास त्रिविष्टपात् । क्षणं मुमोच योऽर्हन्तं, न चित्तात्परमार्हतः ॥ ३२ ॥ यः पालकविमानाधि-
रूढो राजगृहे पुरे । श्रीवीरं समवसृतं, वन्दित्वेति व्यजिज्ञपत् ॥ ३३ ॥ अवग्रहाः कति विभो !, भगवानाह
पञ्च ते । स्वामिना स्वीक्रियते यस्सोऽवग्रह इति स्मृतः ॥ ३४ ॥ देवेन्द्रावग्रहस्तत्र, प्रथमः स्यात्स चेन्द्रयोः ।
सौधर्मेशानयोर्लोकदक्षिणार्द्धोत्तरार्द्धयोः ॥ ३५ ॥ द्वितीयश्चक्रिणः क्षेत्रेऽखिलेऽपि भरतादिके । तृतीयो
मण्डलेशस्य, स च तन्मण्डलावधिः ॥ ३६ ॥ तुरीयस्तु गृहपतेः, स च तद्गृहलक्षणः । पञ्चमः साधर्मिकस्य,
पञ्चक्रोशावधिः स च ॥ ३७ ॥ तथोक्तं भगवतीवृत्तौ १६ शतक २ उद्देशके—“साहम्मिउग्गहे”त्ति समानेन
धर्मेण चरन्तीति साधर्मिकाः—साध्वपेक्षया साधवः एतेषामवग्रहः—तदाभाव्यं पञ्चक्रोशपरिमाणं क्षेत्रं, ऋतु-
बद्धे मासमेकं, वर्षासु चतुरो मासान् यावदिति साधर्मिकावग्रहः । आस्पदस्वामिनामेषां, पञ्चनामप्यवग्रहम् ।
याचन्ते साधवस्तेषामपि पुण्यमनुज्ञया ॥ ३८ ॥ श्रुत्वेति मुदितस्वान्तः, शचीकान्तः प्रभुं नमन् । ऊचे येऽस्सि-

न्मम क्षेत्रे, विहरन्ति मुनीश्वराः ॥ ३९ ॥ तेषामवग्रहमहमनुजानामि भावतः । इत्युक्त्वाऽस्मिन् गते स्वर्गं, प्रभुं पप्रच्छ गौतमः ॥४०॥ सत्यवादी सत्यमाह, शक्रोऽयमथवाऽन्यथा । जिनेनापि तदा सत्यवादीत्येष प्रशंसितः ॥ ४१ ॥ एवं योऽनेकधा धर्ममाराध्येतः स्थितिक्षये । विदेहेषूत्पद्य चैकावतारो मुक्तिमाप्स्यति ॥ ४२ ॥ अस्मिंश्च्युते च स्थानेऽस्य, पुनरुत्पत्स्यतेऽपरः । एवमन्येऽपि शक्राद्या, यथास्थानं सुरासुराः ॥ ४३ ॥

अवग्रहार्पणं ईशानेन्द्रः तामलिः

ईशानदेवलोकस्य, प्रतरेऽथ त्रयोदशे । मेरोरुत्तरतः पञ्च, स्युर्विमानावतंसकाः ॥ ४४ ॥ अङ्कावतंसकं प्राच्यां, विमानमस्ति शस्तभम् । दक्षिणस्यां स्फटिकावतंसकाख्यं निरूपितम् ॥ ४५ ॥ अपरस्यां तथा रत्नावतंसकमिति स्मृतम् । उत्तरस्यां जातरूपावतंसकाभिधं भवेत् ॥ ४६ ॥ मध्ये चैषामथेशानावतंसकाभिधं महत् । विमानं मानतः सौधर्मावतंसकसन्निभम् ॥ ४७ ॥ तत्रोपपातशय्यायामुपपातसभास्पृशि । ईशानेन्द्रतया प्रौढपुण्य उत्पद्यतेऽसुमान् ॥ ४८ ॥ साम्प्रतीनस्त्वसौ जम्बूद्वीपे क्षेत्रे च भारते । ताम्रलिप्त्यां पुरि मौर्यपुत्रोऽभूत्तामलिर्धनी ॥ ४९ ॥ स चैकदा रात्रिशेषे, जाग्रच्चित्ते व्यचिन्तयत् । नन्वियं यन्मया लब्धा, समृद्धिः सर्वतोमुखी ॥ ५० ॥ तत्प्राच्यप्राज्यपुण्यानां, फलमत्र न संशयः । प्रागेव संचितं भुञ्जे, हन्त नूत्नमनर्जयन् ॥ ५१ ॥ क्षीणेऽस्मिन् किं करिष्ये तद्भवान्तरसुखावहम् । किंचित्पुण्यमर्जयामि, गार्हस्थ्ये तु भवेन्न तत् ॥ ५२ ॥ विचिन्त्येति विचारज्ञः, प्रातः प्रीत्या कुटुम्बकम् । आकार्य ज्ञातिमित्रादीनुपचर्याशनादिभिः ॥ ५३ ॥ कुटुम्बभारमारोप्य, ज्येष्ठपुत्रे विरक्तहृत् । तानापृच्छ्य दारुमयं, गृहीत्वैकं पतद्ग्रहम् ॥ ५४ ॥

२०

२५



२८

प्राणामया प्रवव्राज, प्रव्रज्ययाऽथ तत्र सः । यत्र यं प्राणिनं पश्येदाकाकमासुरेश्वरम् ॥ ५५ ॥ तत्र तं प्रणमन्
षष्ठतपा आतापनामपि । कुर्वाणो भान्वभिमुखः, षष्ठस्य पारणादिने ॥ ५६ ॥ आतापनाभुवः प्रत्युत्तीर्य पुर्यां
कुलान्यटन् । उच्चनीचमध्यमानि, भिक्षार्थमपराह्णके ॥ ५७ ॥ नादत्ते सूपशाकादि, किंतु केवलमोदनैः । पूर्णं
पतद्ग्रहे भिक्षाचर्यायाः स निवर्त्तते ॥ ५८ ॥ एकविंशतिकृत्वस्तं, प्रक्षाल्यौदनमम्बुभिः । तादृग्नीरसमाहार्यं,
षष्ठं करोत्यनन्तरम् ॥ ५९ ॥ एवं वर्षसहस्राणि, षष्टिं तपोऽतिदुष्करम् । कुर्वन् कृशीयान्निर्मांसो, व्यक्तस्ना-
युशिरोऽभवत् ॥ ६० ॥ ततश्चिन्तयति सैष, यावदस्ति तनौ मम । शक्तिस्तावदनशनं, कृत्वा स्वार्थं समर्थये ॥
॥ ६१ ॥ ध्यायन्नेवं ताम्रलिप्त्यां, गार्हस्थ्यव्रतसंगतान् । आपृच्छ्य लोकानेकान्ते, त्यक्त्वा पतद्ग्रहादिकम् ॥ ६२ ॥
ऐशान्यां मण्डलं पुर्या, आलिख्यानशनं दधौ । पादपोपगमं मृत्युमनाकांक्षंश्च तिष्ठति ॥ ६३ ॥ तदा च बलिच-
ञ्चाऽऽसीद्राजधानीन्द्रवर्जिता । तत्रत्याश्चासुरा देवदेव्यो निरीक्ष्य तामलिम् ॥ ६४ ॥ इन्द्रार्थिनः समुदितास्त-
त्रैत्येति व्यजिज्ञपन् । क्लिश्यामहे वयं स्वामिन्निर्नाथा विधवा इव ॥ ६५ ॥ इन्द्राधीना स्थितिः सर्वा, सीदत्य-
स्माकमित्यतः । कृत्वा निदानमधिपा, यूयमेव भवन्तु नः ॥ ६६ ॥ इत्यादि निगदन्तस्ते, स्थित्वा तामलिसं-
मुखम् । नानानाट्यादिदिव्यर्द्धिं, दर्शयन्ति मुहुर्मुहुः ॥ ६७ ॥ देवाङ्गना अपि प्राणप्रियप्रेमदृशैकशः । त्यक्त्वा
कठिनतां कान्त !, निभालय निभालय ॥ ६८ ॥ मनाग् मनोऽस्मासु कुर्यास्तपस्विन्नधुना यदि । भवेम तव
किंकर्यस्तपःक्रीत्यो भवावधि ॥ ६९ ॥ तामलिस्तु तद्वचोभिर्मरुद्भिरिव भूधरः । निश्चलस्तस्थिवांस्तूष्णीं, ततस्ते-

ऽगुर्यथास्पदम् ॥ ७० ॥ ईशानेऽपि तदा देवाश्च्युतनाथास्तदर्थिनः । इन्द्रोपपातशय्यायामसकृद्ददते दृशम् ॥ ॥ ७१ ॥ षष्टिं वर्षसहस्राणि, कृत्वा बालतपोऽद्भुतम् । मासयुग्ममनशनं, धृत्वा मृत्वा समाधिना ॥ ७२ ॥ तत्रोपपातशय्यायां, तस्मिन् काले स तामलिः । ईशानेन्द्रतयोत्पन्नो, यावत्पर्याप्तिभागभूत् ॥ ७३ ॥ बलिचञ्चासुरास्तावद्, ज्ञात्वैतत्कुपिता भृशम् । तामलेर्यत्र मृतकं, तत्रागत्यातिरोषतः ॥७४॥ शुम्बेन बद्ध्वा वामांह्रिं, निष्ठीवन्तो मुखेऽसकृत् । ताम्रलिप्त्यां भ्रमयन्तो, मृतकं तत्त्रिकादिषु ॥७५॥ एवमुद्घोषयामासुस्तामलिस्तापसाधमः । धूर्तो मूर्तो दम्भ इव, पश्यतैवं विडम्ब्यते ॥ ७६ ॥ ईशानेन्द्रतयोत्पन्नोऽप्यसौ नः किं करिष्यति ? । पुरतोऽस्माकमीशानः, किमसौ तापसब्रुवः ? ॥ ७७ ॥ असुरैः क्रियमाणां स्वस्वामिदेहकदर्थनाम् । दृष्ट्वेशानसुरा रुष्टाः, स्वामिने तदजिज्ञपन् ॥ ७८ ॥ ईशानेन्द्रोऽप्युपपातशय्यावस्थित एव ताम् । बलिचञ्चाराजधानीं, दृशाऽपश्यत्सरोषया ॥ ७९ ॥ तस्य दिव्यप्रभावेण, बलिचञ्चाभितोऽभवत् । कीर्णाङ्गारेव तप्तायःशिलामयीव दुस्सहा ॥ ॥ ८० ॥ असुरास्तेऽथ दवथुव्यथार्त्ताः स्थातुमक्षमाः । मीना इव स्थले दीनाः, कृच्छ्रात्कण्ठगतासवः ॥ ८१ ॥ इतस्ततः प्रधावन्तः, कान्दिशीकाः सुरेश्वरम् । संभूय क्षमयामासुरष्टाङ्गस्पृष्टभूतलाः ॥ ८२ ॥ स्वामिन्नज्ञानतोऽस्माभिरपराद्धोऽसि दुर्दशैः । नैवं पुनः करिष्यामः, क्षमस्व स्वस्तवानुगाः ॥ ८३ ॥ पुनः पुनर्विलपतो, दृष्ट्वेतान् करुणस्वरम् । तां शक्तिं संजहारेन्द्रो, दयार्द्रस्तेऽप्ययुः सुखम् ॥ ८४ ॥ एवं तामलिना बालतपसेन्द्रत्वमर्जितम् । सम्यक्त्वैकावतारत्वे, प्राप्य तीर्णो भवार्णवः ॥ ८५ ॥ जैनक्रियापेक्षयेदं, यद्यप्यल्पतरं फलम् ।

ईशानकृतः असुरोपद्रवः

२०

२५



२८

सम्यग्दृष्टिर्हि तपसा, लभेत मुक्तिमीदृशा ॥ ८६ ॥ तथाहुः—"सट्ठिं वाससहस्सा तिसत्तखुत्तो दएण धोएण ।
अणुचिन्नं तामलिणा अण्णाणतवत्ति अप्पफलो ॥ ८७ ॥" जनप्रवादोऽपि—"तामलितणइ तवेण, जिणमइ
सिज्झइ सत्त जण । अन्नाणह दोसेण, तामलि ईसाणइं गयो ॥ ८८ ॥" तथाप्यस्य निष्फलत्वं, वक्तुं शक्यं न
सर्वथा । सज्ज्ञानाज्ञानतपसोः, फले कुतोऽन्यथाऽन्तरम् ? ॥ ८९ ॥ उक्तं—"जं अन्नाणी कम्मं खवेइ बहुयाहिं
वासकोडीहिं । तं नाणी तिहि गुत्तो खवेइ ऊसासमित्तेणं ॥ ९० ॥" सति मिथ्यादृशामेवं, सर्वथा निष्फलां
क्रियाम् । असत्फलां वा मन्वानास्तन्वते बालचेष्टितम् ॥ ९१ ॥ ततश्चेशाननाथोऽयं, प्राग्वज्जिनार्चनादिकम् ।
कृत्वा सुधर्मासदसि, सिंहासनमशिश्रियत् ॥ ९२ ॥ त्रायस्त्रिंशास्त्वस्य चम्पावास्तव्याः सुहृदः प्रियाः । त्रय-
स्त्रिंशन्मिथो यावज्जीवमुग्रार्हतक्रियाः ॥ ९३ ॥ आराध्यानेकवर्षाणि, धर्ममन्ते प्रपद्य च । द्वौ मासौ प्रायमी-
शाने, त्रायस्त्रिंशकतां दधुः ॥ ९४ ॥ सहस्राणि भवन्त्यस्याशीतिः सामानिकाः सुराः । दिशां चतुष्के प्रत्येकं,
तावन्त आत्मरक्षकाः ॥ ९५ ॥ दश देवसहस्राणि, स्युरभ्यन्तरपर्षदि । शतानि नव देवीनामिहोक्तानि जिने-
श्वरैः ॥ ९६ ॥ मध्यमायां सहस्राणि, स्युर्द्वादश सुधाभुजाम् । उदितानि शतान्यष्टौ, देवीनामिह पर्षदि॥९७॥
चतुर्दश सहस्राणि, सुराणां बाह्यसंसदि । शतानि सप्त देवीनामथायुरुच्यते क्रमात् ॥ ९८ ॥ सप्तपल्योपमा-
न्यायुरन्तःपर्षदि नाकिनाम् । पल्योपमानि पञ्चाशद्देवीनां कथिता स्थितिः ॥ ९९ ॥ मध्यायां देवदेवीनां, षट्
चत्वारि क्रमात् स्थितिः । पञ्च त्रीणि च बाह्यायां, पल्योपमान्यनुक्रमात् ॥ १०० ॥ कृष्णा च कृष्णराजी च,

रामा च रामरक्षिता । वसुश्च वसुगुप्ता च, वसुमित्रा वसुन्धरा ॥ १ ॥ सांप्रतीनानामासां प्राग्भवस्त्वेवं—
पूर्वं कासीनिवासिन्यौ, द्वे द्वे राजगृहालये । द्वे श्रावस्तिनिवासिन्यौ, द्वे कौशाम्ब्यां कृतस्थिती ॥ २ ॥
रामाख्यपितृका वृद्धकन्या धर्माख्यमातृकाः । श्रीपार्श्वपुष्पचूलान्तेवासिन्योऽष्टापि सुव्रताः ॥ ३ ॥ अन्ते
च पक्षं संलिख्य, कृष्णावतंसकादिषु । समुत्पन्ना विमानेषु, नवपल्योपमायुषः ॥ ४ ॥ त्रिभिर्विशेषकं ॥
षट्पञ्चाशत इत्येवमिन्द्राणां सर्वसंख्यया । इन्द्राण्यो द्वे शते सप्तत्यधिके सन्ति ताः समाः ॥ ५ ॥
पुष्पचूलार्यिकाशिष्याः, श्रीपार्श्वार्पितसंयमाः । कृतार्द्धमासानशना, दिव्यां श्रियमशिश्रियन् ॥ ६ ॥ इत्यर्थतो
ज्ञात० द्वितीयश्रुत० । अष्टाप्यग्रमहिष्योऽस्य, सौधर्मेन्द्राङ्गना इव । वसुनेत्रसहस्राढ्यं, लक्षं स्युः सपरिच्छदाः ॥
॥ ७ ॥ सौधर्मेन्द्रवदेषोऽपि, स्थानं चक्राकृति स्फुरत् । विकुर्व्य भोगानेताभिः, सह भुङ्क्ते यथासुखम् ॥ ८ ॥
सैन्यानि पूर्ववत्सप्त, सप्तास्य सैन्यनायकाः । महावायुः १ पुष्पदन्तो २, महामाठर ३ एव च ॥ ९ ॥ महादाम-
र्द्धिनामा ४ च, तथा लघुपराक्रमः ५ । महाश्वेतो ६ नारदश्च ७, नामतस्ते यथाक्रमम् ॥ १० ॥ तुर्यस्येन्द्रस्य
षष्ठस्याष्टमस्य दशमस्य च । द्वादशस्यापि सेनान्यः, स्युरेतैरेव नामभिः ॥ ११ ॥ पादात्याधिपतिर्योऽस्य, नाम्ना
लघुपराक्रमः । स पूर्वोक्तहरिनैगमैषिजैत्रपराक्रमः ॥ १२ ॥ अनेन नन्दिघोषाया, घण्टायास्ताडने कृते । युग-
पन्मुखरायन्ते, घण्टाः सर्वविमानगाः ॥ १३ ॥ अस्य यानविमानं च, प्रज्ञप्तं पुष्पकाभिधम् । पुष्पकाख्यः सुर-
श्चास्य, नियुक्तस्तद्विकुर्वणे ॥ १४ ॥ तथोक्तं स्थानाङ्गेऽष्टमे स्थानके—"एतेसु णं अट्ठसु कप्पेसु अट्ठ इंदा प०,

मिथ्यादृग्धर्मफलं ईशानदेव्यः

२०

२५



२८

परियाणिया विमाणा प०, तं०–पालए १ पुप्फए २
तं० सक्के जाव सहस्सारे, एतेसि णं अट्ठण्हमिंदाणं अट्ठ परियाणिया विमाणा प०, तं०–पालए १ पुप्फए २ दाक्षिणात्येन निर्याणमार्गे-
सोमणसे ३ सिरिवच्छे ४ णंदियावत्ते ५ कामकमे ६ पीतीमणे ७ विमले ८" इति । दाक्षिणात्येन निर्याणमार्गे-
णावतरत्यधः । अयं नन्दीश्वरद्वीपैशान्यां रतिकराचले ॥ १५ ॥ प्रागुक्तवज्राभ्यधिकशक्तिवैभवशोभनम् ।
शूलमस्य करे साक्षाच्छूलं प्रतीपचेतसाम् ॥ १६ ॥ ऐरावणाधिकस्फातिर्वृषोऽस्य वाहनं सुरः । स च प्रभौ जिग-
मिषौ, वृषीभूयोपतिष्ठते ॥ १७ ॥ तमस्कायाभिधा देवाः, सन्त्यस्य वशवर्त्तिनः । द्विविधं हि तमः स्वाभा-
विकं दिव्यानुभावजम् ॥ १८ ॥ तत्रेशानस्वर्गपतिश्चिकीर्षुस्तमसां भरम् । पार्षदादिक्रमात्प्राग्वद्, ज्ञापयत्याभि-
योगिकान् ॥ १९ ॥ तमस्कायिकदेवांस्तेऽप्यादिशन्त्याभियोगिकाः । तमस्कायं ततश्चाविष्कुर्वन्त्येतेऽधिपा-
ज्ञया ॥ २० ॥ चतुर्विधाः परेऽप्येवं, विकुर्वन्ति सुरास्तमः । क्रीडारतिद्विषन्मोहगोप्यगुप्त्यादिहेतुभिः ॥ २१ ॥
विकुर्वणाशक्तिरपि, स्यादस्य वज्रपाणिवत् । सर्वत्र सातिरेकत्वं, किंतु भाव्यं विवेकिभिः ॥ २२ ॥ चत्वारोऽस्य
लोकपालास्तत्रेशानावतंसकात् । असंख्येयसहस्राणां, योजनानामतिक्रमे ॥ २३ ॥ प्राच्यां विमानं सुमनोऽभि-
धानं सोमदिक्पतेः । विमानं सर्वतोभद्रं, याम्यां यमहरित्पतेः ॥ २४ ॥ अपरस्यां च वरुणविमानं वल्गुनाम-
कम् । विमानं वैश्रमणस्योत्तरस्यां स्यात्सुवल्गुकम् ॥ २५ ॥ सौधर्मेशानवच्चैवं, स्वर्गेषु निखिलेष्वपि । स्वेन्द्रा-
वतंसकाल्लोकपालावासाश्चतुर्दिशम् ॥ २६ ॥ उक्तंच—"कप्पस्स अंतपयरे नियकप्पवडिंसया विमाणाओ ।
इंदनिवासा तेसिं चउद्दिसिं लोगपालाणं ॥ २७ ॥" अग्रेतनानामप्योजयुजामेवं बिडौजसाम् । तृतीयतुर्य-

योर्वाच्यो, व्यत्ययो लोकपालयोः ॥ २८ ॥ यथा तृतीयेन्द्रस्यैते, क्रमात्सौधर्मराजवत् । चतुर्थेन्द्रस्य चेशाने, सुरेन्द्रस्येव ते क्रमात् ॥ २९ विमानानां चतुर्णामप्येषामधो विवर्त्तिनि । तिर्यग्लोके राजधान्यश्चतस्रः प्राग्वदाहिताः ॥ ३० ॥ सौधर्मेशानेन्द्रलोकपालानां यास्तु वर्णिताः । नगर्यः कुण्डलद्वीपे, द्वात्रिंशत्तास्त्वितः पराः ॥ ३१ ॥ स्थितिश्च सोमयमयोः, पल्योपमद्वयं भवेत् । पल्योपमस्य चैकेन, तृतीयांशेन वर्जितम् ॥ ३२ ॥ पूर्णं वैश्रमणस्याथ, स्थितिः पल्योपमद्वयम् । तृतीयांशाधिकं पल्यद्वयं च वरुणस्य सा ॥ ३३ ॥ पृथ्वी राजी च रयणी, विद्युचेत्यभिधानतः । चतुर्णामप्यमीषां स्युश्चतस्रः प्राणवल्लभाः ॥ ३४ ॥ एषामपत्यस्थानीयदेववक्तव्यतादिकम् । सर्वमप्यनुसंधेयं, सुधिया पूर्ववर्णितम् ॥ ३५ ॥ किंत्वमीषामौत्तराहा, वश्याः स्युरसुरादयः । उदीच्यामेव निखिलोऽधिकारः पूर्ववर्णितः ॥ ३६ ॥ तथाहुः—"चउसु विमाणेसु चत्तारि उद्देसा अपरिसेसा, नवरं ठितीए णाणत्तं—आदिदुगि तिभागूणा पलिया धणयस्स होंति दो चेव । दो सतिभागा वरुणे पलियमहावचदेवाणं ॥ ३७ ॥ भग०" तथा—स्थितेरल्पत्वेऽप्यमीषामाज्ञैश्वर्यं भवेन्महत् । लोकेऽल्पविभवत्वेऽपि, नृपाधिकारिणामिव ॥ ३८ ॥ उक्ता दशाधिपतयः, सौधर्मेशानयोर्यतः । सूत्रे तत्र सुरेन्द्रौ द्वौ, लोकपालास्तथाऽष्ट च ॥ ३९ ॥ तथाहुः—"सोहम्मीसाणेसु णं भंते ! कप्पेसु कइ देवा आहेवचं जाव विहरंति ?, गो० ! दस देवा जाव विहरंति" इत्यादि भगवतीसूत्रे । एवमीशानदेवेन्द्रः, सामानिकादिभिर्वृतः । विमानावासलक्षाणामिहाष्टाविंशतेः प्रभुः ॥ ४० ॥ उत्तरार्द्धलोकनेता, कान्त्या विद्योतयन् दिशः । असं-

ईशानेन्द्रतल्लोकपालाः

२०

२५



२८

ख्यदेवीदेवानामीशानस्वर्गवासिनाम् ॥ ४१ ॥ आधिपत्यमनुभवत्युदात्तपुण्यवैभवः । प्रतापनिस्तुलः शूलपा-
णिर्वृषभवाहनः ॥ ४२ ॥ त्रिभिर्विशेषकं । अहो माहात्म्यमस्योच्चैर्यत्सौधर्मेश्वरोऽपि हि । आदृतः पार्श्वमभ्येतुं,
क्षमते न त्वनादृतः ॥ ४३ ॥ एवमालापसंलापौ, कर्त्तुं संमुखमीक्षितुम् । अनेन सह सौधर्माधीशोऽनीशो ह्यना-
दृतः ॥ ४४ ॥ ईशानेन्द्रस्तु सौधर्माधिपतेरन्तिकं सुखम् । यातीक्षते जल्पति च, नास्यानुज्ञामपेक्षते ॥ ४५ ॥
एवमुत्पन्नेषु नानाकार्येषु च परस्परम् । संभूय गोष्ठीमप्येतौ, कुर्वते प्रश्रयाश्रयौ ॥ ४६ ॥ गच्छेत्कदाचिदी-
शाननाथोऽपि प्रथमान्तिकम् । सौधर्मेन्द्रोऽप्यनुज्ञाप्य, यायादेतस्य सन्निधौ ॥ ४७ ॥ भो दक्षिणार्द्धलोकेन्द्र !,
सौधर्मेन्द्र ! हितावहम् । कार्यमेतदिति गिरा, वदेदीशाननायकः ॥ ४८ ॥ उत्तरार्द्धलोकनेतर्भो ईशानसुरेश्वर ! ।
सत्यमित्यादिकृत्यौघानुभौ विमृशतो मिथः ॥ ४९ ॥ तथाहुः—'पभू णं भंते ! सक्के देविंदे देवराया ईसाणस्स
देविंदस्स देवरण्णो अंतिअं पाउब्भवित्तए ?, हंता पभू !' इत्यादि भगवतीसूत्रे ३, १ । साधारणविमानादि-
हेतोर्जात्वेनयोर्द्वयोः । उत्पद्यते विवादोऽपि, मिथो निर्जरराजयोः ॥ ५० ॥ आध्मातताम्रवत्क्रोधात्ताम्रानन-
विलोचनौ । कल्पान्तवह्नितपनाविवाशक्यनिरीक्षणौ ॥ ५१ ॥ चण्डरूपौ तदा चैतौ, कोऽन्यो वक्तुमपीश्वरः ? ।
योऽत्र युक्तमयुक्तं वा, निर्णीय शमयेत्कलिम् ॥ ५२ ॥ ततः क्षणान्तरादीषच्छान्तौ विचिन्त्य चेतसा ।
सनत्कुमारं देवेन्द्रं, स्मरतस्तावुभावपि ॥ ५३ ॥ सोऽपि ताभ्यां स्मर्यमाणो, विज्ञायावधिना द्रुतम् । तत्रागत्य
न्याय्यकार्यमाज्ञाप्य शमयेत्कलिम् ॥ ५४ ॥ ततः सनत्कुमारेन्द्रबोधितौ त्यक्तविग्रहौ । तदाज्ञां बिभ्रतो

मौलौ, तौ मिथः प्रीतमानसौ ॥ ५५ ॥ तथाहुः—'अत्थि णं भंते ! सक्कीसाणाणं देविंदाणं देवराईणं विवादा समुप्पज्जंति, ? हंता अत्थीत्यादि' भगवतीसूत्रे ३, १ । कदाचिच्च तथा क्रुद्धौ, युद्धसज्जौ परस्परम् । सामानिकाद्यो देवा, उभयोरपि संमताः ॥ ५६ ॥ अर्हद्दंष्ट्राक्षालनाम्बुसेकात्तौ गतमत्सरौ । निर्माय निर्मायतया, बोधयन्ति नयस्थितिम् ॥ ५७ ॥ पश्यतातितमां रागद्वेषयोर्दुर्विलङ्घताम् । यदेताभ्यां विडम्ब्येते, तादृशावप्यधीश्वरौ ॥ ५८ ॥ एवमीशानदेवेन्द्रोऽनुभवन्नपि वैभवम् । अर्हन्तमर्हद्धर्मं च, चित्तान्न त्यजति क्षणम् ॥५९॥ उत्तरार्द्धजिनेन्द्राणां, कल्याणकेषु पञ्चसु । करोत्यग्रेसरीभूय, सहोत्साहं महोत्सवान् ॥ ६० ॥ जिनेन्द्रपादान् भजते, भरतैरवतादिषु । नन्दीश्वरे च प्रत्यब्दं, करोत्यष्टाहिकोत्सवान् ॥ ६१ ॥ असकृच्चार्हतां भावपूजामपि करोति सः । अष्टोत्तरं नटनटीशतं विकृत्य नर्त्तयन् ॥ ६२ ॥ देवपर्षत्समक्षं च, चमत्कारातिरेकतः । प्रशंसति नरस्यापि, धर्मदार्ढ्यादिकं गुणम् ॥ ६३ ॥ आराध्यानेकधा धर्मं, सम्यक्त्वाद्येवमुत्तमम् । समाप्यायुः सातिरेकं सागरोपमयोर्द्वयम् ॥६४॥ इतश्च्युत्वैशानराजो, महाविदेहभूमिषु । उत्पद्य प्राप्तचारित्रो, भावी मुक्तिवधूधवः ॥ ६५ ॥ इत्थं मया पृथुसुखौ प्रथमद्वितीयौ, स्वर्गावनर्गलशुभाचरणाधिगम्यौ । साधीश्वरौ श्रुतवतां वचनानुसाराद्यावर्णितौ विभवशालिसुरालिपूर्णौ । ( इन्द्रवज्रा ) ॥ ६६ ॥ विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेंद्रांतिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, षड्विंशो मधुरः समाप्तिमगमत्सर्गो निसर्गोज्ज्वलः ॥९६७॥ ॥ इति श्रीलोकप्रकाशे षड्विंशः सर्गः समाप्तः ॥ ग्रं. १०८४ ॥

सौधर्मेशानविवादे सनत्कुमारप्रभुता

२०

२५



२८

## ॥ अथ सप्तविंशतितमः सर्गः प्रारभ्यते ॥

सौधर्मेशाननामानावुक्तौ स्वर्गौ सभर्तृकौ । स्वरूपमुच्यते किंचित्तृतीयतुर्ययोरथ ॥ १ ॥ सौधर्मेशानना- काश्यां, दूरमूर्ध्वं व्यवस्थितौ । योजनानामसंख्येयकोटाकोटिव्यतिक्रमे ॥ २ ॥ सनत्कुमारमाहेन्द्रौ, स्वर्गौ निसर्गसुन्दरौ । सौधर्मेशानवदिमावप्येकवलयस्थितौ ॥ ३ ॥ संस्थानमर्द्धचन्द्राभं, प्रत्येकमनयोर्भवेत् । उभौ पुनः समुदितौ, पूर्णचन्द्राकृती मतौ ॥४॥ तत्रापि सौधर्मस्योर्ध्वं, समपक्षं समानदिक् । सनत्कुमार ईशान— स्योर्ध्वं माहेन्द्र एव च ॥ ५ ॥ प्रतरा द्वादश प्राग्वद्, द्वयोः संगतयोरिह । प्रतिप्रतरमेकैकं, भवेद्विमानमिन्द्र- कम् ॥ ६ ॥ वैडूर्यं १ रुचकं २ चैव, रुचिकं ३ च ततः परम् । अङ्कं ४ च स्फटिकं ५ चैव, तपनीयाख्य ६ मेव च ॥ ७ ॥ मेघ ७ मर्घ्यं च ८ हारिद्रं ९, नलिनं १० लोहिताक्षकम् ११ । वज्रं १२ चेति प्रतरेषु, द्वादशस्विन्द्रकाः क्रमात् ॥ ८ ॥ चतस्रः पङ्क्तयो दिक्षु, प्रतिप्रतरमिन्द्रकात् । अन्तरेषु विना प्राचीं, प्राग्वत्पुष्पावकीर्णकाः ॥ ९ ॥ एकोनपञ्चाशदष्टसप्तषट्पञ्चकाधिका । चतुस्त्रिद्व्येकाधिका च, चत्वारिंशत्ततः परं ॥ १० ॥ चत्वारिंशद- थैकोनचत्वारिंशद्विमानकाः । अष्टात्रिंशत्प्रतिपङ्क्ति, प्रतरेषु क्रमादिह ॥ ११ ॥ प्रथमप्रतरे सप्तदश त्र्यस्रा विमानकाः । प्रतिपङ्क्ति चतुष्कोणा, वृत्ताः षोडश षोडश ॥१२॥ सर्वे पङ्क्तिविमानाश्च, षण्णवत्यधिकं शतम् ।

५

१०

१२

द्वितीयप्रतरे त्रैधा, अपि षोडश षोडश ॥ १३ ॥ सर्वे च ते संकलिता, द्विनवत्यधिकं शतम् । तार्त्तीयीके प्रति-
पङ्क्ति, वृत्ताः पञ्चदशोदिताः ॥१४॥ षोडश त्रिचतुष्कोणाः, सर्वेऽष्टाशीतियुक् शतम् । तुर्ये त्र्यस्रा षोडशान्ये,
द्वैधाः पञ्चदशाखिलाः ॥१५॥ शतं चतुरशीत्याढ्यं,पञ्चमे प्रतरे पुनः । त्रैधा अपि पञ्चदश, सर्वेऽशीत्यधिकं शतम्
॥ १६ ॥ पञ्चदश पञ्चदश, षष्ठे त्रिचतुरस्रकाः । वृत्ताश्चतुर्दशैवं च, षट्सप्ततियुतं शतम् ॥ १७ ॥ सप्तमे प्रतरे
त्र्यस्राः, प्रोक्ताः पञ्चदशोत्तमैः । वृत्ताश्च चतुरस्राश्च, चतुर्दश चतुर्दश ॥१८॥ द्विसप्तत्या समधिकं, शतं सर्वेऽष्टमे
पुनः । चतुर्दशैव त्रेधापि, सर्वेऽष्टषष्ट्युक् शतम् ॥ १९ ॥ नवमे त्रिचतुष्कोणांश्चतुर्दश चतुर्दश । वृत्तास्त्रयो-
दशैवं च, चतुःषष्टियुतं शतम् ॥ २० ॥ त्र्यस्राश्चतुर्दशान्ये च, द्वैधा अपि त्रयोदश । षष्ट्याधिकं शतं सर्वे,
दशमे प्रतरे पुनः ॥ २१ ॥ एकादशे त्रिधाप्येते, त्रयोदश त्रयोदश । सर्वे पुनः संकलिताः, षट्पञ्चाशद्युतं
शतम् ॥ २२ ॥ द्वादशे त्रिचतुष्कोणास्त्रयोदश त्रयोदश । वृत्ताश्च द्वादशैवं च, द्विपञ्चाशं शतं समे ॥ २३ ॥
एवं च पङ्क्तिवृत्तानां, साशीतिरिह षट्शती । पङ्क्तित्र्यस्राणां च सप्त, शतानि द्वादशोपरि ॥ २४ ॥ स्यात्पङ्क्ति-
चतुरस्राणां, सषण्णवतिषट्शती । द्वादशानामिन्द्रकाणां, क्षेपेऽत्र सर्वसंख्यया ॥ २५ ॥ पाङ्क्त्यानि विमानानि,
स्युः शतान्येकविंशतिः । भवन्त्यन्यानि पुष्पावकीर्णानि तानि संख्यया ॥ २६ ॥ सहस्राः सप्तनवतिर्लक्षाण्ये-
कोनविंशतिः । शतानि नव सर्वाग्राद्विमानलक्षविंशतिः ॥ २७ ॥ तत्र द्वादश लक्षाणि, सनत्कुमारचक्रिणः ।
लक्षाण्यष्ट विमानानां, माहेन्द्राधीश्वरस्य च ॥ २८ ॥ सनत्कुमारमाहेन्द्रसुरेन्द्रयोः पृथक् पृथक् । सौधर्मे-

तृतीयतुर्ययोस्त्र्यस्रादिविमानसंख्या

१५

२०

॥३४५॥
२५
२६

शानवद्वृत्तादिषु स्वामित्वमुह्यताम् ॥२९॥ संख्या सनत्कुमारे च, वृत्तानां पङ्क्तिवर्त्तिनाम् । द्वाविंशत्यधिका पञ्चशती प्राच्यैर्निरूपिता ॥३०॥ त्रिकोणानां सर्वसंख्या, षट्पञ्चाशं शतत्रयम् । चतुष्कोणानां तथाष्टचत्वारिंशं शतत्रयम् ॥३१॥ षड्विंशा द्वादशशती, पाङ्क्तेयानां भवेदिह । लक्षाण्येकादशैवाष्टनवतिश्च सहस्रकाः ॥३२॥ सचतुःसप्ततिः सप्तशती पुष्पावकीर्णकाः । एवं द्वादश लक्षाणि, तृतीयस्य सुरेशितुः ॥३३॥ तुर्ये वृत्तविमानानां, सप्तत्याऽभ्यधिकं शतम् । षट्पञ्चाशत्समधिकं, त्रिकोणानां शतत्रयम् ॥ ३४ ॥ चतुष्कोणानां तथाष्टचत्वारिंशं शतत्रयम् । शतान्यष्ट चतुःसप्तत्याढ्यानि सर्वसंख्यया ॥ ३५ ॥ सप्त लक्षाण्यथ नवनवतिश्च सहस्रकाः । षड्विंशं च शतं पुष्पावकीर्णा इह निश्चिताः ॥ ३६ ॥ एषां योगेऽष्टलक्षाणि, माहेन्द्रस्य सुरेशितुः । विमानानीशितव्यानि, भाव्यानि भव्यधीधनैः ॥ ३७ ॥ अमी विमानाः सर्वेऽपि, घनवातप्रतिष्ठिताः । श्यामं विना चतुर्वर्णा, मणिरत्नविनिर्मिताः ॥३८॥ घनवातोऽतिनिचितो, निश्चलो वातसंचयः । जगत्स्वाभाव्यतस्तत्र, विमानाः शश्वदास्थिताः ॥ ३९ ॥ षड्विंशतिः शतान्येषु, पृथ्वीपिण्डो निरूपितः । शतानि षड् योजनानां, प्रासादाः स्युरिहोच्छ्रिताः ॥ ४० ॥ सौधर्मेशाननिष्ठानां, विमानानामपेक्षया । अत्युत्कृष्टवर्णगन्धरसस्पर्शा अमी मताः ॥ ४१ ॥ सौधर्मेशानवच्छेषं, स्वरूपं भाव्यतामिह । विष्कम्भायामपरिधिमानं तु प्राक् प्रदर्शितम् ॥ ४२ ॥ अथैतेषु विमानेषु, पूर्वपुण्यानुसारतः । उत्पद्यन्ते सुरास्तत्र, रीतिस्तु प्राक् प्रपञ्चिता ॥ ४३ ॥ पद्मकेसरवद्गौरास्तेऽथ सर्वाङ्गभूषणाः । वराहचिह्नमुकुटाः, सनत्कुमारनाकिनः ॥ ४४ ॥ सिंहचिह्नधारिचारुकिरीटरम्य-

मौलयः। देवा विशिष्टद्युतयो, माहेन्द्रस्वर्गवासिनः ॥ ४५ ॥ जघन्यतोऽपि पाथोधिद्वितयस्थितयः सुराः। सनत्कुमारेऽथोत्कर्षात्, सप्तसागरजीविनः ॥ ४६ ॥ माहेन्द्रे तु जघन्येन, साधिकाब्धिद्वयायुषः। उत्कर्षतः पुनः सातिरेकसप्तार्णवायुषः ॥ ४७ ॥ एकस्य सागरस्यांशाः, कल्प्यन्ते द्वादशोद्दशाः। स्वर्गयोरेतयोर्भागा, ज्ञेयाः स्थितिनिरूपणे ॥ ४८ ॥ प्रथमप्रतरे तत्रोत्कृष्टा जलनिधिद्वयम्। स्थितिः पञ्चलवोपेतं, द्वितीयप्रतरे पुनः ॥ ४९ ॥ दशभागाधिकं वार्द्धिद्वयं स्थितिर्गरीयसी। त्रिभिर्भागैः समधिकास्तृतीये सागरास्त्रयः ॥५०॥ चतुर्थे प्रतरे साष्टभागं वारांनिधित्रयम्। पञ्चमे सैकभागं च, वारांनिधिचतुष्टयम् ॥ ५१ ॥ षड्भागाभ्यधिकं षष्ठे, तदेव सप्तमे पुनः। न्यूनमेकेन भागेन, सागरोपमपञ्चकम् ॥५२॥ एतदेव चतुर्भागाभ्यधिकं प्रतरेऽष्टमे। नवमे नवभागाढ्यमेतत्पयोधिपञ्चकम् ॥५३॥ साधिका दशमे द्वाभ्यां, भागाभ्यां षट् पयोधयः। एकादशेऽप्येत एव, साधिकाः सप्तभिर्लवैः ॥ ५४ ॥ प्रतरे द्वादशे चात्र, देवानां परमा स्थितिः। अर्णवाः सप्त सर्वत्र; जघन्या त्वम्बुधिद्वयम् ॥ ५५ ॥ सनत्कुमारे निर्दिष्टा, येयं ज्येष्ठेतरा स्थितिः। माहेन्द्रेऽपि सैव किंतु, ज्ञेया सर्वत्र साधिका ॥ ५६ ॥ अत्रापि सातिरेकत्वं, सामान्योक्तमपि श्रुते। पल्योपमस्यासंख्येयभागेनेति विभाव्यताम् ॥ ५७ ॥ देहोच्चत्वं सुराणां स्यादिह स्थित्यनुसारतः। द्विसागरायुषस्तत्र, सप्तहस्तोच्चभूघनाः ॥ ५८ ॥ त्रिपाथोधिजीविनां तु, कराः षट् तनुतुङ्गता। एकादशविभक्तस्य, चत्वारोऽंशाः करस्य च ॥ ५९ ॥ त्रयो भागाः कराः षट् च, चतुर्जलधिजीविनाम्। द्वौ भागौ षट् करास्तुङ्गो, देहः पञ्चार्णवायुषाम् ॥ ६० ॥ एको भागः षट् कराश्च, षट्सा-

तृतीयतुर्ययोः देवानां स्थितिः देहोच्छ्वासादि

२०

२५

॥३४६॥

२८

गरोपमायुषाम् । सप्ताङ्घिस्थितयः पूर्णषट्करोत्तुङ्गविग्रहाः ॥ ६१ ॥ ते चोच्छ्वसन्ति मासेनार्णवद्वयायुषस्ततः । स्यात्पक्षवृद्धिरुच्छ्वासान्तरे सप्तार्णवावधि ॥ ६२ ॥ द्वाभ्यां त्रिभिश्चतुःपञ्चषट्सप्तभिः सहस्रकैः । स्थितेरपेक्षयाऽब्दानामाहारयन्ति पूर्ववत् ॥ ६३ ॥ यथोक्तसागरेभ्यश्च, हीनाधिकायुषां पुनः । आहारोच्छ्वासदेहादिमानं हीनाधिकं भवेत् ॥ ६४ ॥ कामभोगाभिलाषे तु, सौधर्मस्वर्गवासिनीः । पल्योपमाधिकदशपल्योपमान्तजीविनीः ॥ ६५ ॥ प्राच्यपुण्यानुसारेण, लब्धाधिकाधिकस्थितीः । स्मरन्ति चेतसा देवीः, स्वार्हाः कामानलैधसा ॥ ६६ ॥ ततस्ता अपि जानन्ति, सद्योऽङ्गस्फुरणादिभिः । स्वकामुकरिरंसां द्रागत्यन्तचतुराशयाः ॥६७॥ ततश्चाद्भुतशृङ्गारनेपथ्यसुषमाश्रिताः । उपायान्ति तदभ्यर्णं, भर्तुर्गृहमिवाङ्गनाः ॥ ६८ ॥ ततस्ता विनिवेश्यैते, क्रोडसिंहासनादिषु । भुजोपपीडमालिङ्ग्य, पीडयन्तः स्तनौ मुहुः ॥ ६९ ॥ चुम्बन्तोऽधरबिम्बादौ, स्पृशन्तो जघनादिषु । एवं संस्पर्शमात्रेण, तृप्यन्ति सुरतैरिव ॥ ७० ॥ देव्योऽपि ताः स्पर्शभोगैस्तथा दिव्यप्रभावतः । शरीरान्तःपरिणतैस्तृप्यन्ति शुक्रपुद्गलैः ॥ ७१ ॥ एवं पञ्चाक्षविषयास्वादाह्लादैर्निरन्तरम् । जानन्त्येते गतमपि, कालं नैकनिमेषवत् ॥ ७२ ॥ ज्ञानेनावधिना त्वेते, द्वितीयां शर्कराप्रभाम् । पश्यन्त्यधस्तलं यावत्पद्मलेश्याः स्वभावतः ॥ ७३ ॥ गर्भजौ नरतिर्यञ्चौ, संख्येयस्थितिशालिनौ । उत्पद्येते इहैतेऽपि, च्युत्वा यान्त्येतयोर्द्वयोः ॥ ७४ ॥ एकसामयिकी प्राग्वत्संख्योत्पत्तिविनाशयोः । एकसामयिकं ज्ञेयं, जघन्यं चान्तरं तयोः ॥ ७५ ॥ युक्ता मुहूर्त्तैर्विंशत्या, दशभिश्च दिनाः क्रमात् । नव द्वादश च ज्येष्ठान्तरं स्यादनयोर्दिवोः ॥ ७६ ॥ सन-

त्कुमारमाहेन्द्रस्वर्गयोरमृताशिनाम् । उक्तं स्वरूपमनयोः, स्वामिनोस्तदथोच्यते ॥ ७७ ॥ प्रतरे द्वादशे तत्र, सनत्कुमारताविषे । सौधर्मवदशोकाद्याः, प्राच्यादिष्ववतंसकाः ॥ ७८ ॥ मध्ये सनत्कुमारावतंसकः पूर्ववद्भवेत् । तत्रोपपातशय्यायामुपपातसभास्पृशि ॥ ७९ ॥ उत्पद्यते खलु सनत्कुमारेन्द्रतया कृती । कृतपुण्यः करोत्युक्तरीत्याऽर्हदर्चनादिकम् ॥ ८० ॥ ततः सिंहासनासीनश्चारुशृङ्गारभासुरः । सामानिकैर्द्विसप्तत्या, सहस्रैः परितो वृतः ॥ ८१ ॥ पञ्चपल्योपमाढ्यार्द्धपञ्चमाम्भोधिजीविभिः । अन्तःपर्षद्गतैर्देवसहस्रैरष्टभिर्वृतः ॥ ८२ ॥ चतुःपल्याधिकसार्द्धचतुःसागरजीविभिः । मध्यपर्षद्गतैर्देवसहस्रैर्दशभिर्वृतः ॥ ८३ ॥ त्रिपल्याभ्यधिकाध्यर्द्धचतुरर्णवजीविभिः । सहस्रैश्च द्वादशभिर्जुष्टो बाह्यसभासदाम् ॥ ८४ ॥ त्रायस्त्रिंशैर्मन्त्रिभिश्च, लोकपालैश्च पूर्ववत् । आश्रितः सप्तभिः सैन्यैः, सैन्याधिपैश्च सप्तभिः ॥ ८५ ॥ द्विसप्तत्या सहस्रैश्च, पृथक् पृथक् चतुर्दिशम् । सेवितः सज्जकवचैः, शस्त्रोग्रैरात्मरक्षकैः ॥ ८६ ॥ विमानावासलक्षाणां, द्वादशानामधीश्वरः । तद्वासिनां च देवानामसंख्यानां महौजसाम् ॥ ८७ ॥ सदैश्वर्यमनुभवत्युदात्तपुण्यवैभवः । दिव्यशक्तिसंप्रयुक्तपटुनाटकदत्तदृक् ॥ ८८ ॥ अष्टभिः कुलकं । अस्य यानविमानं च, भवेत्सौमनसाभिधम् । देवः सौमनसाख्यश्च, नियुक्तस्तद्विकुर्वणे ॥ ८९ ॥ निजवैक्रियलब्ध्या तु, देवरूपैर्विकुर्वितैः । जम्बूद्वीपांश्चतुरोऽयं, पूर्णान् पूरयितुं क्षमः ॥ ९० ॥ तिर्यक् पुनरसंख्येयान्, भर्तुं द्वीपाम्बुधीन् क्षमः । सौधर्मेशानाधिराजापेक्षया किल भूयसः ॥ ९१ ॥ भोगेच्छुस्तु सुधर्मायां, जिनाशातनाभिया । जम्बूद्वीपसमं स्थानं, चक्राकृति

कामभोगरीतिः परीवारः

२०

२५


२८

विकुर्वयेत् ॥ ९२ ॥ मध्ये रत्नपीठिकाख्यं, प्रासादं रचयत्ययम् । षड्योजनशतोत्तुङ्गम्, रत्नचन्द्रोदयाश्रितम्
॥ ९३ ॥ तत्र सिंहासनं रत्नपीठिकायां सृजत्यसौ । न शक्रेशानवच्छय्यां, संभोगाभावतस्तथा ॥ ९४ ॥
सामानिकादिकाशेषपरिवारसमन्वितः । लज्जनीयरताभावात्तत्रोपैत्यथ वासवः ॥ ९५ ॥ सौधर्मस्वर्गवासिन्यस्त-
द्योग्यास्त्रिदशाङ्गनाः । तत्रायान्ति सहैताभिर्भुङ्क्ते वैषयिकं सुखम् ॥ ९६ ॥ माहेन्द्रेन्द्रादयोऽप्येवं, देवेन्द्रा अच्युता-
वधि । चक्राकृतिस्थानकादि, विकृत्य भुञ्जते सुखम् ॥ ९७ ॥ तत्र चक्राकृतिस्थाने, प्रासादांस्तु सृजन्त्यमी ।
स्वस्वविमानप्रासादोत्तुङ्गान् सिंहासनाश्रितान् ॥ ९८ ॥ एवमैश्वर्ययुक्तोऽपि, विरक्त इव धार्मिकः । महोपका-
रिणं प्राज्ञ, इव धर्ममविस्मरन् ॥ ९९ ॥ बहूनां साधुसाध्वीनां, जिनधर्मदृढात्मनाम् । श्रावकाणां श्राविकाणां,
सम्यक्त्वादिव्रतस्पृशाम् ॥ १०० ॥ हितकामः सुखकामो, निःश्रेयसाभिलाषुकः । गुणग्राही गुणवतां, गुण-
वान् गुणिपूजकः ॥ १ ॥ सनत्कुमाराधिपतिर्भव्यः सुलभबोधिकः । महाविदेहेषूत्पद्य, भवे भाविनि सेत्स्यति
॥ २ ॥ माहेन्द्रदेवलोकेऽपि, प्रतरे द्वादशे स्थिताः । पञ्चावतंसका अङ्काद्य ईशाननाकवत् ॥ ३ ॥ मध्यस्थि-
तेऽथ माहेन्द्रावतंसकविमानके । उत्पद्योत्पातशय्यायां, प्राग्वत्कृतजिनार्चनः ॥ ४ ॥ सिंहासनसमासीनः,
पीनश्रीभाग्यभासुरः । सामानिकानां सप्तत्या, सहस्रैः परितो वृतः ॥ ५ ॥ सप्तषट्पञ्चपल्याढ्यां, सार्द्धार्णव-
चतुष्टयीम् । यथाक्रमं विक्रमाद्यैर्दधद्भिः स्थितिमायुषः ॥ ६ ॥ षड्भिरान्तरपार्षद्यैरष्टाभिर्मध्यपार्षदैः । दशभिः
बाह्यपार्षद्यैः, सेव्यः सुरसहस्रकैः ॥ ७ ॥ चतुर्भिश्च लोकपालैः, सप्तभिः सैन्यनायकैः । सैन्यैश्च सप्तभिः

५

१०

१४

सेवाचतुरैरनुशीलितः ॥ ८ ॥ प्राच्यादिदिक्षु प्रत्येकमुद्दण्डायुधपाणिभिः । जुष्टः सहस्रैः सप्तत्या, निर्जरैरात्मरक्षकैः ॥ ९ ॥ जम्बूद्वीपान् सातिरेकान्, चतुरश्च विकुर्वितैः । रूपैर्भर्तुं क्षमस्तिर्यगसंख्यद्वीपवारिधीन् ॥ १० ॥ विमानावासलक्षाणामिहाष्टानामधीश्वरः । देवानां भूयसामेवं, माहेन्द्रस्वर्गवासिनाम् ॥ ११ ॥ ईशानोऽसौ विजयते, दिव्यनाटकदत्तहृत् । माहेन्द्रेन्द्रः सातिरेकसप्तसागरजीवितः ॥ १२ ॥ नवभिः कुलकं ॥ अस्य यानविमानं च, श्रीवत्साख्यं प्रकीर्तितम् । श्रीवत्सनामा देवश्च, नियुक्तस्तद्विकुर्वणे ॥ १३ ॥

माहेन्द्रस्याधिक्यं ब्रह्मदेवलोकः

सनत्कुमारमाहेन्द्रस्वर्गाभ्यामूर्ध्वमुल्लसन् । असंख्यकोटाकोटीनां, योजनानामतिक्रमे ॥ १४ ॥ सनत्कुमारमाहेन्द्रोपरिस्थितः समानदिक् । ब्रह्मलोकाभिधः स्वर्गो, भाति पूर्णेन्दुसंस्थितः ॥ १५ ॥ षडत्र प्रतराः प्राग्वत्प्रतिप्रतरमिन्द्रकम् । अञ्जनं १ वरमालं च २, रिष्टं ३ च देवसंज्ञकम् ४ ॥ १६ ॥ सोमं च ५ मङ्गलं ६ चैव, क्रमादेभ्यश्चतुर्दिशम् । विमानपङ्क्तयः प्राग्वत्तत्र पुष्पावकीर्णकाः ॥ १७ ॥ सप्तषट्पञ्चयुक्त्रिंशत्, चतुस्त्रिद्व्यधिका च सा । प्रतिपङ्क्ति विमानाः स्युः, प्रतरेषु क्रमादिह ॥ १८ ॥ प्रथमप्रतरे तत्र, प्रतिपङ्क्ति विमानकाः । त्रयोदश त्रिकोणाः स्युर्द्वादश द्वादशापरे ॥ १९ ॥ अष्टचत्वारिंशमेवं, पाङ्क्तेयानां शतं मतम् । त्रैधा अपि द्वितीयेऽस्मिन्, द्वादश द्वादशोदिताः ॥ २० ॥ सर्वे शतं चतुश्चत्वारिंशं चाथ तृतीयके । वृत्ता एकादश द्वैधा, द्वादश द्वादशापरे ॥ २१ ॥ चत्वारिंशं शतं सर्वे, प्रतरेऽथ तुरीयके । वृत्ता द्वादश किंचैकादश त्रिचतुरस्रकाः ॥ २२ ॥ सर्वे शतं च षट्त्रिंशं, पञ्चमे प्रतरे पुनः । एकादशमितास्त्रैधा, द्वात्रिंशं च शतं समे ॥ २३ ॥

२०

२५

॥ ३४८ ॥

२८

षष्ठेऽथ प्रतरे वृत्ताः, प्रतिपङ्क्ति दशापरे । द्विधाप्येकादश पृथगष्टाविंशं शतं समे ॥ २४ ॥ चतुःसप्ततियुक्ते द्वे, शते च पङ्क्तिवृत्तकाः । भवन्त्येवमिन्द्रकाणां, षण्णां संयोजनादिह ॥ २५ ॥ पङ्क्तित्र्यस्राश्च चतुरशीतियुक्तं शत-द्वयम् । द्वे शते पङ्क्तिचतुरस्रकाः षट्सप्ततिस्पृशी ॥ २६ ॥ चतुस्त्रिंशाष्टशत्येवं, पाङ्क्तेयाः सर्वसंख्यया । निर्दिष्टाः पञ्चमस्वर्गे, पञ्चमज्ञानचारुभिः ॥ २७ ॥ लक्षास्तिस्रः सहस्राणां, नवतिश्च नवाधिका । शतमेकं सषट्-षष्टिरत्र पुष्पावकीर्णकाः ॥ २८ ॥ विमानानां च लक्षाणि, चत्वारि सर्वसंख्यया । निर्दिष्टा ब्रह्मलोकेऽमी, घनवाते प्रतिष्ठिताः ॥ २९ ॥ प्रासादानामुच्चत्वेषु, शतानि सप्त निश्चितम् । पृथ्वीपिण्डो योजनानां, शतानि पञ्चविंशतिः ॥ ३० ॥ भवन्ति वर्णतश्चामी, शुक्लपीतारुणप्रभाः । ज्ञेयं शेषमशेषं तु, स्वरूपमुक्तया दिशा ॥ ॥ ३१ ॥ उत्पद्यन्तेऽमीषु देवतया सुकृतशालिनः । कृतार्हदर्चनाः प्राग्वद्दिव्यसौख्यानि भुञ्जते ॥ ३२ ॥ मधु-कपुष्पवर्णाङ्गाः, प्रभाप्राग्भारभासुराः । छागचिह्नाढ्यमुकुटाः, पद्मलेश्याश्रिताशयाः ॥ ३३ ॥ तथाह जीवाभि-गमः—'बंभलोगलंतगा देवा अल्लमहूयपुप्फवन्नाभा' यत्तु संग्रहण्यां—एते पद्मकेसरगौरा उक्ताः "तत्पकमधुक-पुष्पपद्मकेसरयोर्वर्णे न विशेष" इति तद्वृत्ताविति ध्येयं । जघन्यतोऽप्यमी सप्तसागरस्थितयः सुराः । उत्कर्षतः पुनः पूर्णदशाम्भोनिधिजीविनः ॥ ३४ ॥ प्रथमप्रतरे त्वत्र, नाकिनां परमा स्थितिः । सार्द्धाः सप्तार्णवास्ते च, द्वितीयेऽष्टौ प्रकीर्त्तिताः ॥ ३५ ॥ तृतीयेऽष्टाब्धयः सार्द्धाश्चतुर्थे च नवैव ते । पञ्चमे नव सार्द्धाश्च, षष्ठे पूर्णा दशाब्धयः ॥ ३६ ॥ सर्वत्रापि जघन्या तु, सप्तैव जलराशयः । तथा सप्तार्णवायुष्का, येऽत्र ते षट्करोच्छ्रिताः

॥ ३७ ॥ अष्टाकूपारायुषां तु, देहमानं भवेदिह । कराः पञ्चैकादशांशैः, षड्भिरभ्यधिका अथ ॥ ३८ ॥ नवाब्धिजीविनां पञ्च, कराः पञ्चलवाधिकाः । दशार्णवायुषां पञ्च, कराश्चतुर्लवाधिकाः ॥ ३९ ॥ स्यादेतेषां निजनिजस्थितिसागरसंमितैः । भुक्तिर्वर्षाणां सहस्रैः, पक्षैरुच्छ्वास ईरितः ॥ ४० ॥ एषां कामाभिलाषे तु, देव्योऽभ्यायान्ति चिन्तिताः । सौधर्मस्वर्गवास्तव्यास्तद्योग्याः कान्तिभासुराः ॥ ४१ ॥ तद्राजधानीस्थानीयं, मनोभवमहीपतेः । दिव्यमुन्मादजनकं, स्वरूपं स्वर्गयोषिताम् ॥ ४२ ॥ विलोकयन्तस्तेऽक्षामकामाभिरामया दृशा । प्रतीच्छन्तः कटाक्षांश्च, तासामाकूतकोमलान् ॥ ४३ ॥ एवं पश्यन्त एवामी, तृप्यन्ति सुरतैरिव । प्रागुक्तापेक्षया स्वल्पकामोद्रेकाः सुधाभुजः ॥ ४४ ॥ देव्योऽपि ताः परिणतैस्तादृशैर्दिव्यानुभावतः । दूरादपि निजाङ्गेषु, तृप्यन्ति शुक्रपुद्गलैः ॥ ४५ ॥ सेवार्त्तेन विना ये स्युः, पञ्चसंहननाश्रिताः । गर्भजास्ते नृतिर्यञ्च, उत्पद्यन्तेऽत्र ताविषे ॥ ४६ ॥ नृतिरश्चोरेव गर्भजयोश्च्युत्वोद्भवन्त्यमी । च्यवमानोत्पद्यमानसंख्या त्वत्रापि पूर्ववत् ॥ ४७ ॥ अत्रोत्पत्तिच्यवनयोरन्तरं परमं यदि । द्वाविंशतिर्दिनान्यर्द्धाधिकान्येव भवेत्तदा ॥ ४८ ॥ वसुमत्यास्तृतीयायाः, पश्यन्त्यधस्तलावधि । इहत्या निर्जराः स्वच्छतमेनावधिचक्षुषा ॥ ४९ ॥ अत्रापि प्रतरे षष्ठे, ब्रह्मलोकावतंसकः । अशोकाद्यवतंसानां, मध्ये सौधर्मवद्भवेत् ॥ ५० ॥ तत्र च ब्रह्मलोकेन्द्रो, देवराजो विराजते । सामानिकसुरैः षष्ट्या, सहस्रैः सेवितोऽभितः ॥ ५१ ॥ पञ्चपल्योपमोपेतसार्द्धाष्टसागरायुषाम् ।

वृषादिसंख्या वर्णकामोत्पत्त्यादि

२०

२५

॥३४९॥

२७

चतुःसहस्त्र्या देवानामन्तःपर्षदि सेवितः ॥ ५२ ॥ षड्भिर्देवसहस्त्रैश्च, मध्यपर्षदि सेवितः । चतुःपल्योपमोपेत-
सार्द्धाष्टाम्भोधिजीविभिः ॥ ५३ ॥ बाह्यपर्षदि देवानां, सहस्त्रैरष्टभिर्वृतः । पल्योपमत्रयोपेतसार्द्धाष्टवार्द्धिजी-
विभिः ॥ ५४ ॥ त्रायस्त्रिंशैर्लोकपालैर्मित्रमन्त्रिपुरोहितैः । प्राग्वद्यानविमानाद्यधिकारिवाहनादिभिः ॥ ५५ ॥
एकैकस्यां दिशि षष्ट्या, सहस्त्रैरात्मरक्षकैः । अनीकैः सप्तभिः सप्तभिः सेव्योऽनीकनायकैः ॥ ५६ ॥ अन्ये-
षामप्यनेकेषां, देवानां ब्रह्मवासिनाम् । विमानावासलक्षाणां, चतुर्णामप्यधीश्वरः ॥ ५७ ॥ जम्बूद्वीपानष्ट ५
पूर्णान्, रूपैर्नव्यैर्विकुर्वितैः । क्षमः पूरयितुं तिर्यगसंख्यद्वीपवारिधीन् ॥ ५८ ॥ कृतार्हदर्चनः प्राग्वद्धर्मस्थिति-
विशारदः । साम्राज्यं शास्ति संपूर्णदशसागरजीवितः ॥ ५९ ॥ नवभिः कुलकं ॥ अस्य यानविमानं च,
नन्द्यावर्त्तमिति स्मृतम् । नन्द्यावर्त्ताभिधो देवो, नियुक्तस्तद्विकुर्वणे ॥ ६० ॥

अथास्य ब्रह्मलोकस्य, वरिष्ठे रिष्टनामनि । तृतीयप्रतरे सन्ति, लोकान्तिकाः सुरोत्तमाः ॥ ६१ ॥ तथाह्य-
तिक्रम्य तिर्यग्, जम्बूद्वीपादितः परम् । द्वीपाम्बुधीनसंख्येयान्, द्वीपोऽरुणवरः स्थितः ॥ ६२ ॥ स्थानद्विगुण- १०
विस्तीर्णतया सोऽसंख्यविस्तृतः । द्विगुणेनायमरुणवरेण वेष्टितोऽब्धिना ॥ ६३ ॥ अथ द्वीपस्यास्य बाह्यवे-
दिकान्तप्रदेशतः । अवगाह्यारुणवरनामधेयं पयोनिधिम् ॥ ६४ ॥ योजनानां सहस्त्रान् द्वाचत्वारिंशतमत्र
च । जलोपरितलादूर्ध्वमप्कायविकृतिर्महान् ॥ ६५ ॥ तमस्कायो महाघोरान्धकाररूप उद्गतः । परितोऽ-
ब्धिमिमं रुन्धन्, वलयाकृतिनाऽऽत्मना ॥ ६६ ॥ स्थिरार्केन्दुकरक्लिष्टैः, संभूय तिमिरैरिव । रचितः १५

स्वनिवासाय, भीमदुर्गो महाम्भसि ॥ ६७ ॥ योजनानां सप्तदश, शतान्यथैकविंशतिम् । यावदूर्ध्वं समभित्त्याकार एवायमुद्गतः ॥ ६८ ॥ ततश्च विस्तरंस्तिर्यक्क्रमादसंख्यविस्तृतिः । निक्षिप्य कुक्षौ चतुरः, सौधर्मादींस्त्रिविष्टपान् ॥ ६९ ॥ ततोऽप्यूर्ध्वं ब्रह्मलोके, तृतीयप्रस्तटावधि । उद्गत्य निष्ठितः श्रान्त, इवाविश्रममुत्पतन् ॥ ७० ॥ अधश्चायं समभित्त्याकारत्वाद्वलयाकृतिः । शरावबुध्नं तुलयत्यूर्ध्वं कुर्कुटपञ्जरम् ॥७१॥ आदेरारभ्योर्ध्वमयं, संख्येययोजनावधिम् । संख्येयानि योजनानि, विस्तारतः प्रकीर्त्तितः ॥ ७२ ॥ ततः परमसंख्येययोजनान्येष विस्तृतः । परिक्षेपेण सर्वत्राप्येषोऽसंख्येययोजनः ॥७३॥ यद्यप्यधस्तमस्कायः, संख्येयविस्तृतिः स्वयम् । तथाप्यस्य कुक्षिगतासंख्यद्वीपपयोनिधेः ॥ ७४ ॥ परिक्षेपस्त्वसंख्येययोजनात्मैव संभवेत् । क्षेत्रस्यासंख्यमानस्य, परिक्षेपो ह्यसंख्यकः ॥ ७५ ॥ अन्तर्बाह्यपरिक्षेपविशेषस्त्विह नोदितः । उभयोरपि तुल्यरूपतयाऽसंख्येयमाततः ॥ ७६ ॥ इत्थमस्य महीयस्तामाहुः सिद्धान्तपारगाः । महर्द्धिकः कोऽपि देवो, यो जम्बूद्वीपमञ्जसा ॥ ७७ ॥ तिसृणां चप्पुटिकानां, मध्य एवैकविंशतिम् । वारान् प्रदक्षिणीकृत्यागच्छेद्गत्या ययाऽथ सः ॥ ७८ ॥ तयैव गत्या काचित्कं, तमस्कायं व्यतिव्रजेत् । मासैः षड्भिरपि काचित्कं तु नैव व्यतिव्रजेत् ॥७९॥ तत्र संख्येयविस्तारं, व्यतिव्रजेन्न चापरम् । एवं महीयसि तमस्कायेऽथाब्दाः सविद्युतः ॥८०॥ प्रादुर्भवन्ति वर्षन्ति, गर्जन्ति विद्युतोऽपि च । द्योतन्ते विलसद्देवासुरनागविनिर्मिताः ॥ ८१ ॥ तथाहुः—'अत्थि णं भंते ! तमुक्काए उराला बलाहया संसेयंति संमुच्छंति वासं वासंति, ? हंता अत्थि' इत्यादि



२०

२५



२८

भगवतीसूत्रे ६-५ । यद्यप्यत्र नरक्षेत्राद्बहिर्नाङ्गीकृतं श्रुते । घनगर्जितवृष्ट्यादि, तथापि स्यात्सुरोद्भवम् ॥ ८२ ॥ यथा नराः स्वभावेन, लङ्घितुं मानुषोत्तरम् । नेशा विद्यालब्धिदेवानुभावाल्लङ्घयन्त्यपि ॥८३॥ अत्रोक्ता विद्युतो याश्च, भास्वरास्तेऽपि पुद्गलाः । दिव्यानुभावजा ज्ञेया, बादराग्नेरभावतः ॥ ८४ ॥ तथाहुः—"इह न बादरास्तेजस्कायिका मन्तव्याः, इहैव तेषां निषेत्स्यमानत्वात्, किंतु देवप्रभावजनिता भास्वराः पुद्गला" इति भगवतीवृत्तौ । तथा नात्र तमस्काये, देशग्रामपुरादिकम् । नाप्यत्र चन्द्रचण्डांशुग्रहनक्षत्रतारकाः ॥८५॥ येऽप्यत्रासन्नचन्द्रार्ककिरणास्तेऽपि तामसैः । मलीमसा असत्प्राया, दुर्जने सद्गुणा इव ॥८६॥ अत एवातिकृष्णोऽयमगाधश्च भयङ्करः । रौद्रातिरेकात्पुलकोद्भेदमालोकितः सृजेत् ॥ ८७ ॥ आस्तामन्यः सुरोऽप्येनं, पश्यन्नादौ प्रकम्पते । ततः स्वस्थीभूय शीघ्रगतिरेनमतिव्रजेत् ॥ ८८ ॥ तम १ श्चैव तमस्कायोऽ २न्धकारः ३ स महादिकः ४ । लोकान्धकारः ५ स्याल्लोकतमिस्रं ६ देवपूर्वकाः ॥ ८९ ॥ अन्धकार ७ स्तमिस्रं ८ चारण्यं ९ च व्यूह १० एव च । परिघश्च ११ प्रतिक्षोभो १२ऽरुणोदो वारिधिस्तथा १३ ॥ ९० ॥ त्रयोदशास्य नामानि, कथितानि जिनैः श्रुते । तत्र लोकेऽद्वितीयत्वाल्लोकान्धकार उच्यते ॥९१॥ न हि प्रकाशो देवानामप्यत्र प्रथते मनाक् । देवान्धकारोऽयं देवतमिस्रं च तदुच्यते ॥९२॥ बलवद्देवभयतो, नश्यतां नाकिनामपि । अरण्यवच्छरण्योऽयं, देवारण्यं तदुच्यते ॥ ९३ ॥ दुर्भेदत्वाद्व्यूह इव, प्रतिक्षोभो भयावहः । गतिं रुन्धन् परिघवत्, देवव्यूहादिरुच्यते ॥ ९४ ॥ अरुणोदाम्भोधिजलविकारत्वात्तथाभिधः । एवमन्वर्थता नाम्नामन्येषामपि भाव्य-

ताम् ॥ ९५ ॥ यत्र रिष्टप्रस्तटेऽयं, तमस्कायश्च निष्ठितः । तस्येन्द्रकविमानस्य, रिष्टाख्यस्य चतुर्दिशम् ॥ ९६ ॥ जीवपुद्गलसत्पृथ्वीपरिणामस्वरूपिके । द्वे द्वे च कृष्णराज्यौ स्तो, जात्याञ्जनघनद्युती ॥ ९७ ॥ तथाहि दिशि पूर्वस्यां, द्वे दक्षिणोत्तरायते । पूर्वपश्चिमविस्तीर्णे, कृष्णराज्यौ प्रकीर्तिते ॥ ९८ ॥ स्यातामपाच्यामप्येवं, ते द्वे पूर्वापरायते । दक्षिणोत्तरविस्तीर्णे, कृष्णराज्यौ यथोदिते ॥ ९९ ॥ प्रतीच्यामपि पूर्वावत्ते दक्षिणोत्तरायते । उदीच्यां च दक्षिणावत्ते द्वे पूर्वापरायते ॥ २०० ॥ प्राच्यां प्रतीच्यां या बाह्या, षट्कोणा सा भवेत्किल । दक्षिणस्यामुदीच्यां च, बाह्या या सा त्रिकोणिका ॥ १ ॥ अभ्यन्तराश्चतुःकोणाः, सर्वा अप्येवमासु च । द्वे षट्कोणे द्वे त्रिकोणे, चतस्रश्चतुरस्रिकाः ॥ २ ॥ पौरस्त्याभ्यन्तरा तत्र, कृष्णराजी स्पृशत्यसौ । निजान्तेन कृष्णराजीं, दाक्षिणात्यां बहिःस्थिताम् ॥ ३ ॥ दक्षिणाभ्यन्तरा चैवं, बाह्यां पश्चिमदिग्गताम् । एवं बाह्यामौत्तराहां, पश्चिमाभ्यन्तरा स्पृशेत् ॥ ४ ॥ उदीच्याभ्यन्तरा बाह्या, प्राचीनिष्ठां स्पृशत्यतः । अष्टापि कृष्णराज्यः स्युरक्षपाटकसंस्थिताः ॥ ५ ॥ स्यादासनविशेषो यः, प्रेक्षास्थाने निषेदुषाम् । स चाक्षपाटकस्तद्वदासां संस्थानमीरितम् ॥ ६ ॥ एता विष्कम्भतोऽष्टापि, संख्येययोजनात्मिकाः । परिक्षेपायामतश्चासंख्येययोजनात्मिकाः ॥ ७ ॥ तमस्कायमानयोरयसुरो यः प्राग् निरूपितः । स एव च तया गत्या, मासार्द्धेन व्यतिव्रजेत् ॥ ८ ॥ कांचिदत्र कृष्णराजीं, कांश्चिन्नैव व्यतिव्रजेत् । महत्त्वमासामित्येवं, वर्णयन्ति बहुश्रुताः ॥ ९ ॥ तमस्कायवदत्रापि, गृहग्रामाद्यसंभवः । नाप्यत्र चन्द्रसूर्याद्या, न तेषां किरणा अपि ॥ १० ॥ अत्राम्भोदवृष्टिविद्युद्गर्जितादि च पूर्ववत् । परं तद्देव-



२०

२५



२८

जनितं, न नागासुरकर्तृकम् ॥ ११ ॥ असुरनागकुमाराणां तत्रागमनासंभवादिति भगवतीवृत्तौ ॥ कृष्णराजी
मेघराजी, मघा माघवतीति च । स्याद्वातपरिघो वातप्रतिक्षोभस्तथैव च ॥ १२ ॥ स्याद्देवपरिघो देवप्रतिक्षो-
भोऽपि नामतः । आसां नामान्यष्ट तेषामन्वर्थोऽथ विभाव्यते ॥ १३ ॥ कृष्णपुद्गलराजीति, कृष्णराजीयमु-
च्यते । कृष्णाब्दरेखातुल्यत्वान्मेघराजीति च स्मृता ॥ १४ ॥ मघाया माघवत्याश्च, सवर्णत्वाख्यया तथा ।
वातोऽत्र वात्या तद्वद्या, तमिस्रा भीषणापि च ॥ १५ ॥ ततोऽसौ वातपरिघस्तत्प्रतिक्षोभ इत्यपि । स्याद्देव-
परिघो देवप्रतिक्षोभश्च पूर्ववत् ॥ १६ ॥ अथासां कृष्णराजीनामन्तरेषु किलाष्टसु । लोकान्तिकविमानानि,
निर्दिष्टान्यष्ट पारगैः ॥ १७ ॥ तत्राभ्यन्तरयोः प्राचोदीच्ययोरन्तरे तयोः । विमानमर्चिः प्रथमं, चकास्ति प्रचु-
रप्रभम् ॥ १८ ॥ अन्तरे प्राच्ययोरेव, बाह्याभ्यन्तरयोरथ । द्वितीयमर्चिर्मालीति, विमानं परिकीर्त्तितम् ॥१९॥
तृतीयमभ्यन्तरयोरन्तरे प्राच्ययाम्ययोः । वैरोचनाभिधं प्रोक्तं, विमानं मानवोत्तमैः ॥ २० ॥ बाह्याभ्यन्तर-
योरेवान्तरेऽथ दाक्षिणात्ययोः । प्रभंकराभिधं तुर्यं, विमानमुदितं जिनैः ॥ २१ ॥ अभ्यन्तरदाक्षिणात्यप्रती-
च्ययोरथान्तरे । विमानमुक्तं चन्द्राभं, पञ्चमं परमेष्ठिभिः ॥ २२ ॥ स्यात्प्रतीचीनयोरेवं, बाह्याभ्यन्तरयोस्तयोः ।
विमानमन्तरे षष्ठं, सूर्याभमिति नामतः ॥२३॥ पश्चिमोदीच्ययोरभ्यन्तरयोरन्तरेऽथ च । विमानमुक्तं शुक्राभं,
सप्तमं जिनसत्तमैः ॥ २४ ॥ बाह्याभ्यन्तरयोरौत्तराहयोरन्तरेऽथ च । विमानं सुप्रतिष्ठाभमष्टमं परिकीर्त्तितम्
॥ २५ ॥ सर्वासां कृष्णराजीनां, मध्यभागे तु तीर्थपैः । विमानं नवमं रिष्ठाभिधानमिह वर्णितम् ॥ २६ ॥

५

१०

१४

ब्रह्मलोकान्तभावित्वाल्लोकांतिकान्यमून्यथ । लोकान्तिकानां देवानां, संबन्धीनि ततस्तथा ॥ २७ ॥ नवाप्येते विमानाः स्युर्घनवायुप्रतिष्ठिताः । वर्णादिभिश्च पूर्वोक्तब्रह्मलोकविमानवत् ॥ २८ ॥ संस्थानं नैकधाऽमीषामपाङ्क्तेयतया खलु । एभ्यो लोकान्तः सहस्रैर्योजनानामसंख्यकैः ॥ २९ ॥ एतेष्वथ विमानेषु, निवसन्ति यथाक्रमम् । सारस्वतास्तथाऽऽदित्या, वह्नयो वरुणा अपि ॥ ३० ॥ गर्दतोयाश्च तुषिता, अव्याबाधास्तथाऽपरे । आग्नेया अथ रिष्ठाश्च, लोकान्तिकसुधाभुजः ॥ ३१ ॥ अत्राग्नेयाः संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते ॥ स्वत एवावबुद्धानामनुत्तरचिदात्मनाम् । विज्ञाय दीक्षावसरं, दित्सूनां दानमाब्दिकम् ॥ ३२ ॥ प्रव्रज्यासमयादर्वाक्, संवत्सरेण तत्क्षणम् । श्रीमतामर्हतां पादान्तिकमेत्य तथास्थितेः ॥ ३३ ॥ विमानयानादुत्तीर्य, सोत्साहाः सपरिच्छदाः । सारस्वतप्रभृतयः, सर्वे लोकान्तिकाः सुराः ॥ ३४ ॥ विज्ञा विज्ञपयन्त्येवं, जय नन्द ! जगद्गुरो ! । त्रैलोक्यबंधो ! भगवन् !, धर्मतीर्थं प्रवर्त्तय ॥३५॥ चतुर्भिः कलापकं ॥ यदेतत्सर्वलोकानां, सर्वलोके भविष्यति । मुक्तिराजपथीभूतं, निःश्रेयसकरं परम् ॥३६॥ इह सारस्वतादित्यद्वये समुदितेऽपि हि । सप्त देवाः सप्त देवशतानि स्यात्परिच्छदः ॥ ३७ ॥ एवं वह्निवरुणयोः, परिवारश्चतुर्दश । देवास्तथाऽन्यानि देवसहस्राणि चतुर्दश ॥ ३८ ॥ गर्दतोयतुषितयोर्द्वयोः संगतयोरपि । सप्त देवाः सप्त देवसहस्राणि परिच्छदः ॥ ३९ ॥ अव्याबाधाग्नेयरिष्ठदेवानां च सुरा नव । शतानि नव देवानां, परिवारः प्रकीर्त्तितः ॥ ४० ॥ अव्याबाधाश्चैषु देवाः, पुरुषस्याक्षिपक्ष्मणि । दिव्यं द्वात्रिंशत्प्रकारं, प्रादुष्कुर्वन्ति ताण्डवम् ॥ ४१ ॥ तथापि पुरुषस्यास्य, बाधा काऽपि न जायते । एवंरूपा

लोकान्तिकाः

२०

२५



२८

शक्तिरेषां, पञ्चमाङ्गे प्रकीर्त्तिता ॥४२॥ भ० १४,८। लोकान्तिकविमानेषु, देवानामष्ट वार्द्धयः॥स्थितिरुक्ता जिनैरेते, पुण्यात्मानः शुभाशयाः ॥ ४३ ॥ एकावताराः सिद्ध्यन्ति, भवे भाविनि निश्चितम् । अष्टावतारा अप्येते, निरूपिता मतान्तरे ॥ ४४ ॥ तन्मतद्वयं चैवं—लोकान्ते—लोकाग्रलक्षणे सिद्धिस्थाने भवा लोकान्तिकाः, भाविनि भूतवदुपचारन्यायेन एवं व्यपदेशः, अन्यथा ते कृष्णराजीमध्यवर्त्तिनः, लोकान्ते भावित्वं तेषामनन्तरभवे एव सिद्धिगमना"दिति स्थानाङ्गवृत्तौ ९ स्थानके "श्रीब्रह्मलोके प्रतरे तृतीये, लोकान्तिकास्तत्र वसन्ति देवाः । एकावताराः परमायुरष्टौ, भवन्ति तेषामपि सागराणि ॥ १ ॥" इति श्रेणिकचरित्रे। "अट्ठेव सागराइं परमाउं होइ सव्वदेवाणं । एगावयारिणो खलु देवा लोगंतिया नेया ॥ १ ॥" इति प्रवचनसारोद्धारे, तत्त्वार्थटीकायामपि—लोकान्ते भवा लोकान्तिकाः, अत्र प्रस्तुतत्वाद्ब्रह्मलोक एव परिगृह्यते, तदन्तनिवासिनो लोकान्तिकाः, सर्वब्रह्मलोकदेवानां लोकान्तिकप्रसङ्ग इति चेन्न, लोकान्तोपश्लेषात्, जरामरणादिज्वालाकीर्णो वा लोकस्तदन्तवर्त्तित्वाल्लोकान्तिकाः कर्मक्षयाभ्यासीभावाचेति, लब्धिस्तोत्रे तु—सव्वट्ठचुआ चउकयआहारगुवसमगजिणगणहराइं । निअमेण तब्भवसिवा सत्तट्ठभवेहिं लोगंती ॥ १ ॥"

अथोर्ध्वं ब्रह्मलोकस्य, समपक्षं समानदिक् । योजनानामसंख्येयकोटाकोटिव्यतिक्रमे ॥ ४५ ॥ विभाति लान्तकः स्वर्गः, पञ्चप्रतरशोभितः । प्रतिप्रतरमेकैकेनेन्द्रकेण विराजितः ॥ ४६ ॥ प्रथमप्रतरे तत्र, बलभद्राख्यमिन्द्रकम् । चक्रं गदा स्वस्तिकं च, नन्द्यावर्त्तमिति क्रमात् ॥ ४७ ॥ प्रतिप्रतरमेतेभ्यः, पङ्क्तयोऽपि चतुर्दिशम् ।

५ १० १४

प्राग्वदत्र विना प्राचीं, प्रोक्ताः पुष्पावकीर्णकाः ॥ ४८ ॥ एकत्रिंशदथ त्रिंशदेकोनत्रिंशदेव च । तथाऽष्टाविंशतिः सप्तविंशतिश्च यथाक्रमम् ॥ ४९ ॥ पञ्चस्वेषु प्रतरेषु, प्रतिपङ्क्ति विमानकाः । एकैकस्यामथो पङ्क्तौ, प्रथमप्रतरे स्मृताः ॥ ५० ॥ त्र्यस्रा एकादशान्ये च, द्वैधा दश दशेति च । चतुर्विंशं शतं सर्वे, पङ्क्तिस्थायिविमानकाः ॥ ५१ ॥ वृत्तास्त्र्यस्राश्चतुरस्रा, द्वितीयप्रतरे दश । प्रतिपङ्क्त्यत्र सर्वे च, विंशं शतमुदीरिताः ॥ ५२ ॥ तृतीये त्रिचतुःकोणा, दश वृत्ता नवेति च । सर्वे विमानाः पाङ्क्त्या, भवन्ति षोडशं शतम् ॥ ५३ ॥ वृत्ताश्च चतुरस्राश्च, तुर्ये नव नव स्मृताः । दश त्रिकोणाः सर्वे च, पाङ्क्त्या द्वादशं शतम् ॥ ५४ ॥ पञ्चमे च नव नव, त्रिचतुःकोणवृत्तकाः । अष्टोत्तरं शतं सर्वे, चात्र पङ्क्तिविमानकाः ॥ ५५ ॥ एवं पञ्चेन्द्रकक्षेपे, सर्वेऽत्र पङ्क्तिवृत्तकाः । विमानास्त्रिनवत्याढ्यं, शतं लान्तकताविषे ॥ ५६ ॥ पङ्क्तित्र्यस्राणां शते द्वे, द्विनवत्यधिकं शतम् । स्यात्पङ्क्तिचतुरस्राणामेवं च सर्वसंख्यया ॥ ५७ ॥ पञ्चाशीत्याभ्यधिकानि, शतानि पञ्चपङ्क्तिगाः । सहस्राण्येकोनपञ्चाशच्चत्वारि शतानि च ॥ ५८ ॥ युक्तानि पञ्चदशभिरिह पुष्पावकीर्णकाः । विमानानां सहस्राणि, पञ्चाशत्सर्वसंख्यया ॥५९॥ विहायसि निरालम्बे, प्रतिष्ठितो घनोदधिः । घनवातोऽस्मिन्निहामी, स्युर्विमानाः प्रतिष्ठिताः ॥६०॥ वर्णोच्चत्वादिमानं च, स्यादेषां ब्रह्मलोकवत् । देवास्तत्र शुक्लवर्णाः, शुक्ललेश्या महर्द्धिकाः ॥ ॥ ६१ ॥ इतःप्रभृति देवाः स्युः, सर्वेऽप्यनुत्तरावधि । शुक्ललेश्या शुक्लवर्णाः, किंतूत्कृष्टा यथोत्तरम् ॥ ६२ ॥ प्रथमप्रतरे तत्र, स्थितिर्ज्येष्ठा सुधाभुजाम् । पञ्चभागीकृतस्याब्धेश्चत्वारोऽंशा दशाब्धयः ॥ ६३ ॥ द्वितीयप्रतरे

लान्तके वृत्तविमानादिमानं

२०

२५



२८

भागास्त्रय एकादशाब्धयः । द्वाभ्यां भागाभ्यां समेतास्तृतीये द्वादशाब्धयः ॥६४॥ चतुर्थे त्वेकभागाढ्यास्त्रयो-
दश पयोधयः । पञ्चमे प्रतरे पूर्णाश्चतुर्दशैव वार्द्धयः ॥ ६५ ॥ जघन्येन तु सर्वत्र, दशैव मकरा-
कराः । स्वस्वस्थित्यनुसारेण, देहमानमथ ब्रुवे ॥ ६६ ॥ एकादशोद्धवैर्भागैश्चतुर्भिरधिकाः कराः । पञ्चदेहमा-
नमत्र, दशरत्नाकरायुषाम् ॥ ६७ ॥ त्रिभागाढ्याः कराः पञ्चैकादशार्णवजीविनाम् । हस्ताः पञ्च लवौ द्वौ च,
द्वादशाम्भोधिजीविनाम् ॥ ६८ ॥ सैकभागाः कराः पञ्च, त्रयोदशार्णवायुषाम् । चतुर्दशाब्धिस्थितीनां,
पूर्णाः पञ्च करास्तनुः ॥ ६९ ॥ ईशानस्ववासिनीभिर्देवीभिर्विषयेच्छवः । चिन्तामात्रोपस्थिताभी, रमन्ते ब्रह्म-
देववत् ॥ ७० ॥ च्यवमानोत्पद्यमानसंख्या गत्यागती अपि । अवधिज्ञानविषयः, स्यादत्र ब्रह्मलोकवत् ॥७१॥
अत्रोत्पत्तिच्यवनयोरन्तरं परमं भवेत् । दिनानि पञ्चचत्वारिंशत् क्षणश्च जघन्यतः ॥७२॥ पञ्चमे प्रतरे चात्र,
स्याल्लान्तकावतंसकः । अङ्कावतंसकादीनां, मध्ये ईशाननाकवत् ॥७३॥ लान्तकस्तत्र देवेन्द्रः, पुण्यसारो विराजते ।
सामानिकामरैः पञ्चाशता सेव्यः सहस्रकैः ॥ ७४ ॥ द्वाभ्यां देवसहस्राभ्यां, सेव्योऽभ्यन्तरपर्षदि । मध्य-
मायां चतुर्भिस्तैः, षड्भिश्च बाह्यपर्षदि ॥ ७५ ॥ युग्मम् ॥ सप्तषट्पञ्चभिः पल्योपमैः समधिका स्थितिः ।
द्वादशैवाम्बुनिधयस्तिसृणां पर्षदां क्रमात् ॥ ७६ ॥ आत्मरक्षकदेवानां, पञ्चाशता सहस्रकैः । एकैकस्यां
दिशि सेव्यो, दण्डाद्यायुधपाणिभिः ॥ ७७ ॥ प्राग्वदन्यैरपि मन्त्रित्रायस्त्रिंशकवाहनैः । सैन्यैः सैन्याधिपै-
र्लोकपालैः पालितशासनः ॥ ७८ ॥ जिनार्चनादिकं धर्मं, कुर्वाणः परमार्हतः । दिव्यनाट्यदत्तचेताश्चतुर्दशा-

ब्धिजीवितः ॥ ७९ ॥ सातिरेकानष्ट जम्बूद्वीपान् पूरयितुं क्षमः । रूपैर्विकुर्वितैस्तिर्यगसंख्यद्वीपतोयधीन् ॥ ८० ॥ स विमानसहस्राणां, पञ्चाशतोऽप्यधीश्वरः । साम्राज्यं शास्ति देवानां, लान्तकस्वर्गवासिनाम् ॥ ८१ ॥ पञ्चभिः कुलकं ॥ अस्य यानविमानं च, भवेत्कामगमाभिधम् । देवः कामगमाभिख्यो, नियुक्तस्तद्विकुर्वणे ॥ ८२ ॥

लांतके देहमानादि किल्बिषिकाः

वैमानिकाः किल्विषिकास्त्रिधा भवन्ति तद्यथा । त्रयोदशाब्धित्र्यम्भोधित्रिपल्योपमजीविनः ॥ ८३ ॥ तत्र च—वसन्ति लान्तकस्याधस्त्रयोदशाब्धिजीविनः । अधः सनत्कुमारस्य, त्र्यम्भोधिजीविनः पुनः ॥ ८४ ॥ त्रिपल्यस्थितयस्ते च, सौधर्मेशानयोरधः । स्थानमेवं किल्विषिकसुराणां त्रिविधं स्मृतम् ॥ ८५ ॥ नन्वत्राधःशब्देन किमभिधीयते ? अधस्तनं प्रस्तटं, तस्मादप्यधोदेशो वा ? अन्यच्च द्वात्रिंशल्लक्षविमानमध्ये साधारणदेवीनामिवैतेषां कतिचिद्विमानानि सन्ति, विमानैकदेशे वा विमानाद्बहिर्वा तिष्ठन्ति ते इति, अत्रोच्यते—अत्राधःशब्दस्तत्स्थानवाचको ज्ञेयो, यतोऽत्राधःशब्दः प्रथमप्रस्तटार्थो न घटते तृतीयषष्ठकल्पसत्ककिल्विषिकामराणां, तत्प्रथमप्रस्तटयोस्त्रिसागरोपमत्रयोदशसागरोपमस्थित्योरसंभवात्, तथा तद्विमानानां संख्या शास्त्रे नोपलभ्यते, तथा देवलोकगतद्वात्रिंशल्लक्षविमानसंख्यामध्ये तद्विमानगणनं न संभाव्यते इति, तत्त्वं सर्वविद्वेद्यमिति वृद्धाः ॥ अमी च चण्डालप्राया, निन्द्यकर्माधिकारिणः । अस्पृश्यत्वादन्यदेवैर्धिक्कृतास्तर्जनादिभिः ॥ ८६ ॥ देवलोके विमानेषु, स्वधाभुक्पर्षदादिषु । कौतुकादिसंगतेषु, देवानां निकरेषु च ॥ ८७ ॥

२०

२५



२८

अष्टाह्निकाद्युत्सवेषु, जिनजन्मोत्सवादिषु । अप्राप्नुवन्तः स्थानं ते, स्वं शोचन्ति विषादिनः ॥ ८८ ॥
असद्भावोद्भाव- आचार्योपाध्यायगच्छसंघप्रतीपवर्त्तिनः । येऽवर्णवादिनस्तेषामयशःकारिणोऽपि च ॥ ८९ ॥
असद्भावोद्भावनाभिर्मिथ्यात्वाभिनिवेशकैः । व्युद्ग्राहयन्तः स्वात्मानं, परं तदुभयं तथा ॥ ९० ॥
प्रतिपाल्यापि चारित्रपर्यायं वत्सरान् बहून् । तेऽनालोच्याप्रतिक्रम्य, तत्कर्माशर्मकारणम् ॥ ९१ ॥
त्रयाणां किल्विषिकानां, मध्ये भवन्ति कुत्रचित् । तादृशव्रतपर्यायापेक्षया स्थितिशालिनः ॥ ९२ ॥
एभ्यश्च्युत्वा देवनरतिर्यग्नारकजन्मसु । चतुरः पञ्च वा वारान्, भ्रान्त्वा सिध्यन्ति केचन ॥ ९३ ॥
केचित्पुनरर्हदादिनिबिडाशातनाकृतः । कृतानन्तभवा भीमं, भ्राम्यन्ति भवसागरम् ॥ ९४ ॥
तथाहुः—"देवकिब्बिसिया णं भंते ! ताओ देवलोगाओ" इत्यादि । स हि जामेयोऽपि च जामाता, यथा वीरजगद्गुरोः । जमालिः किल्विषिकेषूत्पन्नो लान्तकवासिषु ॥ ९५ ॥
स हि क्षत्रियकुण्डस्थः, क्षत्रियस्ताण्डवादिषु । मग्नः श्रुत्वा महावीरमागतं वन्दितुं गतः ॥ ९६ ॥
श्रुत्वोपदेशं संविग्नोऽनुज्ञाप्य पितरौ व्रतम् । जग्राह पञ्चभिः पुंसां, शतैः सह महामहैः ॥ ९७ ॥
अधीतैकादशाङ्गीकस्तयैवार्हदनुज्ञया । सेव्यः साधुपञ्चशत्या, चकारानेकधा तपः ॥ ९८ ॥
पप्रच्छ चैकदाऽर्हन्तं, विजिहीर्षुः पृथग् जिनात् । तूष्णीं तस्थौ प्रभुरपि, जानंस्तद्भाववैशसम् ॥ ९९ ॥
अननुज्ञात एवैष, उपेक्ष्य जगदीश्वरम् । विहरन् सहितः शिष्यैः, श्रावस्तीं नगरीं ययौ ॥ ३०० ॥
तत्र तस्यान्यदा प्रान्ताद्यशनेन ज्वरोऽभवत् । शिष्यान् शिशयिषुः संस्तारककॢप्त्यै समादिशत् ॥ १ ॥
तमास्तरन्ति ते यावत्तावदेषोऽतिपीडितः । ऊचे संस्तारको

हन्त, कृतोऽथ क्रियतेऽथवा ? ॥ २ ॥ द्रागेष क्रियते स्वामिन् !, श्रुत्वेति शिष्यभाषितम् । मिथ्याविपर्यस्तम-
तिरिति चेतस्यचिन्तयत् ॥ ३ ॥ प्रत्यक्षं क्रियमाणोऽयमकृतो यन्न युज्यते । क्रियमाणं कृतमिति, तत्किमाहा-
न्तिमो जिनः ? ॥ ४ ॥ ध्यात्वेति सर्वानाहूय, शिष्यानेषोऽब्रवीदिति । कृतमेव कृतं वस्तु, क्रियमाणं न
तत्तथा ॥ ५ ॥ क्रियमाणं कृतं किंचिन्न चेदाद्यक्षणादिषु । सर्वमन्त्यक्षणे तर्हि, तत्कर्तुं शक्यते कथम् ? ॥ ६ ॥
देशतः कृतमेवेति, क्रियमाणं क्षणे क्षणे । जीर्यमाणं जीर्णमेवं, चलच्चलितमेव च ॥ ७ ॥ युग्मम् । इत्यादियु-
क्तिभिः शिष्यैर्बोधितोऽपि कदाग्रही । कैश्चिद्धर्मार्थिभिस्त्यक्तः, कैश्चित्स एव चादृतः ॥ ८ ॥ यैस्त्यक्तस्ते
महावीरं, चम्पायां पुरि संस्थितम् । अभ्युपेत्य गुरुकृत्योद्युक्ताः स्वार्थमसाधयन् ॥ ९ ॥ क्रमाद्विमुक्तो रोगेण
द्रव्यतो न तु भावतः । जमालिरपि चम्पायामुपवीरमुपागतः ॥ १० ॥ कदाग्रहग्रहग्रस्तः, प्रशस्तधिषणाबलः ।
इत्याललाप भगवन् !, भवच्छिष्याः परे यथा ॥ ११ ॥ छद्मस्था न तथैवाहं, किंतु जातोऽस्मि केवली । इति
ब्रुवाणं भगवानिन्द्रभूतिस्तमब्रवीत् ॥ १२ ॥ ज्ञानं केवलिनः शक्यं, नावरीतुं पटादिभिः । यदि त्वं केवली
तर्हि, प्रश्नयोर्मे कुरूत्तरम् ॥ १३ ॥ जमाले ! नन्वसौ लोकः, शाश्वतोऽशाश्वतोऽथवा ? । जीवोऽप्यशाश्वतः
किं वा, शाश्वतस्तद्वद द्रुतम् ॥ १४ ॥ जगद्गुरुप्रत्यनीकतया प्रश्नमपीदृशम् । सोऽक्षमः प्रत्यवस्थातुं, बभूव मलि-
नाननः ॥ १५ ॥ ततः स वीरनाथेन, प्रोक्तः किं मुह्यसीह भोः ? । शाश्वताशाश्वतौ ह्येतौ, द्रव्यपर्यायभेदतः
॥ १६ ॥ छद्मस्थाः सन्ति मे शिष्या, ईदृक्प्रश्नोत्तरे क्षमाः । अनेके न तु ते त्वद्वदसत्सार्वज्ञ्यशंसिनः ॥ १७ ॥



२०

२५



२८

अश्रद्दधत्तज्जिनोक्तं, स्वैरं पुनरपि भ्रमन् । व्युद्ग्राहयंश्च स्वपरं, कुर्वंस्तपांस्यनेकधा ॥ १८ ॥ अन्तेऽर्द्धमासिकं कृत्वाऽनशनं तच्च पातकम् । अनालोच्याप्रतिक्रम्य, मृत्वा किल्विषिकोऽभवत् ॥ १९ ॥ ततश्च्युत्वा च विबुध, तिर्यग्मनुजजन्मसु । उत्पद्य पञ्चशः पञ्चदशे जन्मनि सेत्स्यति ॥ २० ॥ तथाहुः—"गो० ! चत्तारि पञ्च तिरिक्खजोणियमणुस्सदेवभवग्गहणाइं संसारं अणुपरियट्टित्ता ततो पच्छा सिज्झिहिति जाव अंतं काहिति" भगवतीसूत्रे श० ९ उ० ३३ ॥ ग्रन्थान्तरे च यद्यस्यानन्ता अपि भवाः श्रुताः । तदा तदनुसारेण, तथा ज्ञेया विवेकिभिः ॥ २१ ॥ जिनं विनाऽन्यः कस्तत्त्वं, निश्चेतुं क्षमतेऽपरः । ततः प्रमाणमुभयं, श्रीवीराज्ञाऽनुसारिणाम् ॥ २२ ॥ सत्यप्येवं पञ्चमाङ्गवचो विलुप्य ये जडाः । एकान्तेन भवानस्यानन्तान्निश्चिन्वतेऽधुना ॥ २३ ॥ कदाग्रहतमश्छन्ननयनास्ते मुधा स्वयम् । भवैरनन्तैर्युज्यन्ते, परानन्तभवाग्रहात् ॥ २४ ॥ एवं च—"अनन्तासंख्यसंख्येयानुत्सूत्रभाषिणोऽपि हि । परिणामविशेषेण, भवान् भ्राम्यन्ति संसृतौ ॥ २५ ॥" तथोक्तं महानिशीथद्वितीयाध्ययने—"जे णं तित्थगरादीणं महतीं आसायणं कुज्जा से णं अज्झवसायं पडुच्च जावणं अणंतसंसारियत्तणं लभेज्जा," यावच्छब्दमर्यादया चात्र संख्याता असंख्याता अपि भवा लभ्यन्त इति ध्येयं । उत्सूत्रभाषिणां ये चानन्तानेव कदाग्रहात् । भवानूचुरुपेक्ष्यं तत्तेषां वातूलचेष्टितम् ॥२६॥ अतः परं किल्विषिकजातीयानामसंभवः । यथाऽऽभियोगिकादीनामच्युतस्वर्गतः परम् ॥ २७ ॥

अथोर्ध्वं लान्तकस्वर्गात्समपक्षं समानदिक् । योजनानामसंख्येयकोटाकोटिव्यतिक्रमे ॥ २८ ॥ अस्ति

५

१०

१४

स्वर्गो महाशुक्रः, संपूर्णचन्द्रसंस्थितः । चत्वारः प्रतरास्तत्र, प्रतिप्रतरमिन्द्रकम् ॥ २९ ॥ आभङ्करं गृद्धिसंज्ञं, केतुश्च गरुलाभिधम् । चतस्रः पङ्क्तयस्तेभ्यः, प्राग्वत्पुष्पावकीर्णकाः ॥ ॥ ३० ॥ षड्विंशतिः पञ्चचतुरभ्यधिका विंशतिः क्रमात् । प्रतरेषु चतुर्ष्वेषु, प्रतिपङ्क्ति विमानकाः ॥ ३१ ॥ तत्राद्यप्रतरे पङ्क्तौ, पङ्क्तावष्टैव वृत्तकाः । नव च त्रिचतुःकोणाः, सर्वे चतुर्युतं शतम् ॥ ३२ ॥ द्वितीयप्रतरे त्र्यस्रा, नवाष्टाष्टापरे द्विधा । सर्वे शतं तृतीये च, प्रतरेऽष्टाष्ट ते त्रिधा ॥ ३३ ॥ सर्वे च ते षण्णवतिश्चतुर्थप्रतरे पुनः । अष्टौ त्र्यस्राश्चतुरस्रा, वृत्ताः सप्त विमानकाः ॥ ३४ ॥ सर्वे चात्र द्विनवतिः, पाङ्क्तेयाः परिकीर्तिताः । चतुरिन्द्रकयोगेऽत्र, सर्वे स्युः पङ्क्तिवृत्तकाः ॥ ३५ ॥ अष्टाविंशं शतं पङ्क्तित्र्यस्राः षट्त्रिंशकं शतम् । द्वात्रिंशं च शतं पङ्क्तिचतुरस्राः प्रकीर्तिताः ॥ ३६ ॥ एवं पङ्क्तिविमानानां, महाशुक्रे शतत्रयम् । षण्णवत्या समधिकं, शेषाः पुष्पावकीर्णकाः ॥३७॥ सहस्राण्येकोनचत्वारिंशदेव च षट्शती । चतुर्युतैव सर्वे च, चत्वारिंशत्सहस्रकाः ॥ ३८ ॥ आधारतो लान्तकवद्, द्विधाऽमी वर्णतः पुनः । शुक्लाः पीताश्च पूर्वेभ्यो, वर्णाद्युत्कर्षशालिनः ॥३९॥ पृथ्वीपिण्डः शतानीह, चतुर्विंशतिरीरितः । योजनानां शतान्यष्टौ, प्रासादाः स्युः समुच्छ्रिताः ॥४०॥ प्रथमप्रतरे चात्र, देवानां परमा स्थितिः । पादोनानि पञ्चदश, स्युः सागरोपमाण्यथ ॥ ४१ ॥ द्वितीयप्रतरे पञ्चदश सार्द्धानि तान्यथ । तृतीये च सपादानि, षोडशैतानि निश्चितम् ॥ ४२ ॥ चतुर्थे च सप्तदश, वार्द्धयः परमा स्थितिः । सर्वेष्वपि जघन्या तु, चतुर्दश पयोधयः ॥ ४३ ॥ कराः पञ्च देहमत्र, चतुर्दशाब्धिजीविनाम् । कराश्चत्वारस्त्रयोंऽशाः, पञ्चदशार्ण-

विमानपृथ्वीपिंडस्थित्यधिकारः

२०

२५



२८

वायुषाम् ॥ ४४ ॥ षोडशाब्ध्यायुषां हस्ताश्चत्वारोऽंशद्वयान्विताः । एकांशाढ्यास्ते तु सप्तदशसागरजी-
विनाम् ॥ ४५ ॥ एकादशविभक्तैककरस्यांशा अमी इह । आहारोच्छ्वासकालस्तु, प्राग्वत्सागरसंख्यया
॥ ४६ ॥ कामभोगाभिलाषे तु, तेषां संकेतिता इव । सौधर्मस्वर्गदेव्योऽत्रायान्ति स्वाहो विचिन्तिताः ॥ ४७ ॥
अथासां दिव्यसुदृशां, शृङ्गाररसकोमलम् । गीतं स्फीतं च साकूतं, स्मितं ललितकूजितम् ॥४८॥ विविधान्यो-
क्तिवक्रोक्तिव्यङ्ग्यवल्गुवचोभरम् । हृद्यगद्यपद्यनव्यभव्यकाव्यादिपद्धतिम् ॥ ४९ ॥ कङ्कणानां रणत्कारं, हार- ५
काञ्चीकलध्वनिम् । मणिमञ्जीरझंकारं, किङ्किणीनिष्कणोल्वणम् ॥ ५० ॥ कामग्रहार्त्तिशमनमन्त्राक्षरमिवाद्भु-
तम् । शब्दं शृण्वन्त एवामी, तृप्यन्ति सुरतादिव ॥ ५१ ॥ देव्योऽपि ता दूरतोऽपि, वैक्रियैः शुक्रपुद्गलैः ।
तृप्यन्त्यङ्गे परिणतैस्तादृग्दिव्यप्रभावतः ॥ ५२ ॥ अर्द्धनाराचावसानचतुःसंहननाश्रिताः । गर्भजा नरतिर्यञ्चो,
लभन्तेऽत्रामृताशिताम् ॥ ५३ ॥ अस्माच्च्युत्वा नृतिरश्चोरेव यान्ति सुधाभुजः । च्यवमानोत्पद्यमानसंख्या
त्वत्रापि पूर्ववत् ॥ ५४ ॥ अत्रोत्पत्तिच्यवनयोर्विरहः परमो भवेत् । अशीतिं दिवसानेकं, समयं च जघन्यतः १०
॥ ५५ ॥ पश्यन्ति देवा अत्रत्या, अवधिज्ञानचक्षुषा । पङ्कप्रभायास्तुर्यायाः, पृथ्व्या अधस्तलावधि ॥ ५६ ॥
अत्रत्यानां च देवानां, दिव्यां देहद्युतिं ननु । सोढुं शक्नोति सौधर्माधिपोऽपि न सुरेश्वरः ॥ ५७ ॥ श्रूयते हि
पुरा गङ्गदत्तमत्रत्यनिर्जरम् । आगच्छन्तं परिज्ञाय, नन्तुं वीरजिनेश्वरम् ॥ ५८ ॥ पूर्वागतो वज्रपाणिस्तत्तेजः
क्षन्तुमक्षमः । प्रश्नानापृच्छ्य संक्षेपात्, संभ्रान्तः प्रणमन् ययौ ॥ ५९ ॥ एतच्चार्थतो भगवतीसूत्रे षोडश- १४

शतकपञ्चमोद्देशके ॥ चतुर्थे प्रतरेऽत्रापि, महाशुक्रावतंसकः । सौधर्मवदशोकाद्यवतंसकचतुष्कयुक् ॥ ६० ॥ उत्पद्यते चात्र महाशुक्रनामा सुरेश्वरः । प्राग्वत्कृत्वाऽर्हदाद्यर्चामलंकुर्यान्महासनम् ॥ ६१ ॥ एकदेवसहस्रेण, सेव्योऽभ्यन्तरपर्षदाम् । पञ्चपल्याधिकापार्द्धषोडशाम्भोधिजीविनाम् ॥ ६२ ॥ सहस्रद्वितयेनैष, सेवितो मध्यपर्षदाम् । चतुःपल्याधिकसार्द्धपञ्चदशार्णवायुषाम् ॥ ६३ ॥ चतुःसहस्रया देवानां, सेवितो बाह्यपर्षदाम् । त्रिपल्योपमयुक्सार्द्धपञ्चदशार्णवायुषाम् ॥ ६४ ॥ सामानिकानां चत्वारिंशता सेव्यः सहस्रकैः । चतुर्द्दिशं च प्रत्येकं, तावद्भिरङ्गरक्षकैः ॥ ६५ ॥ त्रायस्त्रिंशैर्लोकपालैरनीकानीकनायकैः । अन्यैरपि महाशुक्रवासिभिः सेवितः सुरैः ॥ ६६ ॥ जम्बूद्वीपान् पूरयितुं, क्षमः षोडश सर्वतः । रूपैर्विकुर्वितैस्तिर्यगसंख्यद्वीपतोयधीन् ॥ ६७ ॥ सद्विमानसहस्राणां, चत्वारिंशत ईश्वरः । महाशुक्रं शास्ति सप्तदशपाथोनिधिस्थितिः ॥ ६८ ॥ सप्तभिः कुलकम् । अस्य यानविमानं च, भवेत्प्रीतिमनोऽभिधम् । देवः प्रीतिमनाः ख्यातो, नियुक्तस्तद्विकुर्वणे ॥ ६९ ॥





महाशुक्रादथास्त्यूर्ध्वं, सहस्रारः सुरालयः । योजनानामसंख्येयकोटाकोटीव्यतिक्रमे ॥ ७० ॥ चत्वारः प्रतरास्तत्र, प्रत्येकमिन्द्रकाश्रिताः । ब्रह्म ब्रह्महितं ब्रह्मोत्तरं च लान्तकं क्रमात् ॥ ७१ ॥ चतस्रः पङ्क्तयश्चैभ्यः, प्राग्वत्पुष्पावकीर्णकाः । द्वाविंशतिस्तथा चैकविंशतिर्विंशतिः क्रमात् ॥ ७२ ॥ एकोनविंशतिश्चेति, प्रतरेषु चतुर्ष्वपि । एकैकपङ्क्तौ संख्यैवं, विमानानां भवेदिह ॥ ७३ ॥ तत्राद्यप्रतरे

त्र्यस्रा, अष्टान्ये सप्त सप्त च । प्रतिपङ्क्त्यथ सर्वेऽत्राष्टाशीतिः पङ्क्तिवर्त्तिनः ॥ ७४ ॥ द्वितीयप्रतरे सप्त सप्तैते त्रिविधा अपि । सर्वे चतुरशीतिश्च, तृतीयप्रतरे पुनः ॥ ७५ ॥ वृत्ताः षट् सप्त सप्तान्येऽशीतिश्च सर्वसंख्यया । तुर्ये त्र्यस्राः सप्त षट् षट्, परे षट्सप्ततिः समे ॥ ७६ ॥ चतुर्णामिन्द्रकाणां च, योगेऽत्र पङ्क्तिवृत्तकाः । अष्टोत्तरशतं पङ्क्तित्र्यस्राश्च षोडशं शतम् ॥ ७७ ॥ अष्टोत्तरं शतं पङ्क्तिचतुरस्रास्ततोऽत्र च । द्वात्रिंशदधिकं पङ्क्तिविमानानां शतत्रयम् ॥ ७८ ॥ षट्शताभ्यधिकाः पञ्च, सहस्राः साष्टषष्टयः । पुष्पावकीर्णका अत्र, सर्वे ते षट्सहस्रकाः ॥ ७९ ॥ आधारवर्णोच्चत्वादि, स्यादेषां शुक्रनाकवत् । उत्पद्यन्त एषु देवतया प्राग्वन्महाशयाः ॥ ८० ॥ सपादा वार्द्धयः सप्तदशाऽऽद्ये प्रतरे स्थितिः । द्वितीये त्वब्धयः सप्तदश सार्द्धाः परा स्थितिः ॥ ८१ ॥ अष्टादश च पादोनास्तृतीये परमा स्थितिः । तुर्येऽष्टादश संपूर्णाः, सागराः स्यात्परा स्थितिः ॥८२॥ सर्वत्रापि जघन्या तु, भवेत्सप्तदशाब्धयः । अथ स्थित्यनुसारेण, देहमानं निरूप्यते ॥ ८३ ॥ चत्वारोऽत्र करा देह, उत्कृष्टस्थितिशालिनाम् । त एवैकादशैकांशयुजो जघन्यजीविनाम् ॥ ८४ ॥ अष्टादशभिरब्दानां, सहस्रैः परमायुषः । जघन्यस्थितयः सप्तदशभिर्भोजनार्थिनः ॥ ८५ ॥ उच्छ्वसन्तीह नवभिर्मासैः परमजीविनः । हीनायुषोऽष्टभिः सार्द्धैः, परे तदनुसारतः ॥ ८६ ॥ भोगो गत्यागती संख्योत्पादच्यवनगोचरा । अवधिज्ञानविषयः, सर्वमत्रापि शुक्रवत् ॥ ८७ ॥ अत्रोत्पादच्यवनयोर्गरीयान् विरहो भवेत् । शतं दिनानामल्पीयान्, स पुनः समयो मतः ॥८८॥ चतुर्थप्रतरेऽत्रापि, सहस्रारावतंसकः । अङ्कावतंसका-

५

१०

१४

दीनां, चतुर्णां मध्यतः स्थितः ॥ ८९ ॥ सहस्रारस्तत्र देवराजो राजेव राजते । प्राग्वत्कृतजिनाद्यर्चो, महासिंहासने स्थितः ॥ ९० ॥ पञ्चभिर्निर्जरशतैः, सेव्योऽभ्यन्तरपर्षदि । सप्तपल्याधिकापार्द्धाष्टादशाम्भोधिजीविभिः ॥ ॥ ९१ ॥ एकदेवसहस्रेण, सेवितो मध्यपर्षदि । सषट्पल्यसार्द्धसप्तदशतोयधिजीविना ॥ ९२ ॥ द्विसहस्र्या च देवानां, सेवितो बाह्यपर्षदाम् । पञ्चपल्ययुतापार्द्धाष्टादशार्णवजीविनाम् ॥ ९३ ॥ सामानिकामरैः सेव्यः, सहस्रैस्त्रिंशता सदा । सहस्रैस्त्रिंशतैकैकदिश्यात्मरक्षकैः सुरैः ॥ ९४ ॥ प्राग्वत्त्रायस्त्रिंशलोकपालसैन्यतदीश्वरैः । देवैरन्यैरप्युपास्यः, सहस्रारनिवासिभिः ॥ ९५ ॥ सातिरेकान् षोडशैष, जम्बूद्वीपान् विकुर्वितैः । रूपैर्भर्त्तुं क्षमस्तिर्यगसंख्यान् द्वीपवारिधीन् ॥ ९६ ॥ स विमानसहस्राणां, षण्णामैश्वर्यमन्वहम् । भुङ्क्ते भाग्यौजसां भूमिरष्टादशाब्धिजीवितः ॥ ९७ ॥ सप्तभिः कुलकं ॥ अस्य यानविमानं च, विदितं विमलाभिधम् । देवश्च विमलाभिख्यो, नियुक्तस्तद्विकुर्वणे ॥ ९८ ॥

ऊर्ध्वं चाथ सहस्रारादसंख्ययोजनोत्तरौ । आनतप्राणतौ स्वर्गौ, दक्षिणोत्तरयोः स्थितौ ॥ ९९ ॥ अनयोरेकवलयस्थयोरर्द्धार्द्धचन्द्रवत् । चत्वारः प्रतरास्तत्र, प्रतिप्रतरमिन्द्रकम् ॥ ४०० ॥ महाशुक्रसहस्रारमानतं प्राणतं क्रमात् । एभ्यश्च पङ्क्तयः प्राग्वत्पुष्पावकीर्णकास्तथा ॥ १ ॥ अष्टादश सप्तदश, षट्पञ्चाभ्यधिका दश । विमानान्येकैकपङ्क्तौ, प्रतरेषु चतुर्ष्विह ॥ २ ॥ प्रथमप्रतरे तत्र, प्रतिपङ्क्ति विमानकाः । वृत्तत्र्यस्रचतुरस्राः, षट् षट् द्वासप्ततिः समे ॥ ३ ॥ द्वितीयप्रतरे वृत्ताः, पञ्च षट् षट् परे द्विधा । सर्वेऽष्टषष्टिः पाङ्क्त्यास्तृतीय-



२०

२५

॥३५८॥

२८

प्रतरे पुनः ॥ ४ ॥ त्र्यस्राः षट् पञ्च पञ्चान्ये, चतुःषष्टिः समेऽप्यमी । तुर्ये त्रैधाः पञ्च पञ्च, षष्टिश्च सर्वसं-
ख्यया ॥ ५ ॥ चतुर्भिरिन्द्रकैर्युक्ताः, सर्वेऽत्र पङ्क्तिवृत्तकाः । अष्टाशीतिर्द्विनवतिः, पङ्क्तित्र्यस्रा इहोदिताः ॥६॥
अष्टाशीतिः पङ्क्तिचतुरस्राः सर्वे च पङ्क्तिगाः । द्वे शते अष्टषष्टिश्च, शेषाः पुष्पावकीर्णकाः ॥ ७ ॥ शतं
द्वात्रिंशदधिकं, विमानाः सर्वसंख्यया । स्वर्गद्वये समुदिते, स्युश्चत्वारि शतानि ते ॥ ८ ॥ आभाव्यत्वविभा-
गस्तु, विमानानामिहास्ति न । यतोऽनयोरेक एव, द्वयोरपि सुरेश्वरः ॥ ९ ॥ विहायसि निरालम्बा, निरा-
धाराः स्थिता अमी । जगत्स्वभावतः शुक्लवर्णाश्च रुचिरप्रभाः ॥ १० ॥ योजनानां नव शतान्येषु प्रासादतु-
ङ्गता । पृथ्वीपिण्डः शतान्यत्र, त्रयोविंशतिरीरितः ॥ ११ ॥ एषां पूर्वोदितानां च, विमानानां शिरोऽग्रतः ।
ध्वजस्तत्तद्वर्ण एव, स्यान्मरुच्चलाञ्चलः ॥ १२ ॥ अथ सर्वे शुक्लवर्णा, एवैतेऽनुत्तरावधि । किन्तूत्तरोत्तरो-
त्कृष्टवर्णा नभःप्रतिष्ठिताः ॥१३॥ उत्पन्नाः प्राग्वदेतेषु, देवाः सेवाकृतोऽर्हताम् । सुखानि भुञ्जते प्राज्यपुण्यप्रा-
ग्भारभारिणः ॥१४॥ तत्र दक्षिणदिग्वर्त्तिन्यानतस्वर्गसंगते । प्रथमप्रतरेऽमीषां, स्थितिरुत्कर्षतो भवेत् ॥ १५ ॥
अष्टादश सपादा वै, द्वितीयप्रतरेऽब्धयः । सार्द्धा अष्टादश पादन्यूना एकोनविंशतिः ॥ १६ ॥ तृतीयप्रतरे ते
स्युस्तुर्ये चैकोनविंशतिः । सर्वत्रापि जघन्या तु, स्युरष्टादश वार्द्धयः ॥१७॥ प्राणतस्वर्गसंबन्धिन्यथोत्तरदिशि
स्थिते । प्रथमप्रतरे ज्येष्ठा, स्थितिर्भवति नाकिनाम् ॥ १८ ॥ एकोनविंशतिस्तोयधयस्तुर्यलवाधिकाः । एकोन-
विंशतिः सार्द्धा, द्वितीयप्रतरेऽब्धयः ॥ १९ ॥ तृतीयप्रतरेऽब्धीनां, पादोना विंशतिः स्थितिः । तुर्ये च प्रतरे

५
१०
१४

स्थितिमनः-सुरताधिकारः

ज्येष्ठा, स्थितिर्विंशतिरब्धयः ॥ २० ॥ सर्वत्रापि जघन्या तु, स्थितिरेकोनविंशतिः । पयोधयो देहमानमथ स्थित्यनुसारतः ॥ २१ ॥ कराश्चत्वार एवाङ्गमष्टादशाब्धिजीविनाम् । ते त्रयोऽंशास्त्रयश्चैकोनविंशत्यब्धिजीविनाम् ॥ २२ ॥ विंशत्यब्धिस्थितीनां तु, देहमानं करात्रयः । द्विभागाढ्या मध्यमीयायुषां तदनुसारतः ॥ २३ ॥ अष्टादशभिरेकोनविंशत्याऽब्दसहस्रकैः । विंशत्या च यथायोगममी आहारकाङ्क्षिणः ॥ २४ ॥ नवभिः सार्द्धनवभिर्मासैरष्टभिरेव च । उच्छ्वसन्ति यथायोगं, स्वस्वस्थित्यनुसारतः ॥ २५ ॥ रिरंसवस्त्वमी देवाः, सौधर्मस्वर्गवासिनीः । विचिन्तयन्ति चित्तेनानतस्वर्गनिवासिनः ॥ २६ ॥ प्राणतस्वर्गदेवास्तु, विचिन्तयन्ति चेतसा । रिरंसया स्वभोगार्हा, ईशानस्वर्गवासिनीः ॥ २७ ॥ देव्योऽपि ताः कृतस्फारशृङ्गारा मदनोद्धुराः । विदेशस्थाः स्त्रिय इव, कान्तमभ्येतुमक्षमाः ॥ २८ ॥ स्वस्थानस्था एव चेतांस्युच्चावचानि बिभ्रति । देवा अपि तथावस्थास्ताः संकल्प्य स्वचेतसा ॥ २९ ॥ उच्चावचानि चेतांसि, कुर्वन्तो दूरतोऽपि हि । सुरतादिव तृप्यन्ति, मन्दपुंवेदवेदनाः ॥ ३० ॥ देव्योऽपि तास्तथा दूरादपि दिव्यानुभावतः । सर्वाङ्गेषु परिणतैस्तुष्यन्ति शुक्रपुद्गलैः ॥ ३१ ॥ यत ऊर्ध्वं सहस्रारान्न देवीनां गतागते । तत्रस्था एव तेनैते, भजन्ते भोगवैभवम् ॥ ३२ ॥ यश्च तासां सान्तराणामसंख्यैरपि योजनैः । शुक्रसंचारोऽनुभावात्, स ह्यचिन्त्यः सुधाभुजाम् ॥ ३३ ॥ तथा च मूलसंग्रहणीटीकायां हरिभद्रसूरिः—"देव्यः खल्वपरिगृहीताः सहस्रारं यावद्गच्छन्ति", तथा च भगवानार्यश्यामोऽपि प्रज्ञापनायामाह—"तत्थ णं जे ते मणपरियारगा देवा तेसिं इच्छामणे समुप्पज्जइ,

२० २५ ॥ ३५९ ॥ २८

इच्छामो णं अच्छराहिं सद्धिं मणपरियारणं करेत्तए, तओ णं तेहिं देवेहिं एवं मणसीकए समाणे खिप्पामेव ताओ अच्छराओ तत्थ गयाओ चेव समाणीओ अणुत्तराइं उच्चावयाइं मणाइं पहारेमाणीओ चिट्ठंति, तओ णं ते देवा ताहिं अच्छराहिं सद्धिं मणपरियारणं करेंति, 'आरेण अच्चुयाओ गमणागमणं तु देवदेवीण'मित्यादिपूर्वसंग्रहणीगतप्रक्षेपगाथायास्तु संवादो न दृश्यते, " इति लघुसंग्रहणीवृत्तौ ॥ प्रज्ञप्ताः सर्वतः स्तोका, देवा अप्रविचारकाः । स्युः संख्येयगुणास्तेभ्यश्चेतःसुरतसेविनः ॥ ३४ ॥ तेभ्यः क्रमाच्छब्दरूपस्पर्शसंभोगसेविनः । यथोत्तरमसंख्येयगुणा उक्ता जिनेश्वरैः ॥ ३५ ॥ आद्यैस्त्रिभिः संहननैरुपेता गर्भजा नराः । उत्पद्यन्त एष्वमीभ्यश्च्युत्वाऽप्यनन्तरे भवे ॥ ३६ ॥ गर्भजेषु नरेष्वेवोत्पद्यन्ते नापरेष्वथ । अनुत्तरान्तदेवानामेवं ज्ञेये गतागती ॥ ३७ ॥ एकेन समयेनामी, च्यवन्त उद्भवन्ति च । संख्येया एव नासंख्याः, संख्येयत्वान्नृणामिह ॥ ३८ ॥ अत्रोत्पत्तिच्यवनयोर्विरहः परमो भवेत् । वर्षादर्वागेव मासाः, संख्येयाः प्राणतेऽपि ते ॥ ३९ ॥ अब्दादर्वागेव किंत्वानतव्यपेक्षयाधिकाः । अग्रेऽप्येवं भावनीयं, बुधैर्वर्षशतादिषु ॥ ४० ॥ संपूर्णमभविष्यच्चेद्वर्षवर्षशतादिकम् । तत्तदेवाकथयिष्यन्, सिद्धान्ते गणधारिणः ॥ ४१ ॥ संख्येयानेव मासादीन्, वर्षादेरविवक्षया । केचिन्मन्यन्तेऽविशेषाद्वर्षादेरधिकानपि ॥४२॥ तथाहुः संग्रहणीवृत्तौ—"विशेषव्याख्या चैषा हारिभद्रमूलटीकानुसारतः, केचित्तु सामान्येन व्याचक्षते" पञ्चमीं पृथिवीं यावत्पश्यन्त्यवधिचक्षुषा । आनताः प्राणताश्चैनामेवानल्पाच्छपर्यवाम् ॥ ४३ ॥ आरणाच्युतदेवा अप्येनामेवा-

५

१०

१४

तिनिर्मलाम् । बहुपर्यायां च तत्राप्यारणेभ्यः परेऽधिकाम् ॥ ४४ ॥ अथात्र प्रतरे तुर्ये, स्यात्प्राणतावतंसकः । सौधर्मवदशोकाद्यवतंसकचतुष्कयुक् ॥ ४५ ॥ प्राणतः स्वःपतिस्तत्रोत्पन्नोऽत्यन्तपराक्रमः । कृत्वाऽर्हत्प्रतिमाद्यर्चां, सिंहासने निषीदति ॥ ४६ ॥ शतैरर्द्धतृतीयैः स, सेव्योऽभ्यन्तरपर्षदाम् । पञ्चपल्याधिकैकोनविंशत्यम्भोधिजीविनाम् ॥ ४७ ॥ पञ्चभिश्च देवशतैर्जुष्टो मध्यमपर्षदाम् । चतुःपल्याधिकैकोनविंशत्यर्णवजीविभिः ॥ ४८ ॥ एकदेवसहस्रेण, सेवितो बाह्यपर्षदि । स त्रिपल्योपमैकोनविंशत्यर्णवजीविना ॥ ४९ ॥ सामानिकानां विंशत्या, सहस्रैः परितो वृतः। एकैकस्यां दिशि वृतस्तावद्भिरङ्गरक्षकैः ॥ ५० ॥ त्रायस्त्रिंशैर्लोकपालैः, सैन्यैः सैन्याधिकारिभिः । आनतप्राणतस्वर्गवासिभिश्चापरैरपि ॥५१॥ अनेकैर्देवनिकरैः, समाराधितशासनः। द्वयोस्ताविषयोरीष्टे, स विंशत्यब्धिजीवितः ॥५२॥ षड्भिः कुलकं॥ अस्य यानविमानं च, वरनाम्ना प्रकीर्त्तितम् । वराभिधानो देवश्च, नियुक्तस्तद्विकुर्वणे ॥ ५३ ॥ द्वात्रिंशदेष संपूर्णान्, जम्बूद्वीपान् विकुर्वितैः । रूपैर्भर्त्तुं क्षमस्तिर्यगसंख्यान् द्वीपवारिधीन् ॥ ५४ ॥

अथानतप्राणतयोरूर्ध्वं दूरमतिक्रमे । असंख्येययोजनानामुभौ स्वर्गौ प्रतिष्ठितौ ॥५५॥ आरणाच्युतनामानौ, सधामानौ मणीमयैः। विमानैर्योगविद् ध्यानैरिवानन्दमहोमयैः ॥५६॥ युग्मम् । चत्वारः प्रतराः प्राग्वद्, द्वयोः साधारणा इह । प्रतिप्रतरमेकैकं, मध्यभागे तथेन्द्रकम् ॥ ५७ ॥ पुष्पसंज्ञमलङ्कारं, चारणं चाच्युतं क्रमात् । एभ्यश्चतुर्दिशं प्राग्वत्पङ्क्तयश्च प्रकीर्णकाः ॥ ५८ ॥ चतुस्त्रिद्व्येकसंयुक्ता, दशैतेषु क्रमादिह । प्रतिपङ्क्ति विमा-



२०

२५
॥ ३६० ॥
२८

नानि, प्रतरेषु चतुर्ष्वपि ॥ ५९ ॥ अथाद्यप्रतरे पङ्क्तौ, पङ्क्तौ वृत्ता विमानकाः । चत्वारोऽन्ये पञ्च पञ्च, षट्पञ्चा-
शत्समेऽप्यमी ॥ ६० ॥ द्वितीयप्रतरे त्र्यस्राः, पञ्चान्ये द्विविधा अपि । चत्वारश्चत्वार एव, द्विपञ्चाशत्समेऽ-
प्यमी ॥ ६१ ॥ चत्वारश्चत्वार एव, तृतीये त्रिविधा अपि । अष्टचत्वारिंशदेवं, पाङ्क्तेयाः सर्वसंख्यया
॥ ६२ ॥ चतुर्थप्रतरे वृत्तास्त्रयोऽन्ये द्विविधा अपि । चत्वारः स्युश्चतुश्चत्वारिंशच्च सर्वसंख्यया ॥ ६३ ॥
सर्वेऽत्र पङ्क्तिवृत्ताश्च, चतुर्भिरिन्द्रकैः सह । चतुःषष्टिस्तथा पङ्क्तित्रिकोणाश्च द्विसप्ततिः ॥ ६४ ॥ अष्टषष्टिः
पङ्क्तिचतुःकोणाः सर्वे शतद्वयम् । चतुर्युतं षण्णवतिश्चेह पुष्पावकीर्णकाः ॥ ६५ ॥ एवं शतानि त्रीण्यत्र,
विमानाः सर्वसंख्यया । एष्वानतप्राणतवद्वर्णाधारोच्चतादिकम् ॥ ६६ ॥ अत्र दक्षिणदिग्भागे, आरणस्वर्ग-
वर्त्तिषु । नाकिनां स्थितिरुत्कर्षात् प्रतरेषु चतुर्ष्वपि ॥ ६७ ॥ सपादविंशतिः सार्द्धविंशतिश्च यथाक्रमम् ।
पादोनैकविंशतिश्च, वार्द्धीनां चैकविंशतिः ॥ ६८ ॥ अथाच्युतस्वर्गसंबन्धिषूदग्भागवर्त्तिषु । प्रतरेषु चतुर्ष्वे-
षूत्कृष्टा सुधाभुजां स्थितिः ॥ ६९ ॥ सपादैकविंशतिश्च, सार्द्धैकविंशतिः क्रमात् । पादोनद्वाविंशतिश्च,
द्वाविंशतिश्च वार्द्धयः ॥ ७० ॥ सर्वत्राप्यारणे वारांनिधयो विंशतिर्लघुः । अच्युते सागरा एकविंशतिः सा
निरूपिता ॥ ७१ ॥ द्वाभ्यामेकदशांशाभ्यां, युक्ता इह करास्त्रयः । देहप्रमाणं देवानां, विंशत्यम्भोधिजीविनाम्
॥ ७२ ॥ त एव सैकांशा एकविंशत्युदधिजीविनाम् । त्रयः कराश्च संपूर्णा, द्वाविंशत्यर्णवायुषाम् ॥ ७३ ॥
विंशत्या चैकविंशत्या, द्वाविंशत्या सहस्रकैः । स्वस्वस्थित्यनुसारेण, वर्षैराहारकाङ्क्षिणः ॥ ७४ ॥ दशभिः सार्द्ध-

५

१०

१५

दशभिरेकादशभिरेव च । मासैरमी उच्छ्वसन्ति, स्थितिसागरसंख्यया ॥७५॥ च्युतानुत्पत्तौ च संख्या, भोगो गत्यागती इह । अवधिज्ञानसीमा च, सर्वं प्राणतनाकवत् ॥ ७६ ॥ किलाद्याभ्यामेव संहननाभ्यां सत्त्वशालिनः । आराधिताईताचारा, उत्पद्यन्तेऽत्र सद्गुणाः ॥ ७७ ॥ च्युत्युत्पत्तिनिरोधोऽत्र, संख्येया वत्सरा गुरुः । आरणेऽब्दशतादर्वाक्, त एव चाच्युतेऽधिकाः ॥७८॥ अत्रापि प्रतरे तुर्येऽच्युतेऽच्युतावतंसकः । इन्द्रानवद्धवेदंकाग्रवतंसकमध्यगः ॥ ७९ ॥ तत्राच्युतस्वर्गपतिर्वर्त्तते महामतिः । योऽसौ दाशरथेरासीत्प्रेयसी पूर्वजन्मनि ॥८०॥ शुद्धाऽशुद्धेति को वेद, स्थिता रावणमन्दिरे । किमाहताऽपरीक्ष्येति, लोकापवादभीरुणा ॥८१॥ रामेण सा सुशीलापि, सगर्भा तत्यजे वने । सतां लोकापवादो हि, मरणादपि दुःसहः ॥८२॥ युग्मम् । निन्दयन्ती सती साऽथ, विपाकं पूर्वकर्मणाम् । भयोद्भ्रान्ता परिश्रान्ता, बभ्रामैतस्ततो वने ॥ ८३ ॥ पुण्डरीकपुराधीशः, पुण्डरीकोल्लसद्यशाः । गजवाहनराजस्य, वधूदेव्याश्च नन्दनः ॥ ८४ ॥ महार्हतो महासत्त्वः, परनारीसहोदरः । धार्मिको नृपतिर्वज्रजङ्घस्तत्र समागतः ॥ ८५ ॥ स्वीकृत्य भगिनीत्वेन, तां निनाय स्वमन्दिरम् । तत्र भ्रातृगृह इव, वसति स्म निराकुला ॥८६॥ क्रमात्तन्नारदात् श्रुत्वा, भामण्डलमहीपतिः । पुण्डरीकपुरे सीतां, समुपेयाय सत्वरः ॥ ८७ ॥ ततश्च जानकी तत्र, सुषुवे दोष्मिणौ सुतौ । नामतोऽनङ्गलवणं, मदनाङ्कुशमप्यथ ॥ ८८ ॥ पितुः स्वरूपमप्राप्तां, मातरं तौ महाशयौ । ज्ञातपूर्वं व्यतिकरमबोचत् साऽपि साश्रुदृक् ॥ ८९ ॥ ततो निरागसो मातुस्त्यागात्पितरि सक्रुधौ । युद्धाय धीरौ पितरमभ्यषेणयतां द्रुतम् ॥९०॥ उत्पन्नः कोऽपि वैरीति,

अच्युता सीताधिकारः

२०

२५

॥३६१॥

२८

ततस्तौ बलिनौ तीक्ष्णैर्निर्जित्य रणकर्मभिः ।
विषण्णौ रामलक्ष्मणौ । चतुरङ्गचमूचक्रैः, सन्नह्येते स सायुधौ ॥९१॥ ततस्तौ बलिनौ तीक्ष्णैर्निर्जित्य रणकर्मभिः ।
विषण्णौ रामलक्ष्मणौ । चतुरङ्गचमूचक्रैः, सन्नह्येते स सायुधौ ॥ पुत्रौ तावप्युपालक्ष्य, तुष्टौ पुष्टौजसावुभौ । भुजोपपीड-
नारदावेदितौ तातं, पितृव्यं च प्रणेमतुः ॥ ९२ ॥ पुत्रौ तावप्युपालक्ष्य, तुष्टौ पुष्टौजसावुभौ । भुजोपपीड-
नारदावेदितौ तातं, पितृव्यं च प्रणेमतुः ॥ ९२ ॥ भवतोर्जननी क्वेति, पृष्टौ ताभ्यां च दर्शिता । गृहायाहूयमाना च,
मालिङ्ग्य, भेजाते परमां मुदम् ॥ ९३ ॥ भवतोर्जननी क्वेति, पृष्टौ ताभ्यां च दर्शिता । गृहायाहूयमाना च,
सती दिव्यमयाचत ॥९४॥ ततः स खातिकां रामोऽङ्गारपूर्णामरीरचत् । पुरुषद्वयदघ्नीं चायतां हस्तशतत्रयीम्
॥ ९५ ॥ पश्यत्सु सर्वलोकेषु, सुरासुरनरादिषु । चमत्कारात्पुलकितेष्वित्यूचे सा कृताञ्जलिः ॥ ९६ ॥ हंहो
भ्रातर्बृहद्भानो !, जागरूको भवान् भुवि । पाणिग्रहणकालेऽपि, त्वमेव प्रतिभूरभूः ॥९७॥ जाग्रत्या वा स्वपत्या वा,
मनोवाक्कायगोचरः । कदापि पतिभावो मे, राघवादपरे यदि ॥ ९८ ॥ तदा देहमिदं दुष्टं, दह निर्वह कौश-
लम् । न पाप्मने ते स्त्रीहत्या, दुष्टनिग्रहकारिणः ॥ ९९ ॥ त्रिधा च यदि शुद्धाऽहं, तर्हि दर्शय कौतुकम् ।
लोकानेतान् जलीभूय, भूयस्तरङ्गरङ्गितैः ॥ ५०० ॥ अत्रान्तरे च वैताढ्यस्योत्तरश्रेणिवर्त्तिनः । हरिविक्रमभू-
भर्त्तुर्नन्दनो जयभूषणः ॥ १ ॥ ऊढाष्टशतभार्यः स्वकान्तां किरणमण्डलाम् । सुप्तां हेमशिखाख्येन, समं
मातुलसूनुना ॥२॥ दृष्ट्वा निर्वासयामास, दीक्षां च स्वयमाददे । विपद्य समभूत् सापि, विद्युद्दंष्ट्रेति राक्षसी ॥३॥
जयभूषणसाधोश्च, तदाऽयोध्यापुराद्बहिः । तया कृतोपसर्गस्योत्पेदे केवलमुज्ज्वलम् ॥ ४ ॥ आजग्मुस्तत्र
शक्राद्यास्तदुत्सवविधित्सया । आयान्तो ददृशुस्तं च, सीताव्यतिकरं पथि ॥ ५ ॥ ततस्तस्या महासत्याः,
साहाय्यायादिशद्धरिः । पदात्यनीकेशं साधोः, समीपे च स्वयं ययौ ॥ ६ ॥ ततस्तस्यां खातिकायां, सा सीता

निर्भयाऽविशत् । अभूच्च सुरसाहाय्यात्क्षणादप्युदकैर्भृता ॥ ७ ॥ तदुच्छलज्जलं तस्या, उद्वेलस्येव तोयधेः । उत्प्लावयामास मञ्चांस्तुङ्गान् द्रष्टृजनाश्रितान् ॥ ८ ॥ उत्पतन्त्यम्बरे विद्याधरा भीतास्ततो जलात् । चुक्रुशुर्भूचराश्चैवं, पाहि सीते ! महासति ॥ ९ ॥ स्वस्थं चक्रे तदुदकं, ततः संस्पृश्य पाणिना । अचिन्त्याच्छीलमाहात्म्याल्लोके किं किं न जायते ? ॥ १० ॥ तदाऽस्याः शीललीलाभिरनलं सलिलीकृतम् । निरीक्ष्य देवा ननृतुर्ववृषुः कुसुमादि च ॥ ११ ॥ जहृषुः स्वजनाः सर्वे, पौरा जयजयारवैः । तुष्टुवुस्तां सतीं दिव्यो, नव्योऽजनि महोत्सवः ॥ १२ ॥ इत्युन्मृष्टकलङ्कां तां, कान्तां नीत्वाऽऽत्मना सह । जगाम सपरीवारो, रामः केवलिनोऽन्तिके ॥ १३ ॥ पप्रच्छ देशनान्ते च, रामः पूर्वभवान्निजान् । तांश्चाचख्यौ यथाभूतान्, केवली जयभूषणः ॥ १४ ॥ सीताऽपि प्राप्तवैराग्या, संसारासारतेक्षिणी । दीक्षां पार्श्वे मुनेरस्य, जग्राहोत्साहतो रयात् ॥ १५ ॥ षष्टिं वर्षाणि चारित्रमाराध्य विमलाशयात् । त्रयस्त्रिंशदहोरात्रीं, विहितानशना ततः ॥ १६ ॥ मृत्वा समाधिना स्वर्गेऽच्युते लेभेऽच्युतेन्द्रताम् । सोऽथ प्राग्वज्जिनाद्यर्चां, कृत्वा सदसि तिष्ठति ॥ १७ ॥ शतेन पञ्चविंशेन, सेव्योऽभ्यन्तरपर्षदि । एकविंशत्यब्धिसप्तपल्यस्थितिकनाकिनाम् ॥ १८ ॥ सार्द्धद्विशत्या देवानां, मध्यपर्षदि सेवितः । षट्पल्योपमयुक्तैकविंशत्युदधिजीविनाम् ॥ १९ ॥ सेव्यः पर्षदि बाह्यायां, पञ्चभिर्नाकिनां शतैः । एकविंशत्यब्धिपञ्चपल्योपममितायुषाम् ॥ २० ॥ सामानिकानां दशभिः, सहस्रैः सेवितक्रमः । एकैकदिशि तावद्भिस्तावद्भिश्चात्मरक्षकैः ॥ २१ ॥ सैन्यैः सैन्याधिपैस्त्रायस्त्रिंशकैर्लोकपालकैः ॥ सेव्यः परैरपि

अच्युते सीतेन्द्राधिकारः

२०

२५

॥ ३६२ ॥

२८

सुरैरारणाच्युतवासिभिः ॥ २२ ॥ द्वात्रिंशत्साधिकान् शक्तो, जम्बूद्वीपान् विकुर्वितैः । रूपैः पूरयितुं तिर्यक्, चासंख्यद्वीपवारिधीन् ॥ २३ ॥ भुङ्क्ते साम्राज्यमुभयोरारणाच्युतनाकयोः । विमानत्रिशतीनेता, द्वाविंशत्युदधिस्थितिः ॥ २४ ॥ सप्तभिः कुलकं ॥ अस्य यानविमानं स्यात्सर्वतोभद्रसंज्ञकम् । सर्वतोभद्रदेवश्च, नियुक्तस्तद्विकुर्वणे ॥ २५ ॥ स्थानाङ्गपञ्चमस्थाने तु आनतप्राणतयोरारणाच्युतयोश्च प्रत्येकमिन्द्रा विवक्षिता दृश्यन्ते, तथा च तत्सूत्रं—'जहा सक्कस्स तहा सव्वेसिं दाहिणिल्लाणं जाव आरणस्स, जहा ईसाणस्स तहा सव्वेसिं उत्तरिल्लाणं जाव अच्चुयस्स" एतद्वृत्तावपि देवेन्द्रस्तवाभिधानप्रकीर्णक इव द्वादशानामिंद्राणां विवक्षणादारणस्येत्याद्युक्तमिति संभाव्यते, अन्यथा चतुर्षु द्वावेवेन्द्रावत आरणस्येत्याद्यनुपपन्नं स्यादिति, प्रज्ञापनाजीवाभिगमसूत्रादौ तु दशैव वैमानिकेन्द्रा उक्ता इति प्रतीतमेव ॥ अच्युतस्वर्गपर्यन्तमेषु वैमानिकेष्विति । यथासंभवमिन्द्राद्या, भवन्ति दशधा सुराः ॥ २६ ॥ तथाहि—इन्द्राः सामानिकास्त्रायस्त्रिंशास्त्रिविधपार्षदाः । आत्मरक्षा लोकपाला, आनीकाश्च प्रकीर्णकाः ॥ २७ ॥ आभियोग्याः किल्बिषिका, एवं व्यवस्थयाऽन्विताः । अत एव च कल्पोपपन्ना वैमानिका अमी ॥ २८ ॥ एवं च भवनाधीशेष्वप्येते दशधा सुराः । भवन्त्यष्टविधा एव, ज्योतिष्कव्यन्तरेषु तु ॥ २९ ॥ जगत्स्वाभाव्यतस्तत्र, द्वौ भेदौ भवतो न यत् । त्रायस्त्रिंशा लोकपाला, अच्युतात्परतः पुनः ॥ ३० ॥ ग्रैवेयकानुत्तरेषु, स्युः सर्वेऽप्यहमिन्द्रकाः । देवा एकविधा एव, कल्पातीता अमी ततः ॥ ३१ ॥ आरणाच्युतनाकाभ्यां, दूरमूर्ध्वं व्यतिक्रमे । नवग्रैवेयकाभिख्याः, प्रतरा दधति श्रियम् ॥३२॥

५ १० १४

अधस्तनं मध्यमं च, तथोपरितनं त्रिकम्। त्रिधाऽमी रत्नरुग्रम्याः, संपूर्णचन्द्रसंस्थिताः ॥ ३३ ॥ अनुत्तर-मुखस्यास्य, लोकस्य पुरुषाकृतेः। दधते कण्ठपीठेऽमी, मणिग्रैवेयकश्रियम् ॥ ३४ ॥ प्रतरेषु नवस्वेषु, क्रमादेकैकमिन्द्रकं। सुदर्शनं सुप्रबुद्धं, मनोरमं ततः परम् ॥ ३५ ॥ विमानं सर्वतोभद्रं, विशालं सुमनोऽभिधम्। ततः सौमनसं प्रीतिकरमादित्यसंज्ञकम् ॥ ३६ ॥ एभ्यश्च पङ्क्तयो दिक्षु, विमानानां विनिर्गताः। पङ्क्तौ पङ्क्तौ दश नव, विमानान्यष्ट सप्त षट् ॥ ३७ ॥ पञ्च चत्वारि च त्रीणि, द्वे चैतेषु यथाक्रमम्। आद्यग्रैवेयके तत्र, प्रतिपङ्क्ति विमानकाः ॥ ३८ ॥ त्र्यस्राश्चत्वारो द्विधाऽन्ये, त्रयस्त्रयः समे त्वमी। चत्वारिंशत्पङ्क्तिगता, द्वितीयप्रतरे पुनः ॥ ३९ ॥ त्रयस्त्रयस्त्रिधाऽप्येते, षट्त्रिंशत्पङ्क्तिगाः समे। तृतीयप्रतरे वृत्तौ, द्वौ द्विधाऽन्ये त्रयस्त्रयः ॥ ४० ॥ द्वात्रिंशत्पङ्क्तिगाः सर्वे, चतुर्थप्रतरे पुनः। त्र्यस्रास्त्रयः परौ द्वौ द्वौ, सर्वेऽष्टाविंशतिर्मताः ॥ ४१ ॥ ग्रैवेयके पञ्चमे च, त्रेधाप्येते द्वयं द्वयम्। सर्वे चतुर्विंशतिश्च, षष्ठे ग्रैवेयके ततः ॥ ४२ ॥ द्वौ द्वौ स्तस्त्रिचतुःकोणावेको वृत्तः समे पुनः। विंशतिः पङ्क्तिगा ग्रैवेयके ततश्च सप्तमे ॥ ४३ ॥ एको वृत्तश्चतुःकोण, एकोऽथ त्र्यस्रयोर्द्वयम्। षोडशैवमष्टमे च, त्रिधाप्येकैक इष्यते ॥ ४४ ॥ सर्वे द्वादश नवमग्रैवेयके च पङ्क्तिषु। केवलं त्रिचतुःकोणावेकैकावष्ट तेऽखिलाः ॥ ४५ ॥ अधस्तनत्रिके चैवं, संयुक्तास्त्रिभिरिन्द्रकैः। पञ्चत्रिंशत्पङ्क्तिवृत्ता, विमाना वर्णिता जिनैः ॥ ४६ ॥ चत्वारिंशच्च षट्त्रिंशत्पङ्क्तित्रिचतुरस्रकाः। एवं पाङ्क्तेयाश्च सर्वे, शतमेकादशोत्तरम् ॥ ४७ ॥ तत्रापि—एकचत्वारिंशदाद्ये, सप्तत्रिंशद् द्वितीयके। ग्रैवेयके तृतीये च, त्रयस्त्रिंशत् समे



२०

२५
॥३६३॥

२८

स्मृताः ॥ ४८ ॥ पुष्पावकीर्णकाभावादाद्यग्रैवेयकत्रिके । सर्वसंख्यापि पाङ्क्तेयसंख्याया नातिरिच्यते ॥ ४९ ॥ स्युस्त्रयोत्रिंशतिर्वृत्ताः, सेन्द्रका मध्यमत्रिके । त्र्यस्रा अष्टाविंशतिश्च, चतुरस्रा जिनैर्मिताः ॥ ५० ॥ द्वात्रिंशत्पुष्पावकीर्णाः, ससोत्तरं शतं समे । तृतीये च त्रिके वृत्ता, एकादश सहेन्द्रकाः ॥ ५१ ॥ त्र्यस्राश्च चतुरस्राश्च, षोडश द्वादश क्रमात् । पुष्पावकीर्णका एकषष्टिः शतं च मीलिताः ॥५२॥ ग्रैवेयकेषु नवसु, विमानाः सर्वसंख्यया । अष्टादशाढ्या त्रिशती, वृत्ताश्चैकोनसप्ततिः ॥ ५३ ॥ त्र्यस्राश्चतुरशीतिश्च, चतुरस्रा द्विसप्ततिः । सर्वाग्रेण त्रिनवतिश्चैषु पुष्पावकीर्णकाः ॥ ५४ ॥ द्वाविंशतिर्योजनानां, शतानि पीठपुष्टता । प्रासादाश्च दश शतान्यत्रोच्चाः कम्रकेतवः ॥ ५५ ॥ एषु देवतयोत्पन्ना, जीवाः सुकृतशालिनः । सुखानि भुञ्जते मञ्जुतेजसः सततोत्सवाः ॥५६॥ सर्वेऽहमिन्द्रा अप्रेष्या, अनीशा अपुरोहिताः । तुल्यानुभावास्तुल्याभावलरूपयशःसुखाः ॥ ५७ ॥ स्वाभाविकाङ्गा एवामी, अकृतोत्तरवैक्रियाः । वस्त्रालङ्काररहिताः, प्रकृतिस्था विभूषया ॥ ५८ ॥ तथाहुः—"गेवेज्जगदेवाणं भंते ! सरीरा केरिसा विभूसाए पण्णत्ता ?, गो० ! गेविज्जगदेवाणं एगे भवधारणिज्जे सरीरे, ते णं आभरणवसणरहिया पगतित्था विभूसाए पण्णत्ता." इति जीवाभिगमे । यथाजाता अपि सदा, दर्शनीया मनोरमाः । प्रसृत्वरैर्द्युतिभरैर्द्योतयन्तो दिशो दश ॥ ५९ ॥ यास्तु सन्ति तत्र चैत्ये, प्रतिमाः श्रीमदर्हताम् । भावतस्ताः पूजयन्ति, साधुवद् द्रव्यतस्तु न ॥ ६० ॥ गीतवादित्रनाट्यादिविनोदो नात्र कर्हिचित् । गमनागमनं कल्याणकादिष्वपि न क्वचित् ॥ ६१ ॥ तथोक्तं तत्त्वार्थवृत्तौ—"ग्रैवेयकादयस्तु यथावस्थिता

५

१०

१४

एव कायवाङ्मनोभिरभ्युत्थानाञ्जलिप्रणिपाततथागुणवचनैकाग्र्यभावनाभिर्भगवतोऽर्हतो नमस्यन्ती"ति। सुरते तु कदाप्येषां, मनोऽपि न भवेन्मनाक्। निर्मोहानामिवर्षीणां, सदाप्यविकृतात्मनाम् ॥ ६२ ॥ न चैवं गीतसंगीतसुरतास्वादवर्जितम्। किमेतेषां सुखं नाम, स्पृहणीयं यदङ्गिनाम्? ॥ ६३ ॥ अत्रोच्यतेऽत्यन्तमन्दपुंवेदोदयिनो ह्यमी। तत्प्राक्तनेभ्यः सर्वेभ्योऽनन्तघ्नसुखशालिनः ॥ ६४ ॥ तथाहि कायसेविभ्योऽनन्तघ्नसुखशालिनः। स्युः स्पर्शसेविनस्तेभ्यस्तथैव रूपसेविनः ॥ ६५ ॥ शब्दोपभोगिनस्तेभ्यस्तेभ्यश्चित्तोपभोगिनः। तेभ्योऽनन्तगुणसुखा, रतेच्छावर्जिताः सुराः ॥ ६६ ॥ यच्चैषां तनुमोहानां, सुखं संतुष्टचेतसाम्। वीतरागाणामिवोच्चैस्तदन्येषां कुतो भवेत्? ॥ ६७ ॥ मोहानुदयजं सौख्यं, स्वाभाविकमतिस्थिरम्। सोपाधिकं वैषयिकं, वस्तुतो दुःखमेव तत् ॥ ६८ ॥ भोज्याङ्गनादयो येऽत्र, गीयन्ते सुखहेतवः। रोचन्ते न त एव क्षुत्कामाद्यार्त्ति विनाऽङ्गिनाम् ॥ ६९ ॥ ततो दुःखप्रतीकाररूपा एते मतिभ्रमात्। सुखत्वेन मता लोकैर्हन्त मोहविडम्बितैः ॥ ७० ॥ उक्तं च—"तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि, क्षुधार्त्तः सन् शालीन् कवलयति मांसपाकवलितान्। प्रदीप्ते कामाग्नौ दहति तनुमाश्लिष्यति वधूं, प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥ ७१ ॥" नन्वेवं यदि निर्वाणमदनज्वलनाः स्वतः। कथं ब्रह्मव्रतं नैते, स्वीकुर्वन्ति महाधियः ॥ ७२ ॥ अत्रोच्यते देवभवस्वभावेन कदापि हि। एषां विरत्यभिप्रायो, नाल्पीयानपि संभवेत् ॥ ७३ ॥ भवस्वभाववैचित्र्यं, चाचिन्त्यं पशवोऽपि यत्। भवन्ति देशविरतास्त्रिज्ञाना अप्यमी तु न ॥ ७४ ॥ आद्यग्रैवे-

ग्रैवेयाः स्पर्शादिसुखे क्रमाधिक्यं

२०

२५



२८

यकेऽब्धीषां, स्थितिरुत्कर्षतोऽब्धयः । स्युस्त्रयोविंशतिर्लघ्वी, द्वाविंशतिः पयोधयः ॥ ७५ ॥ कनिष्ठायाः सम-
धिकमारभ्य समयादिकम् । यावज्ज्येष्ठां समयोनां, सर्वत्र मध्यमा स्थितिः ॥ ७६ ॥ द्वौ करावष्टभिर्भागैर्यु-
क्तावेकादशोद्भवैः । देहो ज्येष्ठायुषां हीनस्थितीनां तु करास्त्रयः ॥ ७७ ॥ ग्रैवेयके द्वितीये तु चतुर्विंशति-
रब्धयः । ज्येष्ठा स्थितिः कनिष्ठा तु, त्रयोविंशतिरब्धयः ॥ ७८॥ द्वौ करौ सप्तभिर्भागैर्युक्तावेकादशोच्छ्रितैः ।
वपुर्ज्येष्ठायुषां ह्रस्वायुषामष्टलवाधिकौ ॥ ७९ ॥ ग्रैवेयके तृतीये च, वार्द्धयः पञ्चविंशतिः । गुर्वी स्थितिर्ज-
घन्या तु, चतुर्विंशतिरेव ते ॥ ८० ॥ ज्येष्ठस्थितीनामत्राङ्गं, द्वौ करौ षड्लवाधिकौ । तत्कनिष्ठस्थितीनां तु,
सप्तांशाढ्यं करद्वयम् ॥ ८१ ॥ ग्रैवेयके तुरीये च, षड्विंशतिः पयोधयः । आयुर्ज्येष्ठं कनिष्ठं तु, पञ्चविंशति-
रब्धयः ॥ ८२ ॥ ज्येष्ठस्थितीनां द्वौ हस्तौ, देहः पञ्चलवाधिकौ । षड्भागाभ्यधिकौ तौ च, तनुर्जघन्यजी-
विनाम् ॥ ८३ ॥ ग्रैवेयके पञ्चमेऽथ, वार्द्धयः सप्तविंशतिः । स्थितिर्ज्येष्ठा कनिष्ठा तु, षड्विंशतिपयोधयः
॥ ८४ ॥ चतुर्लवाधिकौ हस्तौ, द्वावत्राङ्गं परायुषाम् । तौ जघन्यायुषां पञ्चभागयुक्तौ प्रकीर्त्तितौ ॥ ८५ ॥
अष्टाविंशतिरुत्कृष्टा, षष्ठे ग्रैवेयकेऽब्धयः । स्थितिरत्र जघन्या तु, सप्तविंशतिरब्धयः ॥ ८६ ॥ ज्येष्ठस्थिती-
नामत्राङ्गं, द्वौ करौ त्रिलवाधिकौ । तौ कनिष्ठस्थितीनां तु, भागैश्चतुर्भिरन्वितौ ॥ ८७ ॥ ग्रैवेयके सप्तमे स्यु-
रेकोनत्रिंशदर्णवाः । स्थितिर्गरिष्ठा लघ्वी तु, साष्टाविंशतिरब्धयः ॥ ८८ ॥ द्वौ द्विभागाधिकौ हस्तौ, वपु-
र्ज्येष्ठायुषामिह । लघ्वायुषां तु तावेव, त्रिभागाभ्यधिकौ तनुः ॥ ८९ ॥ त्रिंशदम्भोधयो ज्येष्ठा, ग्रैवेयकेऽष्टमे

स्थितिः । एकोनत्रिंशदेते च, स्थितिरत्र लघीयसी ॥ ९० ॥ द्वौ करावेकभागाढ्यौ, देहो ज्येष्ठायुषामिह । तावेव द्वौ सद्विभागौ, स्याज्जघन्यायुषां तनुः ॥ ९१ ॥ ग्रैवेयकेऽथ नवम, एकत्रिंशत्पयोधयः । स्थितिर्गुर्वी लघिष्ठा तु, त्रिंशदम्भोधिसंमिता ॥ ९२ ॥ हस्तौ द्वावेव संपूर्णौ, वपुरुत्कृष्टजीविनाम् । द्वौ करावेकभागाढ्यौ, तनुर्जघन्यजीविनाम् ॥ ९३ ॥ स्वस्वस्थित्यम्भोनिधीनां, संख्ययाऽब्दसहस्रकैः । आहारकाङ्क्षिणः पक्षैस्तावद्भिरुच्छ्वसन्ति च ॥ ९४ ॥ आद्यसंहननाः साधुक्रियानुष्ठानशालिनः । आयान्त्येषु नरा एव, यान्ति च्युत्वाऽपि नृभवमी ॥ ९५ ॥ मिथ्यात्विनो येऽप्यभव्या, उत्पद्यन्तेऽत्र देहिनः । जैनसाधुक्रियां तेऽपि, समाराध्यैव नान्यथा ॥ ९६ ॥ समये च्यवनोत्पत्तिसंख्या चात्र यथाऽच्युते । च्यवनोत्पत्तिविरहः, परमस्तु भवेदिह ॥ ९७ ॥ संख्येया वत्सरशता, आद्यग्रैवेयकत्रिके । अर्वाग्वर्षसहस्रात्ते, मध्यमीयत्रिके पुनः ॥ ९८ ॥ लक्षादर्वाग्वत्सराणां, स्युः संख्येयाः सहस्रकाः । कोटेरर्वाग्वर्षलक्षाः, संख्येयाश्चरमत्रिके ॥ ९९ ॥ आद्यषड्ग्रैवेयकस्थाः, पश्यन्त्यवधिचक्षुषा । षष्ठ्यास्तमोऽभिधानायाः, पृथ्व्या अधस्तलावधि ॥६००॥ अधस्तनापेक्षया च, पश्यन्त्यूर्ध्वोर्ध्वगाः सुराः । विशिष्टबहुपर्यायोपेतामेतां यथोत्तरम् ॥ १ ॥ तृतीयत्रिकगाः पश्यन्त्यधो माघवतीक्षितेः । अवधिज्ञानमेतेषां, पुष्पचङ्गेरिकाकृति ॥ २ ॥ अथोर्ध्वनवमग्रैवेयकाद्दूरमतिक्रमे । स्याद्योजनैरसंख्येयैः, प्रतरोऽनुत्तराभिधः ॥ ३ ॥ नास्त्यस्मादुत्तरः कोऽपि, प्रधानमथवाऽधिकः । ततोऽयमद्वितीयत्वाद्विख्यातोऽनुत्तराख्यया ॥ ४ ॥ सिद्धिसिंहासनस्यैष, बिभर्त्ति पादपीठताम् । चतुर्विमानमध्यस्थरुचिरैकविमानकः

ग्रैवेयकरः
२०
२५
॥ ३६५ ॥
२८

॥ ५ ॥ सर्वोत्कृष्टास्तत्र पञ्च, विमाना: स्युरनुत्तरा: । तेष्वेकमिन्द्रकं मध्ये, चत्वारश्च चतुर्दिशम् ॥ ६ ॥ प्राच्यां तत्रास्ति विजयं, विमानवरमुत्तमम् । दक्षिणस्यां वैजयन्तं, प्रतीच्यां च जयन्तकम् ॥ ७ ॥ उत्तरस्यां दिशि भवेद्विमानमपराजितम् । सर्वार्थसिद्धिकृन्मध्ये, सर्वार्थसिद्धिनामकम् ॥ ८ ॥ प्रथमप्रतरे प्रोक्ताः, पङ्क्त्यो याश्च-तुर्दिशम् । द्वाषष्टिकास्ता एकैकहान्याऽत्रैकावशेषिकाः ॥ ९ ॥ मध्ये वृत्तं त्रिकोणानि, दिक्ष्वत्र प्रतरे ततः । पङ्क्तित्रिकोणाश्चत्वारः, पञ्च ते सर्वसंख्यया ॥ १० ॥ सर्वेऽप्येवमूर्ध्वलोके, पङ्क्तिवृत्तविमानकाः । द्व्यशीत्याऽ-भ्यधिकानि स्युः, शतानि पञ्चविंशतिः ॥ ११ ॥ शतानि साष्टाशीतीनि, षड्विंशतिस्त्रिकोणकाः । षड्विं-शतिः शताः पङ्क्तिचतुरस्राश्चतुर्युताः ॥ १२ ॥ चतुःसप्तत्यभ्यधिकैः, शतैरष्टभिरन्विताः । सहस्राः सप्तोर्ध्वलोके, सर्वे पङ्क्तिविमानकाः ॥ १३ ॥ लक्षाश्चतुरशीतिः स्युरेकोननवतिस्तथा । सहस्राण्येकोनपञ्चाशं शते च प्रकीर्णकाः ॥ १४ ॥ सर्वे विमानाश्चतुरशीतिर्लक्षा इहोपरि । सहस्राः सप्तनवतिस्त्रयोविंशतिसंयुताः ॥ १५ ॥ व्यासायामप-रिक्षेपैर्जम्बूद्वीपेन संमितम् । विमानं सर्वार्थसिद्धमसंख्येयात्मकाः परे ॥ १६ ॥ ग्रैवेयकवदत्रापि, देवाः सर्वेऽहमिन्द्रकाः । सर्वे मिथः समैश्वर्यरूपकान्तिसुखश्रियः ॥ १७ ॥ येष्वाकाशप्रदेशेषु, शय्यायां प्रथम-क्षणे । यथोत्पन्नास्तथोत्तानशया एव भवावधि ॥ १८ ॥ सर्वसंसारिजीवेभ्यः, सर्वोत्कृष्टसुखाशयाः । लील-यैवामितं कालं, गमयन्ति निमेषवत् ॥ १९ ॥ तथाहुर्विशेषावश्यके—"विजयाइसूववाए जत्थोगाढो भव-क्खओ जाव । खेत्तेऽवचिट्ठइ तहिं दवेसु य देहसयणेसुं ॥२०॥" एकत्रिंशद्वारिधयश्चतुर्षु विजयादिषु । स्थिति-

जघन्योत्कृष्टा तु, त्रयस्त्रिंशत्पयोधयः ॥ २१ ॥ इति प्रज्ञापनाभिप्रायः, समवायाङ्गे तु–"विजयवेजयंतजयंत-अपराजियाणं भंते! देवाणं केवइयं कालं ठिई प०?, गो०! जह० वत्तीसं सागर० उक्को० तेत्तीसं साग०"। स्थितिः सर्वार्थसिद्धे तु, स्यादुत्कृष्टैव नाकिनाम्। त्रयस्त्रिंशदम्बुधयो, जघन्या त्वत्र नास्ति सा ॥ २२ ॥ तत्र मध्ये चतुःषष्टिमणप्रमाणमौक्तिकम्। द्वात्रिंशन्मणमानानि, चत्वारि परितस्त्वदः ॥ २३ ॥ अष्टौ तत्परितो मुक्ताः, स्युः षोडशमणैर्मिताः। स्युः षोडशैताः परितो, मुक्ता अष्टमणोन्मिताः ॥ २४ ॥ द्वात्रिंशदेताः परितस्ताश्चतुर्मणसंमिताः। ततः परं चतुःषष्टिर्मणद्वयमितास्ततः ॥ २५ ॥ अष्टाविंशं शतं मुक्ता, एकैकमणसंमिताः। यथोत्तरमथावेष्ट्य, स्थिताः पङ्क्त्या मनोज्ञया ॥ २६ ॥ मौक्तिकानामथैतेषां, मरुत्तरङ्गरङ्गितैः। परस्परेणास्फलतां, जायते मधुरध्वनिः ॥ २७ ॥ सर्वातिशायिमाधुर्यं, तं च श्रोत्रमनोरमम्। चक्रिदेवेन्द्रगन्धर्वाद्प्यनन्तगुणाधिकम् ॥ २८ ॥ ध्वनितं शृण्वतां तेषां, देवानां लीनचेतसाम्। अप्यब्धयस्त्रयस्त्रिंशदतियान्ति निमेषवत् ॥ २९ ॥ त्रिभिर्विशेषकं। विजयादिविमानेषु, चतुर्षु नाकिनां वपुः। एकत्रिंशदम्बुनिधिस्थितिकानां करद्वयम् ॥ ३० ॥ वपुर्द्वात्रिंशदम्भोधिस्थितीनां तु भवेदिह। एकेनैकादशांशेन, कर एकः समन्वितः ॥ ३१ ॥ एकः करस्त्रयस्त्रिंशदम्भोधिजीविनां तनुः। देवाः सर्वार्थसिद्धे तु, सर्वेऽप्येककरोच्छ्रिताः ॥ ३२ ॥ विजयादिविमानस्थाः, स्वस्थित्यम्बुधिसंख्यया। पक्षैः सहस्रैश्चाब्दानामुच्छ्वसन्त्याहरन्ति च ॥ ३३ ॥ सर्वार्थे तु त्रयस्त्रिंशन्मितैर्वर्षसहस्रकैः। पसान्ति सार्द्धषोडशभिर्मासैरेवोच्छ्वसन्ति च ॥ ३४ ॥

अनुत्तराः
२५३ मौक्तिकानि

२०

२५

॥ ३६६ ॥

२८

पशुक्रियाभिलाषस्तु, नैतेषां तत्त्वदर्शिनाम् । प्राग्भवाभ्यस्तनवमरसार्द्रीकृतचेतसाम् ॥ ३५ ॥ अतिप्रतनुकर्माणो, महाभागाः सुरा अमी । इहोत्पन्नाः षष्ठभक्तक्षेप्यकर्मावशेषतः ॥ ३६ ॥ यदाहुः पञ्चमाङ्गे—"अनुत्तरोववाइया णं देवा णं भंते ! केवइएणं कम्मावसेसेणं अणुत्तरोववाइयत्तेणं उववण्णा ?, गो० ! जावतियन्नं छट्ठभत्तिए समणे निग्गंथे कम्मं निज्जरेइ एवतिएणं कम्मावसेसेणं अणुत्तरोववाइयत्ताए उववण्णा" इति । शाल्यादिकवलिकानां ससानां छेदने भवति यावान् । कालस्तावति मनुजायुष्केऽपर्याप्तवति मृत्वा ॥ ३७ ॥ मोक्षार्हाध्यवसाया अपि ये कर्मावशेषतो जाताः । लवसत्तमदेवास्ते जयन्ति सर्वार्थसिद्धस्थाः ॥ ३८ ॥ ( आर्ये ) भगवतीशतक १४ उ० ७ । आद्यसंहननाश्चैषु, स्वाराद्धोज्ज्वलसंयमाः । भव्याः स्वल्पभवा एवायान्ति यान्ति च नृष्वमी ॥ ३९ ॥ कर्मभूमिसमुत्पन्ना, मानुष्योऽपि शुभाशयाः । सम्यग्दृशः शुक्ललेश्या, जायन्तेऽनुत्तरेष्विह ॥४०॥ तथाहुः—'केरिसिया णं भंते ! मणुस्सी उक्कोसकालठिइयं आउयकम्मं बंधति ?, गो० कम्मभूमीया वा' इत्यादि प्रज्ञा० त्रयोविंशतितमे पदे । मानुषी सप्तमनरकयोग्यमायुर्न बध्नाति, अनुत्तरसुरायुस्तु बध्नातीत्येतद्वृत्तौ । जीवाः सर्वार्थसिद्धे तूद्भवन्त्येकभवोद्भवाः । च्युत्वा ते भाविनि भवे, सिद्ध्यन्ति नियमादितः ॥ ४१ ॥ उक्तं च—"सवट्ठाओ नियमा एगंमि भवंमि सिज्झए जीवो । विजयाइविमाणेहि य संखिज्जभवा उ बोद्धवा ॥ ४२ ॥" चतुर्विंशतिं भवान्नातिक्रामन्तीति तु वृद्धवादः, तथा—चतुर्ष्वेषु विमानेषु, द्विरुत्पन्ना हि जन्तवः । अनन्तरभवेऽवश्यं, प्रयान्ति परमं पदम् ॥ ४३ ॥ तथोक्तं जीवाभिग-

५

१०

१४

मवृत्तौ—"विजयादिचतुष्टुं वारद्वयं सर्वार्थसिद्धमहाविमान एकवारं गमनसंभवः, तत ऊर्द्ध्वं मनुष्यभवासादनेन मुक्तिप्राप्ते"रिति। योगशास्त्रवृत्तौ तु विजयादिषु चतुर्ष्वनुत्तरविमानेषु 'द्विचरमा' इत्युक्तमिति ज्ञेयं, तत्त्वार्थभाष्येऽपि विजयादिष्वनुत्तरेषु विमानेषु देवा द्विचरमा भवन्ति, द्विचरमा इति ततश्च्युताः परं द्विर्जनित्वा सिद्ध्यन्तीति, एतट्टीकापि—द्विचरमत्वं स्पष्टयति—ततो विजयादिभ्यश्च्युताः परमुत्कर्षेण द्विर्जनित्वा मनुष्येषु सिद्धिमधिगच्छन्ति, विजयादिविमानाच्च्युतो मनुष्यः पुनरपि विजयादिषु देवस्ततश्च्युतो मनुष्यः स सिद्ध्यतीति। पञ्चमकर्मग्रन्थे—'तिरिनरयतिजोआणं नरभवजुअस्स चउपल्लतेसट्ठं ॥' एतद्गाथासूत्रवृत्त्यनुसारेण तु विजयादिविमानेषु द्विर्गतोऽपि संसारे कतिचिद्भवान् भ्रमति, नरकतिर्यग्गतियोग्यमपि कर्म बध्नातीति दृश्यते, तदत्र तत्त्वं केवलिगम्यं। सर्वार्थदेवाः संख्येया, असंख्येयाश्चतुर्षु ते। एतेष्वेकक्षणोत्पत्तिच्युतिसंख्याऽच्युतादिवत् ॥४४॥ पल्योपमस्यासंख्येयो, भागः परममन्तरम्। सुरोत्पत्तिच्यवनयोर्विजयादिचतुष्टये ॥ ४५ ॥ पल्योपमस्यासंख्येयो, भागः परममन्तरम्। सर्वार्थसिद्धे सर्वत्र, जघन्यं समयोऽन्तरम् ॥४६॥ जवनालकापराख्यं, कन्याचोलकमुच्छ्रितम्। आकारेणानुकुरुते, एतेषामवधिर्यतः ॥ ४७ ॥ किंचिदूनां लोकनाडीं, पश्यन्त्यवधिचक्षुषा। ऊनत्वं तु स्वविमानध्वजादूर्द्ध्वमदर्शनात् ॥ ४८ ॥ उक्तं च तत्त्वार्थवृत्तौ—"अनुत्तरवि-

लवसत्तमे शेषकर्म नारीगमनं भवाः संख्या च २०

२५ २६ ॥३६७॥

१ वारद्वयमिति द्विचरम इति वैकार्थावेव, आनन्तर्येण चेद्विर्जनिर्न स्यात् तदा चतुर्विंशतिं भवान् यावत् संसारः न परत इति तदप्यविरुद्धं, कर्मग्रन्थोक्तं तु उद्योतादीनां बन्धान्तरालस्योत्कर्षस्य संभवमपेक्ष्य, न तु तावता विरोधः।

मानपञ्चकवासिनस्तु समस्तां लोकनाडीं पश्यन्ति लोकमध्यवर्त्तिनीं, न पुनर्लोक"मिति अत एवावधिज्ञाना-
धारपर्यायवत्तया । क्षेत्रस्यावस्थानमुक्तं, त्रयस्त्रिंशतमम्बुधीन् ॥ ४९ ॥ यदेषामुत्पत्तिदेशावगाढानां भवा-
वधि । अवधेरप्यवगाढक्षेत्रावस्थितिनिश्चयः ॥ ५० ॥ तथोक्तं विशेषावश्यके—"खेत्तस्स उऽवट्ठाणं तेत्तीसं
सागरा उ कालेणं । दव्वे भिन्नमुहुत्तो पज्जवलंभे य सत्तट्ठ ॥ ५१ ॥"

सर्वार्थसिद्धशृङ्गाग्राद्गत्वा द्वादशयोजनीम् । जात्यार्जुनस्वर्णमयी, भाति सिद्धिशिलाऽमला ॥ ५१ ॥ पञ्च-
चत्वारिंशता सा, मिता योजनलक्षकैः । विष्कम्भादायामतश्च, परितः परिधिः पुनः ॥ ५२ ॥ एका कोटी
योजनानां, सहस्रैस्त्रिंशताऽन्विता । द्विचत्वारिंशता लक्षैर्योजनानां द्विशत्यपि ॥ ५३ ॥ तथा पञ्चाशदेकोना,
योजनानां च साधिका । बाहल्यं मध्यभागेऽस्या, योजनान्यष्ट कीर्त्तितम् ॥ ५४ ॥ स मध्यभागो विष्कम्भा-
यामाभ्यामष्टयोजनः । ततोऽङ्गुलपृथक्त्वं च, योजने योजने गते ॥५५॥ बाहल्यं हीयते तेन, पर्यन्तेष्वखिले-
ष्वपि । अङ्गुलासंख्यभागाङ्गी,मक्षिकापत्रतस्तनुः ॥ ५६ ॥ तुषारहारगोक्षीरधाराधवलरोचिषः । नामान्यस्याः
प्रशस्याया, द्वादशाहुर्जिनेश्वराः ॥ ५७ ॥ ईष १ त्तथेषत्प्राग्भारा २, तन्वी च ३ तनुतन्विका ४ । सिद्धिः ५
सिद्धालयो ६ मुक्ति ७ र्मुक्तालयो ८ ऽपि कथ्यते ॥ ५८ ॥ लोकाग्रं ९ तत्स्तूपिका च १०; लोकाग्रप्रतिवा-
हिनी ११ । तथा सर्वप्राणभूतजीवसत्त्वसुखावहा १२ ॥ ५९ ॥ उत्तानच्छत्रसंकाशा, घृतपूर्णा करोटिकाम् ।
तादृशां तलयत्समा लोकान्तो योजने गते ॥ ६० ॥ ऊचुर्द्वादशयोजन्याः, केचित्सर्वार्थसिद्धितः । लोकान्त-

स्तत्र तत्त्वं तु, ज्ञेयं केवलशालिभिः ॥ ६१ ॥ योजनं चैतदुत्सेधाङ्गुलमानेन निश्चितम् । सिद्धावगाहना यस्मा-
दुत्सेधाङ्गुलसंमिता ॥ ६२ ॥ तथोक्तं—"यच्चेषत्प्राग्भारायाः पृथिव्या लोकान्तस्य चान्तरं तदुत्सेधाङ्गुल-
निष्पन्नमित्यनुमीयते, यतस्तस्योपरितनक्रोशस्य षड्भागे सिद्धावगाहना धनुस्त्रिभागयुक्तत्रयस्त्रिंशदधिकश-
तत्रयमानाऽभिहिता, सा चोच्छ्रयाश्रयणत एव युज्यत इति भगवतीवृत्तौ । तद्योजनोपरितनक्रोशषष्ठांशगो-
चरम् । धनुषां सतृतीयांशं, त्रयस्त्रिंशं शतत्रयम् ॥६३॥ अभिव्याप्य स्थिताः सिद्धा, अवेदा वेदनोज्झिताः ।
चिदानन्दमयाः कर्मधर्माभावेन निर्वृताः ॥ ६४ ॥ शेषं सिद्धस्वरूपं तु, द्रव्यलोके निरूपितम् । तत एव ततो
ज्ञेयं, ज्ञप्तिस्त्रीसंगमोत्सुकैः ॥ ६५ ॥ देशादमुष्मात्परतोऽस्त्यलोकः, स्वकुक्षिकोणाकलितत्रिलोकः । मुक्तैकमु-
क्ताकणकुम्भगर्भोपमः समन्तादपि रिक्त एव ॥ ६६ ॥ (उपजातिः) धर्माधर्माद्भिन्नजीवान्यगत्यागत्या यैस्तैस्तैः
स्वभावैर्विमुक्ते । स्याच्चेदस्मिन् ज्ञानचातुर्यमेव, तद्वत्तेऽसौ शुद्धसिद्धात्मसाम्यम् ॥ ६७ ॥ (शालिनी)
विश्वाश्चर्यदकीर्त्तिकीर्त्तिविजयश्रीवाचकेन्द्रान्तिषद्राजश्रीतनयोऽतनिष्ट विनयः श्रीतेजपालात्मजः । काव्यं
यत्किल तत्र निश्चितजगत्तत्त्वप्रदीपोपमे, संपूर्णः खलु सप्तविंशतितमः सर्गो निसर्गोज्ज्वलः ॥ ६८ ॥

॥ इति महोपाध्यायश्रीविनयविजयगणिविरचिते श्रीलोकप्रकाशे सप्तविंशतितमः सर्गः
समाप्तः ॥ ग्रं. ७२३ । तत्समाप्तौ च समाप्तोऽयं क्षेत्रलोकः॥ ग्रं. ७२१५ ॥

इति श्रेष्ठि देवचन्द लालभाई-जैनपुस्तकोद्धारे ग्रन्थाङ्कः ७५-०

सिद्धानाम-वगाहना

२०

२५

इति श्रीमहोपाध्यायकीर्तिविजयशिष्य-महोपाध्यायश्रीमद्विनयविजयगणिविरचिते

लोकप्रकाशे—क्षेत्रलोकः समाप्तः।

इति श्रेष्ठि-देवचन्द लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः [illegible]